आनन्दाश्रमसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः १३५

मारुलकरोपाह्वशंकरशास्त्रिप्रणीतशांकरीव्याख्यासंवलितः
श्रीमद्भट्टोजीदीक्षितविरचितवैयाकरणसिद्धान्तकारिकाव्याख्यानभूतः
श्रीकौण्डभट्टविरचितः

# वैयाकरणभूषणसारः ।

सोऽयम्
मारुलकरोपाह्वशंकरशास्त्रिभिः संशोधितः ।
स च
रावबहादूर इत्युपपदधारिभिः — गङ्गाधर बापूराव काळे जे. पी.
इत्येतैः
पुण्याख्यपत्तने
श्रीमन् 'महादेव चिमणाजी आपटे'
इत्यभिधेयमहाभागप्रतिष्ठापिते
आनन्दाश्रममुद्रणालये
आयसाक्षरैर्मुद्रयित्वा प्रकाशितः

शालिवाहनशकाब्दाः १८७९
खिस्ताब्दाः १९५७



मूल्यम्—पञ्चाशन्नवपणकाधिका अष्टौ रूपकाः । ( ८—५० )

# प्रास्ताविकं किंचित् ।

वागर्थाविव संपृक्तौ वागर्थप्रतिपत्तये ।
जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ ॥

समुपलभ्यमानेषु व्याकरणशास्त्रग्रन्थेषु शब्दार्थविवेचनपरो वैयाकरणभूषणसारनामा कौण्डभट्टेन लिखितोयं ग्रन्थः श्रेष्ठं स्थानं लभते । प्रतिपाद्यविषयदृष्ट्या व्याकरणग्रन्था द्विधा विभज्यन्ते शब्दग्रन्था अर्थग्रन्थाश्च । प्रकृतिप्रत्ययरूपेण पदानि विभज्य लोपागमवर्णविकारादिभिः कार्यैरर्थानुरोधेन शब्दसिद्धिः क्रियते । व्याकरणशास्त्रस्य शब्दसिद्धेर्मुख्याङ्गत्वेन शब्दग्रन्थसंख्या सुबहुतरा महती वर्तते अर्थग्रन्थापेक्षया । शब्दग्रन्थेषु निर्दिष्टां शब्दसिद्धिं मनसि कृत्वा तदनुरोधेनैवार्थविवेचनं क्रियतेऽर्थग्रन्थेषु । अतः शब्दग्रन्थाध्ययनं विना न कोप्युपयोगोर्थग्रन्थाध्ययनस्य न कापि शक्यता वा । अष्टाध्यायीनाम्ना प्रसिद्धमष्टकं पाणिनीयं वस्तुतः शब्दग्रन्थ एव । तथापि शब्दसिद्धौ कर्तव्यायां स्थाने स्थाने विशेषतः प्रत्ययविधिसूत्रेष्वर्थनिर्देशस्य कृतत्वात्तत्कृतिः सुतरामर्थग्रन्थानां मूलतया बीजतया वा वर्णयितुं शक्यते । पाणिनिसूत्रप्रणयनानन्तरमल्प एव कालावधौ मुनेः पाणिनेर्मातुलकुलं विभूषयता व्याडिना शब्दस्वरूप—शब्दनित्यत्व—द्रव्याभिधायित्वादिविषयाणां संपूर्णतया विवेचनं कुर्वाणः 'संग्रहनामा लक्षश्लोकात्मको ग्रन्थो विरचित इत्युल्लेखो लभ्यते परंतु न स ग्रन्थोधुनोपलभ्यते । केवलं तस्मादुद्धृतानि कतिपयान्येव वाक्यानि समुपलभ्यन्ते येभ्यः सकाशाद्ग्रन्थस्य तस्य योग्यता प्रतीता भवति । व्याडेरनन्तरं कात्यायनप्रमुखैर्वार्तिककृद्भिर्यानि पाणिनिसूत्रव्याख्यानपराणि वार्तिकानि रचितानि तेषु अर्थवदधातुरप्रत्ययः प्रातिपदिकम्, स्वं रूपं शब्दस्याशब्दसंज्ञा, समर्थः पदविधिः, इत्यादीनां सूत्राणां व्याख्यानं कुर्वद्भिर्वार्तिककृद्भिरर्थविवेचनपराणि बहूनि वार्तिकानि लिखितानि येषां साकल्येन व्याख्यानं भगवता पतञ्जलिना कृतं महाभाष्यग्रन्थे समुपलभ्यते । महाभाष्ये चर्चितेषु बहुषु शब्दार्थस्वरूपविवेचनपरेषु विषयेषु शब्दस्य नित्यत्वं, अर्थाभिधानस्य स्वाभाविकत्वं, शब्दस्य प्रवृत्तिनिमित्तानि, शब्दानामवान्तरभेदाः, इत्यादिविषयास्तथा सूक्ष्मतया विवेचिताः यथा सवार्तिकं महाभाष्यं पाणिनिसूत्रबीजकस्य शब्दार्थवृक्षस्याङ्कुरतया समवास्थितं वर्तते इति यदि वदामस्तर्हि तत्र नाप्यति शङ्कालवोपि । महाभाष्यानन्तरं प्रयातेषु पञ्चवर्षशतकेषु हरिरिति सार्था-

परनामा जातो भर्तृहरिर्वैयाकरणकेसरी येन वाक्यपदीयनामा केवलशब्दार्थविचारात्मकः पाण्डित्यपूर्णः कारिकामयो लिखितोऽर्थग्रन्थो यस्मिन्नित्यशब्दरूपः स्फोटः शब्दब्रह्मतया प्रतिपादितः । शब्दब्रह्मैक्यविज्ञानात्कैवल्यप्राप्तिरिति वदतानेन व्याकरणशास्त्रं दर्शनरूपेण प्रतिष्ठापितं महाभाष्यप्रणेतुर्भगवतः पतञ्जलेरुद्देरितं कार्यं च सुसंपूर्णतामापादितम् । तथा च लोके प्रसृतः श्लोकः—

अहो भाष्यमहो भाष्यमहो वयमहो वयम् ।
मामदृष्ट्वा गतः स्वर्गमकृतार्थः पतञ्जलिः ॥

२ भर्तृहरेर्वाक्यपदीयग्रन्थो व्याकरणशास्त्रगतानामर्थग्रन्थानामादिमो ग्रन्थ आकरग्रन्थ एव तथाप्यध्ययनाध्यपनपरम्परासु न स सिद्धान्तकौमुद्यादिग्रन्थवदध्ययनग्रन्थप्रणालीषु स्थानं लभते । बहुविधान्यत्र विषये कारणानि स्युः । प्रथमं कारणं नूनमस्य दुर्बोधता । द्वितीयं तु गुरुमुखाद्भाष्यान्तशब्दग्रन्थाध्ययनकर्माणि व्यतीतेषु द्वादशाधिकवर्षेषु साहजिकी अप्रवृत्तिरेवार्थग्रन्थाध्यपनं प्रति कदाचिद्भर्तृहरिर्बौद्धधर्मपक्षपाती स्यादिति मतिरपि तद्ग्रन्थाध्ययनं प्रत्यप्रवृत्तेः कारणं स्यात् । वैयाकरणपाठशालास्वपि न सर्वासु पाठशालास्वर्थग्रन्थाः पाठ्यन्ते किंतु कतिपयास्वेव । समुपलभ्यमाने त्रिकाण्डात्मके वाक्यपदीये शब्दार्थस्वरूपं शब्दार्थविवेचनं शब्दस्यार्थदृष्ट्या बहुविधाः प्रकारा इत्यादिविषयाः साकल्येन विवेचिताः । शब्दब्रह्मनिरूपणमारभ्य स्वतन्त्रप्रबन्धत्वेन विरचितेऽस्मिन्ग्रन्थे तृतीयं काण्डं स्त्रियाम्, उपमितं व्याघ्रादिभिः सामान्याप्रयोगे, अतिशायने तमबिष्ठनौ, इत्यादिसूत्राणां विवरणरूपतया रचितं नूनं जैनेन्द्र(रु)क्तिसदृशी कतिपयसूत्रव्याख्यानपरा सूत्रवृत्तिरेवेति भाति । भर्तृहरिविरचितेति भागवृत्तिग्रन्थस्य निर्देशो बहुषु ग्रन्थेषूपलभ्यते । कदाचिच्चतुर्दशसमुद्देशात्मकं वाक्यपदीयस्य तृतीयं काण्डमपि पाणिनिसूत्राणां न साकल्येन किंतु भागशः वृत्तिं कुर्वद्भागवृत्तिनाम्ना तदानीं प्रसिद्धं स्यात् । इदानींतनास्तु पण्डिता विमलमतिनाम्ना जैनवैयाकरणेन भागवृत्तिर्लिखितेति प्रतिपादयन्ति । पाठसंप्रदायेऽनधिगतसम्यक्पदत्वाद्वाक्यपदीयस्य न बह्व्यष्टीका उपलभ्यन्ते । केवलं हेलाराजपुञ्जराजकृता प्राचीना तथा अर्वाचीना भावप्रदीपनाम्नी चोपलभ्यन्ते । प्रथमकाण्डस्य वाराणस्यां मुद्रिता समुपलभ्यमाना टीका भर्तृहरिणैव विरचिता स्वोपज्ञटीका इति केचिन्मन्यन्ते । खिस्ताब्दसप्तशतकमध्यमस्य भर्तृहरेः कालः इति चीनदेशस्थप्रवासिभिः कृतेभ्य उल्लेखेभ्यो विश्वास्यते ।

३ भर्तृहरेरनन्तरं भट्टोजीदीक्षितकालपर्यन्तं शब्दविचारपरेषु काशिकान्यासपदमञ्जर्यादिषु भाषावृत्तिप्रक्रियाकौमुदीप्रकाशादिषु कुत्रचित्स्थलेष्वर्थविचारं कुर्वत्सु लिखितेष्वपि बहुषु ग्रन्थेषु न कोऽपि यथार्थनामा अर्थविचारग्रन्थो लिखितः समुपलभ्यते । भट्टोजीदीक्षितास्तु समधिगतभाष्यकैयटरहस्याः समधीतकाशिकान्यासपदमञ्जर्यादिग्रन्थाः सुसमीक्ष्य भर्तृहरेर्वाक्यपदीयग्रन्थं प्रविवेच्य च तद्गतानर्थविषयकान्मौलिकसिद्धान्तान्संहृत्य च तस्मात्साररूपं सर्वं वस्तु बहुलाघवतः प्रणिन्युर्वैयाकरणसिद्धान्तकारिकाग्रन्थं द्वासप्ततिकारिकापरिमितम् । अतीव लघुभूतमिमं ग्रन्थं परम्परागतगुरुमुखोद्गतव्याख्यानं विनातीव दुरवबोधमिमंकारिकाग्रन्थं शिष्यसुखावबोधाय व्याचिख्यासुर्भट्टोजीभ्रातुः सुगृहीतनाम्नो रङ्गोजीभट्टस्य तनूजः कौण्डभट्टः कारिकाव्याख्यारूपं वैयाकरणसिद्धान्तभूषणं प्रणिनाय । ग्रन्थेऽस्मिन्पदार्थव्याख्यानग्रन्थेषु भूषणभूते निर्णयनामधेयानि धात्वर्थनिर्णयादीनि चतुर्दश प्रकरणानि विरचितानि येषु फणिभाषितभाष्याब्धेः शब्दकौस्तुभ उद्धृतः ' इत्यादीनामेकविंशतिकारिकाणां व्याख्यानरूपो धात्वर्थनिर्णयो, वर्तमाने परोक्षे श्वः इत्यादिकारिकाद्वयव्याख्यानरूपो लकारार्थनिर्णयः, अन्ते च ' वाक्यस्फोटोऽतिनिष्कर्षे ' इत्यादीनां चतुर्दशकारिकाणां व्याख्यानरूपः स्फोटनिर्णय इत्येवं निबद्धाश्चतुर्दश निर्णयाः ।

४ भट्टोजीदीक्षितानां जन्मसमयः, निवासदेशः, वंशश्चेत्येतद्विषये विद्वत्सु मतैक्यं नास्ति । ख्रिस्तीयषोडशशतकस्य पूर्वार्धे एषां दीक्षितानां जन्मसमय इति केचिदाहुः । अन्ये तु ऐसवशकान्तर्गतसप्तदशशतकस्य पूर्वार्धे एषां जन्मकाल इति वदन्ति । त इमे भट्टोजीदीक्षिता महाराष्ट्रीयदेशस्थब्राह्मणजातीया आसन्निति केचन ब्रुवन्ति । सारस्वता इति केषांचिन्मतं वर्तते । तथाप्युपलब्धदृढतरप्रमाणबलादिमे भट्टोजीदीक्षिताः शिवोपासका आन्ध्रब्राह्मणाः, एतेषां निवासस्थानं वाराणसीक्षेत्रं जन्मसमयश्च सप्तदशशतकस्य पूर्वार्धं इत्येतद्विषये प्रायः सर्वेषां विदुषामैकमत्यं संजातमस्ति । अर्थात् कौण्डभट्टानां जननसमयो दीक्षितादनन्तरं मञ्चविंशतिवर्षाणि नाम सप्तदशशतकस्य मध्य इति साहजिकतयैव सिध्यति ।

५ कौण्डभट्टकृतवैयाकरणभूषणसारोपरि ' हरिराम केशव काळे ' एतन्नामकेन पण्डितेन काशिकानाम्नी टीका व्यलेखि । तदन्ते १८५४ इत्ययं वत्स-

राङ्को निर्दिष्टः । स च स्त्रैस्तः शाकीयो वा न संभवतीति वैक्रम एव स्यादित्यनुमीयते । तथा सति अष्टादशशतकस्यान्तिमो भागः काशिकानिर्मितिकालो निश्चितो भवति । स योग्य एवेति भाति । काशिकाटीकायां भैरवमिश्राणां गौरवपुरःसर उल्लेखः कृतोऽस्ति । त इमे भैरवमिश्राः प्रयागक्षेत्रनिवासिनस्तथा-भट्टनागेशकृतग्रन्थानामुपरि विद्वत्ताप्रचुराष्टीका लिखन्तो महावैयाकरणा महानैयायिकाश्च भूत्वा काशिकाटीकाकृतो हरिरामस्य गुरवः स्युः । वैयाकरभूषणादनन्तरं प्रखरपाण्डित्यभरितोऽर्थविचारग्रन्थो नागोजीभट्टविरचिता मञ्जूषैव । सेयं मञ्जूषा बृहन्मञ्जूषा, लघुमञ्जूषा, परमलघुमञ्जूषा चेति प्रकारत्रयेण लिखिता। सोऽसौ मञ्जूषाग्रन्थोऽधुनातनासु पाठशालासु पाठ्यार्थप्रक्रियाग्रन्थेषु श्रेष्ठतमत्वेन गण्यते । शेखरान्तग्रन्थानां सामीचीन्येनाध्ययने संवृत्ते सति ततोऽर्थविचारात्मकस्य प्रकृतमञ्जूषाग्रन्थस्याध्ययनं क्रियत इत्येवं संप्रदायः । प्रकृतमञ्जूषाग्रन्थस्यार्थविचारात्मकस्य संग्रहो महत्त्वं चाग्रिमकारिकासु व्यक्तं भवेत् ।

शब्दार्थकल्पवृक्षस्य बीजं सूत्रं हि पाणिनेः ।
मुद्भिर्वार्तिकरूपाभिर्भाष्यरूपेण वारिणा ॥
संवृद्धं महता वृक्षस्वरूपेण स्थितं खलु ।
ग्रन्थे भर्तृहरेर्वाक्यपदीयेऽर्थप्रकाशके ।
तस्य शाखापर्णमयं वैयाकरणभूषणम् ।
पुष्पाणि लघुमञ्जूषावाक्यानि सुरभीणि च ॥ इति ।

६ व्याकरणशास्त्रमिदं शब्दशास्त्रमित्युच्यते लोके । अथापि शब्दार्थज्ञानोभयमालम्ब्य संप्रवृत्तं शब्दशास्त्रमिति ज्ञेयम् । कस्कोऽपि मनुष्यप्राणी स्वमनोगतान् विचारान् कस्मैचिदन्यस्मै बोधयितुमुत्सुको दृश्यते । तदर्थं च स्वीयकर्मेन्द्रियैः प्रयतते । व्यवहारे कस्याश्चिदेकस्या व्यक्तेर्मनसो द्वितीयव्यक्तेर्मनसा सह साक्षात्संबन्धो भवितुं न शक्यः । अतः स्वमनोगतान् विचारान् परं प्रति बोधयितुं स्वीयकर्मेन्द्रियाणां व्यापारः कर्तव्यो भवति । स च व्यापारो द्वितीयव्यक्तेर्ज्ञानेन्द्रियेण गृह्यते । सोऽयं व्यापारो बोधयितुर्मुखनिर्गतध्वनिद्वारा भूत्वा तस्य व्यापारस्यान्यव्यक्तेः कर्णेन्द्रियेण ग्रहणे जाते तादृशग्रहणस्य शाब्दज्ञानमिति वदन्ति । वस्तुतः श्रोत्रेन्द्रियग्राह्यो ध्वनिरथ च शब्द इत्युभौ यद्यपि पर्यायशब्दौ तथापि अर्थयुक्तध्वनिविषये ‘शब्द’ इत्याकारकशब्दस्य प्रयोगः शास्त्रीयवाङ्मये क्रियते ।

व्याकरणशास्त्रस्य 'शब्दानुशासनं' इत्येवं यो व्यवहारः कृतो भाष्यकारैस्तत्रत्यो यः शब्दशब्दस्तस्यार्थयुक्तः शब्द इत्येवार्थोऽभिप्रेतोऽस्ति ।

७ आत्मनो विचारान् परं प्रति बोधयितुं प्रयुक्तानां साधनानां मध्ये शब्द इत्याकारकं मुख्यं साधनमिति जेगीयते । अर्थात् यं विचारं बोधयितुं यः शब्द उच्चार्यते स शब्दस्तस्य विचारस्य वाचको भवति । एतस्य विचारस्यैव 'शब्दस्य अर्थः' इत्येवं व्यवहारः क्रियते । अर्थ इत्येवंशब्दः 'ऋ गतौ' इति धातोः साधितः । स शब्दो यद्वस्तूद्दिश्यानुधावति तद्वस्तु अर्थशब्देनाभिधीयते । तस्मात् 'शब्दानुशासनं' इति भाष्यप्रयोगे शब्देऽयं शब्दोऽर्थविशिष्टः शब्द इत्यस्मिन्नेवार्थे शास्त्रे प्रयुज्यते ।

८ यदाऽतीव पुरातनकालेऽभीप्सितफलप्राप्तौ यज्ञादिकर्माण्यारभन्त श्रद्धावन्त आस्तिकाः । तादृशकर्माचरणकाले च ऋषिदृष्टानपौरुषेयवेदमन्त्रानुच्चार्य तत्तद्देवतानां स्तुतिमकार्षुः । तदाऽनेन सूक्तेनैव देवता स्तोतव्या पूजनीया चेति कल्पसूत्रकारा उपादिशन्तीत्यत्र तेषां कोऽभिप्रायः, तत्तद्देवतायास्तत्तत्सूक्तस्य च परस्परं कः संबन्ध इत्यादिविषयिण्यामाकांक्षायां संजातायां तच्छान्त्यै मन्त्रार्थज्ञानमावश्यकमिति मन्यन्ते स्म । महाभाष्यकारैरपि मन्त्रपाठेन सहैव तत्तन्मन्त्रार्थज्ञानमपेक्षितमिति 'योऽग्निष्टोमेन यजते य उ चैनमेवं वेद' 'योऽग्निं नाचिकेतं चिनुते य उ चैनमेवं वेद' इत्यादितैत्तिरीयसंहितादिवाक्यान्युद्धृत्य मन्त्रार्थज्ञानमवश्यमपेक्षितमिति मन्त्रद्रष्टॄणामृषीणाममतमिति स्पष्टं प्रतिपादितम् । महाभाष्यकारादष्टभ्यः शतकेभ्यः प्राक्काले लिखिते निरुक्तग्रन्थे यास्काचार्यैः 'स्थाणुरयं भारहारः किलाभूत् । अधीत्य वेदं न विजानाति योऽर्थम्' इत्यादिवचनैर्धर्मानुष्ठानस्वरूपभूतानि स्वर्गसंपादयितॄणि यज्ञादिकर्माणि अर्थज्ञानपुरःसराण्येवानुष्ठेयानीति व्यक्तमेवानुशिष्टम् । लोके तावद्यज्ञादिक्रियाणां तत्साधनानां वा ज्ञानसंपत्त्यर्थमेव मुख्यतः शब्दानां प्रवृत्तिर्जायते । अतो धातव एव शब्दानां मूलस्वरूपं प्रत्येकं नाम च धातुनिष्पन्नमेव भवितुमर्हतीति सिद्धान्तः प्रस्थापितः । अथ च वेदग्रन्थघटकशब्दावगमसाधनमिति निरुक्तकारैरेकार्थपराणामनेकशब्दानां तथाऽनेकार्थपराणां वा वैयक्तिकशब्दानां श्रेणीर्विलिख्य धात्वादिप्रकृतिकथनपूर्वकं व्युत्पत्तिर्वर्णिता । वेदान्तर्गतविशिष्टशब्दानामर्थान् मनसि गृहीत्वा तादृशार्थशब्दसाधनानुकूलस्तादृशवर्णघटितो धातुरेव योग्य इति कल्पयित्वा तत्तच्छब्दस्य

तत्तद्धातोः सकाशाद्व्युत्पत्तिकथनं निरुक्तग्रन्थानां मुख्यं कर्तव्यं विद्यत इति कृत्वा तादृशग्रन्थानां निरुक्तग्रन्थत्वेन वेदाङ्गेषु स्थानं दत्तमस्ति । तथैव प्रकृति-प्रत्यय, आगम, आदेश, इत्येतेषामर्थानुरूपां कल्पनां कृत्वा शब्दसिद्धिं कुर्वतां ग्रन्थानां व्याकरणं ( शब्दव्याख्यानं ) इत्येवं नामधेयं समर्पितम् । अथ च वैदिकमन्त्राणां शुद्धं सुस्पष्टं चोच्चारणं भवत्वेतदर्थं विशिष्टनियमान् स्पष्टीकरणानि च वर्णयन्तः शिक्षाग्रन्था अपि वेदाङ्गत्वेन निर्मिताः । तथा भिन्नभिन्न-वेदशाखान्तर्गतसंहितापाठपदपाठयोर्मध्येऽज्झलादिसंधिभिर्विशिष्टवर्णानां निष्पाद्योत्पद्यमानान् विपर्यासान् प्रतिपादयतः प्रातिशाख्यग्रन्थानपि अरीरचन् । शिक्षा प्रातिशाख्यं चेति द्वौ ग्रन्थौ केवलं शब्दस्वरूपाण्येव विवेचयन्तौ भवत इति कृत्वा तयोः समावेशो व्याकरणशब्दानुशासनशब्दाभ्यां व्यवह्रियमाणेषु शास्त्र-ग्रन्थेषु भवितुं नार्हति ।

९ उपर्युल्लिखितानुरोधेन वैदिकपदानां विवेचनं प्रातिशाख्यग्रन्थेषु कृतम् । तदनन्तरं निरुक्तकृद्भिः पदानां निर्वचनमर्थानुसारेण कृतम् । ततः पाणिनिपूर्व-वैयाकरणैर्भाषास्थपदेषु समन्वयिनी पदानां व्याख्या अर्थः पदम् ' इत्येवं शब्दैः कृता । वैदिकभाषास्थशब्दानामर्थमनुसृत्य अनेके गणाः कृताः । अर्थानुरोधेन च तेषां पदानां व्याप्यधर्मेण विभागान् कृत्वा विवेचनं प्रारब्धम् । पाणिन्याचार्येण पूर्ववैयाकरणकृतानां निखिलविवेचनानां परामर्शं कृत्वा तदानीं प्रच-लितभाषायाः सर्वाङ्गपरिपूर्णं व्याकरणं रचितम् । पूर्ववैयाकरणैर्यद्यपि नामा-ख्यातोपसर्गनिपाताः ' इत्येवं चतुर्धा विभागः कृतस्तथापि पाणिनिना शब्दानां-सुबन्ताः, तिङन्ताश्चेत्येवं द्विधैव विभागः स्वीकृतः ।

१० सुप्प्रत्ययप्रकृतिभूतप्रातिपदिकानां ' अव्युत्पन्नसर्वनामाव्ययसमासकृत्तद्धि-तान्तेति षड्विभागाः पाणिनिसंमता दृश्यन्ते । तथा तिङ्प्रत्ययप्रकृतिभूतधातूनां भ्वादिदशगणी णिजन्तसन्नन्तयङन्तनामधातव इति पञ्चधा विभागोऽङ्गीकृत इत्यालक्ष्यते । प्रातिपदिकादुत्पद्यमानानां सुब्विभक्तीनां प्रथमाद्वितीयेत्यादिसप्तमी-पर्यन्ताः सप्त प्रकाराः कृताः सन्ति । प्रत्येकं सुब्विभक्तिः, एकवचनं, द्विवचनं, बहुवचनं चेति त्रिधा विभक्ता । तथा धातुभ्यो जायमानानां प्रत्ययानां विक-रणप्रत्ययाः लकारार्थप्रत्ययाश्चेत्येवं मुख्यतो द्विधैव विभागः स्वीकृतः । किंच तादृशप्रत्ययानां तेनाचार्येण आगमा आदेशाश्च विहिताः । तत्र आगमस्याव-

यवरूपत्वात्तस्मिन् कृतेऽपि मूलशब्दार्थे नेषदपि विशेषो जायते । तथा आदेशोऽपि स्थाने जायमानः स्थानिसदृशत्वात् 'गुरोः स्थाने शिष्यः' इति न्यायेन स्थान्यर्थमेवाभिधत्ते । एवं लोपस्यापि आदेशरूपत्वात्प्रत्ययलोपेऽपि न तदर्थो लुप्तो भवतीति 'प्रत्ययलोपे प्रत्ययलक्षणम्' इत्यनेन सूचितम् ।

११ पूर्वोक्तरीत्या धातुप्रातिपदिकरूपद्विविधप्रकृतीनां भिन्नभिन्नार्थकप्रत्ययसंयोजनेन भाषाघटकसर्वपदानि संसाध्य तेषां पदानां सुबन्ततिङन्तेत्येवं द्वावेव मुख्यौ विभागौ प्रदर्शितौ । तत्रैते तिङन्तशब्दाः पूर्ववैयाकरणप्रोक्ताख्यातशब्दा एव भवन्ति । सुबन्तशब्देषु नामोपसर्गनिपातेति पूर्ववैयाकरप्रोक्तत्रिविधशब्दानां समावेशो भवति । यद्यपि पाणिन्याचार्येण उपसर्गनिपातयोः प्रातिपदिकेषु समावेशः कृतस्तथापि प्राचीनवैयाकरणैस्त उपसर्गनिपाताः प्रातिपदिकात्पृथक्त्वेन गृहीता आसन् । तत्र च पूर्ववैयाकरणानां कश्चनहेतुरासीत् । स च हेतुः पाणिनिना यद्यपि स्पष्टं नोक्तस्तथापि चादयोऽसत्त्वे, उपसर्गाः क्रियायोगे, अधिपरी अनर्थकौ, इत्यादिसूत्रेभ्यः, तथा धातुभ्यः प्राक् भिन्नभिन्नोपसर्गसमभिव्याहारे सति धातुभ्यो भिन्नभिन्नोऽर्थबोधो जायते इति प्रतिपादकेभ्यः 'उपाद्यमः स्वकरणे, संमाननोत्सञ्जनाचार्यकरण इत्यादिसूत्रेभ्यश्च स हेतुर्व्यक्तो भवति । एतद्विषये 'न निर्बद्धा उपसर्गा अर्थान्निराहुरिति शाकटायनः' इत्येवं निरुक्तवाक्यमपि विचारणीयं भवति । त इमे उपसर्गाः घटपटादिशब्दवन्न स्वातन्त्र्येण अर्थान् प्रतिपादयन्ति । किंतु यैस्ते संयोजिता भवन्ति तादृशक्रियावाचकशब्दार्थानामेव वैशिष्ट्यं दर्शयन्ति । अतः क्रियानिष्ठविशेषगुणो वैशिष्ट्यं वा तेषामर्थो भवति । एवं प्रकारको वैशिष्ट्यरूपोऽर्थो निरुक्तकृद्भिः, 'आ इत्यर्वागर्थे' इत्यादिवाक्य उक्तोऽस्ति । निपातविषये केवलं 'उच्चावचेष्वर्थेषु निपतन्ति' इत्येतावदेवोक्तम् । निपातानां बहुविधा अर्थाः सन्तीति तदर्थः । वस्तुतस्तु ये उप( समीपे स्थित्वा )क्रियासु विशेषगुणं सृजन्ति—उत्पादयन्ति त उपसर्गाः । अथ च ये लौकिकप्रयोगेषु पृथक्पृथगर्थेषु निपतन्ति—निपतिता दृश्यन्ते ते निपाताः, इत्येवं तेषां व्याख्या दातुं शक्या स्यात् ।

१२ उपरि निर्दिष्टं निपातोपसर्गयोः स्वरूपं पाणिनिसंमतमित्यनुमीयते । यतः 'चादयोऽसत्त्वे' इति सूत्रेण अद्रव्यार्थकानां चादीनां निपातसंज्ञां विद-

धाति। अयमर्थः—सत्त्वं द्रव्यं, लिङ्गसंख्याकारकान्वितं द्रव्यम्। घटादयः शब्दा एकत्वविशिष्टं पुंस्त्वविशिष्टं कर्तृत्वादिकारकविशिष्टं च कम्बुग्रीवादिमन्तमर्थं प्रतिपादयन्तो द्रव्यार्थका इत्युच्यन्ते। एवं समुच्चयप्रकर्षादयः शब्दा अपि लिङ्गसंख्याकारकविशिष्टं समुच्चयाद्यर्थमभिदधतो द्रव्यार्था एव भवन्ति। यदा च तादृशः समुच्चयाद्यर्थाश्चादिशब्दैः प्रतिपाद्यन्ते तदा शब्दशक्तिस्वभावात् लिङ्गसंख्याद्यनन्वितत्वेन गम्यन्त इति चादयः शब्दा अद्रव्यार्था भवन्तीति तादृशाश्चादयः शब्दा निपातसंज्ञां लभन्त इति तदर्थात्। तथा 'भूः पूजायाम्' इत्यादिसूत्रेषु प्रतिपादितानां पूजाद्यर्थानां क्रियान्वयित्वे सति प्रपरेत्याद्यव्ययानि उपसर्गा इत्युच्यन्ते। नामार्थान्वयित्वे तु कर्मप्रवचनीयत्वेन व्यवह्रियन्ते। एवं च 'असत्त्वे' इत्युक्तेर्निपातोपसर्गाणामर्थवत्त्वं नास्तीति कथनमयुक्तम्। किंच तत् प्राचीनवैयाकरणानां पाणिनेश्चापि संमतं नेति बोध्यम्।

१३ उपर्युक्तार्थानुसारेण पाणिनिना प्रदर्शितेषु प्रातिपदिकानां षट्प्रकारेषु तथा धातूनां पञ्चप्रकारेषु चार्थप्रतिपादनविषये कथं भिन्नता भवतीतीदानीमवलोकयेम। शब्दानां सत्त्वं क्रिया चेति द्वावेव मुख्यावर्थौ। तत्र सत्त्वमित्यर्थे द्रव्यशब्दोऽपि प्रयुज्यते। क्रियेत्यर्थे च 'भाव' इतीमं शब्दमपि प्रयुञ्जते। तत्र नामरूपप्रातिपदिकेभ्यो नित्यं द्रव्यस्यैव बोधो जायते। सर्वनामशब्दैरपि द्रव्यमेवावगम्यते। परं स द्रव्यरूपोऽर्थः सांकेतिकद्रव्यविशेषरूपो घटाद्यर्थवन्न भवति। किंतु पूर्वं यादृशद्रव्यस्योल्लेखः कृतो भवति तादृशस्यैकानेकद्रव्यस्याथवा स्वतो वक्तुः किंवा यन्निकटे वक्ति तस्य, अपिवा यमुद्दिश्य किंचिद्वक्ति तस्य उपस्थितिं कुर्वन्ति सर्वनामशब्दाः। अव्ययशब्देभ्योऽपि द्रव्यस्य बोधो जायते परं स पूर्वमुल्लेखितस्यैव द्रव्यस्य परामर्शरूपेण जायते। किंचाव्ययेभ्यः परो विभक्तिप्रत्ययो न दृश्यते। कदा कदा दृग्गोचरीभूतोऽपि विभक्तिविशेष एव दृश्यते। सामासिकशब्दा अपि द्रव्यमेव प्रतिपादयन्ति परं ते परस्परं संबद्धयोर्द्वयोस्तदधिकानां वा द्रव्याणामर्थानां च प्रतिपादनं कुर्वन्ति। समासान्ते कश्चिदेकोऽधिको वर्णोऽक्षरं वा कदा कदा दृश्यते तादृशवर्णस्याक्षरस्य वा पाणिन्याचार्येण समासान्त इत्येवं संज्ञा विहिता। ते च समासान्ताः प्रत्ययेष्वेव परिगणिताः। तथापि तेषां स्वातन्त्र्येणान्यः कश्चनाप्यर्थो नैवोक्त इति हेतोर्यादृशसमासानामन्तावयवा भवन्ति तादृशसमासानामेवार्थं तेऽभिदधति नाधिकम्। अत एव ते स्वार्थिकप्रत्यया इत्येव

व्यवह्रियन्ते । एवं पाणिनिमतानुसारिभिर्वैयाकरणैः सिद्धान्तः प्रस्थापितोऽस्ति । पाणिन्याचार्येण धातुपाठे भू, एध, इत्यादयः केवलं धातव एव पठ्यन्ते । ते च धातवो भ्वादि' अदादि, जुहोत्यादीत्येवमादिशब्दैर्दशधा विभक्ताः । सैव दशगणीत्युच्यते । दशगणयन्तर्गतधातुभ्यः कर्तरि शप्, दिवादिभ्यः श्यनित्येवमादयो विकरणाख्याः प्रत्यया विधीयन्ते । तैश्च विकरणैः कतिथगणस्थोऽयं धातुरिति ज्ञातुं शक्यते । यथा एधते, अत्ति, जुहोति, दीव्यतीत्यादि । दशगणयन्तर्गतधातुभिः, भवनं करणं गमनं पचनमित्येमादिसामान्यक्रिया विशेषक्रिया चोच्यते । तथा प्रयोजकविशिष्टक्रियां, इच्छार्थविशिष्टक्रियां, क्रियासमभिहारविशिष्टक्रियां चाभिदधाना णिच्–सन्यङ्प्रत्ययान्ता धातुघटितधातवोऽपि आचार्येणोक्ताः । एवं नामघटितधातवोऽप्युक्ता इति बोध्यम् ।

१४ नामाख्यातोपसर्गनिपाता एते सर्वेऽर्थवन्तो भवन्ति अथ च तेषु प्रत्येकं प्रकृतिप्रत्ययेत्येवं भागद्वयं वर्तत इत्यपि सान्वितमुपरि । प्रकृतिप्रत्यययोरर्थः किं शब्दवाच्यत्वेन मनस्यायाति किंवा सूचकत्वेनेत्येतद्विषये पाणिनिसूत्रैः किमपि निष्कष्टुं न शक्यते । निपाता उपसर्गाश्चेति द्वौ प्रकारौ स्वतन्त्राविति पूर्ववैयाकरणैः स्वीकृतामिति तत्प्रतिपादितोऽर्थो द्रव्यस्वरूपः क्रियास्वरूपो न भवतीति न शब्दवाच्यत्वेन मनस्यायाति किंतु तैः सूचितो भवतीति वक्तुं शक्यम् । तद्योग्यमिति भाति । यतो देवभूमिजलादिशब्दोपस्थितमर्थं प्रतिपादयितुं यथाऽमरभूदकादयस्तत्पर्यायशब्दाः प्रयोक्तुं शक्याः । न तथा इवादिशब्दोपस्थितमर्थं प्रतिपादयितुं समुच्चयसादृश्यादिशब्दाः प्रयोक्तुं शक्याः । समुच्चयादिशब्दप्रतिपादितस्यार्थस्य लिङ्गसंख्याद्यन्वितत्वेन द्रव्यत्वात् । चादिशब्दोपस्थितस्य समुच्चयाद्यर्थस्य लिङ्गसंख्याद्यनन्वितत्वेनाद्रव्यत्वात् । अर्थाभिधाने स्पष्टं दृश्यमानेनानेन महता भेदेन हेतुना निपातोपसर्गा अर्थस्य द्योतका भवन्तीति सिद्धान्तो निष्कष्टुं शक्योऽस्ति । भर्तृहरिणाऽपि तथा स्पष्टमेवोक्तम् । अर्थाभिधानविषये वाचकत्व–द्योतकत्वे इत्येवं द्वौ प्रकारौ संग्रहकारनामकेन व्याड्याचार्येण प्रथमतो ' दृग्गोचरत्वमानीतौ । इत्येवं संग्रहस्थोपलब्धग्रन्थात्प्रतीयते । वार्तिककृद्भिस्तु चादयोऽसत्त्वे ' इत्येवमसत्त्वशब्दप्रयोगान्निपातोपसर्गा अनर्थका इत्ययं सिद्धान्तो निष्कृष्टोऽस्ति । तस्यापि पुरस्तात्पदमात्रं गत्वा निपातानामनर्थकत्वात्-

प्रातिपदिकसंज्ञा न स्यादिति मनसिकृत्य प्रातिपदिकसंज्ञासिद्ध्यर्थं ' निपातस्यानर्थकस्यापि प्रातिपदिकत्वम् ' इति वचनमाहृत्य कृतमस्ति ।

१५ महाभाष्ये 'अर्थाभिधानं पुनः स्वाभाविकम्' इत्येवं वार्तिकवचनं बहुवारमुध्दृतमालक्ष्यते । तेन च अर्थप्रतिपादनं नित्यशब्दस्य स्वभावोऽस्ति । नेश्वरेच्छां संकेतं वा समालम्बते । इति वार्तिककृतो भाष्यकृतो वा मन्यन्ते । तथा जातिशब्द—गुणशब्द—क्रियाशब्द—द्रव्यशब्दाः ( संज्ञाशब्दाः ) इत्येवं चतुरः प्रकारान् स्वीकृत्य जातिगुणक्रियासंज्ञाख्यानि चत्वारि शब्दप्रवृत्तिनिमित्तानि दर्शितानि । अथापि शब्दाः क्रियां वा द्रव्यं वा प्रतिपादयन्तीति सिद्धान्तबाधा यथा न स्यात्तथा विचारसरणिस्तैः समालम्बिता । शुक्लनीलादयः शब्दा यद्यपि प्रवृत्तिनिमित्तभेदाद्गुणशब्दाः पाचकपाठकादिशब्दाश्च क्रियाशब्दा भवन्ति तथापि ते पर्यवसाने गुणयुक्तं क्रियायुक्तं वा द्रव्यमेवाभिदधति । केवलं तिङन्तशब्दा एव क्रियां वा भावं वा दर्शयन्ति । कृदन्तशब्दा अपि कर्ता, कर्म, करणादिकरणात्मकं द्रव्यमेव प्रदर्शयन्तीति ' कृदभिहितो भावो द्रव्यवद् भवतीति बहुशो निर्दिष्टाद्भाष्यवचनात्सिध्यति । एतदपवादस्त्वेन तुमुन् प्रत्ययो न कर्तृरूपमर्थं ब्रूते किन्तु भावमेव वक्तीत्युक्तं भाष्यकारैः । तादृशार्थकं ' अव्ययकृतो भावे भवन्ति ' इत्याकारकं वार्तिकवचनमप्युध्दृतं वर्तते । एतद्विषये ' स्वादुमि णमुल् ' इति सूत्रे भाष्यकारः ' पक्त्वौदनं ग्रामो गम्यते देवदत्तेन ' इति वाक्यमादाय अर्थप्रतिपादनविचारस्य बह्वेव सुन्दरं विवेचनं कृतवान् । वैयाकरणभूषणसारेऽपि हि एतद्विषये बहुविस्तृत उहापोहः कृतो विद्यते ।

१६ वार्तिककृतां भाष्यकृतां चोपरिष्टात्प्रदर्शितान् शब्दार्थविषयकसिद्धान्तान् ' कृदभिहितो भावो० अव्ययकृतो भावे ' इत्यादीनि अर्थप्रतिपादनरीतिविषयकाणि च वचनानि मनसि गृहीत्वा भर्तृहरिणा वाक्यपदीयनामा ग्रन्थोऽलेखि । तत्र च निपातोपसर्गेभ्यो जायमानोऽर्थबोधो द्योतकत्वेनैव जायत इत्ययं सिद्धान्तो बलवत्तररीत्या प्रस्थापितः । नैतावदेव किंतु प्रत्ययानामपि सादृश्यान्निपातवर्गे उपवेश्य प्रत्यया अपि अर्थानां द्योतका एव भवन्तीति स्पष्टमभिहितम् । भर्तृहरेरनन्तर जायमानैर्वैयाकरणैः क्षुद्राः स्वमतभेदा अपलप्यन्ते चेत् भर्तृहरिसिद्धान्तानामेव विस्तरेण प्रतिपादनं कृतम् । किंतु तेषु सिद्धान्तेषु प्रतिपाद्यमानेषु सत्सु भाष्येण विसंवादो मा भूदिति बहुचिन्तोढा । अर्थाभिधानं पुनः स्वाभाविकम् '

इत्येतादृशभाष्यकारसिद्धान्तबलात्सर्वेऽपि शब्दाः शक्त्यैव अर्थान् प्रतिपादयन्ति इत्येवं महासिद्धान्तः सर्वैर्वैयाकरणैरङ्गीकृतोऽस्ति ।

१७ भर्तृहरेर्वाक्यपदीयग्रन्थः काण्डत्रयात्मकः । तत्र प्रथमं काण्डं प्रायस्तत्त्वज्ञानप्रतिपादनपरम् । लोके तावत्स्वमनोगतान् विचारान् परं प्रत्यावेदयितुं शब्दप्रयोगः क्रियते । एतादृशशब्दप्रयोगकरणसमये यादृगी कल्पना मनसि भवति, या चान्यस्य ज्ञाता भवत्विति धिया शब्दोच्चारणक्रिया प्रारभ्यते, तथा या 'कर्णेन्द्रियेण ध्वनिग्रहणादनन्तरं स्मृतिरूपेण स्थातुं शक्नोति, एवमात्मिकायाः कल्पनाया एव भर्तृहरिणा 'स्फोट' इति व्यवहारः कृतः - निरुक्तकल्पनाया विशिष्टविधिपरवाक्यार्थरूपत्वादखण्डवाक्यस्फोट इत्येवं व्यवहारः कृतः शास्त्रे । अर्थादियमखण्डवाक्यस्फोटाभिधेया काचनेका विशिष्टा शब्दशक्तिरेव भवति यां चावलम्ब्यैव जगत सर्वे व्यवहाराः प्रचलन्ति । सेयं शक्तिरेव 'शब्दब्रह्म' इति शब्देनोच्यते । बादरायणादिग्रन्थोक्तत्त्वज्ञानेनेव स्फोटज्ञानेनैव मोक्षः संपद्यत इति चोक्तम् । द्वितीये काण्डे दिक्कालाद्युपाधिवशादन्यथा भासमानस्य अखण्डवाक्यस्फोटस्य विवेचनं कृतम् । तथैव प्रत्ययोपसर्गकर्मप्रवचनीयनिपातानां द्योतकत्वमित्येषोऽर्थः सिद्धः कृतः । तृतीये काण्डे तु शब्दार्थविचारोऽतीव सामीचीन्येन कृतोऽस्ति । तदेतत्तृतीयं काण्डं प्रकीर्णककाण्डमित्युच्यते । एतस्मिन् काण्डे चतुर्दश समुद्देशाः सन्ति । एतन्मध्येऽर्थविचारदृष्ट्या महत्त्ववतां कतिपयानां पाणिनिसूत्राणां सुन्दरं विवेचनं कृतमस्ति । विशेषतः शब्दानामर्थो जातिर्वा व्यक्ति( द्रव्यं )र्वेति विषये विवेचनं कृतम् । तथा शब्दानामर्थः सह संबन्धः कीदृशः कथं च वर्तत इत्येतद्विषये विवेचनं कृतं विद्यते । तथैव गुणक्रिययोरपि ' विवेचनं कृतम् । अनन्तरं च संख्या वचनं परस्मैपदात्मनेपदे लिङ्गं चेत्येतेषामर्थदृष्ट्या विचारः कृतोऽस्ति । भर्तृहरिणा नित्यशब्दापरपर्यायस्य स्फोटस्य प्राधान्यं दत्त्वा वाक्यपदीयग्रन्थे शब्दार्थस्य विचारोऽकारि । व्याकरणशास्त्रमिदं शुद्धाः शब्दाः के के चाशुद्धा इति 'यथा कथंचित् शुद्धाशुद्धशब्दस्वरूपमावेदयन्न केवलं शब्दशास्त्रं, किंतु याथातथ्येन शब्दस्वरूपं बोधयित्वा तच्चिन्तनेन ध्यानेन च शब्दब्रह्मज्ञानं ददत्तद्द्वारा मोक्षप्राप्तिकरत्वाद्दर्शनस्वरूपमपि तदस्तीति संसाधितं भर्तृहरिणा ।

१८ भर्तृहरिसमानकालीनाभ्यां जयादित्यवामनाभ्यां काशिकावृत्तिरलेखि ततस्त्रिचतुरेषु वर्षशतकेषु काशिकावृत्तौ जिनेन्द्रबुद्धिना न्यासो नाम हरदत्तेन च पदमञ्जरी नाम द्वे व्याख्येऽलेखिषाताम् । तथा महाभाष्यग्रन्थस्य याथार्थ्येन ज्ञानं जायतामिति बुद्ध्या तदुपरि कैयटभट्टैरपि प्रदीपनाम्नी व्याख्या व्यराचि । परं तदनन्तरं प्रत्येकं विद्याया अवनतिकालः प्राप्नोति स्म । ख्रिस्ताब्दस्य पञ्चदशे शतके प्रक्रियाग्रन्थो लेखितुं प्रारब्धः । रामचन्द्रभट्टैः पाणिनिसूत्रोपरि प्रक्रियाकौमुदीनामा प्रकरणग्रन्थोऽलेखि । तद्वदेव सप्तदशे शतके भट्टोजीदीक्षितैः सिद्धान्तकौमुदीत्याख्यं सर्वाङ्गसुन्दरं ग्रन्थं विलिख्य तदुपरि तद्व्याख्यानभूता मनोरमा मनोरमाख्या टीकापि लिखिता । भर्तृहरिविरचितवाक्यपदीयस्य कारिकात्मकत्वात्सूत्रवदल्पाक्षरत्वाद्गभीरार्थजालजटिलत्वाच्चात्यन्तदुर्बोधत्वात्तत्रत्या दर्शनरूपत्वनिर्वाहिका विचारसरणिः शब्दसिद्धप्रतिपादको भूयानुभागश्च इत्येतद्द्वयस्य सकैयटभाष्यान्तव्याकरणशास्त्राभ्यासितुरनुपयुक्तत्वाच्च भट्टोजीदीक्षितैरर्थविचारौपयिको वैयाकरणसिद्धान्तकारिका नाम लघुः संग्रहग्रन्थो व्यलेखि । स एव ग्रन्थो लघुत्वात्सारवत्त्वाच्च गुरुमुखं विना ज्ञातुं सर्वथाऽशक्य इति बुद्ध्वा दीक्षितानां भ्रातुष्पुत्रैः कौण्डभट्टैर्वैयाकरणभूषणसारनामानं ग्रन्थं विरच्य तद्विवरणमकारि । वाक्यपदीयग्रन्थे भर्तृहरिणा यादृशविषयस्य विवेचनं विहितं तादृशस्यैव विषयस्य प्रायः कारिकासु भट्टोजीदीक्षितैर्विवेचनं कृतम् । परं शब्दप्रक्रियाग्रन्थानां संपूर्णाध्ययनानन्तरमर्थप्रक्रियाग्रन्थावबोधाय येषां विषयाणामाधिक्येनापेक्षा विद्यते, यथा धात्वर्थनामार्थप्रत्ययार्थशब्दशक्तिसमासशक्तिविचारेत्यादि । एवमादिविषयाणामधिकं महत्त्वं दत्त्वा दीक्षितैर्वैयाकरणसिद्धान्तकारिका नाम ग्रन्थो व्यलेखि । न्यवेशि च तदन्ते स्फोटविचारः ।

१९ वैयाकरणभूषणं वैयाकरणभूषणसारश्चेत्येतौ ग्रन्थावर्थग्रन्थत्वेन वाक्यपदीयापेक्षयाऽत्याधिकं सुगमावुपयुक्तौ चेति यद्यप्यनुभवसाक्षिकं तथापि गाम्भीर्योऽर्थविचार इत्येषविषयो जात्यैव दुर्बोध इति कृत्वा तदर्थस्य याथार्थ्येनावगमाय सुलभटीकाया अपेक्षा भाति स्म । अतस्तदुपरि मन्नोपज्ञालघुभूषणकान्तिप्रभृतयष्टीका व्यलेखिषत । परमेताः संपूर्णतया नोपलभ्यन्ते । कालोपनामकहरिरामशास्त्रिभिर्विहिता काशिकानाम्नी टीका मुद्रितापि सांप्रतं विक्रयपुस्तकशालायां नोपलभ्यते । पुस्तकावशेषाभावात् । किंच हरिरामदीक्षितानां लेखन-

पद्धतेः पण्डितपरम्परानुसारेण न्यायपरिष्कारघटितत्वान्मन्दमध्यमाधिकारिणां तदर्थबोधाय न तादृश उपयोगो भवति । इत्यादि सर्वमालोच्य श्री० शंकरशास्त्रिभिर्मारुलकरोपाह्वैः कै० महामहोपाध्यायवासुदेवशास्त्रिगुरुचरणानां सकाशेऽध्ययनसमये परमपूज्य 'गोडबोले' इत्युपाधिधरामशास्त्रि—अभ्यंकरोपाभिधभास्करशास्त्रि—थत्ते इत्युपनामकनीलकण्ठशास्त्रीत्येवं गुरुत्रयपरम्परया समायातमर्थग्रन्थस्थसिद्धान्तानां यत्स्पष्टीकरणं संपादितं तत्सम्यग्विचार्य तदुपयोगं च कृत्वाऽत्यन्तपरिश्रमपूर्वकमियं टीका लिखिता । पञ्चतपःपरिमितेऽथवा तदपेक्षयापि किंचिदधिके एवमात्मके दीर्घीयसि स्वाध्ययनाध्यापनकाले वैयाकरणभूषणसारान्तर्गतभिन्नभिन्नप्रतिपाद्यविषयगतमहाभाष्य—कैयटप्रदमञ्जरी— शब्दकौस्तुभे यादिग्रन्थस्थविवेचनं साकल्येन आत्मसात् कृत्वा श्री० शंकरशास्त्रिभिः स्वयं लिखितेयं शांकरीटीकाऽऽनन्दाश्रमसंस्थाधिकारिभिश्च केवलं व्याकरणशास्त्रीयज्ञानाभिवृद्ध्यर्थं प्रकाशिता वैयाकरणभूषण वैयाकरणभूषणसारयोर्मध्ये कमपि पठयतां गुरूणां गुरुमुखं विना स्वतो वाचनेनैवैतद्ग्रन्थार्थज्ञानसंपादनप्रसक्तवतां च छात्राणां मातेव हितकारिणी अत एव शांकरीति यथार्थनाम्नी टीका संवृत्ताऽस्ति - शंकरशास्त्रिभिः शिष्यत्वेनाध्ययनकरणसमये समागच्छन्तीरनुपपत्तीः संपूर्णतया मनसि गृहीत्वाऽस्याष्टीकाया लिखितत्वाद्विद्यार्थिनामेवद्ग्रन्थार्थप्रतिपत्तये तत्तद्विषयाणां सुगमया पद्धत्या यथावद्यावदपेक्षितं च स्पष्टीकरणं कृत्वा पाठनं तेन सहैव च तत्समशास्त्रान्तरस्थविवेचनसरणेः कल्पनां तेभ्यो दत्त्वा तन्मध्ये वैयाकरणप्रणीतग्रन्थस्थविवेचनोल्लेखान् स्पष्टीकृत्य कथनमेवमादिं श्रेष्ठतमगुरूणामध्यापनपद्धतिं साकल्येन मनस्युपादाय प्रस्तुतटीकाया विरचितत्वादतिमात्रमुपयुक्ता जाताऽस्ति । एतादृग्विद्वत्तापरिपूर्णटीकायाः शास्त्रिभिरात्मना सरलसुन्दरभाषया लखनविषये आनन्दाश्रमप्रचालकैस्तत्प्रसिद्धीकरणविषये चापि आवां लेखकप्रकाशकयोरुभयोरपि हार्दिकमभिनन्दनं कुर्वः ।

प्राध्यापकौ—

अभ्यंकरोपाह्व—म० म० वासुदेवशास्त्रितनूजः

काशीनाथशास्त्री.

देवधरोपाभिधरामचन्द्रात्मजश्चिन्तामणरायश्च ।

पुण्यपत्तनम्—

आषाढ वद्य १ मङ्गलवासरः,

( ता. २३—७—१९५७ )

## अथ भट्टोजिदीक्षितप्रणीतवैयाकरणसिद्धान्तकारिका-
## विषयानुक्रमः ।


| | पृ० |
|---|---|
| मङ्गलाचरणं ग्रन्थादौ प्रतिज्ञा च, ... ... | १—७ |
| धात्वर्थाख्यातसामान्यार्थनिर्णयः ... ... ... | ८-१४५ |
| लकारविशेषार्थनिरूपणम् ... .... ... | १४६ १६७ |
| सुबर्थनिर्णयः ... ... ... ... | १६८—२१५ |
| नामार्थनिर्णयः ... ... ... | २१६—२४६ |
| समासशक्तिनिर्णयः ... .... ... | २४७—३१६ |
| शक्तिनिर्णयः ... ... ... ... | ३१७—३५५ |
| नञर्थनिर्णयः ... .... ... ... | ३५६-३६७ |
| निपातद्योतकत्वनिर्णयः .... .... ... | ३६८—३९५ |
| भावप्रत्ययार्थनिर्णयः ... ... ... .... | ३९६—४१७ |
| देवताप्रत्ययार्थनिर्णयः .... ... ... .... | ४१७—४३१ |
| अभेदैकत्वसंख्याया वृत्तौ भानानिर्णयः ... ... | ४३२—४३८ |
| उद्देश्यविधेययोः संख्याविवक्षानिर्णयः ... ... | ४३९—४४५ |
| क्त्वाद्यर्थनिर्णयः ... ... ... ... | ४४६—४५६ |
| स्फोटवादः ... ... .... ... | ४५७—४७३ |
| पदादिस्फोटनिर्णयः ... .... .... .... | ४७४—४ .६ |
| अखण्डपदस्फोटानिर्णयः .... .... .... | ४९७—५०७ |


इति भट्टोजिदीक्षितविरचितवैयाकरणसिद्धान्तकारि-
काविषयानुक्रमः समाप्तः ।

———

# अथ भट्टोजिदीक्षितविरचितवैयाकरणसिद्धान्तकारिकाद्यचरणप्रतीकानामकारादिवर्णानुक्रमसूची ।


| प्रतीकानि. | पृ० | का० |
|---|---|---|
| **अ.** | | |
| अत एव गवित्याह | २४४ | २७ |
| अथाऽऽदेशा वाचकाश्चेत् | २७४ | ६३ |
| अत्रार्धजरतीयं स्यात् | ४०१ | ५० |
| अनेकव्यक्त्यभिव्यङ्ग्या | ५०५ | ७१ |
| अभावो वा तदर्थोऽस्तु | ३५९ | ४१ |
| अभेदैकत्वसंख्याया | ४३२ | ५५ |
| अविग्रहा गतादिस्था | १२४ | १९ |
| अव्ययकृत इत्युक्तेः | ४४६ | ५९ |
| अव्ययार्थनिरुक्तौ | २७६ | ३३ |
| असाधुरनुमानेन | ३४१ | ३८ |
| अस्त्यादावपि धर्म्यंशे० | ९५ | १२ |
| **आ.** | | |
| आख्यातशब्दे भागाभ्यां० | १०० | १४ |
| आख्यातं तद्धितकृतोः | ३१२ | ३४ |
| आश्रयोऽवधिरुद्देश्यः | १६८ | २४ |
| **इ.** | | |
| इत्थं निष्कृष्यमाणं | ५०६ | ७३ |
| इन्द्रियाणां स्वविषये | ३१७ | ३६ |
| **उ.** | | |
| उत्सर्गोऽयं कर्मकर्तृ. | ५० | ४ |
| **ए.** | | |
| एकं द्विकं त्रिकं चाथ | ११६ | २५ |
| **क.** | | |
| कल्पितानामुपाधित्वं | ५०३ | ६९ |
| **कि.** | | |
| किं कार्यं पचनीयं च | ७८ | ९ |
| किंतूत्पादनमेवातः | ६२ | ६ |
| **कृ.** | | |
| कृत्तद्धितसमासेभ्यो० | ३९३ | ४९ |
| कृत्वोर्थाःक्त्वातुमुन्वत्स्युः | १३० | २० |
| **क्रि.** | | |
| क्रीडायां णस्तदस्यास्ती० | ४२५ | ५४ |
| **घ.** | | |
| घटेनेत्यादिषु नहि | ४७६ | ६४ |
| **च.** | | |
| चकारादिनिषेधोऽथ | २७१ | ३२ |
| **ज.** | | |
| जहत्स्वार्थाजहत्स्वार्थे० | २५४ | ३० |
| **त.** | | |
| तथाऽन्यत्र निपातेऽपि | ३७२ | ४३ |
| तथा यस्य च भावेन | ११५ | १७ |
| तरबाद्यन्ततिङ्क्षस्ति | ४७० | ६२ |
| तस्मात्करोतिर्धातोः स्यात् | ६९ | ८ |
| **द्यो.** | | |
| द्योतकाः प्रादयो येन | ३६८ | ४१ |
| **धा.** | | |
| धात्वर्थत्वं क्रियात्वं चेत् | ९३ | ११ |
| **न.** | | |
| नञ्समासे चापरस्य | ३५६ | ३२ |
| नञ्समासे चापरस्य | ३८५ | ४६ |
| **नि.** | | |
| निपातत्वं परेषां यत् | ३९४ | ४८ |
| निपातानां वाचकत्व | ३८८ | ४७ |
| निर्वर्त्ये च विकार्ये च | ६५ | ७ |
| **प.** | | |

| प्रतीकानि. | पृ० | का० |
|---|---|---|
| पञ्चकोशादिवत्तस्मात् | ५०० | ६८ |
| पदार्थःसदृशाऽन्वेति | ३७७ | ४४ |
| पदे न वर्णा विद्यन्ते | ४९१ | ६६ |
| पर्यवस्यच्छाब्दबोधः. | ३१४ | ३५ |
| प्र. | | |
| प्रत्ययार्थस्यैकदेशे | ४ ० | ५२ |
| प्रदेय एव वा शक्तिः | ४२२ | ५३ |
| प्रयोगोपाधिमाश्रित्य | ४०७ | ५१ |
| फ. | | |
| फणिभाषितभाष्याब्धेः | ७ | १ |
| फलव्यापारयोरेक. | १८ | १३ |
| फलव्यापारयोर्धातुः | ८ | २ |
| फलव्यापारयोस्तत्र० | ४८ | ३ |
| भे. | | |
| भेद्यभेदकसंबन्धो. | १३३ | २१ |
| य. | | |
| यदि पक्षेऽपि वत्यर्थः | १२३ | १८ |
| र. | | |
| रदाभ्यां वाक्यभेदेन. | ४४५ | ५८ |
| ल. | | |
| लक्ष्यानुरोधात्संख्याया | ४३८ | ५६ |
| व. | | |
| वर्तमाने परोक्षे श्वो. | १४६ | २२ |
| वा. | | |
| वाक्यस्फोटोऽतिनिष्कर्षे. | ४५७ | ६० |
| वि. | | |
| विधेये भेदकं वन्यम्- | ४४६ | ५७ |
| व्य. | | |
| व्यवस्थितेर्व्यवहृतेः | ४६२ | ६१ |
| व्या. | | |
| व्यापारो भावना सैवो० | ५२ | ५ |
| श. | | |
| शक्यत्व इव शक्तत्वे | ५०४ | ७० |
| शब्दोऽपि यदि भेदेन | २३६ | २६ |
| शैरेरुक्ते रिवोदीच्यात्० | ३७९ | ४५ |
| स. | | |
| सत्यासयो तु यो भागो | ५०६ | ७२ |
| समासस्तु चतुर्धेति. | २४८ | [illegible] |
| समासे खलु भिन्नैव. | २६३ | ३१ |
| सर्वत्रैव हि वाक्यार्थो | ४८९ | ६६ |
| सर्वनामाव्ययादीनां. | ९० | १० |
| सा. | | |
| साध्यत्वेन क्रिया तत्र | १०४ | १५ |
| सु. | | |
| सुपां सुपा तिङा नाम्ना. | २४५ | २८ |
| सं. | | |
| संबन्धशब्दे संबन्धो. | ३५४ | ३९ |
| संबोधनान्तं कृत्वोर्थाः | १०६ | १६ |
| ह. | | |
| हरेवेत्यादि दृष्ट्वाच. | ४७९ | ६५ |
| ह्यो. | | |
| ह्योभूते प्रेरणादौ च. | १५७ | २३ |


इति भट्टोजिदीक्षितविरचितवैयाकरणसिद्धान्तकारिकाद्यचरण-
प्रतीकानामकारादिवर्णानुक्रमसूची समाप्ता।

ॐ तत्सद्ब्रह्मणे नमः ।

श्रीकौण्डभट्टविरचितः

( शांकरीव्याख्यासमेतः )

# वैयाकरणभूषणसारः ।

श्रीलक्ष्मीरमणं नौमि गौरीरमणरूपिणम् ।
स्फोटरूपं यतः सर्वं जगदेतद्विवर्तते ॥ १ ॥

---

( शांकरी व्याख्या )

श्रीवनशंकरीवनशंकराभ्यां नमः ।

भारद्वाजं कुलं यस्य शाखा यस्य च बाह्वृची ।
रमाख्या जननी, पूज्यो रङ्गभट्टाभिधः पिता ॥ १ ॥
ज्यायान् भ्राता नरहरिर्मीमांसाद्वयपण्डितः ।
जगद्गुरुपदारूढो विद्याशंकरभारती ॥ २ ॥
नाम बिभ्रत्कारवीरपीठाधीशो विराजते ।
यस्यैवं वंशवृत्तं स शंकरः शास्त्र्युपाधिभृत् ॥ ३ ॥
नत्वा दक्षिणकेदारं स्मृत्वा गुरुपदाम्बुजम् ।
व्याख्यां भूषणसारस्य सुगमां तनुतेऽल्पधीः ॥ ४ ॥

इह खल्ववजिगमिषूणामवगमाय भट्टोजीदीक्षितप्रणीता वैयाकरणसिद्धान्तकारिका व्याचिख्यासुः रङ्गोजीभट्टात्मजः कौण्डभट्टनामा सुधीः पण्डितः सर्वस्यापि कार्यस्यान्तरायव्याप्तत्वं मन्यमानः प्रारिप्सितस्य वैयाकरणसिद्धान्तविषयकग्रन्थस्य प्रचारपरिसमाप्त्यादिप्रतिबन्धकप्रत्यूहव्यूहप्रशमनाय कृतं सकलजगत्कर्तृभूतगौरीरमणात्मकश्रीलक्ष्मीरमणस्तुतिरूपं मङ्गलं शिष्यशिक्षणार्थं ग्रन्थादौ निबध्नाति--श्रीलक्ष्मीरमणमिति । श्रीः सरस्वती, लक्ष्मीर्हरिप्रिया । तयो रमणः । रमत इति रमणः । नन्द्यादित्वात्कर्तरि ल्युः । 'श्रीश्च ते लक्ष्मीश्च पत्न्यौ' इति मन्त्रे श्रीशब्देन सरस्वती, न तु लक्ष्मीः । लक्ष्म्याः पृथगुपादानात् । ननु शिवस्य हृदयं विष्णुर्विष्णोश्च हृदयं शिवः । विष्णुरुद्रान्तरं यश्च यो ब्रूते मूढधीस्तु सः ॥ इत्यादिवचोभ्यो हरिहरयोर्भेदस्यानर्थावहत्वात्केवलविष्णोः स्तवने पार्थक्येन शिवविष्ण्वोः स्तवने च भेदः प्रतीयेतेति तन्निरसनद्वाराऽभेदम-

तिपत्त्यर्थं लक्ष्मीरमणस्याभेदेन विशेषणमाह—गौरीरमणेति । गौरी पार्वती तस्या रमणः शिवः, तस्य रूपं स्वरूपं तदस्यास्तीति मत्वर्थीय इनिः । अन्ये तु तु गौरीरमणं रूपयति स्वाभिन्नतया प्रदर्शयतीति रूपयजानाविति ताच्छील्ये कर्तरि णिनिरिति व्याचक्षते । तद्युक्तं न 'रसादिभ्यश्च' (पा. सू. ५।२।९५) इति मतुब्विधानस्यात इनिठनौ, इत्यादिभ्यान्यमत्वर्थीयानिवृत्त्यर्थतया रूपशब्दस्य रसादिगणे पठितत्वात्तस्मादिनिप्रत्ययो दुर्लभ इति । अनेन विशेषणेन हरिहरयोरभेदः स्पष्ट एवोक्तः । तथा च गौरीरमणाभिन्नं लक्ष्मीरमणं विष्णुं नौमि स्तौमीत्यर्थः । णु स्तुताविति पाणिनिस्मरणात् । स्तुतिश्च सर्वोत्कृष्टगुणवत्त्वेन प्रतिपादनम् । लक्ष्मीरमणं सर्वोत्कृष्टगुणवत्त्वेन प्रतिपादयामीत्यर्थः । स्फोटरूपमिति । लक्ष्मीरमणविशेषणमेतत् । स्फुटति प्रकाशतेऽर्थो यस्मादिति व्युत्पत्त्या सकलार्थप्रकाशकं तत्त्वं स्फोटः । तच्च तत्त्वं वेदान्तेषु वर्ण्यमानं सकलजगन्निदानं मायाशबलितं ब्रह्मैवेति स्फोटो ब्रह्मेत्यर्थः । तद्रूपं तत्स्वरूपं सकलजगन्निदानभूतब्रह्माभिन्नमिति यावत् । एतादृशं लक्ष्मीरमणमित्यर्थः । जगतां विशेषणं वा । अस्मिन्पक्षे स्फुटति व्यक्तीभवति घटपटाद्यर्थो यस्मादिति स्फोटो वाचकः शब्दः । रूप्यते बोध्यत इति रूपमर्थः । तयोः समाहारद्वंद्वे नपुंसकैकवचनम् । वाच्यवाचका( नामरूपा )त्मकमेतत्परिदृश्यमानं सर्वं जगद्यतो विवर्तते, यत इति आद्यादित्वात्षष्ठ्यर्थे तसिः, यस्य विवर्तो भवति तं लक्ष्मीरमणमिति संबन्धः । यस्य कस्यचिदेकस्य नामरूपात्मकस्य वस्तुन उत्पत्तेरन्यस्मात्तासंभवादित्युक्तं सर्वमिति । विवर्तो नामातात्त्विकोऽन्यथाभावः । स च पूर्वरूपापरित्यागेनासत्यनानाकारप्रतिभासः । यथा शुक्तिकायां रजतस्य रज्ज्वां वा सर्पस्य प्रतीतिः । अत्र शुक्ती रज्जुर्वा स्वस्वरूपमपरित्यज्यैवान्यरूपेण रजतरूपेण सर्परूपेण वा प्रतिभासते । यत्र यदधिष्ठानं स्वयमविकृतं सदेवान्यथा भवति स विवर्त इति भावः । तात्त्विकोऽन्यथाभावः परिणामः । पूर्वरूपपरित्यागेनान्यथाभवनम् । यत्र यदधिष्ठानं स्वयं विकृतं सदेव अन्यथा भवति स परिणाम इत्यर्थः । यथा दुग्धस्य दध्यात्मना परिणामः । अत्र दुग्धं स्वयं विकृतं सदेव पूर्वरूपं परित्यज्यैवान्यथा भवति दध्यात्मना परिणमते । एतेन भगवतो लक्ष्मीरमणस्य विवर्ताधिष्ठानत्वरूपं सर्वजगन्निदानत्वमुक्तम् । तेन सर्वोत्कृष्टतया स्तुत्यत्वमावेदितम् । स्फोटस्य वैयाकरणोपास्यत्वेन समुचितेष्टदेवतायाः स्तुतिरूपं मङ्गलं च सूचितम् ॥१॥

( मङ्गलाचरणम् )

अशेषफलदातारं भवाब्धितरणे तरिम् ।
शेषाशेषार्थलाभार्थं प्रार्थये शेषभूषणम् ॥ २ ॥

वाग्देवी यस्य जिह्वाग्रे नरीनर्ति सदा मुदा ।
भट्टोजिदीक्षितमहं पितृव्यं नौमि सिद्धये ॥ ३ ॥

---

इदानीं व्याकरणशास्त्रव्याख्यातृत्वेनातिश्रेष्ठो यः शेषस्तद्विशिष्टं देवं स्तौति—

**शेषाशेषार्थेति** । शेषस्य शेषाख्यनागस्य महाभाष्यकारस्य, अशेषाः कृत्स्ना येऽर्था वाच्यादयः स्फुटा अस्फुटाश्च महाभाष्यस्थास्तेषां लाभार्थं प्रति-पत्त्य इत्यर्थः । शेषभूषणं—शेषोऽनन्तोऽलंकारत्वेन पर्यङ्कत्वेन वा भूषणं यस्य तं शिवं शेषशायिनं विष्णुं च प्रार्थय इति संबन्धः । ननु शेषार्थलाभाय शेष एव प्रार्थ्यतां न शिवादिरित्याशङ्क्य तद्विशेषं निर्वक्ति—**अशेषफलेति** । अशेषाणां कृत्स्नानामैहिकामुष्मिकाणामपवर्गपर्यन्तानां फलानां दातारमिति तृज-न्तस्य तृन्नन्तस्य वा शेषषष्ठ्यन्तेन समासः । अशेषफलदातृत्वं चेश्वरस्य 'याद्द-गिव वै देवेभ्यः करोति ताद्दगिवास्मै देवाः कुर्वन्ति' लभते च ततः कामान्म-यैव विहितान् हितान्, इत्यादिश्रुतिस्मृतिषु प्रसिद्धम् । ननु प्रतिबन्धकांहोबहुत्वे कथमिव शेषाशेषार्थलाभः स्यादित्याशङ्कां दूरीकर्तुं तद्विशेषणमाह—**भवाब्धी-ति** । भवः संसारः, स एवाब्धिरिति मयूरव्यंसकादित्वात्समासः । यद्वा भवोऽ-ब्धिरिवेत्युपमितसमासः । भवाब्धेस्तरणं तत्र तरिं नौकां साधनमिति यावत् । 'तरति शोकमात्मवित्' इति श्रुतेः । तथा चानन्यसाध्या याऽनेकदुःखपरम्प-रारूपसंसारस्य निवृत्तिस्तत्र यः समर्थस्तस्य प्रतिबन्धकदुरितनिवृत्तौ सुतरां सा-मर्थ्यमस्तीति किमु वक्तव्यमिति भावः । तथा च प्रतिबन्धकदुरितनिवृत्त्याऽनाया-सनैव शेषाशेषार्थलाभः स्यादिति न तत्र संशयलेशमप्यवगाहते मन्मन इत्या-शयः ॥ २ ॥

अथ तात्कालिकनिखिलपण्डितमूर्धन्यं स्वपितृव्यं भट्टोजीदीक्षितं तत्कीर्त्य-नुवृत्त्यर्थं स्तौति—

वाग्देवी सरस्वती मत्स्वारस्यज्ञपण्डितश्रेष्ठपुरुषलाभेन सदाऽऽनन्दिता सती यस्य जिह्वाग्रे नरीनर्ति पुनः पुनरतिशयेन वा नृत्यं करोति तं पितृव्यं पितुर्भ्रातरं भट्टोजिदीक्षितं कौण्डभट्टोऽहं तत्कृतकारिकाणां व्याख्यानभूतस्यास्य भूषणसा-राख्यग्रन्थस्य सिद्धये निष्प्रत्यूहं परिसमाप्तयेऽध्येयत्वेनानेकजनसंबन्धरूपप्रचाराय

( मङ्गलाचरणम् )

पाणिन्यादिमुनीन् प्रणम्य पितरं रङ्गोजिभट्टाभिधं
द्वैतध्वान्तनिवारणादिफलिकां पुंभाववाग्देवताम् ।

वै नौमि स्तवीमीत्यर्थः । अत्र यतोऽयं कौण्डभट्टः स्वगुरुरूपेण वैयाकरणभूषणसाराख्यग्रन्थस्य सिद्धये पितृव्यं भट्टोजिदीक्षितं च नौति ततोऽयं पितृव्यो भट्टोजीदीक्षितः कौण्डभट्टस्य विद्याप्रदाता गुरुरिति ज्ञायते । विद्याप्रदातृगुरोश्च दृष्टान्तो नैव दृष्टस्त्रिभुवनजठरे सद्गुरोर्ज्ञानदातुरित्यभियुक्तोक्त्या सर्वातिशायिश्रेष्ठत्वावगमादेव जन्मप्रदपितृवन्दनात्पूर्वं पितृव्यवन्दनं युज्यते । अन्यथा जन्मप्रदत्वेन द्विजत्वसंपादकव्रतबन्धकर्तृत्वेन च पितृव्यापेक्षया पितुः पूज्यतमत्वात्पितृवन्दनात्पूर्वं पितृव्यवन्दनं न संगच्छेतेति भावः । जिह्वया रसज्ञया नटद्वागस्य सकलसारस्वतरसाभिज्ञत्वमाविष्कर्तुं यस्य जिह्वेत्युक्तम् । वाग्देव्या जिह्वाग्रे नर्तनं च झटित्येवानवरतं प्रवाहरूपेण शब्दार्थस्फोरणम् । एतेन लोकोत्तरं पाण्डित्यं वक्तृत्वं चाऽऽवेदितमिति ॥ ३ ॥

व्याकरणशास्त्रप्रवर्तकपाणिन्यादिमुनित्रयादिनमनरूपं मङ्गलं निबध्नन् प्रेक्षावतां प्रवृत्तिसिद्धयेऽधिकारिविषयसंबन्धप्रयोजनाख्यमनुबन्धचतुष्टयं प्रदर्शयञ्छिष्यावधानाय चिकीर्षितं निवेदयति—

पाणिनिकात्यायनपतञ्जलिमुनीन्, रङ्गोजिभट्टनामानं पितरं, ढुण्ढिं विघ्नविनायकं प्रणम्य प्रकृष्टं साष्टाङ्गत्वगुणविशिष्टं नमस्कारं कृत्वा गौतमजैमिनिवचनव्याख्यातृभिर्दूषितान् सिद्धान्तान्—वैयाकरणसिद्धान्तान्—धात्वर्थस्य भावनावाचकत्वं तिङामेव च कर्त्रादिवाचकत्वमित्येवंरूपानित्यर्थः । उपपत्तिभिर्युक्तिभिः प्रकटये, सिद्धान्तानामुपपन्नत्वे युक्तीः प्रकाशये, इत्यर्थः । तेषां—गौतमजैमिनीयवचोव्याख्यातॄणामाधुनिकनैयायिकमीमांसकानां वचांसि युक्तिशून्यत्वेनानुपपत्तिदोषग्रस्तानीति च स्थापये, इत्यर्थः । नमस्कारश्च स्वनिष्ठापकृष्टत्वनिरूपितपरनिष्ठोत्कृष्टताबोधनानुकूलः करशिरःसंयोगात्मको, नमःशब्दोच्चारणात्मको वा व्यापारः । व्याख्यातृभिर्दूषितानिति । व्याख्यातृशब्दप्रयोगेण जैमिनिगौतमादिमुनीनां पाणिन्यादिभिरविरोध एवेति सूच्यते । पाणिनिरादिर्येषां ते च ते मुनयश्चेति बहुव्रीहिगर्भः कर्मधारयः । बहुव्रीहिश्च सर्वादीनीतिवत्तद्गुणसंविज्ञानः । तेन पाणिनेरपि नमस्कार्यत्वलाभः । गौतमजैमिनीयवचनानि न्यायसूत्राणि मीमांसासूत्राणि च । पितृव्यस्य विद्याप्रदगुरुत्वेन सूचनात्स्वपितू रङ्गोजिभट्ट-

( मङ्गलाचरणम् )

ढुण्ढिं गौतमजैमिनीयवचनव्याख्यातृभिर्दूषितान्
सिद्धान्तानुपपत्तिभिः प्रकटये तेषां वचो दूषये ॥ ४ ॥
नत्वा गणेशपादाब्जं गुरूनथ सरस्वतीम्।
श्रीकौण्डभट्टः कुर्वेऽहं वैयाकरणभूषणम् ॥ ५ ॥

---

स्याविद्वत्त्वमाशङ्क्येतास्तं विशिनष्टि—द्वैतध्वान्तेत्यादि। द्वे इत आश्रयत्वेन प्राप्तो द्वीतो भेदः, तस्येदं ज्ञानं द्वैतम्। अनेकत्वावगाहिज्ञानमिति यावत्। तदेवाऽऽच्छादकत्वाद्ध्वान्तं तमो मोह इति यावत्। तस्य निवारणं निरसनं, तत्—आदि प्रथमं फलं यस्याः सा, एतादृशीं, पुंभाववाग्देवतां—पुंसो भाव आकारो यस्याः सा पुंभावा, पुरुषाकृतिकेत्यर्थः। सा चासौ वाग्देवता च सरस्वती तद्रूपमित्यर्थः। वाग्देवतां पितरमित्यनयोरजहल्लिङ्गत्वात् 'स्त्री प्रधानं' इतिवत्सामानाधिकरण्यम्। अनेनाद्वैतप्रतिपादकोत्तरमीमांसायां सर्वातिशायिनैपुण्यं सूचितम्। ढुण्ढिमित्यपि पितृविशेषणम्। तद्यथा—न केवलं वाग्देवतास्वरूपोऽपितु महागणपतिस्वरूपोऽपीति। अन्यथा पितृनमनानन्तरं महागणपतिनमनमत्यसंगतं स्यादिति भावः। 'सिद्धान्तानुपपत्तिभिः प्रकटये' इत्युक्त्या वैयाकरणसिद्धान्ता विषयः, विषयग्रन्थयोः प्रतिपाद्यप्रतिपादकभावः संबन्धः, तज्जिज्ञासुरधिकारी, तज्ज्ञानं च फलमिति सूचितमिति बोध्यम् ॥ ४ ॥

प्रत्यूहप्राचुर्यशङ्कया पुनरपि गणेशादिनमनरूपं मङ्गलं विदधत्स्वकीर्त्यनुवृत्तये स्वनाम स्वचिकीर्षितग्रन्थस्य च नाम निबध्नाति—नत्वा गणेशेति।

गणानां शिवगणानामीशो नियन्ता गणेशस्तस्येत्यर्थः। यद्वा भक्तगणानामिः कामः, कामेत्युपलक्षणं क्रोधादीनामपि। तथा च कामक्रोधादिषड्वर्गं श्यति तनूकरोतीति गणेशः। तस्य पादाब्जं पादावेवाब्जं कमलं, अतिशयश्लिष्टत्वादेकवचनम्। गृणात्यज्ञानं नाशयति ज्ञानोपदेशद्वारेति गुरुः। कृग्रोरुच्चेत्यौणादिकः कुः। निगूढमर्थं गृणात्युपदिशतीति वा गुरुः। सरोऽमृतसरस्तद्वती सरस्वती। व्याकरणं शास्त्रमधीयते विदन्ति वा वैयाकरणास्तेषां भूषणमलंकारमिव शोभादायकमित्यर्थः। तदेतदन्वर्थं ग्रन्थनाम। अर्थप्रक्रियाप्रतिपादकममुं ग्रन्थमनधीत्य केवलशब्दप्रक्रियाग्रन्थाध्ययनेन वैयाकरणा अनलंकृता इव न परिपूर्णतया शोभन्त इति यावत्। एतेन व्याकरणशास्त्राध्येतॄणामेतद्ग्रन्थस्यावश्योपादेयत्वं सूचितम्। अनेनैव कौण्डभट्टेन महाविदुषा नैयायिकमीमांसकप्रोक्तार्थप्रतिपादन-

( ग्रन्थप्रतिज्ञा )

प्रारिप्सितप्रतिबन्धकोपशमनाय कृतं श्रीफणिस्मरणरूपं मङ्गलं शिष्यशिक्षार्थं निबध्नंश्चिकीर्षितं प्रतिजानीते—

---

रीत्युपपादनतत्खण्डनपुरःसरं सुविस्तृतं पाण्डित्यप्रचुरं यद्व्याख्यानं कृतमस्ति तदेव 'वैयाकरणभूषणं' इत्युच्यते, क्वचित्तु विस्तृतत्वाद् 'बृहद्भूषणं' इत्युक्तम्। तदुत्तमाधिकारिणामेवोपकारकं, न मध्यमाद्यधिकारिणामित्यालोच्य तेषामप्युपकारार्थं सारभूतान् सिद्धान्तानादाय संक्षेपतस्तदुपपादनेनेदं व्याख्यानं निरमायीत्यस्य 'वैयाकरणभूषणसारः' इत्येव नाम सुप्रसिद्धम्। नामैकदेशे नामग्रहणमिति न्यायेन वैयाकरणभूषणमित्युक्तं मूले। उभयत्रापि व्याख्येयभूताः कारिकाः स्वगुरुभट्टोजिदीक्षितप्रणीताः समाना एवेत्यग्रे स्फुटीभविष्यतीति बोध्यम् ॥५॥

इदानीं व्याख्यानमूलभूतकारिकाकृद्भट्टोजिदीक्षितश्चिकीर्षितस्वग्रन्थप्रतिबन्धकविघाताय समुचितेष्टदेवतास्मरणरूपं मङ्गलमाचरतीत्याह——**प्रारिप्सितेत्यादि**। प्रारब्धुमिष्टो यो ग्रन्थः 'फलव्यापारयोर्धातुः' इत्यादिकारिकासमूहरूपः, तत्र प्रतिबन्धकानि यानि दुरितानि तेषामुपशमो नाशस्तस्मा इत्यर्थः। अत्राऽऽहुरत्र प्रतिबन्धकोपशमनायेत्युक्तत्वादलौकिकाविगीतशिष्टाचारानुमितश्रुतिप्रमाणकस्य मङ्गलस्य न समाप्तावुपयोगः, नास्तिकग्रन्थे विनैव मङ्गलं समाप्तिदर्शनेन मङ्गलस्य समाप्त्युपयोगित्वाभावात्। किंतु कार्यमात्रे प्रतिबन्धकाभावस्य कारणतया क्लृप्तत्वात्प्रतिबन्धकनाश एव मङ्गलस्योपयोगः। समाप्तिस्तु नवनवोन्मेषशालिप्रतिबुद्ध्यादिर्या ग्रन्थविरचनसाधनसामग्री तयैव सिध्यतीति सूचितम्। **फणिस्मरणेति**। महाभाष्यस्थसकलसिद्धान्तप्राप्तये, इष्टदैवतं शेषाख्यः फणी, महाभाष्यकारस्य शेषावतारत्वादिति फणिस्मरणरूपं मङ्गलं समुचितमेवेति भावः। नन्वथापि मङ्गलस्य ग्रन्थादौ निवेशने किं प्रयोजनमिति जिज्ञासायामाह——**शिष्यशिक्षार्थमिति**। ग्रन्थारम्भसमये शिष्यैरपि तादृशनिबद्धश्लोके पठिते सति तेऽपि, 'मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि हि शास्त्राणि प्रथन्ते वीरपुरुषकाणि आयुष्मत्पुरुषकाणि च भवन्ति अध्येतारश्च वृद्धियुक्ता यथा स्युः' इति महाभाष्यकारोक्तमङ्गलफलभाजो भवेयुरित्येवमर्थमित्यर्थः। **चिकीर्षितमिति**। कारिकावलीरूपं ग्रन्थम्। **प्रतिजानीत इति**। कर्तव्यत्वेन बोधयतीत्यर्थः। प्रत्युपसर्गविशिष्टज्ञाधातोः कर्तव्यत्वेन बोधानुकूलो व्यापारोऽर्थः। तत्र कर्तव्यत्वेन बोधो विषयतासंबन्धेन चिकीर्षितग्रन्थान्वितः। तादृशबो-

( ग्रन्थप्रतिज्ञा )

**फणिभाषितभाष्याब्धेः शब्दकौस्तुभ उद्धृतः।**
**तत्र निर्णीत एवार्थः संक्षेपेणेह कथ्यते ॥ १ ॥**

**उद्धृत** इत्यत्रास्माभिरिति शेषः। **भाष्याब्धेः शब्दकौस्तुभ उद्धृत** इत्युक्तिस्तु शब्दकौस्तुभोक्तार्थानामाधुनिकोत्प्रेक्षितत्वनिरासाय। अन्यथा तन्मूलकस्यास्य ग्रन्थस्याप्याधुनिकोत्प्रेक्षितसारत्वापत्तौ पाणिनीयानामनुपादेयतापत्तेः। तत्र निर्णीत इत्युक्तिरितोऽप्यधिकजिज्ञासुभिः शब्दकौस्तुभे द्रष्टव्यमिति ध्वनयितुम् ॥ १ ॥

प्रतिज्ञातार्थमाह——

---

धानुकूलव्यापारश्च ग्रन्थकारनिष्ठः। स च व्यापारः 'मया अमुकग्रन्थः क्रियते' इत्येवं शब्दप्रयोगरूपः।

केनोद्धृत इत्युद्धरणक्रियाकर्तृजिज्ञासायामाह——**अस्माभिरिति**। शब्दकौस्तुभकर्तृत्वेन भट्टोजिदीक्षितानां सुप्रसिद्धत्वादस्माभिरित्यस्य भट्टोजिदीक्षितैरित्यर्थः। **तत्र**——शब्दकौस्तुभे। **इह**——कारिकावलीरूपे ग्रन्थे। तथा च शब्दकौस्तुभे येन योऽर्थो निर्णीतस्तेनैव सोऽर्थः इह——कारिकावलीग्रन्थे संक्षेपेण कथ्यते इत्यर्थस्य प्रत्यासत्त्या लाभाच्छब्दकौस्तुभकारिकावलीग्रन्थकर्त्रोरैक्यावगमाद्वैयाकरणसिद्धान्तकारिका भट्टोजिदीक्षितकृताः, इति पर्यवस्यति। एतेन कारिकावलीग्रन्थकर्तुरतिशयितपाण्डित्यप्रकाशनद्वारा तत्कृतकारिकावलीग्रन्थस्यावश्योपादेयत्वं सूचितम्। शब्दकौस्तुभोद्धरणेऽवधित्वेन भाष्याब्धेरुपादानस्य प्रयोजनमाह——**शब्दकौस्तुभोक्तेत्यादिना निरासायेत्यन्तेन** ग्रन्थेन। आधुनिकोत्प्रेक्षितत्वनिरासस्य फलमाह——**अन्यथेति**। उक्तवैपरीत्ये। आधुनिकोत्प्रेक्षितत्वानिरासस्याकरणे इत्यर्थः। **तन्मूलकस्य**——शब्दकौस्तुभमूलकस्य। **अस्यापि**——कारिकावलीग्रन्थस्यापि। **आधुनिकोत्प्रेक्षितेति**। आधुनिकेनेदानींतनेनार्वाचीनेनेति यावत्। उत्प्रेक्षित उद्भावितो यः शब्दकौस्तुभस्तत्सार**त्वापत्तौ**——तत्सारत्वनिश्चयापत्तावित्यर्थः। **पाणिनीयानां** पाणिनिमुनिप्रोक्तशास्त्राध्येतॄणाम्। **अनुपादेयतापत्तेरिति**। तथा चावश्योपादेयत्वकथनमेवाऽऽधुनिकोत्प्रेक्षितत्वानिरासस्य फलमिति भावः। तत्र निर्णीत इत्युक्तेः प्रयोजनं दर्शयति——**इतोऽपीत्यादिध्वनयितुमित्यन्तेन**। देवतान्तरसत्त्वेऽपीह फणिन एव

( धात्वाख्यातार्थनिर्णयः )

**फलव्यापारयोर्धातुराश्रये तु तिङः स्मृताः ।**
**फले प्रधानं व्यापारस्तिङर्थस्तु विशेषणम् ॥ २ ॥**

धातुरित्यत्र स्मृत इति वचनविपरिणामेनान्वयः । फलं विक्लित्त्यादि । व्यापा-

---

ग्रहणं तु शेषाख्यफण्यवतारत्वाद्व्याकरणशास्त्रप्रवर्तकाचार्याभ्यर्हितत्वाच्च प्रतिपाद्यविषयानुकूलेष्टदेवतात्वं प्रकृते महाभाष्यकारस्यैवेति सूचयितुमिति बोध्यम् ॥१॥

प्रतिज्ञातार्थमिति । प्रतिपाद्यत्वेन बोधितार्थमित्यर्थः । आह—ब्रूते—

फलव्यापारयोरिति ।

फलं च व्यापारश्चैतयोरर्थयोर्वाचकत्वेन धातुः स्मृतः । फलव्यापारयोर्वाचको धातुः । फलव्यापारौ च धातुवाच्यावित्यर्थः । तिङस्तु आश्रये स्मृताः । प्रत्यासत्त्या फलाश्रये कर्मणि व्यापाराश्रये कर्तरि च वाचकत्वेन तिबादयः स्मृताः । कर्मकर्तारौ तिबादिवाच्यावित्यर्थः । भावार्थकतिङां धात्वर्थानुवादकत्वान्न तेऽत्र ग्राह्याः । फलं प्रति व्यापारः प्रधानम् । फलनिरूपितविशेष्यतावान् व्यापारः, फलं च तद्विशेषणमित्यर्थः । तिङर्थस्तु, कर्तृकर्मणी प्रत्यासत्त्या फलव्यापारयोर्विशेषणम् । फलव्यापारौ विशेष्यौ कर्तृकर्मणी च तद्विशेषणे इत्यर्थः। इत्यतीव संक्षिप्तः कारिकार्थः ।

ननु—यल्लिङ्गं यद्वचनं या च विभक्तिर्विशेष्यस्य । तल्लिङ्गं तद्वचनं सैव विभक्तिर्विशेषणस्यापि ॥ इत्यभियुक्तोक्तेर्विशेष्यविशेषणवाचकपदयोः समानवचनकत्वनियमलाभात्स्मृता इत्यस्य विशेष्यवाचकपदोत्तरवचनविरुद्धवचनान्तस्य धातुरित्येकवचनान्ते विशेष्येऽन्वयो न स्यादत आह—धातुरित्यत्रेत्याद्यन्वय इत्यन्तम् । अनन्वितार्थकविभक्त्यादित्यागेनान्वययोग्यविभक्त्यादिकल्पनं विपरिणामः । स्मृतशब्दोत्तरमेकवचनं प्रयुज्योच्चारणं वचनविपरिणामोऽत्रेत्यर्थः । विशेष्यविशेषणवाचकपदयोः समानवचनकत्वनियमादेव ‘ शुक्लः पटाः ’ इत्यादौ विशेष्यविशेषणभावेन नान्वयबोधः । न च—लिङ्गसंख्याविभेदेऽपि विशेषणविशेष्यता । विभक्तिः पुनरेकैव विशेषणविशेष्ययोः ॥ इति न्यायात् ‘ वेदाः प्रमाणम् ’ इत्यादाविव प्रकृतेऽपि स्मृता इति धातुरित्यत्र विशेषणं स्यादिति वाच्यम् । यत्र विशेष्यवाचकपदोत्तरविभक्तिबोध्यसंख्याविरुद्धसंख्याया विवक्षाऽऽवश्यकी तत्रैव तन्न्यायप्रवृत्तेः । यथा—विशेष्यवाचकपदं ‘ प्रमाणम् ’ इति, तदुत्तरविभक्तिबोध्यसंख्या—एकत्वं तद्विरुद्धसंख्या वेदा इति बहुत्वसंख्या तद्विव-

क्षायास्तत्राऽऽवश्यकत्वेन लक्षणसंगतिः । वेदाः प्रमाणमित्यत्र वेदेषु एकजातीयप्रमाणत्वं बोधयितुमिष्टम् । तच्च वेदगतबहुत्वसंख्याविवक्षां विनाऽनुपपन्नामित्यादि लघुमञ्जूषायां सुबर्थविचारे शेषे द्रष्टव्यम् । प्रकृते स्मृता इति बहुत्वसंख्याविवक्षायां कारणाभाव इति भावः ।

फलव्यापारयोरिति द्विवचननिर्देशेन फले व्यापारे च धातोः पृथक्शक्तिरिति सूचितं, न तु फलावच्छिन्नव्यापार एका शक्तिः । तथा सति विशेष्यविशेषणभावे विनिगमनाविरहेण व्यापारावच्छिन्नफले चैका शक्तिरिति शक्तिद्वयकल्पनासाम्येऽपि फलावच्छिन्नव्यापारत्वं व्यापारावच्छिन्नफलत्वं चेति गुरुशक्यतावच्छेदकद्वयकल्पनापत्तेः । किं च फलस्य व्यापारस्य च विशिष्टविषयैकशक्त्योपस्थितत्वात्पदार्थैकदेशत्वेन तण्डुलं पचतीत्यादौ फले तण्डुलस्य, चैत्रेण तण्डुलः पच्यते इत्यादौ व्यापारे चैत्रस्य चान्वयो न स्यात् । पदार्थः पदार्थेनेतिन्यायात् । यत्र विशेषणान्वयश्चिकीर्षितस्तत्रेतराविशेषणत्वेन ( इतरनिरूपितविशेषणत्वानापन्नत्वेन ) ज्ञायमानत्वस्य नियमात् । विशिष्टविषयैकशक्त्याऽर्थोपस्थितेर्विशेष्यविशेषणभावापन्नत्वेनैवानुभवात् । अत एव घटपदात् घटत्वविशिष्टघटविषयैकशक्त्युपस्थितघटत्वे नित्यत्वविशेषणाभिप्रायेण नित्यो घट इति प्रयोगो न भवति । पदार्थैकदेशे घटे नील इति विशेषणान्वयस्तु भवत्येव । घटस्येतराविशेषणत्वेन ज्ञायमानत्वात् । एवं राजपुरुष इति वृत्तावपि राज्ञि ऋद्धस्येति विशेषणान्वयो न भवति । राज्ञः पुरुषविशेषणत्वेन ज्ञायमानत्वात् । सुन्दरो राजपुरुष इति पुरुषे सुन्दर इति विशेषणान्वयो भवत्येव । पुरुषस्येतराविशेषणत्वेन ज्ञायमानत्वात् । ऋद्धस्य राज्ञः पुरुष इति वाक्ये तु एकार्थीभावाभावेन विशेषणान्वयकाले राज्ञ इतराविशेषणत्वेन ज्ञायमानत्वाद्राज्ञि ऋद्धस्येति विशेषणान्वयो भवति । वाक्ये पृथक्पदार्थोपस्थित्यनन्तरमाकाङ्क्षादिवशाद्विशेष्यविशेषणभावेनान्वयः । वृत्तौ तु विशेषणविशेष्यभावापन्नैव पदार्थोपस्थितिरिति विशेषात् । एतदेव पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेनेति न्यायतात्पर्यम् । अन्यथा राज्ञः पुरुष इति वाक्येऽपि राज्ञः पुरुषेऽन्वयो न स्यात् । पुरुषत्वविशिष्टपुरुषविषयैकशक्त्युपस्थितपुरुषस्य पदार्थैकदेशत्वादिति बोध्यम् ।

तत्र फलांश उत्सर्गतो व्यापारविशेषणम् । जन्यजनकभावः, संसर्गः फलानु-

कूलो व्यापार इति विशेषणविशेष्यभावेनैतयोरन्वयः । ननु हरिपदादुपस्थितयोः सूर्यसिंहयोः परस्परं विशेषणविशेष्य( आधाराधेय ) भावेनान्वयबोधाननुभवात्, 'वा स्याद्विकल्पोपमयोरेवार्थेऽपि समुच्चये' इति कोशाद्वाशब्दोपस्थितविकल्पार्थयोरर्थयोः परस्परं विशेष्यविशेषणभावेनान्वयस्यादृष्टत्वाच्च भिन्नपदोपस्थितयोरेवान्वय इति नियमाङ्गीकारावश्यकत्वेनैकपदोपस्थितयोः फलव्यापारयोस्तथाऽन्वयो न स्यादिति पृथक्शक्तिस्वीकारोऽयुक्त इति चेन्न । परमते लडाद्यर्थकृतिवर्तमानत्वाद्योः स्वमतेऽपि तिङर्थाश्रयसंख्ययोश्च परस्परमन्वयदर्शनेन च तादृशनियमस्य संकोचनीयतया व्युत्पत्तिवैचित्र्या फलव्यापारयोः परस्परान्वयाङ्गीकारे बाधकाभावात् । अथ पृथक्शक्तिपक्षे गमनमिति पदात्स्वातन्त्र्येण फलस्य प्रतीत्या गमनं न व्यापार इति प्रतीत्यापत्तिस्तद्वारणायैकशक्तिपक्ष एवाङ्गीकर्तुमुचित इति चेत्तदपि न । प्रथमोपस्थितत्वेनान्तरङ्गत्वात्फलव्यापारयोस्तावत्प्रथमतो विशेषणविशेष्यभावेनान्वयो भवति पश्चात्स्वर्थान्तरेण । ततश्च फलस्य स्वातन्त्र्येणानुपस्थितेर्गमनपदाद्व्यापारस्यैव फलविशेषणकस्य विशेष्यतया प्रतीतिर्न विपरीतस्येति गमनं न व्यापार इति प्रतीत्यनापत्तेः ।

क्रमप्राप्तं फलांशमाचष्टे फलं विक्लित्त्यादीति । विक्लित्तिः—शिथिलीभावोऽवयवविभागविशेषस्तत्संयोगो वा । तस्य च विक्लित्तित्वादिविशेषरूपेण वाच्यता न तु फलत्वेन सामान्यरूपेण । तत्तद्विशेषरूपेणैव तद्बोधस्यानुभवसिद्धत्वात् । धातुत्वादिकमजानतामपि काव्यज्ञादीनां तथा बोधाच्च । अत एव वाक्यार्थप्रदर्शनावसरे—विक्लित्त्यनुकूल उत्पत्त्यनुकूल इत्यादिविशेषरूपेणैव फलबोध उपपमानः संगच्छते । यद्यपि लोके यदुद्देशेन क्रियाप्रवृत्तिस्तत्त्वं फलत्वं तथाऽप्यत्र पारिभाषिकं तद्गृह्यते । अन्यथा पाकोद्देश्याया बुभुक्षानिवृत्तेरपि तण्डुलवत्पचादिप्रयोगानापत्तेः । तथा परोपकाराय सतां प्रवृत्तयः । परोपकाराय वहन्ति नद्य इत्यादौ परोपकाररूपफलस्य व्यापारव्यधिकरणस्य सत्त्वात्प्रवृत्त्यादिक्रियाबोधकानिकाणामपि सकर्मकत्वापत्तेः । किंचिदुद्देश्यैव लोके क्रियाप्रवृत्तिदर्शनेन सकर्मकाकर्मकव्यवहारस्य दुर्बोधत्वाच्च ।

विक्लित्त्यादिनिष्ठं पारिभाषिकफलत्वं च—' कर्तृप्रत्ययसमभिव्याहारे तद्धात्वर्थजन्यत्वे सति तद्धात्वर्थनिष्ठविशेष्यतानिरूपितप्रकारताश्रयत्वे च सति तद्धात्वर्थत्वम् ' इति । तण्डुलं पचतीत्यत्र पचधात्वर्थफूत्कारादिव्यापारजन्यत्वे सति

तादृशव्यापारनिष्ठविशेष्यतानिरूपितप्रकारतापन्नत्वं पच्धात्वर्थे विक्लित्तौ वर्तत इति कृत्वा लक्षणसमन्वयः । एवं—अग्नेर्माणवकं वारयतीत्यादौ संयोगानुकूलव्यापाराभावानुकूलव्यापाररूपे धात्वर्थे संयोगानुकूलव्यापाराभावे लक्षणसमन्वयात्फलत्वमूह्यम् । अत्र 'कर्तृप्रत्ययसमभिव्याहारे' इत्युपलक्षणं न तु विशेषणम् । तेन कर्तृप्रत्ययसमभिव्याहारे यस्यार्थस्य फलत्वं, कर्मप्रत्ययसमभिव्याहारेऽपि तस्यैवार्थस्य फलत्वं भवतीति बोध्यमिति यावत् । अतः कर्मप्रत्ययस्थले पच्यते तण्डुलः पक्वस्तण्डुल इत्यादौ विक्लित्त्यादेर्विशेष्यत्वेऽपि नो अफलत्वापत्तिः । अत्र प्रथमविशेषणदले जन्यत्वे सतीत्येतावन्मात्रोक्तौ विभागजन्यसंयोगादिरूपे पतत्याद्यर्थे विभागस्य कृतिसाध्यत्वेन जन्यत्वात्फलत्वापत्तिः स्यात्तद्वारणाय जन्यत्वे निरूपकतासंबन्धेन धात्वर्थो विशेषणम् । धात्वर्थनिरूपितजन्यत्वे सतीत्यर्थः । निरुक्तविभागस्य च धात्वर्थनिरूपितजन्यत्वाभावान्नातिप्रसङ्गः । नन्वेवमपि विभागस्य उत्तरदेशसंयोगानुकूलव्यापाररूपगम्यादियत्किंचिद्धात्वर्थजन्यत्वात्फलत्वापत्तिस्तदवस्थैवेति चेन्न, धातोस्तदिति विशेषणात् । प्रत्यासत्त्या यद्धात्वर्थत्वं यद्धात्वर्थनिष्ठविशेष्यतानिरूपितप्रकारतापन्नत्वं वा तद्धात्वर्थनिरूपितजन्यत्वे सतीत्यर्थः। तथा च निरुक्तविभागे पतिधात्वर्थसंयोगनिष्ठविशेष्यतानिरूपितप्रकारतापन्नत्वेऽपि पतिधात्वर्थत्वेऽपि च पतिधात्वर्थनिरूपितजन्यत्वाभावान्न फलत्वम् । नन्वेवं प्रयागात्काशीं गच्छतीत्यादौ गम्याद्यर्थव्यापारजन्यत्वाद्विभागस्य फलत्वापत्तिरिति चेन्न । तद्धात्वर्थत्वमिति विशेष्योपादानात् । तद्धातुजन्योपस्थितिविषयत्वमित्यर्थः । उत्तरदेशसंयोगानुकूलो व्यापारो गम्याद्यर्थः । तत्र पूर्वदेशविभागमन्तरोत्तरदेशसंयोगस्यात्यन्तासंभवेन नान्तरीयकतया विभागस्योत्तरदेशसंयोगानुकूलव्यापाररूपगमिधात्वर्थजन्यत्वेऽपि गमिधातूपस्थितिविषयत्वाभावान्न फलत्वमिति भावः । नन्वेवमपि पर्णं पततीत्यत्र विभागजन्यसंयोगे पतिधात्वर्थविभागजन्यत्वे सति तद्धात्वर्थत्वात्फलत्वापत्तिरिति चेत् । तद्वारणाय तद्धात्वर्थनिष्ठेत्यादिसत्यन्तं द्वितीयविशेषणम् । ततश्च निरुक्तसंयोगस्य पततिधात्वर्थजन्यत्वेऽपि पततिधात्वर्थत्वेऽपि च पततिधात्वर्थनिष्ठविशेष्यतानिरूपितप्रकारतापन्नत्वाभावान्न फलत्वम् । एवं च पततिधात्वर्थे विभागसंयोगयोर्मिथः फलत्ववारणाय सत्यन्तं विशेषणद्वयम् । तेन वृक्षात्पर्णं भूमौ पततीत्यादौ विभागाश्रयस्य वृक्षादेः, संयोगाश्रयस्य भूम्यादेश्च न कर्मत्वमित्यूह्यम् । इदं च क्वचिदकर्मकधातौ व्यापारमात्रं धात्वर्थ इति मतेन ।

रस्तु भावनाभिधा साध्यत्वेनाभिधीयमाना क्रिया ।

---

फलव्यापारयोर्धातुरिति प्रायोवादाभिप्रायेण । तन्मतानङ्गीकारे तु सत्यन्तं द्वितीयविशेषणं न देयमिति बोध्यम् । तेन तद्धात्वर्थजन्यत्वे सति तद्धात्वर्थत्वम् । इत्येव फललक्षणम् । अत्र जन्यत्वं चाऽऽरोपितानारोपितसाधारणं ग्राह्यम् । तेनेश्वरस्तिष्ठति, पत्ये शेते, इत्यादौ नाव्याप्तिः । ईश्वरस्थितेः पत्युद्देश्यकशयनादेश्च वस्तुतो धात्वर्थाजन्यत्वात्स्थितौ शयनादौ च जन्यत्वारोपात् । स्थित्यनुकूलो व्यापारस्तिष्ठतेरर्थः । शीङादेश्च शयनविषयकोऽध्यवसायोऽर्थ इति ज्ञेयम् । आदिशब्दात् 'आस्ते' इत्यस्य ग्रहणम् । गां पयो दोग्धीत्यादौ चान्तःस्थितद्रवद्रव्यनिष्ठविभागानुकूलव्यापारानुकूलव्यापारो दुहर्थः । तत्र गोपनिष्ठतद्धात्वर्थव्यापारजन्यत्वात्तद्धात्वर्थनिरूपितप्रकारताश्रयत्वात्तद्धात्वर्थत्वाच्च गोनिष्ठव्यापारस्य फलत्वं, विभागस्यापि गोनिष्ठतद्धात्वर्थव्यापारजन्यत्वात्तद्धात्वर्थनिष्ठे याद्विशेषणविशेष्योभययुक्तत्वाच्च फलत्वं बोध्यम् । आदिपदादजां ग्रामं नयतीत्यादि । नन्वेवमग्नेर्माणवकं वारयतीत्यादौ संयोगानुकूलव्यापाराभावस्येव संयोगस्यापि माणवकनिष्ठतद्धात्वर्थव्यापारजन्यत्वादिनितययुक्तत्वात्फलत्वापत्तिरिति चेदस्तु नाम । नहि तावन्मात्रेण कश्चिद्दोषो भवति । उत्तरदेशसंयोगानुकूलव्यापारानुकूलव्यापारे नीधात्वर्थेऽजानिष्ठतद्धात्वर्थव्यापारजन्यत्वादिविशिष्टसंयोगरूपफलाभावत्वाद्ग्रामस्येवाग्नेरपि कर्मतायां द्वितीयापत्तिरिति तु न वाच्यम् । कर्मसंज्ञायामभावप्रतियोगिव्यापारजन्यफलस्याग्रहणात् । अन्यथा वारणार्थानामीप्सित इति सूत्रं कर्तुरीप्सिततममित्यस्यापवादः स्यात् । ततश्च माणवकमित्यत्रापि द्वितीयानापत्तेः । तण्डुलं पचतीत्यादौ कर्मसंज्ञायाश्चरितार्थत्वात् । पश्य मृगो धावतीत्यादौ दृशिधात्वर्थनिष्ठविशेष्यतानिरूपितप्रकारतापन्नत्वेऽपि धावनादेर्न फलत्वम् । दृशिधात्वर्थनिरूपितजन्यत्वाभावाद्दृशिधात्वर्थत्वाभावाच्च । अन्यथा प्रधानानुरोधिकर्मत्वस्य बलवत्त्वान्मृगस्य कर्तृत्वं न स्यात् । एवं माषेष्वश्वं बध्नातीत्यादौ यदा पुरुषार्थं माषभक्षणायैव माषक्षेत्रेऽश्वबन्धनं तदा भक्षणस्य बध्नात्यर्थजन्यत्वाभावाद्बध्नात्यर्थत्वाभावाच्च न फलत्वमिति भक्षणाश्रयत्वेऽपि माषाणां न कर्मत्वमिति बोध्यम् ।

एवं फलं निरूप्य व्यापारं निरूपयति——व्यापारस्त्विति । व्यापारलक्षणं च—धात्वर्थफलजनकत्वे सति धातुवाच्यत्वम् । पचतीत्यादौ विक्लित्त्यादिधात्वर्थ-

फलजनकत्वाद्धातुवाच्यत्वाच्च फूत्कारादेर्व्यापारत्वमित्यर्थः । धातुवाच्यत्वमित्येतावन्मात्रोक्तौ विक्लित्त्यादेर्व्यापारत्वप्रसङ्गः । अतो धात्वर्थफलजनकत्वे सतीत्यन्तं विशेषणम् । तावन्मात्रोक्तौ काष्ठैस्तण्डुलं पचतीत्यादौ काष्ठतण्डुलनिष्ठप्रज्वलनावयवसंयोगपार्देवाहित्यस्वस्वावान्तरक्रिययोर्विक्लित्त्यात्मकधात्वर्थफलजनकत्वाद्व्यापारत्वापत्तौ तृतीयाद्यनापत्तिः । अतो धातुवाच्यत्वमिति विशेष्यम् । तथा च देवदत्तनिष्ठफूत्कारादिव्यापारस्य धातुवाच्यत्वविवक्षणेन काष्ठादिगतक्रियाणां धातुवाच्यत्वाभावान्न दोषः । काष्ठादिगतक्रियाणां धातुवाच्यत्वविवक्षायां तु भवत्येव तासां व्यापारत्वम् । अत एव स्थाली पचति काष्ठानि पचन्तीत्यादि संगच्छते । धातुवाच्यव्यापाराश्रयस्यैव कर्तृत्वादिति भावः । एवं च फलानुकूलो व्यापारो धात्वर्थो बोध्यः । ननु किं करोतीति प्रश्ने यथा पचतीत्युत्तरं भवत्येवमस्तीत्युत्तराभावादस्त्यादीनां क्रियावाचकत्वं न स्यादिति चेन्न, अयमेव फलानुकूलो व्यापारः क्रियाशब्देन भाष्यादिषु व्यपदिष्ट इत्याशयेनव भूषणसारकृता भावनाभिधा साध्यत्वेनाभिधीयमाना क्रिया ' इति व्यापारलक्षणस्योक्तत्वात् । वक्ष्यति च ग्रन्थकारोऽपि—व्यापारो भावना सैवोत्पादना सैव च क्रिया, इति व्यापारस्यैव क्रियात्वम् । उत्पत्त्यर्थकभूधातुप्रकृतिकण्यन्तात् ' ण्यासश्रन्थो युच् ' इति भावे युचा निष्पन्नो भावनाशब्द उत्पत्त्यनुकूलव्यापारमाचष्टे । अभिधाशब्दस्तु अभिदधाति----जनयति फलमिति व्युत्पत्त्या फलजनकव्यापारमाचष्टे । तत्राभिपूर्वाद्दधातेः ' आतश्चोपसर्गे ' इति कर्तरि कप्रत्ययः । तथा च भावनाभिधापरपर्याया साध्यत्वेनाभिधीयमानार्थात्मिका क्रिया व्यापार इत्यर्थः । अत्र भावनाभिधेत्युक्तिस्तु व्यापारस्य धात्वर्थत्वेऽपि भावनादिपदवाच्यस्यार्थविशेषस्याऽऽख्यातार्थत्वमिति भ्रमनिरासार्था । क्रियेत्युक्तिस्तु भवतेर्ण्यन्तस्य शुद्धेन करोतिना तुल्यार्थत्वप्रदर्शनार्थेति बोध्यम् । न चैवं धात्वर्थव्यापारस्य क्रियात्वोक्तौ सामान्यविशेषतया प्रश्नोत्तरभावेन सामानाधिकरण्यात्पच्याद्यर्थव्यापारस्य क्रियात्वसिद्धावपि अस्त्यादीनां क्रियात्वानुपपत्तिः पूर्वोक्ता तदवस्थैवेति वाच्यम् । आसन्नविनाशं कंचिदुद्दिश्य किं करोतीति प्रश्ने अस्तीत्युत्तरस्य सर्वसंमतत्वेनास्त्यादीनामपि क्रियात्वस्य सूपपादत्वात् । क्रियाशब्दप्रवृत्तिनिमित्तस्य ' पदान्तरसमभिव्याहारमन्तरा साध्यत्वेन प्रतीयमानत्वस्य ' करोतीत्यादाविवास्त्यादावपि सत्त्वेन क्रियात्वस्यायत्नसिद्धत्वाच्च । अत्र साध्यत्वं मुख्यत्वात्पदान्तरार्थनिरपेक्षं

उक्तं च वाक्यपदीये—

" यावत्सिद्धमसिद्धं वा साध्यत्वेनाभिधीयते ।
आश्रितक्रमरूपत्वात्सा क्रियेत्यभिधीयते" इति ॥

---

स्वतःसिद्धं ग्राह्यम् । पदान्तरार्थसापेक्षस्य तस्य गौणत्वात् । एवं च पदान्तरसमभिव्याहारं विनापि साध्यत्वरूपेण प्रतीयमानत्वं व्यापारत्वमिति यावत् । घटं करोतीत्यादौ करोतिसमभिव्याहारे घटादीनामपि साध्यत्वेन प्रतीयमानत्वादतिव्याप्तिवारणाय पदान्तरादिविनैवेत्यन्तस्य निवेशः । करोत्याद्यसमभिव्याहारे तु घटादीनां सिद्धत्वेनैव प्रतीतेः । करोत्यादिप्रयोग एव घटस्य साध्यत्वं प्रतीयते करोतेस्तु स्वतोऽपीत्यर्थः । अधिश्रयणाद्यधःश्रयणान्तक्रियासमूहस्य पदान्तरप्रयोगमन्तराऽपि साध्यत्वेन प्रतीयमानत्वादुक्तव्यापारत्वमक्षतमिति भावः । उक्तार्थस्य निर्मूलत्वं निरसितुमाह—उक्तं चेत्यादि । यावदिति । सकलमित्यर्थः । सकलपदार्थमेव विवृणोति—सिद्धमित्यादिना । तथा च द्वैविध्यमेव सकलपदार्थः । अपाक्षीदित्यादौ सिद्धं, पचति पक्ष्यतीत्यादावसिद्धं वा वस्तु साध्यस्वरूपेण तत्प्रकारेणाभिधीयमानं क्रियेत्युच्यत इत्यर्थः । किमियं तादृशेऽ( स्वत एव साध्यत्वेन प्रतीयमाने )र्थे क्रियाशब्दस्य रूढिरिति चेन्नेत्याह—आश्रितक्रमेति । आश्रितः क्रमो येन ( रूपेण ) तदाश्रितक्रमं, तदेव रूपं स्वरूपं यस्याः साऽऽश्रितक्रमरूपा, तस्या भाव आश्रितक्रमरूपत्वं तस्मात् क्रियेत्यभिधीयते । क्रियास्वरूपं हि यदवयवाः क्रमेणोत्पद्यन्ते तत् । क्रमेणोत्पद्यमानावयवसमूहस्वरूपेति यावत् । अयं भावः--आश्रितक्रमरूपत्वादित्येतत्क्रियाशब्दार्थप्रदर्शनम् । तथा च क्रियत इति क्रिया । तत्र केन क्रियते किंच क्रियत इत्याकाङ्क्षायां- परस्परतया अवयवानां क्रमेणोत्पत्त्या तद्द्वारा यत्क्रियते साध्यते समूहरूपं वस्तु तत्क्रियेत्युच्यत इत्यर्थः । क्रमिकावयवोत्पत्तिसाध्यसमूहात्मकं वस्त्वेव क्रियास्वरूपमिति यावत् । अनेन क्रियाया आश्रितक्रमरूपत्वं प्रदर्शितम् । क्रमवती क्रियेत्यभियुक्तोक्तविवरणमपि क्रियाया आश्रितक्रमरूपत्वादेव संगच्छते । आश्रितक्रमरूपत्वादेव च क्रियायाः साध्यत्वेन प्रतीतिर्निर्वहतीति बोध्यम् । अधिश्रयणाद्यधःश्रयणान्तानामवयवानां क्रमेणोत्पत्तेः पच्यादिवाच्यव्यापारसमूहस्यैकरूपं क्रियास्वरूपमक्षतम् । यत्र चाऽऽश्रयवादौ न क्रमिकावयवोत्पत्तिमान् व्यापारस्तत्र क्रमिकावयवोत्पत्तिमत्त्वस्याऽऽरोपः कार्यः । फलेऽपि स्वजनकव्यापारगतक्रमिकावयवत्वारोपः । अत

( धात्वाख्यातार्थनिर्णयः )

न च साध्यत्वेनाभिधाने मानाभावः, पचति पाकः करोति कृतिरित्यादौ धात्वर्थावगमाविशेषेऽपि क्रियान्तराकाङ्क्षानाकाङ्क्षयोर्दर्शनस्यैव मानत्वात् । तथा च क्रियान्तराकाङ्क्षानुत्थापकतावच्छेदकरूपं साध्यत्वम् । तद्रूपवत्त्वमसत्त्वभू-

---

एव फलमात्रवाचकस्य क्रियानिबन्धनधातुत्वसिद्धिः । एवं च व्यापारसमुदायः क्रियेति सिध्यति ।

ननु भवत्वेवं व्यापारसमूहस्य क्रियात्वं तथाऽपि तस्य साध्यत्वप्रकारेण प्रतीतौ किं प्रमाणमिति जिज्ञासायां क्वचित्क्रियान्तराङ्क्षाक्वचित्क्रियान्तरानाकाङ्क्षादर्शनरूपप्रमाणेन साध्यत्वरूपेण प्रतीतिं व्यवस्थापयितुमाह—**पचति पाक इत्यादि** । पचतीत्यत्र पच्धातोः, पाक इत्यत्र घञ्प्रत्ययाच्च विक्लित्यनुकूलव्यापारस्य धात्वर्थस्य प्रतीतौ समानायामपि पचतिशब्देन क्रियावगमे पुनः क्रियाया आकाङ्क्षा न भवति अतस्तादृशक्रियागतं क्रियान्तराकाङ्क्षानुत्थापकतावच्छेदकरूपं साध्यत्वमित्याह—**तथा चेत्यादि** क्रियान्तराकाङ्क्षेत्थितिप्रतिबन्धकता-वच्छेदकतया सिद्धो यो जातिविशेषस्तद्रूपं साध्यत्वमित्यर्थः । इदमेव च कारकान्वययोग्यतावच्छेदकं पूर्वापरीभूतावयवत्वसमानाधिकरणं च भवति । सिद्धजातिविशेष एव वैजात्यशब्देन व्यवह्रियते । तच्च वैजात्यप्रतीतिरिक्तं पचत्यादिशब्द एव वेत्यन्यदेतत् । तच्च साध्यत्वं सर्वत्रैव धातुप्रतिपाद्यम् । पाक इत्यादौ घञन्तेऽपि पच्धातुना साध्यत्वेनैव क्रियाऽभिधीयते । अत एव ओदनस्य पाक इत्यत्रौदनपदोत्तरं कर्तृकर्मणोरिति कर्मणि षष्ठी सिद्धा । अन्यथा कारकाणां साध्यत्वेन प्रतीयमानक्रियायामेवान्वयनियमात् सा न स्यात् । घञादिना तु सिद्धत्वेन क्रियाऽभिधीयते । पाक इत्युक्ते भवति नष्टो वेत्यादिक्रियान्तराकाङ्क्षोत्थानात् । सिद्धत्वं च क्रियान्तराकाङ्क्षोत्थापकतावच्छेकरूपम् । क्रियाकाङ्क्षोत्थापकतावच्छेदकतया सिद्धो यो जातिविशेषो ( वैजात्यं ) तद्रूपमित्यर्थः । एवं च पच्धात्वर्थेऽन्वये शोभनं पाकः घञर्थेऽन्वये शोभनः पाक इति साध्यत्वसिद्धत्वव्यवस्थया व्यवस्थितः प्रयोगः । एतच्च ग्रन्थकारोऽप्यग्रे वक्ष्यति—साध्यत्वेनं क्रिया तत्र धातुरूपनिबन्धना । सिद्धभावस्तु यस्तस्याः स घञादिनिबन्धनः ॥ इति । तत्रेति पाक इत्यादिघञाद्यन्त इत्यर्थः । विशेषस्त्वग्रे वक्ष्यते । न चैवं हिरुगाद्यव्ययानां क्रियाप्रधानत्वव्यवहारस्य तद्धितश्चेति सूत्रे भाष्ये क्रियमाणस्यानुपपत्तिस्तदर्थानां साध्यत्वेनाभानादिति वाच्यम् । तादृशव्यवहारस्य तद्-

र्थानां क्त्वान्तादिवृत्तिक्रियामात्रविशेषणनिबन्धनत्वात् । यथा धातुसंबन्धाधिकारविहितक्त्वान्ताद्यर्थस्य व्रजतीत्यादिक्रियामात्रविशेषणत्वं तद्वद्धिरुगाद्यव्ययार्थानां क्रियामात्रविशेषणत्वम् । मात्रपदेन नामार्थनिरूपितविशेषणत्वव्यावृत्तिरित्यर्थः । तथा च गौणत्वात्र तथा व्यवहार इति भावः । हिरुगाद्यर्थानां साध्यत्वेन प्रतीयमानक्रियात्वाभावादेव न तत्र कारकान्वयः । साध्यत्वेन प्रतीयमानक्रियायामेव कारकान्वयनियमात् । हिरुगाद्यर्थानां क्रियान्तराकाङ्क्षासत्त्वेन प्रतीयमानक्रियात्वाभावात् । नन्वेवं धातुतः क्रियान्तराकाङ्क्षानुत्थापकतावच्छेदकरूपेणोपस्थितौ कृष्णं नमेच्चेत्सुखं यायादित्यत्राऽऽकाङ्क्षाया अभावेन नमनसुखप्राप्तिरूपक्रिययोर्हेतुहेतुमद्भावेनान्वयो न स्यादिति चेन्न । चेच्छब्दसमभिव्याहारसान्निध्येनाऽऽकाङ्क्षोत्थापनात् । परे तु--वस्तुतः साध्यत्वं निष्पाद्यत्वमेव । तेनैव रूपेण बोधस्यानुभवसिद्धत्वात् । स्पष्टं चेदं 'सुट्कात्पूर्वः' इत्यत्र भाष्ये । तत्र हि धातूपसर्गयोः कार्यमन्तरङ्गमित्याद्युक्त्वा----'नैतत्सारं पूर्वं हि धातुः साधनेन युज्यते पश्चादुपसर्गेण, साधनं हि क्रियां निर्वर्तयति, तामुपसर्गो विशिनष्टि' इत्युक्तम् । साधनं--तद्बोधकः प्रत्ययः, क्रियां निर्वर्तयति--साध्यत्ववैशिष्ट्येन बोधयति, अतस्तत्प्रयुक्तं कार्यं पूर्वमिति वृद्धास्तदर्थमाहुः । एतद्भाष्यप्रामाण्येन साध्यत्वेन भानमङ्गीकृतम् । तथा च पच्याद्यर्थे साध्यत्वेन ज्ञाते तत्र साधनाकाङ्क्षाया अवश्यंभावित्वात् 'साधनाकाङ्क्षोत्थापकतावच्छेदकरूपवत्त्वमेव साध्यत्वम् । अत एव ओदनं भुक्त्वा व्रजतीत्यादौ भुजिक्रियायामोदनमित्यादिकारकाणामन्वयो भवति । अन्यथा धातुसंबन्धे विहितक्त्वाप्रत्ययसमभिव्याहारेण भुजिक्रियाया व्रजत्यादिक्रियाकाङ्क्षासत्त्वात् क्रियान्तराकाङ्क्षानुत्थापकतावच्छेदकरूपसाध्यत्वेनाभानाच्चौदनमित्यादिकारकान्वयो न स्यात् । भुजिक्रियाया धात्वर्थत्वं च न स्यात् । साध्यत्वेन प्रतीयमानक्रियायामेव कारकान्वयनियमात् । *तादृशक्रियाया एव धात्वर्थत्वाच्च । एवं कृष्णं नमेच्चेदित्यादौ चेत्पदेनापि उत्थापिताकाङ्क्षादर्शनात् पूर्वोक्तसाध्यत्वेनाभानादव्याप्त्यादिदोष एवेत्याहुः । निरुक्तसाध्यत्वमेवासत्त्वभूतत्वमित्याह—तद्रूपवत्त्वमिति । धातूपस्थितक्रियामात्रवृत्तिवैजात्ये सिद्धे सति तावन्मात्रस्यैवासत्त्वरूपत्वमङ्गीकर्तुमुचितं न त्वतिरिक्तस्य

*तादृशेति । साध्यत्वेन प्रतीयमानक्रियाया इत्यर्थः ।

( धात्वाख्यातार्थनिर्णय. )

तत्वम् । एतदेवाऽऽशय " असत्त्वभूतो भावश्च तिङ्पदैरभिधीयते " इति वाक्यपदीयमिति द्रष्टव्यम् । अयं च व्यापारः फूत्कारत्वाधःसंतापनत्वयत्नत्वादितत्तद्रूपेण वाच्यः । पचतीत्यादौ तत्तत्प्रकारकबोधस्यानुभवसिद्धत्वात् । न च नानार्थकतापत्तिः, तदादिन्यायेन बुद्धिविशेषादेः शक्यतावच्छेदकानामनुगमकस्य स-

---

लिङ्गसंख्याद्यनन्वयित्वादेरित्याशयः । किं तु तत्पूर्वोक्तं वैजात्यं लिङ्गाद्यनन्वयित्वसमानाधिकरणमेव ।

**एतदेवेति** । पूर्वोक्तसाध्यत्वाभिन्नमसत्त्वभूतत्वमनुसंधायेनेत्यर्थः । **असत्त्वभूतो भावश्चेति** । चकारोऽवधारणार्थः । भाव एवेत्यर्थः । एवकारेण सत्त्वभूतस्य भावस्य व्यावृत्तिः । तिङ्पदैस्तिङन्तपदैः । अभिधीयत इत्यस्य प्राधान्येनेत्यादिः । तथा चासत्त्वभूतो भाव एव तिङन्तपदैः पचतीत्यादिभिः प्राधान्येनाभिधीयत इत्यर्थः । तेन कृदन्तपदैर्विशेषणत्वेनासत्त्वभूतभावप्रतिपादनेऽपि न काचिद्धानिः । **अयं चेति** । साध्यत्वेन प्रतीयमानक्रियारूपश्चेत्यर्थः । फूत्कारत्वाधःसंतापनत्वादितत्तद्रूपेण पच्यादिशक्य इत्यर्थः । तत्र हेतुमाह—**पचतीत्याद्यनुभवसिद्धत्वादित्यन्तेन** । अत एव पचतीत्यादितः फूत्कारत्वादितत्तद्विशेषरूपेण शाब्दबोधे जातेऽयं फूत्कारादिमान्नवेति संशयो न जायते । सामान्यरूपेण बोधे तु एकतरकोटिनिश्चयाभावेन संदेहापत्तिर्दुर्वारेत्यर्थः । ननु यद्येवमनुभवबलात्पचतीत्यादितः फूत्कारत्वादितत्तद्विशेषरूपेण बोधोऽङ्गीक्रियते चेच्छक्यतावच्छेदकानां फूत्कारत्वादीनां नानात्वादेकशक्त्यैवक्तुमशक्यत्वात्पच्यादेर्नानार्थत्वापत्तिः स्यात् । नानाधर्मावच्छिन्नशक्तिनिरूपकतावच्छेदकैकधर्मवत्त्वं हि नानार्थत्वम् । यथा—'हरिर्विष्णावहाविन्द्रे भेके सिंहे हये रवौ' इति कोशाद्धरिशब्दस्य सिंहाश्वसूर्येषु सिंहत्वाश्वत्वसूर्यत्वरूपेण शक्तिर्वाच्यताख्या । सा च सिंहत्वादिनानाधर्मावच्छिन्ना (ना. ध. समानाधिकरणा ), तादृशशक्तेर्निरूपको हरिशब्दः, तन्निष्ठनिरूपकतावच्छेदको धर्मः–हॅरीतिवर्णानुपूर्वी, सा चैकैवेति तादृशैकधर्मवत्त्वं हरिशब्दे वर्तत इति कृत्वा हरिशब्दो नानार्थक इति लक्षणसमन्वयः । तच्च पच्यादीनामक्षतमिति भावः । नानार्थत्वापत्तिं परिहर्तुमाह—तदादिन्यायेनेति । तदिदमादिशब्देभ्यो घटपटादयोऽनेकार्था घटत्वादितत्तद्विशेषधर्मपुरस्कारेण यद्यपि प्रतीयन्ते तथापि न ते हर्यादिशब्दवदनेकार्था इत्युच्यन्ते । यतो घटत्वादिनानाधर्मावच्छिन्नानुगतबुद्धिविषयत्वरूपैकधर्मपुरस्कारेण तेभ्यो नानाधर्मशालिनोऽर्थाः प्रतीयन्ते ।

अनुगतैकधर्मपुरस्कारेण नानाधर्मशाल्यर्थप्रत्यायकस्य च नैव नानार्थकत्वम् । द्रव्यत्वेन घटपटाद्यर्थप्रतिपादकद्रव्यशब्दवत् । अननुगतनानाधर्मावच्छिन्नशक्तिनिरूपकतावच्छेदकैकधर्मवत्त्वस्यैव नानार्थत्वात् । नन्वेवं येन रूपेण बोधस्तस्यैव शक्यतावच्छेदकत्वौचित्याच्छक्यतावच्छेदकस्य च तत्पदशक्तिग्रहविषयत्वेन घटपदाद्घटत्वस्येव बुद्धिविषयत्वस्य तदादिपदजन्यशाब्दबोधे भानापत्त्या घटत्वादितत्तद्विशेषरूपेणेष्यमाणो बोधस्तदादिभ्यो न स्यादिति चेन्न । बुद्धिविषयत्वस्योपलक्षणत्वादुपलक्षणस्य च तत्पदशक्तिग्रहाविषयत्वेन शाब्दबोधे भानाभावेनादोषात् । उपलक्षणत्वं च—तत्पदजन्यबोधाविषयत्वेन तत्पदशक्तिग्रहाविषयत्वम् । तदुक्तं वैयाकरणभूषणकारैः—'बुद्धिविषयत्वरूपेणोपस्थितघटत्वादिशालिषु बुद्धिविषयतावच्छेदकवति शक्तं तदादिपदमित्येव तदादेः शक्तिग्रहः । बुद्धिविषयत्वमुपस्थितावनुगमकमात्रं न तु तदंशे शक्तिः' इति । सोऽयं तदादिन्यायः । तद्वत्प्रकृतेऽपि शक्यतावच्छेदकानां फूत्कारत्वादीनामनुगमकस्य—शक्यतावच्छेदकावच्छेदकस्य बुद्धिविशेषादेः—फूत्कारादिविषयकबुद्धेः सत्त्वेन, बुद्धिविषयत्वरूपेणोपलक्षणीभूतेन बुद्धिविशेषेण फूत्कारत्वादीननुगमय्य तदवच्छिन्ने पच्यादीनां शक्तेः स्वीकरणसंभवान्न नानार्थत्वापत्तिः । शक्यतावच्छेदकनानात्वेऽपि शक्यतावच्छेदकावच्छेदकस्यैकस्यैव संभवादिति भावः । बुद्धेः शक्यतावच्छेदकत्वं विषयतासंबन्धेन । आदिना बुद्धिविशेषविषयत्वस्य परिग्रहः । अत्र केचित्—नानार्थत्वपरिहाराय फूत्कारादिसकलैतत्साधारणं क्रियात्वं नाम धातुवाच्यत्वसमानाधिकरणं जातिविशेषं परिकल्पयन्ति । स च जातिविशेषो जलपदशक्यतावच्छेदकतया जलत्वसिद्धिवत् क्रियापदशक्यतावच्छेदकतया सिध्यति । तथा च क्रियात्वेन रूपेण फूत्कारादीनां प्रतीतेः पच्यादीनां नैव नानार्थत्वमित्याहुः । तन्न । येन रूपेण बोधस्तस्यैव शक्यतावच्छेदकत्वनियमात्तद्विशेषरूपेण बोधानापत्तेः । न च पच्यादिसमभिव्याहारबलाद्विशेषरूपेण बोधः स्यादिति वाच्यम् । सामान्यरूपेण विशेषरूपेण चेत्युभयरूपेण बोधकल्पनया गौरवापत्तेः । किंच कल्प्यमानधर्मपुरस्कारेण शाब्दबोधो नेष्टः । अन्यथा सैन्धवादिपदशक्यतावच्छेदकतयाऽश्वलवणादिवृत्त्येकधर्मकल्पनापत्त्या तत्रापि नानार्थत्वोच्छेदापत्तिः । अश्वत्वादिनैव प्रतीतेरनुभवसिद्धत्वान्न तत्र धर्मान्तरकल्पना युज्यत इति चेत् । तर्हि प्रकृतेऽपि फूत्कारत्वादिनैव प्रतीतिरनुभवसिद्धेति हर्यादिशब्दवत्पच्यादीनां नानार्थ-

त्वात्। आख्याते क्रियैकत्वव्यवस्थाऽप्यवच्छेदकं बुद्धिविशेषैक्यमादायैव। उक्तं च वाक्यपदीये—

"गुणभूतैरवयवैः समूहः क्रमजन्मनाम्।
बुद्ध्या प्रकल्पिताभेदः क्रियेति व्यपदिश्यते" इति॥

---

त्वमिष्टमेव। तदादिशब्दानां तु बुद्धिविषयत्वात्मकसामान्यरूपेणैव बोधकत्वस्य 'शेषे' इत्यादिसूत्रस्थभाष्यादितो लाभादिति परे वदन्ति। **आख्याते क्रियैकत्वेति**। अयं भावः——क्रमेणोत्पद्यमानावयवघटितो व्यापारसमूहः क्रियेत्युक्तम्। तत्रावयवव्यापाराणामनेकत्वात्क्षणनश्वराणां क्रमवतां तेषां युगपत्संनिधानासंभवेन समूहाभावात् समूहगतैकत्वाभिप्रायेणैका क्रियेति वक्तुमशक्यत्वाच्च 'आख्यातेनैका क्रिया प्रत्याय्यते' इति व्यवस्थाया अनुपपत्तौ प्राप्तायां त व्यवस्थामुपपादयति——**व्यवस्थाऽपीत्यादिना**। व्यवस्थाऽपि एका क्रियेति नियमोऽपि। अपिर्नानार्थत्वानापत्तिसमुच्चायकः। **अवच्छेदकेति**। अधिश्रयणाद्यधःश्रयणान्ता व्यापाराः शक्याः। तन्निष्ठशक्यतावच्छेदका धर्मा अधिश्रयणत्वादयः। तेषामप्यवच्छेदको यो बुद्धिविशेषस्तदेकत्वं गृहीत्वेत्यर्थः। येन रूपेण शक्यता स धर्मः शक्यतावच्छेदकः। अधिश्रयणत्वादीनां शक्यतावच्छेकानां बुद्धिविषयत्वरूपेण शक्यता संपन्नेति विषयतासंबन्धेन शक्यतावच्छेदकतावच्छेदको धर्मो बुद्धिः। सा च बुद्धिः समूहालम्बनरूपा एकैवेति तादृशबुद्धिगतमेकत्वमधिश्रयणादिव्यापारेष्वारोप्य क्रियैकैवेति व्यवस्थेति भावः। अथवा तादृशबुद्धिस्थसमूहगतमेकत्वं गृहीत्वैवेत्यर्थः। स्वोक्तार्थे वाक्यपदीयं प्रमाणयति—**उक्तं चेत्यादिना**। **गुणभूतैरिति**। क्रमेण जन्म येषां तेषां बुद्धिस्थानामधिश्रयणादीनां व्यापाराणां समूहं प्रति गुणभूतैस्तत्तद्रूपेण फूत्कारत्वादिना भासमानैरवयवैर्युक्तः संकलनात्मिकया ( समूहालम्बनात्मिकया)एकत्वविषयकबुद्ध्या प्रकल्पितो योऽभेदस्तद्रूपो यः समूहः स क्रियेति व्यवह्रियत इत्यर्थः। अत्र गुणभूतैरित्यस्याङ्गभूतैरित्यर्थे पौनरुक्त्यापत्तिरतो गुणशब्दो धर्मपरः, भूतशब्दो 'ये प्राप्त्यर्थास्ते ज्ञानार्थाः' इति न्यायेन भू प्राप्तावित्युक्तेर्ज्ञानपरो वर्तमानक्तप्रत्ययान्त इति तत्तद्रूपेण भासमानैरित्यर्थकः। प्रत्यासत्त्या समूहं प्रतीत्युक्तम्। क्षणनश्वराणां वस्तुभूतसमूहासंभवाद्बुद्ध्येत्युक्तम्। एवं च समूहव्यवहारो बुद्धिकृतो विकल्प एव न वास्तव इति भावः। शब्दज्ञानानुपाती वस्तुशून्यो

( धात्वाख्यातार्थनिर्णयः )

धात्वर्थं निरूप्य तिङर्थमाह——आश्रये त्विति । फलाश्रये व्यापाराश्रये

---

विकल्प इति पतञ्जल्युक्तः । शब्दज्ञानमात्रेण बुद्धावनुपतनशीलः बाह्यार्थरहितः विशेषेण कल्प्यत इति विकल्पः बुद्धिपरिकल्पित इति तदर्थः । अनावयवाश्रयं पौर्वापर्यं समुदायाश्रयमेकत्वं चेति स्पष्टमेव लभ्यते । बुद्धिस्थत्वादिरूपशक्यतावच्छेदकानुगमकबोधकमिदं वचनमिति भावः । ननु यदि व्यापारस्य समुदायात्मकत्वं तर्हि अधिश्रयणाद्येकैकाशयेन स्थाली पचतीति प्रयोगो न स्यादिति चेन्न । एकैकावयवेऽपि समूहत्वरूपस्याऽऽरोपात्तदुपपत्तिः । आरोपे च तादृशप्रतीतिरेव प्रमाणम् । अत एवोक्तं हरिणा-—एकदेशे समूहे वा व्यापाराणां पचादयः । स्वभावतः प्रवर्तन्ते तुल्यरूपं समाश्रिताः । इति । तुल्यरूपमित्यस्य तुल्येनाभिन्नेन स्वभावेन युक्ता एते धात्वोऽभिन्ना इत्यर्थः । एतेन पचतीति बुद्धेः सर्वथानुवर्तमानत्वात्प्रत्यवयवमपरिसमाप्तस्य समूहस्य एकैकावयवेऽपि आरोपः स्पष्ट एवोक्तो भवति । वस्तुतस्तु अधिश्रयणादेरपि नैकक्षणात्मकस्तस्यापि हस्तप्रसारणपात्रादानचुल्लीसंयोजनादयोऽवयवाः सन्त्येवेति सोऽपि समूहरूप एवेति बोध्यम् । अभ्यासगृहीतयैव क्रियया आख्यातस्य शक्तिरूपसंबन्धग्रहो बोध्यः । अत एव फूत्कारस्यातीतत्वमात्रेण व्यापारान्तरवर्तमानदशायामपाक्षीदिति न भवति भूतत्वादेः समुदायेन संबन्धादिति ज्ञेयम् । ननु तत्तद्रूपेण वाच्यत्वे विक्लित्त्यनुकूलः फूत्कारादिरित्येव शाब्दबोधः स्यान्नतु विक्लित्त्यनुकूलो व्यापार इति सामान्यरूपेणेति चेन्न । धातूनामनेकार्थत्वात्कदाचित्सामान्यरूपेण क्रियात्वेन बोधाङ्गीकारात् । तत्र यदा यो वक्तृबुद्धिस्थः स तदा वाच्यः । तदैव तदाश्रयः कर्ता । धातुनोक्तक्रिये नित्यं कारके कर्तृतेष्यते, इति हर्युक्तेः । अत एव काष्ठं पचति स्थाली पचतीति संगच्छते । एतेन काष्ठेन पचतीत्यपि नानुपपन्नम् । तदा तद्व्यापारस्य धात्वर्थत्वेनाविवक्षणात् । एवं च काष्ठक्रियाया वाच्यत्वे तृतीया न स्यात् । अवाच्यत्वे प्रथमा न स्यादित्याद्यपास्तम् । अत्र शक्तताव च्छेदकं पचित्वादिकं तत्तदानुपूर्वीविशेषरूपं, नतु धातुत्वम् । गच्छत्यादावपि तस्य ( धातुत्वस्य ) सत्त्वेनातिप्रसक्तत्वात् । अतिप्रसक्तस्य च शक्ततानवच्छेदकत्वात् । अन्यूनानतिरिक्तवृत्तिधर्मस्यैवावच्छेदकत्वादिति भावः ।

एवं संक्षेपतो धात्वर्थं निरूप्य तिङर्थं वक्तुमारभते—आश्रये त्विततीति । फलव्यापारयोर्मध्ये व्यापारस्योत्सर्गतः प्राधान्येऽपि लः कर्मणि चेति सूत्रे, फलव्या-

( धात्वाख्यातार्थनिर्णयः )

चेत्यर्थः। फलाश्रयः कर्म, व्यापाराश्रयः कर्ता। तत्र फलव्यापारयोर्धातुलभ्यत्वान्न तिङस्तदंशे शक्तिरन्यलभ्यत्वात्। शक्यतावच्छेदकं चाऽऽश्रयत्वं तच्चशक्तिविशेषरूपमिति सुबर्थनिर्णये वक्ष्यते। नन्वनयोराख्यातार्थत्वे किं मानम्।

---

पारयोर्धातुरिति मूले च फलाश्रयस्य कर्मणः प्राङ्निर्देशात्तदनुरोधेनाऽऽह—**फलाश्रये, फलाश्रयः कर्मेत्यादि**। कृत्रिमाकृत्रिमन्यायेन फलाश्रयव्यापाराश्रययोरेव कर्मकर्तृपदाभ्यां ग्रहणस्योचितत्वं नतु लौकिकयोः स्पन्दकृतिमतोरित्यर्थः। स्वतन्त्रः कर्तेति सूत्रेण धातूपात्तप्रधानीभूतव्यापाराश्रयस्यैव स्वतन्त्रस्य कर्तृसंज्ञाविधानात्। कृतिमत एव कर्तृसंज्ञाविधाने घटो भवति काष्ठानि पचन्तीत्यादौ घटादेः सा न स्यादिति भावः। तत्र फलव्यापारयोर्धातुलभ्यत्वान्न तदंशे आख्यातस्य शक्तिः, किंत्वाश्रयमात्र इत्याह—**तत्रेत्यादिना**। अन्यलभ्यत्वादिति। अनन्यलभ्यस्यैव शब्दार्थत्वादिति न्यायात्। फलव्यापारयोर्धातुनैव लाभे सति पुनस्तत्राऽऽख्यातस्य शक्तिकल्पनं गौरवापादकमिति भावः - ननु आश्रये शक्तिस्वीकारे आश्रयत्वं शक्यतावच्छेदकं वाच्यम्। आश्रयत्वं चाऽऽधारत्वम्। तच्च निरूपकादिभेदाद्भिन्नम्। तथाचाऽऽश्रयत्वस्य नानात्वाच्छक्तिनानात्वापत्तिः स्यादत आह—तच्चेति। कर्तृत्वाद्यखण्डशक्तिस्वरूपमित्यर्थः। यद्यपि कर्तृत्वादिशक्तेरपि निरूपकभेदान्नानात्वमवश्यमङ्गीकार्यं भवति। अन्यथा 'अद्य भुक्त्वाऽयं द्व्यहे द्व्यहाद्वा भोक्ता' इत्यत्र 'सप्तमीपञ्चम्यौ कारकमध्ये' इति सूत्रस्थकारकशब्दस्य शक्तिपरत्वेऽपि कर्तृत्वशक्तेरेकत्वेन कर्तृत्वशक्तिद्वयमध्यस्थकालवाचकाद्द्व्यहशब्दात् सप्तमीपञ्चम्योरनुपपत्तिः स्यात्। अद्यतनभुजिक्रियाद्व्यहोत्तरदिनीयभुजिक्रियाभ्यां कर्तृत्वशक्तेर्भेदे तु न काचिदनुपपत्तिस्तथाऽपि आश्रयतात्वेनानुगतस्य तस्य ( आश्रयत्वस्य ) शक्यतावच्छेदकत्वे शक्तिनानात्वादिदोषासंभवादिति भावः। ननु फलाश्रयव्यापाराश्रययोराख्यात( तिङ् )वाच्यत्वे किं मानम्?। न च पचतीत्युक्ते आश्रयप्रतीतिर्जायमानाऽऽख्यातस्यैं तत्र शक्तिं कल्पयेत्। यथा घटपदात्कम्बुग्रीवादिमदर्थप्रतीतिर्जायमाना घटपदस्य कम्बुग्रीवादिमति शक्तिं कल्पयति, यद्यस्मात्प्रतीयते तत्तस्य वाच्यमिति न्यायादिति वाच्यम्। अन्यथाऽनुपपद्यमानाया एव प्रतीतेर्मानत्वात्। अन्यथा गङ्गादिपदस्य तीरादावपि शक्तिकल्पनापत्तेः। तत्र लक्षणयैव निर्वाह इति चेत्प्रकृतेऽपि अन्यथा निर्वाहसंभवादित्याशयवान् पृच्छति—नन्वनयोरि-

( धात्वाख्यातार्थनिर्णयः )

प्रतीतेर्लक्षणयाऽऽक्षेपात्प्रथमान्तपदाद्वा संभवादिति चेत् । अत्रोच्यते—“ लः कर्मणि च भावे चाकर्मकेभ्यः ” [ पा० सू० ३–४–६९ ] इति सूत्रमेव

---

त्यादिना । मीमांसकमतेनेयमाशङ्का । ते हि फलं धात्वर्थ आख्यातार्थो भावना ( फलानुकूलव्यापारः ) इति वदन्ति । पचतीत्याद्युक्ते जायमानामाश्रयप्रतीतिमन्यथा योजयितुमाह—प्रतीतेरिति । फलाश्रयव्यापाराश्रयप्रतीतेरित्यर्थः । अस्याः संभवादित्यत्रान्वयः । संभवं प्रदर्शयति—लक्षणयेति । गङ्गापदाल्लक्षणया गङ्गातीरस्येव भावनावाचकादाख्यातात्तदाश्रयस्य ग्रहणमिति भावः । नन्वाख्यातस्याऽऽश्रये लक्षणायां भावनाप्रतीतिर्न स्यात् । तत्प्रतीत्यर्थमाख्यातस्य भावनायां शक्तिकल्पने आश्रये लक्षणाया असंभवो युगपद्वृत्तिद्वयविरोधात् : भावनाश्रयत्वेन भावनाश्रये लक्षणायामपि भावनायाः प्राधान्येन प्रतीतिर्न स्यात् । विशिष्टे लक्षणायां गौरवप्रसङ्गाच्चेत्यरुचेराह—आक्षेपादिति । आक्षेपो नामार्थापत्तिर्मीमांसकमते । तार्किकमते त्वनुमानम् । अर्थापत्तिर्यथा—येन विना यदनुपपन्नं तेन तत्कल्प्यते । पीनो देवदत्तो दिवा न भुङ्क्ते, इत्यत्र भोजनं विनाऽनुपपन्नेन योगाभ्यासाद्यजन्यपुष्टत्वेन भोजनं कल्प्यते तच्च दिवा न भुङ्क्ते इति निषेधाद् रात्रिभोजनमादाय पर्यवस्यति तद्वत्प्रकृते भावनाया- ( व्यापारस्य) कर्तारं विनाऽनुपपत्त्या कर्तृत्वं स्वाश्रयं सा कल्पयति इति भावः । तार्किकमते तु भावनां पक्षीकृत्य सकर्तृकत्वं साध्यते कार्यत्वात्, घटवदित्यनुमितिजनकं व्याप्तिज्ञानादिकमाक्षेप इत्यर्थः । एवं फलस्यापि स्वाश्रयं विनाऽनुपपत्त्या तेन—स आक्षिप्येत । आक्षेपलभ्यस्यापि शाब्दबोधविषयत्वाभ्युपगमादाख्यातजन्यशाब्दबोधे भावनायाः प्रतीतिर्न विरुद्धेति भावः । ननु वृत्त्या पदजन्यपदार्थोपस्थितेः शाब्दबोधहेतुत्वेनाऽऽक्षेपलभ्यस्य शाब्दबोधविषयत्वं वक्तुमनुचितम् । किं चाऽऽक्षिप्ते कर्त्रादावाख्यातार्थसंख्यान्वयानुपपत्तिः । कर्त्रादेर्वृत्त्याऽनुपस्थितत्वात् । शाब्दी ह्याकाङ्क्षा शब्देनैव पूर्यत इति न्यायात् । शाब्दबोधविषयिणी आकाङ्क्षा—जिज्ञासा, शब्देनैव पूर्यते—वृत्त्या पदार्थोपस्थितिद्वारा विषयसिद्धिसंपादनेन निवार्यत इति तदर्थादित्यरुचेराह—प्रथमान्तपदाद्वेति । स्वसमभिव्याहृतदेवदत्तादिप्रथमान्तपदादेव आश्रयप्रतीतेः संभवान्न प्रतीतिराख्यातस्याऽऽश्रये शक्तिकल्पनायां प्रमाणमिति तात्पर्यम् । अत आह—अत्रोच्यत इत्यादिना । फलाश्रये व्यापाराश्रये च लिङ्गां शक्तिरित्यर्थे पाणिनिसूत्रं प्रमा-

मानम् । अत्र हि चकारात्--" कर्तरि कृत् " [ पा० सू० ३-४-६७ ] इतिसूत्रोक्तं कर्तरीत्यनुकृष्यते । बोधकतारूपां तिबादिशक्तिं तत्स्थानित्वेन कल्पिते लकारे प्रकल्प्य लकाराः कर्मणि कर्तरि चानेन विधीयन्ते । नकारविस-

---

णयति---लः कर्मणि० इति । नन्विदं सूत्रं तिङां कर्मणि शक्तिं ग्राहयेन्न कर्तरि, तत्र कर्तृपदाश्रवणादित्याशङ्कयाऽऽह---अत्र हीत्यादि । चकारेण ' कर्तरि कृत् ' इति पूर्वसूत्रस्थं कर्तरीति सप्तम्यन्तं पदं प्रकृतसूत्रेऽनुकृष्यत इत्यर्थः । भवतु कर्तरीत्यस्यानुकर्षस्तथाऽपीदं सूत्रं लकाराणामेव कर्त्राद्यर्थे शक्तिं बोधयेदत आह---बोधकतारूपामित्यादि । बोधजनकतारूपामित्यर्थः । तिबादिशक्तिम् । तिबादिनिष्ठां शक्तिमित्यर्थः । अयं भावः---प्रयोगदशायां तिबादीनामेव श्रवणात्तत एव चार्थबोधस्य जायमानत्वात्तिबादिनिष्ठामर्थबोधकतारूपां शक्तिं लाघवेन प्रक्रियानिर्वाहाय तिबादिस्थानित्वेन कल्पिते लकारे आरोप्य कर्मणि कर्तरि चानेन सूत्रेण लकारा विधीयन्त इति तात्पर्यम् । तथा चाऽऽख्यातपदवाच्यस्य तिङ आश्रये शक्तिरिति कण्ठरवेणोक्तं पाणिनिनाऽऽचार्येणेति भावः । ननु तिबादिभ्य एवार्थबोधस्य सिद्धत्वाल्लकारस्य क्वापि प्रयोगेष्वश्रवणाल्लस्येत्यनुक्त्वा तिप्तसित्यादिसूत्रेण स्वातन्त्र्येणैव तिबादयो विधीयन्ताम् । वर्तमाने तिङ्, तिङः शतृशानचावप्रथमासमानाधिकरणे, इत्येवं रीत्या लट्पदस्थाने तिङ्पदघटितन्यासान्विधाय तिबाद्यनुवादेन वर्तमानादिकालाश्च विधीयन्तामिति चेन्न । टितो लकारस्य स्थाने विहितानामात्मनेपदानां टेः स्थाने एत्वविधायकस्य टित आत्मनेपदानां टेरे, इत्यादेरसांगत्यापत्तेः । टितो लकारस्यैवाभावात् - ननु वर्तमाने तिङ्ट्, अनद्यतने तिङ्ट्, इत्यादिन्यासान् कृत्वा तत्तत्कालार्थकतिबादेस्तत्तदनुबन्ध आसज्यताम् । तथा च टित आत्मनेपदानामित्यादेर्नासांगत्यमिति चेत् तथापि लिटस्तझयोरेशिरेच्, लुटः प्रथमस्य डारौरसः, इत्यादेरसंगतिः स्यात् । तत्र तत्र न्यासान्तररचने गौरवापत्तेरित्यास्तां तावत् । आदेशनिष्ठाया बोधकताशक्तेः कल्पिते स्थानिन्यारोपे दृष्टान्तमाह---रामान् रामैः, इत्यादौ नकारविसर्गादित एव तत्तदर्थप्रतीत्या तन्निष्ठां बोधकताशक्तिमर्थवत्येव स्थान्यादेशभाव इति नियमात्तत्स्थानिघटिते समुदाये आरोप्य कर्मकरणादौ यथा

र्गादिनिष्ठां कर्मकरणादिबोधकशक्तिमादाय शसादिविधानवत् । न च सूत्रे कर्तृकर्मपदे कर्तृत्वकर्मत्वपरे, तथा च कर्तृत्वं कृतिः कर्मत्वं च फलमेवार्थोऽस्त्विति शङ्क्यम् । फलव्यापारयोर्धातुलभ्यत्वेन लकारस्य पुनस्तत्र शक्तिकल्पनायोगात् । अथ दर्शनान्तरीयरीत्या व्यापारस्य धात्वर्थत्वाभावात्तत्र लकारविधिः स्यादिति चेत्तर्हि कृतामपि कर्तृकर्मादिवाचित्वं न सिध्येत् । कर्तरि कृत् " [ पा० सू०

---

शसुभिसादयो विधीयन्ते तद्वदिति भावः । लः कर्मणीति सूत्रार्थविषये शङ्कते—न चेति । लः कर्मणीति सूत्रे कर्मकर्तृपदे कर्मत्वकर्तृत्वरूपधर्मार्थके । भावप्रधाननिर्देशात्, ( भावः—प्रकृतिजन्यबोधे प्रकारः, प्रधानं—विशेष्यं, यत्रेत्थंताहशनिर्देशाच्छब्दोच्चारणादित्यर्थः । लक्षणया स्वारसिकविशेषणस्य विशेष्यतया विशेष्यस्य च विशेषणतया बोधजनकादिति तात्पर्यम् । यथा घटनिष्ठं घटत्वमित्येवं घटत्वविशेष्यकं घटपदमिति ) लाघवानुरोधाच्च । धर्मिपरत्वे तु घटत्वविशिष्टघटे घटशब्दस्येव कर्मत्वविशिष्टे कर्मणि कृतिविशिष्टे कर्तरि च शक्तिः कल्प्या । अनन्तानां फलानां कृतीनां च शक्यतावच्छेदकत्वं स्वीकर्तव्यं भवति । तथा चातिगौरवं भवति । कृतेः शक्यत्वे तु कृतित्वस्य जातिरूपत्वेनैककत्वात् शक्यतावच्छेदकैकत्वेन लाघवं भवतीत्यर्थः । कर्तृत्वं कृतिः कर्मत्वं च फलमिति । ननु कर्तृत्वकर्मत्वयोः कथं कृतिफलरूपत्वमिति चेत्——उच्यते । यत्नार्थककृञ्धातोः कर्तरि तृच्प्रत्ययेन निष्पन्नः कर्तृशब्दो यत्नवानित्यर्थं वक्ति, तदुत्तरत्वप्रत्ययश्च प्रकृतिजन्यबोधीयविशेषणीभूतयत्नवाचकः । यत्नश्च कृतिरिति कर्तृत्वस्य कृतिरूपत्वं, कर्मशब्दस्य फलाश्रये पारिभाषिकत्वात्तदुत्तरत्वप्रत्ययेन प्रकृत्यर्थप्रकारीभूतफलबोधनात्कर्मत्वस्य फलरूपत्वं च सिद्धमित्यर्थः । फलव्यापारयोश्च धातुनैव प्रतिपादनाल्लकारस्य पुनस्तत्र शक्तिकल्पनमत्यन्तायुक्तमिति नेदं सूत्रमाख्यातस्य कर्तृकर्मणोः शक्तिं बोधयतीति भावः । दर्शनान्तरीयरीत्येति । अन्यद्दर्शनं दर्शनान्तरं, मीमांसादर्शनं तद्रीत्येत्यर्थः । धात्वर्थत्वाभावादिति । विक्लित्यादिफलमेव धात्वर्थः, व्यापारः प्रत्ययार्थः इति मीमांसका मन्यन्ते । बहूनां धातूनां व्यापारे शक्तिकल्पनापेक्षयाऽल्पानां तिबादिप्रत्ययानां तत्र शक्तिकल्पने लाघवात् । पचतीत्यस्य पाकं करोतीति विवरणात् फलं धात्वोरर्थः । 'ति' इत्याख्यातस्य भावनार्थककृधातुना विवरणाच्च प्रत्ययस्यै (आख्यातस्यै)व व्यापारा( भावना )र्थकत्वं युक्तम् । विव्रियमाणविवरणयोः समानार्थकत्वस्य

( धात्वाख्यातार्थनिर्णयः )

३-४-६७ ] इति च लः कर्मणीत्यनेन तुल्ययोगक्षेमम् । अपि च **मीमांसकानां** कृतामिवाऽऽख्यातानामपि कर्तृवाचित्वमस्तु भावनाया एवाऽऽक्षेपेण कृदादिवत्प्रतीतिसंभवे वाच्यत्वं माऽस्तु । तथा सति प्राधान्यं तस्या न स्यादिति चेन्न । घटमानयेत्यादावाक्षिप्तव्यक्तेरपि प्राधान्यवदुपपत्तेः । पचतीत्यादौ भाव-

---

क्लृप्तत्वादित्यर्थः । तथा च धातुलभ्यत्वाभावाद्व्यापारे लकारविधिः संभवेत् । एवं फलस्य धातुलभ्यत्वेऽपि तदाश्रयत्वरूपे कर्मत्वे लकारविधिः स्यादित्युच्यते चेत् । तर्हि कर्त्राद्यर्थे विहितानां ण्वुल्तव्यदादीनां कृत्प्रत्ययानामपि कर्तृकर्मार्थवाचकत्वं न स्यात् । कर्तरि कृत्, तयोरेव० इत्यादिसूत्रस्थकर्तृकर्मपदयोः, लः कर्मणि च० इतिसूत्रस्थकर्तृकर्मपदवत्कर्तृत्वकर्मत्वपरत्वाङ्गीकारात् । यदि लाघवमात्रपक्षपातेन लः कर्मणीतिसूत्रस्थकर्तृकर्मपदयोः कर्तृत्वकर्मत्वार्थप्रतिपादकत्वं स्वीक्रियते तर्हि कर्तरि कृदित्यादिसूत्रस्थकर्तृकर्मपदयोरपि कर्तृत्वकर्मत्वार्थप्रतिपादकत्वस्वीकार उचितः, लः कर्मणीतिसूत्रस्थकर्तृकर्मपदे कर्तृत्वकर्मत्वरूपधर्मपरे, कर्तरि कृदित्यादिसूत्रस्थकर्तृकर्मपदे तु धर्मविशिष्टधर्मिपरे इत्येवं वैषम्यकरणे बीजाभावादिति भावः । तथा च फूत्कारत्वादिकं ण्वुलादीनां शक्यतावच्छेदकं, विक्लित्तित्वादिकं तु तव्यदादीनां शक्यतावच्छेदकं स्यान्न त्वाश्रयत्वमिति तात्पर्यम् । **तुल्ययोगक्षेममिति** । तुल्यो योगक्षेमोऽर्थप्रतिपादकत्वं यस्येत्यर्थः । ननु पाचको देवदत्त इत्येवं देवदत्तेनाभेदान्वयानुभवबलात्कृतां कर्त्रादिवाचकत्वमावश्यकं भावनायास्त्वाक्षेपेण लाभः सेत्स्यति, तद्वत् देवदत्तः पचतीत्यत्राभेदान्वयदर्शनादाख्यातानां कर्तृवाचकत्वमास्तां, भावनाया आक्षेपेण लाभसंभवाद्वाच्यत्वं मा भूदित्याह—**अपि चेति** । **मीमांसकानामिति** । मते, इति शेषः । नन्वाख्यातानां कर्तृवाचकत्वे ततः कथं भावनाप्रतीतिरित्यत आह—**भावनाया एवेत्यादि** । **तथा सति**—आक्षेपलभ्यत्वे सति । **न स्यादिति** । भावनाया आख्यातवाच्यत्वाभावात्प्राधान्यं न स्यादित्यर्थः । वाच्यार्थस्यैव प्राधान्येन भानमिति नियमादिति भावः । अन्यथाऽग्निमानयेत्यादावाक्षिप्तपात्रस्यापि प्राधान्येन भानापत्तेः । उक्तामनिष्टापत्तिं निषेधति—**इति चेन्नेति** । तिङन्ते आक्षेपलभ्याया अपि भावनाया मुख्यविशेष्यत्वमुपपादयति—**घटमानयेत्यादाविति** । अन्वयव्यतिरेकाभ्यां लाघवाच्च जातिः पदार्थ इति निर्धारितेऽमूर्तायां जातावानय-

नाया विवरणदर्शनाद्वाच्यत्वमिति चेन् । पाकानुकूलव्यापारवतः कर्तुरपि विवरणविषयत्वाविशेषात् । न च कर्तुर्विवरणं तात्पर्यार्थविवरणं पाकं करोतीत्यशब्दार्थकर्मत्वविवरणवदितरेतरद्वंद्वे हि समुच्चयांशविवरणवद्वा न तदर्थनिर्णायक-

---

नादिक्रियान्वयासंभवात्तदन्वयोपपत्तये जात्याक्षिप्तायाः स्वाश्रयव्यक्तेर्यथा प्राधान्यमनुभवबलात्स्वीक्रियते तथाऽऽख्यातवाच्यकर्त्राक्षिप्तभावनायाः प्राधान्यमनुभवसिद्धमुपपादयितुं शक्यमित्यर्थः । अनेन वाच्यार्थस्यैव प्राधान्यमिति नियमस्य व्यभिचारो दर्शित इति भावः । अनेकमन्यपदार्थे, इत्यनुशासनेन पिङ्गे अक्षिणी यस्या इति विग्रहदर्शनात्प्रधानषष्ठ्यर्थ एव बहुव्रीहेः साधुत्वं प्रतिपाद्यते । षष्ठ्यर्थशब्देन च प्रकृत्यर्थोपसर्जनको विभक्त्यर्थः संबन्ध एव प्रतीयते । उक्तं चारुणाधिकरणे— बहुव्रीहिः समासोऽयं मत्वर्थे विधीयते । अस्यास्तीति च संबन्धे मत्वर्थीयः प्रवर्तते ॥ इति । तथा च प्रधानषष्ठ्यर्थे मतुपो विधानेऽपि गोमन्तमानयेत्यादौ पुरुषानयनदर्शनेन संबन्धाक्षिप्तधर्मिण एव प्राधान्यानुभवबलाद्वाच्यार्थस्यैव प्राधान्यमिति नियमस्य व्यभिचारः स्पष्ट एवेति भावः । पाकं करोतीति । भावनार्थककृधातुना विवरणाद्भावनाया आख्यातवाच्यत्वमिति चेत् । करोतीत्याख्यातेन कर्तुरपि विवरणस्य जायमानत्वेन पचतीत्यत्याऽऽख्यातस्य भावनायां शक्तिरुत कर्तरीत्यनिश्चयः स्यादित्यर्थः । कर्तुर्विवरणविषये शङ्कते—न चेति । पचतीत्यत्राख्यातस्य भावनार्थककृधातुना यद्विवरणं कृतं तच्छब्दार्थविवरणं, करोतीत्यत्राख्यातेन यत्कर्तुर्विवरणं कृतं तत्तु न शब्दार्थविवरणं किंतु पचतीत्यतः कर्तुर्योऽयो आपतामिति तात्पर्यविषयीभूताक्षेपलभ्यकर्तृविवरणमिति कृत्वाऽऽख्यातस्य भावनायामेव शक्तिर्निश्चितेति न पूर्वोक्तानिश्चयावसर इति भावः । कर्तुर्विवरणमशब्दार्थविवरणमित्यत्र दृष्टान्तमाह—पाकमिति । पच् धातोर्विक्लित्तिमात्रवाचकत्वेऽपि पाकमिति कर्मणि द्वितीयाश्रवणात्तद्गतकर्मत्वस्य यथा तात्पर्यतो विवरणं कृतं न शब्दार्थविवरणं तद्वदित्यर्थः । ननु पाकमिति द्वितीययाऽशब्दार्थकर्मत्वविवरणाद्शब्दार्थस्यापि संसर्गस्य विवरणदर्शनेऽपि तदतिरिक्तस्याशब्दार्थविवरणस्यादृष्टत्वाद्दृष्टान्तान्तरमाह—इतरेतरेति । धवखदिरावित्यादीतरेतरयोगद्वंद्वघटकपदावाच्यस्य समुच्चयांशस्य विग्रहवाक्यस्थचकारद्वयेन विवरणवदित्यर्थः । तथा चाशब्दार्थविवरणं न तदाख्यातार्थनिर्णायकमित्यर्थः । वाच्यार्थविवरणस्याऽऽख्यातार्थनिर्णायकत्वे गृह्यमाणे तु भाव-

मिति वाच्यम् । भावनायामपि तुल्यत्वात् । किं च पचति देवदत्त इत्यत्राभेदान्वयदर्शनात्तदनुरोधेन कर्तुर्वाच्यत्वमावश्यकं पक्ता देवदत्त इतिवत् । न चाभेदबोधे समानविभक्तिकत्वं नियामकं तच्चात्र नास्तीति वाच्यम् । सोमेन यजेत स्तोकं

---

नायाः शब्दार्थत्वविरहेऽपि तात्पर्यविषयीभूतत्वेनाऽऽक्षेपलभ्यत्वाद्विवरणोपपत्तौ सत्यां भावनाया अप्याख्यातवाच्यत्वं भवदभीष्टं सिध्येत्किंतु कर्तुरेव वाच्यत्वं भवेदित्यर्थः । कर्तुरेवाऽऽख्यातवाच्यत्वमावश्यकमित्याह—**किं चेति** । यथा चैत्रः पक्तेत्यादौ चैत्रेणाभेदान्वयबोधस्यानुभवसिद्धत्वात्कृतां कर्त्रादिवाचित्वमावश्यकं तथा देवदत्तः पचतीत्यादौ देवदत्ताभिन्नकर्तृको वर्तमानो विक्लित्त्यनुकूलो व्यापार इतिशाब्दबोधाद् देवदत्तादिनाऽभेदान्वयबोधानुभवादाख्यातानामपि कर्त्रादिवाचित्वमावश्यकमित्यर्थः । तथा च भावनाया आख्यातवाच्यत्वं सुतरां दुर्लभं स्यादिति भावः । ननु यत्र विशेषणविशेष्यवाचकपदयोः समानविभक्तिकत्वं तत्रैवाभेदान्वय इति नियमः । समानविभक्तिकत्वं च विशेषणवाचकपदे विशेष्यवाचकपदोत्तरविभक्तिसजातीयविभक्तिमत्त्वम् । साजात्यं च विभक्तित्वव्याप्य( सुप्त्वव्याप्य ) प्रथमात्वद्वितीयात्वादिधर्मेण ग्राह्यम् । अत एव ‘ नीलो घटम् ’ इति वाक्यान्नाभेदान्वयबोधापत्तिरिति शङ्कते—**न चाभेदेत्यादिना तच्चात्र नास्तीत्यन्तेन** । **तच्चेति** । अभेदान्वयबोधनियामकसमानविभक्तिकत्वं चेत्यर्थः । **अत्रेति** । देवदत्तः पचतीत्यादौ नास्तीत्यर्थः । प्रथमाविभक्तितिङ्विभक्त्योः सुप्त्वव्याप्यधर्मेण साजात्याभावात् । तथा चाभेदान्वयबोधनियामकाभावादेवाभेदान्वयबोधासंभवान्नाऽऽख्यातस्य कर्त्रादिवाचकत्वं युक्तमिति भावः । समानविभक्तिकत्वनियमस्य व्यभिचारं दर्शयितुमाह—**सोमेनेति** । अत्र लक्षणां विना सोमस्य यागार्थत्वं यागेनाभेदान्वयश्चानुपपन्नामिति सोमपदस्य मत्वर्थे सोमवति लक्षणया सोमवता यागेनेष्टं भावयेदिति विशिष्टविधानाद्वाक्यभेदप्रसङ्गोऽपि नेति न्यायप्रकाशादौ मीमांसकैर्निवारितम् । तत्र तृतीयातिङ्विभक्त्योः सुप्त्वव्याप्यधर्मेण साजात्याभावादभेदान्वयबोधो न स्यात् । मीमांसकैस्तु सोऽङ्गीकृत एवेति समानविभक्तिकत्वनियमस्य व्यभिचारो दुष्परिहर इत्यर्थः ।

**स्तोकं पचतीति** । फलस्यापि व्यपदेशिवद्भावेन फलाश्रयत्वात्कर्मत्वम् । अत एव तत्समानाधिकरणे स्तोकमित्यत्र द्वितीया बोध्या । अत्र धात्वर्थव्यापा-

पचति राजपुरुष इत्यादावप्यभेदबोधानापत्तेः । न च लक्षणया कर्तुरुक्तत्वात्सामानाधिकरण्यं पिङ्गाक्ष्यादियौगिकानामपि द्रव्यवाचित्वापत्तेः । एवं वैश्वदेवीत्यादितद्धितानामपि । "अनेकमन्यपदार्थे" [ पा० सू० २-२-२४ ] "साऽस्य देवता" [ पा० सू० ४-२-२४ ] इत्यनुशासनेनापि पिङ्गे अ-

---

रजन्यफले स्तोकपदार्थस्याभेदेनान्वयः स्पष्ट एव । अत्रापि पूर्ववन्नियमस्य व्यभिचार ऊह्यः ।

ननु समानविभक्तिकनामार्थयोरभेदान्वय इत्यभियुक्तोक्तेर्नामार्थयोरेवाभेदान्वये समानविभक्तिकत्वं नियामकं नान्यत्रेत्यत आह-राजपुरुष इति । राजपदं राजस्वत्ववत्परं लक्षणया । तादृशस्य राजपदार्थस्य पुरुषेणाभेदान्वयः । राजनिरूपितस्वत्ववदभिन्नः पुरुष इति बोधात् । अत्र पूर्वपदे विभक्तेरश्रवणाद्विशेष्याभावप्रयुक्तो विशिष्टाभावः । आद्योदाहरणद्वये तु विभक्त्योः सत्त्वेऽपि विशेषणीभूतसाजात्याभावप्रयुक्तो विशिष्टाभाव इति विशेषः । एवं च समानविभक्तिकत्वनियमस्य नामार्थद्वयविषयकत्वेऽपि व्यभिचारः सुतरां दुर्वार इति भावः । तथा च देवदत्तः पचतीत्यादावभेदान्वयबोधस्य निष्प्रत्यूहत्वादभेदान्वयबोधोपपत्तये कर्त्रादौ शक्तिराख्यातस्यावश्यं गले पततीति तात्पर्यम् ।

ननु भावनैवाऽऽख्यातवाच्याऽस्तु देवदत्तः पचतीत्यादौ जायमाना देवदत्ताख्यातार्थयोः सामानाधिकरण्यप्रतीतिस्त्वन्यथानुपपत्त्याऽऽख्यातस्य कर्तरि लक्षणयोपपद्येतेत्याशयेन शङ्कते——न चेति । सामानाधिकरण्यं पदयोरभेदप्रतिपादकत्वम् । तथा च लक्षणयैवाभेदबोधनिर्वाहे कर्त्राख्यातस्य शक्तिस्वीकारो निरर्थक इति भावः । लक्षणया कर्तुरुक्तत्वात्सामानाधिकरण्यस्य निर्वाहे क्रियमाणे । पिङ्गाक्ष्यादियौगिकेति । योगोऽवयवशक्तिः, तत्सहकारेणार्थाभिधाने प्रवृत्तानां शब्दानामित्यर्थः । द्रव्यवाचित्वानापत्तेरिति । लक्षणयैव द्रव्यबोधनिर्वाहाद्द्रव्यवाचित्वं न स्यादित्यर्थः । किं तु संबन्धवाचित्वमेव युक्तं स्यादिति भावः । इत्यादितद्धितानामपीति । वैश्वदेवीत्यादिसमुदायघटकतद्धितानामपि द्रव्यवाचित्वं न स्यादिति भावः ।

यौगिकशब्दानां संबन्धवाचित्वमेव विशदयति——अनेकमन्येत्यादि । अनेकमन्यपदार्थे—अनेकं प्रथमान्तमन्यस्य पदस्यार्थे वर्तमानं वा समस्यते स बहुव्रीहिरित्यर्थकेनोक्तसूत्रेण पिङ्गे अक्षिणी यस्या इति विग्रहप्रदर्शनाच्छेतोर्यस्या इति

( धात्वाख्यातार्थनिर्णय. )

क्षिणी यस्या विश्वे देवा देवता अस्या इति विग्रहदर्शनात्, प्रधानषष्ठ्यर्थ एवानुशासनलाभात् । तथा च—“ अरुणया पिङ्गाक्ष्यैकहायन्या सोमं क्रीणाति” [ तै० सं० का० १ प० २ अ० १० ] इति वाक्ये द्रव्यानुक्तेरारुण्यस्य स्ववाक्योपात्तद्रव्य एवान्वयप्रतिपादकारुणाधिकरणोच्छेदापत्तिः । द्रव्यवाचकत्वसा-

---

पदोपस्थितप्रधानषष्ठ्यर्थ एव बहुव्रीहेः साधुत्वलाभादित्यर्थः । षष्ठ्यन्तेन च प्रकृत्यर्थोपसर्जनकः षष्ठ्यर्थः संबन्ध एव प्रतीयते इति ‘यस्याः’ इति अन्यपदार्थमन्तर्भाव्य पिङ्गाक्षिशब्दयोर्वृत्तिः । अतः प्रधानसंबन्धार्थ एव बहुव्रीहेः साधुत्वं लभ्यत इति तात्पर्यम् । उक्तं चारुणाधिकरणे वार्तिके—बहुव्रीहिः समासोऽयं मतुबर्थे विधीयते । अस्यास्तीति च संबन्धे मत्वर्थीयः प्रवर्तते ॥ इति । देवतार्थकतद्धितस्यापि विश्वे देवा देवता अस्या इति विग्रहे षष्ठ्यर्थसंबन्धस्यैव प्राधान्यदर्शनात्संबन्धस्यैव वृत्तिवाच्यत्वमवसीयते ।

ननूक्तरीत्या प्रधानषष्ठ्यर्थसंबन्धस्यैव बहुव्रीह्यादिवृत्तिवाच्यत्वमस्तु का हानिरिति चेदाह—**तथा चेति । अरुणयेत्यादिवाक्ये द्रव्यानुक्तेरिति** । आकृत्यधिकरणन्यायेनारुणपदस्याऽऽरुण्यगुण एव शक्तिकल्पनात् पिङ्गाक्ष्यादिपदस्य निरुक्तरीत्या प्रधानषष्ठ्यर्थसंबन्ध एव शक्तिकल्पनाच्च द्रव्यानुक्तेरित्यर्थः । **स्ववाक्येति** । स्वं क्रयणभावना । तत्प्रतिपादकं यदरुणया पिङ्गाक्ष्येत्यादिवाक्यं तादृशवाक्यगतपिङ्गाक्ष्यैकहायन्येति बहुव्रीहिवृत्तिवाच्यद्रव्य एवाऽऽरुण्यस्यान्वय इत्येवं प्रतिपादकस्यारुणाधिकरणस्योच्छेदापत्तिरित्यर्थः ।

इत्थं ह्यरुणाधिकरणम्—ज्योतिष्टोमे श्रूयते—‘ अरुणया पिङ्गाक्ष्यैकहायन्या सोमं क्रीणाति, इति । अत्रारुणेति प्रकृतिभागः । क्रीधातुश्चाभिधात्री श्रुतिः । क्रीणातीत्यत्राख्यातप्रत्ययो विधात्री श्रुतिः । अरुणयेति तृतीयाप्रत्ययो विभक्तिरूपा विनियोक्त्री श्रुतिः । अरुणाशब्दस्त्वारुण्यगुणमात्रवाचको लाघवात् । न त्वारुण्यगुणविशिष्टं द्रव्यमभिधत्ते । गुणविशिष्टेऽर्थेऽरुणाशब्दस्य शक्तिस्वीकारे गौरवापत्तेः । अनन्यलभ्यस्यैव शब्दार्थत्वात् । आश्रयद्रव्यस्याऽऽक्षेपेण लाभसंभवात् । तथा चात्रारुणयेति तृतीया श्रुत्या प्रकृत्यर्थस्याऽऽरुण्यगुणस्य सोमक्रयसाधनत्वं प्रतीयते । तच्चानुपपन्नम् । क्रयो नाम कंचित्पदार्थं दत्त्वा कस्यचित्पदार्थस्य ग्रहणम् । दानं ग्रहणं च वासोहिरण्यादिमूर्तपदार्थस्यैव संभवति । न त्वमूर्तस्य गुणमात्रस्य । तस्याऽऽश्रयीभूताद्द्रव्यान्निष्कृष्य दानाद्यसंभवात् । तत-

स्तृतीयाश्रुतेर्विनियोजकत्वाभावेन प्रकरणस्यात्र विनियोजकत्वं वक्तव्यम् । प्रकरणं च ग्रहचमसाद्याखिलद्रव्येष्वारुण्यगुणं निवेशयति । तत्रैषाऽक्षरयोजना——अरुणयेत्येतत्पृथग्वाक्यम् । तत्र तृतीयाश्रुत्या प्राकरणिकानि साधनद्रव्याणि सर्वाण्यनूद्य प्रातिपदिकेन गुणो विधीयते——यानि ज्योतिष्टोमे साधनद्रव्याणि तानि सर्वाण्यरुणानि कर्तव्यानीत्येवं पूर्वपक्षयित्वा, पिङ्गाक्ष्येकहायनीशब्दयोः पिङ्गे अक्षिणी यस्याः, एकं हायनं यस्या इति चान्यपदार्थे विहितेन बहुव्रीहिसमासेन द्रव्यवाचित्वात् । द्रव्यं चात्र गौरेव । गवा ते क्रीणानीति मन्त्रलिङ्गात् । पिङ्गाक्ष्यैकहायन्येति च पदद्वये तृतीयाश्रुतिर्द्रव्यस्य क्रयणक्रियासाधनत्वं बोधयति । तथाऽरुणयेति तृतीयाश्रुतिरप्यारुण्यगुणस्य क्रयसाधनत्वं बोधयति । तच्च द्रव्यद्वारमन्तरेण न संभवतीत्यर्थापत्त्या *द्रव्यावच्छेदकत्वं कल्प्यते । द्रव्यं चात्र स्ववाक्यगतैकहायन्येव संनिहितत्वात् । तथा चाऽऽरुण्यगुणविशिष्टैकहायन्या सोमं क्रीणातीत्यर्थः पर्यवस्यतीति सिद्धान्त उक्तः । सोऽसंगतः स्यात् । पिङ्गाक्ष्यादिपदानामुक्तरीत्या प्रधानषष्ठ्यर्थसंबन्धार्थकत्वेन तेषां द्रव्यवाचित्वाभावात् ।

अत्रेदं बोध्यम् । यद्यपि यस्येत्याद्यन्यपदार्थे प्रकृत्यर्थोपसर्जनः षष्ठ्यर्थः संबन्धः प्रधानतया प्रतीयते तथाऽपि चित्रगुर्देवदत्त इति बहुव्रीहिसमासे सामानाधिकरण्यानुरोधाच्छब्दशक्तिस्वभावाच्च षष्ठ्यर्थसंबन्धोपसर्जनः प्रकृत्यर्थः प्रधानमित्येवं विशेष्यविशेषणभावव्यत्यासं वृत्तौ प्रकल्प्य पिङ्गाक्ष्यादिबहुव्रीहेर्द्रव्यवाचित्वं निर्वाह्यम् ।

मीमांसावार्तिककृतोऽपि——

सर्वत्र यौगिकैः शब्दैर्द्रव्यमेवाभिधीयते ।
नहि संबन्धवाच्यत्वं संभवत्यतिगौरवात् ॥ इत्याहुः ।

अयं भावः——संबन्धो हि संबन्धिद्वयनिरूप्यः संबन्धिभ्यां भिन्नश्चेत्यनुभवसिद्धम् । तत्र चित्रगुरित्यादावनुशासनानुरोधेन संबन्धस्य सांसर्गिकविषयतया वाच्यत्वं कल्पनीयम् । तथा चात्र गोरूपस्यैकस्य संबन्धिनः प्रातिपदिकादुक्तत्वेऽपि संबन्धस्योभयनिरूप्यत्वेन संबन्ध्यन्तरभानं विना भानायोगाद्द्वितीयसंब-

* द्रव्यावच्छेदकत्वं——नाम स्वाश्रयत्वेन द्रव्यग्रहणम् । स्वशब्देन गुणग्रहणम् । तथाच गुणशब्देन तादृशगुणाश्रयीभूतद्रव्यं ग्राह्यम् ।

( धात्वाख्यातार्थनिर्णयः )

धकमूलयुक्तेः सामानाधिकरण्यस्योक्तरीत्योपपत्तेरिति प्रपञ्चितं विस्तरेण वैयाकरणभूषणे । तिङ इति । बोधकतारूपा शक्तिस्तिङ्क्ष्वेवेत्यभिप्रेत्येदम् । पदार्थ

---

सम्बन्धिनोऽपि वाच्यत्वं कल्पनीयमिति शक्तिद्वयकल्पनापत्त्याऽतिगौरवाद् बहुव्रीहौ संबन्धमात्रवाच्यत्वं न संभवतीत्यर्थः । आवश्यकद्वितीयसंबन्धिनैवाऽऽक्षेपात्संबन्धबोधोपपत्तावन्यलभ्यत्वेन संबन्धवाच्यत्वासंभवश्च । तदुक्तं—संबन्धिनैव संबन्धः प्रत्येतुं यदि शक्यते । पुनस्तस्याभिधाशक्तिं कः श्रुतेः परिकल्पयेत् ॥ इति । एवं च पिङ्गाक्षीवैश्वदेवीत्यादियौगिकपदानामुक्तरीत्याद्रव्यवाचित्वमवश्यमङ्गीकार्यमिति ।

अत एव चित्रगोसंबन्धीति समासार्थः । यत्संबन्धिन्यश्चित्रा गाव इति विग्रहार्थः । वृत्तौ विशेष्यविशेषणभावव्यत्यास इत्युक्तत्वाद् वृत्त्यर्थप्रदर्शनार्थे कल्पिते चित्रा गावो यस्येति वाक्येऽपि विशेष्यविशेषणभावव्यत्यासाच्चित्रगोसंबन्धीत्येवार्थः । विशेष्यविशेषणभावव्यत्यासप्रदर्शनायैव चित्रा गावो यस्य स इति प्रयुज्यते वृद्धैः । तत एव च न वृत्तिविग्रहयोः समानार्थत्वभङ्ग इत्युक्तं लघुमञ्जूषायां नागेशभट्टैरिति ज्ञेयम् ।

तथाऽऽरुण्यस्यामूर्तस्य साक्षात्क्रयसाधनत्वासंभवेऽपि स्वाश्रयीभूतद्रव्यद्वारा परम्परया तस्य क्रयसाधनत्वसंभवात् । यथाऽरुणेति स्त्रीप्रत्यय आरुण्यगुणाश्रयीभूतगोरूपद्रव्यगतं स्त्रीत्वं द्योतयन् परम्परयाऽऽरुण्यगुणस्य स्त्रीत्वेन संबन्धं बोधयति तथाऽरुणयेति तृतीयाप्रत्ययोऽप्यारुण्यगुणाश्रयीभूतस्य गोरूपद्रव्यस्य क्रयसाधनत्वं द्योतयन् परम्परयाऽऽरुण्यगुणस्य क्रयसाधनत्वं बोधयतीति न किंचिदनुपपन्नमिति ।

मूलयुक्तेरिति । द्रव्यवाचकत्वसाधिका या मूलयुक्तिः—असाधारणयुक्तिः—सामानाधिकरण्यं पिङ्गाक्षी गौः, वैश्वदेवी आमिक्षेत्यत्रानुभवसिद्धं सामानाधिकरण्यं, तस्य आक्षेपादिनोपपत्तेः सत्त्वादित्यर्थः । एवं च यौगिकानां पिङ्गाक्ष्यादिपदानां, वैश्वदेव्यादिघटकप्रत्ययस्य च न किंचिद्द्रव्यवाचकत्वसाधकं, तत्प्रतीतेराक्षेपादिनोपपत्तेरिति तेषां द्रव्यवाचित्वं न स्यादित्येवमादि विस्तरेण निरूपितं वैयाकरणभूषणे तत्तत एवावगन्तव्यमिति ।

ननु लः कर्मणि, इति पाणिनिसूत्रेण लकाराणां कर्त्राद्यर्थे शक्तेरुक्तत्वात् 'आश्रये तु तिङः' इत्यनुपपन्नमत आह—बोधकतेति । बोधजनकता

निरूप्य वाक्यार्थं निरूपयति—फल इत्यादि । विक्लित्त्यादिफलं प्रति नि- ङर्थः कर्तृकर्मसंख्याकालाः । तत्र कर्तृकर्मणी व्यापारफलयोर्विशेषणे । संख्या कर्तृप्रत्यये कर्तरि । कर्मप्रत्यये कर्मणि । समानप्रत्ययोपात्तत्वात् । तथाचाऽऽ-

---

रूपा शक्तिरित्यर्थः । तिङ्क्ष्वेवेति । तिङ्निष्ठैव व्यवहारकाले प्रयोगदशायां तिङामेव सत्त्वेन तेभ्य एव कर्त्राद्यर्थबोधस्यानुभवसिद्धत्वादित्यर्थः ।

वाक्यार्थज्ञाने पदार्थज्ञानस्य कारणत्वादादौ पदार्थनिरूपणमिति संगतिं प्रद्- र्शयन् वाक्यार्थं निरूपयितुमाह—**फले प्रधानमिति** । फले–विक्लित्त्यादौ व्यापारः प्रधानं विशेष्य इत्यर्थः । फलनिरूपितप्राधान्यवान् व्यापारः फलं च तद्विशेषणमित्यर्थः । **आश्रये त्विति** । फलाश्रये व्यापाराश्रये च । फलव्या- पारयोर्धातुलभ्यत्वादाश्रयमात्रमर्थः । अनन्यलभ्यो हि शब्दार्थ इति न्यायात् । तथा चाऽऽश्रयत्वमेव शक्यतावच्छेदकम् । **तिङ इति** । आदेशिनो लकार- स्यार्थेन तिङोऽर्थवत्त्वमादायेदं बोधकत्वं, प्रयोगे लकाराभावेन तिबादिभ्य एव कर्त्राद्यर्थबोधस्यानुभवसिद्धत्वात्तिङ एव तत्र शक्तिरित्यभिप्रायेण वा । **तिङर्थ इति** । कर्तृकर्मसंख्याकालाः । **तत्रेति** । कर्त्राद्यर्थानां मध्ये । कर्ता व्यापारे विशेषणमाधाराधेयभावसंबन्धेन व्यापारनिरूपितविशेषणतावान् कर्तेत्यर्थः । क- र्तृनिष्ठो व्यापार इति बोधात् । एवमेव कर्म फले विशेषणं फलनिरूपितविशेष- णतावत्कर्मेत्यर्थः । तण्डुलादिनिष्ठा विक्लित्त्यादिरिति बोधात् । **संख्येति** । क- र्तृप्रत्ययसमभिव्याहारे कर्तरि संख्याया विशेषणत्वेनान्वयः । कर्मप्रत्यये कर्मणि संख्याया विशेषणत्वेनान्वय इत्यर्थः ।

ननु धात्वर्थस्य फलव्यापारात्मकस्य प्रकृत्युपस्थापितत्वेन तस्यापि प्रत्यासन्न- तया तत्र कुतो न संख्याया विशेषणत्वेनान्वयः । किं च संख्यायाः प्रत्ययार्थ- त्वात् प्रकृत्यर्थे धात्वर्थ एव तदन्वयस्य न्याय्यत्वात्सुबर्थसंख्यायाः प्रकृत्यर्थ ए- वान्वयस्य दृष्टत्वाच्चाऽऽख्यातार्थसंख्याया अपि धात्वर्थ एवान्वय उचित इत्या- शङ्कां निराकुर्वन् कर्त्रादौ संख्यान्वये हेतुमाह—**समानप्रत्ययोपात्तत्वादिति** । येन प्रत्ययेन कर्तृकर्मार्थ उक्तस्तेनैव प्रत्ययेन संख्यार्थोऽप्युक्त इति हेतोर्धात्वर्था- पेक्षया प्रत्यासत्त्यातिशयात्कर्तृकर्मणोरेव संख्यान्वयस्य न्याय्यत्वादित्यर्थः । एवं च समानाभिधानश्रुतेः समभिहारात्मकवाक्यापेक्षया प्रबलत्वेनैकप्रत्ययोपात्तार्थे संख्यान्वयमकृत्वा प्रथमान्तार्थे संख्यान्वयकरणं नैयायिकानामत्यन्तानुचितमिति

( धात्वाख्यातार्थनिर्णयः )

ख्यातार्थसंख्याप्रकारकबोधं प्रत्याख्यातजन्यकर्तृकर्मोपस्थितिर्हेतुरिति कार्यकारण-

---

सूच्यते । तथा च यादृशः कार्यकारणभावः फलितस्तं निर्दिशति—आख्यातार्थसंख्येति । आख्यातशब्दो मीमांसकादिभिः केवलतिङ्क्षु प्रयुज्यते, वैयाकरणैस्तु तिङन्तेषु प्रयुज्यते, आख्यातमाख्यातेनेत्यत्र भाष्ये तथा दर्शनात् । आख्यातं तिङ्, तदर्थः संख्या, सा प्रकारः—विशेषणं यत्र तादृशबोधे विशेष्यतासंबन्धेन आख्यातजन्या या कर्तृकर्मार्थोपस्थितिः सा हेतुः तादृशबोधे कारणमिति कार्यकारणभावः सिद्धः । तत्प्रत्ययप्रतिपाद्यसंख्यायास्तत्प्रत्ययप्रतिपाद्यकर्तृकर्मरूपेऽर्थेऽन्वय इति यावत् । अत्र कर्तृकर्मविशेष्यकेत्यंशोऽपि निवेश्यः । तथा चाऽऽख्यातार्थसंख्याप्रकारककर्तृरूपार्थविशेष्यकबोधत्वं, तादृशकर्मरूपार्थविशेष्यकबोधत्वं च कार्यतावच्छेदकम् । आख्यातजन्यकर्तृभूतार्थोपस्थितित्वं तादृशकर्मरूपार्थोपस्थितित्वं च कारणतावच्छेदकम् । कार्यत्वकारणत्वयोरवच्छेदकः संबन्धः समवाय इति बोध्यम् । अत्र कार्यतावच्छेदककोटौ कर्तृकर्मरूपार्थविशेष्यकबोधं प्रतीत्येवोक्तौ पक्ता पाचक इत्यादावाख्यातजन्यकर्तृकर्मोपस्थित्यभावेन हेतोर्व्यभिचारात्कर्तृप्रत्ययेनाभीष्टः कर्त्रादिविशेष्यकबोधो न स्यादिति तत्राऽऽख्यातार्थसंख्याप्रकारकेत्यंशो निवेशितः । तथा च—आख्यातार्थसंख्याप्रकारकबोधं प्रति आख्यातजन्यकर्तृकर्मोपस्थितेर्हेतुत्वेन पक्ता पाचक इत्यादौ यत्किंचिदर्थप्रकारक-( धात्वर्थव्यापारप्रकारक ) कर्तृविशेष्यकबोधो निराबाधः । आख्यातार्थकालप्रकारकबोधापत्तिवारणाय संख्यापदं निवेशितम् । ननु पक्तेत्यादौ व्यापारप्रकारकबोधोपपत्तये संख्याप्रकारकेत्येतावतैव सिद्धौ संख्याया आख्यातार्थेति विशेषणं किमर्थमिति चेन्न । आख्यातजन्यकर्तृकर्मोपस्थितेरभावेन घट इत्यादौ सुबर्थैकत्वादिसंख्याप्रकारकबोधो न स्यात् । आख्यातार्थसंख्याप्रकारकबोधे हि तादृशोपस्थितिनियमः, न तु सुबर्थसंख्याप्रकारकबोधे इति तत्सार्थक्यात् । कारणतावच्छेदककोटौ कर्तृकर्मपदं परित्यज्याऽऽख्यातजन्योपस्थितिर्हेतुरित्येवोक्तौ वर्तमाने लट् इत्यादिसूत्रविहितलडादीनां वर्तमानादिकालवाचित्वपक्षे कालस्याप्याख्यातजन्योपस्थितिविषयत्वात्तत्र पचतीत्याख्यातार्थसंख्यायाः प्रकारतयाऽन्वयः कालेऽपि भवेत् । तद्वारणाय कर्तृकर्मेति विषयतयोपस्थितेर्विशेषणं दत्तम् । तथा-चाऽऽख्यातजन्योपस्थितिविषयत्वेऽपि कालस्य कर्तृकर्मरूपत्वाभावान्न तत्राऽऽख्या-

भावः फलितः । नैयायिकादीनामाख्यातार्थसंख्यायाः प्रथमान्तार्थ एवान्वयादा-ख्यातार्थसंख्याप्रकारकबोधे प्रथमान्तपदजन्योपस्थितिर्हेतुरिति कार्यकारणभावो वाच्यः, सोऽपि चन्द्र इव मुखं दृश्यते देवदत्तो भुक्त्वा व्रजतीत्यादौ चन्द्रकर्तार्थ-

---

तार्थसंख्यायाः प्रकारतयाऽन्वय इति भावः । ननु देवदत्तस्तण्डुलं पचति, देवदत्तेन तण्डुलः पच्यते इत्यादौ आख्यातार्थैकत्वसंख्यायास्तण्डुलरूपे कर्मणि प्रकारत-याऽन्वयः स्यात् । तथाऽऽख्यातार्थसंख्याया देवदत्तरूपे कर्तरि प्रकारतयाऽन्वयः स्यात् । तयोस्तण्डुलदेवदत्तपदाभ्यामुपस्थितिसत्त्वात् । तथा च तत्र व्यभिचारः स्यात् । तद्वारणाय कर्तृकर्मणोराख्यातजन्यत्वं विशेषणं दत्तम् । तथा च निरुक्त-प्रयोगे आख्यातार्थैकत्वबहुत्वसंख्यायास्तण्डुलदेवदत्तपदादानुपस्थितयोः कर्मक-र्त्रोर्न प्रकारतयाऽन्वयः । किं त्वाख्यातादुपस्थितयोः कर्तृकर्मणोरेवान्वयः । काष्ठै-स्तण्डुलं पचतीत्यत्राख्यातप्रत्ययेन स्वार्थसंख्याप्रकारककरणादिविशेष्यकान्वय-बोधाजननात्तत्र व्यभिचारवारणाय कर्तृकर्मविशेष्यकेत्युक्तं कार्यतावच्छेदककोटौ । एवं चाऽऽख्यातजन्यकर्तृकर्मोपस्थितिराख्यातार्थसंख्याप्रकारककर्तृकर्मविशेष्यकबो-धनियामिकेत्यर्थः । अत्रेदं बोध्यम् । व्यभिचारो नाम कार्यकारणभावभङ्गः । व्यभिचारश्च द्विविधः । अन्वयव्यभिचारो व्यतिरेकव्यभिचारश्च । तत्र कारण-सत्त्वे कार्याभावादाद्यः । कार्यसत्त्वे कारणाभावाद्द्वितीयः । काष्ठैस्तण्डुलं पचती-त्यत्र आख्यातजन्यकर्तृकर्मोपस्थितिरूपकारणसत्त्वेऽपि आख्यातार्थसंख्याप्रकारक-करणविशेष्यकान्वयबोधरूपकार्याभावादन्वयव्यभिचारः । पक्ता पाचक इत्यादौ कर्तृप्रत्ययेन कर्तृविशेष्यकबोधरूपकार्यसत्त्वेऽपि आख्यातजन्यकर्तृकर्मोपस्थितिरू-पकारणाभावाद्व्यतिरेकव्यभिचार इति । उभयत्रापि निरुक्तव्यभिचारवारणाय तत्तद्विशेषणं दत्तमित्यन्यत् ।

एवं स्वमते कार्यकारणभावं निरूप्य नैयायिकमते कार्यकारणभावप्रयुक्तं गौ-रवं दर्शयितुमाह—नैयायिकादीनामिति । तार्किकाणां मते प्रथमान्तार्थमु-ख्यविशेष्यकः शाब्दबोध इत्याख्यातार्थसंख्यायाः प्रथमान्तार्थ एवान्वयः । य-थाऽऽख्यातोपात्तकृतेः प्रथमान्तार्थेऽन्वयस्तथाऽऽख्यातोपात्तसंख्याया अपीत्यर्थः । तथा चैवं कार्यकारणभावो वक्तव्यः—आख्यातार्थसंख्याप्रकारकबोधे प्रथमान्त-पदजन्योपस्थितिर्हेतुरिति । सोऽपीति । उक्तकार्यकारणभावोऽपि । चन्द्र इ-वेत्यादि । चन्द्र इव मुखं दृश्यते, भुक्त्वा व्रजति चैत्रः, इत्यत्र चन्द्रस्य कर्त्रा-

( धात्वाख्यातार्थनिर्णयः )

योराख्यातार्थानन्वयादितराविशेषणत्वघटित इत्यतिगौरवम् । इदमपि कर्तृकर्मणो-

न्तार्थभोजनस्य च प्रथमान्तार्थत्वेन तत्र दृश्यते व्रजतीत्याख्यातार्थसंख्यायाः प्रका-रतयाऽन्वय आपद्येत । स च नेष्टः । चन्द्रभोजनयोराख्यातार्थसंख्यान्वयाननुभवात् । ननु क्त्वान्तस्य कथं प्रथमान्तत्वमिति चेदुच्यते । अत्र समानकर्तृकयोः क्रियारूपार्थयोर्मध्ये पूर्वकालसंबन्धी योऽर्थस्तद्वाचकात्क्त्वेत्यर्थकेन 'समानकर्तृकयोः' इति सूत्रेण क्त्वि तदर्थजिज्ञासायां 'कर्तरि कृत्' इति न प्रवर्तते । 'अव्ययकृतो भावे' इति वार्तिकारम्भाद्भाव एव क्त्वाप्रत्ययस्यार्थः । स चाव्यसत्त्वभूत एव । पाक इत्यादाविव लिङ्गसंख्याननुभवात् । तथाच क्त्वावाच्यक्रियाया असत्त्वरूपत्वेन द्वित्वाद्यप्रतीतेर्न द्विवचनादि किंत्वेकवचनमेव तस्यौत्सर्गिकत्वेन संख्यानपेक्षत्वात् । तच्च प्रथमोपस्थितत्वात्प्रथमाया एव । तस्य चाव्ययाद्राविति लुगित्यन्यत् । ननु क्त्वाप्रत्ययस्य भावमात्रार्थकत्वाङ्गीकारेऽहं भुक्त्वा व्रजामीत्यादावस्मच्छब्दात्तृतीयापत्तिः । न च तिङन्तेन कर्तुरभिहितत्वान्नेति वाच्यम् । तिङन्तार्थकर्तुरुक्तत्वेऽपि क्त्वान्तार्थकर्तुरनभिधानादिति चेन्न । प्रधानतिङन्तार्थक्रियानिरूपितशक्त्यभिधानात्क्त्वान्तार्थगुणक्रियानिरूपितशक्तेरप्यभिधानस्य भाष्येऽङ्गीकारात् । तदुक्तं—प्रधानेतरयोर्यत्र द्रव्यस्य क्रिययोः पृथक् । शक्तिर्गुणाश्रया तत्र प्रधानमनुरुध्यते । इति । तथा च क्त्वाप्रकृत्यर्थक्रियायाः क्रियान्तरे विशेषणत्वात् प्रधानक्रियानिरूपितकर्तृत्वशक्तेस्तिङोक्तत्वेन तद्विशेषणीभूतक्रियानिरूपितकर्तृत्वशक्तेरप्युक्तत्वादभिहिते प्रथमैव । एवं च चन्द्रभोजनयोः प्रथमान्तपदजन्योपस्थितिविषयत्वस्य सत्त्वेन तत्र व्यभिचारवारणाय प्रथमान्तपदजन्योपस्थितावितराविशेषणत्वानापन्नेति विशेषणं दातव्यं भवति । तस्य च प्रथमान्तेतरार्थनिष्ठविशेष्यतानिरूपितविशेषणतानाक्रान्तत्वमर्थः । तथा चाऽऽख्यातार्थसंख्याप्रकारकबोधं प्रतीतरार्थनिष्ठविशेष्यतानिरूपितविशेषणतानापन्नप्रथमान्तपदजन्योपस्थितिः कारणमिति वाच्यमित्यतिगौरवं भवतीत्यर्थः । चन्द्र इव मुखमित्यत्र चन्द्रनिरूपितसादृश्यवन्मुखमिति बोधाच्चन्द्रस्येवार्थसादृश्यनिष्ठविशेष्यतानिरूपितविशेषणतापन्नत्वात्, तथा भुक्त्वा व्रजतीत्यत्र भोजनकर्तृकर्तृकं भोजनोत्तरकालिकं व्रजनमिति बोधोदयात्क्त्वाप्रकृत्यर्थक्रियायाः क्रियान्तरे विशेषणत्वात्तिङन्तार्थव्रजनक्रियानिष्ठविशेष्यतानिरूपितविशेषणतापन्नत्वाद्भोजनक्रियायाः, नोक्तस्थलद्वये चन्द्रभोजनयोर्दृश्यते व्रजतीत्याख्यातार्थसंख्यायाः प्रकारतयाऽ-

राख्यातार्थत्वे मानमिति स्पष्टं भूषणे । कालस्तु व्यापारे विशेषणम् । तथा हि—" वर्तमाने लट् " [ पा० सू० ३–२–१२३ ] इत्यत्राधिकाराद्धातो-रिति लब्धम् । तच्च धात्वर्थे वदत्प्राधान्याद्व्यापारमेव ग्राहयतीति तत्रैव तद-न्वयबोधापत्तिरूपो दोषः । अतिगौरवमिति । वैयाकरणमते आख्यातार्थसं-ख्याप्रकारकबोधं प्रति आख्यातजन्यकर्तृकर्मोपस्थितेः कारणत्वाच्चन्द्रो नजनप्रो-राख्यातार्थत्वाभावात्तत्र संख्यान्वयबोधस्यापत्तकतया नेतराविशेषणत्वं तत्र निवेश-नीयमिति लाघवं, परमते तु तन्निवेशनीयमित्यतिगौरवमित्यर्थः । इदमपीति । परमत उक्तगौरवमपि । अथवा स्वमते परमतापेक्षया लाघवमपीत्यर्थः । परैरपि गौरवपरिहारार्थं कर्तृकर्मणोराख्यातवाच्यत्वं मन्तव्यमित्यर्थे प्रमाणमिति यावत् ।

एवं तिङर्थान्तर्गतकर्तृकर्मसंख्यानां विशेषणत्वं प्रसाध्य कालस्यापि तत्प्रसाध-यति—**कालस्त्विति** । भूतभविष्यद्वर्तमानत्वाख्यः कालो धात्वर्थव्यापारनिरू-पितविशेषणतावान्, व्यापारश्च विशेष्य इत्यर्थः । कालस्य व्यापारविशेषणतायां प्रामाण्यं दर्शयितुमाह—**तथा हीत्यादिना** । धातोः ( ३ । १ । ९१ ) इत्य-इत्यधिकाराद्धातोरिति लभ्यते । तच्च धातोरिति पदं भू सत्तायामित्याद्यर्थनिर्देशा-द्भूवादिसूत्रप्रामाण्याच्च फलव्यापारोभयात्मकं धात्वर्थमुपस्थापयद्धातुजन्यबोधे वि-शेष्यतया प्रतीयमानत्वाद्व्यापारमेवोपस्थापयति । वर्तमाने इति धात्वर्थव्यापारवि-शेषणम् । तथा च वर्तमाने यो व्यापारः क्रिया तद्वाचकाद्धातोर्लडिति वर्तमाने लडिति सूत्रस्यार्थः । वर्तमानत्वद्योतको लडिति यावत् । एवं च गुणानां च परार्थत्वात्, इति न्यायेन वर्तमान इत्यादिकालवाचकं न कर्तृकर्मणोर्विशेषणं किंतु प्राधान्याद्व्यापारस्यैव विशेषणम् । इत्थं च पचतीत्यत्रैकाश्रयकः पाकानु-कूलो वर्तमानकालिको व्यापारः, पच्यत इत्यत्रैकाश्रयिका या विक्लित्तिस्तदनुकूलो वर्तमानो व्यापार इति च शाब्दबोधः । कर्तरि कर्मणि च प्राचीनमते व्यापारमु-ख्यविशेष्यक एव शाब्दबोधः । अत्र कर्मणः फलद्वारा व्यापारेऽन्वयः । कर्मवा-चकतण्डुलादिपदसमभिव्याहारस्थले चाऽऽख्यातोपस्थापितकर्मणस्तण्डुलादिभिः स-ममभेदान्वयः । एवं कर्तृवाचकचैत्रादिपदसमभिव्याहारे आख्यातोपस्थापितकर्तु-श्चैत्रादिभिः सममभेदान्वयः । तथा च तण्डुलं पचति चैत्र इत्यत्र तण्डुलनिष्ठवि-क्लित्त्यनुकूल एकचैत्राभिन्नलडर्थकर्तृनिष्ठो वर्तमानकालिको व्यापारः । तण्डुलः पच्यते चैत्रेणेत्यत्र तण्डुलाभिन्नलडर्थकर्मनिष्ठविक्लित्त्यनुकूल एकचैत्रनिष्ठो वर्तमा-

न्वयः। न च संख्यावत्कर्तृकर्मणोरेवान्वयः शङ्क्यः । अतीतभावनाके कर्तरि

---

नकालिको व्यापार इति बोधः। अत्र मूले—प्राधान्यादिति वदता कर्माख्यातस्थले फलस्य प्राधान्यात्फले वर्तमानत्वान्वय इति सूच्यते । तथा च तण्डुलः पच्यते चैत्रेणेत्यत्र चैत्रनिष्ठव्यापारजन्या तण्डुलाभिन्नलडर्थकर्मनिष्ठा वर्तमानकालिकी विक्लित्तिः, इति बोधः। परं त्विदं न समीचीनमिति भाति। अग्रे 'नापि फले तदन्वयः' इत्युपक्रम्य निरुक्तरीत्या व्यापारारम्भसत्त्वे फलस्य भावित्वेनाविद्यमानत्वात्तत्र वर्तमानकालान्वयासंभवेन पच्यत इत्यनापत्तेः पक्ष्यते इत्यापत्तेश्च। तस्मात्कर्माख्यातेऽपि व्यापार एव वर्तमानकालान्वयः। कारकप्रकारकबोध इव कालप्रकारकबोधं प्रति विशेष्यतासंबन्धेन धातुजन्यभावनोपस्थितेर्हेतुत्वेन क्लृप्तत्वात्। एवं च ग्रामं गत इत्यत्र क्तप्रत्ययार्थकर्तृविशेषणीभूते व्यापारे ग्रामकर्मणोऽन्वय इव पच्यत इत्यत्र फलनिरूपितविशेषणीभूते व्यापार एव वर्तमानकालान्वयः। तथा च चैत्रनिष्ठवर्तमानव्यापारजन्या तण्डुलाभिन्नलडर्थकर्मनिष्ठा विक्लित्तिरिति बोधः। अन्ये तु यदा यस्य प्राधान्यं तदा तस्मिन् कालान्वयः। प्राधान्यं च फलव्यापारयोरुभयोरपि दृष्टमिति नात्र कालप्रकारकबोधं प्रतीत्यादिनियमावकाशः। फलानुत्पत्तिदशायां व्यापारसत्त्वे फले वर्तमानत्वारोपात्पच्यत इति प्रयोगस्य नानुपपत्तिः। एकैकावयवेऽपि समूहरूपारोपादधिश्रयणकालेऽपि यथा पचतीति प्रयोगस्तद्वदित्यर्थः। आरोपे च प्रतीतिरेव शरणमित्याहुः। एवं च फलस्य विशेष्यत्वे तत्रैव कालान्वय इति बोध्यम्। एतत्पक्षे द्योतकत्वेनैव कालस्याऽऽख्यातार्थत्वम्। वर्तमाने लड्भवति नाम वर्तमानकालवाचको लड्भवतीति पक्षे कालस्याऽऽख्यातार्थत्वं शक्यतयेति बोध्यम्। ननु येनाऽऽख्यातप्रत्ययेन कर्तृकर्मरूपोऽर्थः प्रतिपाद्यते तेनैवाऽऽख्यातेनैकत्वादिका संख्याऽपि प्रतिपाद्यत इति द्वयोरर्थयोः समान एकोऽभिधायकः शब्द इत्यार्थिकया समानाभिधानश्रुत्या यथा संख्यायाः कर्तृकर्मणोरन्वयोऽङ्गीकृतस्तथा कालस्यापि पूर्वोक्तरीत्या कर्तृकर्मणोरेवान्वय उचितो न व्यापार इति चेत्। कालस्य कर्तृकर्मणोरन्वये सति लक्ष्यैकचक्षुष्कानुसारेण दूषणान्याह—अतीतेति। यन्निष्ठा विक्लित्त्यनुकूला भावना व्यतीता समाप्तेति यावत्। तादृशे कर्तरि विद्यमाने सति पचतीतिप्रयोगापत्तेः। व्यापारविगमेऽपि कर्तुर्विद्यमानत्वात्। कालस्य कर्त्राद्यर्थेऽन्वय इति पक्षे लः कर्मणीत्यनेनैकवाक्यतया यद्धातोः कर्ता वर्तमानकाले भवति तादृशाद्धातोर्लडि-

( धात्वाख्यातार्थनिर्णयः )

पचतीत्यापत्तेः । अपाक्षीदित्यनापत्तेश्च । पाकानारम्भदशायां कर्तृमत्त्वे पक्ष्यतीत्यनापत्तेश्च । नापि फले तदन्वयः, फलानुत्पत्तिदशायां व्यापारसत्त्वे पचतीत्यनापत्तेः । पक्ष्यतीत्यापत्तेश्चेत्यवधेयम् । न चाऽऽमवातजडीकृतकलेवरस्योर्ध्वदेशसंयोगानुकूलयत्नसत्त्वात्तिष्ठतीतिप्रयोगापत्तिः । परयत्नस्याज्ञानात्तदभावात् । किंचिच्चेष्टादिनाऽवगतौ चायमुत्तिष्ठति शक्यत्वमात्रात्फलं तु न जायत इति लोकरीते-

---

त्यर्थात् । कालस्य व्यापारेऽन्वय इति सिद्धान्ते कर्तृनिष्ठव्यापारस्य वर्तमानत्व एव लडिष्यते । तत्रैव च पचतीति प्रयोगः । तथाऽतीतभावनाके कर्तरि अभीष्टोऽपाक्षीदिति प्रयोगो न स्यात् । कर्तुर्विद्यमानत्वात् । तथा विक्लित्त्यनुकूलव्यापारे अनारब्धे कर्तुर्विद्यमानत्वे च सति पक्ष्यतीत्यभीष्टः प्रयोगो न स्यात् । किंतु पचतीत्येव प्रयोग आपद्येतेत्यादिदूषणग्रस्तत्वान्न कर्तृकर्मणोः कालान्वयवादः समीचीनः । ननु फल एव कालान्वयोऽस्तु । तथा सति न पूर्वोक्तदूषणावकाश इत्यनुसंधाय निरस्यति—नापि फल इत्यादिना । फले कालान्वयाङ्गीकारे विक्लित्तिरूपफलानुत्पत्तिदशायां व्यापारस्य वर्तमानत्वे पचतीति प्रयोगो न स्यात् । फलस्यावर्तमानत्वात् । स्याच्च पक्ष्यतीति प्रयोग इतीष्टहानिरनिष्टापत्तिश्चेत्यर्थः । आख्यातार्थकालस्य कर्तृकर्मणोः फले चान्वये सति दूषणान्यभिधाय कालस्य व्यापारेऽन्वयेऽपि दोषमभिधातुमुपक्रमते—न चाऽऽमवातेत्यादिना। आमवातो रोगविशेषः । तेन जडीभूतं काष्ठवच्चेष्टारहितं हस्तपाद्याद्यवयवगतस्पन्दशून्यं कलेवरं शरीरं यस्य तादृशपुरुषे ऊर्ध्वदेशसंयोगानुकूलयत्नरूपव्यापारस्य विद्यमानत्वेन फलात्यन्तासंभवेऽपि तत्रोत्तिष्ठतीति प्रयोग आपद्येत । तथा च आख्यातार्थकालस्य कर्तृकर्मणोः फलव्यापारयोश्चाप्यन्वये सर्वपक्षेषु दूषणस्य तुल्यत्वाद्व्यापारे कालान्वय इत्यस्यैव पक्षस्य समाश्रयणमनुचितम् । फले कालान्वयाङ्गीकारे तदानीं फलानुत्पत्तेर्न तादृशप्रयोगापत्तिरिति शङ्काशयः । सिद्धान्ती तादृशप्रयोगापत्तिं परिहर्तुमाह—परयत्नस्येति । यत्नस्याऽऽत्मनिष्ठगुणत्वेनान्तरङ्गत्वादन्यनिष्ठस्य तस्यान्येन प्रत्यक्षतया ज्ञातुमशक्यत्वान्न तादृशप्रयोगः । तादृशार्थं बोधयिष्यामीतीच्छया शब्दप्रयोगकरणे तादृशार्थज्ञानस्यावश्यापेक्षितत्वादित्यर्थः । ननु परनिष्ठप्रयत्नस्याप्रत्यक्षत्वेऽपि अनुमानेन यत्नावगतौ सत्यामुत्तिष्ठतीति प्रयोगापत्तिर्दुर्वारेत्याक्षिप्येष्टापत्त्या परिहरति—किंचिच्चेष्टेत्यादिना । हस्तपादादिशरीरावयवगतक्रियेत्यर्थः । आदिना तदीयलेखादि ग्राह्यम् । अनु-

( धात्वाख्यातार्थनिर्णयः )

रिष्टत्वात् । एवं च तिङर्थो विशेषणमेव । भावनैव प्रधानम् । यद्यपि प्रकृति प्रत्ययार्थयोः प्रत्ययार्थस्यैव प्राधान्यमन्यत्र दृष्टम्, तथाऽपि " भावप्रधानमा-

---

मानप्रयोगश्चेत्थम्— चैत्रनिष्ठचेष्टां पक्षीकृत्य, प्रयत्नजन्यत्वं साध्यते, चेष्टात्वात्, मन्निष्ठचेष्टावत् । इति । अथवा जडीभूतोऽयमुत्थानानुकूलयत्नवान्, विजातीय-चेष्टावत्त्वात्, अहमिवेति । अयमुत्तिष्ठतीति । उत्थानानुकूलयत्नवान् वर्तते किंतु शक्त्यभावाच्छक्तिरूपसहकारिकारणाभावादूर्ध्वदेशसंयोगात्मकं फलं नैव जन्यत इति लोकानुभवसिद्धत्वाद्रामवातजडीकृतपुरुषविषये उत्तिष्ठतीति प्रयोग इष्यत एवेति भावः। एवं चेति । पूर्वोक्तानां युक्तीनामवश्याङ्गीकरणीयत्वे चे-त्यर्थः। चत्वारोऽपि तिङर्था विशेषणान्येव धात्वर्थो व्यापार एव प्रधानं विशे-ष्य इति बोध्यम् । विशेषणान्येवेत्येवकारेण तिङर्थे विशेष्यत्वस्य व्यावृत्तिः। व्यापार एवेत्येवकारेण फलस्य तिङर्थस्य कर्त्रादेश्च व्यावृत्तिर्बोध्या ।

ननु भावनाया धातुवाच्यत्वे कर्त्रादेश्च तिङ्वाच्यत्वे तस्याः प्रत्ययार्थं प्रति विशेषणत्वापत्तिः प्रकृतिप्रत्ययार्थयोरिति व्युत्पत्तेरित्याक्षिप्य प्रत्याचष्टे——यद्य-पीति । पक्ता पाचक इत्यादौ विक्लित्त्यनुकूलव्यापाराश्रय इति बोधानुभवात्प्र-कृतिप्रत्ययार्थयोर्मध्ये प्रत्ययार्थस्य प्राधान्यं दृश्यते तद्वत्पचतीत्यादावपि तिङर्थक-र्त्रादेः प्राधान्यं धात्वर्थभावनायाश्च तन्निरूपितं विशेषणत्वं स्यादित्याक्षेपः। त-त्रोत्तरमाह——तथापि भावप्रधानमिति । आख्यातमित्यन्तमाख्यातलक्षणप्रति-पादकं वाक्यम्। अत्राऽऽख्यातं भावप्रधानमित्येवमुद्देश्यविधेयभावः कल्प्यः । अन्यथा प्राथम्याद्भावप्रधानमित्युद्देश्यं, आख्यातमिति च विधेयं स्यात्। ततश्च त्वया मयाऽन्यैश्चैधनीयमित्यादौ भावप्रधानके नाम्न्यतिप्रसङ्गः स्यात् । उद्देश्य-विधेयभावस्थले विधेये उद्देश्यतावच्छेदकनिरूपितव्यापकत्वभानमौत्सर्गिकम्, इति नियमात्, आख्याते—आख्यातत्वावच्छिन्ने प्रधानभावार्थप्रतिपादकत्वं बोध्यते। प्रकृते उद्देश्यतावच्छेदकमाख्यातत्वं तच्च व्याप्यम् । प्रधानभावार्थप्रतिपादकत्वं विधेयतावच्छेदकं तच्च व्यापकमिति बोध्यम् । आख्यातं तिङन्तम् । आख्यात-माख्यातेनेत्यत्र भाष्य तिङन्त एवाऽऽख्यातपदस्य शक्त्यवधारणात्। प्राधान्यं चोपस्थितत्वात्स्ववाचकप्रकृतिकप्रत्ययार्थनिरूपितम्। स्वपदेन धात्वर्थभावना। त-द्वाचकः पचादिर्धातुः। तत्प्रकृतिकः प्रत्ययः पचतीत्यत्र तिङ्प्रत्ययः। तदर्थः कर्त्रादिः। तन्निरूपितं प्राधान्यं बोध्यम्। तिङन्तं तिङर्थनिष्ठप्रकारतानिरूपि-

ख्यातं सत्त्वप्रधानानि नामानि ” इतिनिरुक्तभूवादिसूत्रस्थक्रियाप्राधान्यबोधक-भाष्याभ्यां धात्वर्थभावनाप्राधान्यमध्यवसीयते । अपि चाऽऽख्यातार्थप्राधान्ये

---

तधात्वर्थनिष्ठविशेष्यताकबोधजनकमित्यर्थः । लक्ष्यतावच्छेदकं च तिङन्तत्वमिति यावत् । भावः प्रधानं यस्मिन्नसाविति बहुव्रीहिः । भावोऽत्र क्रिया । सा च क्रियतेऽनेनेतिकरणव्युत्पत्त्या व्यापारं, क्रियत इति कर्मव्युत्पत्त्या च फलं प्रतिपादयति । ततश्च तिङन्ते फलव्यापारयोः प्राधान्यं, तत्र +कर्तृवाच्ये व्यापारस्य कर्मवाच्ये तु फलस्य प्राधान्यमिति विभागः । सत्त्वप्रधानानीति । अत्रापि नामानि सत्त्वप्रधानानीत्युद्देश्यविधेयभावयोजना । अन्यथा यथाश्रुते सत्त्व(द्रव्य)-निष्ठविशेष्यताकबोधजनकत्वमुद्दिश्य नामत्वविधाने पचतीत्यादौ तिङन्ते आश्रय-त्व—संख्यानिष्ठप्रकारतानिरूपितकर्त्रादिसत्त्वनिष्ठविशेष्यताकबोधजनकेऽतिप्रसङ्गः स्यात् । सत्त्वं द्रव्यं लिङ्गाद्यन्वयि तत्प्रधानं येषामिति विग्रहाल्लिङ्गादिनिष्ठप्रकार-तानिरूपितमुख्यविशेष्यताशाल्यर्थप्रतिपादकानि भवन्तीत्यर्थः । एतदेव च नाम-लक्षणम् । लक्ष्यतावच्छेदकं स्वादिप्रत्ययविधानावधित्वरूपं नामत्वम् । भूवादि-सूत्रस्थेति । इत्थं हि तत्र सूत्रे भाष्यम्——पच्यादयः क्रिया भवतिक्रियायाः कर्त्र्यो भवन्ति, इति । अनेन च स्पष्टमेव पच्याद्यर्थक्रियाकर्तृकभवतिक्रियायाः प्रा-धान्यं बोध्यते । अन्यथा प्रकृतिप्रत्ययौ सहार्थं ब्रूत इति नियमेन धात्वर्थक्रियाया आख्यातार्थकर्त्रादिविशेषणत्वेनावरुद्धायाः पदार्थान्तरे विशेषणतयाऽन्वये निराकाङ्क्षत्वाद् भवत्यर्थक्रियायामाख्यातार्थकर्त्रादिविशेषणपच्यादिक्रियाणामन्व-यप्रदर्शनं भाष्यकृत्कृतमसंगतं स्यात् । तेनाऽऽख्यातार्थनिष्ठप्रकारतानिरूपितं प्रा-धान्यं धात्वर्थक्रियाया अवगम्यत इत्यर्थः । तथा च भावप्रधानमित्यादिनिरुक्ता-त्पच्यादयः क्रियाः, इति निरुक्तभाष्याच्च धात्वर्थभूतभावनायाः प्रत्ययार्थापेक्ष-याऽपि प्राधान्यं निश्चीयते । एवं च पूर्वोक्तनिरुक्तभाष्यप्रमाणाभ्यां प्रकृतिप्रत्य-यार्थयोः प्रत्ययार्थस्य प्राधान्यमिति नियमस्य तिङन्ते परित्यागरूपः संकोचोऽ-वश्यमङ्गीकार्यः, अन्यथा प्रत्ययार्थप्राधान्यवादिनां मीमांसकादीनां भवतामेव निरुक्तादिविरोध इति भावः । प्रकृतिप्रत्ययार्थयोः प्रत्ययार्थस्य प्राधान्यमिति नियमस्यासंकोचे दूषणान्तरमाह——अपि चेति । देवदत्तः पचतीत्यादौ कर्तृ-

---

+ कर्ता वाच्यो यस्येति बहुव्रीहिः । तिङन्तं चान्यपदार्थः । कर्तृवाचके तिङन्त इत्यर्थः । एवं कर्मवाच्ये, इत्यत्रापि बोध्यम् ।

स्तिङ्प्रत्ययार्थत्वेन प्राधान्यात्तस्य देवदत्तादिभिः सह देवदत्ताभिन्नो यस्तिङर्थः कर्तेत्येवमभेदान्वयबोधात्प्रथमान्तार्थस्यापि देवदत्तादेः प्राधान्यात्तौ पश्य मृगो धावतीत्यत्र मृगकर्तृकधावनकर्मकं दर्शनमित्येवंरूपं भाष्यकृत्प्रदर्शितमेकवाक्यत्वं न संगच्छेत । भावनाया धातुवाच्यत्वे कर्त्रादेस्तिङ्वाच्यत्वे प्रकृतिप्रत्ययार्थयोरिति नियमेन धावनक्रियाविशेष्यस्य प्रथमान्तपदवाच्यमृगस्य दृशिक्रियायां कर्मत्वेनान्वये द्वितीयापत्तेः । तथा च धावनाश्रयमृगकर्मकदर्शनाश्रयस्त्वमित्यर्थे पश्य मृगं धावतीति वाक्यस्यैव संभवेन तादृशवाक्यस्य विलय एव स्यादित्यर्थः । मूले प्रथमान्तेत्यादिद्वितीयापत्तेरित्यन्तेन प्रत्ययार्थप्राधान्यवादिमते एकवाक्यत्वानुपपत्त्या कारणं प्रतिपादितमिति बोध्यम् । अत्रेदं बोध्यम्——धावुधातोः कर्तरि लटा वा, शीघ्रगतिवाचिनः सृधातोः शिति धौरादेशेन वा धावतीति रूपं सिध्यति । धावनं नामोत्तरदेशसंयोगानुकूल उत्कटवेगवान् व्यापारः । लडर्थः कर्ता । तत्र मृगस्याभेदेनान्वयः । तथा च मृगाभिन्नो यो लडर्थः कर्ता तन्निष्ठो देशविशेषसंयोगानुकूलो वेगवत्तरो व्यापार इत्येवं व्यापारमुख्यविशेष्यकः शाब्दबोधो वैयाकरणमते । तथा पश्येत्यत्र लोण्मध्यमपुरुषैकवचनं दृश् धातोः पश्यादेशश्च । दृश्धात्वर्थश्चाक्षुषज्ञानानुकूलो व्यापारः । तथा च युष्मदर्थाभिन्नलोडर्थकर्तृनिष्ठश्चाक्षुषज्ञानाकूलो विधिविषयो व्यापार इति बोधः पृथक् । एकपदार्थेऽपरपदार्थसंसर्गः संसर्गमर्यादया भासते न तत्र संसर्गार्थकशब्दापेक्षेति मृगकर्तृकधावनक्रियायाः कर्मत्वेन दृशिक्रियायामन्वये मृगाभिन्नलडर्थकर्तृनिष्ठोत्तरदेशसंयोगानुकूलवेगवत्तरव्यापारकर्मकः, युष्मदर्थाभिन्नलोडर्थकर्तृकश्चाक्षुषज्ञानानुकूलो विधिविषयो व्यापार इत्येकवाक्यतया बोधः । तत्र धावनस्य दृशिक्रियाकर्मभूतस्य धातुवाच्यतया धातोश्च प्रातिपदिकसंज्ञाविरहेण न तस्माद् द्वितीयाप्रसक्तिः । पचति भवति——पाकक्रिया भवतीति, पक्ष्यति भवति——भविष्यन्ती पाकक्रिया सूक्ष्मरूपेण भवतीति च भाष्ये क्रिययोः क्रियाकारकभावेनान्वयाङ्गीकारात्तत्तुल्यन्यायात्पश्य मृगो धावतीत्यत्रापि क्रिययोस्तथाऽन्वयबोधोऽभ्युपगत इति भावः । प्रत्ययार्थप्राधान्यवादिनां मते उत्तरदेशसंयोगानुकूलवेगवत्तरव्यापारवान् मृग इति बोधात्तादृशबोधे विशेष्यभूतस्य मृगस्य दृशिक्रियायां कर्मतयाऽन्वयः कर्तव्यः स्यात् । स च न संभवति । कर्मभूतस्य मृगस्य प्रातिपदिकार्थतया पश्ये-

तस्य देवदत्तादिभिः सममभेदान्वयात्प्रथमान्तस्य प्राधान्यापत्तिः । तथा च पश्य मृगो धावतीत्यत्र भाष्यसिद्धैकवाक्यता न स्यात् । प्रथमान्तमृगस्य धावनक्रियाविशेष्यस्य दृशिक्रियायां कर्मत्वापत्तौ द्वितीयापत्तेः । न चैवमप्रथमासामानाधि-

---

त्यत्रत्यतिङा तदनभिधानेन चानभिहिताधिकारीयकर्मणि द्वितीयेति द्वितीयापत्तिविरोधात् । अयं भावः—धावनं प्रति विशेष्यभूतो मृगः । स च दृशिक्रियां प्रति साक्षाद्विशेषणं दृशिक्रिया चात्र प्रधानम् । तथा च धावतीत्यत्रत्यतिङा मृगरूपस्य कर्तुरुक्तत्वादभिहिते प्रथमेति मृगपदोत्तरं प्रथमा प्राप्ता, अथ च दर्शनक्रियानिरूपितकर्मत्वात्तदुत्तरं द्वितीया च प्राप्ता । तत्र प्रथमाऽन्तरङ्गा, मृगो धावतीत्येकवाक्याश्रितत्वात् । द्वितीया तु बहिरङ्गा, पश्य मृगो धावतीत्युभयवाक्याश्रितत्वात् । ततश्च द्वितीयां बाधित्वा प्रथमोपस्थितत्वेनान्तरङ्गत्वात् पूर्वं प्रथमयैव भाव्यम् । ततो दर्शनक्रियायां संबन्धेऽपि भुक्तवन्तामिति न्यायेनान्तरङ्गत्वाज्जातसंस्कारबाधायोगान्न द्वितीयापत्तिः । नापि एकवाक्यतया मृगकर्तृकं धावनकर्मकं दर्शनमित्यर्थे पश्य मृगो धावतीति प्रयोगविलयापत्तिरिति चेत् । उच्यते—यद्यपि बहिरङ्गदर्शनक्रियापेक्षत्वाद्द्वितीया बहिरङ्गा तथाऽपि दृशिक्रियायाः प्राधान्यात्प्रधाननिरूपितकार्यस्य च लोके सर्वतो बलवत्त्वदर्शनादन्तरङ्गामपि प्रथमां बाधित्वा प्रधानक्रियानुरोधिनी द्वितीया प्रसज्येतेति । व्यापारमुख्यविशेष्यकशाब्दबोधवादिमते तु नायं दोषः । मृगस्य धावनं प्रति विशेषणत्वेनान्तरङ्गत्वाज्जातस्य प्रथमारूपसंस्कारस्यानिवृत्तेः । तार्किकाणां मते फलानुकूलो व्यापारो धात्वर्थः । लकाराणां कृतौ शक्तिर्लाघवात् । कृतेश्चाऽऽश्रयतासंबन्धेन प्रथमान्तार्थेऽन्वयः । प्रथमान्तार्थमुख्यविशेष्यकश्च शाब्दबोधः । तथा च नैयायिकमते पश्य मृगो धावतीत्यस्येत्थं शाब्दबोधः—उत्तरदेशसंयोगानुकूलव्यापारानुकूलकृतिमान् मृगः । पश्येत्यत्र च त्वमित्यध्याहृत्य चाक्षुषज्ञानानुकूलव्यापारानुकूलकृतिमान् युष्मदर्थस्त्वमित्यर्थः पृथगेव न त्वेकवाक्यतया मृगपदोत्तरं द्वितीयापत्तेरिति । द्वितीयापत्तिवारणमाशङ्क्य निराकरोति—न चैवमित्यादिना । एवमिति । मृगशब्दाद् द्वितीयापत्तावित्यर्थः । लटः शतृशानचाविति सूत्रेऽप्रथमान्तेन समानाधिकरणस्य लटः स्थाने शतृशानचोर्विधानान्मृगपदोत्तरं द्वितीयाप्रवृत्तौ धावतीत्यत्र प्रक्रियादशायां लटः स्थाने नित्यं शता प्रसज्येत । तथा च विधायकप्रवृत्ति-

करणयाच्छतृप्रसङ्गः। एवमपि द्वितीयाया दुर्वारत्वेन पश्य मृग इति वाक्यस्यैवा-संभवापत्तेः। न च पश्येत्यत्र तमिति कर्माध्याहार्यं वाक्यभेदप्रसङ्गात्। उत्कट-धावनक्रियाविशेषस्यैव दर्शनकर्मतयाऽन्वयस्य प्रतिपिपादयिषितत्वात्। अध्याहा-

---

भिप्रायेव द्वितीया न करिष्यत इति शङ्काशयः। सिद्धान्ती तु शतृप्रसङ्गो न द्वितीयाप्रवृत्तिप्रतिबन्धकः। किं तु कर्मणोऽभिहितत्वं तत्प्रतिबन्धकम्। न हि शतरि प्रवृत्तेऽपि कर्मणोऽभिधानं भवति, कर्तरि लटः सत्त्वात्। ततश्च कर्मणोऽनभिहितत्वस्य तदवस्थत्वाद्द्वितीयापत्तिर्दुःसमाधेयेत्यनुसंधायाऽऽह—**एवमपीति**। शतरि प्रवृत्तेऽपीत्यर्थः। मृगस्य दृशिक्रियायां कर्मतयाऽन्वये सति कर्मणोऽनभिहितत्वेन मृगपदोत्तरं द्वितीयाप्रवृत्तेर्दुष्परिहरत्वाद् धावन्तं मृगं पश्येत्येवं वाक्यस्यैव योग्यत्वात्पश्य मृगो धावतीति प्रयोगस्य सर्वथाऽसंभव एवेत्यर्थात्।

मृगपदोत्तरं द्वितीयाया अप्रसक्तत्या पश्य मृगो धावतीति प्रयोगसंभवमाशङ्क्य निराकुरुते—**न च पश्येत्यत्रेत्यादिना**। पश्येति दर्शनक्रियायां कर्मतया मृगस्य नान्वयः। किंतु तत्र तमिति स्वतन्त्रं कर्माध्याहार्यम्। तथा च यो मृगो धावति तं पश्येत्यर्थात्पश्य मृगो धावतीति प्रयोगसंभव इति शङ्काशयः। अध्याहारो न युक्तः। तथा सति मृगो धावतीत्येकं वाक्यं तं पश्येति च द्वितीयमिति वाक्यभेदरूपगौरवापातादित्यर्थः। किं च पश्य मृगो धावतीति वाक्यान्मृगनिष्ठो-त्कटधावनकर्मकं दर्शनमित्येकवाक्यतया बोधस्य सर्वानुभवसिद्धत्वाद् दृशिक्रियायां कर्मतासंबन्धेन मृगनिष्ठोत्कटधावनस्यैवान्वयः प्रतिपादयितुमभीष्टः। स च व्यापारमुख्यविशेष्यकबोधवादिनां वैयाकरणानां मते सामीचीन्येनोपपद्यते। उत्तरदेशसंयोगानुकूलं मृगाभिन्नलडर्थकर्तृनिष्ठमुत्कटधावनमित्येवं धावतीत्य-स्माद्विशेष्यतया प्रतीतस्योत्कटधावनस्य दर्शनक्रियायां कर्मतयाऽन्वयात्। कर्त्रा-देस्तिङ्वाच्यत्वमङ्गीकृत्य प्रत्ययार्थप्राधान्यवादिनां मते प्रथमान्तमुख्यविशेष्यक-शाब्दबोधवादिनां तार्किकाणां मते च नोपपद्यते। उत्तरदेशसंयोगानुकूलव्यापा-रानुकूलकृत्याश्रयमृगकर्मकं दर्शनमिति शाब्दबोधोदयान्मृगपदोत्तरं प्रसक्तद्वितीया-याः परिहारार्थं दर्शने तमिति कर्माध्याहारः। तत्र तमिति तच्छब्देन केवलमृगस्य धावनानुकूलकृत्याश्रयमृगस्य वा परामर्शेऽपि प्रतिपिपादयिषितस्य मृगनिष्ठोत्कट-धावनकर्मकं दर्शनमित्यर्थस्य तद्वाक्यात्प्रतीत्यनुपपत्तेः। ननूत्कटधावनक्रियाविशि-ष्टमृगस्य तच्छब्देन परामर्शे सति 'विधिप्रतिषेधौ विशेषणमुपसंक्रामतः सति वि-

रेऽनन्वयापत्तेश्च । एवं च भावनाप्रकारकबोधे प्रथमान्तपदजन्योपस्थितिः कारणमिति नैयायिकोद्घोषो नाऽऽदरणीयः । किं तु आख्यातार्थकर्तृप्रकारकबोधे धा-

---

शेष्ये बाधे ' इति न्यायेन शिखी ध्वस्त इत्यत्र विशेष्यभूते शिखिनि ध्वंसान्वयं परित्यज्य तद्विशेषणभूतशिखायां ध्वंसान्वयपर्यवसानवन्मृगनिष्ठोत्कटधावनक्रियाया एव कर्मतया दर्शनेऽन्वयस्य पर्यवसानेन न निरुक्तविवक्षितार्थानुपपत्तिरिति चेन्न । दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यात् । तथा हि शिखी ध्वस्त इति दृष्टान्ते विशेष्यभूते शिखाविशिष्टे पुरुषे प्रत्यक्षेण ध्वंसान्वयस्य बाधात्तद्विशेषणे शिखायां ध्वंसान्वयपर्यवसानं युक्तम् । दार्ष्टान्तिके पश्य मृगो धावतीत्यत्र तु विशेष्यभूते मृगे दर्शनक्रियाकर्मत्वस्य बाधाभावेन विशेष्यभूतमृगस्यैव कर्मतासंबन्धेन दर्शनेऽन्वयस्योचितत्वात्तद्विशेषणभूतोत्कटधावनक्रियायाः कर्मतया दर्शनेऽन्वयस्याप्रामाणिकत्वेनात्यन्तानुचितत्वादिति बोध्यम् । प्रकृतविषयमुपसंहरति——एवं चेति । आख्यातार्थकर्त्रादिविशेष्यकशाब्दबोधस्वीकर्तृमते प्रथमान्तार्थविशेष्यकबोधवादिमते च भाष्यकृत्संमतैकवाक्यतानुपपत्तिरूपदोषद्वयेऽपि चेत्यर्थः । भावना संख्याकालाद्यतिरिक्तो धात्वर्थव्यापारः प्रकारो विशेषणं यस्मिंस्तादृशबोधं प्रति विशेष्यतया प्रथमान्तपदजन्यार्थोपस्थितिः कारणमित्येवं बोधोपस्थित्योः कार्यकारणभावो नैयायिकोक्तो नाऽऽदरणीयः । उक्तदोषदुष्टत्वादित्यर्थः । स्वसंमतनिष्कर्षमाह——किं त्विति । आख्यातार्थस्तिङर्थो यः कर्ता तत्प्रकारकबोधे जननीये विशेष्यतासंबन्धेन भावनाया धातुजन्योपस्थितिः कारणमित्येवं बोधोपस्थित्योः कार्यकारणभावोऽवसेयः । देवदत्तस्तण्डुलं पचतीत्यस्माद्देवदत्ताभिन्नो यो लडर्थः कर्ता तन्निष्ठस्तण्डुलनिष्ठविक्लित्त्यनुकूलो व्यापार इति बोधस्यानुभवसिद्धत्वात् । यद्यप्ययं व्यापारः फूत्कारत्वादितत्तद्विशेषरूपेण धातुवाच्यस्तथाऽपि धातूनामनेकार्थत्वात्कदाचित्सामान्यरूपेणापि धातुवाच्यो भवति । अत एव वाक्यार्थप्रदर्शनसमये विक्लित्त्यनुकूलो व्यापार इति सामान्यरूपेण बोध उच्यते, न तु विक्लित्त्यनुकूलः फूत्कारादिरित्येवं विशेषरूपेण निर्दिश्यत इति संगच्छते । एवं च मूले भावनात्वावच्छिन्नविषयतयेति यद्धातुजन्योपस्थितेर्विशेषणमुक्तं तद्धातुना कदाचिद्भावनात्वप्रकारकबोधो जन्यत इत्यभिप्रेत्य बोध्यम् । एवं, तिङर्थकर्मप्रकारकबोधे जननीये तत्तत्फलनिष्ठविशेष्यतासंबन्धेन धातुजन्योपस्थितिः कारणमित्यापि कार्यकारणभावः स्वीकर्तव्यः ।

( धात्वाख्यातार्थनिर्णयः )

तुजन्योपस्थितिर्भावनात्वावच्छिन्नविषयतया कारणमिति कार्यकारणभावो द्रष्टव्यः। भावनाप्रकारकबोधं प्रति तु कृज्जन्योपस्थितिवद्धात्वर्थभावनोपस्थितिरपि हेतुः । पश्य मृगो धावति पचति भवतीत्याद्यनुरोधादिति दिक् । इत्थं च पचतीत्यत्रैका-

---

ननु धात्वर्थव्यापारस्य कृत्प्रत्ययार्थं प्रत्येव विशेषणत्वं नतु तिङर्थं प्रतीति अनुभूयमाननियमसंपत्त्यै भावनाप्रकारकशाब्दबोधे जननीये कृत्प्रत्ययजन्योपस्थितिः कारणमित्येवं बोधोपस्थित्योः कार्यकारणभावोऽवश्यमङ्गीकरणीयः । तथा च पचति भवतीत्यादितः क्रियाप्रकारकक्रियाविशेष्यकः शाब्दबोधोऽत्यन्तासंभवी । क्रियाप्रकारकबोधे हेतुभूतायाः कृत्प्रत्ययजन्योपस्थितेरभावादित्याशङ्क्य निराचष्टे—**भावनाप्रकारकेति** । यथा गन्तेत्यादावन्यदेशसंयोगानुकूलव्यापाराश्रय इति प्रत्ययार्थमुख्यविशेष्यकशाब्दबोधस्य सर्वानुभवसिद्धत्वाद्भावना प्रकारः विशेषणं यस्मिंस्तादृशबोधे जननीये धात्वर्थभावनानिष्ठप्रकारतानिरूपितविशेष्यतासंबन्धेन कृज्जन्यार्थोपस्थितिः कारणमित्येवं बोधोपस्थित्योः कार्यकारणभावोऽङ्गीक्रियते तद्वद्धात्वर्थभावनाप्रकारकबोधे जननीये धात्वर्थभावनानिष्ठप्रकारतानिरूपितविशेष्यतासंबन्धेन धातुजन्यभावनोपस्थितिः कारणमित्यपि कार्यकारणभावः कल्प्यः । निरुक्तकार्यकारणभावकल्पने प्रमाणमाह—**पश्य मृग इत्यादि** । पचति भवतीत्यादावेकवाक्यतया भावनाप्रकारकभावनाविशेष्यकबोधस्य भाष्यादिसंमतत्वादित्यर्थः । **दिगिति** । पचति भवतीत्यादौ तिङन्तात् परस्य तिङन्तस्य निघातवारणाय कृतं तिङ्ङतिङः ' इति सूत्रीयमतिङ्ग्रहणं निरुक्तस्थले एकवाक्यत्वाभावे समानवाक्यस्थत्वविरहादेव निघाताप्राप्तौ व्यर्थं सत्तिङन्तसमुदायेऽप्येकवाक्यत्वं सूत्रकाराभिमतमिति सूचयतीत्यर्थः । यद्वा धावनानुकूलकृतिमान्मृग इति विशिष्टार्थवाचिनो धावति मृग इति वाक्यस्य दर्शनक्रियायां कर्मतासंबन्धेनान्वयः । तथा सति नामार्थधात्वर्थयोर्भेदेनान्वयोऽव्युत्पन्न इति व्युत्पत्तिविरोधो न । वाक्यस्य नामार्थत्वाभावात् । नापि द्वितीयापत्तिः । वाक्यस्याप्रातिपादिकत्वात् । तात्पर्यानुरोधाच्च दर्शनकर्मत्वस्य धावने पर्यवसानमित्येवं रीत्यैकवाक्यत्वसंभवेऽपि भावप्रधानमिति वचनस्य भाष्यसंमतार्थकस्य विरोधो दुर्वारो नैयायिकानामित्यर्थ इति । **इत्थं चेति** । प्रत्ययार्थस्य कर्त्रादेर्धात्वर्थं प्रति विशेषणत्वे प्रत्ययार्थसंख्यायाः प्रत्ययार्थकर्त्रादिविशेषणत्वे चेत्यर्थः । यद्वाऽऽख्यातार्थकर्तृप्रकारकबोधे जननीये धात्वर्थभावनोपस्थितेः, आख्यातार्थकर्मप्रकारक-

श्रयिका पाकानुकूला भावना, पच्यत इत्यत्रैकाश्रयिका या विक्लित्तिस्तदनुकूला

---

बोधे जननीये धात्वर्थफलोपस्थितेर्हेतुत्वे चेत्यर्थः। पचतीत्यत्रैककर्तृको विक्लित्त्यनुकूलो वर्तमानकालिको व्यापार इति बोधाकारः। भावप्रधानमाख्यातम्, क्रियाप्रधानमाख्यातम्, इति निरुक्तभाष्यानुरोधात्। एवं पच्यते इति कर्माख्यातेऽपि एककर्मिका या विक्लित्तिस्तदनुकूलो वर्तमानकालिको व्यापार इति व्यापारविशेष्यको बोधाकारः प्राचीनमतेन द्रष्टव्यः। नवीनास्तु पक्वस्तण्डुल इत्यादिकर्मकृदन्तस्थले व्यापारप्रयोज्यविक्लित्त्याश्रयस्तण्डुल इति बोधात्फलस्य व्यापारं प्रति प्राधान्यं दृष्टमिति कर्मतिङन्तेऽपि फलस्यैव मुख्यविशेष्यकत्वं युक्तमिति वदन्ति। तिङन्तेऽपि फलस्य मुख्यविशेष्यकत्वादेव प्रत्ययार्थं स्वप्रकृत्यर्थविशेष्यान्वयित्वमिति नियमस्य न त्यागः। पच्यते इत्यत्र प्रत्ययार्थे कर्मणि प्रकृत्यर्थः——व्यापारावच्छिन्नफलं, तत्र विशेष्यं यत्फलं विक्लित्तिः तस्या आश्रयतासंबन्धेनान्वयाल्लक्षणसमन्वयः। तण्डुलाभिन्नकर्माश्रयिका व्यापारजन्या विक्लित्तिरिति बोधात्। भावार्थकतिङां धात्वर्थानुवादकत्वात्तथाविधतिङन्तस्थले धात्वर्थमात्रमेव मुख्यं विशेष्यम्। न च लडादिभिस्तत्र वर्तमानत्वं न बोध्यतेति वाच्यम्। वर्तमानत्वस्य धात्वर्थव्यापारविशेषणतया तिङो द्योतकत्वं तथैवानुभवात्। वाचकत्वपक्षेऽभ्युपगत्याऽनुभवानुरोधेन तस्य धात्वर्थव्यापारविशेषणत्वस्वीकारात्। अथैवं तत्र संख्याप्रत्ययोऽपि कथमिति चेन्न। भावलकारे हि संख्यान्वयिकर्तृकर्मणोरप्रतीतेस्तत्रत्या संख्याऽनन्वितैव। न च वर्तमानत्ववद्भावनायामेव संख्यान्वयोऽस्त्विति शङ्क्यम्। भावनाया लिङ्गसंख्यानन्वयित्वेनैव धातुनोपस्थापनात्। एतदेव तस्या असत्त्वरूपत्वमित्युच्यते। किंतु न केवला प्रकृतिः प्रयोक्तव्या नापि केवलः प्रत्यय इति नियमेन साधुत्वार्थमेकवचनमेव प्रयुज्यते। तत्रापि नैवैकत्वसंख्यापेक्षा। एकवचनमुत्सर्गतः करिष्यत इति भाष्यसिद्धान्तात्। अयं भावः——एकवचनम्, द्वयोर्द्विवचनम्, इति भङ्क्त्वा सूत्रन्यासः। बहुषु बहुवचनम्, इति यथास्थितमेव। तत्र द्वित्वबहुत्वयोर्द्विवचनबहुवचननियमे सति तयोरविषये संख्यानपेक्षणेनैकवचनमिति लभ्यत इति तदर्थ इति।

कर्तृवाचकचैत्रादिपदसमभिव्याहारस्थले त्वाख्यातोपस्थापितकर्तृचैत्रादिभिः सममभेदान्वयः। तथा चैकतण्डुलाश्रयिका या विक्लित्तिस्तदनुकूलैकचैत्राभिन्नाश्रयिका वर्तमानकालिकी भावनेति तण्डुलं पचति चैत्र इत्यत्र बोधः। एवं कर्म-

( धात्वाख्यातार्थनिर्णयः )

भावनेति बोधः । देवदत्तादिपदप्रयोगे त्वाख्यातार्थकर्त्रादिभिस्तदर्थस्याभेदान्वयः । घटो नश्यतीत्यत्रापि घटाभिन्नाश्रयको नाशानुकूलो व्यापार इति बोधः । स च व्यापारः प्रतियोगित्वविशिष्टनाशसामग्रीसमवधानम् । अत एव तस्यां सत्यां नश्यति तदत्यये नष्टस्तद्भावित्वे नङ्क्ष्यतीति प्रयोगः । देवदत्तो जानातीच्छतीत्यादौ च देवदत्ताभिन्नाश्रयको ज्ञानेच्छाद्यनुकूलो वर्तमानो व्यापार इति बोधः ।

---

वाचकतण्डुलादिपदसमभिव्याहारेऽपि आख्यातोपस्थापितकर्मणस्तण्डुलादिभिः सममभेदान्वयात्तण्डुलः पच्यते चैत्रेणेत्यत्र एकचैत्राश्रयिका एकतण्डुलाभिन्नाश्रयिका या विक्लित्तिस्तदनुकूला सांप्रतिकी भावनेति बोध इत्याशयेनाऽऽह—**देवदत्तादिपदप्रयोगे त्विति । आख्यातार्थकर्त्रादिभिरिति ।** समानविभक्तिकनामार्थयोरेवाभेदान्वय इति व्युत्पत्तेः सोमेन यजेत स्तोकं पचति, राजपुरुष इत्यादौ व्यभिचरितत्वेन दुष्टत्वादिति भावः ।

आख्यातार्थकर्तृप्रकारकबोधे जननीये विषयतासंबन्धेन धातुजन्यभावनोपस्थितिः कारणमित्युक्तं, किं तु धातुमात्रस्य व्यापारवाचित्वं न दृश्यते नश्यतीत्यादौ व्यापारप्रतीतेरननुभवात् । तथा च तत्रोक्तकार्यकारणभावव्यभिचार इत्याशयेनाऽऽह—**घटो नश्यतीत्यत्रेति ।** अयं भावः—नश् धातोर्न केवलं नाशोऽर्थः । किं तु ‘ णश अदर्शने ’ इति धातुपाठात् —अदर्शनानुकूलो व्यापारोऽर्थः । स च व्यापारः प्रतियोगितासहितनाशसामग्रीसमवधानम् । अत्र नाशसामग्र्याः प्रतियोगितासाहित्यं च निरूपकतासंबन्धेन बोध्यम् । तथा च घटनिष्ठा या प्रतियोगिता, तन्निरूपिका या नाशसामग्री तत्समवधानमेव व्यापार इत्यर्थः । नाशसामग्री च शनैः शनैः क्रमिकावयवविशरणादिरूपा । एवं च घटाभिन्नाश्रयकोऽदर्शनानुकूलो व्यापार इति बोधान्न कार्यकारणभावभङ्ग इत्यर्थः । **अत एव** —नश् धातोरदर्शनानुकूलव्यापारार्थकत्वादेव । **तस्यां सत्यामिति :** क्रमेणावयवविशरणाद्यात्मिकायां सामग्र्यां सत्यामित्यर्थ । अवयवक्षरणात्मकादर्शनानुकूलव्यापारसत्त्वपर्यन्तं नश्यति, व्यापारात्यये नष्टः, व्यापारस्य भावित्वे नङ्क्ष्यतीति प्रयोग उपपद्यते इत्यर्थः । देवदत्तो जानाति, इच्छतीत्यादौ वाक्यार्थबोधं वर्णयति—**देवदत्ताभिन्नाश्रयक इत्यादि ।** स च—व्यापारश्चेत्यर्थः । **अन्तत आश्रयतैवेति ।** अन्ततो गत्वा विचारे क्रियमाणे ज्ञानेच्छादिनिरूपिताऽऽश्रयतैव तदनुकूलो व्यापार इत्यर्थः । ज्ञानेच्छादीनामाश्रयमन्तराऽनुपलम्भा-

स चान्तत आश्रयतैवेति रीत्योक्तम् ॥ २ ॥

नन्वाख्यातस्य कर्तृकर्मशक्तत्वे पचतीत्यत्रोभयबोधापत्तिः कर्तृमात्रबोधवत्कर्म-मात्रस्यापि बोधापत्तिरित्यतस्तात्पर्यग्राहकमाह——

फलव्यापारयोस्तत्र फले तङ्यक्चिणादयः ।

व्यापारे शप्श्नमाद्यास्तु द्योतयन्त्याश्रयान्वयम् ॥ ३ ॥

तदुपलम्भजनकत्वेनाऽऽश्रयतैव व्यापारः । आश्रयतापादका ये व्यापारास्तदारो-पादाश्रयतानां पौर्वापर्यसत्त्वाद्व्यापारत्वमित्यर्थः । वस्तुत आत्ममनःसंयोगोऽपि ज्ञानेच्छाद्यनुकूलव्यापारः संभवतीति बोध्यम् ॥ २ ॥

अथ क्व फले आश्रयान्वयः क्व च व्यापार इति प्रसङ्गसंगत्या तत्तात्पर्य-ग्राहकं वक्तुं भूमिकामारचयति——नन्वाख्यातस्येत्यादिना । ‘आश्रये तु तिङः स्मृताः’ इत्यनेनाऽऽख्यातस्य नाम केवलस्य तिङः कर्तृकर्मणोः शक्तिरुक्ता । ततश्च पचतीत्यत्रत्यतिपः सकाशात्कर्तृकर्मोभयबोध आपद्येत । उभयत्रापि शक्तेः सत्त्वादित्यर्थः । ननु सकृदुच्चारितः शब्दः सकृदर्थं गमयति, इति, अन्याय्यं चा-नेकार्थत्वं विना प्रमाणमिति च न्यायान्नैकदेवार्थद्वयबोध इत्यत आह——कर्तृ-मात्रबोधवदिति । मात्रशब्देन कर्मार्थस्य व्यावृत्तिः । कर्ममात्रस्यापीति । अत्र मात्रशब्दः कर्त्रर्थव्यावर्तकः । बोधापत्तिरिति । यथा अनेकार्थकादपि हर्यादिशब्दात्कदाचित्सिंहमात्रस्य कदाचिच्चाश्वमात्रस्य बोधो जायते तात्पर्यग्राह-कस्य प्रकरणादेः समानत्वात्तथा पचतीत्यत्रापि कदाचित्कर्ममात्रस्यापि बोधापत्तिः शक्तेः समानत्वादिति भावः । तात्पर्यग्राहकमिति । तत्तदर्थप्रतीतिर्भवत्वितीच्छयोच्चरितत्वरूपतात्पर्यविषयकग्रहजनकमित्यर्थः । शास्त्रप्रवर्तकाचार्यानुमतात्पर्यग्राहकमिति यावत् । तेन कस्यचिदाधुनिकस्य पच्यत इत्यत्र कर्तृबोधे तात्पर्यसत्त्वेऽपि पाणिन्याद्याचार्यतात्पर्याभावान्न कर्तृबोधः, किं तु कर्मबोध एवेत्यत आह——फलव्यापारेति । तत्रेति तयोरित्यर्थकम् । ततश्च तयोः—फलव्यापार-योर्मध्ये इत्यर्थः । ननु यदि तङ् फल आश्रयान्वयं द्योतयेत्तर्हि एधते निविशत इत्यादावाख्यातार्थाश्रयस्य फलेऽन्वयापत्त्याऽतिप्रसङ्गोऽतोऽत्रोपसर्गप्रयुक्तत्वाभाव-विशिष्टः परस्मैपदिभ्य एवोत्पन्नस्तङ् ग्राह्यः । यगादिसमभिव्याहृतस्ताङिति यावत् । तेन निरुक्तादिस्थले न दोषः । यगिति । ननु सुखयति दुःखयतीत्यादिकण्ड्वा-दियगन्तस्थलेऽतिप्रसङ्गवारणाय तङ्समभिव्याहृतो यग्गृह्येत तथाऽपि कण्डूयते

( धात्वाख्यातार्थनिर्णयः )

तङादयः फल आश्रयान्वयं द्योतयन्ति । फलान्वयाश्रयस्य कर्मत्वात्तद्द्योतकाः कर्मद्योतकाः, व्यापाराश्रयस्य कर्तृत्वात्तद्द्योतकाः कर्तृद्योतका इति समुदायार्थः । द्योतयन्ति तात्पर्यं ग्राहयन्ति ॥ ३ ॥

नन्वेवम्—" क्रमादमुं नारद इत्यबोधि सः " [ शि० व० स० १ ] इत्यादौ पच्यत ओदनः स्वयमेवेत्यादौ च व्यभिचारः । कर्मणः कर्तृत्वविवक्षायां कर्तरि लकारे सति " कर्मवत्कर्मणा तुल्यक्रियः " [ पा० सू० ३—१—८७ ] इत्यतिदेशेन यगात्मनेपदचिण्चिण्वदिटामतिदेशाद्यगादिसत्त्वेऽपि कर्तुरेव बोधाद्व्यापार एवाऽऽश्रयान्वयाच्च । अबोधीत्यत्रापि बुध्यतेः कर्तरि लुङ्, च्लिः, तस्य

---

इत्यादौ दोष एवेति तन्निरासाय सार्वधातुके यगिति सूत्रविहित एव यगत्र ग्राह्यः । एवं चिणपि ' चिण्भावकर्मणोः ' इति विहित एव ग्राह्यः । तेन दीपजनेति चिणन्तेऽदीपीत्यादौ नातिप्रसङ्गः । आद्य इति । आदिना चिण्वदिट् । यथा कारिष्यते घट इत्यादौ । तथा ' कुषिरञ्जोः प्राचां० ' इति विहिते श्यन्परस्मैपदे अपि द्योतके । यथा रज्यति घटः स्वयमेवेत्यादौ । लिङादावप्युक्तरीत्या प्रकरणादिकमेव द्योतकत्वेनानुसंधेयम् । तङादयः कर्मद्योतकाः शबादयश्च कर्तृद्योतका इत्येवं व्यवहारोपपत्तय आह—**फलान्वय्याश्रयस्येत्यादिना समुदायार्थ इत्यन्तेन** । **तात्पर्यं ग्राहयन्तीति** । तत्तदर्थप्रतीतीच्छां जनयन्तीत्यर्थः ॥ ३ ॥

निरुक्ततात्पर्यग्राहकत्वमाक्षिपति—**एवमिति** । तङादीनां फले, शबादीनां च व्यापारे आश्रयान्वयद्योतकत्वे सतीत्यर्थः । **व्यभिचार इति** । कार्यकारणभावभङ्गः । अबोधि सः, पच्यते ओदनः स्वयमेवेत्यादौ च यगादिसत्त्वेऽपि फले आश्रयान्वयाभावाच्छबादीनामसत्त्वेऽपि व्यापारे आश्रयान्वयसत्त्वाच्च कारणसत्त्वे कार्याभावरूपोऽन्वयव्यभिचारः, कार्यसत्त्वे कारणाभावरूपो व्यतिरेकव्यभिचारश्चाऽऽपातीत्यर्थः । व्यभिचारमेव स्पष्टयितुं तत्साधनप्रक्रियां विशदयति—**कर्मणः कर्तृत्वेति** । यदा सौकर्यातिशयं द्योतयितुं कर्तुः पुरुषस्य व्यापारो न विवक्ष्यते किं त्वोदनादिकर्मगत एव व्यापारो विक्लित्त्याद्यनुकूलत्वेन विवक्षितस्तदा पच् धातोः कर्तरि लकारे कृते ' कर्मवत्कर्मणा० ' इति शास्त्रेण कार्यातिदेशविधानाद्यगात्मनेपदादीनां सत्त्वेऽपि आख्यातात्कर्तुरेव बोधादाख्यातार्थाश्रयस्य व्या-

( धात्वाख्यातार्थनिर्णयः )

"दीपजन" [पा० सू० ३–१–६१] इति चिण्। "चिणो लुक्" [पा० सू० ६–४–१०४] इति तस्य लुगिति सावनादित्याशङ्कायामाह—

**उत्सर्गोऽयं कर्मकर्तृविषयादौ विपर्ययात्॥**

**तस्माद्यथोचितं ज्ञेयं द्योतकत्वं यथागमम्॥ ४॥**

**कर्मकर्तृविषयादौ** पच्यत ओदनः स्वयमेवेत्यादौ। अत्र सेकौदनाभिन्नाश्रयकः पाकानुकूलो व्यापार इति बोधः। क्रमादित्यादिपदग्राह्यम्। अत्र सामान्यविशेषज्ञानपूर्वक एकनारदविषयकज्ञानानुकूलः कृष्णाभिन्नाश्रयकोऽतीतो व्यापार इति बोधः। **यथोचितमिति**। सकर्मकधातुसमभिव्याहृतभावसाधारणवि-

---

पार एवान्वयो न तु फले इत्यर्थः। तथा अबोधीत्यत्रापि बुध्यतेः कर्तरि लुङि तत्स्थाने आत्मनेपदप्रथमपुरुषैकवचनतादेशे दीपजनेत्यादिना चिणि चिणो लुगिति तादेशस्य लुकि सत्यत्रापि नाऽऽश्रयस्य फलेऽन्वयः किं तु व्यापार एवेत्यत आह—**उत्सर्गोऽयमित्यादि**। **कर्मकर्त्रिति**। पच्यत ओदनः स्वयमेवेत्यादौ, आदिपदात्क्रमादमुं नारद इत्यबोधि स इत्यादौ च विपर्ययात्—वैपरीत्यात् यगादिः कर्मद्योतकः शबादिश्च कर्तृद्योतक इत्येवंरूपः पूर्वोक्तोऽर्थः, उत्सर्गः—उत्सृज्यते क्वचित्त्यज्यते इति व्युत्पत्त्या सामान्यभूतो बहूदाहरणेषु तथा सत्त्वात्प्रायिको न तु सार्वत्रिक इत्यर्थः। **तस्मात्**—पूर्वोक्तार्थस्यासार्वत्रिकत्वात्। **यथोचितं**—अननुगतमपि व्युत्पत्त्यनुसारित्वादुचितमिति यावत्। **यथागमं**—शास्त्रानुसारेणैव द्योतकत्वं स्वीकर्तव्यमिति भावः। एतदेव शाब्दबोधवर्णनेन स्पष्टयितुमाह—**अत्र हीति**। नारद इत्यबोधीतिपदस्य शाब्दबोधं प्रदर्शयन्नाह—**सामान्येति**। पूर्वं त्रिवर्णं चय इति, ततः शरीरीति, ततः पुमानिति ततो नारद इति क्रमिकज्ञानमध्ये पूर्वं पूर्वं सामान्यज्ञानमुत्तरोत्तरं च विशेषज्ञानमिति बोध्यम्। **एकनारदेति**। एको यो नारदस्तद्विषयकं ज्ञानमित्यर्थः। अत्र निपातेनेति शब्देन कर्मणोऽभिहितत्वान्न नारदशब्दोत्तरं द्वितीया। भट्टनागेशमते तु 'नारदः' इत्याकारकं यज्ज्ञानं तदनुकूल इत्यादिर्बोधोऽवगन्तव्यः। तत्र नारद इति प्रथमान्तस्याप्रातिपदिकत्वान्न द्वितीयाप्राप्तिरपि। कतिचिन्निपातेनेति तु ते नानुमन्यन्ते। तिङ्कृत्तद्धितसमासानामेव भाष्ये परिगणनात्। यदुक्तं यथागममिति तत्तात्पर्यमाह—**सकर्मकेत्यादि**। व्यापारव्यधिकरणफलवाचको यो धातुस्तत्समभिव्याहृतं भावकर्तृसाधारणभावकर्मणोः, सार्वधातुके यगित्यादिसूत्रविहितं य-

धिविधेयचिण्यगादि कर्मद्योतकमिति भावः ॥ ४ ॥

एवं सूचीकटाहन्यायेन सोपपत्तिकं वाक्यार्थं निरूप्य **फलव्यापारयोरिति**

---

ञ्चिण्यगादिकं तद्द्योतकमिति भावः । पच्यते ओदनः स्वयमेवेत्यादौ कर्मवदित्यनेन शास्त्रातिदेशपक्षे भावसाधारणविधिविहितयगात्मनेपदयोः सत्त्वात्फल एवाऽऽश्रयान्वयकर्तव्यतारूपाऽतिव्याप्तिः स्यात् । तत्परिहाराय सकर्मकेत्यादि समभिव्याहृतान्तं विशेषणं दत्तम् । तथा च कर्मकर्तरि धातोः प्रायेणाकर्मकत्वाद्यत्यगात्मनेपदयोः सकर्मकधातुसमभिव्याहृतत्वाभावान्न तयोः कर्मद्योतकतेति भावः । अबोधि श्रीकृष्ण इत्यादौ चिणः सकर्मकधातुसमभिव्याहृतत्वेनातिप्रसङ्गः स्यात्तद्वारणाय भावसाधारणेत्यादि यगादेर्विशेषणम् । ततश्चाबोधीत्यत्र्यचिणो दीपजनेति विहितत्वेन भावसाधारणविधिविधेयत्वाभावान्न तस्य कर्मद्योतकत्वमित्यर्थः । चिण्यगादिविधायकतत्तच्छास्त्रज्ञानरहितस्य तु प्रकरणादिकमेव तात्पर्यग्राहकम् । एवं लिडादावपि बोध्यम् । अन्यथा ‘ पेचे, इत्यत्र कर्तृकर्मणोरुभयोरपि समानत्वात्तात्पर्यग्राहकदौर्लभ्येनानवस्था प्रसज्येत । एतेनाऽऽख्यातस्य कर्मकर्तृभावेषु शक्तिसत्त्वेन पचतीत्यादौ सर्वत्रैव भावना यथा प्रतीयते तद्वत्कर्मकर्तृभावानां सर्वत्र प्रतीत्यापत्तिस्तेषु शक्तिसत्त्वादिति परास्तम् । यगादेस्तात्पर्यग्राहकत्वकथनादिति बोध्यम् ॥ ४ ॥

अथ सामान्यत उक्तं धातोर्व्यापारवाचित्वं साधकबाधकविचारेण द्रढयितुं भूमिकामारचयति—**एवमित्यादि** । आश्रये तु तिङ स्मृता इत्यादिनिरुक्तरीत्या वाक्यार्थं निरूप्येत्यर्थः । ननु सामान्यतो धातोर्व्यापारवाचित्वकथनानन्तरमवसरसंगत्या साधकबाधकयुक्तिभिस्तद्व्यवस्थापनमेवाऽऽदावुचितं न वाक्यार्थोपवर्णनमित्याशङ्क्याऽऽह—**सूचीकटाहेति** । यत्र कश्चिल्लोहकारः प्रथमतः कर्तव्यत्वेन प्राप्तमपि कटाहनिर्माणं बह्वायाससाध्यत्वात्परित्यज्य पश्चात्कर्तव्यत्वेन प्राप्तमपि सूचीनिर्माणं स्वल्पायाससाध्यत्वाद् यत्प्रथमं करोति सोऽयं सूचीकटाहन्यायः । लोकव्यवहारेऽपि एकदैव कार्यद्वयप्रसङ्गे लघु कार्यं पूर्वं क्रियते पश्चाच्च महदिति प्रसिद्धमेव । तथा चैतन्न्यायानुसारेण खण्डनीयवादिविप्रतिपत्तीनां [illegible] दुर्बोधत्वाभावाच्च तन्निराकरणेन वाक्यार्थस्य सुप्रतिपादतया सुगमतया च स एवाऽऽदौ वर्णितः, न तु धात्वर्थो व्यवस्थापितः । तत्र निराकरणीयवादिविप्रतिपत्तीनां बहुत्वान्नैकविधदुरूहतर्कजालजटिलत्वाच्च तस्य तदादौ [illegible]

प्रतिज्ञातं धातोर्व्यापारवाचित्वं लडाद्यन्ते भावनाया अवाच्यत्वं वदतः प्राभाकरादीन्प्रति व्यवस्थापयति—

व्यापारो भावना सैवोत्पादना सैव च क्रिया ॥
कृञोऽकर्मकतापत्तेर्न हि यत्नोऽर्थ इष्यते ॥ ५ ॥

---

ज्ञेयम् । लडाद्यन्त इति । अत्रान्तशब्दः परसमीपबोधकः । लडादिरन्तः परसमीपो यस्मादित्यतद्गुणसंविज्ञानबहुव्रीहिः । तथा च लडाद्यन्त इत्यस्य धाताविमर्थः । धातौ भावनाया अवाच्यत्वमित्यन्वयेन धातुनिष्ठवाचकतानिरूपितवाच्यत्वाभावो भावनासंबन्धीति वदतः प्राभाकरादीन् प्रतीत्यर्थः । यद्वा भावनानिष्ठवाच्यतानिरूपितवाचकत्वाभावो धातौ इति वदन इत्यादिरर्थः । भावनाया धातुवाच्यत्वे, तयोः प्रत्ययार्थप्राधान्यमिति न्यायेन तस्याः प्राधान्यानुपपत्त्या धात्ववाच्यत्वमिति हि तेषामाशयः । प्राभाकरादीनित्यादिशब्देन नैयायिकसंग्रहः । यद्यपि फलानुकूलो व्यापारो धात्वर्थ इति नैयायिका मन्यन्ते तथाऽपि नासौ तन्मते भावनाशब्दव्यवहार्यः । एवं च मीमांसकानुद्दिश्य साधकबाधकयुक्तिभिर्भावनाया धातुवाच्यत्वं, नैयायिकान् प्रति धात्वर्थव्यापारस्य भावनापदवाच्यत्वं च दर्शयितुमाह——व्यापारो भावनेति । यो ह्यर्थो व्यापारशब्देनोच्यते स एवार्थो भावना, उत्पादना, क्रियेति शब्दैर्व्यवह्रियते इतिकारिकापूर्वार्धस्यार्थः । कीदृशो ह्यर्थो व्यापारपदव्यपदेश्यः ? इति चेद्धरिकारिकोक्त्यनुसारेणोच्यते——फूत्कारत्वादिनरूपेण भासमानैरवयवैर्युक्तः, संकलनात्मिकया बुद्ध्या प्रकल्पितो योऽभेदरूपः, यः क्रमजन्मनां बुद्धिस्थानामधिश्रयणादीनां व्यापाराणां समूहः स इति । तादृशार्थवाचकव्यापारपदं भावनादिशब्दैर्विवक्षित इति विविच्यमानविवरणयोः समानार्थत्वेन धातोर्भावनावाचित्वं सिध्यति । फलव्यापारयोर्धातुरित्युक्तत्वादिति भावः । भावना सैवेत्यत्र सा एवेति पदविभागः । यो हि व्यापारः सैव भावनेत्यर्थः । उद्देश्यप्रतिनिर्देश्ययोरैक्यमापादयत्सर्वनाम तदन्यतरलिङ्गमुपादत्ते इत्यभियुक्तोक्तेः । यत्कर्म णौ चेत्स कर्तेतिवत् । यद्वा स एवेति पुंलिङ्गनिर्देशोऽस्तु । यो व्यापारः स एव भावनेत्यर्थः । सोऽचि लोपे चेत्पादपूरणमिति स इत्यस्य सोर्लोपे साधुत्वादिति भावः । ननु स्यादेतत्पूर्वोक्तं सर्वं युक्तं, यदि धातोर्व्यापारवाचित्वं सिध्येत्, तत्रैव किं प्रमाणमिति जिज्ञासायां तस्मात्करोतिर्धातोः स्याद्व्याख्यानमित्यग्रे वक्ष्यमाणतया पचति——पाकं करोति, गच्छति——गमनं करो-

( धात्वाख्यातार्थनिर्णयः )

पचति पाकमुत्पादयति पाकानुकूला भावना तादृश्युत्पादनेति विवरणाद्विवियमाणस्यापि तद्वाचकतेति भावः । व्यापारपदं फूत्कारादीनामयत्नानामपि फूत्कारत्वादिरूपेण वाच्यतां ध्वनयितुमुक्तम् । अत एव पचतीत्यत्राधःसंतापनत्वफूत्कारत्वचुल्ल्युपरिधारणत्वयत्नत्वादिभिर्बोधः सर्वसिद्धः । न चैवमेषां शक्यतावच्छेदकत्वे गौरवापत्त्या कृतित्वमेव तदवच्छेदकं वाच्यम् । रथो गच्छति जानातीत्यादौ

ति, इत्येवं व्यापारार्थकक्रुञ्ना पच्यादिधातुविवरणस्यैव प्रमाणत्वमिति प्रदर्शयन्नाह——पचति——पाकमुत्पादयतीत्यादि । ननु व्यापारो भावना सैवेति कारिकायां या क्रिया सैव भावना सैव चोत्पादना, इत्युक्तेऽपि क्रियाया भावनात्वसिद्धौ किमर्थं व्यापारपदं निवेशितमित्यत आह——व्यापारपदं चेति । अयत्नानामिति । कृतिपदवाच्यो यः प्रयत्नस्तद्भिन्नानामपि फूत्कारादिव्यापाराणां तत्तद्विशेषरूपेण भावनापदवाच्यत्वसिद्ध्यर्थं व्यापारपदमुपात्तम् । क्रियाशब्देन तु भावार्थकशप्रत्ययव्युत्पन्नेन कृतिशब्दवद्यत्नार्थकेन कृतेरेव चेतनमात्रनिष्ठाया भावनापदवाच्यत्वं लभ्येत न तु चेतनाचेतनसाधारणानां व्यापाराणामिति भावः । क्रियापदं च तादृशव्यापाराणां धातुवाच्यत्वं क्रियापदवाच्यत्वं च बोधयितुमित्यर्थः । अत एवेति । तेन तेन रूपेण व्यापारस्य धातुवाच्यत्वादेव । बोधः सर्वसिद्ध इति । सर्वानुभवसिद्धस्य विशेषरूपेण बोधस्यापह्नवोऽयुक्त इति भावः । एवं व्यापारस्य विशेषरूपेण धातुवाच्यत्वादेव चैत्रः पचतीति वाक्यजन्यबोधदशायां चैत्रः फूत्कारादिमान्न वेति संशयो न जायते, सामान्यरूपेण बोधे तु अस्ति नास्तीत्यन्यतरकोटिनिश्चयाभावेन संदेहो दुर्वार इति भावः । अथ फूत्कारत्वादीनां गुरुत्वान्नानात्वाच्च वाच्यतावच्छेदकत्वस्वीकारोऽयुक्त इति तदपेक्षया लघुत्वादेकत्वाच्च कृतित्वस्यैव धातुवाच्यतावच्छेदकत्वस्वीकार उचित इति नैयायिकसंमतनियमद्वारा धातोः कृतिवाचकत्वं साधयन्नाशङ्कते तटस्थः——न चैवमित्यादिसार्धश्लोकान्तेन । एवमिति । उक्तरीत्या फूत्कारादिव्यापाराणां धातुवाच्यत्वे । एषां——फूत्कारत्वादीनाम् । शक्यतावच्छेदकत्वे स्वीकृते सतीति शेषः । गौरवेति । तेषां गुरुत्वादनेकत्वाच्चेत्यर्थः । कृतित्वमेवेति । फूत्कारत्वाद्यपेक्षया कृतित्वस्य * लघुत्वाज्जातित्वेनैकत्वाच्चेत्यर्थः । एवकारेण फूत्कारत्वादेर्व्यावृत्तिः । तदवच्छेदकमिति । धातुवाच्यतावच्छेदकं वक्तव्यमित्यर्थः ।

* प्रवृत्तित्वरूपकृतित्वमिष्टसाधनताज्ञाननिरूपितकार्यतावच्छेदकतयासिद्धो जातिविशेषः ।

च व्यापारत्वादिप्रकारकबोधो लक्षणयेति नैयायिकरीतिः साध्वी । शक्यतावच्छेदकत्वस्यापि लक्ष्यतावच्छेदकत्ववद्गुरुणि संभवात् । तयोर्वैषम्ये बीजाभावात् ।

---

तथा च विक्लित्त्यनुकूला कृतिर्धात्वर्थोऽस्त्विति शङ्काभिप्रायः । कृतिश्च यत्न एव । नन्वेवं कृतेर्धातुवाच्यत्वे रथो गच्छतीत्यादाववचेतने रथादौ यत्नस्य बाधाद्व्यापारादिप्रतीतिः सर्वानुभवसिद्धा कथं निर्वाह्येत्यत आह—रथो गच्छतीत्यादाविति । जानातीत्यस्य देवदत्त इत्यादिः । आदिपदादिच्छति नश्यतीत्यादिपरिग्रहः । व्यापारत्वादीत्यादिनाऽऽश्रयत्वप्रतियोगित्वयोः परिग्रहः । स च लक्षणयेत्यर्थः । नैयायिकरीतिरिति । लकाराणां कर्तौ शक्तिर्लाघवान्न तु कर्तरि, कृतिमतः कर्तृत्वेन तत्र शक्तौ गौरवादिति मन्यमानैर्नैयायिकैर्व्यापारे आश्रयत्वे वा लक्षणामङ्गीकृत्य यथा रथो गच्छतीत्ययं प्रयोगः साधितस्तद्वत्कृतेर्धात्वर्थत्वेऽपि शङ्ककेन मया साधयितुं शक्य इत्यर्थः । अत्र तटस्थस्य कृतेर्धात्वर्थत्वसमर्थनार्थमेव नैयायिकरीत्यनुसरणं न त्वन्यांशसमर्थन इति बोध्यम् ।

अवच्छेदकत्वे हीत्थं नियमः—संभवति लघौ, गुरौ तदभाव इति । मानान्तरसिद्धे लघुधर्मेऽवच्छेदकत्वे संभवति सति गुरुधर्मेऽवच्छेदकत्वं न कल्प्यमिति नियम् । यथा प्रमेयधूमाभावप्रतियोगिताया अवच्छेदकत्वं प्रमेयधूमत्वसमनियते शुद्धधूमत्व एवाङ्गीक्रियते न तु प्रमेयत्वविशिष्टधूमत्वे, लघुगुरुधर्मयोरुभयोरपि शब्दशक्त्यात्मकमानान्तरसिद्धत्वादिति हि तस्यार्थः, न तु मानान्तरागम्येऽपि लघुधर्मे केवललाघवानुरोधेन तत्स्वीकार्यमिति । ततश्च फूत्कारत्वाद्यपेक्षया कृतित्वस्य लघुधर्मत्वेऽपि मानान्तरगम्यत्वाभावाद्दृष्टान्तबलेन च गुरुधर्मेऽप्यवच्छेदकत्वस्वीकारसंभवात्प्रकृतस्थले निरुक्तनियमसंगत्यसंभवेनायुक्ता तटस्थाशङ्केत्याशयेनाऽऽह—शक्यतावच्छेदकत्वस्यापीति । यथा गङ्गायां घोष इत्यत्र लक्षणयोपस्थितार्थगते गङ्गातीरत्वात्मके गुरुधर्मे लक्ष्यतावच्छेदकत्वं स्वीक्रियते तद्वत्फूत्कारत्वादिगुरुधर्मेऽपि शक्यतावच्छेदकत्वस्वीकारे बाधकाभावादित्यर्थः । तयोर्वैषम्येति । शक्तिलक्षणयोरुभयोरपि पदतदर्थसंबन्धरूपत्वाविशेषेण लक्ष्यतावच्छेदकत्वं गुरुधर्मे शक्यतावच्छेदकत्वं तु न तत्रेत्येवं वैलक्षण्यकरणस्य प्रमाणाभावेनानुचितत्वात्पचतीत्यतो विक्लित्त्यनुकूलो यत्न इति बोधस्याऽऽनुभविकानामनुदयाच्च सर्वथाऽयुक्तं तटस्थाशङ्कितं धातोः कृतिवाचकत्वमिति भावः ।

ननु न केवललाघवानुरोधेन कृतित्वस्य धातुवाच्यतावच्छेदकत्वमाशङ्कितं

( धात्वाख्यातार्थनिर्णयः )

न च पचति पाकं करोतीति यत्नार्थककरोतिना विवरणाद्यत्न एवाऽऽख्यातार्थ इति वाच्यम्। रथो गमनं करोति बीजादिनाऽङ्कुरः कृत इति दर्शनात्कृञो यत्नार्थकताया असिद्धेरिति। किं च भावनाया अवाच्यत्वे घटं भावयतीत्यत्रेव घटो भ-

---

किंतु मानान्तरगम्यत्वसंभवसहकृतेनैव लाघवेनेति सूचयंस्तस्य मानान्तरगम्यत्वसंभवमाशङ्कते—न चेति। अयं भावः—कृञो यत्नार्थकत्वमवश्यमेष्टव्यम्। यत्नजन्यत्वानुसंधानदशायामेव पटः कृत इति कृतव्यवहारदर्शनात्। यत्नजन्यत्वानुसंधानाभावे तु तत्राङ्कुरः कृत इति कृतव्यवहारादर्शनात्। किं त्वङ्कुरो जात इत्येवमकृतव्यवहारदर्शनात्। इत्थं च पचतीत्येतद्घटकपच्धातोः पाकं करोतीत्येवं यत्नार्थककरोतिना विवरणात्, किं करोतीति यत्नविषयकप्रश्ने पचतीत्युत्तरस्य यत्नार्थकत्वं विनाऽनुपपत्तेश्च यत्न एव धातोरर्थ इति शङ्काभिप्रायः। यत्नश्च कृतिरेव। संभवेदेवं यदि कृञो यत्नार्थकत्वं सुवचं स्यात्, तदेव तु दुर्लभमिति दूरे धातोर्यत्नार्थकत्वकथनमित्यभिप्रेत्याऽऽह——रथ इति। अत्र रथपदानुपादाने गमनानुकूलयत्नस्य चैत्रादिचेतननिष्ठस्य विद्यमानत्वेन न तादृशप्रयोगहानिरतो 'रथः' इत्युक्तम्। अङ्कुरः कृत इत्येतावन्मात्रोक्तौ यत्नापरपर्यायेश्वरीयकृतिजन्यत्वमादाय निरुक्तप्रयोगोपपत्तिरत उक्तं बीजादिनेति। एवं च रथबीजादावचेतने यत्नस्य सर्वथा बाधात्तादृशप्रयोगासंगत्या नैव कृञो यत्नवाचित्वमपि तु व्यापारवाचित्वं विना निरुक्तप्रयोगानुपपत्तेः कृञो व्यापारवाचित्वमेव तव गले पततीत्यर्थः। न च रथो गमनं करोतीत्यादौ कृञो व्यापारे लाक्षणिकत्वान्न तेन यत्नार्थकत्वभङ्ग इति वाच्यम्। संभवति मुख्यार्थकत्वे लाक्षणिकार्थकल्पनाया अन्याय्यत्वात्। तथा च बहुशः कृञो व्यापारवाचित्वदर्शनेन व्यापार एव कृञः शक्तिरुचितेति तादृशार्थककरोतिना धातोर्विवरणाद्विव्रियमाणविवरणयोः समानार्थकत्वनियमाद्धातोर्व्यापारवाचित्वमवश्यं स्वीकरणीयमित्याशयः। विवरणं च तत्समानार्थकपदान्तरेण तदर्थकथनम्। पचतीत्यनेन समानार्थकं यत्पदान्तरं पाकं करोतीत्याकारकं तेन पचतीत्यस्यार्थकथनमिति बोध्यम्।

अथ कृञोऽकर्मकतापत्तेरिति कारिकोत्तरार्धमवतारयितुं भूमिकामारचयति——किंचेत्यादिना। भावनायाः——व्यापाररूपभावनायाः। अवाच्यत्वे——धातुनिरूपितवाच्यत्वाभावे तिङ्निरूपितवाच्यत्वाभावे च सतीत्यर्थः। ततश्च फलमात्रस्य धात्वर्थत्वे पर्यवसन्ने स्वजनकव्यापारव्यधिकरणधात्वर्थफलाश्रयत्वं, धात्वर्थ-

वतीत्यत्रापि द्वितीया स्यात् । न चात्र घटस्य कर्तृत्वेन तत्संज्ञया कर्मसंज्ञाया बाधान्न द्वितीयेति वाच्यम् । अनुगतकर्तृत्वस्य त्वन्मते दुर्वचत्वेन घटस्याकर्तृत्वात् । कृत्याश्रयत्वस्य कारकचक्रप्रयोक्तृत्वस्य वा घटादावभावात् । धात्वर्थानुकूलव्यापा-

---

फलाश्रयत्वमेव वा कर्मत्वं वक्तव्यम् । अत्र स्वपदेन फलं ग्राह्यम् । एवं च उत्पत्त्यर्थकाद्भूधातोस्तदनुकूलव्यापारवाचके णिचप्रत्यये कृते घटं भावयतीत्यत्र उत्पत्तिरूपधात्वर्थफलाश्रयत्वेन कर्मत्वाद्यथा घटादोत्तरं द्वितीया भवति तद्वद् घटो-भवतीत्यत्रापि उत्पत्तिरूपधात्वर्थफलाश्रयत्वेन कर्मत्वाद् घटादोत्तरं द्वितीयापत्तिः स्यात् । अत्रेदं बोध्यम् । णिजन्तस्थले स्वजनकेत्यादि प्रथमं कर्मलक्षणं, द्वितीयं तु शुद्धे णिजन्ते चेति । घटो भवतीत्यत्र घटपदोत्तरं द्वितीयापत्तिं वारयितुं शङ्कते--न चात्र घटस्येति । कर्मसंज्ञाया बाधादिति । घटो भवतीत्यत्र घटस्य कर्तृत्वेन प्रतीतेर्घटस्योत्पत्तिरूपफलाश्रयत्वेऽपि परया कर्तृसंज्ञया कर्मसंज्ञाया बाधान्न द्वितीयापत्तिरिति भावः शङ्ककस्य । यदुक्तं घटस्य कर्तृत्वं तन्न संभवतीत्याह---अनुगतेति । चेतनाचेतनैतदुभयवृत्तिकर्तृत्वलक्षणस्य त्वया वक्तुमशक्यतया घटस्य कर्तृत्वाभावाद्दुर्निवारा द्वितीयेत्यर्थः । घटस्याकर्तृत्वमेव प्रतिपादयति---कृत्याश्रयत्वस्येत्यादि । यदि तत्तद्धात्वर्थफलानुकूलकृत्याश्रयत्वं कर्तृत्वमुच्यते तर्हि प्रयत्नापरपर्यायायाः कृतेश्चेतनमात्रनिष्ठधर्मत्वेनाचेतने तदभावेन घटोऽस्तीत्यादावव्याप्तिः । कारकचक्रेति । प्रकृतधात्वर्थक्रियान्वययोग्यकारकसमुदायप्रवर्तकत्वं तदिति चेत्स्थाली पचति असिश्छिनत्तीत्यादौ स्थाल्यादेरचेतनस्य कारकचक्रप्रवर्तकत्वाभावेनाव्याप्तिरेव । अभावादिति । घटस्याचेतनत्वात्कृत्याश्रयत्वस्य कारकचक्रप्रयोक्तृत्वस्य चाभाव इति भावः । तथा च कृत्यादिमत एव कर्तृसंज्ञाया उक्तत्वात्कृत्याद्यभावे कर्तृसंज्ञाप्राप्त्यभावेन कर्मसंज्ञाया अनपवादत्वाद्द्वितीयापत्तिर्दुर्वारेत्यर्थः । मम मते धातूपात्तव्यापाराश्रयत्वेन कर्तृत्वान्न द्वितीया किंतु प्रथमैवेति न दोषः । एवं धातोर्व्यापारावाचकत्ववादिनैयायिकमतं निराकृत्य फलं धात्वर्थः, व्यापारः प्रत्ययार्थ इति वादिनं मीमांसकं प्रत्याचष्टे---धात्वर्थानुकूलेति । अयं भावः---स्वतन्त्रः कर्तेति सूत्रे स्वातन्त्र्यं---धात्वर्थफलानुकूलव्यापाराश्रयत्वं, तच्च घटे उत्पत्त्यनुकूलव्यापारसत्त्वेनाबाधितमेवेति तादृशस्वातन्त्र्यमेव कर्तृत्वं मया मन्यत इति । तदपि न, अतिव्याप्तत्वादित्याह---

( धात्वाख्यातार्थनिर्णयः )

राश्रयत्वस्य च कारकमात्रातिव्यापकत्वात्। अपि च भावनाया अवाच्यत्वे धातूनां सकर्मकत्वाकर्मकत्वविभाग उच्छिन्नः स्यात्। स्वार्थफलव्यधिकरणव्यापार-

---

**कारकमात्रेति**। मात्रशब्दः कार्त्स्न्ये। कर्मकरणादिसर्वेष्वपि कारकेषु तत्तद्धात्वर्थफलानुकूलयत्किंचित्क्रियाश्रयत्वसत्त्वेनातिप्रसङ्गः। क्रियाजनकत्वस्यैव कारकत्वादित्यर्थः। ननु सर्वेषु कारकेषु धात्वर्थानुकूलव्यापाराश्रयत्वरूपस्वातन्त्र्यसत्त्वेऽपि यस्य आख्यातोपात्तव्यापाराश्रयत्वेन स्वातन्त्र्यं विवक्ष्यते तस्यैव कर्तृसंज्ञा भवति इति स्वतन्त्रः कर्तेति सूत्रप्रणयनसामर्थ्यादवगम्यते। अन्यथा परया कर्तृसंज्ञया बाधादपादानादिसंज्ञा निर्विषयाः स्युः। ततश्च काष्ठैः स्थाल्यां तण्डुलं पचतीत्यादौ करणादिकारकप्रयोगस्य विलय एव स्यात्। अत एव लघुमञ्जूषायां नागेशभट्टैरुक्तं सुबर्थविचारे--सर्वेषां स्वस्वव्यापारद्वारा स्वातन्त्र्येणैव क्रियानिष्पादकत्वात्कर्तृकारकत्वम्। अत्र स्वातन्त्र्येत्यस्य स्वातन्त्र्यविवक्षयैवेत्यर्थः। ततः केन कः किं पचतीत्यादिविवक्षायां स्वस्वव्यापारवशेन करणादित्वं भवत्येवेति। हरिणाऽप्युक्तम्---निष्पत्तिमात्रे कर्तृत्वं सर्वत्रैवास्ति कारके। व्यापारभेदापेक्षायां करणादित्वसंभवः॥ यथा पुत्रजन्मनि पित्रोः कर्तृत्वेऽपि कः कस्यां का च कस्मादितिभेदेन विवक्षायामयमस्यामियमस्मात्पुत्रं जनयतीति व्यवहारोऽप्युपपद्यत इति च। कारक इति सूत्रे भाष्येऽप्युक्तम्---स्थालीस्थे यत्ने कथ्यमाने स्थाली स्वतन्त्रा, इति। विवक्षितस्वातन्त्र्यवतीति तदर्थः। एवं च स्वातन्त्र्यस्य विवक्षाधीनत्वान्नातिप्रसङ्गो नापि घटो भवतीत्यत्र द्वितीयाप्रसङ्गः--घटनिष्ठधात्वर्थफलानुकूलव्यापारस्यैव स्वातन्त्र्यविवक्षणेन कर्तृसंज्ञाया अपरिहार्यत्वादित्यत आह---अपि चेत्यादि। **उच्छिन्नः स्यादिति**। यदि व्यापाररूपा भावना धातुवाच्या न स्यात्तर्हि सकर्मकोऽयं धातुरयं चाकर्मक इत्येवं विभागः सर्वथा दुरुपपाद इत्यर्थः। सिद्धान्तसंमतं सकर्मकलक्षणमाह---**स्वार्थफलेत्यादि**। स्वपदेन धातुर्ग्राह्यः। तथा च धातुवाच्यं यत्फलं तादृशफलव्यधिकरणो यो व्यापारस्तद्वाचकत्वं धातोश्चेद्भवति तदा सोऽयं धातुः सकर्मक इत्युच्यते। भूप्रभृतावकर्मकेऽतिप्रसङ्गवारणाय स्वार्थफलव्यधिकरणेति व्यापारविशेषणम्। तथा च भूप्रभृतेरकर्मकधातोः स्वार्थफलसमानाधिकरणव्यापारवाचकत्वान्न सकर्मकत्वमित्यर्थः। ननु भूप्रभृतीनामपि पच्यादिधात्वर्थफलव्यधिकरण-

व्यापारवाचकत्वादतिप्रसङ्गस्तदवस्थ एवेति चेन्न। फले स्वार्थेति विशेषणदानात्। स्वार्थो यत्फलं तद्व्यधिकरणेत्यर्थाद्भूप्रभृतेर्व्यापारस्य पच्यादिधात्वर्थफलव्यधिकरणत्वेऽपि स्वार्थफलव्यधिकरणत्वाभावान्न क्षतिः। ननु ग्रामं गच्छति चैत्रः, इत्यादौ गम्यादिधात्वर्थफलस्य संयोगस्य द्विष्ठत्वेन ग्रामचैत्रोभयवृत्तित्वाच्चैत्रनिष्ठव्यापारस्य गम्यादिधात्वर्थफलव्यधिकरणत्वाभावेनाव्याप्तिः। तथा च गम्यादिधातोः सकर्मकत्वं न स्यादिति चेन्न। फलव्यधिकरणत्वं च फलतावच्छेदकसंबन्धेन यत्किंचित्स्वधात्वर्थफलाधिकरणभिन्नवृत्तित्वं विवक्षितम्। फलाधिकरणयोर्द्वयोर्मध्ये किंचिदेकं यत्फलाधिकरणं तदपेक्षया भिन्नवृत्तित्वं व्यापारस्येति तदर्थः। व्यापारस्य यत्किंचित्फलाधिकरणभिन्नवृत्तित्वं ग्राह्यं ननु यावत्फलाधिकरणभिन्नवृत्तित्वमिति यावत्। तथा च गम्यादिव्यापारस्य यावत्फलाधिकरणभिन्नवृत्तित्वाभावेऽपि गम्यादिधात्वर्थसंयोगात्मकफलाधिकरणयोर्ग्रामचैत्रयोर्मध्ये यदेकं फलाधिकरणं ग्रामः, तदपेक्षया भिन्नो यश्चैत्रस्तद्वृत्तिव्यापारवाचकत्वान्न सकर्मकेषु गम्यादेरसंग्रह इत्यर्थः। न च घटो भवतीत्यत्र उत्पत्त्यनुकूलो व्यापारो भूधात्वर्थः। तत्र व्यापारस्य घटवृत्तित्वं, फलस्य तूत्पत्त्यात्मकस्य कालिकसंबन्धेन कालवृत्तित्वमिति कृत्वा स्वार्थफलव्यधिकरणव्यापारवाचकत्वादकर्मके भूप्रभृतौ सकर्मकलक्षणातिव्याप्तिरिति शङ्क्यम्। फलतावच्छेदकसंबन्धेनेति निवेशनात्। तथा च फलतावच्छेदको यः संबन्धः, तेन संबन्धेन किंचिद्यत्फलाधिकरणं तदपेक्षया यद्भिन्नं तद्वृत्तित्वं व्यापारस्य विवक्षितमित्यर्थः। एवं च घटो भवतीत्यादौ भूप्रभृतेर्व्यापारस्य कालिकसंबन्धेन फलाधिकरणकालापेक्षया भिन्नो यो घटस्तद्वृत्तित्वेऽपि फलतावच्छेदकसमवायसंबन्धेन यदुत्पत्तिरूपफलाधिकरणं घटस्तद्वृत्तित्वेन फलव्यधिकरणत्वाभावान्नातिव्याप्तिरिति भावः।

ननु जीवतीत्यादितः प्राणान् धारयतीति संप्रत्ययात्प्राणधारणानुकूलो व्यापारो जीवतेरर्थः। तत्र व्यापारो देवदत्तादिनिष्ठः। धारणात्मकं फलं च प्राणनिष्ठम्। धारणं समवस्थापनम्। तथा च स्वार्थफलव्यधिकरणव्यापारवाचकत्वाज्जीवत्यादावकर्मकेऽतिप्रसङ्ग इति चेत्—स्वार्थफले धात्वर्थाप्रविष्टाश्रयकत्वं विशेषणं देयम्। धात्वर्थाप्रविष्टाश्रयकस्वार्थफलेत्यादि लक्षणम्। धात्वर्थेऽप्रविष्टोऽनन्तर्भूत आश्रयो यस्य फलस्येति तदर्थः। तथा चात्र धारणात्मकधात्वर्थफलाश्रयस्य

( धात्वाख्यातार्थनिर्णयः )

वाचित्वं स्वार्थव्यापारव्यधिकरणफलवाचकत्वं वा सकर्मकत्वं भावनाया वाच्यत्वमन्तरेणासंभवि । अन्यतमत्वं तत्त्वमिति चेन्न । एकस्यैवार्थभेदेनाकर्मकत्वसकर्मकत्वदर्शनात् । तदेतदभिसंधायाऽऽह—कृञ इति । अयं भावः—व्यापारावाच्य"

---

माणस्य धात्वर्थेऽन्तर्भूतत्वान्नातिप्रसङ्ग इति भावः । एवमविवक्षितकर्मकत्वाभाववत्त्वमपि स्वार्थे विशेषणं देयम् ।

विविगमनाविरहात्प्रकारान्तरेण सकर्मकत्वं लक्षयति—स्वार्थव्यापारेत्यादि । स्वार्थः—धात्वर्थः, धातुवाच्य इत्यर्थः । एतादृशो यो व्यापारस्तद्व्यधिकरणं यत्फलं तद्वाचकत्वं सकर्मकत्वमित्यर्थः । व्यापारव्यधिकरणत्वं च व्यापारानधिकरणवृत्तित्वं बोध्यम् । धातुवाच्यो यः फूत्कारादिव्यापारस्तदधिकरणं देवदत्तादि, तदनधिकरणं यत्तण्डुलादि, तद्वृत्तिविक्लित्त्यादिफलवाचकत्वात्पच्यादौ लक्षणसमन्वयः । फलतावच्छेदकसंबन्धनिवेशनादि पूर्ववद्बोध्यम् ।

असंभवीति । निरुक्तं सिद्धान्तसंमतं सकर्मकत्वमन्यथानुपपन्नमिति धातोर्व्यापाररूपभावनावाचकत्वमवश्यमङ्गीकरणीयमिति भावः । प्रकारान्तरेण सकर्मकत्वस्य व्यवस्थितत्वमाशङ्क्य प्रत्याचष्टे—अन्यतमत्वं तत्त्वमित्यादिना । सकर्मकत्वेनाभिमता यावन्तो धातवस्तान् प्रत्येकं प्रातिस्विकरूपेण परिगणय्य तावत्समुदायघटकत्वरूपमन्यतमत्वं तदेव च तत्त्वं सकर्मकत्वमिति चेन्नैतद्भद्रम् । एकस्यैवेति । एकानुपूर्व्यवच्छिन्नस्यैवेत्यर्थः । दर्शनादिति । यथा नदी वहतीत्यत्र वहधातोः स्यन्दनेऽर्थेऽकर्मकत्वं, भारं वहतीत्यत्र प्रापणार्थके सकर्मकत्वं च । तत्र सकर्मकधातुसमुदाये वहेः पाठे स्यन्दनार्थकेऽकर्मके तस्मिन्नातिप्रसङ्गः । तत्रापाठे तु प्रापणार्थके तस्मिन्नेवाप्रसङ्ग इत्येवमतिप्रसक्त्यप्रसक्तिदोषदर्शनादिति भावः । तदेतदिति । निरुक्तं दोषजातं मनसिकृत्याऽऽह—कृञोऽकर्मकेति । ननु सकर्मकत्वं नाम स्वजनकव्यापारव्यधिकरणफलवाचकत्वम् । स्वशब्देन फलं ग्राह्यम् । तथा च फलजनको यो व्यापारस्तादृशव्यापारानधिकरणवृत्ति यत्फलं तद्वाचकत्वमित्यर्थः । तादृशं च सकर्मकत्वं करोतौ सूपपादम् । तथाहि—यत्नः, फलतावच्छेदकविषयतासंबन्धेन घटादिनिष्ठः, तज्जनकव्यापारस्त्वात्मनःसंयोगात्मको देवदत्तनिष्ठ इति कृञः स्वजनकव्यापारव्यधिकरणफलवाचकत्वादिति । निरुक्तसकर्मकभिन्नत्वं चाकर्मकत्वम् । तच्च करोतौ वक्तुमशक्य-

त्वपक्षे फलमात्रमर्थ इति फलितम् । तथा च करोतीत्यादौ यत्नप्रतीतेस्तन्मात्रं वाच्यमभ्युपेयं, तथा च "यती प्रयत्ने" इतिवत्फलस्थानीययत्नवाचकत्वाविशेषादकर्मकतापत्तिरुक्तरीत्या दुर्वारेति । तथा च न हि यत्न इत्यत्र फलस्थानीयत्वेनेति शेषः । कृञ इति । धातुमात्रोपलक्षणं, सर्वेषामप्यकर्मकता सकर्मकता-

मिति कृञोऽकर्मकतापत्तिरसंगतेत्याह—अयं भाव इति । फलमात्रमिति । मात्रपदेन व्यापारस्य व्यावृत्तौ सत्यां करोतीत्यादौ यत्नप्रतीतेः फलस्थानीयः केवलयत्नः करोतेर्वाच्योऽर्थ इत्यङ्गीकार्यम् । तथा च यतिवदिति । यथा यत्नार्थको यतिधातुरकर्मकत्वेन सुप्रसिद्धस्तथा कृञोऽप्यकर्मकत्वापत्तिः। यतिकृञोरुभयोरपि फलस्थानीययत्नवाचित्वस्य समानत्वात् । ततश्च न पूर्वोक्तं स्वजनकव्यापारेत्यादिसकर्मकत्वं वक्तुमुचितमिति भावः । किं त्वस्मदीतया स्वार्थफलेत्यादिमूलोक्तमेव सकर्मकत्वं स्वीकार्यम् । अन्यथा सिद्धान्तमनादृत्य स्वोक्तसकर्मकत्वस्यैव स्वीकारे यतिधातोर्यत्नस्यापि फलतावच्छेदकविषयतासंबन्धेन घटादिनिष्ठत्वात्स्वजनकमनःसंयोगादिव्यापाराननधिकरणवृत्तित्वेन सकर्मकत्वापत्तिः । ततश्च सिद्धान्तसंमतं सकर्मकत्वं कृञो यत्नमात्रवाचित्वे न संभवतीत्यकर्मकतापत्तिर्दुर्वारैवेति भावः । ननु फलसमानाधिकरणव्यापारवाचित्वमेवाकर्मकत्वव्यवहारकारणं, तच्च करोतौ नास्तीति कथमकर्मकत्वापत्तिरित्यत आह—उक्तरीत्येति । सिद्धान्तोक्तसकर्मकधातुभिन्नधातुत्वमकर्मकत्वमित्याथिकोक्तरीत्येत्यर्थः । अन्यथा व्यापाररूपभावनाया धात्ववाच्यत्वे फलसमानाधिकरणव्यापारवाचित्वरूपाकर्मकत्वापत्तेरसंभवदुक्तिकत्वापत्त्या यतेरप्यकर्मकत्वानापत्तेः । फलसमानाधिकरणव्यापारवाचकत्वाभावादिति भावः । एवं च कृञः फलस्थानीयत्वेन यत्नोऽर्थो नेष्ट इत्यर्थः । ननु सर्वस्यापि धातोर्व्यापारावाचकत्वे धातुमात्रस्याकर्मकत्वसंभवात्कृञ इति विशिष्योक्तिरनुचितेत्याह—कृञ इति । कृञ्पदमजहल्लक्षणया शक्यलक्ष्ययावद्धातुसंग्राहकमित्यर्थः । अकर्मकतेति । धातुमात्रस्य फलमात्रवाचकत्वे व्यापारावाचकत्वेन सर्वेषामप्यकर्मकता स्यात् । सकर्मकतेति । फलवाचकत्वं सकर्मकत्वं चेत्सर्वेषामेव सकर्मकता स्यादित्यर्थः । तथा च सकर्मकाकर्मकविभागोच्छेद इति धातुमात्रस्य केवलफलवाचित्वं न युक्तं किंतु व्यापारवाचित्वमप्यङ्गीकार्यमिति भावः । अथ प्रकारान्तरेण कृञोऽकर्मकतेति—मूलमवतार-

( धात्वाख्यातार्थनिर्णयः )

वा स्यादिति भावः । अथ वा व्यापारो भावनेत्यर्धेन व्यापारस्य वाच्यत्वं प्रसाध्य फलांशस्यापि तत्साधयन्नैयायिकाभ्युपगतं जानातिकृञादेः केवलज्ञानयत्नादिक्रियामात्रवाचित्वं दूषयति––कृञ इति । अयं भावः––फलांशस्यावाच्यत्वे व्यापार एव धात्वर्थः स्यात्, तथा च स्वार्थफलव्यधिकरणव्यापारवाचित्वादिरूपसकर्मकत्वोच्छेदापत्तिः । न च कृञादौ सकर्मकत्वव्यवहारो भाक्त इति नैयायि-

---

यितुं भूमिकामारचयति––अथ वेत्यादि । प्रसाध्येति । व्यापारो भावनेति पूर्वार्धस्य विवरणद्वारा सर्वस्यापि धातोर्व्यापारवाचित्वावश्यकत्वं प्रसाध्येत्यर्थः । तदिति । फलांशस्यापि सर्वधातुवाच्यत्वावश्यकत्वं प्रतिपादयन् जानातिकरोतीत्यादौ सवि*षयार्थकधातौ फलांशवर्जं केवलज्ञानादिक्रियामात्रवाचित्वं यदुक्तं नैयायिकैस्तद्दूषयितुमाह––कृञ इति । मात्रपदं फलव्यावृत्त्यर्थम् । सकर्मकाणां प्रायः फलव्यापारोतदुभयार्थकत्वम् । जानातिकरोत्यादीनां तु ज्ञानयत्नादिव्यापारार्थकत्वम् । अकर्मकाणां सर्वेषां न फलवाचकत्वं, फलस्य ततोऽननुभवात् । किंतु व्यापारमात्रवाचकत्वमेवेति नैयायिकैः कैश्चिदभ्युपगतमित्यर्थः । ननूक्तरीत्या फलावाचकत्वेऽपि फलव्यधिकरणव्यापारवाचकत्वरूपं सकर्मकत्वं करोत्यादेरपि संभवत्येव । उत्पत्त्यादिरूपफलव्यधिकरणयत्नाद्यभिन्नव्यापारवाचित्वात् । तथा च कथं कृञोऽकर्मकत्वमित्याशङ्कां समाधातुमाह—अयं भाव इति । धात्वर्थ इति । फलरहितो व्यापारः सकलधात्वर्थ इत्यर्थः । सकर्मकत्वोच्छेदेति । सर्वस्यापि धातोर्यत्किंचित्फलव्यधिकरणव्यापारवाचित्वेऽपि फलस्य सर्वत्रैव धात्वर्थत्वाभावेन स्वार्थफलेत्यादिसिद्धान्तोक्तसकर्मकत्वोच्छेद इत्यर्थः । समनन्तरोक्तं सकर्मकत्वं तु नाऽऽश्रयितुं शक्यं, यतिस्यन्द्यादेरपि धात्ववाच्ययत्किंचित्फलव्यधिकरणव्यापारवाचकत्वेनातिव्याप्तत्वादिति भावः । ननु सकर्मकत्वव्यवहारानुरोधेन पच्यादेरस्तु फलांशोऽपि वाच्यः, कृञादेस्तु यत्नादिरूपव्यापारमात्रवाचित्वमेव । तत्र सकर्मकत्वव्यवहारस्तु कर्मान्वितार्थवाचकत्वनिबन्धनो गौणः । एवं च तत्र धात्वर्थतावच्छेदकफलशालित्वरूपमुख्यकर्मत्वविरहेऽपि विषयत्वरूपं लाक्षणिकमेव कर्मत्वं संभवेदित्याशङ्कामनुसंधायाऽऽह––न च कृञादावित्यादि युक्तमित्यन्तम् । भाक्तत्वेऽपीति । लाक्षणिकत्वेऽपीत्यर्थः ।

---

* ज्ञानेच्छाकृत्यर्थकधाताावित्यर्थः ।

कोक्तं युक्तम् । व्यवहारस्य भाक्तत्वेऽपि कर्मणि लकारासंभवात् । न हि तीरे गङ्गापदस्य भाक्तत्वेऽपि तेन स्नानादि कार्यं शक्यं कर्तुम् । एवं च न हि यत्न इत्यत्र यत्नमात्रमित्यर्थः ॥ ५ ॥

अत एवाऽऽह—

**किं तूत्पादनमेवातः कर्मवत्स्यादयगाद्यपि ।**
**कर्मकर्तर्यन्यथा तु न भवेत्तद्दृशोरिव ॥ ६ ॥**

उत्पादनमुत्पत्तिरूपफलसहितं यत्नादि कृञर्थ इत्यर्थः । फलस्य वाच्यत्वे युक्त्यन्तरमाह—अत इत्यादि । यतः कृञो यत्नमात्रमर्थो नेष्यतेऽत कर्मवत्स्यादिति पदेन "कर्मवत्कर्मणा तुल्यक्रियः" [ पा० सू० ३–१–८७ ]

**असंभवादिति ।** मुख्ये संभवति तत्रैव कार्यसंप्रत्ययो ननु गौण इति न्यायाद्गौणकर्मणि लकारासंभव इत्यर्थः । एतदेव दृष्टान्तेन स्पष्टयति—**न हीति ।** गङ्गापदस्य तीरे लक्षणानिबन्धनत्वेऽपि न हि तेनार्थेन स्नानपानादिकार्यं निर्वर्तयितुं शक्यत इत्यर्थः । उत्पत्त्यनुकूलयत्नवाचित्वे करोतेर्नो करोतेः समायातीत्याह—**एवं चेति । यत्नमात्रमिति ।** उत्पत्तिरूपफलव्युदासः । एवं च नैयायिकाभिमतयत्नमात्रवाचित्वं निषिध्यते, उत्पत्तिरूपफलानुकूलयत्नार्थकत्वं तु स्वाभीष्टमेवेति भावः ॥ ५ ॥

**अत एवेति ।** कृञो यत्नमात्रार्थकत्वस्यानिष्टत्वादेवेत्यर्थः । ननु तर्हि कृञः कीदृशार्थकत्वमिष्यते तदाह—**किं तूत्पादनमिति ।** उत्पादनादस्योत्पत्त्यनुकूलयत्नाद्यर्थकत्वेनोत्पत्तिरूपफलसहितं यत्नादि कृञोऽर्थोऽभिमत इत्यर्थः । यत्नादीत्यादिशब्देन यत्नभिन्नव्यापारस्यापि संग्रहः । बीजादिनाऽङ्कुरः कृत इत्याद्यनुरोधात् । बीजादावचेतने यत्नस्य बाधात्त्यागेऽपि शक्त्यैव यत्नभिन्नव्यापारप्रतीतिरिति भावः । **वाच्यत्व इति ।** फलस्य धातुवाच्यत्वावश्यकत्व इत्यर्थः । **युक्त्यन्तरमिति ।** अन्या युक्तिः । मयूरव्यंसकादित्वात्समास इति भावः । तदेव युक्त्यन्तरं स्पष्टयति—**अत इत्यादिना ।** यस्मात्कृञो व्यापारस्थानिकयत्नमात्रमर्थो न, किंतूत्पत्त्यनुकूलयत्नादिरेवेत्यत इत्यर्थः । **कर्मवत्स्यादिति ।** तथा च फलस्योत्पत्तिरूपस्य कर्मस्थतया कर्मवत्कर्मणेति कर्मवद्भावात्कर्मकर्तरि क्रियते घटः स्वयमेवेत्यादौ यगाद्योऽप्युपपद्यन्त इत्ययमनुकूलमिति भावः । यदि व्यापारस्थानिकयत्नमात्रमेवार्थः स्यात्तदा कर्मवद्भावो न स्यात् । व्यापारस्थानिकयत्न-

( धात्वाख्यातार्थनिर्णय. )

इति सूत्रं लक्ष्यते । अयमर्थः—यत एतस्योत्पादनार्थकताऽतः पच्यत ओदनः स्वयमेवेतिवत्क्रियते घटः स्वयमेवेति यगादयोऽप्युपपद्यन्ते । अन्यथा यत्नस्य कर्मनिष्ठत्वाभावात्तन्न स्यात्, दृशिवत् । यथा दृश्यते घटः स्वयमेवेति न, दर्शनस्य घटावृत्तित्वात्तथा यत्नस्यापीति तथाप्रयोगानापत्तेरिति ॥ ६ ॥

---

स्य घटादौ बाधात् । फलस्योत्पत्तिरूपस्य स्वीकारे तु पच्यते ओदनः स्वयमेवेतिवत् क्रियते घटः स्वयमेवेत्युपपद्यत इत्याशयः । सूत्रं लक्ष्यत इति । कर्मवत्पदघटितकर्मवत्कर्मणेतिसूत्रविहितं लक्ष्यत इत्यर्थः । अत एव सूत्रविहितं यगादीत्यन्वय उपपद्यते । सूत्रस्यैव लक्ष्यत्वे तस्य यगादीत्यनेनान्वयो न स्यात् । किंतु सूत्रं यगादीत्यनन्वितमेवावतिष्ठेतेति भावः । अत्रेदं बोध्यम्—कार्यातिदेशपक्षे साक्षादेव कर्मवत्कर्मणेतिसूत्रविहितत्वं यगादेरस्ति, शास्त्रातिदेशपक्षे तु परम्परयेति । तन्न स्यादिति । कर्मस्थया क्रियया तुल्या क्रिया फलरूपा फलसमानाधिकरणव्यापाररूपा वा यत्र तादृशः कर्ता कर्मवद्भवतीत्यर्थकस्य कर्मवत्कर्मणेतिसूत्रस्याप्राप्तेः, कृञः फलवाचकत्वाभावात्, तदर्थयत्नस्य तु घटादावचेतने बाधेनात्यन्तासत्त्वादित्यर्थः । ननु तत्र कर्मवद्भावाभावे इष्टापत्तिरेवेति चेन्न । कर्मवत्कर्मणेतिसूत्रे क्रियते घटः स्वयमेवेति कर्मवद्भावोदाहरणपरभाष्यविरोधापत्तेः । ननु घटादौ कर्मणि समवायसंबन्धेन यत्नस्यासत्त्वेऽपि विषयतासंबन्धेन यत्नस्य घटनिष्ठत्वमबाधितमेव । अत एव घटं जानातीत्यत्र फलतावच्छेदकविषयतासंबन्धेन ज्ञानस्य घटनिष्ठत्वेन कर्मत्ववद्यत्नस्यापि विषयतासंबन्धेन घटनिष्ठतया तस्य कर्मत्वाद् घटं करोतीति प्रयोग उपपद्यते । न चैवं घटं यतत इत्यपि स्यादिति वाच्यम् । यतिधातूपस्थितयत्नस्य विषयतया फलत्वव्यवहाराभावेन विषयतायाः फलतावच्छेदकत्वानङ्गीकारात् । एवं च कृञः केवलयत्नमात्रार्थकत्वेऽपि क्रियते घटः स्वयमेवेति भाष्योक्तं कर्मवद्भावोदाहरणमुपपन्नमेवेति चेन्न । दृश्यते घटः स्वयमेवेत्यादिप्रयोगापत्तेरित्याशयेनाऽऽह—यथा दृश्यते घट इति । घटावृत्तित्वादिति । दर्शनस्य = ज्ञानस्य घटमात्रनिष्ठत्वाभावेन कर्मस्थक्रियकत्वाभावाद्यथा दृश्यते घटः स्वयमेवेति कर्मवद्भावो न भवतीत्यर्थः । तथा कृञः केवलयत्नमात्रार्थकत्वे घटं करोतीत्यादेरुपपादनेऽपि यत्नस्यापि घटमात्रनिष्ठत्वाभावेन कर्मस्थक्रियकत्वाभावात्क्रियते घटः स्वयमेवेति कर्मवद्भावो न स्यादिति भावः । अयं भावः—‘ कर्मवत्कर्मणा तुल्यक्रियः ’ इति हि योऽयं कर्म-

( धात्वाख्यातार्थनिर्णयः )

नन्वेवं कृञादेरिव जानात्यादेरपि विषयावच्छिन्नावरणभङ्गादिफलवाचित्वमावश्यकम् । अन्यथा सकर्मकतानापत्तेः । तथा च ज्ञायते घटः स्वयमेवेति किं न स्यात् । एवं ग्रामो गम्यते स्वयमेवेत्याद्यपीत्याशङ्कां मनसि कृत्वाऽऽह—

---

वद्भाव उक्तः स तु कर्मस्थक्रियकाणामेव भवति, न तु कर्तृस्थक्रियकाणामिति सिद्धान्तः । यत्र कर्ममात्रवृत्ति फलं स कर्मस्थक्रियकः । यथा पचति भिनत्तीत्यादौ । न हि विक्लित्तिद्विधाभवनादिकं कथमपि कर्तृगतं भवतीति । यत्र तु कर्तृकर्मोभयवृत्ति फलं भवति स कर्तृस्थक्रियकः । यथा पश्यति घटं, गच्छति ग्रामं, इत्यादौ । पश्यतेश्चाक्षुषज्ञानरूपस्य फलस्य समवायविषयतासंबन्धाभ्यां कर्तृकर्मोभयनिष्ठत्वात् । गच्छतेः पुरोदेशसंयोगरूपस्य फलस्य च समवायसंबन्धेन कर्तृकर्मोभयनिष्ठत्वात् । एवं हासस्यापि चित्तवृत्तिविशेषस्य समवायविषयतासंबन्धाभ्यामुभयनिष्ठत्वं बोध्यम् । एवं च दृशेः फलस्य ज्ञानस्योभयनिष्ठत्वेन कर्तृस्थक्रियत्वात्कर्मस्थक्रियत्वाभावेन यथा दृष्टान्ते कर्मवद्भावो न प्राप्नोति तथा दार्ष्टान्तिकेऽपि यत्नस्य समवायविषयतासंबन्धाभ्यामुभयनिष्ठत्वेन कर्तृस्थक्रियकत्वात्कर्मस्थक्रियकत्वाभावेन कर्मवद्भावो नैव प्राप्नुयादिति परमार्थः । अधिकमग्रे वक्ष्यते ॥ ६ ॥

अतिप्रसङ्गमुद्भाव्य निराकर्तुं भूमिकामारचयति—एवमिति । स्वार्थफलव्यधिकरणेत्यादेरेव सकर्मकत्वव्यवहारप्रयोजकतया सिद्धान्तसंमतत्वेन क्रियते घटः स्वयमेवेत्यत्र कर्मवद्भावसिद्ध्यर्थं करोतेरुत्पत्तिरूपफलसहितयत्नवाचित्वाङ्गीकार इत्यर्थः । कृञादेरिति । आदिपदेन पच्यादिसंग्रहः । जानात्यादेरपीति । आदिपदेन गम्यादेः संग्रहः । विषयावच्छिन्नावरणभङ्गादिफलेति । अवच्छेदकतासंबन्धेन विषयनिष्ठावरणभङ्गरूपफलेत्यर्थः । आवरणभङ्गादीत्यादिपदेन संयोगादिग्रहणम् । अन्यथेति । उक्तविपरीत्ये । आवरणभङ्गादिफलावाचकत्वे, इत्यर्थः । अनापत्तेरिति । स्वार्थफलव्यधिकरणेत्यादेः सकर्मकत्वव्यवहारप्रयोजकस्य तत्राविद्यमानत्वादित्यर्थः । तथा चेति । आवरणभङ्गादिफलवाचकत्वे सतीत्यर्थः । किं न स्यादिति । क्रियते घटः स्वयमेवेत्यत्र यथा घट उत्पत्तिरूपफलाश्रयस्तथाऽऽवरणभङ्गरूपफलाश्रयोऽपि भवतीत्यतो ज्ञायते घटः स्वयमेवेति किं न स्यादित्यर्थः । तथा च स्वार्थफलेत्यादि-

( धात्वाख्यातार्थनिर्णयः )

**निर्वर्त्ये च विकार्ये च कर्मवद्भाव इष्यते ।**
**न तु प्राप्ये कर्मणीति सिद्धान्तो हि व्यवस्थितः ॥७॥**

ईप्सितं कर्म त्रिविधम्——**निर्वर्त्यं विकार्यं प्राप्यं च** । तत्राऽऽद्ययोः **कर्मवद्भावो** नान्त्ये । प्राप्यत्वं च क्रियाकृतविशेषानुपलभ्यमानत्वमिति सुबर्थनिर्णये वक्ष्यते । न ह्ययं घटः केनचिद्दृष्टो ग्रामोऽयं केनचिद्गत इति शक्यं कर्मदर्शने-

---

रूपं सकर्मकत्वं सिद्धान्तसंमतमपि स्वीकर्तुमयोग्यं भवतीति गूढाभिप्रायः । किंच गम्यते ग्रामः स्वयमेवेत्यादिप्रयोगापत्तिरूपो दोषोऽपीत्याशङ्क्याऽऽह——

**निर्वर्त्ये चेत्यादि** । ननु निर्वर्त्यविकार्यकर्मणोः कर्मवद्भावो भवति न प्राप्यकर्मणीत्यत्र किं बीजमित्यत आह——**सिद्धान्तोऽत्रेति** । कर्मवत्कर्मणेति सूत्रे भाष्य इत्यर्थः । तत्र हि धातोरेकाच इत्यतो धातोरित्यनुवर्तते । धातोर्वाच्यया क्रियया तुल्यक्रिय इत्यर्थात्करणत्वाद्यवस्थायां वस्तुतः सतोऽप्यसिस्थाल्योर्व्यापारस्य धातुवाच्यत्वाभावादेवासिश्छिनत्ति, स्थाली पचतीत्यादौ करणाधिकरणाभ्यां तुल्यक्रिये कर्तरि दोषानतिप्रसक्तेरतिरिच्यमानं कर्मणेति पदं कर्मस्थक्रियां लक्षयतीति सिद्धान्तो व्यवस्थापित इत्यर्थः । कर्मस्थक्रियकत्वं च प्राप्यभिन्नकर्मण्येव संभवतीति प्राप्यभिन्नकर्मस्वरूपं दर्शयितुमाह——**ईप्सितमिति** । कर्तुरीप्सिततमं कर्म त्रिधेत्यर्थः । तेनेप्सितभिन्नकर्मणाँ आधिक्येऽपि न दोषः । **प्राप्यत्वं चेति** । आद्ययोर्लक्षणे सुबर्थनिर्णये ग्रन्थकृदेव वक्ष्यति । **क्रियाकृतविशेषेति** । क्रियाकृतविशेषेण तद्विशिष्टत्वेनानुपलभ्यमानत्वमित्यर्थः । यद्वा अनुपलभ्यमानः क्रियाकृतविशेषो यत्रेति बहुव्रीहिः । राजदन्तादित्वाद्विशेषणस्य परनिपातः । तथा च यद्धातुकर्मणि प्रायः क्रियाकृतविशेषो नैवोपलभ्यते तद्धातुकर्म प्राप्यं कर्मेति फलितम् । **वक्ष्यत इति** । क्रियाकृतविशेषाणामित्यादिवाक्यप्रदीपेनेत्यर्थः । कर्मस्थविशेषोत्पादकक्रियार्थकत्वरूपं कर्मस्थक्रियकत्वं कर्मवद्भावप्रयोजकमिति स्पष्टयितुं तदन्वयं तद्व्यतिरेकं च प्रतिपादयति——**नहीत्यादिना** । यत्र कर्मदर्शनसमसमयं कर्मगतः क्रियाकृतविशेषः कश्चित् ज्ञातुं शक्यते तादृशं कर्म निर्वर्त्यं विकार्यं वा भवति । घटं करोतीत्यादौ स्वरूपलाभात्मको विशेषः । सोमं सुनोतीत्यादौ तु चूर्णीभावरूपो विशेष इति ज्ञेयम् । यत्र तु कर्मदर्शनेन कर्मगतः क्रियाकृतविशेषः कश्चिदपि नैवावगन्तुं शक्यस्तत्प्राप्यं कर्मेति अत उक्तं—

नावगन्तुम् । घटं करोतीति निर्वर्त्ये सोमं सुनोतीति विकार्ये च तज्ज्ञातुं शक्यमिति न तत्प्राप्यम् । तथा च घटादेर्दृश्यादौ प्राप्यकर्मत्वान्नोक्तातिप्रसङ्ग इति भावः । धातूनां फलावाचकत्वे त्यजिगम्योः पर्यायतापत्तिः, क्रियावाचकत्वाविशेषात् । फलस्योपलक्षणत्वेऽप्येकक्रियाया एव पूर्वदेशविभागोत्तरदेशसंयोगजनक-

---

केनचिद्दृष्टः, केनचिद्गत इति कर्मदर्शनेन ज्ञातुं सर्वथाऽशक्यमिति। तदेवमत्रेत्थमन्वयव्यतिरेकप्रयोगः--यत्र कर्मणि क्रियाकृतविशेषो दृश्यते तत्र कर्मवद्भावः, यत्र तु नैव दृश्यते न तत्र कर्मवद्भाव इति । तदाह---घटादेर्दृश्यादाविति । घटादेरित्यादिशब्देन ग्रामस्य संग्रहः । दृश्यादावित्यादिशब्देन गमेः परिग्रहः । तथा च दृशधात्वर्थनिरूपितघटरूपकर्मणः, गमधात्वर्थनिरूपितग्रामात्मककर्मणश्च प्राप्यकर्मत्वादित्यर्थः । नोक्तातिप्रसङ्ग इति । न कर्मवद्भावापत्तिरिति भावः । धातोः फलवाचकत्वस्यावश्यकत्वं युक्त्यन्तरमाह—धातूनामिति । फलावाचकत्वे धातूनां केवलव्यापारवाचकता पर्यवस्यति । संयोगरूपफलभाने गमधातोः, विभागरूपफलभाने च त्यजधातोः समभिव्याहारस्य नियामकत्वाच्च ग्रामं गच्छतीत्यत्र न विभागबोधप्रसङ्गः । नापि वृक्षं त्यजतीत्यत्र संयोगबोधातिप्रसङ्गश्च । त्यजिगम्योरिति । तादृशार्थकयोरवश्यानूपलक्षणम् । पर्यायतापत्तिः, क्रियावाचकत्वाविशेषादिति । त्यजिगम्योरेकमात्रक्रियावाचकत्वाविशेषादित्यर्थः । शक्यतावच्छेदकैकत्वे सति विभिन्नशक्यतावच्छेदकत्वस्यैव पर्यायतापदवाच्यत्वादिति भावः । एकस्या एव क्रियायाः संयोगविभागजनकत्वात्त्यजिगम्योः पर्यायतापत्तिरिति यावत् । तथा च गच्छति त्यजतीत्यनयोरविशेषापत्तिः । ग्रामं गच्छतीत्यर्थे त्यजतीति प्रयोगस्य, वृक्षं त्यजतीत्यर्थे गच्छतीति प्रयोगस्य चाऽऽपत्तिरित्यर्थः । ननु त्यजिगम्योरनुक्रमेण विभागसंयोगोपलक्षितव्यापारार्थकत्वमङ्गीक्रियते । ततश्च न पूर्वोक्तोऽविशेषापत्तिरूपो दोषोऽत आह—फलस्योपलक्षणत्वेऽपीति । उपलक्षणत्वं नाम तत्पदजन्यबोधविषयत्वेन शक्त्यविषयत्वम् । एकक्रियाया एवेत्यादिजनकत्वादिति । तथा च संयोगविभागयोर्गमित्यजिधात्वर्थव्यापारजन्यत्वस्य समानत्वाद् गमिधात्वर्थव्यापारे संयोग एवोपलक्षणं न विभागः, तथा त्यजिधात्वर्थव्यापारे विभाग एवोपलक्षणं न संयोग इत्यत्र विनिगमकाभावादुभयोरप्युभयत्र व्यापारे उपलक्षणत्वोपगमे निरुक्तापत्तिर्दुष्परिहरैवेति फलेऽपि धातोः शक्तिरवश्यमभ्युपगन्तव्येति भावः । धातोः फ-

( धात्वाख्यातार्थनिर्णयः )

त्वादुक्तदोषतादवस्थ्यमित्यपि वदन्ति। तस्मादावश्यकं सकर्मकाणां फलवाचकत्वम्। अकर्मणां तु तन्निर्विवादमेव। "भू सत्तायाम्" [भ्वा० ग०] इत्यनुशासनाच्च। अत एव द्व्यर्थः पचिरिति भाष्यप्रयोगः संगच्छत इति दिक् ॥७॥

एवं सिध्यतु फलव्यापारयोर्वाच्यत्वम्। किं त्वाख्यातवाच्यैव सा भावना, न धातोः। प्राधान्येन प्रतीयमानव्यापारस्य धात्वर्थतायाः "प्रकृतिप्रत्ययोः प्रत्य-

---

लवाचकत्ववादमुपसंहरन्नाह—**तस्मादिति**। उक्तयुक्तिभ्यः सकर्मकधातूनां फलवाचित्वमवश्यमेष्टव्यमित्यर्थः। **निर्विवादमिति**। स्वार्थफलसमानाधिकरणव्यापारवाचित्वरूपाकर्मकत्वस्य धातोः फलवाचित्वाभ्युपगममन्तराऽसंभवादित्यर्थः। **भू सत्तायामिति**। भ्वादिगणे फलस्यैव निर्देशाद्भवतीत्यादितः सत्तादिबोधस्य सर्वानुभवसिद्धत्वाच्चेत्यर्थः। **अत एवेति**। सकलधातूनां फलवाचकत्वादेवेत्यर्थः। **संगच्छत इति**। तण्डुलानोदनं पचतीत्यत्रस्तण्डुलान् विक्लेदयन्नोदनं निर्वर्तयतीति संप्रत्ययात्तण्डुलानां विकार्यकर्मत्वमोदनस्य निर्वर्त्यकर्मत्वमभिमतं तन्निर्वाहार्थमुत्पत्तिविक्लित्तिरूपफलद्वयार्थकत्वपरमेव 'द्व्यर्थः पचिः' इति भाष्यम्। एकस्यैव व्यापारस्योक्तफलद्वयजनकत्वात्। व्यापारद्वयपरत्वे त्वसंगतिः स्पष्टैवेति भावः। **दिगिति**। दिगर्थस्तु अकर्मकाणामपि फलवाचकत्वमावश्यकम्। अन्यथा धातुषु सत्तादिफलनिर्देशस्य वैफल्यापत्तेः। धातुसामान्यशक्तिस्वभावात्पचादेरिव भ्वादेरपि व्यापारबोधसंभवात्। किं च जानात्यादेः सकर्मकत्वाय ज्ञानाद्यनुकूलव्यापारवाचित्वमङ्गीकार्यम्। तथा च चक्षुर्जानातीत्यपि स्यात्। चक्षुष्यपि ज्ञानानुकूलचक्षुर्मनःसंयोगसत्त्वादिति चेन्न। स्थाली पचतीतिवदिष्टापत्तिग्रस्तमित्याशय इति ॥ ७ ॥

एवं समनन्तरोक्तयुक्तिभिः फलव्यापारयोर्वाच्यत्वे साधिते 'तिङ्प्रत्ययवाच्यैव भावना' इति मण्डनमिश्रानुयायिमतमाशङ्क्य निराकर्तुं भूमिकामारचयति—**एवं सिध्यत्वित्यादिना**। **वाच्यत्वमिति**। उक्तयुक्तिभिर्व्यापारस्य तिङन्तजन्यबोधविषयत्वे सिद्धेऽपि धातुवाच्यत्वेऽनिर्णयः, पचतीत्यत्र प्रकृतिप्रत्यययोर्द्वयोः क्रमेण पाकं करोतीति पदद्वयेन विवरणदर्शनाद्भावनायास्तिङ्वाच्यत्वस्यापि वक्तुं शक्यत्वादिति भावः। **न धातोरिति**। पचतीत्यतः पाकानुकूला भावनेत्येवं प्राधान्येन प्रतीयमानव्यापारस्य प्रत्ययार्थस्य प्राधान्यमिति नियमादाख्यात-( तिङ् ) वाच्यत्वस्यैव वक्तुमुचितत्वेन धातुवाच्यत्वं नैव वक्तुं शक्यमित्यर्थः। प्रत्ययार्थस्य प्राधान्यमिति नियमस्य तिङुपात्तसंख्यायास्तदुपात्तकर्तरि विशेषणत-

( धात्वाख्यातार्थनिर्णयः )

यार्थः प्रधानम् ” इति न्यायविरुद्धत्वात् । तदागमे हि दृश्यत इति न्यायविरुद्धत्वाच्च । एवं च स्वयुक्ताख्यातार्थव्यापारव्यधिकरणफलवाचकत्वं सकर्मकत्वमा-

---

याऽन्वयात्संख्याद्यव्यभिचारित्वादाह——तदागमे हीति । एतेन यजेतेत्यत्रैकवचनोपात्तैकत्वस्य करणत्वेन न क्रियायामन्वयः, किंतु प्रकृत्यर्थे, ‘प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वमिति व्युत्पत्तेरिति स्वीकारे एकत्वस्य यागाङ्गत्वाभावात्तदभावेऽपि यागावैगुण्यात्तदविनाशित्वमेव स्यादिति पूर्वपक्षे प्राप्ते—— ‘तदागमे हि तद्दृश्यते तस्य ज्ञानं यथाऽन्येषाम्’ इत्युत्तरार्थं जैमिनिसूत्रम् । तदर्थस्तु——शब्दवत्——शब्दवाच्यं यथा भवति तथोपलभ्यते एकत्वं, हि—यतः’ तदागमे——एकवचनश्रवणे दृश्यतेऽतस्तस्याङ्गत्वज्ञानं, यथाऽन्येषां विशेषणानां पशुलोहित्यादीनामिति । तथा च विशिष्टस्य तुल्याऽङ्गत्वबोधनेन पशुत्वादिवच्छब्दबोध्यस्यास्य विशेषणस्याङ्गत्वोपपत्तिरिति भावः । एवं च तत्र यथा एकवचनागमे एकत्वं दृश्यतेऽतस्तदर्थत्वमेवं पचतीत्यादावाख्यातश्रवणे सति व्यापारबोधात्तस्य तदर्थत्वमेवाङ्गीकार्यमन्यथोक्तन्यायविरोधापत्तेरिति भावः ।

नन्वेवं पूर्वोक्तसकर्मकत्वाकर्मकत्वविभागोच्छेदः, व्यापारस्य धात्वर्थत्वाभावात् । एवं धातूपात्तव्यापाराश्रयत्वात्मककर्तृत्वस्य दुर्वचत्वेन देवदत्तः पचतीत्यादौ देवदत्तादिरूपे कर्तरि प्रत्ययो न स्यादित्यतः सकर्मकत्वादिकमन्यादृशमेव वदति—एवं चेति । व्यापारस्य तिङ्प्रत्ययवाच्यत्वे चेत्यर्थः । स्वयुक्तेत्यादि । स्वं प्रकृतधातुः, तेन युक्तं यदाख्यातं तदर्थो यो व्यापारस्तद्व्यधिकरणं यत्फलं तद्वाचकत्वं सकर्मकधातुत्वमित्यर्थः । ननु फलसमानाधिकरणव्यापारवाचकभवतीत्यादेः पच्यादियुक्ताख्यातार्थव्यापारव्यधिकरणफलवाचकत्वात्सकर्मकत्वापत्तिरिति चेन्न । आख्याते स्वयुक्तेति विशेषणदानात् । यद्धातोः सकर्मकत्वं वक्तुमभीष्टं स धातुः स्वपदेन ग्राह्यः । अत्र च भवत्यादेः सकर्मकत्वमापादयितुमिष्टम् । तथा च भवत्यादियुक्ताख्यातार्थव्यापारसमानाधिकरणफलवाचकत्वेन तादृशाख्यातार्थव्यापारव्यधिकरणफलवाचकत्वाभावान्न भवत्यादेः सकर्मकत्वमित्यर्थः । स्वयुक्तत्वं च स्वाव्यवहितोत्तरवर्तित्वम् । तेन चैत्रः पचति, भवति घटः, इत्यत्र पच्युत्तराख्यातस्य भूधात्वव्यवहितयुक्तत्वेऽपि भूधात्वव्यवहितोत्तरवर्तित्वाभावान्न भवतावतिप्रसङ्ग इत्यादवस्थ्यम् । स्वोत्तरवर्तित्वमात्रनिवेशे तु घटो भवति पचति चैत्र इत्यत्र पच्युत्तराख्यातस्य भूधातूत्तरवर्तित्वेन तादृशाख्यातार्थव्यापारव्यधिकरणफलवाच-

( धात्वाख्यातार्थनिर्णयः )

ख्यातार्थव्यापाराश्रयत्वं च कर्तृत्वं वाच्यमित्यादि वदन्तं **मीमांसकंमन्यं** प्रत्याह--

**तस्मात्करोतिर्धातोः स्याद्व्याख्यानं न त्वसौ तिङाम्।**
**पक्ववान्कृतवान्पाकं किं कृतं पक्वमित्यपि ॥ ८ ॥**

तस्मादभिप्रायस्थहेतोः। स चेत्थं फलमात्रस्य धात्वर्थत्वे ग्रामो गमनवानिति प्रतीत्यापत्तिः। संयोगाश्रयत्वात्। फलानुत्पाददशायां व्यापारसत्त्वे पाको भवतीत्यनापत्तिः। व्यापारविगमे फलसत्त्वे पाको विद्यत इत्यापत्तिश्च। यत्तु भाव-

---

कत्वेन भूधातावतिप्रसङ्गः स्यात्। अव्यवहितत्वांशनिवेशे तु पच्युत्तराख्यातस्य भूधात्वव्यवहितोत्तरवर्तित्वाभावेन नातिप्रसङ्ग इति बोध्यम्। **कर्तृत्वमिति।** आख्यातार्थो यो व्यापारस्तदाश्रयत्वं कर्तृत्वं वक्तव्यमित्यर्थः। यथा चैत्रः पचतीत्यादौ चैत्रादेः। चैत्रो मैत्रेण पाचयतीत्यादौ प्रयोज्यप्रयोजकयोरपि णिजर्थाख्यातार्थाश्रयत्वात्कर्तृत्वम्। देवदत्तेन पच्यते देवदत्तेन स्थीयत इत्यत्राप्याख्यातार्थव्यापाराश्रयत्वाद्देवदत्तस्य कर्तृत्वं ज्ञेयम्। **इत्यादीति।** आदिशब्दात् स्वयुक्ताख्यातार्थव्यापारसमानाधिकरणफलवाचकत्वमकर्मकत्वं, स्वयुक्ताख्यातार्थव्यापारजन्यफलाश्रयत्वं कर्मत्वमित्यनयोः संग्रहः। **मीमांसकंमन्यमिति।** आत्ममाने खश्चेति खश्। इत्यादि वदन्तमात्मानं मीमांसकं मन्यमानं प्रत्याह--**तस्मात्करोतिरिति।** हेतोः पूर्वमनुक्तत्वादाह--**अभिप्रायस्थेति।** तस्मादिति तच्छब्दस्य बुद्धिस्थपरामर्शकत्वादिति भावः। **गमनवानिति प्रतीत्यापत्तिरिति।** भावार्थकल्युडन्तगमनशब्दार्थस्य संयोगरूपफलस्य ग्रामे सत्त्वाद् ग्रामः संयोगवानितिवद् ग्रामो गमनवानिति प्रयोगस्य साधुत्वापत्तेरित्यर्थः। **संयोगाश्रयत्वादिति।** अस्य ग्रामस्येत्यादिः। गमिधात्वर्थसंयोगरूपफलाश्रयत्वादित्यर्थः। **फलानुत्पादेति।** फलानुत्पादे पाको भवतीति प्रयोगस्य कस्याप्यसंमतत्वादाह--**व्यापारसत्त्व इति।** लक्ष्यैकचक्षुष्कदर्शनानुसारेणाऽऽह--**अनापत्तिरिति।** फलमुत्पद्यतां मा वा, व्यापारप्रवृत्तिदशायां पाको भवतीति प्रयोगस्य सर्वाभीष्टत्वादिति भावः। **व्यापारविगम इति।** व्यापारनाश इत्यर्थः। **इत्यापत्तिश्चेति।** व्यापारनाशे पाको विद्यत इति कस्याप्यननुमतत्वादुक्तं फलसत्त्व इति। व्यापारविगमेऽपि फलसत्त्वानुरोधेन पाको विद्यत इत्यापद्येत फलमात्रस्य धात्व-

प्रत्ययस्य घञादेरनुकूलव्यापारवाचकत्वान्नानुपपत्तिरिति, तन्न । कर्त्राख्यातवत् " कर्तरि कृत् " [ पा० सू० ३–४–६७ ] इत्यत एव तद्विधानलाभे भावे विधायकानुशासनवैयर्थ्यापत्तेस्तद्विरोधापत्तेश्च । अथ व्यापारोऽपि धात्वर्थ इत्यभ्युपेयमिति चेत्तर्हि धातुत एव सकलव्यापारलाभसंभवेनाऽऽख्यातस्य पृथक्शक्ति-

---

र्थत्वादिति भावः । उक्तदोषानुद्धरति—-यदीति । भावप्रत्ययस्येति । भावविहितल्युड्घञादेर्धात्वर्थफलानुकूलव्यापारवाचकत्वं स्वीक्रियत इत्यर्थः । नानुपपत्तिरिति । ल्युड्घञादिवाच्यव्यापारस्य ग्रामेऽसत्त्वान्न ग्रामो गमनवानिति प्रयोगापत्तिरित्यर्थः । एवं विक्लित्तेरनुकूलव्यापारस्य घञ्वाच्यस्य कर्तृतासंबन्धेन भवतीतिभवनादावन्वयान्नाप्युक्तापत्त्यापत्ती इत्यर्थः । तदेव निराचष्टे—-तन्नेति । ननु फलमात्रस्य धात्वर्थत्वे भावविहितघञादेः फलमात्रवाचकत्वस्यैव युक्तत्वात्कथं फलानुकूलव्यापारवाचकत्वमत आह—**कर्त्राख्यातवदिति** । अयं भावः—यथा लः कर्मणि चेति सूत्रेऽनुवृत्तकर्तरीत्यस्याऽऽकृत्यधिकरणन्यायाज्जातिप्रधाननिर्देशाद्वा कर्तृत्वपरत्वं, कर्तृत्वं च व्यापाराश्रयः कर्तेति परिभाषणात्कर्तृशब्दोपस्थापनीयत्वं प्रत्ययस्य च प्रकृतिजन्यबोधीयप्रकारभूतव्यापारवाचकत्वेन व्यापारे शक्तिरभ्युपगम्य लः कर्मणीति सूत्रेण व्यापारे लकारविधानं मीमांसकैरङ्गीक्रियते तथा ल्युड्घञादीनामपि कर्तरि कृत्, इत्यनेनैव सूत्रेण व्यापारे विधानसंभवात् ' भावे ' इति विधायकसूत्रवैफल्यापत्तेरित्यर्थः । तद्विरोधापत्तेश्चेति । ' भावे ' इति सूत्रस्थभाष्यविरोधापत्तेश्चेत्यर्थः । तत्र हि ' सत्त्वभूतो भावो घञादेरर्थः ' इत्युक्तम् । ' कर्तरि कृत् ' इत्यनेन व्यापारे कृतां विधाने तु लकारवदसत्त्वभूतव्यापारवाचकत्वं घञादेः स्यात् । ततश्च पूर्वोक्तभाष्यविरोधः स्पष्ट एवेति भावः । विरोधापत्तेश्चेति चो हेतौ, यतो वैयर्थ्यमतस्तद्विरोधापत्तिरिति योजनायामुक्तिवैचित्र्यमन्तरेण नाधिकं किमपि प्रतिपादितं स्यादिति बोध्यम् । म.म.हरिशास्त्रिकृतकाशिकाख्यटीकायां—तद्भाष्यविरोधेति प्रतीकस्य धृतत्वात्तदुपात्तवैयाकरणभूषणसारपुस्तके तादृश एव पाठ आसीदित्यनुमीयते, इत्यलम् । **इत्यभ्युपेयमिति।** पूर्वोक्तदूषणसमुदायपरिजिहीर्षया यत्नातिरिक्तो व्यापारोऽपि अपिशब्देन फलं धात्वर्थः, यत्न आख्यातार्थ इत्यङ्गीक्रियते चेदित्यर्थः । **सकलव्यापारलाभेति।** विनिगमनाविरहाद्यत्नोऽपि, अपिशब्दाद्व्यापारश्च धातुवाच्यत्वेनाऽऽश्रीयत इत्यर्थः ।

कल्पने गौरवमिति। पचतीत्यस्य पाकं करोतीति विवरणात्मा **करोतिर्धातोरेव** व्याख्यानं विवरणम्। अतस्तदपि नाऽऽख्यातार्थत्वे साधकमिति भावः। मीमांसकोक्तं बाधकमुद्धरंस्तन्मतं दूषयति—**न त्वित्यादिना। नासौ तिङां** व्याख्यानं **पक्ववानित्यादावनन्वयापत्तेरित्यर्थः**। अयं भावः —" प्रकृतिप्रत्ययौ सहार्थं

---

**गौरवमिति**। संख्यायां कालादौ चाऽऽख्यातस्य शक्तिरस्तु, न तु यत्नेऽपि। अन्यलभ्यतया पुनस्तत्र शक्तिकल्पनानौचित्याद्गौरवमित्यर्थः। धातोश्चेतनाचेतनसाधारणव्यापारवाचित्वादेव लः कर्मणीति सूत्रेण तिङां कर्तृकर्मवाचित्वं संगच्छते, संगच्छते च कर्तरि कृदित्यनेन ण्वुल्तृजादीनामिव घञादेरपि कर्तृवाचित्वप्राप्तौ तद्बाधनार्थं ' भावे ' इति विधायकानुशासनमपीति भावः। गौरवमित्यन्तेन ग्रन्थेन तस्मादित्यनेन सूचितोऽभिप्रायस्थहेतुसमुदायः स्पष्टीकृतः। उक्तहेतुसमुदायादेव करोतिः पच्यादिधातोरेव व्याख्यानं—विवरणं न तु पचतीत्यादिघटकतिङ्प्रत्ययस्येत्याह—**पचतीत्यस्येति**। पचतीत्यत्र भागद्वयं, पच्धातुस्तदुत्तरास्तिप्रत्ययश्चेति। तत्र पाकं करोतीति पदद्वयेन यद्विवरणं क्रियते तत्र पाकमिति कृधातुश्चेत्येतद्द्वयं पचतीत्येतद्घटकपच्धातोरेव विवरणं, न तु तद्घटकतिप्रत्ययस्येत्यर्थः। तथा च कृधात्वर्थः कृतिरपि व्यापारवद्धातुवाच्यैवेति भावः - **तदपीति**। पचतीत्यस्य पाकं करोतीति विवरणमपि तिङां भावनारूपव्यापारार्थकत्वं साधयितुं नालम्। अपिशब्देन प्रकृतिप्रत्ययार्थयोः प्रत्ययार्थस्य प्राधान्यमिति न्यायसमुच्चयः। सोऽपि न्यायो भावनायास्तिङर्थत्वं संसाधयितुं नालं, तस्य दूषयिष्यमाणत्वादिति भावः। **बाधकमिति**। भावनाया धात्वर्थत्वे प्रकृतिप्रत्यययोरिति न्यायविरोध इति मीमांसकोक्तं बाधकमित्यर्थः। **तन्मतमिति**। पचतीत्येतद्घटकपच्धातोः पाकमिति विवरणं तदुत्तरतिप्रत्ययस्य तु कृधातुरिति मीमांसकमतमित्यर्थः। दूषयति—दूषणोद्भावनेन प्रयाचष्टे—**न त्वसावित्यादिना**। असौ कृधातुस्तिङां व्याख्यानं—विवरणं न भवतीत्यर्थः। तद्विवरणं तु करोतीत्येतद्घटकस्तिप्रत्यय इत्याशयः। कृधातोस्तिङ्विवरणत्वाभावे हेतुमाह—**पक्ववानित्यादाविति**। सिद्धान्ते हि पक्ववानित्यत्र पच्धात्वर्थो न कर्मकारकं किंतु क्रियारूप एव। कर्म तु तण्डुलः। प्रकृतिप्रत्ययार्थयोः प्रत्ययार्थस्यैव प्राधान्यमिति नियमसंरक्षणाय तिङन्तस्थले प्रत्ययस्यैव व्यापारार्थकत्वं मीमांसकैरङ्गीक्रियते। वैयाकरणैस्तु प्रकृतिप्रत्ययार्थयोरिति व्युत्पत्तिर्न नियामिका किं

ब्रूतस्तयोः प्रत्ययार्थप्राधान्यम् ” इत्यस्य हि विशेष्यतया प्रकृत्यर्थप्रकारकबोधं प्रति तदुत्तरप्रत्ययजन्योपस्थितिर्हेतुरिति कार्यकारणभावः फलितस्तथा च पक्ववानित्यत्र पाकः कर्मकारकं क्तवतुप्रत्ययार्थः कर्तृकारकम् । तयोश्चारुणाधिकरणरीत्या वक्ष्यमाणास्मद्रीत्या चान्वयासंभव इति प्रकृतिप्रत्ययार्थयोरन्वयनियमस्यैवा-

तूत्सर्गवचनं तत् । यदि च सर्वत्र व्युत्पत्त्यनुसारेणैव बोधः स्वीक्रियेत तर्हि पक्ववानित्यत्रानन्वयापत्तिरिति दूषणं दीयते । तामेवानन्वयापत्तिं विशदयति—**अयं भाव इत्यादिना** । **सहार्थौ ब्रूत इति** । संबद्धार्थौ बोधयतः । अर्थद्वयमध्ये कस्य विशेष्यत्वं कस्य च विशेषणत्वमित्याशङ्कायामाह—**तयोरिति** । प्रकृतिप्रत्ययार्थयोर्मध्ये प्रत्ययार्थः प्रत्ययवाच्योऽर्थः प्रधानं—नाम प्रकृत्यर्थनिष्ठप्रकारतानिरूपितविशेष्यतावानित्यर्थः । पूर्वोक्तव्युत्पत्तिसिद्धकार्यकारणभावं शब्दतः प्रदर्शयति—**विशेष्यतयेति** । प्रकृत्यर्थनिष्ठप्रकारताकबोधे जननीये विशेष्यतासंबन्धेन तादृशप्रकृत्युत्तरप्रत्ययजन्यार्थोपस्थितिः कारणमित्यर्थः । पक्ववानित्यत्र प्रकृतिप्रत्ययार्थयोः परस्परानन्वयप्रयोजकमुभयोः कारकत्वं प्रदर्शयति—**पाकः कर्मकारकमिति** । पाकः फलांशः । तस्य व्यापारजन्यत्वात्फलस्यापि व्यपदेशिवद्भावेन फलाश्रयत्वाच्च कर्मत्वमित्यर्थः । **कर्तृकारकमिति** । कर्तरि क्त, इत्यनुशासनात्क्तवतुप्रत्ययार्थः कर्तृकारकमित्यर्थः । द्वयोः कारकयोः परस्परान्वयासंभवे प्रमाणमाह—अरुणाधिकरणरीत्याऽस्मद्रीत्या चेति । अरुणाधिकरणे हि—अरुणया पिङ्गाक्ष्या, एकहायन्या सोमं क्रीणातीत्यत्रारुणयेत्यादिपदत्रयेऽपि तृतीयोपात्तस्य करणकारकस्य पार्थक्येन क्रयभावनायामन्वयः—आरुण्यकरणिका पिङ्गाक्षीकरणिका एकहायनीकरणिका च या भावना तादृशभावनासाध्यभूतेन क्रयेण सोमं भावयेदिति बोधः । या चाऽऽरुण्यगुणविशिष्टा गौः सैव पिङ्गलवर्णाक्षिमती सैव चैकहायनविशिष्टेत्येवमभेदबोधस्तु पार्ष्ठिकः प्रत्यासत्तिन्यायाज्जायत इत्युक्तम् । तथा च कारकाणां क्रियायामेवान्वयो, न तु तेषां परस्परमन्वय इति स्पष्टमेव प्रतिपादितम् । तथा करोति क्रियां जनयतीति व्युत्पत्त्या कारकशब्दः क्रियाजनकपरः । क्रियाजनकमिति ज्ञाते जनकस्य च जन्याकाङ्क्षानियमेन का सा क्रियेति जिज्ञासोदयात्क्रियाया अपि जन्याया जनकाकाङ्क्षत्वया च तयोः क्रियाकारकयोरेव परस्परान्वयौचित्यरूपया कारकाणां क्रियायामेवान्वयनियमसाधिकया सुबर्थनिर्णये वक्ष्यमाणरीत्येत्यर्थः । **अन्वयासंभव इति** ।

भावे क्व प्राधान्यबोधक उक्तकार्यकारणभावः । न च—

" संबन्धमात्रमुक्तं च श्रुत्या धात्वर्थभावयोः ।
तदेकांशनिवेशे तु व्यापारोऽस्या न विद्यते " ॥

इति भट्टपादोक्तरीत्या संबन्धसामान्येन कारकाणामन्वयः शङ्क्यः, योग्यताविरहात् । अन्वयप्रयोजकरूपवत्त्वस्य तत्त्वात् । क्रियात्वमेव हि कारकान्वयि-

---

न ह्युक्तरीतिद्वयेन कारकाणां परस्परमन्वयः कथमपि संभवतीत्यर्थः । अत्रायं विशेषो बोध्यः——यन्मीमांसकमते अरुणया पिङ्गाक्ष्या एकहायन्या सोमं क्रीणातीत्यादौ विशेष्यविशेषणानां सर्वेषां क्रियायामन्वयः, परस्परमन्वयस्तु पार्ष्ठिको मानासिकः । वैयाकरणमते तु विशेषणविशिष्टविशेष्यस्येति । अत एव नीलोत्पलमित्यादौ सामर्थ्यात्समास उपपद्यते । नियमस्यैवासंभवेनेति । भवन्मते फलमात्रस्य धात्वर्थत्वेन पक्ववानित्यादिस्थले व्यभिचारात्प्रकृतिप्रत्ययार्थयोरन्वयनियमस्यैवासंभवेन क्व प्रत्ययार्थप्राधान्यबोधकः पूर्वोक्तकार्यकारणभावः ? स तु सुतरामसंभवीति क्वशब्देन सूचितमित्यर्थः । ननु पूर्वोक्तरीत्या कारकाणां मिथोऽन्वयासंभवेऽपि भट्टपादोक्तरीत्याऽन्वयः संभवेदित्याशङ्कते—न च——संबन्धमात्रमिति । यजेतेत्यत्र श्रुत्या——समानपदरूपया धात्वादिश्रुत्या, धात्वर्थभावयोः—धात्वर्थभावनयोः फलव्यापारयोरित्यर्थः । संबन्धमात्रं—संबन्धसामान्यमुक्तं, तत्र तृतीयादिविभक्त्यभावेन करणत्वादिविशेषरूपेणान्वयासंभवात्संबन्धसामान्येनान्वयः प्रतिपादितः, तदेकांशनिवेशे——तस्य संबन्धसामान्यस्य य एकांशः करणत्वादिसंबन्धविशेषस्तन्निवेशे तद्बोधने, अस्याः——श्रुतेः, व्यापारः——सामर्थ्यं, न विद्यते——नास्तीत्यर्थः । एवंच यथा यागसंबन्धिभावनेति बोधः, न तु यागकरणिका भावनेत्यर्थः । तथा प्रकृतेऽपि पाकसंबन्धी कर्तेत्यन्वयः संभवतीति कर्मत्वादिविशेषरूपेण बोध एव क्रियानिक्षेति शङ्कित्रभिप्रायः । फलस्य कारकत्वेनायोग्यत्वात्तथाऽन्वयोऽप्यसंभवेत्याह——योग्यताविरहादिति । ननु अर्थाबाधो योग्यतेति तादृशयोग्यतायाः सत्त्वाद्योग्यताविरहोक्तिरयुक्तेत्यत आह——अन्वयप्रयोजकरूपवत्त्वस्येति । कारकान्वयकरणे प्रयोजकं—हेतुभूतं यद्रूपं तादृशरूपवत्त्वस्य तथात्वाद्योग्यतारूपत्वादित्यर्थः । तादृशं रूपं तु कारकाणां धातूपस्थाप्यक्रिययैवान्वयनियमात्क्रियात्वं, तदेव च योग्यत्वमिति भावः । तदुक्तं

तावच्छेदकमिति वक्ष्यते, तदेतदाविष्कर्तुं विवरणेन धात्वर्थप्रत्ययार्थयोः कर्मत्वकर्तृत्वे दर्शयति—कृतवान्पाकमिति । वस्तुतः "प्रत्ययार्थः प्रधानम्" इत्यस्य यः प्रधानं स प्रत्ययार्थ एवेति वा, यः प्रत्ययार्थः स प्रधानमेवेति वा नार्थः । अजाऽश्वा छागीत्यादौ स्त्रीप्रत्ययार्थस्त्रीत्वस्यैव प्राधान्यापत्तेश्छाग्यादेरनापत्तेश्च । किं तूत्सर्गोऽयम् । विशेष्यत्वादिना बोधस्तु तथाव्युत्पत्त्यनुरोधात् । अत एव ने-

---

मूले—क्रियात्वमेव हीत्यादि वक्ष्यत इत्यन्तम् । अन्वयप्रयोजकरूपेणान्वयितावच्छेदकस्याभिधानम् । यद्धर्मावच्छिन्नेऽन्वयस्तस्यैव ह्यन्वयितावच्छेदकत्वं ज्ञेयम् । कारकाणां क्रियात्वावच्छिन्नेऽन्वयनियमात्क्रियात्वमेव हि कारकान्वयितावच्छेदकमिति तात्पर्यम् । तदेतदिति । कारकाणां मिथोऽनन्वयप्रयोजकमित्यर्थः । विवरणेनेति । तत्समानार्थकशब्दान्तरेण तदर्थकथनेनेत्यर्थः । पक्ववानित्यत्र प्रकृतिप्रत्ययार्थयोः कर्मत्वकर्तृत्वे दर्शयति—कृतवान्पाकमिति । क्तवत्वर्थकर्त्राक्षिप्यमाणभावनायां पाकस्य कर्मत्वेनान्वयसंभवाच्च पक्ववानित्यत्रानन्वय इत्याशयादुक्तं वस्तुत इति । प्रत्ययार्थः प्रधानमित्यस्येति । अत्रोद्देश्यविधेयभेदेन द्विधा नियमाकारः संभवतीत्याह—यः प्रधानमिति, यः प्रत्ययार्थ इति च । द्विविधनियमेऽपि व्यभिचारमाह—अजाऽश्वेत्यादि । यः प्रधानमिति प्रथमनियमेऽजादेर्विशेष्यस्य प्रत्ययार्थत्वाभावाद्व्यभिचारेण प्राधान्यं न स्यात् । किंतु स्त्रीप्रत्ययार्थस्यैव प्राधान्यापत्तिः । यः प्रत्ययार्थ इति द्वितीयनियमे व्यभिचारमाह—छाग्यादेरिति । अत्र स्त्रीत्वस्य प्रत्ययार्थत्वेऽपि धात्वर्थस्य प्रकारतया भानान्नियमव्यभिचारः, प्रकृत्यर्थस्य प्राधान्यानापत्तिश्चेति भावः । एवं च दूषणग्रस्तत्वात्प्रत्ययार्थः प्रधानमित्ययं न नियमः, किंतु सामान्यवचनमिति न तद्बलाद्व्यापारस्याऽऽख्यातार्थत्वं वक्तुं सुशकमित्याशयः । कथं तर्हि पचतीत्यादौ व्यापारस्य विशेष्यतया बोध इत्यत आह—विशेष्यत्वादिनेति । व्युत्पत्त्यनुरोधादिति । व्युत्पत्तिः—शब्दानामर्थविबोधकशक्तिग्रहः । तदनुरोधाद्वाक्यार्थविबोधकशक्तिग्रहानुरोधात् व्यापारविशेष्यकः शाब्दबोध इत्यर्थः । तथा च व्युत्पत्तिः अर्थविबोधकशक्तिग्रह एव व्यापारविशेष्यकशाब्दबोधनियामिका, न प्रत्ययार्थत्वादीति भावनाया धात्वर्थत्वेऽपि न प्राधान्यानुपपत्तिरिति भावः । यतो बोधो हि व्युत्पत्त्यनुसारी, न तु बोधानुसारिणी व्युत्पत्तिरित्यभियुक्तानुभवात् । मीमांसकैस्तु वाक्यार्थबोधे भावनायाः प्राधान्यं दृष्ट्वा त-

( धात्वाख्यातार्थनिर्णय. )

यायिकानां प्रथमान्तविशेष्यक एव बोधः । लक्षणायामालंकारिकाणां शक्यतावच्छेदकप्रकारक एव बोधो न नैयायिकादीनाम् । घटः कर्मत्वमानयनं कृतिरित्यादौ विपर्ययेणापि व्युत्पन्नानां नैयायिकनव्यादीनां बोधो न तद्व्युत्पत्तिविरहितानामन्येषां तन्निराकाङ्क्षमेवेति संगच्छते । अत एव " प्रधानप्रत्ययार्थवचनमर्थस्यान्यप्रमाणत्वात् " [ पा० सू० १–२–५६ ] इत्याह भगवान्पाणिनिः ।

---

दनुसारेण तस्या आख्यातप्रत्ययार्थत्वं कल्प्यत इति यत्तद् बोधानुसारेण व्युत्पत्तिकल्पनामिति अभियुक्तानुभवविरुद्धत्वादत्यन्तानुचितमित्याशयः । बोधस्य व्युत्पत्त्यनुसारित्वं प्रदर्शयति–**अत एवेति** । तादृशार्थबोधजनकशक्तिग्रहवशादेव प्रथमान्तविशेष्यक एव शाब्दबोधो नैयायिकैरङ्गीक्रियते । **शक्यतावच्छेदकप्रकारक एवेति** । येन रूपेण शक्यार्थबोधस्तस्यैव शक्यतावच्छेदकत्वनियमादालंकारिकैर्लक्षणायां गङ्गायां घोषः, जाता लता हि शैले, इत्यादौ गङ्गात्वलतात्वादिनैव लक्ष्यार्थप्रतीतिस्वीकाराद्विलक्षणशैत्यपावनत्वादिप्रतीतिचमत्कारो विपरीतपदप्रतिपाद्यं वैपरीत्यं च संगच्छत इत्युच्यते । नैयायिकास्तु गङ्गातीरे घोष इति वक्तव्ये गङ्गायां घोष इत्युक्तिसामर्थ्यादेव शैत्यपावनत्वादिप्रतीतिरित्याहुः । **घटः कर्मत्वमिति** । **विपर्ययेण**––वैपरीत्येन । **व्युत्पन्नानां**––घटः, कर्मत्वं, आनयनं, इत्येवमसंबद्धशब्दघटितवाक्ये आधाराधेयभावसंबन्धेन घटप्रकारककर्मत्वविशेष्यकबोधजनकताग्रहवतामित्यर्थः । **नैयायिकनव्यानामिति** । कर्मधारयसमासे नैयायिकशब्दस्य न्यायमधीते वेत्ति वेति व्युत्पत्त्या क्रियाशब्दत्वेन पाठकपाचकादिवदनियमेन पूर्वनिपातः कृतः । ' एकपदस्य पदान्तरव्यतिरेकप्रयुक्तान्वयाननुभावकत्वमाकाङ्क्षा ' इत्याकाङ्क्षास्वरूपम् । पदस्येति षष्ठ्यर्थो निष्ठत्वम् । पदनिष्ठमित्यर्थः । तथा च घटपदनिष्ठं कर्मत्वपदव्यतिरेकप्रयुक्तमन्वयाननुभावकत्वं समीक्ष्य निरुक्तवाक्याच्छाब्दबोधोऽभ्युपेयते यैस्तन्निर्देशार्थं नव्यपदमुपात्तम् । तथा च तादृशवाक्यादपि तेषामर्थबोधो जायते, तादृशव्युत्पत्तिरहितानां तु न जायते । तदुक्तं––**अन्येषां तन्निराकाङ्क्षमेवेति** । आधाराधेयभावसंसर्गेण शाब्दबोधे निराकाङ्क्षमित्यर्थः । इत्याद्युक्तं सर्वं संगच्छत इति भावः । **अत एवेति** । बोधस्य व्युत्पत्त्यनुसारित्वादेवेत्यर्थः । **प्रधानप्रत्ययार्थवचनमिति** । ( पा. सू. १ । २ । ५६ ) एतत्सूत्रस्वरससिद्धः––यः प्रधानं स प्रत्ययार्थः, इति पक्षः । सूत्रस्यार्थस्त्वेवम्––अत्राशिष्यमित्यनुवर्तते । तथा च

प्रधानं प्रत्ययार्थ इति वचनं न कार्यमर्थस्य तथाबोधस्यान्यप्रमाणत्वाद्व्युत्पत्त्य-नुसारित्वादिति हि तदर्थः। एवं सत्यपि नियामकापेक्षणे च "भावप्रधानमा-ख्यातम्" इति वचनमेव गृह्यतामिति सुधीभिरूह्यम्। "तदागमे हि" इति

---

'प्रधानं प्रत्ययार्थः, इति वचनं न कर्तव्यम्। तत्र हेतुमाह—**अर्थस्यान्येति**। अर्थस्य—विशेष्यत्वादिना बोधस्य लोकव्युत्पत्तिसिद्धत्वादिति। **एवं सत्यपीति**। व्युत्पत्त्यनुसारेण व्यापारस्य विशेष्यतया बोधसिद्धौ सत्यामपीत्यर्थः। **भावप्रधानमितिवचनमेवेति**। अन्यथा गणार्थैकेन कारणेन प्रकृतिप्रत्ययार्थयोरन्य-स्य व्यावृत्तिस्तस्यौत्सर्गिकत्वात् सामान्यवचनत्वाच्चैतस्य विशेषवचनत्वेनाप्रबलत्वा-दिदमेव धात्वर्थत्वेऽपि व्यापारस्य विशेष्यतया शाब्दबोधे प्रमाणत्वेनाऽऽदरणीय-मिति भावः। तत्राऽऽख्यातपदेन धातुरुच्यते। आख्यायते प्रोक्तः प्रधानभूतोऽ-र्थोऽनेनेति व्युत्पत्तेः। नामादिप्रकृतीनामेवोद्देशात्। 'नामान्याख्यातजानि' इति निरुक्ताच्च। न ह्याख्यातप्रत्ययजन्यं तदन्तजन्यं वा नाम संभवति?। अत एव 'सर्वं नाम धातुजमाह व्याकरणे शकटस्य च तोकम्' इति पूर्वोक्तनिरुक्त-समानार्थकं वाक्यं महाभाष्ये पठितम्। तथा च वाक्ये सर्वाशया प्रधानीभू-तार्थकत्वं धातुलक्षणं पर्यवस्यति। प्राधान्योक्तिस्तु तन्मुख्यविशेष्यक एव बोधो जायत इति स्फोरणाय, न तु तस्य लक्षणे निवेश इति भूषणकारमतानुयायिनः पन्थाः। नव्यवैयाकरणास्तु—तत्राऽऽख्यातपदेन तिङन्तं गृह्यते, आख्यातमाख्यातेनेत्यत्र तथैवार्थप्रतीतेः। 'चत्वारि पदजातानि नामाख्याते चोपसर्गनिपाताश्च' इत्युप-क्रमाच्च। भावकालकारकसंख्याश्चत्वारोऽर्था आख्यातस्य। तत्र—**भावप्रधान-मिति**। भावो धात्वर्थः। धात्वर्थश्च फलव्यापारान्यतरो बोध्यः। प्रधानं वि-शेष्यमिति यावत्। तथा च भावः प्रधानं यस्मिन्निति बहुव्रीहिः। आख्यातं तिङन्तं फलव्यापारान्यतरप्रधानकं बोधं जनयति। नामानि—प्रातिपदिकानि। सत्त्वप्रधानानि—सत्त्वं—द्रव्यं लिङ्गसंख्यान्वयि। तत्प्रधानानि—तद्विशेष्यकाणि ज्ञानानि अन्वयबोधात्मकानि जनयन्तीति भावः। यथा पचतीत्यत्र व्यापारप्र-धानको बोधः। पच्यते इत्यत्र फलप्रधानको विक्लित्त्यादिरूपार्थो बोध्यत इत्या-दिकमाहुः। एवं प्रधानं प्रत्ययार्थ इत्यस्यानादरणीयत्वं प्रतिपाद्य यः प्रत्ययार्थः स प्रधानमित्यर्थे मूलस्य, तदागमे हीति न्यायस्याप्यनादरणीयत्वं दर्शयितुमाह—**तदागमे हीत्यादि**। **अतिव्याप्तमिति**। अतिव्याप्तश्चातिव्याप्तं चेति पुंनपुंस-

( धात्वाख्यातार्थनिर्णयः )

न्यायो विवरणं चातिव्याप्तमित्याह—**किं कृतं पक्वमिति** । कृञा विवरणं प्रतीतिश्च पक्वमित्यत्रापीति तत्रापि भावना वाच्या स्यादिति भावः । नन्वस्तु तिङ इव कृतामपि भावना वाच्येत्यत आह—**अपीति** । तथा चोभयसाधारण्येन तत्प्रतीतेरुभयसाधारणो धातुरेव वाचक इति भावः । भवद्रीत्या प्रत्ययार्थ-

---

कयो 'नपुंसकमनपुंसकेन' इति नपुंसकैकशेषः, एकवचनं च । अतिव्याप्तमतिप्रसक्तं व्यभिचरितमिति यावत् । व्यभिचरितत्वमेव स्पष्टयति—**कृञेति** । अत्र किं कृतम् ? इति प्रश्नः, पक्वमित्युत्तरम् । एवं च प्रश्नोत्तररूपं विवरणम् । तत्र किं कृतमिति प्रश्ने किंविषयको व्यापारः कृत इत्यर्थप्रतीत्या व्यापारविषयस्य जिज्ञास्यत्वमवगम्यते । पक्वमित्यत्र कर्मणि क्तप्रत्ययः सामान्ये नपुंसकत्वं च । तथा च पक्वमित्यतो जिज्ञास्यविषयानवगमेनास्योत्तरत्वासंगत्या व्यापारबोधकत्वे स्वीकृते तस्य प्रत्ययार्थत्वाभावाव्द्यभिचार इत्यर्थः । पक्वमित्यपीत्यपिना पक्ववानित्यस्य समुच्चयः । तत्रापि भावनाया आक्षेपादिना प्रतीयमानत्वेऽपि प्रत्ययार्थत्वाभावेन व्यभिचारसंभवात् । **पक्वमित्यत्रापीति** । यथा पचतीत्यत्र पचधातोः पाकमित्यनेन तिप्रत्ययस्य च करोतीतिभावनार्थककृधातुना विवरणादाख्यातस्य भावनापरपर्यायव्यापारवाचित्वस्वीकारात्कृञा विवरणं प्राधान्येन व्यापारप्रतीतिश्च मन्यते मीमांसकैस्तद्वत्पक्वमित्यत्रापि क्तप्रत्ययस्य भावनार्थककृञा विवरणं भावनाप्रतीतिश्चास्तीति पक्ववान् पक्वमित्यत्रापि भावना प्रत्ययवाच्या स्यादिति तद्दागमे हीति न्यायस्य कृञा विवरणस्य चातिव्याप्तिरिति भावः । ननु यथा कृञा विवरणात्तद्दागमे हीति न्यायाच्च तिङां भावना वाच्येत्यङ्गीकृतं तथा कृत्प्रत्ययानामपि सा वाच्येति स्वीक्रियतां, तथा च नातिव्याप्तिरिति चेदाह—**अपीति** । अपिनाऽर्थान्तरं समुच्चीयते । तदेवार्थान्तरं प्रकटयति—**तथा चेति** । अयं भावः—तिङन्ते पचतीत्यादौ, कृदन्ते पक्वा पक्ववानित्यादौ चोभयत्रापि भावनाप्रतीतिरस्तीति तावन्निर्विवादमुभाभ्यामपि वादिप्रतिवादिभ्यां स्वीकृतम् । तत्र किं सा भावना धातुना प्रतिपाद्यतेऽथवा प्रत्ययेनेति जिज्ञासायां प्रत्ययेनेति चेत्प्रत्ययानामनेकत्वेनानेकेषु शक्तिकल्पनापत्त्या गौरवं भवति । तस्माद्धातुना प्रतिपाद्यत इति मन्तव्यम् । धातुस्तूभयत्रापि पचिरेक एवेत्येकस्मिञ्छक्तिकल्पनयाऽतिलाघवं भवतीत्याशयेनाऽऽह—**उभयसाधारण्येत्यादि** । तिङन्तकृदन्तोभयानुगतत्वेन भावनाप्रतीतेः सत्त्वादित्यर्थः । **धातुरेवेति** । उभयत्र घटकतयाऽ-

त्वात्प्राधान्यापत्तिश्चेति द्रष्टव्यम् ॥ ८ ॥

( व्यापारस्य धात्वर्थत्वे ) साधकान्तरमाह—

किं कार्यं पचनीयं चेत्यादि दृष्टं हि कृत्स्वपि ।
किं च क्रियावाचकतां विना धातुत्वमेव न ॥ ९ ॥

**कार्यमित्यत्र** "ऋहलोर्ण्यत्" [ पा० सू० ३ । १–१२४ ] इति कर्मणि ण्यत् । **पचनीयमित्यादौ** चानीयर् । आदिना ज्योतिष्टोमयाजीत्यादौ णिनिः करण उपपदे कर्तरि । एते च क्रियायोगमन्तरेणासन्तस्तद्वाच्यतां बोधयन्ति । विना क्रियां कारकत्वासंभवेन तद्वाचकप्रत्ययस्याप्यसंभवात् । न च गम्यमानक्रि-

नुप्रविष्टो धातुरेवैकत्वेन लाघवाद्भावनावाचक इत्येव कल्पनं समञ्जसमिति । दूषणान्तरमप्याह—**प्राधान्यापत्तिश्चेति** । तिङां भावनावाचकत्वे भावनयैवाऽऽक्षेपात्कर्मकर्त्रर्थप्रतीतिलाभसंभवेन प्रत्ययार्थत्वाद्भावनायाः प्राधान्यं यथोच्यते मीमांसकैस्तद्वत्कृतामपि भावनावाचकत्वे भावनाया एव प्राधान्यापत्तिः । तथा च पक्वस्तण्डुलः पक्ता चैत्र इत्यादौ सामानाधिकरण्यानापत्तिरुक्तातिव्याप्तिपरिहारासंभवश्च स्यादिति भावः ॥ ८ ॥

धातोरेव भावनावाचकत्वमित्यत्र साधकान्तरं प्रदर्शयन्नाह—**किं कार्यमिति** । अत्र किंशब्दो न प्रश्नार्थकः किंतु पूर्वत्रोपक्रान्तत्वात्तदनुसंधानमात्रेण छन्दोगताक्षरसंख्यापूरणार्थं प्रयुक्तः । अत एव तं परित्यज्यैव व्याख्याति—**कार्यमित्यत्रे ति** । ऋहलोर्ण्यदिति शास्त्रेण कर्मणि ण्यद्विहित इति शेषः । **अनीयरिति** । पचनीयमित्यादौ 'तव्यत्तव्यानीयरः' इति कर्मण्यनीयर्विधीयते । **णिनिरिति** । भूते, इत्यधिकृत्य 'करणे यजः, इति सूत्रेण यजेर्भूते कर्तरि णिनिर्विहित इत्यर्थः । एते—कर्माद्यर्थका ण्यदादयः । **क्रियायोगमन्तरेणासन्त इति** । क्रियान्वयिनामेव कारकत्वेन धातोर्व्यापाररूपक्रियावाचित्वाभावे क्रियान्वयासंभवेन कारकत्वासंभवः, तदसंभवे च 'कारके' इत्यधिकृत्य विहितानां कर्मादिसंज्ञानामप्यसंभवात्कर्माद्यर्थेऽसन्तोऽसंभाविता इत्यर्थः । **त द्वाच्यतामिति** । तथा च कर्माद्यर्थे ण्यदादीनां विधानान्यथासंभव एव भावनाया धातुवाच्यतां पीनत्वान्यथासंभवो रात्रिभोजनमिव बोधयति—सूचयतीत्यर्थः । एतदनुसंधायैवाऽऽह—**विना क्रियामित्यादि** । **कारकत्वासंभवेनेति** । क्रियान्वयित्वस्यैव कारकत्वात्क्रियामन्तरेण कारकत्वासंभव इत्यर्थः । ननु नेदं कर्माद्यर्थकण्यदादि-

( धात्वाख्यातार्थनिर्णयः )

यामादाय कारकयोग इति भाट्टरीतिर्युक्ता । आख्यातेऽपि तथात्वापत्तौ तत्रापि

विधानं धातोर्व्यापाररूपक्रियावाचकत्वे मानं ण्यदादीनां कर्माद्यर्थकत्वस्य प्रकारान्तरेणाप्युपपत्तिसंभवादन्यथानुपपन्नस्यैव मानत्वादित्याशङ्क्य समाधत्ते-न चेति।

भाट्टरीतिरिति । अयं भावः—पाचको देवदत्तः, पक्वस्तण्डुल इत्यादौ सामानाधिकरण्यानुभवानुरोधात्कृतां कर्तृकर्माद्यर्थकत्वमुक्त्वा धातोः फलमात्रवाचकत्वेन क्रियावाचकाभावात्कृदन्तस्थले क्रियाप्रतीतिर्न स्यात्, तत्प्रतीत्यभावे च कारकत्वादि च न स्यादिति कृतां कर्तृकर्माद्यर्थकत्वमनुपपन्नमित्याशङ्क्य क्रियां विना कारकत्वासंभवात्तत्र कर्तृकर्मादिकारकैरेव स्वस्वरूपलाभाय क्रियाऽऽक्षिप्यते, आक्षिप्तां तामादाय तत्संबन्धादेव कारकत्वं कारकार्थकः प्रत्ययश्चोपपद्यत इत्येवं भाट्टरीतिर्न युक्तेत्यर्थः । निरुक्तभाट्टरीतेरन्यत्र क्लृप्तरीतिविरुद्धत्वादयुक्तत्वं प्रतिपादयन्नाह—आख्यातेऽपीति । तिङन्तस्थले व्यापाररूपभावना न धातुवाच्या । तथा सति तस्याः प्राधान्येन प्रतीतिर्न स्यात् । किंतु तिङ्संज्ञकाख्यातवाच्यैव सा । वाक्यार्थबोधे सर्वतः प्राधान्येन तस्याः प्रतीयमानत्वात् । प्रकृतिप्रत्ययार्थयोः प्रत्ययार्थप्राधान्यस्य पाठक औपगव इत्यादौ क्लृप्तत्वात् । तदागमे हीति न्यायेन तस्या आख्यातप्रत्ययवाच्यत्वनिश्चयाच्च । तदुक्तम्—'प्रत्ययार्थं सह ब्रूतः प्रकृतिप्रत्ययौ सदा । प्राधान्याद्भावना तेन प्रत्ययार्थोऽवधार्यते' इति । न च तत्र कर्तृकर्मप्रतीतिर्न स्यात्तद्वाचकाभावादिति वाच्यम् । भावना—व्यापारः । व्यापारश्च नित्यं साश्रय एव । निराश्रयस्य व्यापारस्यासंभवात् । तथा च यद्याश्रय एव न स्याच्चेद्भावनाऽस्तितामेव न प्रतिपद्यत इति भावनाऽऽत्मस्वस्वरूपलाभाय कर्तारमाक्षिपत्याक्षेपादेव कर्तृकर्मणोः प्रतिपत्तिसंभवे किमिति तद्वाचकत्वमाख्यातस्य कल्पनीयमित्येवंरीत्या मीमांसकैः प्राधान्याद्भावनाया आख्यातवाच्यत्वं सिद्धान्तितम् । एवं सति यदि उपर्युक्ता भाट्टरीतिराश्रीयेत तदा—आख्यातेऽपि—तिङ्संज्ञकाख्यातेऽपीत्यर्थः । तथात्वापत्ताविति । कृत्संज्ञकप्रत्ययवत्तिङ्संज्ञकाख्यातप्रत्ययानामपि कर्तृकर्मवाचित्वं स्वीकृत्य ताभ्यां कर्तृकर्मभ्यां स्वस्वरूपलाभायाऽऽक्षिप्तां क्रियामादाय तिङां कर्तृकर्मवाचित्वोपपत्तौ सत्यामित्यर्थः । तत्रापीति । तिङ्संज्ञकाख्यातेऽपि, भावनायाः—व्यापारस्य, वाच्यत्वं—तिङ्वाच्यत्वं नैव सिध्येदित्यर्थः । तथा चान्यत्र क्लृप्तस्वसिद्धान्तविरुद्धत्वान्निरुक्ता भाट्टरीतिः कार्यमित्यादौ नाऽऽश्रयितुं युज्यत इति भावः । लिङ्गस-

भावनाया वाच्यत्वासिद्ध्यापत्तेः। अथ लिङ्गसंख्यान्वयानुरोधात्कर्तुर्वाच्यत्वमावश्यकमिति तेनाऽऽक्षेपाद्भावनाप्रत्ययोऽपि स्यादिति मतं तर्हि संख्यान्वयोपपत्तेराख्यातेऽपि कर्ता वाच्यः स्यात्। पक्ववानित्यादिकान्तकारकान्वयानुरोधाद्भावनाया अपि वाच्यत्वस्याऽऽवश्यकत्वाच्चेति भावः। अपि च हेत्वन्तरमुच्यते। तथाहि—नखैर्भिन्नो नखभिन्नः, हरिणा त्रातो हरित्रात इत्यादौ "कर्तृकरणे कृता बहुलम्" [ पा० सू० २–१–३२ ] इति समासो न स्यात्। पुरुषो राज्ञः,

ख्यान्वयेति। पक्ववान् पक्ववती, पक्वस्तण्डुल इत्यादौ विक्लित्त्यनुकूलव्यापारवदभिन्नः पुंस्त्वैकत्वविशिष्टश्चेत्यादिरीत्या शाब्दबोधोदयात्पुंस्त्वादिलिङ्गैकत्वादिसंख्यान्वयाय कृत्सु कर्तृकर्मादिवाच्यत्वमवश्यमाश्रयणीयमित्यर्थः। तेन—कर्तृकर्मादिना, स्वस्वरूपनिरूपकत्वेन व्यापारस्याऽऽक्षेपात्तत्प्रतीतिः स्यादित्येवं मन्यते चेदाख्यातेऽपि एकत्वादिविशिष्टो व्यापाराश्रय इति बोधादेकत्वादि संख्यान्वयाय कर्तृकर्मणी वाच्ये स्याताम्, पक्ववानित्यादौ भूतकालिको देवदत्तकर्तृको व्यापार इति बोधानुरोधेन व्यापारे विशेषणतया कालस्य कारकस्य चान्वयदानार्थं भावनाया अपि वाच्यत्वमवश्यमङ्गीकरणीयं स्यादित्यर्थः। कृत्स्वपीत्यपिना धातोर्व्यापारवाचकत्वावश्यकत्वे समुचितं हेत्वन्तरं प्रदर्शयति—तथा हीत्यादिना। नखैर्भिन्न इति। व्यापारजन्यद्विधाभवनं भिदिधात्वर्थः। कर्मणि क्तप्रत्ययः। नखैरिति करणे तृतीया। तथा च नखकरणकव्यापारजन्यविदारणाश्रयो हिरण्यकशिपुरिति बोधः। तत्र करोति क्रियां जनयतीति व्युत्पत्त्या क्रियाजनकस्य कारकत्वप्रतीतेः क्रियायाश्च जन्यत्वप्रतीतेर्जन्यक्रियाया जनककरणकारकसाकाङ्क्षत्वाज्जनककरणकारकस्य जन्यक्रियासाकाङ्क्षत्वाच्च परस्परमन्वयेन सामर्थ्याद्वैयाकरणमते नखभिन्न इति समासो भवति। एवं हरित्रात इत्यत्रापि समास उपपाद्यः। मीमांसकमते तु तिङामेव भावनारूपव्यापारवाचकत्वादत्र तिङभावेन व्यापाररूपक्रियाया अभावाद्गुणाधिकरणन्यायेन कारकाणां क्रिययैवान्वयात्परस्परं तदनन्वयेनासामर्थ्यान्नखभिन्नयोः करणकर्मकारकयोः समासो न स्यादित्यर्थः। समासाभावे सहेतुकं दृष्टान्तं प्रदर्शयन्नाह—पुरुषो राज्ञ इत्यादि। राजसंबन्धी पुरुषः, देवदत्तसंबन्धिनी भार्येत्येवमन्वये विवक्षिते राज्ञो भार्या इत्यनेन यथा समासो न भवति तयोः परस्परमनन्वयेनासामर्थ्यात्तद्वन्नखैर्भिन्न इत्यादौ समासो न स्यादिति भावः। सामर्थ्यमुपपादयितुं शङ्कते—न चा-

भार्या देवदत्तस्येत्यादिवदसामर्थ्यात् । न चाध्याहृतक्रियाद्वारा सामर्थ्यं वाच्यम् , दध्योदनो गुडधाना इत्यादिवत् । अन्यथाऽत्रापि " अन्नेन व्यञ्जनम् " [ पा० सू० २-१-३४ ] " भक्ष्येण मिश्रीकरणम् " [ पा० सू० २-१-३५ ) इति समासो न स्यादिति वाच्यम् । तत्र विध्यानर्थक्यादगत्या तथास्वीकारेऽपि

---

ध्याहृतेति । येन विना यदनुपपन्नं तत्तेनाऽऽक्षिप्यते इति न्यायेन नखैरित्यस्य करणकारकत्वेन कारकत्वस्य च क्रियाजनकत्वरूपत्वेन जनकत्वस्य च जन्यत्व-मन्तराऽनुपपन्नत्वात्तेन करणकारकेण स्वस्वरूपनिरूपकतयाऽऽक्षिप्यमाणां करोति-क्रियां गृहीत्वेत्यर्थः । **सामर्थ्यमिति** । अन्वययोग्यत्वरूपमित्यर्थः । तथा च नखकरणकव्यापारजन्यभेदाश्रयः = नखैः कृत्वा भिन्न इति शाब्दबोधजनना-दध्याहृतक्रियामादाय सामर्थ्यमुपपादनीयमित्यर्थः । एवमध्याहृतक्रियामादाय सा-मर्थ्योपपादने दृष्टान्तं प्रदर्शयन्नाह—**दध्योदन०इत्यादिवदिति** । दध्ना ओ-दनः, दध्योदनः । अन्नेन व्यञ्जनमिति तृतीयातत्पुरुषः । संस्कारकद्रव्यवाचकं तृतीयान्तमन्नेन समस्यत इति हि तत्सूत्रस्यार्थः । अत्र दध्नेति करणतृतीयान्तस्य विशेषणतया ओदनेऽन्वयस्य बाधाद्विभक्त्यर्थकारकस्य क्रियोपसर्जनत्वेन प्रतीति-नियमाद्विभक्त्यर्थकारकेण विना क्रियामनुपपद्यमानेनाऽऽक्षिप्यमाणोपसेकक्रियाद्वारा सामर्थ्यमङ्गीकृत्य समास उपपादितः । एवं गुडधाना इत्यत्र मिश्रणक्रियाद्वारा सामर्थ्यमुपपाद्य ' भक्ष्येण मिश्रीकरणम् ' इत्यनेन समासो बोध्यः । दध्नोपसि-क्तः, दधिकरणकोपसेकक्रियाजन्यफलाश्रय ओदनः, गुडेन मिश्रा धानाः, इति क्रमेण समासार्थो ज्ञेयः । एवं चात्रानुपपत्त्याऽऽक्षेप एवाध्याहारशब्दार्थः । यदि चात्राध्याहृतक्रियाद्वारा सामर्थ्योपपादनं नाङ्गीक्रियेत चेदसामर्थ्यात्समासो न स्या-दिति स्पष्टमेव । एतद्वन्नखभिन्न इत्यादावपि अध्याहृतक्रियाद्वारा सामर्थ्योपपाद-नमावश्यकमिति भावः । अनया रीत्या नखभिन्न इत्यादौ यदध्याहृतक्रियाद्वारा सामर्थ्योपपादनं तन्न युक्तिसहमिति निराचष्टे— **तत्र विध्यानर्थक्यादित्या-दिना** । अयं भावः—अन्नेन व्यञ्जनमित्यादेरनुशासनस्य पदविधित्वात्समर्थः पदविधिरितिपरिभाषोपस्थित्याऽध्याहृतक्रियान्तर्भावमन्तरा केवलं स्वरूपेण साम-र्थ्यरहितपदानां दध्यादीनां निरुक्तसूत्रेण समासविधानानुपपत्तेरगत्या दध्योदना-दावध्याहृतक्रियाद्वारा सामर्थ्योपपादनेन समासाङ्गीकारेऽपि हरिणा कृतं हरिकृत-

हरिकृतमित्यादौ साक्षाद्धात्वर्थान्वयेनापद्यमानस्य कर्तृकरणे इत्यस्याऽऽक्षेपेण परम्परासंबन्धे प्रवृत्त्ययोगात् । न चैकस्यां क्रियायामन्वयित्वमेव सामर्थ्यमिति शङ्क्यम् । असूर्यंपश्या इत्यादेरसमर्थसमासत्वानापत्तेः । इष्टापत्तौ कुतः सर्वा मूनिक-

---

मित्यत्र मीमांसकमतेऽपि कृधात्वर्थाधारव्यापारत्वात्तन्निरूपितकर्तृत्वं हरौ साक्षाद्विद्यते । तथा च प्रत्यासत्त्या कृत्प्रत्ययप्रकृतिभूतधातूपस्थाप्यक्रियानिरूपितकर्तृकरणवाचकतृतीयान्तं कृदन्तेन समस्यत इति कर्तृकरणे कृतेत्यस्यार्थः क्रियायामनन्याहत्यैव साक्षाद्धात्वर्थान्वयेन शास्त्रस्य चरितार्थत्वेन कर्तृत्वाद्यन्यथानुपपत्त्याऽऽक्षिप्यमाणस्वकर्तृकादिक्रियाजन्यत्वपरम्परासंबन्धमादाय हरित्रात इत्यादौ तत्प्रवृत्तेरयोगात्, मुख्याभाव एव गौणग्रहणं युज्यते नान्यथेत्यर्थादिति भावः । नखभिन्न इत्यादौ मीमांसकरीत्या सामर्थ्योपपादनमाशङ्कते—न चैकस्यामिति । एकस्यामेव क्रियायां कर्मादिभावेन पदार्थयोरन्वयस्तयोः पदयोस्तदेवैकक्रियान्वयित्वमेव सामर्थ्यमिति मीमांसकैरङ्गीकृतम् । अत एव नीलोत्पलमित्यादौ समासः सिध्यति । एकक्रियान्वयित्वरूपसामर्थ्यानाश्रयणे तु नीलोत्पलमित्यादौ सामर्थ्याभावात्समासो न स्यात् । तथा हि—नीलशब्दोऽन्वयव्यतिरेकाभ्यां नीलगुणपरः । उत्पलशब्दस्तूत्पलत्वविशिष्टद्रव्यपरः । अथवा सोऽप्याकृत्यधिकरणन्यायेनोत्पलत्वजातिपरोऽस्तु । उभयथाऽपि नीलोत्पलशब्दयोः सामानाधिकरण्येन परस्परमन्वयस्य बाधेनासामर्थ्यात्समासो न प्राप्नोति । उत्पलमस्ति इत्युत्पलस्य कर्तृत्वेनास्तिक्रियायामन्वयः, तादृगुत्पलनिष्ठं च नीलरूपमित्याश्रयद्वारा नीलस्यापि तथाऽस्तिक्रियायामन्वयः । अथवोत्पलमुद्दिश्यास्तीति सत्ता विधीयते, तादृशमुत्पलामुद्दिश्य तदाश्रयत्वेन नीलगुणो विधीयत इत्येकस्यामस्तिक्रियायां कारकभावेनोद्देश्यविधेयभावेन वाऽन्वयान्नीलोत्पलशब्दयोरेकक्रियान्वयित्वात्मकसामर्थ्यसत्त्वात्समासो निर्बाध इत्यादि वदद्भ्यो मीमांसकेभ्यो नमोऽस्तु । तथा च प्रकृतेऽपि नोक्तपरम्परासंबन्धेन तयोरन्वयः, किंतु एकक्रियान्वयित्वरूपमेव सामर्थ्यं तच्च नखैरित्यस्य करणत्वेन करोतिक्रियायामन्वयाद्भिन्न इत्यस्य च तस्यामेव कर्मत्वे-(स्वनिष्ठविदारणजनकत्वे)नान्वयादस्तीति न समासानुपपत्तिरित्याशयः शङ्कितुरिति भावः । तदेतद्दूषयति—असूर्यंपश्या इत्यादिना । असूर्यललाटयोर्दृशितपोः, इत्यस्यायमर्थः—असूर्ये ललाटे च कर्मण्युपपदे दृशेस्तपेश्च खश् स्यादिति । तथा चासूर्यशब्दे उपपदे दृशेः खशि शित्त्वात्सार्वधातुकत्वे पश्यादेशे, अकारान्त-

( धात्वाख्यातार्थनिर्णयः )

येत्यत्र कृतः सर्वमृत्तिक इत्यापत्तेः। न चात्र समासविधायकाभावः। "सह सुपा" [पा० सू० २-१ ४ ] इत्यारम्भात् । अन्यथाऽसमर्थसमासोऽपि विधायका-

इजन्तस्येति पूर्वपदस्य मुमागमे असूर्यंपश्येत्यस्य सिद्धिः । सूर्यकर्मकदर्शनाभाववन्त इति बोधः । असमर्थेति । असूर्यंपश्या राजदारा इत्यत्र दर्शनक्रियाया एवाभावबोधेन सूर्यशब्दार्थेन नञर्थस्यान्वयविरहादसमर्थसमासत्वेनाभिमतो भाष्यकारादेरित्यर्थः । अनापत्तेरिति । तव मते तदसमर्थसमासत्वं भज्येत । सूर्यं न पश्यन्तीत्यर्थे नञर्थप्रसज्यप्रतिषेधस्य दर्शनक्रियायामन्वयात्सूर्यस्यापि तस्यामेव कर्मतयाऽन्वयादेकक्रियान्वयित्वरूपसामर्थ्यसत्त्वादित्यर्थः । इत्यादेरित्यादिना अश्राद्धभोजीत्यादिर्ग्राह्यः । श्राद्धं न भुङ्क्ते इत्यर्थेन तस्याप्यसमर्थसमासत्वात् । ननु दर्शनक्रियायामेवोभयोरन्वयाद् भवत्वसूर्यंपश्येत्यादेः समर्थसमासत्वं का हानिरिति चेदाह---इष्टापत्ताविति । कृतः सर्वो मृत्तिकया इत्यर्थे कृतः 'सर्वमृत्तिकः' इति सर्वमृत्तिकयोः समासापत्तिः । मृत्तिकायाः करणत्वेन, सर्वशब्दार्थस्य च कर्मत्वेन कृधात्वर्थेऽन्वयेनैकक्रियान्वयित्वरूपसामर्थ्यसत्त्वादित्यर्थः । अस्मन्मते तु मृत्तिकायाः करणकारकत्वेन कारकस्य च क्रिययैवान्वयनियमात्सर्वशब्दस्य क्रियाशब्दत्वाभावेनान्वयायोग्यतयाऽसामर्थ्यान्नैव समासो भवतीति भावः । सामर्थ्याभावादेव च सर्वश्चर्मणा कृत इत्यर्थे 'सर्वचर्मणः' इति निपातनात्समास इत्युक्तं सर्वचर्मणः कृतः खखञाविति सूत्रे । नन्वेकक्रियान्वयित्वेन सर्वमृत्तिकयोः सामर्थ्यसत्त्वेऽपि कर्तृकरणे कृतेत्यनेन करणतृतीयान्तस्य कृदन्तेन समासविधानेन सर्वशब्दस्य कृदन्तत्वाभावात्समासविधायकाप्राप्त्या समासो न स्यादित्याशङ्क्याऽऽह— न चात्रेति । सर्वमृत्तिक इत्यत्र समासविधायकाभावो नैव मन्तव्यः । सर्वशब्दस्य कृदन्तत्वाभावेन कर्तृकरणे कृतेत्यस्याप्राप्तावपि 'सह सुपा' इत्यस्यैव विधायकस्य सत्त्वादित्यर्थः । ननु सह सुपेत्यस्य समासविधायकत्वाभावे का हानिरिति चेत्तत्राऽऽह---अन्यथेति न स्यादिति । तथा चासमर्थसमास इत्युक्तिर्भाष्यकृदादेर्न संगच्छेतेति भावः । ननु सिद्धान्ते सह सुपेत्यगतिकगतित्वात्समर्थपरिभाषाविषयत्वाच्च नात्राऽऽश्रीयते । अन्यथा द्वितीया श्रितेत्यादिसूत्रैस्तत्तत्समासविधानं व्यर्थं स्यात् । सह सुपेत्यत्र समर्थपरिभाषानुपस्थितिश्च कल्पनीया स्यात् । असमर्थसमास इत्युक्तिस्तु निपातनात्समास इत्येवंपरतया निर्वाह्या । तथा च विधायकाभावदनभिधानाद्वा सर्वमृत्तिक इति समासो न स्या-

भावान्न स्यादिति । किं च भावनायास्तिङर्थत्वे भावयति घटमितिवद्भवति घटमित्यपि स्यात् । धात्वर्थफलाश्रयत्वरूपकर्मत्वसत्त्वात् । न चाऽऽख्यातार्थव्यापाराश्रयत्वेन कर्तृत्वात्तत्संज्ञया कर्मसंज्ञाया बाधान्न द्वितीयेति वाच्यम् । आख्यातार्थव्यापाराश्रयत्वस्य कर्तृत्वे पाचयति देवदत्तो विष्णुमित्रेण यत्र विष्णुमित्रस्या-

दित्याशयवानाह——किं चेति । भावयति घटमिति । भावनाया णिजर्थत्वे फलमात्रं धातोरर्थः । तथा च भूधातोरुत्पत्तिरर्थः । णिजर्थश्च व्यापारः । तस्य चानुकूलतासंसर्गेणोत्पत्तावन्वयः । उत्पत्त्यनुकूलो व्यापार इत्यर्थः । तथा च भावयति घटमित्यत्र णिजर्थव्यापारजन्योत्पत्त्याश्रयत्वाद्घटस्य कर्मसंज्ञायां कर्मणि द्वितीया यथा भवति तथा भवति घटः इत्यत्रापि भूधातोरुत्पत्तिरर्थः । तिङश्च व्यापारोऽर्थः । अनुकूलतासंसर्गेणान्वये उत्पत्त्यनुकूलो व्यापार इत्यर्थः संपन्नः । तथा च तिङर्थव्यापारजन्योत्पत्त्याश्रयत्वाद्घटस्य कर्मसंज्ञायां द्वितीयापत्तौ भवति घटः इत्यस्य स्थाने भवति घटमिति स्यात् । धात्वर्थफलेति । उभयत्रापि घटस्य भूधात्वर्थोत्पत्तिरूपफलाश्रयत्वेन कर्मसंज्ञायाः सत्त्वादित्यर्थः । एवं भावनायाः प्रत्ययार्थतावादिमतोपरि वैयाकरणैर्दत्तं दूषणमुद्धर्तुमाशङ्कते—न चाऽऽख्यातेति । अयं भावः——णिजन्ते प्रयोजकव्यापारो णिजर्थः, स एव णिजन्तोत्तरतिङ्प्रत्ययेनानूद्यते न तु प्रयोज्यव्यापार उच्यते । अणिजन्ते तु तिङ्प्रत्ययेन प्रयोज्यव्यापार आख्यायते । एवं च दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यम् । तथा च घटं भावयतीत्यत्र घटस्य कर्तृत्वाभावे सति णिजर्थव्यापारनिरूपितं कर्मत्वं निरपवादमिति द्वितीया भवति । घटो भवतीत्यत्र त्वाख्यातार्थव्यापाराश्रयतया कर्तृसंज्ञया बाधितत्वान्न घटस्य कर्मत्वमित्यर्थ इति । वैयाकरणास्तदिदं दूषयन्ति——आख्यातार्थव्यापारेति । अण्यन्त( शुद्ध )धातुसमभिव्याहृताख्यातार्थव्यापाराश्रयस्य कर्तृत्व इत्यर्थः । पाचयति देवदत्त इति । पचति विष्णुमित्र इत्यण्यन्तावस्था । पाचयति देवदत्तो विष्णुमित्रेणेति ण्यन्तावस्था । तत्र ण्यन्तावस्थायामाख्यातार्थव्यापाराश्रयत्वेन विष्णुमित्रस्य कर्तृत्वेऽपि ण्यन्तस्थले णिजर्थस्य प्रयोजकव्यापारस्यैवाऽऽख्यातप्रत्ययेनाभिधानात्तादृशाख्यातार्थव्यापाराश्रयत्वेन प्रयोजकदेवदत्तस्यैव कर्तृत्वं स्यान्न तु प्रयोज्यस्य विष्णुमित्रस्य ण्यन्तधातुसमभिव्याहृताख्यातार्थव्यापाराश्रयत्वाभावात् । तथा च विष्णुमित्रस्य कर्तृसंज्ञाया अभावेन कर्तृकरणयोस्तृतीयेति तृतीया न स्यादित्यनिष्टापत्तिरित्यर्थः । मन्मते तु न

( धात्वाख्यातार्थनिर्णयः )

कर्तृतापत्तौ तृतीयानापत्तेः । ग्रामं गमयति देवदत्तो विष्णुमित्रमित्यत्र विष्णुमि- दोषः । विक्लित्त्यनुकूलव्यापारानुकूलव्यापारः पाचयतेरर्थः । तत्र णिच्प्रकृतिभूत- पच्धातुवाच्यव्यापाराश्रयत्वेन विष्णुमित्रस्य कर्तृत्वात्तृतीयोपपत्तेः सुवचत्वात् । **ग्रामं गमयतीति** । णिजन्तस्थले पूर्वोक्तरीत्या प्रयोज्यस्य विष्णुमित्रस्य कर्तृ- त्वाभावेन कर्तृनिष्ठव्यापारजन्यफलाश्रयस्य कर्तुरीप्सिततममित्यनेन विहिता कर्म- संज्ञा विष्णुमित्रनिष्ठव्यापारजन्यफलाश्रयस्यापि ग्रामस्य न स्यात् । ग्रामं गच्छति विष्णुमित्र इत्यण्यन्तस्थले मीमांसकमते विष्णुमित्रस्याऽऽख्यातार्थव्यापाराश्रयतया कर्तृसंज्ञायां तादृशकर्तृनिष्ठव्यापारजन्यधात्वर्थसंयोगफलाश्रयस्य ग्रामस्य कर्मसं- ज्ञायां सत्यां यथा गमिकर्मता भवति तद्वण्णिजन्तस्थले विष्णुमित्रनिष्ठव्यापार- जन्यधात्वर्थसंयोगफलाश्रयस्यापि ग्रामस्य गमिकर्मता (कर्तृनिष्ठव्यापारजन्यगमि- धात्वर्थसंयोगरूपफलाश्रयता) न स्यात् । तदानीं विष्णुमित्रस्य पूर्वोक्तरीत्या कर्तृ- संज्ञाया अभावात् । ततश्च ग्रामशब्दोत्तरं द्वितीया न स्यादिति भावः । ननु वै- याकरणमतेऽपि कर्तुरीप्सिततममिति सूत्रे कर्तृपदं न कर्तृसंज्ञापरं किंतु स्वतन्त्रमात्र- परमित्यवश्यं वक्तव्यम् । अन्यथा देवदत्तो विष्णुमित्रं ग्रामं गमयतीत्यत्र प्रयो- ज्यस्य विष्णुमित्रस्य गतिबुद्धीतिसूत्रेण कर्मसंज्ञाया विधानेन कर्तृसंज्ञाया विरहा- द्ग्रामस्य कर्मसंज्ञानापत्तेः । तथा च ममापि मते नायं दोषः—प्रयोज्यस्य वि- ष्णुमित्रस्य धात्वर्थसंयोगानुकूलव्यापाराश्रयत्वरूपस्वातन्त्र्यसत्त्वादिति चेन्न । मी- मांसकस्य तव मते आख्यातार्थव्यापाराश्रयत्वस्यैव स्वातन्त्र्यपदार्थत्वात् । कार- कमात्रे धात्वर्थफलानुकूलव्यापारसत्त्वेन त्वदुक्तस्वातन्त्र्यस्य कर्मादावतिव्याप्तत्वा- दिति बोध्यम् । ननु ण्यन्तधातुसमभिव्याहृतस्याऽऽख्यातस्य प्रयोज्यप्रयोजकैतदुभ- यनिष्ठव्यापारवाचत्वं स्वीक्रियते । ततश्चाऽऽख्यातार्थव्यापाराश्रयत्वेन प्रयोज्यप्रयो- जकयोरुभयोरपि कर्तृत्वं सिध्यति । तेन च पाचयति विष्णुमित्रेणेत्यत्र विष्णुमि- त्रस्य कर्तृत्वात्तत्र कर्तरि तृतीया सिध्यति । सिध्यति च ग्रामं गमयतीत्यत्र प्रयो- ज्यकर्तृविष्णुमित्रनिष्ठव्यापारजन्यधात्वर्थसंयोगरूपफलाश्रयत्वेन ग्रामस्य गमिकर्म- ता चेतिचेन्न । घटं भावयतीत्यत्र प्रयोज्यस्य घटस्यापि आख्यातार्थव्यापाराश्र- यत्वेन कुलालस्येव कर्तृतापत्तौ कर्मसंज्ञां बाधित्वा परत्वात्कर्तृसंज्ञैव स्यात् । तथा च घटो भवतीत्यत्रेव भावयति घटमित्यस्य स्थाने भावयति घट इति प्रथमा स्यात् । उभयत्रापि घटे आख्यातार्थव्यापाराश्रयत्वेन कर्तृत्वसत्त्वादित्यर्थः । न

त्स्याकर्तृतापत्तौ ग्रामस्य गमिकर्मतानापत्तेश्च । तथा च ग्रामाय गमयति देवदत्तो विष्णुमित्रमित्यपि न स्यात् । "गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनि" [ पा० सू० २-३-१२ ] इति गत्यर्थकर्मण्येव चतुर्थीविधानात् , एतेन णिजन्त आख्यातार्थं उभयं तदाश्रयत्वाद्देवदत्तविष्णुमित्रयोः कर्तृत इत्यपास्तम् ।

---

च प्रयोजकनिष्ठणिजर्थव्यापारजन्यधात्वर्थसंयोगफलाश्रयत्वेन ग्रामस्य कर्मत्वं संभवति तत एव च द्वितीया निर्वहतीति वाच्यम् । तथा सति ग्रामस्य णिजन्तकर्मत्वेऽपि गमिकर्मत्वाभावस्य तदवस्थत्वादिति भावः । ननु ग्रामस्य गमिकर्मत्वाभावे का हानिरिति चेत्तत्राऽऽह—**तथा चेत्यादिना** । **इत्यपि न स्यादिति** । ग्रामाय गमयतीति ग्रामस्य गमिकर्मत्वाभावे गत्यर्थकर्मणीति चतुर्थ्यपि ग्रामपदोत्तरं न स्यादित्यर्थः । ग्रामपदोत्तरं चतुर्थ्यभावे कारणमाह—**गत्यर्थकर्मणीति** । अध्वभिन्ने गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ स्तश्चेष्टायां गतावितित सूत्रस्यार्थः । त्वन्मते गत्यर्थकर्मत्वं च संयोगरूपगत्यर्थकधातुसमभिव्याहृताख्यातार्थव्यापाराश्रयरूपकर्तृनिष्ठाख्यातार्थव्यापारजन्यफलाश्रयत्वेनेच्छाविषयत्वरूपं वाच्यम् । गम्लृ गतौ, गल, हुल, पत्लृ गतौ, अट, पट गतौ, रघि, लघि गत्यर्थाः, एवमादिर्गत्यर्थको यो धातुस्तादृशधातुसमभिव्याहृतं यदाख्यातं तिङ्प्रत्ययस्तदर्थो यो व्यापारस्तदाश्रयः कर्ता, तादृशकर्तृनिष्ठो यो व्यापारस्तज्जन्यं यत्संयोगरूपधात्वर्थफलं तदाश्रयत्वेनेच्छाविषयो यद्ग्रामादि तद्गत्यर्थकर्म भवति मीमांसकमतेनेत्यर्थः । तथा च प्रयोजकनिष्ठणिजर्थव्यापारप्रयोज्यगमिधात्वर्थसंयोगरूपफलाश्रयत्वेन ग्रामस्य णिजन्तकर्मत्वाद्द्वितीयोपपत्तावपि, णिजन्तसमभिव्याहृताख्यातप्रत्ययस्य प्रयोजककर्तृनिष्ठणिजर्थव्यापाराभिधायित्वेन प्रयोज्यस्य कर्तृत्वाभावात्तादृशाख्यातार्थव्यापाराश्रयरूपकर्तृनिष्ठव्यापारजन्यगमिधात्वर्थसंयोगरूपफलाश्रयत्वात्मिका गमिकर्मता ग्रामस्य न संभवतीति गत्यर्थकर्मणि विहिता चतुर्थी तत्र नैव स्यादिति भावः । अत्रेदं बोध्यम्—ग्रामस्य विष्णुमित्रनिष्ठव्यापारजन्यधात्वर्थसंयोगफलाश्रयत्वेऽपि विष्णुमित्रस्य कर्तृत्वाभावेन कर्तृनिष्ठव्यापारजन्यधात्वर्थफलाश्रयत्वं नास्ति । एवं च विशेषणाभावप्रयुक्तो विशिष्टाभावः । दण्डशून्ये पुरुषे दण्डी पुरुष इति व्यवहाराभाववदिति । **एतेनेति** । ग्रामायेति चतुर्थ्यन्तप्रयोगानिर्वाहेणेत्यर्थः । **उभयमिति** । प्रयोज्यप्रयोजकोभयनिष्ठव्यापारद्वयमित्यर्थः । **अपास्तमिति** । गमयतीत्युक्ताख्यातस्य णिजन्तधातुयुक्तत्वेऽपि

( धात्वाख्यातार्थनिर्णयः )

किं च तस्मिन्प्रयोगे य आख्यातार्थ इत्यस्याऽऽवश्यकत्वेनाऽऽख्यातशून्ये देवदत्तः

---

गत्यर्थकधातुयुक्तत्वाभावेन प्रयोज्यस्य गत्यर्थकधातुयुक्ताख्यातार्थव्यापाराश्रयत्वरूपगत्यर्थकर्तृत्वाभावाद् गत्यर्थकर्मत्वानापत्तौ चतुर्थ्यनुपपत्तिरावश्यक्यादिति भावः। किं च णिजन्तस्थलीयाख्यातस्य प्रयोज्यप्रयोजकोभयव्यापारवाचकत्वमङ्गीकृत्य विष्णुमित्रस्य कर्तृत्वोपपत्तावपि तद्गतकर्तृत्वस्याऽऽख्यातेनाभिहितत्वाद्देवदत्तपदोत्तरमिव विष्णुमित्रपदोत्तरमपि प्रथमाया एव प्राप्त्या तत्र तृतीयोपपत्तेरत्यन्तासंभवात्। अपि च ग्रामं गमयति देवदत्तो विष्णुमित्रमित्यत्र गतिबुद्धीतिसूत्रेणाणौ कर्तुर्विष्णुमित्रस्य णौ कर्मसंज्ञां विधाय कर्तुरीप्सिततममित्यनेनैव सिद्धे गतिबुद्धीति सूत्रं नियमार्थमित्युक्तं भाष्ये। तत्रोद्देश्यत्वलक्षणमार्थप्राधान्यमादाय गमधातूपात्तप्रधानभूतव्यापाराश्रयत्वेन विष्णुमित्रस्य कर्तृसंज्ञा प्राप्ता कर्तुरीप्सितेति कर्मसंज्ञा च प्राप्ता, तयोर्मध्ये परत्वात्कर्मसंज्ञां बाधित्वा कर्तृसंज्ञा स्यात्तद्बाधनार्थं गतीतिसूत्रमावश्यकमिति तस्य नियमार्थकत्वमयुक्तमित्याशङ्क्य प्रयोजकव्यापारस्यान्यानधीनत्वलक्षणमार्थप्राधान्यं शाब्दप्राधान्यं चास्तीति तादृशप्राधान्यानुरोधेन प्राप्तकर्मसंज्ञायाः प्राबल्यात्कर्तृसंज्ञा नैव प्राप्नोतीति विप्रतिषेध एव नास्ति। ततश्च निरपवादत्वात्कर्तुरीप्सितेत्येव सिद्धे गतीतिसूत्रं नियमार्थमिति सिद्धान्तितम्। एवं सति णिजन्तस्थलीयाख्यातस्य प्रयोज्यप्रयोजकोभयव्यापारवाचकत्वे आख्यातार्थव्यापाराश्रयत्वस्योभयोरपि समानत्वेन प्रयोज्यं प्रति प्रयोजकस्य प्राधान्यानुपपत्तेः, हेतुमति चेतिसूत्रानुसारेण प्रयोजकव्यापारस्य णिज्वाच्यत्वावगमेनाऽऽख्यातवाच्यत्वानुपपत्तेश्चेति भावः। ननु गत्यर्थकर्मणि पत्ये शेते, इतिवच्चतुर्थीं साधयित्वा गत्यर्थकर्मणीति सूत्रं भाष्ये प्रत्याख्यातम्। तथा च ग्रामस्य गत्यर्थकर्मत्वाभावेऽपि न क्षतिरित्यत आह—किं चेति। तस्मिन् प्रयोग इति। आख्यात—तदर्थव्यापाराश्रययोरेकवाक्यस्थत्वे सत्येवाऽऽख्यातार्थव्यापाराश्रयस्य कर्तृत्वमित्यवश्यं वक्तव्यम्, अन्यथा घटो विद्यते इत्यत्रत्यं तादृशव्यापाराश्रयत्वमादाय घटं करोतीत्यत्र घटपदोत्तरं प्रथमापत्तिः स्यात्। तथाचाऽऽख्यातविरहिते देवदत्तः पक्त्वेत्यादिवाक्ये कृदर्थकर्तुरेकवाक्यस्थाख्यातार्थव्यापाराश्रयत्वाभावेन देवदत्तस्य कर्तृत्वं न स्यात्। एवं च कृदर्थकर्तरि कर्तृत्वलक्षणस्याव्याप्तिर्दुष्परिहरेत्याशयः। नन्वाख्यातशून्यस्थलेऽपि प्रथमानुरोधेन तिङन्ताध्याहार आवश्यकः। अन्यथा 'तिङ्समानाधिकरणे प्रथमा' इति विहित-

पक्केत्यादौ देवदत्तस्याकर्तृतापत्तेरिति दिक् । सूत्रानुपपत्तिमपि मानत्वेन प्रदर्शयन्नुक्तार्थस्य स्वोत्प्रेक्षितत्वं निरस्यति—किं चेति । धातुसंज्ञाविधायकं "भूवादयो धातवः" [ पा० सू० १—३—१ ] इति सूत्रं, तत्र भूश्च वाश्चेति

---

प्रथमायाः साधुत्वं न स्यात् । एवं च देवदत्तः पक्केत्यत्रास्तीत्याद्यध्याहाराद्देवदत्तस्य कर्तृत्वोपपत्तिरिति चेन्न । एवं सत्यपि अस्धातुनिरूपितकर्तृत्वोपपत्तावपि पच्धातुनिरूपितकर्तृत्वानुपपत्तिस्तदवस्थैवेति पक्केत्यत्र पच्धातोः कर्तरि तृच्प्रत्ययानापत्तेः । ननु यद्धातुप्रकृतिकाख्यातार्थव्यापाराश्रयत्वं यस्य गृहीतं तद्विषयकेऽर्थे तद्धातोः कृत्प्रत्ययो भवति इत्येतावतैव कर्तरि कृत् इत्यस्यार्थोऽभ्युपेयते । देवदत्तः पचतीत्यत्र देवदत्तस्य पच्धातुप्रकृतिकाख्यातार्थव्यापाराश्रयत्वं गृहीतमिति तादृशे देवदत्तरूपेऽर्थे पच्धातोस्तृच् प्रत्ययो भवतीति तदर्थः । यद्वा कृत्प्रत्ययस्य व्यापारोऽप्यर्थोऽङ्गीक्रियते । कर्तृकर्मणोः कारकभावनोभयत्रावश्यकत्वादित्यर्थः । तथा च प्रत्ययार्थव्यापाराश्रयत्वमेव कर्तृत्वं, यथा मैत्रः पचतीत्यादौ मैत्रादेः, देवदत्तेन चैत्रः पाचयतीत्यादौ णिजर्थाख्यातार्थव्यापारयोराश्रयत्वादुभयोः कर्तृत्वम् । तथा देवदत्तः पक्केत्यादौ कृत्प्रत्ययार्थव्यापाराश्रयत्वेन देवदत्तादेः कर्तृत्वमुपपन्नम् । एवं चाऽऽख्यातरहिते देवदत्तः पक्केत्यादौ न देवदत्तस्याकर्तृतापत्तिरिति चेन्नेत्याह—दिगिति । दिगर्थस्तु—धात्वर्थफलप्रकारकानुकूलत्वसंसर्गकभावनाविशेष्यकबोधे धात्वाख्यातानुपूर्व्या हेतुत्वं मीमांसकैरङ्गीकरणीयं, वैयाकरणैस्तु तादृशबोधे धात्वानुपूर्व्या एव हेतुत्वमङ्गीकरणीयमिति लाघवं भवति । एवं च लाघवाद्भावनाया धात्वर्थत्वमेव समञ्जसं न प्रत्ययार्थत्वमिति भाव इति । किंच क्रियायाद्युत्तरार्थस्यावतरणिकामाह—सूत्रानुपपत्तीति । व्यापारस्य धात्वर्थत्वे प्रमाणत्वेन सूत्रानुपपत्तिं प्रदर्शयन्नित्यर्थः । स्वोत्प्रेक्षितत्वमिति । स्वकपोलकल्पितत्वमित्यर्थः । व्यापारनिष्ठवाच्यत्वस्य निर्मूलत्वमिति यावत् । निरस्यति—निराकरोति—किंचेति । ननु भूवादय इत्यस्य भूरादिर्येषामिति बहुव्रीहिणा भूप्रभृतयो धातुसंज्ञाः स्युरित्येवार्थो न तु भ्वादिगणपठिताः क्रियावाचका धातुसंज्ञा इति, तद्बोधकपदाभावात् । कथं तर्हि भूवादय इति निर्देशः ? निपातनान्मङ्गलार्थो वकारागमः—'भूवादीनां वकारोऽयं मङ्गलार्थः प्रयुज्यते' इति वार्तिककारैरुक्तत्वात् । मङ्गलार्थः—मङ्गलसूचकः । यथाऽपूर्वस्य दध्यादेर्लाभो लोके मङ्गलसूचकस्तथेत्यर्थः । एवं च न सूत्रानुपप-

( धात्वाख्यातार्थनिर्णयः )

द्वंद्वः। आदिशब्दयोर्व्यवस्थाप्रकारवाचिनोरेकशेषः। ततो भूवावादी येषामिति बहुव्रीहिः। तथा च भूप्रभृतयो वासदृशा धातव इत्यर्थः। तच्च क्रियावाचकत्वे-

---

चेरित्याशङ्कां निराकर्तुं तत्सूत्रार्थमाह—**तत्र भूश्च वाश्चेत्यादिना**। **व्यवस्थाप्रकारवाचिनोरिति**। नियमेनावधिसाकाङ्क्षप्रथमरूपोऽर्थो व्यवस्था। यस्मात्पूर्वो नास्ति परश्चास्ति स प्रथम इत्युच्यते। अयं प्रथम इत्युक्तौ तत्रास्य किमपेक्षया प्राथम्यमिति नियमेनावध्याकाङ्क्षायाः सत्त्वाद्भ्वादिगणपठितधातुसमुदायापेक्षया भूधातोः प्राथम्यमित्यर्थः। प्रकारः सादृश्यम्। तथा च निरुकार्थयोर्द्वयोरादिशब्दयोः सरूपाणामित्येकशेषः। ततो भूवौ आदी येषामिति बहुव्रीहिः। तत्र व्यवस्थावाचिन आदिशब्दस्य भूशब्देन प्रकारवाचिनश्च वाशब्देनेति यथासंख्यं संबन्धः। ततश्च यादृशः सूत्रार्थः संपद्यते तमाह—**भूप्रभृतय इत्यादि**। तत्र भूशब्दो द्विविधः। भूम्यर्थकः सत्ताद्यर्थकश्च तथा वाशब्दोऽपि द्विविधः। विकल्पार्थको गत्याद्यर्थकश्च। तत्र द्विविधस्यापि वाशब्दस्य लिङ्गसंख्यानन्वय्यर्थकतयाऽसत्त्ववाचित्वेन तत्साहचर्याद्भूशब्दोऽसत्त्ववाची सत्ताद्यर्थको गृह्यते। स च क्रियावाची भवति। तत्साहचर्याद्वाशब्दोऽपि गत्याद्यर्थक एव गृह्यते। तत्सादृश्यं च क्रियावाचकत्वेनैवेत्याशयेनाऽऽह—**मूले—तच्चेति**। वासादृश्यं चेत्यर्थः। **क्रियावाचकत्वेनेति**। वा गतिगन्धनयोरिति स्मृतेर्यथा तस्य गत्यादिरूपक्रियावाचित्वं तथा भूप्रभृतीनामपि सत्तादिरूपक्रियावाचित्वात्तत्सादृश्यमित्यर्थः। शब्दत्वेन सादृश्यग्रहणे तस्याव्यावर्तकत्वेन वादिशब्दस्य व्यर्थत्वापत्तेः। वाधातोरदादिगणे पठनादादित्वेन गत्यर्थकत्वेन वा सादृश्याङ्गीकारे तु सकलभ्वादीनां संग्रहो न स्यादित्यव्याप्तिः। अतो व्याख्यानात्क्रियावाचकत्वेनैव सादृश्यं ग्राह्यमिति भावः। वाधातौ वासादृश्यं प्रयोगभेदेन ज्ञेयम्। यथा वातीत्येतद्घटकवाशब्दस्य क्रियावाचित्वं तथा वातः, इत्येतद्घटकवाशब्दस्यापि। प्रत्युच्चारणं शब्दभेदादिति सिद्धान्तादित्यर्थः। तेन भूम्यर्थकभूशब्दस्य विकल्पार्थकवाशब्दस्य च न धातुत्वम्। अन्यथा भूम्यर्थकभूशब्दस्य विकल्पार्थकनिपातवाशब्दस्य च धातुत्वेन प्रातिपदिकत्वाभावात्सुबभावे पदत्वानापत्त्या भूस्तिष्ठति वा गच्छति वेत्यत्रातिङन्तात्पदात्परं तिङन्तं निहन्यते, इत्यर्थकतिङ्ङतिङ इति सूत्रेण तिष्ठतिगच्छतिरूपयोस्तिङन्तयोर्निघातो न स्या-

( धात्वाख्यातार्थनिर्णयः )

न। तथा च क्रियावाचकत्वे सति गणपठितत्वं धातुत्वं पर्यवसन्नम्। अत्र हि क्रियावाचित्वमात्रोक्तौ वर्जनादिरूपक्रियावाचके हिरुङ्नानेत्यादावतिव्याप्तिरिति भ्वादिगणपठितत्वमुक्तम् ॥ ९ ॥

तावन्मात्रोक्तौ वाऽऽह—

**सर्वनामाव्ययादीनां यावादीनां प्रसङ्गतः।**
**न हि तत्पाठमात्रेण युक्तमित्याकरे स्फुटम् ॥ १० ॥**

न स्याच्च भूशब्दात्सुप् भूवाशब्दयोः पदत्वाभावादिति भावः। एवं भूत्वा वा मा वा न पातयिष्यतीत्यत्र 'त्वामौ द्वितीयायाः' इत्यस्य प्रवृत्तिर्न स्यात्। भूवाशब्दयोः पदत्वाभावादिति बोध्यम्। एवं च मूलस्य याद्दशोऽर्थः पर्यवसन्नस्तं परिष्करोति—**क्रियावाचकत्वे सतीत्यादि**। अत्र परिष्कारे भ्वादिगणपठितत्वदलं विहाय क्रियावाचकत्वं धातुत्वमित्युक्तौ तु वर्जनादिक्रियाबोधके हिरुङ्नानेत्यादावतिव्याप्तिस्तद्वारणार्थं भ्वादिगणपठितत्वं निवेशितम्। वस्तुतस्तु हिरुगित्याद्यव्ययेभ्यः प्रतीयमानस्य वर्जनाद्यर्थस्य क्रियान्तराकाङ्क्षासत्त्वात्क्रियान्तराकाङ्क्षानुत्थापकतावच्छेदकरूपेण प्रतीयमानत्वाभावेन क्रियात्वमेव नास्ति। क्रियावाचकत्वव्यवहारस्तेषां क्रियामात्रविशेषणत्वालिङ्गाद्यनन्वयित्वाच्च गौण इत्युक्तं प्रागित्याशयेनाऽऽह—**इत्यादावि**ति। आदिशब्देन शिश्ये, इति भावार्थकतङ् आणवयति वट्टयतीत्यादेश्च संग्रहः। शिश्ये इत्यत्र एकारस्य धातुसंज्ञायाम्, आदेच उपदेशेऽशितीत्यात्वं स्यात्। तिङन्तस्य सुपदे ाभावान्नाऽऽत्वप्रसक्तिरित्येकारस्यैव तदापत्तिर्न्तथा। तङाप्तिस्तु न। उक्तार्थत्वादिति बोध्यम्। ननु अशितीति पर्युदासपक्ष इव प्रसज्यप्रतिषेधपक्षेऽपि शित्त्वाभावस्यैवाऽऽत्वप्रवृत्तौ निमित्तमिति यदि स्वीक्रियते तदा शित्त्वस्यापि सत्त्वाभावादात्वाप्रसक्तिरिति चेत्त्राणवयति वट्टयतीत्यादौ धातुसंज्ञायां शास्त्रविषयतया साधुत्वापत्तिर्दोषः। आणवयति वट्टयतीत्यनयोराज्ञापयति वर्तयतीति क्रमेणार्थः ॥ ९ ॥

ननु तर्हि भ्वादिगणपठितत्वं धातुत्वमित्येवोच्यतां यास्तु क्रियावाचकत्वदलमिति चेदाह—

**सर्वनामाव्ययादीनामिति**। गणपठितत्वमात्रोक्तौ सर्वनाम यो या तस्यापि धातुत्वं स्यात्। गणपठितत्वात् सुपप्रातिपदिकत्वादौ स्मिनो यशब्दस्य भ्वादिगणे प्रवेशे बाधकाभावादिति भावः। भवतु धातुत्वं का हानिरत आह—

( धात्वाख्यातार्थनिर्णयः )

गणपठितत्वमात्रोक्तौ सर्वनामा यो या तस्यापि धातुत्वं स्यात्। तथा च याः पश्यसीत्यादौ "आतो धातोः" [पा० सू० ६-४-१४०] इत्यालोपापत्तिः। ननु लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणान्न सर्वनाम्नो ग्रहणं तस्य लाक्षणिकत्वात्, इत्यत आह—वेत्यादि। अव्यये वेत्यादावतिप्रसङ्गस्तादृ-

धातुत्वे सत्यातो धातोरित्यनेनाऽऽकारलोपे याः पश्यसीत्यर्थे यः पश्यसीत्यनिष्टं प्रसज्येतेत्यर्थः। इयं चानिष्टापत्तिर्लक्ष्यैकचक्षुष्कानुसारेण बोध्या। लाक्षणिकत्वादिति। अत्र लक्षणशब्दो भामा, सत्या, इतिवदेकदेशशक्त्या लक्षणप्रतिपदोक्तपरिभाषापरः। ततोऽर्हतीत्यर्थे तदर्हतीति ठञ्, लक्षणप्रतिपदोक्तपरिभाषाविषयत्वादित्यर्थः। तथा च प्रतिपदोक्तस्य 'या' इत्यस्यैव भ्वादिपदेन ग्रहणं न तु सर्वनाम्नो या इत्यस्य, तस्य लक्षणप्रवृत्त्यनुसंधानसंपन्नस्वरूपकत्वादिति भावः। ननु धातुसंज्ञासूत्रे लक्षणप्रतिपदोक्तपरिभाषापादनमुताऽऽतो धातोरित्यत्र? तत्र प्रथमे तदापादनं न संभवति—नकारजावनुस्वारपञ्चमौ झलि धातुषु। सकारजः शकारः श्चे[1] षाट्टवर्गस्तवर्गजः॥ धातुषु झल्परानुस्वारपञ्चमौ नकारजौ। यथा—स्रंसु, अञ्चु, इत्यादि। शचपरः शकारः सकारजः। यथा—हरिश्शेते, व्रश्चू इत्यादि। रेफषकाराभ्यां परष्टवर्गस्तवर्गजः, यथा ऊर्णुञ्, ष्ठा इत्यादि। इत्यभियुक्तोक्तेः। एवं च येषां लक्षणप्रवृत्तिज्ञानोत्तरकालिकज्ञानविषयस्वरूपकत्वं तेषामपि धातुपाठे पाठसामर्थ्येन धातुसंज्ञाविधौ लक्षणप्रतिपदोक्तपरिभाषाया अप्रवृत्तेः। द्वितीयेऽपि तदापादनमशक्यमेव। पशुषः, इत्याद्यसिद्ध्यापत्तेः। तथा हि—पशुं सनोतीति विग्रहे 'जनसनखनक्रमगमो विट्' इति विट्प्रत्यये, विड्वनोरित्यात्वम्। ततः शसि आतो धातोरित्याकारलोपे पशुषः, इति सिध्यति। यदि त्वातो धातोरित्यत्र प्रतिपदोक्त एवाऽऽकारो गृह्येत तदा षा इत्याकारस्य लाक्षणिकत्वात्तल्लोपानापत्त्या पशुषः, इति न सिध्येत्। यस्य रूपस्य लक्षणप्रवृत्तिं विना न संभवस्तस्यैव लाक्षणिकस्य परिभाषाविषयत्वादित्यर्थः। नन्वेवमपि क्त्वः श्नः, इत्यादिसिद्ध्यर्थं वार्तिककृता 'आतोऽनापः' इत्याकारेण परिणामितं सूत्रं, तत्कथं याः पश्यसीत्यत्राऽऽकारलोपस्य प्राप्तिरत आह—वेत्यादि। अव्ययं यो वाशब्दस्तत्रातिप्रसक्तिरित्यर्थः। अतिप्रसङ्ग इति। विकल्पार्थका-

[1] श्च, चु, अनयोः समाहारः श्चम्। द्वंद्वाच्चुद० इति समासान्तष्टच्। ततः सप्तम्येकवचनं 'श्चे' इति बोध्यम्।

शस्यैव गणेऽपि पाठेन निर्णयासंभवात्। तथा च विकल्पार्थको वातीति प्रयोगः स्यादिति भावः। न च गतिगन्धनाद्यर्थनिर्देशो नियामकः। तस्यार्थानादेशनादिति भाष्यपर्यालोचनयाऽऽधुनिकत्वलाभात् ॥ १० ॥

व्ययसंज्ञकवाशब्दसदृशस्यैव वाशब्दस्य भ्वादिगणे पाठेनान्यतरग्रहणे विनिगमनाविरहेणाव्ययवाशब्दस्यापि धातुत्वापत्तिरित्यर्थः। धातुत्वापत्तौ का हानिरत आह— **विकल्पार्थको वातीति प्रयोगः स्यादिति**। तथा च गत्याद्यर्थकस्य वातीति प्रयोगस्येष्टत्वेऽपि विकल्पार्थकस्तादृशः प्रयोगो नेष्ट इति भावः। उपलक्षणं चैतदित्याह——**वा**——**इत्यादाविति**। आदिशब्देन सु इत्युपसर्गः। मा, माङ्, स्वरादी च संगृह्यन्ते। यद्यपि धातुषु षुः पठितस्तथाऽपि प्रयोगे सुशब्द एव धातुः। तथा च प्रसवाद्यर्थकसवतीतिप्रयोगवच्छोभनार्थकः सवतीति प्रयोगोऽनिष्टः स्यादिति बोध्यम्। क्रियावाचकत्वे सतीत्युक्तौ तु न दोषो भवति।

ननु क्रियावाचकत्वे सतीत्युक्तावपि वातीत्यत्र विकल्पयतीत्यर्थेऽव्ययवाशब्दादपि विकल्परूपा क्रिया प्रतीयत एवेति चेन्न। हिरुङ्नानेत्यादिभ्य इव निपातवाशब्दात्प्रतीयमानस्य विकल्पार्थस्य क्रियान्तराकाङ्क्षासत्त्वेन क्रियान्तराकाङ्क्षानुत्थापकतावच्छेदकरूपेण प्रतीत्यभावेन क्रियात्वाभावादिति बोध्यम्। ननु यद्यव्ययानव्यययोरुभयोरपि वाशब्दयोर्धातुत्वमभिप्रेतं स्यात्तर्हि नार्थनिर्देशेन प्रयोजनं, यतः स कृतस्ततस्तत्सामर्थ्यादेवावगम्यते यन्निर्दिष्टार्थानामेव धातुत्वं भवतीति। गणे च गतिगन्धनयोरिव विकल्पार्थस्यानिर्देशाद्विकल्पार्थकाव्ययवाशब्दस्य धातुत्वं न संभवतीत्याशङ्क्य समाधत्ते——**न च गतिगन्धनेत्यादिना। नियामक इति**। अर्थनिर्देशसामर्थ्यान्निर्दिष्टगत्याद्यर्थकस्यैव वाशब्दस्य धातुसंज्ञा भवति, न त्वनिर्दिष्टार्थकस्य विकल्पार्थकवाशब्दस्येत्येवंरीत्याऽर्थनिर्देशस्य धातुसंज्ञानियामकत्वं बोध्यम्। अन्यथा तादृशार्थनिर्देशो व्यर्थः स्यादिति भावः। नियामकत्वं निराकरोति——**तस्येति**। गत्याद्यर्थनिर्देशस्येत्यर्थः। **अर्थानादेशनादिति**। अर्थस्य——सत्तादेः, अनादेशनात्——अनाम्नानादित्यर्थः। **भाष्येति**। भूवादिसूत्रस्थभाष्येत्यर्थः। **आधुनिकत्वलाभादिति**। अर्थनिर्देशस्याऽऽधुनिकभीमसेनादिभिः पठितत्वादित्यर्थः। भीमसेनादयो ह्यर्थं निर्दिदिशुः। पाणिनिराचार्यस्तु भ्वेध इत्याद्यपाठीदिति भाष्यवार्तिकयोः स्पष्टम्। अत एव धातुसंज्ञासूत्रे 'परिमाणग्रहणं कर्तव्यमियानवधि-

( धात्वाख्यातार्थनिर्णय. )

नन्वस्तु क्रियावाचकत्वे सति गणपठितत्वं धातुत्वं क्रिया च धात्वर्थ एव न व्यापार इति शङ्कां समाधत्ते—

**धात्वर्थत्वं क्रियात्वं चेद्धातुत्वं च क्रियार्थता ।**
**अन्योन्यसंश्रयः स्पष्टस्तस्मादस्तु यथाकरम् ॥ ११ ॥**

यदि क्रियात्वं धात्वर्थत्वमेव तर्हि धातुत्वग्रहे तदर्थत्वरूपक्रियात्वग्रहः, क्रियात्वग्रहे तदवच्छिन्नवाचकत्वघटितधातुत्वग्रह इत्यन्योन्याश्रय इति ग्रहपदं पूरयित्वा व्याख्येयम् । यथाश्रुते चान्योन्याश्रयस्योत्पत्तौ ग्रहे वा प्रतिबन्धकत्वाभ्युप-

---

धातुसंज्ञो भवतीति वक्तव्यम्, कुतो ह्येतद्भूशब्दो धातुसंज्ञो भवति न पुनर्भवेधशब्दः ’इति वार्तिकं तद्भाष्यं च संगच्छते । अर्थानादेशनादित्यस्य सर्वत्रार्थानादेशनादित्यर्थः । अत एव ‘ एवमर्थं खल्वप्याचार्यश्चित्रयति, क्वचिदर्थानादिशति क्वचिन्न, इति नमोवरिवश्चित्र ’...इति सूत्रे भाष्य उक्तम्, अत एव च ‘कुर्द, खुर्द, गुर्द, गुद, क्रीडायामेव’ इत्येवकारस्य धातूनामनेकार्थत्वे ज्ञापकतोक्ता संगच्छते । तस्मात्क्रियावाचको धातुरिति सिद्धम् ॥ १० ॥

अथ धातोर्व्यापारवाचकत्वमसहमानो धातुत्वलक्षणकुक्षिप्रविष्टक्रिया च धात्वर्थः फलमेव न तदतिरिक्तो व्यापारो नाम कश्चिदिति मनुते । तथा च न भूवादय इति सूत्रानुपपत्तिर्धातोर्व्यापारवाचकत्वे प्रमाणमिति मीमांसकाशङ्कामवतरणिकामुखेनानूद्य निराकरोति—**धात्वर्थत्वं क्रियात्वं चेदिति** । अत्रावतरणिकायां ‘क्रिया च धात्वर्थ एव इत्यनेन धात्वर्थत्वमेव क्रियात्वमित्येवं क्रियात्वलक्षणमभ्युपैति शङ्कक इत्याशयेनाऽऽह—**यदि क्रियात्वं धात्वर्थत्वमेवेति** । एवं क्रियात्वलक्षणेऽङ्गीकृते तत्रान्योन्याश्रयदोषं वाक्यार्थज्ञानप्रतिबन्धकं प्रदर्शयति—**तर्हीत्यादिना** । धातुत्वज्ञाने धात्वर्थत्वरूपक्रियात्वज्ञानं कारणं, क्रियात्वज्ञाने च क्रियावाचकत्वरूपधातुत्वज्ञानं कारणं वाच्यमित्यन्योन्याश्रयात्क्रियात्वं धात्वर्थत्वमिति वाक्यान्न कीदृशोऽप्यर्थबोध उदियादित्यर्थः । मूले—**धातुत्वग्रहे** । धातुत्वज्ञाने । **तदर्थत्वेति**—धात्वर्थत्वेत्यर्थः । **तदवच्छिन्नेत्यादि** । क्रियात्वावच्छिन्नस्य क्रियारूपार्थस्य यो वाचकस्तन्निष्ठवाचकत्वघटितं धातुत्वज्ञानमित्यर्थः । **ग्रहपदमिति** । ज्ञानार्थकग्रहपदमध्याहृत्येत्यर्थः । **यथाश्रुत इति** । ग्रहपदानध्याहार इत्यर्थः । **उत्पत्ताविति** । यथा बीजाङ्कुरादेरुत्पत्तावन्योन्याश्रयः । अनादित्वात्तस्य परिहार इत्यन्यत् । यथा वा देवदत्तस्य यज्ञदत्ताद्, यज्ञदत्तस्य च देव-

गमेनासंगत्यापत्तेः । न चान्यतमत्वं धातुत्वम् । "भूवादयः" इत्यस्य वैयर्थ्यापत्तेरित्यभिप्रेत्याऽऽह——अस्त्विति । व्यापारसंतानः क्रिया, तद्वाचकत्वे

---

दत्तादिति परस्परस्मात्परस्परस्योत्पत्तिर्न संभवति, परस्परोत्पत्तौ परस्परस्य कारणत्वं न संभवतीति यावत् । ग्रहे वेति । हलन्त्यमित्यत्र प्रसिद्धः सः । यथा—इत्पदार्थज्ञानोत्तरमादिरन्त्येनेति हल्संज्ञासिद्धिः, हल्संज्ञासिद्ध्युत्तरं च हलन्त्यमिति इत्पदार्थज्ञानसिद्धिरित्येवं हलन्त्यमादिरन्त्येनेत्यनयोः परस्परसापेक्षत्वेनान्योन्याश्रयाद् बोधो न संभवति । परस्परज्ञाने परस्परस्य कारणत्वं न संभवति । कार्याव्यवहितनियतपूर्ववर्तिन एव कारणत्वं, तच्च देवदत्तयज्ञदत्तयोरिवेद्धल्पदार्थयोरुभयोर्न संभवतीति उत्पत्तौ, ग्रहे चैवान्योन्याश्रयस्य प्रतिबन्धकत्वमित्यर्थः । असंगत्यापत्तेरिति । जलप्रवाहस्य नद्यादेराधारो भूमिः, भूमेश्चाऽऽधारो जलमिति भूमिजलयोः परस्परमाधाराधेयभावः, यथा वा तन्तुषु पटः, पटे तन्तव इति द्विविधव्यवहारात्तन्तुपटयोः परस्परमाधाराधेयभावेन स्थितिर्दृश्यते तद्वत्प्रकृते धात्वर्थस्य क्रियात्वे क्रियात्वस्य धात्वर्थत्वे बाधकाभावान्निरुक्तस्थलेऽबोधरूपदोषोद्भावनमसमञ्जसम् । ग्रहोत्पत्तिव्यतिरिक्तस्थलेऽन्योन्याश्रयस्य प्रतिबन्धकत्वाभावेनादूषकत्वादिति भावः । अन्योन्याश्रयं परिहर्तुमाशङ्कते——न चान्यतमत्वमिति । यावन्तो धातुपदव्यवहार्यास्तदन्यतमत्वरूपं धातुत्वं 'धात्वर्थत्वं क्रियात्वम्' इत्येतद्घटकधातुत्वं मन्ये । तथा च नान्योन्याश्रयसंभव इति भावः । तदेतत्प्रत्याचष्टे——वैयर्थ्यापत्तेरिति । तदन्यतमत्वं धातुत्वमिति यङ्गीकृते भूवादयो धातव इत्यनुशासनस्य वैयर्थ्यं स्यात् । धातोः कर्मण इत्यादौ तदन्यतमत्वरूपधातुत्ववतो ग्रहणेनेष्टसिद्धेरिति भावः । न च धातुपदव्यवहार्यत्वेतद्घटकधातुपदार्थपरिचयार्थं तदावश्यकमिति वाच्यम् । व्यापाररूपक्रियावाचकत्वमन्तरा भूवादय इत्येतद्वाक्यार्थबोधासंभवेन धातुपदार्थज्ञानासंभवात्तदन्यतमत्वरूपधातुत्वस्य सुरगुरुणाऽपि ज्ञातुमशक्यत्वात् । अत एवाभिप्रायादाह——अस्तु यथाकथंचिदिति । व्यापारसंतान इति । यथा चुल्लयधिश्रयणमारभ्य चुल्ल्यधःश्रयणपर्यन्तो व्यापारसमूहः क्रियेतिपदवाच्य इत्यर्थः । एवं भ्वादिषु सर्वत्र धातुषु क्रियापदवाच्यो व्यापारसमूह ऊह्यः । फलव्यापारयोर्धातुरित्युक्तत्वात् । तादृशक्रियावाचकत्वे सति भ्वादिगणपठितत्वमित्येव माध्यानसारि धातुत्वलक्षण-

---

१ तदन्यतमेति । धातुपदव्यवहार्यान्यतमत्यर्थः ।

सति गणपठितत्वमित्यर्थः । ननु सत्तादीन्फलांशानन्यतमत्वेनाऽऽदाय तद्वाचकत्वे सति गणपठितत्वं लक्षणमुच्यताम् । धात्वर्थत्वात्तेषां क्रियाशब्देन व्यवहारो भाष्यादौ कुतोऽप्युपपत्स्यत इति चेन्न । अन्यतममध्ये विकल्पस्यापि विकल्पयतीति प्रयोगानुसारात्प्रवेशावश्यकत्वेन तदर्थके वेत्यव्यय उक्तरीत्या गणपठितत्वसत्त्वेनातिव्याप्तेरिति ॥ ११ ॥

नन्वस्यैव धातुत्वेऽस्तीत्यादौ क्रियाप्रतीत्यभावादस्त्यादीनां तद्वाचकानामधातुत्वप्रसङ्ग इत्यत आह——

**अस्त्यादावपि धर्म्यंशे भाव्येऽस्त्येव हि भावना ।**
**अन्यत्राशेषभावात्तु सा तथा न प्रकाशते ॥ १२ ॥**

**अस्त्यादौ** " अस भुवि " इत्यादौ **धर्म्यंशे** धर्मिभागे **भाव्ये** भाव्यत्वे ।

---

मस्त्वित्यर्थः । भूवादय इति सूत्रार्थविषये शङ्कते——**ननु सत्तादीनिति** । सत्ताविक्लित्त्यादयो ये फलांशास्तदन्यतमवाचकत्वे सति गणपठितत्वं धातुत्वमित्यर्थः । **लक्षणमिति** । भूवादय इति सूत्रजवाक्यार्थरूपमित्यर्थः । सत्तादिफलवाचकत्वेन वाशब्दसादृश्यं गृह्यते, न क्रियावाचकत्वेनेति तात्पर्यम् । **फलांशान्यतमवाचकत्वे**त्युपादाने सूत्रवैयर्थ्यशङ्काऽपि नोदेतीति भावः । ननु क्रियावचनो धातुरिति भाष्यव्यवहारः कथं संगमनीयः ? फलांशस्य क्रियात्वाभावादत आह——**धात्वर्थत्वादिति** । यत्किंचिन्निष्ठव्यापारात्मकक्रियाजन्यफलवाचित्वाद्धात्वर्थफलस्यापि गौणः क्रियात्वव्यवहार इति चेन्नैतद्भद्रमित्याह—**अन्यतममध्य इत्यादिना** । विकल्पार्थकस्य विकल्पयतीति प्रयोगस्य दर्शनाद्विकल्पस्य.ऽन्यतममध्ये प्रवेशावश्यकत्वेन गणपठितवाशब्दसादृश्याद्विकल्पार्थकवेत्यव्ययस्यापि भ्वादिगणे प्रवेशावश्यकत्वेन तत्र धातुत्वातिव्याप्तेर्दुरुद्धरत्वादिति भावः ॥ ११ ॥

शङ्कते —**नन्विति अस्यैवेति** । भ्वादिगणपठितत्वे सति क्रियावाचकत्वस्यैव धातुत्वे इत्यर्थः । एवकारेण फलमात्रवाचकत्वस्य व्यावृत्तिः । **क्रियाप्रतीत्यभावादिति** । अस्ति भवति विद्यते इत्यादितः सत्तारूपफलस्यैव प्रतीतिर्जायते, न तु तदतिरिक्ताया व्यापाररूपक्रियायाः । अत एव किं करोतीति क्रियाप्रश्ने पचतीत्युत्तरवदस्तीत्युत्तरं न, अस्तीत्यतः क्रियाप्रतीत्यभावादित्यर्थः । **अधातुत्वप्रसङ्ग इति** । अस्त्यादीनां क्रियावाचकत्वाभावाद्धातुत्वं न स्यादित्यर्थः । ततश्च लडादिर्न स्यादत आह—**अस्त्यादाविति** । **धर्मिभागे**——सत्ता-

विवक्षितेऽस्त्येव प्रतीयत एवायमर्थः । स ततो गतो न वेति प्रश्ने महता यत्नेन तिष्ठतीति प्रयोगे सत्तारूपफलानुकूला भावना प्रतीयत एव । उत्पत्त्यादिबोधने तु सुतरां “ रोहितो लोहितादासीद्धुन्धुस्तस्य सुतोऽभवत् ” इत्यादिदर्शनात् । किं चात्र भावनाविरहे लडादिव्यवस्था न स्यात् । तस्या एव वर्तमानत्वादिविवक्षायां

---

दिरूपे धर्मिणो भाग इत्यर्थः । सत्तादिफलरूपधर्मघटितोऽर्थो धर्मी । धर्मी च सकर्मकस्थले कर्मपदार्थस्तण्डुलादिः । अकर्मकस्थले तु फलस्य कर्तृनिष्ठत्वात्कर्तृपदार्थो देवदत्तादिरेव धर्मी बोध्यः । वस्तुतस्तद् भाव्यं भावनाप्रतीतिजनकं न भवतीत्यत आह—**भाव्यत्वेनेति** । भावनारूपव्यापारनिष्पाद्यत्वेनेत्यर्थः । **विवक्षित इति** । वक्तुमिष्टत्व इत्यर्थः । फलनिष्पादकव्यापारस्य जिज्ञासितत्व इति फलितोऽर्थः । तदेव जिज्ञासास्थलं प्रदर्शयितुमाह—**स ततो गतो न वेति** । गमिधातोर्गत्यर्थाकर्मकेति कर्तरि क्तः । विभागानुकूलो व्यापारोऽत्र गमिधात्वर्थः । तत्तद्देशावधिकविभागानुकूलव्यापारवान्न वेति प्रश्नस्याशयः । तथा चात्र प्रश्ने प्रतीयमानां व्यापारविषयकजिज्ञासां सत्तानुकूलव्यापारकथनद्वारा निवर्तयितुमुत्तरमाह—**महता यत्नेनास्तीति** । **प्रतीयत एवेति** । अत्र यत्नपदोपादानाद्यत्नजन्या सत्तेति कथनादस्धातोः सत्तानुकूलो व्यापारोऽर्थः प्रतीयत एवेत्यर्थः । न गत इत्यर्थपर्यवसानाज्जिज्ञासानिवृत्तिर्भवतीत्यस्तीत्यस्य प्रश्नोत्तरत्वं च । **सुतरामिति** । उत्पत्त्याद्यर्थविवक्षायामस्त्यादीनां व्यापारवाचकत्वमतितरामिति शेषः । उत्पत्त्यनुकूलव्यापारप्रतीतेस्तत्र सर्वानुभवसिद्धत्वात् । सत्तार्थकत्वे क्वचिदेव व्यापारप्रतीतिः, उत्पत्त्याद्यर्थकत्वे तु सर्वत्रैव व्यापारप्रतीतिरिति बोधनाय सुतरामिति तद्वचनोक्तिः । उत्पत्त्यादीत्यादिपदेन पराभवनीत्यत्र पराभवस्य संग्रहः । अस्त्यादेरुत्पत्त्यर्थकत्वे रामायणप्रयोगं प्रमाणयति—**रोहित०० इति** । आसीत्, अभवत्, इत्यनयोरुत्पद्यतेत्यर्थः । सत्तार्थकत्वेऽनुभवविरोधः । वंशाख्यायामुत्पत्त्यर्थस्यैवानुभवसिद्धत्वादिति भावः । अस्त्यादेः सत्तासमानाधिकरणव्यापारवाचकत्वे प्रमाणान्तरमप्याह—**किं चेति** । **लडादिव्यवस्था न स्यादिति** । अस्त्यादेर्व्यापारावाचकत्वे वर्तमाने लट्, भूते लुङ्, भविष्यति लृङ्, इत्येवं लडादेर्व्यवस्था न स्यादित्यर्थः । व्यवस्थायां कारणमाह—**तस्या एवेति** । व्यापाररूपक्रियाया एवेत्यर्थः । वर्तमानादिकालवृत्तित्वेन विवक्षायां वर्तमाने लडित्यादिना लडादिविधानादित्यर्थः । वर्तमानत्वादीनां कालगतत्वेन स-

तद्विधानात् । " क्रियाभेदाय कालस्तु संख्या सर्वस्य भेदिका " इति **वाक्यपदीया**दिति । नन्वेवमस्तीत्यत्र स्पष्टं कुतो न बुध्यत इत्याह—**अन्यत्रेति । अशेषभावात्** , भावनायाः फलसमानाधिकरणत्वात् । तथा च भावनायाः फलसामानाधिकरण्यं तत्स्पष्टत्वे दोष इति भावः । नन्वेवं किं करोतीति प्रश्ने

---

वाऽनुभवसिद्धत्वाद्वर्तमानादिशब्दाः कालविशेषबोधकाः । तस्या एवेत्येवकारेण फलं व्यावर्त्यते । फले वर्तमानत्वाद्यनन्वयस्य प्रागुपपादनादिति भावः । तत्रैव मानमाह—**क्रियाभेदायेत्यादि** । भेदायेति चतुर्थी तादर्थ्ये, तुमर्थादिति वा बोध्या । वर्तमानत्वादिविशिष्टक्रियाया इतरक्रियातो व्यावर्तनाय लडादिबोध्यः काल इत्यर्थः । क्रियाभेदायेत्यस्य सर्वं वाक्यमिति न्यायेन सावधारणत्वाल्लडादिबोध्यः कालः क्रियाया एव भेदकः । अतः क्रियायामेव कालान्वयः । सुप्तिङर्थसंख्या तु **सर्वस्य** = आख्यातप्रातिपदिकार्थस्य भेदिकेति वाक्यपदीयार्थः । भूवादिसूत्रे भाष्येऽप्युक्तं—नान्तरेण क्रियां भूतभविष्यद्वर्तमानाः काला व्यज्यन्ते । अस्त्यादिभिश्चापि भूतभविष्यद्वर्तमानकाला व्यज्यन्ते ' इति । अस्ति, अभूत्, भविष्यतीति कालविशेषावगमादिति भावः । तस्माद्यत्र क्रिया न स्यात्तर्हि लडादिकमपि न स्यादिति बोध्यम् । तथा च भाष्यकाराद्यनुभव एवास्त्यादीनां व्यापारवाचकत्वे प्रमाणमित्याशयः । अन्यत्राशेषभावादित्युत्तरार्धमवतारयितुं शङ्कते—**नन्विति । एवमिति** । धातोर्व्यापारवाचकत्वे सतीत्यर्थः **अशेषभावादिति** । शेषभावः—पृथग्भावः । भिन्नाधिकरणनिष्ठत्वं, तदभाव एकाधिकरणनिष्ठत्वं तस्मात्, भावनाफलयोः सामानाधिकरण्यादित्यर्थः । सा व्यापाररूपा भावना । **तथा**— स्पष्टं न प्रकाशते । **तत्स्पष्टत्व इति** । भावनायाः स्पष्टं प्रतिभान इत्यर्थः । **दोष इति** । तथा च दूरत्वादिकमिव फलभावनयोः सामानाधिकरण्यं व्यापाररूपभावनायाः स्पष्टप्रतीतौ प्रतिबन्धकमित्यर्थः । **प्रश्न इति** । व्यापारविशेषविषयकप्रश्न इत्यर्थः । पचतीत्युत्तरवादिति । पचिधातोर्व्यापारविशेषवाचित्वस्य सुप्रसिद्धत्वात्तस्य प्रश्नोत्तरत्वं युज्यत इत्यर्थः । **उत्तरमपि स्यादिति** । अस्त्यादीनां व्यापारवाचित्वेऽपि अस्तीत्यस्योत्तरत्वं नेष्यते, व्यापारसामान्यवाचित्वात्तस्य, किमुत व्यापारावाचकत्व इति शङ्काशयः । सिद्धान्ती व्यापारसामान्यवाचित्वेऽपि तस्योत्तरत्वमिष्टमेवेत्याह—**इष्टाप-**

पचतीत्युत्तरस्येवास्तीत्युत्तरमपि स्यादिति चेदिष्टापत्तेः । आसन्नविनाशं कंचिदुद्दिश्य किं करोतीति प्रश्नेऽस्तीत्युत्तरस्य सर्वसंमतत्वात् । इतरत्र तु सुस्थतया निश्चिते किं करोतीति प्रश्नः पच्यादिविशेषगोचर एवेत्यवधारणादस्तीति नोत्तरमिति ॥ १२ ॥

ननु भावनायाः फलनियतत्वात्फलाश्रयस्य कर्मत्वात्सर्वेषां क्रियावाचकत्वे सकर्मकतापत्तिरित्यत आह—

**फलव्यापारयोरेकनिष्ठतायामकर्मकः ।**
**धातुस्तयोर्धर्मिभेदे सकर्मक उदाहृतः ॥ १३ ॥**

**एकनिष्ठतायामे**कमात्रनिष्ठतायां भिन्नाधिकरणावृत्तितायामिति यावत् ।

---

त्तेरिति । तदेवेष्टापत्तिस्थलं दर्शयति—**आसन्नविनाशमित्या**दिनास्तीत्युत्तरस्य **सर्वसमतत्वादित्यन्तेन** । तथा चास्त्यादीनां व्यापारवाचकत्वमावश्यकमिति भावः । **इतरत्र**—आसन्नविनाशभिन्ने । **सुस्थतया निश्चित इति** । फलानुकूलव्यापारनिश्चये सति किं करोतीति प्रश्नोऽन्यविषयक एवेत्यवधारणात्तत्रास्तीत्युत्तरं नेत्यर्थः ॥ १२ ॥

शङ्कते—**नन्विति** । **सर्वेषामिति** । अकर्मकाणामपि सर्वेषां भावनावाचकत्वे, इत्यर्थः । **फलनियतत्वादिति** । फलानुकूलव्यापारार्थक भावनाशब्दव्याख्यानात्फलस्य भावनाशब्दघटकीभूतनिवेशेन भावनायाः फलनियतत्वमित्यर्थः । **कर्मत्वादिति** । प्रकृतधात्वर्थव्यापारजन्यफलाश्रयस्येत्यर्थः । **क्रियावाचकत्व इति** । अकर्मकाणामपि फलानुकूलव्यापारवाचकत्व इत्यर्थः । सर्वेषां—अकर्मकसकर्मकोभयेषां फलानुकूलव्यापारवाचकानां धात्वादीनां सकर्मकत्वापत्तिरित्याशङ्कां मनसि कृत्याऽऽह—**फलव्यापारयोरिति** । ननु फलव्यापारयोरेकवृत्तित्वस्याकर्मकतानियामकत्वे ग्रामं गच्छति, वृक्षं त्यजतीत्यत्र व्यापारवत्तज्जन्यसंयोगविभागरूपफलयोरपि कर्तृवृत्तित्वेन फलव्यापारयोरेकनिष्ठत्वाद्गम्यादीनामप्यकर्मकत्वापत्तिरित्यनुशयादाऽऽह—**एकमात्रनिष्ठतायामिति** । एकेतरावृत्तित्वे सति एकवृत्तित्वमेकमात्रनिष्ठत्वमित्यर्थः । एकमात्रेत्यस्य प्रकृतोपयुक्तं फलितार्थमाह—**भिन्नाधिकरणेति** । फलव्यापारयोर्भिन्नाधिकरणवृत्तित्वाभावे, इति यावत् । मात्रशब्दोपादानस्य फलमाह—**तेन गम्यादावि-**

( धात्वाख्यातार्थनिर्णयः )

तेन गम्यादौ फलस्य कर्तृनिष्ठत्वेऽपि नातिव्याप्तिः । **अकर्मको** यथा भ्वादिः । **तयोः** फलव्यापारयोराश्रयभेदे **सकर्मक** इत्यर्थः ।

उक्तं च वाक्यपदीये—

" आत्मानमात्मना बिभ्रदस्तीति व्यपदिश्यते ।
अन्तर्भावाच्च तेनासौ कर्मणा न सकर्मकः " इति ॥

**बिभ्रदिति** । स्वधारणानुकूलो व्यापारोऽत्रापि गम्यत इति भावः । **तेन** कर्मणा सकर्मकत्वं तु **नान्तर्भावात्** । फलांशेन सामानाधिकरण्यसत्त्वादित्यर्थः । आत्मानं जानातीच्छतीत्यादौ च द्वावात्मानौ शरीरात्माऽन्तरात्मा च ।

---

ति । **नातिव्याप्तिरिति** । गम्यादेरकर्मकत्वव्यवहारो नेत्यर्थः । उक्तलक्षणलक्षितमकर्मकधातुं दर्शयति—**यथा भ्वादिरिति** । **धर्मिभेदे**, इति । फलव्यापारौ धर्मौ, तदाश्रयभूतौ पदार्थौ धर्मिणौ, तयोर्भेदे फलव्यापाराश्रययोः पृथक्त्वे धातुः सकर्मक इत्यर्थः । फलव्यापारयोराश्रयभेदः सकर्मकत्वव्यवहारप्रयोजक इति भावः । तेन संयोगतदनुकूलव्यापारयोराश्रयैक्येऽपि गम्यादौ नाव्याप्तिः । अस् धातोः फलानुकूलव्यापारवाचित्वे वाक्यपदीयं प्रमाणयति—**आत्मानमात्मनेति** । **आत्मानं**—सत्ताम् । **आत्मना**—स्वेन । **बिभ्रत्**—सत्तानुकूलव्यापारवान् भवन्नस्तीति व्यपदिश्यते—व्यवह्रियते । तथा च 'डुभृञ् धारणपोषणयोः' इति पाणिनिस्मरणात्स्वधारणानुकूलो व्यापारोऽस्तीत्यत्राप्यवगम्यते । स्वत्वं चात्र सत्तैव । म्रियतौ सत्तात्यागानुकूलव्यापारस्यैवात्र तद्वैपरीत्येन सत्ताधारणानुकूलव्यापारस्य स्पष्टं प्रतिपत्तेरिति भावः । नन्वेवमस्तेः सकर्मकत्वं स्यादित्याशङ्क्य तन्निराकरोति —**तेन कर्मणेति** । स्वधारणरूपफलाश्रयभूतेन कर्मणाऽस्तेः सकर्मकत्वं न वक्तव्यमित्यर्थः । तत्र हेतुमाह—**फलांशेनेति** । स्वधारणात्मकफलतदनुकूलव्यापारयोरेककर्तृमात्रनिष्ठत्वादित्यर्थः । नन्वेवमात्मानं जानाति, इच्छतीत्यादौ ज्ञानेच्छादिरूपफलस्यैककर्तृमात्रनिष्ठत्वेन सकर्मकत्वानुपपत्तिमाशङ्क्य निराकर्तुमाह—**द्वावात्मानावित्यादिना** । अयं भावः—आत्मन एकत्वेऽप्यात्मभेदः कल्प्यते । एकः शरीरावच्छिन्नोऽपरस्त्वन्तःकरणावच्छिन्न इति । तयोः कर्मत्वकर्तृत्वे दर्शयति—**तत्रान्तरात्मेत्यादिना** । **अन्तरात्मा**—अन्तःकरणावच्छिन्नः कर्ता व्यापाराश्रय इत्यर्थः । **शरीरात्मा**—शरीरावच्छिन्नः कर्म—फलाश्रय इत्यर्थः । एवं चौपाधिकभेदमादाय फलव्यापारयोर्भि-

तत्रान्तरात्मा तत्कर्म करोति येन शरीरात्मा सुखदुःखे अनुभवतीति "कर्मवत्कर्मणा" [पा० सू० ३–१–८७] इतिसूत्रीयभाष्योक्तरीत्या भिन्नाधिकरणनिष्ठतामादाय सकर्मकत्वमित्यवधेयम् ॥ १३ ॥

नन्वसत्त्वभूतक्रियाया धात्वर्थत्वे पाक इत्यत्रापि तत्प्रत्ययापत्तिः । न चेष्टापत्तिः, "कृदभिहितो भावो द्रव्यवत्प्रकाशते" इतिभाष्यविरोधादित्यत आह—

आख्यातशब्दे भागाभ्यां साध्यसाधनवर्तिता ।
प्रकल्पिता यथा शास्त्रे स घञादिष्वपि क्रमः ॥ १४ ॥

न्नाधिकरणनिष्ठत्वाक्षतेर्न सकर्मकत्वानुपपत्तिर्नाप्यकर्मकत्वापत्तिश्चेति बोध्यम् । एवं 'आत्मानमात्मना हन्ति सृजत्यात्मानमात्मना' इत्यत्राप्यौपाधिकभेदसत्त्वान्न सकर्मकाकर्मकलक्षणाव्याप्त्यतिव्याप्ती इति द्रष्टव्यम् । अत्रेदमवधेयम् । एवं हि जीवतिनृत्यतीत्यादेः सकर्मकत्वापत्तिः । प्राणधारणगात्रविक्षेपादिरूपफलस्य तदनुकूलव्यापारव्यधिकरणत्वसत्त्वात् । धारणस्य प्राणनिष्ठत्वाद्विक्षेपस्य गात्रनिष्ठत्वाद्व्यापारस्य च तद्भिन्नदेवदत्तनिष्ठत्वात्फलस्य व्यापारव्यधिकरणत्वादित्यर्थः । तस्मात्फलाश्रयावाचकत्वे सति फलव्यधिकरणव्यापारवाचकत्वमित्येवं सकर्मकत्वलक्षणं वाच्यम् । ततश्च जीवत्यादेः फलव्यधिकरणव्यापारवाचकत्वेऽपि 'जीव प्राणधारणे' नृती गात्रविक्षेपे' स्रंसु ध्वंसु अवःपतने' इत्यनुशासनात्फलाश्रयाणां प्राणगात्राधःप्रदेशानामपि वाचकत्वेन फलाश्रयावाचकत्वाभावान्न सकर्मकत्वमिति । अत एवास्तेः स्वधारणानुकूलव्यापारार्थकत्वेऽपि स्वरूपफलाश्रयवाचकत्वान्न सकर्मकत्वमिति ज्ञेयम् ॥ १३ ॥

व्यापारस्य धातुवाच्यत्वे शङ्कते—नन्विति । असत्त्वभूतेति । क्रियान्तराकाङ्क्षानुत्थापकतावच्छेदकरूपजात्यरूपसाध्यत्वेन व्यापाररूपक्रियायां धातूपस्थितौ सत्यामित्यर्थः । पाक इति । इत्यादिघञन्तस्थलेऽपीत्यर्थः । तत्प्रत्ययेति । तेन साध्यत्वरूपेण प्रतीत्यापत्तिरित्यर्थः । ननु घञन्ते तथा प्रतीतिरिष्टैवेति चेदाह—न चेष्टापत्तिरिति । अनिष्टापत्तौ हेतुमाह—कृदभिहितेति । कृत्प्रत्ययवाच्यो भावो—धात्वर्थो, द्रव्यवत्—द्रव्यधर्मेण क्रियान्तराकाङ्क्षोत्थापकतावच्छेदकजातिरूपसिद्धत्वरूपेण तुल्यं प्रकाशते भासते, इत्यर्थः । भाष्यविरोधादिति । निरुक्तभाष्याद्भावार्थककृदन्तात्लिङ्गसंख्या-

( धात्वाख्यातार्थनिर्णयः )

**आख्यातशब्दे**—पश्य मृगो धावतीत्यादौ । **भागाभ्यां**—तिङन्ताभ्याम् । प्रकृतिप्रत्ययभागाभ्यामिति विवरणकारोक्तमपव्याख्यानं पचतीत्यत्रापि भागद्वयसत्त्वात् । **साध्यसाधनरूपता** । यथाक्रमं ग्राह्या । साध्यत्वं क्रियान्तराकाङ्क्षानुत्थापकतावच्छेदकरूपवत्त्वम् । **साधनत्वं** कारकत्वेनान्वयित्वम् । **स घञा-**

---

द्यन्वयित्वरूपसिद्धत्वेनैव क्रियायाः प्रतीतेर्लाभादित्याशङ्कयाऽऽह—**आख्यातशब्द इति** । आख्यातशब्द इत्यस्य विवरणमाह—**पश्य मृग इत्यादि** । तथा चाऽऽख्यातशब्द इति बहुव्रीहिः । स चापि आख्यातरूपौ शब्दौ यस्मिन्नित्याख्यातशब्दयोर्द्विवचनान्तयोर्बोध्यः । भागाभ्यामित्यस्य तिङन्ताभ्यामिति विवरणदर्शनात् । वाक्यं चान्यपदार्थः । तत्रैव तिङन्तद्वयसंभवात् । अत एव लाघवेऽपि न कर्मधारय इति सूचितम् । एवं चाऽऽख्यातशब्दे इत्यस्य तिङन्तसमुदाये इत्यर्थः । **अपव्याख्यानमिति** । आख्यातशब्दे कर्मधारयं स्वीकृत्य भागाभ्यामित्यस्य प्रकृतिप्रत्ययरूपभागाभ्यामिति व्याख्यानमशुद्धम् । **भागद्वयसत्त्वादिति** । पचतीत्यत्रापि प्रकृतिप्रत्ययरूपभागद्वयसत्त्वादित्यर्थः । तथा च पाक इत्यत्रैव पचतीत्यत्र सिद्धावस्थापन्नत्वेन क्रियाप्रतीत्यापत्तेर्भागद्वयस्य क्रियावाचकत्वाभावेन दृष्टान्तासंगत्यापत्तेश्चेति भावः । अन्ये तु साध्यत्वसाधनत्वाभ्यां प्रतीतिमात्रेऽयं दृष्टान्तः । यथा पचतीत्यत्र तिङन्ते धातुरूपप्रकृत्या साध्यत्वेन स्वार्थो बोध्यते, साधनत्वरूपस्वार्थस्तिङा, तथा पाक इत्यत्र धातुना साध्यत्वेन क्रिया प्रत्याय्यते, प्रत्ययेन सिद्धत्वरूपेणेत्यर्थः । इदमेव व्याख्यानं हेलाराजीये दृश्यत इत्याहुः । **साध्यसाधनरूपतेति** । यथाक्रमं पश्यभागेन साध्यरूपता, धावतिभागेन साधनरूपता यथा शास्त्रे प्रकल्पितेत्यर्थः । तत्र साध्यत्वमाह—**क्रियान्तराकाङ्क्षानुत्थापकेत्यादि** । **साधनत्वं तु—कारकत्वेनान्वयित्वमिति** । अयं भावः—पश्येत्यत्र क्रियायाः साध्यत्वं स्वस्मिन् कारकाणामन्वयः स्वस्य वा कारकत्वेनान्यत्रान्वयित्वाभावः । धावतीत्यस्याः साधनत्वं तु कारकत्वेनान्यस्मिन्स्वस्यान्वयः । इत्थं पचति भवतीत्यत्राप्येककर्तृका वर्तमाना या पचिक्रिया एकतत्कर्तृका वर्तमाना भवनक्रियेतिबोधात्तत्राप्यूह्यम् । एवं च पश्य मृगो धावतीत्यादौ एकमृगाभिन्नाश्रयिका या वर्तमाना धावनक्रिया तद्विषयकं यदिष्टसाधनीभूतं दर्शनं तदनुकूला भावनेति बोध इति । ननु आख्यातवाच्यक्रियायाः कर्तृत्वकर्मत्वस्वीकारे कारकत्वेनान्यत्रानन्वयित्वरूपं तस्या असत्त्वरूपत्वं

दिष्वपीति । प्रकृत्या साध्यावस्था । प्रत्ययेन साधनावस्था । इयान्विशेषः । घञाद्युपस्थाप्या लिङ्गसंख्यान्वयिनी कारकान्वयिनी च । आख्यातान्तोपात्ता तु नैवम् । तथाऽपि कारकत्वेनान्वयित्वमात्रेण दृष्टान्तदार्ष्टान्तिकत्वमवधेयम् । न च घञन्ते धातुना तथाभिधाने मानाभावः । ओदनस्य पाक इति कर्मणि षष्ठ्या मानत्वात् । न च भवतीत्यध्याहृतक्रियान्वयात्षष्ठी “ कर्तृकर्मणोः कृति ”

भज्येतेतिचेन्न । ‘ क्रिया न युज्यते लिङ्गक्रियानाधारकारकैः । असत्त्वरूपता तस्या इयमेवावधार्यताम् ॥ लिङ्गं च क्रियानाधारकाणि च तैः क्रिया न युज्यते, इति हर्युक्तेः कर्तृत्वकर्मत्वेतरकारकत्वव्याप्यरूपेणानन्वयित्वमसत्त्वरूपत्वमित्यर्थस्य लाभेन तिङन्तोपस्थितक्रियायाः कर्तृत्वकर्मत्वस्वीकारेऽपि असत्त्वरूपत्वभङ्गाभावादित्यर्थः । **स घञादिष्विति** । पाक इत्यादौ प्रकृत्या साध्यावस्थापन्ना प्रत्ययेन तु साधनावस्थापन्ना क्रिया प्रतीयत इत्यर्थः । ननु पचति पश्यतीत्यत्र क्रिययोर्लिङ्गसंख्यानन्वयित्वेन पाक इत्यत्र च लिङ्गसंख्यान्वयित्वेनोभयत्र सादृश्याभावात्कथं दृष्टान्तदार्ष्टान्तिकत्वमित्यत आह—**इयान्परमिति** । **घञाद्युपस्थाप्येति** । क्रियेत्यर्थः । **नैवमिति** । यादृशी घञाद्युपस्थाप्या क्रिया तादृशी तिङन्तोपस्थाप्या क्रिया न भवतीत्यर्थः । तथा च वैधर्म्याद्दृष्टान्तदार्ष्टान्तिकभावो नोपपद्यत इति भावः । दृष्टान्तदार्ष्टान्तिकभावे हि सर्वांशेन साम्यमपेक्षितमित्येवं नैव नियमः । अन्यथा चन्द्रमुखाद्योरपि सर्वांशेन साम्याभावात्तन्न स्यात् । किं च सर्वांशेन साम्ये दृष्टान्तदार्ष्टान्तिकभावविलय एव । न हि भवति घट इव घटः पट इव पट इति । अपि तु किंचिदंशेनैव साम्यमपेक्षितं, तच्च प्रकृतस्थलेऽप्यस्तीत्याह—**तथाऽपीति** । तिङन्तोपस्थाप्या क्रिया यथा कारकत्वेनान्वयमन्वेति तथा घञाद्युपस्थाप्याऽप्यन्यत्र कारकत्वेनान्वेतीति कारकत्वेनान्वयित्वधर्मेण दृष्टान्तदार्ष्टान्तिकभावोऽवधेयः । ननु पाक इत्यादौ प्रकृतिभूतधातुतः साध्यत्वरूपेण क्रियाप्रतीतौ किं प्रमाणमत आह—**ओदनस्य पाक इतीति** । **कर्मषष्ठ्या मानत्वादिति** । घञ्प्रकृतिधातुना यद्येव सिद्धावस्थापन्ना एव क्रियाया अभिधाने कारकाणां साध्यत्वेन प्रतीयमानार्थ एवान्वयनियमादोदनस्याकारकत्वेन तद्व्याप्यकर्मसंज्ञाया असंभवात्कर्तृकर्मणोरिति षष्ठ्यनुपपत्तेरेव घञ्प्रकृतिभूतधातोः साध्यावस्थापन्नक्रियावाचकत्वे प्रमाणत्वादित्याशयः । षष्ठीमुपपादयितुमाशङ्कते—**न चाध्याहृतेति** । अध्याहृतास्तीति तिङन्तोपस्था-

( धात्वाख्यातार्थनिर्णयः )

[ पा० सू० २–३–६५ ] इति कृदन्तेन योग एव तद्विधानात् । "न लोकाव्ययनिष्ठाखलर्थतृनाम्" [ पा० सू० २–३–६९ ] इति लादेशयोगे षष्ठ्या निषेधाच्च । एवं रीत्या काष्ठैः पाक इत्याद्यपीष्टमेव । एवं फलांशोऽपि धातुनाऽसत्त्वावस्थापन्न एवोच्यते । अत एव स्तोकं पचतीतिवत्स्तोकं पाक इत्यु-

---

प्यसाध्यावस्थक्रियायाः पाकेन पाकस्य चौदनेनेति परम्परयाऽन्वयात्षष्ठी स्यादित्यर्थः। तथा च घञन्ते धातुनः साध्यावस्थाक्रियाया अप्रतीतावप्युपपद्यमानया षष्ठ्या तादृशधातोः साध्यावस्थक्रियावाचकत्वं कल्पयितुं न युज्यत इति चेन्नेत्याह—**कृदन्तेन योग एवेति**। कृत्प्रत्ययप्रकृतिभूतधातूपस्थाप्याक्रियानिरूपितकर्तृकर्मवाचकादेव कर्तृकर्मणोः कृतीत्यनेन षष्ठीविधानादित्यर्थः। तथा च कृत्प्रत्ययप्रकृतिभूतधातोः साध्यावस्थक्रियावाचकत्वमन्तरा सा कर्मषष्ठी दुर्लभेति भावः। नन्वध्याहृततिङन्तोपस्थितसाध्यावस्थाक्रियया कृदन्तस्य योगोऽस्तीति तादृशक्रियाद्वारकः कृदन्तयोगोऽप्यस्तीति न कर्मषष्ठ्यनुपपत्तिरित्याशयेनाऽऽह—**न लोकाव्ययेति। निषेधाच्चेति**। अध्याहृतलादेशप्रकृतिभूतधातूपस्थाप्यक्रियान्वये षष्ठीनिषेधाच्चेत्यर्थः। 'कृद्योगा च षष्ठी समस्यते' इति वचनविहित ओदनपाक इति षष्ठीसमासोऽपि कृद्योगषष्ठ्यसंभवान्न स्यात्षष्ठ्यन्तस्योत्तरपदार्थेऽनन्वयेन सामर्थ्याभावाच्चेत्यपि बोध्यम्। न च शेषलक्षणषष्ठ्यैव वाक्यं समासश्चास्त्विति शङ्क्यम्। नलपाकः शुण्ठीपाक इत्यादौ नलादिकर्तृत्वादिप्रकारकबोधस्य सर्वानुभवसिद्धस्य विलयापत्तेः। तस्मात्कर्मषष्ठ्यनुपपत्तिरेव कृदन्तस्थले धातोः साध्यावस्थापन्नक्रियार्थकत्वे प्रमाणमिति यावत्। ननु भावार्थककृत्प्रत्ययप्रकृतिभूतधातोः साध्यावस्थापन्नक्रियावाचकत्वे तन्निरूपितकर्मत्वस्येव करणत्वस्यापि संभवात्काष्ठैः पाक इत्यपि स्यादित्याशङ्क्येष्टमेवैतदिति परिहरन्नाह—**एवं रीत्येत्यादीष्टमेवेत्यन्तम्**। तिङ्प्रत्ययेनैव साध्यावस्थापन्नत्वेन व्यापाररूपभावनाऽभिधीयते, इति मन्वाना मीमांसकाः 'काष्ठैः पाकः' इति प्रयोगमनिष्टमामनन्ति। **एवमिति**। यथौदनस्य कर्मतासिद्ध्यर्थं पाक इत्यत्र साध्यावस्थापन्नव्यापारो धातुनोच्यते तथा फलांशोऽपि धातुना साध्यावस्थापन्न एवोच्यत इत्यर्थः। साध्यावस्थैवासत्त्वावस्थेत्युच्यते वैयाकरणैः। **अत एवेति**। फलस्यापि असत्त्वावस्थापन्नतया धातुनोच्यमानत्वादेवेत्यर्थः। **स्तोकं पचतीतिवदिति**। विक्लित्तिरूपफलस्यापि व्यपदेशिवद्भावात्फलाश्रयत्वेन कर्मत्वात्तस-

पपद्यत इति ॥ १४ ॥

एतदेव स्पष्टयति—

**साध्यत्वेन क्रिया तत्र धातुरूपनिबन्धना ।**
**सिद्धभावस्तु यस्तस्याः स घञादिनिबन्धनः ॥ १५ ॥**

न च घञादिभिः सिद्धत्वेनाभिधाने मानाभावः । पाक इत्युक्ते भवति जायमानाधिकरणस्तोकादिशब्देभ्यो यथा द्वितीया भवति तथा स्तोकं पाक इत्यत्रापि धात्वर्थफले साध्यत्वेनोपस्थिते सामानाधिकरण्येनान्वयात्स्तोकमिति द्वितीया भवतीत्यर्थः । **उपपद्यत इति** । फलांशस्य साध्यावस्थापन्नत्वेनोपस्थितौ तु कारकाणां साध्यत्वेन प्रतीयमानार्थ एवान्वयनियमात्सामानाधिकरण्येनान्वयेऽपि साध्यत्वेनोपस्थितार्थेऽन्वयाभावात्स्तोकं पाक इति नोपपद्येतेति भावः । नन्वेकस्यैव धात्वर्थस्य विरुद्धसाध्यत्वसिद्धत्वाभ्यां कथं भानमिति चेन्न । यथा संबन्धिभेदादेकस्यैव पितृत्वं पुत्रत्वं च तथा एकस्यैव कारकान्वितत्वाद्युपाधिभेदादुभयोः संभवेन तयोर्विरोधाभावादित्यर्थः । व्यापारान्वये तु स्तोकः पाक इत्येव । व्यापारस्याकर्मतया तद्विशेषणे द्वितीयाया अप्राप्तेः । फलान्वये द्वितीयां बाधित्वा कर्तृकर्मणोरिति षष्ठी तु न शङ्क्या । कर्तृसाहचर्येण धात्वर्थभेदेनान्वयिकर्मण एव तत्र ग्रहणादिति लघुमञ्जूषायां निरूपितत्वादित्यर्थः ॥ १४ ॥

**एतदेवेति** । एकस्या एव क्रियायाः साध्यत्वसिद्धत्वाभ्यां भानमेवेत्यर्थः । **साध्यत्वेन क्रियेति** । तत्र—घञाद्यन्ते । प्रतीयत इति शेषः । साध्यत्वेन क्रियाप्रतीतौ बोधकमाह—**धातुरूपेति** । धातुरूपं निबन्धनं निमित्तं यस्या इत्यर्थः । शब्दशक्तिस्वाभाव्याद्धातुवाच्या क्रिया(फलव्यापारौ) साध्यत्वेन प्रतीयत इति यावत् । फलव्यापारोभयोः साध्यत्वेन प्रतीतिबोधनाय क्रियेति साधारणशब्देन निर्देशः । तान्त्रिकैः फलव्यापारयोः क्रियाशब्देन व्यवह्रियमाणत्वात् । **सिद्धभावस्त्विति** । सिद्धत्वेन प्रतीतिरित्यर्थः । **घञादीति** । घञादिनिबन्धनं निमित्तं यस्येत्यर्थः । घञादिवाच्या क्रिया ( फलव्यापारौ ) सिद्धत्वेन प्रतीयत इत्यर्थः । आदिशब्देन क्त्वातुमुन्क्तिन्नादयो ग्राह्याः । घञादिभिर्व्यापारफलयोः सिद्धत्वेन बोधने प्रमाणाभावमाशङ्क्य परिहरति—**न चेत्यादिना मानत्वादित्यन्तेन** । **पाक इत्युक्त इति** । पाक इत्यादिप्रयोगे धात्वर्थघञर्थक्रिययोरभेदान्वये सत्यपि कर्तव्यो वा नाशनीयो वा तिष्ठति वा जायते वा नश्यति

( धात्वाख्यातार्थनिर्णयः )

ते नष्ट इत्याकाङ्क्षोत्थानस्यैव मानत्वात्। धातूपस्थाप्यायां तदसंभवस्योक्तत्वात्। स्तोकः पाक इत्यनापत्तेश्च। तस्माद्धात्वर्थान्वये स्तोकादिशब्देभ्यो द्वितीया। घञर्थान्वये प्रथमा पुंलिङ्गता चेति तत्सिद्ध्यै घञादेः शक्तिरेष्या। एतेन घञादीनां प्रयोगसाधुतामात्रमिति नैयायिकनव्योक्तमपास्तम्। न च घञन्तशक्त्यो-

---

वेत्यादिजायमानपाकसाध्यक्रियान्तराकाङ्क्षाया एव मानत्वादित्यर्थः। **धातूपस्थाप्यायामिति**। पचतीत्यादिस्थल इत्यर्थः। **तदसंभवस्योक्तत्वादिति**। पचतीत्युक्ते क्रियावगतौ पुनः क्रियान्तराकाङ्क्षाया अजायमानत्वेन क्रियान्तराकाङ्क्षाया असंभवस्योक्तत्वादित्यर्थः। क्रियान्तराकाङ्क्षानुत्थापकतावच्छेदकरूपवत्त्वं साध्यत्वमित्यादिनेति शेषः। क्रियान्तराकाङ्क्षानुत्थापकतावच्छेदकरूपेणोपस्थितेऽर्थे क्रियान्वयासंभवात्क्रियान्तराकाङ्क्षाया असंभव इति भावः। **अनापत्तेरिति**। घञ्प्रत्ययेन साध्यावस्थापन्नाया एव क्रियाया अभिधाने तस्या लिङ्गानन्वयितया तादृशधात्वर्थविशेषणवाचकस्तोकादिशब्दस्यापि पुंस्त्वानुपपत्त्या सामान्ये नपुंसकमित्यस्यैवापत्तेरिति भावः। सिद्धावस्थापन्नक्रियाया बोधने तु तादृशक्रियाया लिङ्गसंख्याद्यन्वयितया तत्समानाधिकरणस्तोकादिशब्दस्यापि लिङ्गसंख्यान्वयात्स्तोकः पाकः, इत्येकत्वं पुंस्त्वं चोपपद्यते। एतदेव विशदयति— **तस्मादिति**। **धात्वर्थान्वय इति**। धात्वर्थफलान्वये—स्तोकादिशब्देभ्यो द्वितीया नपुंसकलिङ्गता च। धात्वर्थव्यापाररूपभावनायामन्वये ज्योतिष्टोमेन भक्तिपूर्वं यजेतेतिवत्प्रथमासंभवेऽपि नपुंसकलिङ्गमात्रम्। घञर्थव्यापारान्वये तु व्यापारस्य कर्मत्वाभावेन द्वितीयाया अप्राप्तेः प्रातिपदिकार्थेति प्रथमा पुंलिङ्गता च। घञर्थफलस्य पदार्थैकदेशत्वान्न तत्र स्तोकाद्यन्वयः। धात्वर्थफलस्य पदार्थैकदेशत्वेऽपि तत्रेतरपदार्थान्वयो भवत्येव। अन्यथा तण्डुलं पचति स्तोकं पचति स्तोकं पाक इत्यनापत्तेरित्याशयः। **घञादेः शक्तिरिति**। लिङ्गसंख्याद्यन्वयिव्यापारार्थे, इत्यर्थः। **एतेनेति**। घञादीनां सिद्धावस्थापन्नव्यापारवाचकत्वाङ्गीकारेणेत्यर्थः। **साधुतामात्रमिति**। मात्रपदेनार्थाभिधायकत्वव्यावृत्तिः, प्रयोगसाधुत्वमेवेत्यर्थः। अपास्तं—खण्डितं भवतीत्यर्थः। ननु सिद्धावस्थव्यापारे न घञः शक्तिरभ्युपेयतेऽपि तु घञन्तस्य, तथा च घञन्तशक्त्योपस्थितार्थेऽन्वये स्तोकः पाक इत्युपपद्यत एवेति कातन्त्रपरिशिष्टकारा मन्यन्ते, तन्मतमा-

पस्थाप्यान्वये स्तोकः पाक इति भवतीति वाच्यम् । घञन्तानुपूर्व्याः शक्ततावच्छेदकत्वे गौरवादनुशासनाच्च घञादेरेव तथा शक्तिकल्पनादिति दिक् । एवं च घञ्शक्त्यभिप्रायेण कृदभिहित इति भाष्यमतो न तद्विरोध इति भावः ॥ १५॥

ननु कारकाणां भावनान्वयनियम एव पाक इत्यत्रापि कर्मषष्ठ्यनुरोधेन भावनाया वाच्यत्वं सिध्येत्तदेव कुत इत्याशङ्कां समाधत्ते—

संबोधनान्तं कृत्वोऽर्थाः कारकं प्रथमा वतिः ।
धातुसंबन्धाधिकारनिष्पन्नमसमस्तनञ् ॥ १६ ॥

शङ्कय प्रत्याचष्टे—न च घञन्तेति । घञन्तानुपूर्व्या इति । सिद्धावस्थापन्नव्यापारेऽर्थे घञन्तरूपसमुदायशक्तौ स्वीकृतायामुभयोरानुपूर्व्योः पाकत्वं यागत्वमित्येवंरीत्या नानाशक्ततावच्छेदकत्वापत्त्या गौरवं भवतीत्यतो लाघवाद् 'भावे' इत्यनुशासनानुरोधाच्च घञादेरेव तादृशेऽर्थे शक्तिमभ्युपेत्य घञादेरेव शक्ततावच्छेदकत्वाङ्गीकारस्यौचित्यादित्यर्थः । ननु समुदायशक्तिरवश्यमङ्गीकरणीयैव । अन्यथाऽर्थवत्त्वाभावात्प्रातिपदिकसंज्ञा न स्यात् । कृत्तद्धितेति सूत्रेऽर्थवत्पदानुवृत्तेः सिद्धान्तसंमतत्वात् । प्रत्ययार्थस्य प्रकृत्यर्थ एवान्वयात्समुदायशक्त्यभावे विभक्त्यर्थसंख्याद्यन्वयोऽपि न स्यादिति समुदायशक्तेरावश्यकत्वेऽपि अनुशासनबलाद्घञोऽपि शक्तिरावश्यक्यैव । अन्यथा ण्वुलादेरपि शक्तिर्न सिध्येत् । समुदायशक्त्यैव पाचकेत्यादौ कर्त्राद्यर्थबोधसंभवात्ण्वुलादेः स्वातन्त्र्येण शक्त्यभाव इष्ट इति चेन्न 'कर्तरि कृत्' इत्याद्यनुशासनविरुद्धत्वात् । अनमेजयतीति विग्रहे ण्यन्तादेजेः खशि खशः शित्त्वात्सार्वधातुकत्वेऽपि कर्त्रर्थकत्वाभावाच्छबनुत्पत्त्या जनमेजय इत्यसिद्ध्यापत्तेः, खशो ङित्त्वेन गुणनिषेधापत्तेः। तस्माद् घञः शक्तिरभ्युपेयैव । अत एव कृदभिहितभाव इति भाष्यं संगच्छते इति न तद्विरोध इत्याशयेनाह—इति द्रागिति ॥ १५ ॥

ननु यदि कारकाणां व्यापार एवान्वय इति नियमः स्यात्तेनहैव ओदनस्येति कर्मषष्ठ्यनुरोधेन पाक इत्यादौ धातोर्व्यापारवाचकत्वं सिध्येन्नान्यथा, किंतु तादृशे नियम एव किं मानमित्याशङ्क्याऽऽह—नन्वित्यादि । संबोधनान्तमिति । संबोधनान्तस्येति । संबोधनविभक्त्यन्तार्थस्येत्यर्थः । यथा अर्थद्वारकः शब्दस्य विशेषणत्वादिव्यवहारस्तथाऽर्थद्वारा संबोधनान्तशब्दस्यैव वाऽन्वय

( धात्वाख्यातार्थनिर्णयः )

संबोधनान्तस्य क्रियायामन्वयः । त्वं ब्रूहि देवदत्तेत्यादौ निघातानुरोधात् ' समानवाक्ये निघातयुष्मदस्मदादेशाः" इत्यनेन समानवाक्य एव तन्नियमात् ।

उक्तं हि वाक्यपदीये—

" संबोधनपदं यच्च तत्क्रियाया विशेषणम् ।
व्रजानि देवदत्तेति निघातोऽत्र तथा सति " इति ॥

---

इत्यर्थः । **क्रियायामिति** । प्रवर्तनाविषये धातुवाच्यव्यापारेऽन्वय इत्यर्थः । **ब्रूहि देवदत्तेति** । इह विभक्त्यर्थसंबोधने देवदत्तरूपप्रकृत्यर्थनिरूपितं विशेष्यत्वं, ब्रूहीतिभाषणक्रियानिरूपितं विशेषणत्वं चेति सिद्धान्तः । ' संबोधनपदं यच्च तत्क्रियाया विशेषणम्, व्रजानि देवदत्तेति निघातोऽत्र तथा सति ' इति वाक्यपदीयात् । संबोधनस्य क्रियाविशेषणत्वे हेतुमाह—**निघातानुरोधादिति** । आख्यातं सविशेषणं वाक्यमिति वाक्यलक्षणे सविशेषणमित्यस्य साक्षात्परम्परया च यद्यद्विशेषणं तत्सहितमित्यर्थः । तेन—परम्परयेत्यस्योपादानेन गभीरायां नद्यां मीनोऽस्तीत्यस्यैकवाक्यत्वं सिध्यति । तथा च देवदत्तेतिसंबोधनपदस्य ब्रूहीतिवचनक्रियायामन्वये सत्येवैकवाक्यत्वोपपत्तौ सत्यां—' आमन्त्रितस्य च ' ( ८ । १ । १९ ) इति निघातः—अनुदात्तः सिध्यति नान्यथेति भावः । नन्वेकवाक्यत्वाभावेऽपि निघातः कुतो न सिध्यतीत्यत आह—**समानवाक्य इति** । निमित्तनिमित्तिनोरेकवाक्यस्थत्वे सतीत्यर्थः । देवदत्तस्य संबोधने, संबोधनस्य च क्रियायामिति देवदत्तसंबन्धिसंबोधनविषयत्वरूपपरम्परासंबन्धेन देवदत्तस्य क्रियान्वयान्निमित्तनिमित्तिनोरेकवाक्यस्थत्वमिति भावः। एवं च देवदत्तसंबन्धिसंबोधनविषयस्त्वदभिन्नकर्तृकं भाषणमिति त्वं ब्रूहि देवदत्तेत्यस्य शाब्दबोधः । तथा व्रजानि देवदत्तेत्यस्माद्देवदत्तसंबन्धिसंबोधनविषयो मत्कर्तृकं व्रजनमिति बोधः । केचित्तु—संबोधनविभक्त्यन्तस्यानुवाद्यविषयत्वादनुवाद्यस्य च विधेयसाकाङ्क्षत्वाद्विधेयस्य च क्रियारूपत्वान्न्यायसिद्धोऽयं संबोधनस्य विधेयक्रियान्वयनियमरूपोऽर्थः । तदुक्तं हरिणा—सिद्धस्याभिमुखीभावमात्रं संबोधनं विदुः । प्राप्ताभिमुख्यो ह्यर्थात्मा क्रियासु विनियुज्यते । अस्यार्थः— सिद्धस्य—संबोध्यतावच्छेदकरूपेण देवदत्तत्वादिना सिद्धस्य, संबोधनात्प्राक्काले संबोध्यतावच्छेदकरूपस्यास्तित्वमवश्यमपेक्षितम् , एतेनोद्देश्यत्वे बीजं प्रदर्शितम् , सिद्धं हि लोके उद्देश्यत्वेन प्रसिद्धमिति भावः । **अभिमुखीभावेति** । संबोध-

नम्—अभिमुखीकरणं, तच्च स्वप्रयुक्तशब्दबोध्याज्ञातार्थग्रहणे सादरत्वसंपादनं, सादरत्वसंपादनानुकूलव्यापारश्च संबोधनविभक्त्यर्थः शब्दप्रयोगरूपः । अभिमुखीभावमात्रमित्यनेन फलनिर्देशः, मुखनयनादिना संबोध्यो यदा फलवत्त्वेन गमितो भवति तदा क्रियासु विनियोगः, तदाह—**प्रागभिमुख्य इति** । प्रागभिमुख्यं सादरत्वं येन, स तदर्थः—अर्थपूर्णं आत्मा संबोध्यः—स्वनिष्ठव्यापारप्रयोज्यो यो बोधानुकूलव्यापाराश्रयः क्रियासु—बोधनीयक्रियासु, विनियुज्यते प्रवर्त्यते इति । तथा च विनियुज्यत इत्यनेन संबोधनविभक्त्यन्तार्थस्य प्रवर्तनाविषयव्यापार एवान्वय इति स्पष्टमेव बोधितमित्याशय इत्याहुः । एवं च—स्वप्रयुक्तशब्दबोध्याज्ञातार्थबोधानुकूलव्यापारानुकूलव्यापारः संबोधनपदार्थ इति फलितम् । राम मां पाहीत्यत्र लक्षणसमन्वयः—स्वादिना राम मां पाहीति वचनप्रयोक्ता कश्चिद्रामभक्तः । तेन प्रयुक्तो यः शब्दः—राम मामित्यादिः, तद्बोध्योऽज्ञातश्च योऽर्थः—मां पाहीत्यस्यार्थः, तद्बोधानुकूलो योऽभिमुखीभावः सादरत्वसंपादनरूपो रामनिष्ठो व्यापारः, तदनुकूलो—भक्तनिष्ठो राम मां पाहीति शब्दप्रयोगरूपो व्यापार इति । संबोधनविभक्त्यन्तार्थ—प्रवर्तनाविषयव्यापारयोर्मिथ उद्देश्यविधेयभावेनान्वयः । अभिमुखीभवद्रामोद्देश्यकप्रवर्तनाविषयो मत्कर्मकं रक्षणमिति बोधः । अन्ये तु तादृशोऽज्ञातार्थबोधे प्रकरणार्थस्य समवेतत्वसंबन्धेनान्वयः । तादृशार्थबोध एव च विषयतासंबन्धेन क्रियायामन्वयः । तथा च रामसमवेताज्ञातार्थबोधविषयः प्रार्थनाविषयमत्कर्मकं रक्षणमिति शाब्दबोधं वर्णयन्ति । रक्षणं त्राणं, तच्चेष्टलाभं प्रति सहायकाचरणं, अनिष्टपरिहारपूर्वकं मदिष्टसंपादनानुकूलो व्यापार इत्यर्थः । क्रियासु प्रवर्त्यत इत्युक्त्वा प्रवर्तनाविषयक्रियायामेव संबोधनान्तार्थस्यान्वयः, स एव च नियोगप्रयोजक इत्यवगम्यते । तथा च व्रजानि देवदत्तेत्यत्र व्रजनस्य प्रवर्तनाविषयत्वाभावात्कथमत्र नियोगसिद्धेः फलत्वेन कथनम् । गमनयोग्यकालस्य प्राप्तिविवक्षायां प्रैषातिसर्गप्राप्तकालेष्वर्थेषु लोटः सत्त्वेन व्रजानीत्यतो मत्कर्तृकगमनस्य कालः प्राप्त इत्यर्थावगमादिति चेन्न । तत्र जानीहीत्यध्याहारात्प्रवर्तनाविषयत्वेन विवक्षितायामवबोधनक्रियायां व्रजनस्य कर्मत्वेन, देवदत्तस्य चोद्देश्यत्वेनान्वयेन समानवाक्यत्वाक्षतेः । तथा चाभिमुखीभवद्देवदत्तोद्देश्यकं मत्कर्तृकं प्राप्तकालव्रजनकर्मकं प्रवर्तनाविषयं ज्ञानमिति तस्माच्छाब्दबोधः । न च जानीहीत्यध्याहारे तिङन्तद्वयघटितवाक्यस्यैकतिङ् वाक्यमिति

( धात्वाख्यातार्थनिर्णयः )

पचति भवति देवदत्तेत्यादौ तु सूत्रभाष्यादिरीत्यैकवाक्यतासत्त्वात्स्यादेव निघातः । “ तिङ्ङतिङः ” [ पा० सू० ८-१-२८ ] इति सूत्रयता तिङन्ता-

---

दरिभाषितं यन्निघातोपयोग्येकवाक्यत्वं तदभावेन निघातासिद्धिरिति वाच्यम् । अजानि देवदत्त जानीहीति समुदायस्य योऽर्थस्तस्मिन् अजानि देवदत्तेत्यस्य वृत्तिर्वाक्यैकदेशन्यायेन । तथा च श्रूयमाणादेव तादृगार्थबोध इति श्रूयमाणैकतिङ्घटितत्वेन निघातसिद्धिरित्याशयात् । प्रविश पिण्डीमिति हि वाक्यैकदेशन्यायस्योदाहरणम् । तत्र ‘ प्रविश गृहं ’ इति वाक्यस्यार्थे वाक्यैकदेशस्य प्रविशेत्यस्य प्रयोगः, तथा ‘ पिण्डीं भक्षय ’ इति वाक्यस्यार्थे वाक्यैकदेशस्य पिण्डीमित्यस्य प्रयोगः । तथा च श्रूयमाणात्प्रविशेत्येकस्मादेव प्रविश गृहमिति वाक्यार्थस्य बोधो जायते । अयमेव चाध्याहारपदार्थः । न तु साक्षाद्गृहं भक्षयेत्यनयोस्तत्र प्रयोग आवश्यकः । एवं चैकतिङ् वाक्यमिति भाष्यपठितवार्तिकस्य न विरोधः । **पचति भवति देवदत्तेति** । अस्य जानीहीति शेषः । नन्वेकतिङिति परिभाषितवाक्यस्यैव निघातोपयोगित्वे पचति भवति देवदत्तेत्यस्य तिङन्तद्वयघटितत्वेनैकवाक्यत्वाभावाद्देवदत्तेत्यस्य निघातो न स्यादत आह—**सूत्रभाष्योक्तरीत्येति** । ‘ पचादयः क्रिया भवतिक्रियायाः कर्त्र्यो भवन्ति ’ इति भूवादिसूत्रस्थभाष्य—‘ आख्यातं सविशेषणं वाक्यं ’ इति समर्थसूत्रस्थभाष्योक्तरीत्येत्यर्थः । **एकवाक्यतासत्त्वादिति** । तत्र जानीहीति प्रवर्तनाविषयज्ञानक्रियायां देवदत्तस्योद्देश्यतया, पचिक्रियाकर्तृकभवनस्य च कर्मतयाऽन्वयादनेकतिङन्तघटितसमुदायेऽप्येकवाक्यतासत्त्वादित्यर्थः । एकतिङ् वाक्यमिति स्वशास्त्रीयनिघातादिकार्यमात्रोपयोग्येव । आख्यातं सविशेषणमिति तु शास्त्रलोकसाधारणमिति भावः । तेन पचति भवति, पश्य मृगो धावतीत्याद्यनेकतिङन्तघटितस्थले, एकतिङित्यस्याभावेऽपि न क्षतिः । समर्थसूत्रस्थभाष्योक्तेन ‘ आख्यातं सविशेषणम् ’ इत्यनेन तत्र सर्वानुभवसिद्धैकवाक्यत्वस्योपपत्तेः । **स्यादेवेति** । आष्टमिकेन ‘ आमन्त्रितस्य च ’ इत्यनेन पदात्परस्य समानवाक्यस्थस्याऽऽमन्त्रितस्य विहितो निघातो देवदत्तस्य भवेदेवेत्यर्थः । अभिमुखीभवद्देवदत्तोद्देश्यकं पचिक्रियाकर्तृकभवनकर्मकं प्रवर्तनाविषयो ज्ञानमिति तस्माच्छाब्दबोधः । एवमनेकतिङन्तघटितसमुदायस्यैकवाक्यत्वे भाष्यकारसंमतिं प्रदर्श्य सूत्रकारसंमतिं प्रदर्शयितुमाह—‘ **तिङ्ङतिङः** ’ **इत्यादि** । अतिङन्तात्परं तिङन्तं

नामप्येकवाक्यतास्वीकारात् । एकतिङ्वाक्यमिति वदतां वार्तिककाराणां मते परं न । वस्तुत एकतिङ्विशेष्यकं वाक्यमिति तदभिप्रायस्य हेलाराजीयादौ वैयाकरणभूषणेऽस्माभिश्च प्रतिपादितत्वात्तन्मतेऽपि भवत्येवेत्यवधेयम् । कृत्वोऽर्थाः,

---

निहन्यत इति तदर्थः । तत्र 'पचति भवति' इति तिङन्तद्वयसमुदाये तिङन्तात्परस्य भवतीत्यस्य निघातवारणाय कृतातिङ्ग्रहणं निरुक्तस्थले एकवाक्यत्वाभावेऽनर्थकं सतिङन्तसमुदायेऽप्येकवाक्यत्वं सूत्रकाराभिमतमिति सूचयतीति भावः । तथा च पचति भवति देवदत्तेत्यत्र सूत्रकृद्भाष्यकृन्मते निघातः स्यात् । वार्तिकमते तु न स्यादित्याह—एकतिङ् वाक्यमितीति । एकं तिङ्—तिङन्तं यत्रेति बहुव्रीहिः । तथा चैकतिङन्तघटितसमुदायो वाक्यमित्यर्थः । नन्वेकतिङन्तघटितसमुदायस्यैकवाक्यत्वे तिष्ठति देवदत्तः, पचति चैत्र इत्यत्र देवदत्तः पचतीत्यनयोरेकवाक्यत्वे तिङ्ङतिङ इति निघातापत्तिरिति चेन्न । विशेषणविशिष्टक्रियार्थकत्वं विशेषणं निवेशनीयम् । विशेषणविशिष्टक्रियार्थकैकतिङन्तघटितमित्यर्थः । देवदत्तस्य तिष्ठतीत्यनेनान्वयात्पचतीत्यस्य च चैत्रेण संबन्धाद्भिन्नभिन्नवाक्यस्थयोर्देवदत्तः पचतीत्यनयोः समुदायस्य विशेषणविशिष्टक्रियार्थकत्वाभावादेकवाक्यत्वनिघातापत्त्योरनुपपत्तेरिति भावः । मते परं नेति । वार्तिककारमत एव निघातो न स्यादिति मतभेद इति भावः । संप्रति मतैक्ये मतभेदो न स्यादेव इत्यभिप्रेत्याऽऽह—वस्तुतस्त्विति । एकतिङ्विशेष्यकमिति । एकं तिङ्—तिङन्तं विशेष्यं मुख्यविशेष्यार्थप्रतिपादकं यत्रेत्यर्थः । तथा च मुख्यविशेष्यभूतार्थबोधकैकतिङन्तघटितसमुदायो वाक्यमित्यर्थः । तदभिप्रायस्येति । एकतिङिति वार्तिकाभिप्रायस्येत्यर्थः । वैयाकरणभूषणेऽस्माभिश्चेति । बहुष्वपि तिङन्तेषु साकाङ्क्षेष्वेकवाक्यता । तिङन्तेभ्यो निघातस्य पर्युदासस्तथाऽर्थवान् ॥ बहुष्वपि तिङन्तेषु साकाङ्क्षेषु अन्वययोग्यतावत्सु सत्सु तत्रैकवाक्यता भवतीत्यर्थः । यथा पचति भवतीत्यत्र, हतशायिकाः शय्यन्ते, पश्य मृगो धावतीत्यादि । बहुषु तिङन्तेष्वेकवाक्यतासत्त्वादेव तिङन्तेभ्यः परस्य तिङन्तस्य निघातनिषेधः सार्थक इत्यर्थकेनोपर्युक्तवाक्यपदीयेन कौण्डभट्टकथनादित्यर्थः । तन्मतेऽपि भवत्येवेति । पचति भवति देवदत्त जानीहीति समुदायस्य मुख्यविशेष्यभूतार्थबोधकैकतिङन्तघटितत्वाद्वार्तिकमतेऽपि देवदत्तेत्यस्य निघातो भवत्येवेत्यर्थः । एवं च सूत्रवार्तिकभाष्यकाराणां मध्ये मतभेदो नास्तीति भावः ।

( धात्वाख्यातार्थनिर्णयः )

" क्रियाभ्यावृत्तिगणने कृत्वसुच् " [ पा० सू० ५-४-१७ ] इति क्रियायोगे तत्साधुत्वोक्तेः । क्रियाया अभ्यावृत्तिः पुनः पुनर्जन्म, तस्मिन्द्योत्य इति तदर्थात् । **कारकम्** । कारक इत्यधिकृत्य तथां व्युत्पादनात् । कारकशब्दो हि क्रियापरः करोति कर्तृकर्मादिव्यपदेशानिति व्युत्पत्तेः । तथा चाग्रिमेष्वपादानादिसंज्ञाविधिषु क्रियार्थककारकशब्दानुवृत्त्या क्रियान्वयिनामेव संज्ञेति भाष्ये स्प-

---

**कृत्वोर्था इति** । अत्र कृत्वःपदं कृत्वोर्थ ग्राहकपरं, कृत्वोर्थसदृशोऽर्थो येषामिति उष्ट्रमुखवत्समासः । कृत्वसुजादिरित्यर्थः । **क्रियाभ्यावृत्तिगणन इति** । ' संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच् ' इत्यत्र अभ्यावृत्तिः—जन्म, उत्पत्तिरिति यावत् ; उपसर्गवशाद् ' वृतु वर्तने इति धातोरुत्पत्तौ वृत्तिरिति भावः । क्रियाणां जन्मन उत्पत्तेर्यत्संख्यानं गणनं तत्क्रियाभ्यावृत्तिगणनमित्यर्थः । क्रियाश्च एककर्तृकास्तुल्यजातीया एवापेक्षिताः । भिन्नकर्तृकासु भिन्नजातीयासु च क्रियासु अभ्यावृत्तिप्रतीतेरननुभवात् । एवं च संख्याशब्देभ्यः क्रियाभ्यावृत्तिगणने वर्तमानेभ्यः स्वार्थे कृत्वसुच् प्रत्ययो भवति इति तदर्थः । पञ्चकृत्वो भुङ्क्ते, इत्युदाहरणे निवृत्तभेदाया एकस्या एव भुजिक्रियाया आवृत्त्या जनिता उत्पत्तयः पञ्चसंख्यया गण्यन्ते । आवृत्तिकर्ता गलबिलाधःसंयोगरूपफलानेकत्वमिच्छन् भुजिक्रियायाः पञ्च उत्पत्त्यावृत्तीः करोति, यथा विक्लित्तिरूपं फलमिच्छंस्तदनुकूलं फूत्कारादिव्यापारं करोति तद्वदित्यर्थः । गलबिलाधःसंयोगानुकूलव्यापारो भुजिक्रियेति भावः । एवं च पञ्चशब्दस्य पञ्चसंख्योत्पत्तिपरत्वं संख्यायाः क्रियाभ्यावृत्तिगणन इत्युक्तिस्वारस्यात्, प्रत्ययस्तु तद्द्योतकः, पञ्चसंख्योत्पत्तेश्च स्वसमभिव्याहृतक्रियायामेवान्वयस्यौचित्यात्क्रियायोग एव कृत्वसुजादेः साधुत्वं लभ्यत इत्यभिप्रायः । एवं च पञ्चसंख्योत्पत्तिका वर्तमानकालिका एककर्तृका भुजिक्रियेति बोधः । एवं सकृत्पचति, द्विः पचतीत्यादावप्यूह्यम् । क्रियायोग एव कृत्वसुजादेः साधुत्वादेव द्वौ घटावित्यादिवद्द्विर्घट इत्यादिकं न भवति क्रियागणनाभावादिति बोध्यम् ॥

**कारकमिति** । कर्ता कर्म चेत्यादि कारकषट्कमित्यर्थः । कारकशब्दस्य क्रियापरत्वं दर्शयितुं तद्यौगिकार्थमाह **—करोति कर्तृकर्मादिव्यपदेशानिति** । अस्याः क्रियाया अयं कर्ता, इदं कर्म, इदं करणमित्येवं क्रियानिरूपिता एव हि कर्तृकर्मादिसंज्ञा इत्यर्थः। **क्रियान्वयिनामेव संज्ञेति**। अयं भावः-ध्रुवमपाये...इत्या-

इम् । **प्रथमा वति** । " तेन तुल्यं क्रिया चेद्वतिः " [ पा० सू० ५—१—१५१ ] इति विहितः । तत्र यत्तुल्यं सा क्रिया चेदित्युक्तत्वात् । **धातुसंबन्धाधिकारे** । " धातुसंबन्धे प्रत्ययाः " [ पा० सू० ३—४—१ ] इत्यधि-

---

द्युत्तरसूत्रे 'क्रियायां' इत्यस्यानुवृत्तौ सत्यां क्रियाया जनकाकाङ्क्षायां तत्र जनकत्वेन यदपाये ध्रुवमित्यस्य संबन्धे क्रियमाणे क्रियाजनकमित्यर्थसंपत्त्या जनकस्य जन्याकाङ्क्षतया जन्य एव जनकस्यान्वय उचित इति क्रियान्वयिनामेवापादानादिसंज्ञा इत्यर्थ इति । अन्ये तु करोति क्रियां निर्वर्तयतीति व्युत्पत्तिदर्शनात्क्रियाजनकत्वं कारकत्वम् । तच्च कर्त्रादीनां षण्णामप्यस्ति । तत्र क्रियाजनकमिति ज्ञाते का सा क्रियेत्याकाङ्क्षोदयेन क्रियायाश्चापि जनकाकाङ्क्षतया येन यदाकाङ्क्ष्यते तत्तेनैवान्वेतीति नियमात्तेनैवान्वयो युक्तः । क्रियान्वयित्वं कारकत्वमिति तु न । कारकाणां भावनान्वय इत्यस्य क्रियान्वयिनां क्रियान्वय इत्यर्थापत्त्याऽसंगत्यापत्तेः । तत्र प्रकृतधात्वर्थव्यापाराश्रयः कर्ता, प्रकृतधात्वर्थप्रधानीभूतव्यापारप्रयोज्यप्रकृतधात्वर्थफलशालित्वेनोद्देश्यं कर्म, कर्तृनिष्ठव्यापारप्रयोज्यस्वनिष्ठव्यापाराव्यवधानेन फलनिष्पादकं करणम्, सकर्मकक्रियाकर्मसंबन्धाय क्रियायां यदुद्देश्यं तत्संप्रदानम्, तत्तत्समवेततत्क्रियाजन्यप्रकृतधात्ववाच्यविभागाश्रयमपादानम्, कर्तृकर्मद्वारकफलव्यापाराधारोऽधिकरणम्, इति प्राहुः ।

**प्रथमा वतिरिति** तेन तुल्यं क्रिया चेद्वतिरिति । तुल्यमिति क्रियापदस्य विशेषणम् । सामान्याभिप्राये नपुंसकम् । तृतीयान्तात्तुल्यमित्यर्थे वतिः स्यात्तत्तुल्यं सा क्रिया चेदिति तदर्थः । ब्राह्मणवदधीते, इत्युदाहरणम् । अत्र ब्राह्मणशब्दस्तत्कर्तृकाध्ययनपरः, ब्राह्मणकर्तृकाध्ययनतुल्यं क्षत्रियकर्तृकाध्ययनमिति बोधः । तत्र तस्येवेति वत्यर्थस्य क्रियान्वयित्वाभावात्प्रथमा वतिरित्युक्तम् । देवदत्तवच्चैत्रः सुन्दर इत्यत्र भवतीत्यध्याहार्यम् । अन्यथा सूत्रे क्रिया चेदिति व्यर्थमेव स्यात् । एवं च वत्यर्थसादृश्यस्य क्रियैवाऽऽश्रय इति क्रियायोग एव प्रथमवतेः साधुत्वं लभ्यते । **धातुसंबन्धाधिकारेति** । 'धातुसंबन्धे प्रत्ययाः' अत्र धातोः शब्दस्य धातुना शब्दान्तरेण संबन्धासंभवाद्धातुपदेन धात्वर्थो लक्ष्यते । संबन्धस्य च द्विष्ठत्वाद्धात्वर्थयोः संबन्ध इत्यर्थः । तथा च 'धातुसंबन्धे' इत्यधिकारस्थ विहितप्रत्ययानां क्रियायोग एव साधुत्वं लभ्यते । यथा—पाहि पाहीति याती-

कृत्य तेषां विधानात् । **असमस्तनञ्** । समासायोग्यः प्रसज्यप्रतिषेधीयो नञि-त्यर्थः । उत्तरपदार्थान्वयेऽपि समासविकल्पेन पक्षेऽसमस्तत्वात् । यथाश्रुतग्रह-

---

त्यत्र याधातोः क्रियासमभिहारे लोट्, तस्य ह्यादेशे 'क्रियासमभिहारे द्वे' इति द्वित्वं यातीत्यनुप्रयोगश्च । अत्र याहि याहि, इति लोडन्तार्थस्य यातीति तिङन्तोपस्थितक्रियायां सामान्यविशेषभावेनान्वयात् 'पुनः पुनरतिशयेन वा यद्यानं तदभिन्नमेककर्तृकं वर्तमानकालिकं यानम्' इति बोधः । एवं पश्यन् ययावित्यत्र भूतकालिकदर्शनकर्त्रभिन्नकर्तृकं यानमित्यर्थः । बृहद्भूषणे तु भोक्तुं पचतीत्युदाहृतं, तत्र यद्यपि तुमुन्ण्वुलौ० इत्युक्तस्तुमुन् न धातुसंबन्धाधिकारे विहितस्तथाऽपि क्रियावाचिन्युपपद एव विहितत्वात्क्रियासंबन्धनिमित्तकत्वं तस्याक्षतमेवेति नोदाहरणासंगतिरिति बोध्यम् ।

नन्वब्राह्मणमानयेत्यादौ क्रियाभिन्नेऽप्यन्वयदर्शनादाह—**असमस्तनञिति** । क्रिययैवान्वेतीति शेषः । ननु घटोऽयं न पट इत्यत्रासमस्तस्यापि नञः क्रियायामनन्वयेन नियमासंगत्यापत्तिरित्याशयेनासमस्तनञित्यस्य विवक्षितमर्थमाह—**समासायोग्य इति** । समासायोग्यत्वमेव विशदयति—**प्रसज्येति** । प्रसज्य—प्रतिषेधशब्दयोः सुप्सुपेति समासः । प्रसज्य—आपाद्य, प्रतिषेधो—निषेध इत्यर्थः । प्रसज्य क्रियागुणौ ततः पश्चान्निवृत्तिं करोतीति मञ्जूषायामुक्तत्वात् । ततस्तमर्हतीत्यर्थे तदर्हतीति छप्रत्यये क्रियान्वययोग्य इत्यर्थः । 'प्रसज्यप्रतिषेधस्तु क्रियया सह यत्र नञ्' इत्युक्तत्वात् । तिङन्तोपस्थितक्रियान्वय्येव सर्वथा समासायोग्यः, तिङन्तेन समासनिषेधादिति भावः । अन्यथा उत्तरपदार्थान्वयेऽप्यब्राह्मण इत्यादौ समासविकल्पेन पक्षेऽसमस्तत्वात्क्रियान्वयनियमस्य व्यभिचारापत्तिरित्याशयवानाह—**यथाश्रुतग्रहणायोगादिति** । एवं च व्यभिचारवारणायासमस्तनञित्यस्य तिङन्तोपस्थाप्यक्रियान्वयीत्येवार्थो विवक्षितव्य इत्यभिप्रायः । ननु भूतले घटो नास्तीत्यत्र घटाभाव एव घटाभावकर्तृकास्तिक्रियैव प्रतीयते, न तु घटकर्तृकास्तिक्रियाभावः । न च भूतलाधिकरणकघटकर्तृकसत्ताभाव एव नञा बोध्यत इति वाच्यम् । यत्र भूतले वर्तमानकालावच्छेदेन घटसंबन्धाभावस्तत्र भूतलाधिकरणकवर्तमानकालिकसत्ताया अप्रसिद्ध्या तादृशसत्ताभावबोधनासंभवादनुभवविरोधाच्चेत्याशयेन शङ्कमानो ब्रूते—न **चासमस्तेत्या-**

न्वायोगात् । न चासमस्तनञः क्रियान्वये मानाभावः । न त्वं पचसि न युवां पचथः, चैत्रो न पचति घटो न जायत इत्यादौ क्रियाया एव निषेधप्रतीतेः । अत एव विद्यमानेऽपि घटे तथाप्रयोगस्तथा च घटो नास्तीत्यत्राप्यस्तित्वाभाव एव बोध्यते । न हि घटो न जायते नास्तीत्यनयोर्धात्वर्थभेदमन्तरेणास्ति विशे-

दि मानाभाव इत्यन्तम् । समाधत्ते—न त्वं पचसीत्यादि । क्रियाया एव निषेधप्रतीतेरिति । युष्मदाद्यर्थाभिन्नलडर्थकर्तृनिष्ठवर्तमानकालिकपाकक्रियाभाव इति बोधादित्यर्थः । तथा च तादृशबोध एवासमस्तनञर्थस्य क्रियान्वये मानमिति भावः । नञर्थाभावस्य प्रतियोगितया क्रियान्वयादेव युष्मदादेस्तिङ्वाच्यकारकवाचित्वरूपसामानाधिकरण्यसत्त्वात्प्रथममध्यमपुरुषाद्युपपत्तौ, उपपद्यते चैकवचनद्विवचनादि । नञर्थस्य प्रतियोगितया युष्मदाद्यर्थान्वये तु त्वदभावो मदभावश्चास्तीतिवत् न त्वं पचसीत्यादावपि युष्मदस्मदोस्तिङ्वाच्यकारकवाचित्वरूपसामानाधिकरण्यस्य विरहान्मध्यमोत्तमयोरनापत्तिर्द्विवचनबहुवचनानुपपत्तिः प्रथमपुरुषापत्तिश्च स्यादिति भावः । घटो न जायत इत्यत्र क्रियानिषेधप्रतीतौ युक्तिमाह—अत एवेति । जननक्रियाया अभावप्रतीतेरेवेत्यर्थः । विद्यमानेऽपि घट इति । घटस्य विद्यमानतादशायामपीत्यर्थः । घटस्य विद्यमानत्वे घटाभावबोधनस्याशक्यतया नञ क्रियानिषेधबोधोऽवश्यमभ्युपगन्तव्य इति भावः । तादृशप्रयोग इति । घटो न जायत इत्येतादृशः प्रयोग इत्यर्थः । घटावस्थितिदशायां घटे स्वकर्तृकोत्पत्त्यनुकूलव्यापाराभावस्य सत्त्वादिति भावः । असमस्तनञर्थाभावस्य प्रतियोगितया नामार्थान्वये तु घटाभावे घटनिष्ठोत्पत्त्यनुकूलव्यापारविरहात्तादृशप्रयोगो नैव स्यादित्याशयः । तथा चेति । न त्वं पचसीत्यादावुक्तरीत्या नञः क्रियाप्रतियोगिकाभावबोधकत्वावश्यकत्वे चेत्यर्थः । अस्तित्वाभाव एवेति । घटकर्तृकसत्ताया एवाभाव इत्यर्थः । एवकारेण घटाभावो व्यावर्तितः । ननु घटो न जायत इत्यादिपूर्वोक्तस्थलेऽनुपपत्त्या क्रियाप्रतियोगिकाभावप्रतीतिस्वीकारेऽपि घटो नास्तीत्यादौ घटाभावप्रतीतिरेव स्वीक्रियतां बाधकाभावात्, तथा च तत्रैव नञः क्रियान्वयनियमभङ्ग इत्याशङ्क्य घटाभावप्रतीतिस्वीकारे बाधकं प्रदर्शयति—न हि 'घटो न जायते' इत्यादिना । एकत्रोत्पत्त्यनुकूलो व्यापारो धात्वर्थः, अपरत्र सत्तानुकूलो व्यापारः । अनयोर्मध्ये धात्वर्थभेद एव विशेषः, एतदतिरिक्तः कश्चिदपि क्रियानपि

षः। तथा च भूतले न घट इत्यत्राऽप्यस्तीत्यध्याहार्यम्। प्रकारतासंबन्धेन नञर्थविशेष्यकबोधे धातुजन्यभावनोपस्थितेर्हेतुत्वस्य क्लृप्तत्वात्। शेषं नञर्थनिर्णये वक्ष्यते ॥ १६ ॥

तथा यस्य च भावेन षष्ठी चेत्युदितं द्वयम्।
साधुत्वमष्टकस्यास्य क्रिययैवावधार्यताम् ॥ १७ ॥

"यस्य च भावेन भावलक्षणम्." [पा० सू० २-३-३७] इत्यत्र भावनार्थकभावशब्देन तद्योगे साधुत्वाख्यानलाभात्। "षष्ठी चानादरे" [पा०

---

विशेषो नास्ति। योऽपि विशेषोऽस्ति सोऽपि नञर्थाभावप्रतियोगिभेदकल्पनेऽकिंचित्कर इत्यर्थः। तथा चोभयत्रापि क्रियाप्रतियोगिकाभाव इत्येवमेकरूप एव शाब्दबोधः। 'संभवत्येकरूपत्वे रूपभेदो हि दूषणं' इति युक्तिसिद्धाभियुक्तोक्तेः। सत्येवं यदि विना कारणं नञर्थाभावप्रतियोगिभेदः कल्प्येत तर्हि बोधस्यैकरूपत्वं भज्येत वैरूप्यं च स्यादिति तदेव वैरूप्यं घटो नास्तीत्यत्र घटाभावप्रतीतिस्वीकारे बाधकमित्याशयः। ननु भूतले न घटः, इत्यत्र क्रियावाचकध्याहारविरहिते वाक्ये भूतलवृत्तिघटाभाव एव बोधनीयस्तथा च तत्रैव क्रियान्वयनियमभङ्गोऽत आह—तथा च भूतले नेति। अस्तीत्यध्याहार्यमिति। अस्तिर्भवन्तीपरोऽप्रयुज्यमानोऽप्यस्तीति भाष्यात्। भवन्तीति लटः संज्ञा, लट्परोऽस्तिधातुः प्रयोक्तव्य इति तदर्थादिति भावः। अध्याहारे बीजमाह—प्रकारतासंबन्धेनेति। नञर्थाभावनिष्ठविशेष्यतानिरूपितप्रकारतासंबन्धेन शाब्दबोधत्वावच्छिन्नं प्रति धातुजन्यभावनोपस्थितिः कारणमित्येवं कार्यकारणभावस्य क्लृप्तत्वादित्यर्थः। अत्र यत्किंचिन्निष्ठप्रकारतानिरूपितनञर्थाभावनिष्ठविशेष्यताकशाब्दबोधजननं कार्यं, तादृशाभावनिष्ठविशेष्यतानिरूपितप्रकारतासंबन्धावच्छिन्नधातुजन्यव्यापाररूपभावनोपस्थितिः कारणमिति बोध्यम्। क्लृप्तत्वादिति। आवश्यकत्वादित्यर्थः। अन्यथा नञर्थाभावस्य क्रियान्वयनियमो नोपपद्येतेति भावः। शेषमिति। आरोपितत्वं नञ्द्योत्यमनेकमित्यत्रैकवचनानियमेन द्विवचनबहुवचनाभावश्चेत्यादीत्यर्थः ॥ १६ ॥

तथा यस्य च भावेनेति। यस्य च भावेनेत्यनेनैतादृशपदत्रयघटितं, षष्ठी चेत्यनेनैतादृशपदद्वयघटितं च सूत्रं लक्ष्यते इत्याशयवानाह—यस्य च भावेन भावलक्षणमित्यत्रेति, षष्ठी चानादरे, इतीति च। अत्र भावशब्दो धा-

सू० २-३-३८ ] इति तद्ग्रिमसूत्रेऽपि चकाराद्यस्य च भावेनेत्यायातीत्यर्थः। साधुत्वमिति। तत्स्वरूपं तु वक्ष्यते। क्रिययैवेति। अयं भावः—भूवादिसूत्रादिषु प्रायः क्रियाशब्देन भावनाव्यपदेशात्तत्र तस्य सांकेतिकी शक्तिः फलांशे क्वाचित्कः क्रियत इति यौगिकः प्रयोगः। तथा च संज्ञाशब्दस्यानपेक्ष्य-

---

तुवाच्यक्रियापरौ। यन्निष्ठक्रियया क्रियान्तरं लक्ष्यते ततः सप्तमीति तदर्थः। गत इत्यस्य ज्ञापकक्रियाश्रयवाचकादित्यर्थः। तच्च गोपद्दुह्यमानपदयोरप्यस्तीति उभाभ्यामपि सप्तमी भवति। ज्ञापकत्वं सप्तम्यर्थः, तस्य च भावलक्षणमित्युक्तेः क्रियायामेवान्वय इति सतिसप्तम्याः क्रियायोग एव साधुत्वं लभ्यते। यथा गोषु दुह्यमानासु गत इति। दुह्यमानानां गवां ज्ञापकत्वं ज्ञाप्यत्वं च गमनक्रियायां शब्दतः प्रतीयते तथाऽपि गोगतदोहनक्रियायाः साक्षाज्ज्ञापकता गवां तु तदाश्रयतया। निर्ज्ञातकालक्रियाया अनिर्ज्ञातकालक्रियायां स्वाधिकरणकालवृत्तित्वज्ञापकत्वात्। वर्तमानदोहनविशिष्टाभिर्गोभिर्ज्ञाप्यगमनवानिति शाब्दबोधे गोदोहनकाले गत इति फलितोऽर्थः। एवमुत्तरसूत्रेऽपीति रुदति रुदतो वेत्यादौ पुत्रादिविषयकोऽनादरोऽधिको भासत इति ज्ञेयम्। तत्स्वरूपं—साधुत्वस्वरूपम्। वक्ष्यते—असाधुरनुमानेनेत्येतव्द्याख्यानावसर इति शेषः। क्रिययैवेतीति। एवकारोऽयोगव्यवच्छेदार्थः। अयोगः संबन्धाभावः, तस्य व्यवच्छेदो निवृत्तिः। तथा च निरुक्ताष्टकस्य क्रियायोग एव साधुत्वं नान्यथेत्यर्थः। ननु क्रियाशब्दस्य धात्वर्थमात्रे प्रसिद्धिः फलान्वयेनैवोक्ताष्टकस्य साधुत्वे सति न भावनान्वयनियमः सिध्यतीति न तदनुरोधेन भावनायाः पाक इत्यादौ धातुवाच्यत्वं लभ्यत इत्याशङ्कयाऽऽह—अयं भाव इति। भूवादयो धातवः, इत्यादिसूत्रेषु बाहुल्येन व्यापाररूपभावनायाः क्रियाशब्देन व्यवहारस्य कृतत्वाद्भावनायां क्रियाशब्दो रूढः। क्रियेत्याकारकः शब्दो रूढ्या भावनां प्रतिपादयतीत्यर्थः। भावनायां क्रियाशब्दस्य रूढिसत्त्वे तथाप्रयोगप्राचुर्यदर्शनमेव प्रमाणमित्याशयेन 'प्रायशः क्रियाशब्देनेत्युक्तम्। ननु फलेऽपि क्रियाशब्दः प्रयुक्तो दृश्यते, तत्कथं भावनायामेव क्रियाशब्दस्य सांकेतिकी शक्तिरित्युच्यते, इत्याशङ्कयाऽऽह—फलांशे क्वाचित्क इति। क्रियाशब्दे कृञः श चेति सूत्रेण कर्मणि शप्रत्ययः। तथा च क्रियते भावनारूपव्यापारेणोत्पाद्यते इति व्युत्पत्त्या फले यौगिकोऽयं क्रियाशब्दः, स चापि फले क्वचिदेव प्रयुक्तः। क्वाचित्क इत्यनेन प्रयोगबाहुल्याभाव उक्तः।

( धात्वाख्यातार्थनिर्णय. )

प्रवृत्तत्वेन बलवत्त्वाद्भावनान्वय एव साधुता लभ्यते । अत एव संज्ञाशब्दप्राबल्याद्रथंतरमुत्तराग्रन्थपठितऋक्ष्वेव गेयं न तु वेदे तदुत्तरपठ्यमानऋक्ष्विति नवमे

---

तेन फलांशे क्रियाशब्दस्य रूढ्यभाव इत्युक्तं भवति । योगात् प्रकृतिप्रत्ययार्थसंबन्धादागतो यौगिकः । अवयवशक्त्यसहकृतसमुदायशक्तिमात्रेणाऽर्थप्रतिपादिका रूढिः, समुदायशक्तिनिरपेक्षावयवशक्त्याऽर्थप्रतिपादिका योगशक्तिः । अवयवार्थानुसंधानसापेक्षत्वेन योगार्थस्य बिलम्बोपस्थितिकत्वाद्बहिरङ्गत्वं, अवयवार्थानुसंधानानपेक्षत्वेन तु.रूढ्यर्थस्य शीघ्रोपस्थितिकत्वादन्तरङ्गत्वमित्यन्तरङ्गबहिरङ्गभावमूलकेन योगाद्रूढिर्बलीयसीतिन्यायेन क्रियाशब्देन व्यापाररूपभावनाया एव ग्रहणावश्यकत्वेन भावनारूपक्रियान्वय एवाष्टकस्य साधुत्वं प्रतिपाद्यते न तु फलान्वयेनेति भाव इति । संज्ञाशब्दस्येति । रूढस्येत्यर्थः । अनपेक्ष्येति । प्रकृतिप्रत्ययात्मकावयवार्थमननुसंधायेत्यर्थः । संज्ञाशब्दस्यै प्रकृतिप्रत्ययार्थाननुसंधानप्रवृत्तिकत्वेन बलीयस्त्वे मीमांसाधिकरणं प्रमाणीकरोति—अत एवेति । संज्ञाशब्दप्राबल्यादिति । सापेक्षप्रवृत्तिकशब्दापेक्षया निरपेक्षप्रवृत्तिकशब्दस्य बलीयस्त्वादित्यर्थः । नवमे निर्णीतमिति । नवमाध्याये द्वितीयपादे पञ्चमेऽधिकरणे रथंतरमुत्तराग्रन्थपठितयोरेवर्चोर्गेयमिति निर्णीतमित्यर्थः । तद्धि 'यद्योन्यां गायति तदुत्तरयोर्गायति ' इति वचने पदान्तरसापेक्षत्व—पदान्तरनिरपेक्षत्वाभ्यामर्थप्रतिपादकयोर्द्वयोरुत्तराशब्दयोर्मध्ये पदान्तरनिरपेक्षार्थप्रतिपादकोत्तराशब्दग्रहणनिर्णयाय प्रवृत्तम् । छन्दः, उत्तरा चेति द्वौ ग्रन्थौ सामगानामृक्पाठार्थौ स्तः । तत्र छन्दोनामके ग्रन्थे नानाविधानां साम्नां योनिभूता एवर्चः पठिताः । उत्तराग्रन्थे तु तृचात्मकानि सूक्तानि पठितानि । एकस्मिंस्तृचे छन्दोगता योन्यृक्प्रथमा, इतरे द्वे उत्तरे । एवं स्थिते 'तदुत्तरयोर्गायति' रथंतरयोन्युत्तरयोर्ऋचोर्गायतीत्यत्र द्विविधे उत्तरे संभवतः । छन्दोग्रन्थे 'अभि त्वा शूर ' इतीयमृक् रथंतरयोनित्वेन पठिता । तस्या उपरि 'त्वामिद्धि हवामहे ' इत्यादयो बृहदादिसाम्नां योनयः पठिताः । उत्तराग्रन्थे तु 'अभि त्वा शूर ' इति सूक्ते तस्या ऋच ऊर्ध्वं 'न त्वा वाँ अन्ये ' इत्येषा साम्नः कस्याप्ययोनिभूता पठिता । तत्र छन्दोग्रन्थानुसारेण बृहदादिसामान्तरयोनी द्वे ऋचौ रथंतरस्य स्वयोन्युत्तरे भवतः । उत्तराग्रन्थानुसारेण तृचगते द्वितीयतृतीये ऋचौ स्वयोन्युत्तरे भवतः । तत्र तदुत्तरयोरित्यत्रत्योत्तराशब्देन

निर्णीतम् । किं च फलांशोऽपि भावनायां विशेषणं कारकाण्यपि कदाचित्तथाभू-

किं छन्दोग्रन्थानुसारेण रथंतरयोन्युत्तरभूते बृहदादिसामान्तरयोर्योनी 'त्वामिद्धि हवामहे' इत्यादी द्वे ऋचौ ग्राह्ये, उत उत्तराग्रन्थानुसारेण रथंतरयोन्युत्तरे तृचगते कस्यापि साम्नोऽयोनिभूते द्वितीयतृतीये 'न त्वा वाँ अन्ये' इत्यादी द्वे ऋचौ ग्राह्ये, इत्येवं संदेहे प्राप्ते सति—द्विविधो ह्युत्तराशब्दः। तत्रैको व्यवस्थावाची, अपरश्च ग्रन्थविशेषवाची। यश्च व्यवस्थावाची सोऽवध्यंशे नित्यसाकाङ्क्षः। उत्तरयोरित्युक्ते तत्र कस्मादित्येवमवध्याकाङ्क्षाया नियमेन जायमानत्वात्। तस्मादवधिवाचकपदान्तरसापेक्षत्वेनैवायं स्वार्थप्रतिपादकः। पदान्तरानपेक्षायां त्वनर्थक एव भवेत्। तदुक्तं शाबरभाष्येऽस्मिन्नेवाधिकरणे—'सर्वे हि संबन्धिशब्दाः पदान्तरमनपेक्षमाणा न कंचिदर्थमाहुः। तस्मादपेक्षितं पदान्तरम्। इतरथाऽपरिपूर्णार्थं वाक्यमनभिधायकमेव स्यात्कस्यचिदप्यर्थस्य'। संबन्धिशब्दाः—नित्यं संबन्ध्यन्तरसापेक्षाः। उत्तराशब्दस्य वैदिकप्रयोगाद्ग्रन्थविशेषे संज्ञात्वेन विनियुक्तस्य ग्रहणे तु तस्य पदान्तरनिरपेक्षत्वात्केवलं श्रवणमात्रेणैव परिपूर्णस्वार्थबोधकत्वम्। तदप्युक्तं तत्रैव—'संज्ञासंज्ञिग्रहणे न पुनः पदान्तरमपेक्षते, श्रुत्यैव परिपूर्णार्थो गृह्यते। तस्मान्न संबन्धिशब्दो ग्रहणीयः। उत्तरासंज्ञैवोपादातव्या। न हि संज्ञासु गृह्यमाणासु पदान्तरानन्तर्यमपेक्षितव्यं भवति' इति। एवं च बृहदादियोन्योरुत्तराशब्दस्य पूर्वकस्सापेक्षत्वाद्यौगिकी प्रवृत्तिरिति तयोर्विलम्बेनोपस्थितिः। उत्तराग्रन्थे तु तस्य रूढ्यपरपर्यायसंज्ञात्वेन प्रवृत्तिरिति ग्रन्थस्य झटित्युपस्थितिः। ततश्चोत्तराशब्देनात्रोत्तराग्रन्थे पठितयोरेव शीघ्रमुपस्थितिः कृतेति तत्रैव रथंतरं गेयं, न बृहदादियोन्योरिति सिद्धान्तितम्। एवं च तत्र यथा संबन्धिशब्दस्य तत्तत्संबन्धिप्रतीतिसापेक्षप्रवृत्तिकत्वेन विलम्बोपस्थितिकत्वाद्दौर्बल्यं, संज्ञाशब्दस्य तु निरपेक्षप्रवृत्तिकत्वेन शीघ्रोपस्थितिकत्वात्प्राबल्यं तथा प्रकृते योगार्थप्रतीतिसापेक्षप्रवृत्तिकयौगिकापेक्षया संज्ञाशब्दस्य योगार्थप्रतीतिनिरपेक्षप्रवृत्तिकत्वात्प्राबल्यमिति भावः।

ननु फलस्यापि 'कर्मवत्कर्मणा' इति सूत्रे क्रियाशब्देन व्यवहारादस्तिभवतिविद्यतिषु साध्यत्वेन प्रतीयमानत्वात्सत्तादेरेव क्रियात्वोपपादनाच्च फलस्यापि क्रियाशब्देन ग्रहणे बाधकाभाव इत्याशङ्क्याऽऽह—किं च फलांशोऽपीति। व्यापारविशेषणमित्यर्थः। 'फले प्रधानं व्यापारः' इत्युक्तत्वादिति भावः।

तानीति " गुणानां च परार्थत्वादसंबन्धः समत्वात्स्यात् " इति न्यायेन सर्वे सेवका राजानमिव भावनायामेव परस्परनिरपेक्षाण्यन्वियन्ति । न हि भिक्षुको भिक्षुकान्तरं याचितुमर्हति सत्यन्यस्मिन्नभिक्षुक इति न्यायेनापि फलं त्यक्त्वा भावनायामेवान्वियन्तीति **मीमांसका** अपि मन्वते । एवं च विशेष्यतया कारकादिमकारकबोधं प्रति धातुजन्यभावनोपस्थितिर्हेतुरिति कार्यकारणभावस्य क्लृप्त-

---

**क्वचित्तथाभूतानीति** । व्यापारविशेषणानीत्यर्थः । चैत्रस्तण्डुलं पचतीत्यादौ कर्तृतिङन्ते कारकाणां व्यापारविशेषणत्वेन दृष्टत्वादिति भावः । पक्वेत्यादौ कृदन्ते कारकाणां व्यापारं प्रति विशेष्यत्वात्क्वचिदित्युक्तम् । **गुणानां चेति** । 'गुणानां च परार्थत्वादसंबन्धः समत्वात्स्यात् ' ( जै. सू. ३ । १ । २२ ) अस्यार्थः—गुणानां—विशेषणानां, परार्थत्वात्—विशेष्योपकारित्वात्, समत्वात्—विशेष्योपकारित्वरूपसमानधर्मत्वात्, तेषां परस्परं संबन्धो गुणप्रधानभावेनान्वयो न स्यादिति । तथा च यथा फलस्य विशेष्योपकारित्वाद्विशेष्यभूते व्यापार एवान्वयस्तथा कारकाणामपि विशेष्योपकारित्वात्साक्षात्परम्परया वा व्यापार एवान्वयो, न तु क्वचिदपि फले, विशेषणत्वाविशेषान्निराकाङ्क्षत्वाच्च । कारकत्वस्य क्रियाजनकत्वरूपत्वेन जन्यक्रियांश एव तेषां साकाङ्क्षत्वादिति भावः । एतन्न्यायानुगुणं दृष्टान्तं स्वयमेवाऽऽह—**सर्वे सेवका इति** । परस्परं गुणप्रधानभावमनापन्नाः सेवकाः प्राधान्येन यथा राजानमेव सेवन्ते तथा कारकाण्यपि परस्परनिरपेक्षाणि व्यापारमेव विशेष्यत्वेनाङ्गीकुर्वते, न गुणभूतं फलांशमिति न तत्रान्वय इत्यर्थः । किं च कारकाणां नित्यपरतन्त्राणां विशेष्याकाङ्क्षायां धात्वर्थफलांशस्य तथान्वययोग्यतायामपि तस्यापि परतन्त्रस्य विशेष्याकाङ्क्षापूरणसमर्थायां व्यापाररूपभावनायामेवान्वयाङ्गीकारे लौकिकन्यायं प्रदर्शयति—**न हि भिक्षुक इति** । यथा हि लोकव्यवहारे भिक्षुको भिक्षुकान्तरं न याचते सति भिक्षुकादन्यस्मिन्दातरीत्येवं दृश्यते तथा कारकाण्यपि गुणभूतानि गुणभूतं फलांशं विशेष्यतया नाङ्गीकुर्वते, सत्यामगुणभूतायां विशेष्यतयाऽङ्गीकारयोग्यायां व्यापारात्मकभावनायामित्यर्थः । **मन्वत इति** । अनेन न्यायेन कारकाणां फलान्वयं विहाय भावनान्वयमेव मीमांसका अपि मन्वत इत्यर्थः । **एवं चेति** । कारकाणां व्यापाररूपभावनायामेवान्वय इत्येवं नियमे चेत्यर्थः । यादृशः कार्यकारणभावः फलितस्तं दर्शयति—**विशेष्यतयेत्यादि** । **कारकादीति** । का-

त्वाद्यत्रापि पक्ता पाचक इत्यादौ भावना गुणभूता तत्रापि कल्पककार्यकारणभावानुरोधात्तस्यामेवान्वय इत्यवर्त्ते यत इत्यादि भूषणे प्रपञ्चितम् । केचित्तु भूतले

लफलयोरादिपदेन ग्रहः । कारकादि, प्रकारो—विशेषणं यत्रेत्येवंभीदृशो शाब्दबोधे जननीये, विशेष्यतया—कारकादिनिष्ठविशेषणतानिरूपितविशेष्यतासंबन्धेन धातुजन्या या भावनोपस्थितिः सा कारणमित्यर्थः । चैत्रस्तण्डुलं पचतीत्यत्र लक्षणसमन्वयः—चैत्रस्याभेदसंबन्धेन लडर्थकर्तर्यन्वयः । लडर्थकर्तुश्च निष्ठत्वसंबन्धेन भावनायां—व्यापारेऽन्वयः, लडर्थकालस्यापि कालिकसंबन्धेन व्यापार एवान्वयः । तथा तण्डुलरूपस्य कर्मणो निष्ठत्वसंबन्धेन विक्लित्तिरूपे फलेऽन्वयः, फलस्य चानुकूलतासंबन्धेन व्यापारेऽन्वयः । चैत्रं प्रति लडर्थकर्ता विशेष्यः, व्यापारं प्रति च विशेषणम् । तथा तण्डुलं प्रति फलं विशेष्यं व्यापारं प्रति च विशेषणम् । तथा च चैत्राभिन्नलडर्थकर्तृनिष्ठः, तण्डुलनिष्ठविक्लित्त्यनुकूलो वर्तमानकालिको व्यापार इति व्यापारमुख्यविशेष्यकः शाब्दबोध इत्यर्थः । अत्र कर्तृकारकस्य व्यापारे साक्षादन्वयः, कर्मकारकस्य तु फले, फलस्य च साक्षाद्व्यापार इति परम्परया व्यापारे कर्मान्वयः। यथाऽधिकरणकारकस्य कर्तृकर्मद्वारा क्रियान्वयस्तथा कर्मणोऽपि फलद्वारा क्रियायामेवान्वयो न तु फल इति बोध्यम् ।

ननु यत्र व्यापारस्य प्राधान्येन प्रतीतिः, यथा पचतीत्यादौ तिङन्ते । तत्रोक्तन्यायेन कारकाणि व्यापारमेव विशेष्यतयाऽङ्गीकुर्वन्तु नाम, किंतु यत्र व्यापारो गुणभूतस्तत्र कथं कारकाणि विशेष्यतया व्यापारमङ्गीकुर्युरत आह—यत्रापि पक्तेत्यादि । यत्र पक्तेत्यादिकर्त्रर्थकतृजाद्यन्तस्थले प्रकृतिप्रत्ययार्थयोरिति न्यायेन कर्तुः प्राधान्यात्तद्विशेषणीभूता व्यापाररूपा भावना तत्रापि निरुक्तकार्यकारणभावानुसारेण विशेषणीभूतभावनायामेव कारकान्वयः । यथा ओदनस्य पक्तेत्यत्र ओदनरूपस्य कर्मणो व्यापार एवान्वयो न तु फले । तस्यामेवेत्येवकारेण फलान्वयस्य व्यावर्तितत्वादित्यर्थः । किं च धात्वर्थफले कारकान्वये वाजपेयाधिकरणमसंगतं स्यात् । तद्धि प्रथमाध्यायस्य चतुर्थपादे पञ्चमधिकरणम् । फलं धात्वर्थः, भावना आख्यातार्थः, धात्वर्थस्य च करणत्वेन भावनायामन्वयः । एवं स्थिते तत्रेत्थं पूर्वपक्षः—' वाजपेयेन स्वाराज्यकामो यजेत ' इत्यत्र वाजपेयशब्देन गुणो विधीयते । वाजस्यान्नस्य पेयं द्रवीभूतो रस इति व्युत्पत्त्या वाजपेय-

शब्दो यवागूपरः । तथा च सोमेन यजेतेत्यत्र सोमरूपगुण इवात्र यवागूरूपो गुणो विधीयते । न च वाजपेयरूपगुणवता यागेन स्वाराज्यं भावयेदित्यर्थलाभाय वाजपेयशब्दे मत्वर्थलक्षणाऽङ्गीकार्येति वाच्यम् । वाजपेयगुणे स्वाराज्यफले च यजेस्तन्त्रेण संबन्धे सति वाजपेयद्रव्येण स्वाराज्याय यजेतेत्येवमर्थलाभात् । ननु यागस्य गुणसंबन्धे सति वाजपेयगुणेन यागं कुर्यादित्येवं यागस्य कर्मकारकत्वं भवति । तथा यागेन स्वाराज्यं भावयेदित्येवं यागस्य फलसंबन्धे करणकारकत्वं भवति । तत्कथमुभयसंबन्ध इति चेन्न । यजेः साधारणत्वेनोभयरूपत्वसंभवात् । यजेतेत्यत्र यजधातुना याग उक्तः । प्रत्ययेन भावनोक्ता । तयोस्तु समभिव्याहारात्संबन्धमात्रं गम्यते । तच्च कर्मत्वकरणत्वयोः साधारणम् । न तत्र कर्मत्ववाचिनी करणत्ववाचिनी वा काचिदसाधारणी विभक्तिः श्रूयते । अतः साधारणस्य यजेरुभाभ्यां युगपत्संबन्धे सति यथोचितसंबन्धविशेषस्तत्र तत्र पर्यवस्यति । एवं तन्त्रेण संबन्धाङ्गीकारे वाजपेयद्रव्येण यागं कुर्यादित्यर्थस्य लभ्यमानत्वाद्गुणविधित्वेऽपि नास्ति मत्वर्थलक्षणेति ।

सिद्धान्तस्तु——यजेस्तन्त्रेणोभयसंबन्धाङ्गीकारे यागे विरुद्धत्रिकद्वयापत्तिः स्यात् । तथा हि——उद्देश्यत्वमनुवाद्यत्वं मुख्यत्वं चेति त्रयाणां धर्माणामेकं त्रिकम् । उपादेयत्वं विधेयत्वं गुणत्वं चेति त्रयाणां धर्माणामपरं त्रिकम् । एतत्त्रिकद्वयं मिथः क्रमेण विरुद्धम् । यजेतेत्यत्र प्रत्ययवाच्यभावनायाः साध्यं स्वाराज्यफलम् । साधनं यागः । तत्राऽऽद्यमुद्देश्यत्वादित्रिकं साध्यभूतस्वाराज्यफलनिष्ठम् । द्वितीयमुपादेयत्वादित्रिकं साधनभूतयागनिष्ठम् । फलमुद्दिश्य याग उपादीयते । फलमनूद्य यागो विधीयते । फलं प्रधानं——मुख्यं, याग उपसर्जनं गुणः । फलस्योद्देश्यत्वं नाम मानसापेक्षाविषयत्वम् । यागस्योपादेयत्वं नामानुष्ठीयमानत्वम् । तावुभौ मनःशरीरोपाधिकौ धर्मौ । अनुवाद्यत्वविधेयत्वधर्मौ तु शब्दोपाधिकौ । ज्ञातस्य कथनमनुवादः । अज्ञातस्यानुष्ठेयत्वकथनं विधिः । फलयागयोः साध्यसाधनत्वरूपतया प्रधानत्वोपसर्जनत्वे । एवं सति फलतत्साधनयोः स्वाराज्ययागयोः स्वभावपर्यालोचनायां यथा फलस्योद्देश्यत्वादित्रिकं, यागस्योपादेयत्वादित्रिकं भवति । तथा यागस्य वाजपेयस्य च साध्यसाधनभावपर्यालोचनायां यागस्योद्देश्यत्वादित्रिकं, वाजपेयस्योपादेयत्वादित्रिकं च पर्यवस्यति । ततः प्रकृते

( धात्वाख्यातार्थनिर्णयः )

घटो देवदत्तो घटमित्यादावन्वयबोधाकाङ्क्षानिवृत्त्योरदर्शनान्न तद्व्यतिरेकेण साधुत्वलाभ इत्याहुः ॥ १७ ॥

---

यागस्य साधनत्वेन साध्यत्वेन चेति प्रकारद्वयेन प्रत्ययवाच्यभावनायां युगपत्तन्त्रेण संबन्धाङ्गीकारे साधनत्वमूलका उपादेयत्वादयस्त्रयो धर्मा यागेऽङ्गीकर्तव्याः। साध्यत्वाच्च तदानीमेव तत्रैव यागे उद्देश्यत्वादयस्त्रयो धर्माः प्राप्नुवन्ति । किंतूपादेयत्वादिभिः सार्कं विरोधादुद्देश्यत्वादयस्त्रयो धर्मास्तत्र तदानीमेव नाङ्गीकर्तुं शक्यन्ते । अतोऽत्र यागस्य साधनत्वेन साध्यत्वेन चेति प्रकारद्वयेन भावनायां युगपत्तन्त्रेण संबन्धो दुर्वच इति । अस्मिन्नधिकरणे धात्वर्थफलस्य यागस्य करणत्वेन भावनायामन्वये कृते तत्रैव यागे पुनः कारकान्तरान्वये विरुद्धत्रिकद्वयापत्तिर्दोषत्वेनोक्ता । यदि विशेषणीभूते धात्वर्थफले कारकान्तरान्वयः स्यात्तर्हि त्रिकद्वयापत्तिरूपदोषदानमसंगतं स्यादिति भावः। तस्माद्विशेषणीभूते धात्वर्थफले कारकाणामन्वयो नैव भवति किंतु विशेष्यभूते व्यापार एव कारकान्वय इत्यवश्यमङ्गीकार्यमित्याशयेनाऽऽह—भूषणे प्रपञ्चितामिति । एवं च पाक इत्यादावोदनस्येत्यादिकारकान्वयासिद्धये व्यापाररूपभावनाया घञन्ते धातुवाच्यत्वमावश्यकमिति सिद्धम् । प्रकारान्तरेण कारकाणां व्यापारान्वयनियमं साधयतामन्येषां वैयाकरणानां मतमुपपादयन्नाह—**केचित्त्वित्यादि । अन्वयबोधाकाङ्क्षानिवृत्त्योरिति** । अन्वयबोधस्याऽऽकाङ्क्षानिवृत्तेश्चेत्यर्थः । **अदर्शनादिति** । भूतले घट इत्यत्र भूतलाभिन्नमधिकरणमेकत्वविशिष्टो घटश्चेत्यन्वयबोधस्य, देवदत्तो घटमित्यत्र घटाभिन्नं कर्मेत्याद्यन्वयबोधस्य च संभवेऽपि 'सर्वं हि वाक्यं क्रियया परिसमाप्यते' इति न्यायेन वाक्यद्वये क्रमेणास्तिपश्यतीत्यादिक्रियामन्तरेण वाक्यघटकयावत्पदार्थानां परस्परमन्वयबोधाजननादाकाङ्क्षानिवृत्तेरप्यदर्शनादित्यर्थः । **तद्व्यतिरेकेणेति** । सत्तादर्शनादिक्रियाध्याहारेण विना निरुक्तवाक्यद्वयस्य साधुत्वं न लभ्यत इत्यर्थः । **आहुरिति** । अनेन तदुक्तावस्वरसः सूचितः । स चाप्यसाधुत्वांशे । नीलो घटः, चैत्रः सुन्दर इत्यादावस्त्यादिक्रियासाकाङ्क्षेऽपि साधुत्वदर्शनात् । यदि तु क्रियासाकाङ्क्षवाक्ये साधुत्वं नेष्यत एव तर्हि 'गामित्युक्ते कर्ता क्रिया चानिर्दिष्टे' इत्यादिभाष्योक्तेरसाधुतापत्तेः । वाक्यघटकयावत्पदार्थानां मिथोऽन्वयबोध आकाङ्क्षानिवृत्तिश्च योग्यक्रियाध्याहारेण निर्वाह्य इत्याशयः । एतावता कारकाणां भावनान्वयनियमः कथं सिध्यतीति चिन्त्यमिति भावः ॥ १७ ॥

( धात्वाख्यातार्थनिर्णयः )

स्वयमुपपत्तिमाह—

**यदि पक्षेऽपि वत्यर्थः कारकं च नञादिषु ।**
**अन्वेति त्यज्यतां तर्हि चतुर्थ्याः स्पृहिकल्पना ॥१८॥**

पर्वतो वह्निमान्धूमान्महानसवत् । भूतले न घटः । भूतले घट इत्यादिपदात् । एवमादिष्वनुशासनाविरोधेऽपि यदि साधुत्वमन्वयश्चाभ्युपेयते तर्हि चतुर्थ्याः स्पृहि॰ कल्पनाऽपि त्यज्यतामित्यर्थः । अनुशासनानुरोधतौल्येऽर्धजरतीयमयुक्तमिति भावः ॥ १८ ॥

---

**स्वयमित्यादि ।** निरुक्ताष्टकस्य क्रियान्वय एव साधुत्वे युक्तिमुक्त्वेदानीं क्रियानन्वये प्रतिबन्दीरूपां तां वक्ति——यदि पक्षेऽपि वत्यर्थ इति । यदि पक्षे——संदिग्धसाध्यवति पर्वतादौ, वत्यर्थः—सादृश्यमन्वेति, कारकं—अधिकरणादि, नञादिषु—नञर्थाभावे, तदितरनामार्थे च, अन्वेतीतीष्येत नैयायिकैरित्यर्थः । तर्हि पुष्पेभ्य इत्यत्र कारकचतुर्थीसिद्धये भवद्भिर्या स्पृहधातुप्रयोगकल्पना कृता सा परित्यक्तव्या भवतीति संक्षिप्तोऽर्थः । **पर्वतो वह्निमानिति** । तेन तुल्यमित्यनेन क्रियासादृश्ये विहितवतेः क्रियायामेवान्वय इत्येवं न नियमः । महानसवदिति दृष्टान्ते निरुक्तसूत्रेण विहितवतेरर्थस्य सादृश्यस्य पर्वत एवान्वयो, न क्रियायाम् । यथा महानसो वन्हिमांस्तथा पर्वतोऽपीति विवरणेन महानससदृशः पर्वत इत्यर्थप्रतीतेर्वत्यर्थसादृश्यस्य पर्वत एवान्वयस्य दृष्टत्वादित्यर्थः । तथा सप्तम्यधिकरणे चेत्यादिना विहितसप्तम्यादेरर्थस्याधिकरणादिकारकस्य क्रियायामेवान्वय इत्ययमपि नियमो न दृश्यते । 'भूतले न घटः' इत्यत्र भूतलवृत्तित्वाभाववान् घटः, अथवा भूतलवृत्तिर्घटाभाव इत्यर्थबोधात्कारकाधिकारविहिताधिकरणस्य नञर्थाभाव एवान्वयप्रतीतेः, भूतले घट इत्यत्र भूतलाधेयत्ववान्, भूतलवृत्तिर्वा घट इत्यर्थबोधादधिकरणकारकस्य नामार्थ एवान्वयपर्यवसानादित्यर्थः । एवं वत्यर्थसादृश्यस्य सप्तम्यर्थस्याधिकरणकारकस्य चानुशासनमनादृत्य नामार्थान्वयाङ्गीकारेण तयोः साधुत्वं स्वीकुरुध्वे चेत्तदत्यन्तायुक्तमित्याह—**त्यज्यतामिति । चतुर्थ्याः स्पृहीति ।** पुष्पेभ्य इति चतुर्थ्यन्तमात्रप्रयोगे स्पृहयतीतिशब्दाध्याहार एव स्पृहेरीप्सित इति विहितचतुर्थ्याः साधुत्वार्थमनुस्रियते, न तु तत्समानार्थकधात्वन्तरघटितपदाध्याहारो, नाप्यर्थाध्याहारो नैयायिकैस्तत्त्यज्यताम् । अनुशासनाविरोधस्य तौल्यादित्यर्थः । **अर्धजरतीयमिति** । अर्धं जर-

( धात्वाख्यातार्थनिर्णयः )

एवं कर्त्रादौ विहितानामिन्यादीनां क्रिययैवान्वय इत्याह—

**अविग्रहा गतादिस्था यथा ग्रामादिकर्मभिः ।**
**क्रिया संबध्यते तद्वत्कृतपूर्व्यादिषु स्थिता ॥ १९ ॥**

न विविच्य ग्रहो ग्रहणं यस्याः साऽविग्रहा गुणीभूतेति यावत् । तथा च

---

त्या अर्धजरती, तत्सदृशमर्धजरतीयम् । समासाच्च तद्विषयादितिवार्थे छप्रत्यय इति व्याचक्षते । किंत्वत्रार्धजरतीत्येकदेशिसमासस्यैवार्थविषयत्वं कथमिति चिन्त्यम् । एकदेशिसमासोत्तरं गहादित्वादिदमर्थे छ इति व्याख्यानेऽपि एकदेशिसमासस्य पूर्वपदार्थप्रधानत्वाज्जरत्या अर्धस्येदमित्यर्थः स्यात्स तु नेष्टः, किं तु जरत्या अर्धमिदमित्यर्धस्येदंशब्दस्य च सामानाधिकरण्यमभीष्टं न स्यादतः शिवभागवत इत्यत्रेव युगपद्वृत्तिः करणीया । अत्र शिवभगवच्छब्दयोः पूर्वं कर्मधारये कृते ततस्तद्धितवृत्तौ शैवभगवत इति स्यात् । आदौ तद्धितवृत्त्या भागवतं संसाध्य पश्चाच्छिवेन समासविवक्षायां शिवस्य भगवत्यन्वयो न स्यात् । वृत्त्यन्तर्गतत्वेन भगवच्छब्दार्थस्यैकदेशत्वात्पदार्थः पदार्थेनेति न्यायात् । अतस्तत्र शिवभगवच्छब्दयोर्भगवदपत्यार्थयोश्च युगपद्वृत्तिद्वये कृते शिवस्य भगवतोऽपत्यमिति वृत्त्यर्थावबोधकं वाक्यं भवति । तद्वज्जरत्या अर्धेनेदमर्थेन च संबन्धविवक्षायां युगपद्वृत्तिद्वये कृते जरत्या इदमर्धमिति वृत्त्यर्थावबोधकवाक्ये इदमर्धशब्दयोः सामानाधिकरण्यं सिध्यति । जरत्या इदमिति जरतीयं, अर्धं च तज्जरतीयं चेति कर्मधारये कृत इदंत्वेन विवक्षितं यज्जरतीसंबन्धि, तदर्धमित्यर्थबोधान्निरुक्तरीत्याऽपि अर्धेदंशब्दयोः सामानाधिकरण्यं निर्वोढुं शक्यम् । तत्र यथा जरत्या इदमर्धं कामयते, इदं नेत्ययुक्तं तथा क्वचित्पाणिन्यनुशासनमनुस्रियते, क्वचित्त्यज्यत चेत्येतदप्यर्धजरतीयसादृश्यादत्यन्तायुक्तमिति भावः ॥ १८॥

**एवमिति** । यथा निरुक्ताष्टकस्य क्रिययैवान्वयस्तथेत्यर्थः । **कर्त्रादाविति** । आदिपदेन भावार्थग्रहणम् । **इन्यादीनामिति** । अत्राऽऽदिशब्देन क्त्वातुमुनादीनां संग्रहः । **क्रिययैवेति** । गुणभूतयाऽपि क्रिययैवेत्यर्थः । एवकारेण लिङ्गसंख्याद्यन्वयिद्रव्यव्यवच्छेदः । अन्वयः संबन्ध इत्यर्थः । तदाह—**अविग्रहा गतादिस्था इति** । **विविच्येति** । विशेषणतामनापद्येत्यर्थः । विशेष्यतयेति यावत् । न ग्रहणं यस्या इत्यर्थः । एतत्फलितमाह—**गुणीभूतेति** । इतरविशेषणतापन्नेत्यर्थः । **ग्रामं गत इति** । गम्धातोर्गत्यर्थाकर्मकेति कर्तरि

ग्रामं गत इत्यत्र यथा क्तप्रत्ययार्थां गुणीभूताऽपि क्रिया ग्रामादिकर्मभिः संबध्यते तथा कृतपूर्वी कटमित्यत्रापि गुणभूता, इन्यादिभिरित्यर्थः । न च वृत्तिमात्रे

---

क्तः। प्रकृतिप्रत्ययार्थयोरिति क्तप्रत्ययार्थः कर्ता विशेष्यः । तद्विशेषणं प्रकृत्यर्थः पुरोदेशसंयोगानुकूलो व्यापारः । संयोगानुकूलव्यापाराश्रय इत्यर्थः । तत्र क्तप्रत्ययार्थकर्तृविशेषणीभूतव्यापारजन्यसंयोगाश्रयत्वेन कर्मत्वाद् ग्रामरूपस्य कर्मणो विशेषणीभूतव्यापारेणैवान्वयः, कारकादिमकारकबोधे जननीये विशेष्यतासंबन्धेन धातुजन्यभावनोपस्थितेर्हेतुत्वस्य क्लृप्तत्वात् । तथा च ग्रामनिष्ठसंयोगानुकूलव्यापाराश्रयश्चैत्र इति बोधः । तथेति । यथा ग्रामं गत इत्यत्र क्तप्रत्ययार्थकर्तारं प्रति विशेषणीभूता गमनक्रिया ग्रामरूपकर्मणा संबध्यते तथा कृतपूर्वीत्यत्रेन्यर्थकर्तारं प्रति विशेषणीभूता कृधात्वर्थक्रिया कटरूपकर्मणा संबध्यत इत्यर्थः। कृतपूर्वीति । कटः पूर्वं कृतोऽनेनेति लौकिकविग्रहः । तत्र पूर्वमिति क्रियाविशेषणम् । कृतपूर्वशब्दयोः सुप्सुपेति समासः । अनेनेत्यनुवृत्तौ कृतपूर्वशब्दात् ‘पूर्वादिनिः, सपूर्वाच्च’ इति कर्तरीनिप्रत्ययः । तत्र करोतिक्रियापेक्षया कटस्य कर्मत्वात्कटमिति द्वितीया। ननु कृतः कटः पूर्वमनेनेति विग्रहे कृतशब्दस्य पूर्वशब्देन समासो न संभवति । कृतशब्दस्य कटसापेक्षत्वेन सामर्थ्यविरहात् । समासाभावादेव चेनेरप्यसंभवः । किं च कृत इति क्तप्रत्ययेन कटस्य कर्मणोऽभिहितत्वात्ततो द्वितीया न प्राप्नोतीति चेन्न । कृत—अम् पूर्व—अम् इत्यलौकिकविग्रहवाक्ये कटस्यासंनिहिततया कर्मत्वेनान्वयासंभवेन कृञ्धातोस्तदानीमकर्मकतया कर्मणि क्तप्रत्ययस्यासंभवे सति ‘नपुंसके भावे क्तः’ इति भावे क्तप्रत्यये सति कृतशब्दस्य कटसापेक्षत्वाभावात्समास इनिश्च निर्बाधौ । कर्मणोऽभिहितत्वाभावश्च । ततश्च कृतपूर्वीति इन्नन्तस्य पूर्वकालिकक्रियाकर्ता ‘पूर्वं कृतवान्’ इत्यर्थः पर्यवस्यति । ततः कर्मत्वविवक्षया किं कृतवान्? इति कर्मजिज्ञासायां कटस्य करोतिक्रियापेक्षया कर्मत्वात्ततो द्वितीया । कटनिष्ठकर्मत्वं च न क्तप्रत्ययेनाभिहितं, तस्य भावे विधानात् । नापीनिना, तस्य कर्तरि विधानात्। ननु कटमित्यत्र द्वितीयां बाधित्वा कर्तृकर्मणोरिति षष्ठी स्यात्कृद्योगसत्त्वादिति शङ्क्यम् । न च निष्ठायोगे निषेधादेव षष्ठी न भवेदिति वाच्यम् । ‘नपुंसके भावे क्तस्य योगे षष्ठ्या उपसंख्यानम्’ इति वार्तिकवचनेन निष्ठायोगे षष्ठीनिषेधस्यात्राप्रसक्तेरिति चेन्न । तत्र कृद्ग्रहणसामर्थ्याद् वृत्त्यन्तर्भावानापन्नकृद्यो-

समुदायशक्तेर्वक्ष्यमाणत्वात्तत्रान्तर्गता भावना पदार्थैकदेश इति कथं तत्रान्वय इति वाच्यम् । नित्यसापेक्षेष्वेकदेशेऽपि देवदत्तस्य गुरुकुलं चैत्रस्य नप्तेत्यादा-

गस्य षष्ठीप्रयोजकत्वाङ्गीकारात् । प्रकृते च कृतेत्यस्य तद्भिन्नकर्तृत्वन्तर्भूतत्वान्न तद्योगः षष्ठीप्रयोजकः । तथा च षष्ठ्यभावे उक्तरीत्या कर्मणोऽनभिहितत्वाद् द्वितीया सुलभैव । एवं च कटं कृतवानित्यत्रैव कटमिति कर्मण इन्यर्थकर्तारं प्रति विशेषणीभूतयैव करोतिक्रिययाऽन्वयः । कारकप्रकारकबोधं प्रतीत्यादिनिरुक्तकार्यकारणभावानुसारादित्यर्थः । कटनिष्ठोत्पत्त्यनुकूलपूर्वकालिकक्रियाकर्तेति, एककटाभिन्नाश्रयिका योत्पत्तिस्तदनुकूलव्यापारवानिति कृतपूर्वीकटमित्यस्माद्बोधः । इन्यादिभिरिति । इन्याद्यर्थकर्त्रादिभिर्गुणभूतेति योजना । इन्यर्थकर्तारं प्रति गुणभूता करोतिक्रिया कटकर्मणा संबध्यत इति यावत् । अथवा स्ववाचकप्रकृतिकक्तप्रत्ययार्थं प्रति विशेषणभूता करोतिक्रिया इन्यर्थकर्त्रा संबध्येत, इति व्याख्येयम् । स्वं—क्रिया, तद्वाचकः कृधातुः, तत्प्रकृतिकः क्तप्रत्ययः, तदर्थो भावः, स च लिङ्गसंख्याद्यन्वितस्तं प्रति गुणभूता करोतिक्रियेति लक्षणसंगतिः । क्तप्रत्ययार्थभावनिरूपितविशेषणभूतकरोतिक्रियानिरूपितमिन्यर्थस्य कर्तृत्वमिति यावत् । तेन 'कर्त्रादौ विहितानामिन्यादीनां क्रिययैवान्वयः' इत्यवतरणग्रन्थानुगुण्यं भवतीति भावः । ननु गत इत्यादौ कृद्वृत्तिसत्त्वेन वृत्तौ चैकार्थीभावरूपसमुदायशक्त्यङ्गीकारेण गतपदार्थैकदेशगमनक्रियायां ग्रामादिकर्मणामन्वयो दुर्वचः, तत्र गमनक्रियायाः पदार्थैकदेशत्वादित्याशङ्कते—न चेत्यादि । वृत्तिमात्र इति । मात्रं कार्त्स्न्येऽवधारण इति कोशान्मात्रशब्दोऽत्र कृत्स्नार्थकः । कृत्स्नवृत्तिष्वित्यर्थः । वक्ष्यमाणत्वादिति । समासे खलु भिन्नैव शक्तिः... इत्यनेन वृत्तिमात्रोपलक्षकसमासग्रहणात्कृत्तद्धितसमासैकशेषसनाद्यन्तधातुरूपासु पञ्चस्वपि वृत्तिष्वेकार्थीभावरूपायाः समुदायशक्तेर्वक्ष्यमाणत्वादित्यर्थः । कथं तत्रान्वय इति । पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेनेति नियमात्पदार्थैकदेशव्यापारे ग्रामकर्मणोऽन्वयः कथमित्याक्षेप इत्यर्थः । तथा चासंगतमिदं दृष्टान्तोपन्यसनमिति भावः । समाधत्ते—नित्यसापेक्षेष्वित्यादि । नित्यं संबन्ध्यन्तरसापेक्षेषु शब्देषु उपसर्जनतया वृत्तिघटकेषु सत्स्वपि तेषु वृत्त्येकदेशभूतेष्वेव तन्निरूपितविशेषणस्य देवदत्तादेरन्वयो भवति । एकदेशान्वयेऽपि देवदत्तस्य यो गुरुस्तत्कुलमित्यर्थबोधजनकत्वात् । एवं चैकदेशान्वयप्रतिबन्धकं तस्य तादृशार्थ-

बोधाजनकत्वं, यथा ऋद्धस्य राजपुरुष इत्यत्र ऋद्धस्य राज्ञ्यन्वयेऽपि ऋद्धो यो राजा, ऋद्धस्य यो राजेति वेत्यर्थबोधाजननम्। राज्ञो यः पुरुषः स ऋद्धसंबन्धीत्येव तत्र बोधात्। तच्च प्रतिबन्धकं नित्यसापेक्षेषु नास्तीत्यर्थः। तदुक्तं वाक्यपदीये—संबन्धिशब्दः सापेक्षो नित्यं सर्वः समस्यते। वाक्यवत्सा व्यपेक्षा हि वृत्तावपि न हीयते॥ इति। हि यतो देवदत्तस्य गुरोः कुलमिति वाक्ये या व्यपेक्षा—आकाङ्क्षा सा वृत्तावपि न हीना भवति, न निवर्तते, अतो नित्यसापेक्षः शब्दः समस्यते, समासघटके च तस्मिन्विशेषणान्वयो भवति, भवति च देवदत्तस्य यो गुरुरित्याद्यर्थबोधः, तादृशार्थबोधानन्तरमेवाऽऽकाङ्क्षानिवृत्तेरिति तदर्थः। एतत्सर्वमनुसंधायाऽऽह—**देवदत्तस्य गुरुकुलमिति**। गुरुत्वस्य शिष्यमन्तराऽनुपपद्यमानत्वाद् गुरुः शिष्यांशे नित्यसापेक्षः। शिष्यश्चात्र देवदत्तः। तस्य च पदार्थैकदेशे गुरावन्वये भवति ततोऽपेक्षितार्थबोध इति पदार्थः पदार्थेनेति नियमो नित्यसापेक्षव्यतिरिक्तविषय इत्याशयः। केचिज्जरन्नैयायिका न समासे शक्तिं, नापि समासे पूर्वपदे लक्षणामङ्गीकुर्वते। किंतु राजपुरुष इत्यत्र पुरुषपदं राजसंबन्धिपुरुषपरं राजपदं तात्पर्यग्राहकमित्येवमुत्तरपदलक्षणां वदन्ति। तद्रीत्याऽत्र गुरुर्न पदार्थैकदेश इति तत्र विशेषणान्वयस्य साहजिकत्वान्नायं दृष्टान्त इत्यतो दृष्टान्तान्तरं दर्शयति—**चैत्रस्य नप्तेति**। जन्यशरीरजन्यशरीरं नप्तृपदार्थः। चैत्रः पितामहः, तत्पुत्रो वैशाखः, तत्पुत्रो ज्येष्ठः। तत्र चैत्रजन्यशरीरं वैशाखस्य, वैशाखजन्यशरीरं च ज्येष्ठस्येति ज्येष्ठश्चैत्रस्य नप्ता पौत्र इत्यर्थः। तत्र जन्यशरीरजन्यशरीररूपनप्तृपदार्थैकदेशे जन्यत्वे चैत्रस्येति षष्ठ्यन्तार्थस्य स्वनिरूपितत्वादिसंबन्धेनान्वयः। चैत्रनिरूपितजन्यत्ववच्छरीरजन्यशरीरमित्यर्थः। नन्वत्रापि चैत्रस्येति षष्ठ्यन्तार्थस्य न नप्तृपदार्थैकदेशे जन्यत्वेऽन्वयः, किं तु स्वजन्यजन्यत्वसंबन्धेन नप्तृपदार्थविशेष्यभूते शरीर एवान्वयः। जन्यजन्यत्वसंबन्धार्थिका षष्ठीत्यर्थः। तथा च चैत्रजन्यजन्यत्ववच्छरीरमिति बोधः। अत आह—**इत्यादाविति**। आदिपदाद् घटादन्यः, घटात्पृथगित्यादिपरिग्रहः। अन्यपदार्थैकदेशे भेदे पञ्चम्यन्तार्थघटप्रतियोगित्वस्यान्वयः। घटप्रतियोगिकभेदवानित्यर्थः। तथा पृथक्पदार्थैकदेशे पृथक्त्वे पञ्चम्यन्तार्थघटावधित्वस्यान्वयः। घटावधिकपार्थक्यवानिति बोधः। यद्यपि सर्वत्रैवैकदेशघटितपरम्परासंबन्धेनान्वय इति भाष्य उक्तम्। तदुक्तं हरिणा—समुदायेन संबन्धो ये-

विधान्वयाभ्युपगमात् । एवं भोक्तुं पाको भुक्त्वा पाक इत्यत्रापि द्रष्टव्यम् ॥ १९ ॥

---

षां गुरुकुलादिना । संस्पृश्यावयवांस्ते तु युज्यन्ते तद्वता सह ॥ इति । येषामर्थानां गुरुकुलादिरूपसमुदायेन संबन्धः, ( एतेन एकदेशघटितत्वरूपपरम्परासंबन्धोऽर्थो देवदत्ताद्युत्तरषष्ठ्या इति सूचितम् ) तेऽप्यर्था अवयवान् गुर्वादीन् संस्पृश्य संबध्य तद्वता——अवयववता समुदायेन गुरुकुलादिना युज्यन्त इति तदर्थात् । अवयवान् संस्पृश्येति वदताऽत्रापि पक्षेऽवयवानां विशेषणसंबन्धलाभः सूचितः । तथाऽप्युक्तस्थले एकदेश एवाऽऽकाङ्क्षासत्त्वादनुभवानुरोधाच्चैकदेशान्वयपक्ष एवाङ्गीकृतः । अत एव देवदत्तस्य गुरुकुलमित्यादिवाक्यजन्यशाब्दबोधोत्तरं गुरुर्देवदत्तीयो न वा, जन्यत्वं चैत्रीयं न वेत्यादिसंशयानुत्पत्तिश्चाऽऽञ्जस्येन संगच्छते । एवं च निरुक्तोदाहरणेषु यथा पदार्थैकदेशेऽपि गुर्वादौ विशेषणस्य देवदत्तादेरन्वयोऽभ्युपगतस्तथा पदार्थैकदेशे गुणभूतभावनायामेव ग्रामादिकर्मणामन्वयाभ्युपगमे बाधकाभाव इत्याशयः । उक्तमर्थमन्यत्राप्यतिदिशति - **एवमिति** । यथा गतपदार्थैकदेशगुणभूतक्रियायां ग्रामादिकर्मणामन्वयस्तथा भोक्तुं पाक इत्यादावपि पाक इत्यत्र कृद्वृत्तिसत्त्वेन पाकपदार्थैकदेशासत्त्वभूतगुणक्रियायां तुमुनोऽन्वय इत्यर्थः । **भोक्तुं पाक इति** । तुमुन्ण्वुलौ क्रियायामिति सूत्रेण विहितस्य तुमुनः क्रियायोग एव विधानादसत्त्वभूतधात्वर्थस्थाप्याक्रियायामन्वयात्साधुत्वमित्यर्थः । **भुक्त्वा पाक इति** । समानकर्तृकयोः क्रिययोर्मध्ये पूर्वकालसंबन्धिक्रियावाचकात्क्त्वेत्यर्थकसमानकर्तृकयोरिति सूत्रेण विहितस्य क्त्वः क्रियायोग एव विधानात्पाकपदार्थैकदेशगुणभूतक्रियायामन्वयात्साधुत्वं बोध्यम् । अत्र धातुसंबन्धाधिकारात्क्रियोरिति लब्धम् । 'अव्ययकृतो भावे' इति वार्तिकाद्भाव एवार्थस्तुमुनादेः । अत्रेदं बोध्यम्—पाक इत्यादिघञन्ते प्रकृतिप्रत्ययभागाभ्यां विशेषणविशेष्यभावापन्नासत्त्वसत्त्वस्वभावे द्वे क्रिये प्रतिपाद्येते । प्रकृतिभागेनासत्त्वस्वभावा क्रिया, प्रत्ययभागेन च सत्त्वस्वभावा क्रियोपस्थाप्यते । तत्र प्रत्ययार्थक्रियायाः प्राधान्यं, प्रकृत्यर्थक्रियायाश्च विशेषणत्वम् । एवं भोक्तुं, भुक्त्वा, इत्यत्र प्रकृतिप्रत्ययार्थयोः क्रिययोर्विशेषणविशेष्यभावः समानः, किं तु पाक इत्यत्र प्रत्ययार्थक्रियायां यथा लिङ्गसंख्याद्यन्वयित्वरूपं सत्त्वस्वभावात्मकं वैलक्षण्यं प्रतीयते, तादृशं वैलक्षण्यं भोक्तुं, भुक्त्वा इत्यत्र प्रत्ययार्थ-

क्रियायां न प्रतीयत इति विशेषः । एवं चासत्त्वस्वभाव एव भावस्तुमुनादेरर्थं इति। तस्मात्पाक इत्यादौ धात्वंशक्रियां व्यापाररूपामादाय कर्मकरणादिविभक्तिवत्कृतपूर्वी कटमित्यादावपि कर्त्राद्यर्थकाः प्रत्यया इति बोध्यम् ।

परे तु भोक्तुं पाकः, भोक्तुं गत इत्याद्यसाध्वेव । यत्र कार्ये क्रियावाचकशब्दस्य ग्रहणं तत्र प्राधान्येन साध्यमात्रावस्थक्रियावाचिनो ग्रहणात् । यत्र तु क्रियारूपार्थस्य ग्रहणं तत्र गुणभूतक्रियावाचिनोऽपि ग्रहणम् । अत एव गतपाकादियोगे कारकविभक्तिकृत्वसुच्क्त्वादीनां साधुत्वमित्याहुः । तस्यायमाशयः— तुमुन्ण्वुलाविति सूत्रे क्रियार्थायामिति स्त्रीलिङ्गनिर्देशेन क्रियार्थायाः क्रियाया एव लाभे सिद्धे पुनः क्रियाग्रहणेन प्राधान्येन साध्यमात्रावस्थक्रियाप्रतिपादके सति धातोस्तुमुन्ण्वुलावित्यर्थः । तथा च गत्यर्थेति कर्तरि क्तप्रत्ययान्ततया कृदन्ते प्रत्ययार्थस्य प्राधान्येन गतशब्दस्य द्रव्यवाचितया क्रियावाचकत्वाभावेन तुमुन एव तत्राप्राप्तेः । एवं पाक इत्यत्र घञो भावार्थकत्वेऽपि ‘ कृदभिहितो भावो द्रव्यवत्प्रकाशते ’ इति भाष्योक्तेर्लिङ्गसंख्याद्यन्वयित्वरूपद्रव्यधर्मग्राहितया पाकशब्दस्यापि द्रव्यवाचित्वं बोध्यम् । ननु गतशब्दादौ धातोः साध्यमात्रावस्थक्रियावाचितया तन्निबन्धनस्तत्र तुमुन् स्यादिति चेद्भ्रान्तोऽसि । तुमुन्विधौ क्रियार्थोपपदस्येत्यर्थमुपपदसंज्ञाया आवश्यकत्वेनोपपदमिति महासंज्ञया क्रियाफलकक्रियावाचकप्रकृतिके पदे सति तुमुन्ण्वुलावित्यर्थस्याऽऽवश्यकत्वात् । तथा च साध्यमात्रस्वभावक्रियावाचकपदनिबन्धनस्तुमुन्, साध्यमात्रस्वभावक्रियावाचकत्वेऽपि धातोः पदत्वाभावान्न प्राप्नोतीति भावः । तादृशं च पदं तिङन्तमेव । अत एवात्र सूत्रे न क्रियारूपार्थग्रहणं, किं तु क्रियावाचकशब्दग्रहणम् । उपपदसंज्ञाया पदसंज्ञकशब्दनिष्ठत्वादिति भावः । यत्तूच्यते——नपुंसके भावे क्तस्य धात्वर्थानुवादकत्वेन साध्यमात्रावस्थक्रियावाचकत्वादृत्तद्योगे भोक्तुं गतमित्यत्र तुमुन् दुर्वार इति । तत्र साध्यमात्रावस्थक्रियावाचकप्रकृतिभागमादाय तुमुनाशङ्क्यते चेत्प्रकृतिभागस्य पदत्वाभावात्तदर्थस्य विशेषणत्वेनाप्राधान्याच्च तदाशङ्काया असंभव एव । कृति प्रत्ययार्थस्य प्राधान्येन क्तप्रत्ययस्य प्राधान्येन साध्यमात्रावस्थक्रियावाचित्वात्तदन्तस्य पदत्वाच्च तद्योगे तुमुनाशङ्क्यते चेत्तदपि न । कृदभिहितो भावो द्रव्यवत्प्रकाशते, इति भाष्योक्तेर्गतंशब्दोऽपि न क्रियावाची,

अतिप्रसङ्गमाशङ्क्य समाधत्ते—

**क्त्वोर्थाः क्त्वातुमुन्वत्स्युरिति चेत्सन्ति हि क्वचित् ।**

---

किंतु द्रव्यवाच्येव । क्तप्रत्ययार्थस्य द्रव्यधर्मनपुंसकलिङ्गग्राहितया तेन लिङ्गाद्यनन्वयरूपस्य प्रकृत्यर्थक्रियाधर्मस्य परित्यक्तत्वान्न तस्य क्रियावाचित्वं, किं तु द्रव्यवाचित्वमेवेति सिद्धान्तितत्वात् । स्पष्टं चेदमुपपदमतिङिति सूत्रे भाष्ये । एवं च गतंशब्दयोगेऽपि तुमुनाशङ्कितुमपि न युज्यते । एवं क्त्वाप्रत्ययस्य धात्वर्थानुवादकत्वेन साध्यमात्रावस्थक्रियावाचित्वेऽपि अव्ययत्वाल्लिङ्गाद्यनन्वयित्वरूपक्रियाधर्मग्राहित्वेऽपि च तत्प्रकृत्यर्थस्य व्रजतीत्यादितिङन्तोपस्थाप्यप्रधानक्रियां प्रति विशेषणत्वात्स्वस्यैव यदि प्राधान्येन साध्यमात्रावस्थक्रियावाचित्वाभावस्तर्हि तदनुवादकक्त्वाप्रत्ययस्य तु वाप्युदञ्चनन्यायेन ( यदि वाप्यामेव जलं नास्ति तर्हि उदञ्चने कुतः समायास्यति ? विहिरीत च जर नाहीं, तर पोहऱ्यांत कोठून येईल ? इति हि तन्न्यायस्वरूपम् ) सुतरां प्राधान्येन तादृशक्रियावाचित्वाभाव इति न तद्योगेऽपि भोक्तुं पक्त्वा गत इत्यादौ तुमुनः प्रत्याशा धर्तव्या । एतत्सर्वमनुसंधायैव तुमुन्ण्वुलौ क्रियायामिति सूत्रे शेखरे नागेशभट्टैरुक्तं 'क्रिया चात्र तिङन्तोपस्थाप्यैव' इति बोध्यम् । समानकर्तृकयोरित्यादौ क्त्वाप्रत्ययविधायके तूपपदसंज्ञाया अनावश्यकत्वेन न तत्र क्रियावाचकपदग्रहणं किं तु क्रियारूपार्थग्रहणमिति न तत्र प्राधान्येन क्रियावाचिनो ग्रहणं किं तु यथा कथंचिदपि क्रियावाचिनो ग्रहणम् । तेन गतपाकादियोगे गुणीभूतसाध्यमात्रावस्थक्रियामादायापि तन्निबन्धनः क्त्वाप्रत्ययः साधुर्भवति । तादृशक्रियावाचकस्य धातोः पदत्वाभावेऽपि न क्षतिः । उपपदसंज्ञायास्तत्रानावश्यकत्वेन तादृशक्रिया, वाचकशब्दमात्रस्य ग्रहणात् , क्रियावाचकत्वस्य च केवलधातावप्यक्षतत्वादिति भावः । एवमेव कारकविभक्तिकृत्सुज्विषयेऽपि ज्ञेयम् । तेन भुक्त्वा गन्ता-ओदनस्य पाचकः, पञ्चकृत्वो भोक्तेत्यादिप्रयोगाः सामञ्जस्येन संगच्छन्त इति ॥ १९ ॥

**अतिप्रसङ्गमिति** । यथा क्त्वातुमुनादयः प्रत्यया व्रजादिप्रकृत्युपस्थाप्यविशेषणीभूतक्रियामादाय जायन्ते तथा एकः पाकः, द्वौ त्रयश्चत्वारो वेत्यत्र सुजादयः क्त्वोर्थप्रत्यया विशेषणीभूतक्रियामादायापि भवेयुरित्येवंरूपमनिष्टप्रसङ्गमवसितकृत्य समाधातुमाहेत्यर्थः । **क्त्वोर्थाः क्त्वातुमुन्वत्स्युरिति** । पूर्वोत्तर-

( धात्वाख्यातार्थनिर्णयः )

**अतिप्रसङ्गो नोद्भाव्योऽभिधानस्य समाश्रयात् ॥ २० ॥**

भोक्तुं पाको भुक्त्वा पाक इत्यादौ "तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्" [पा० सू० ३-३-१०] "समानकर्तृकयोः पूर्वकाले" [पा० सू० ३-४-२१] इति क्रियावाचकोपपदे क्रिययोः पूर्वोत्तरकाले विधीयमाना अपि तुमुनादयो गुणभूतां तामादाय यथा जायन्ते तथा कृत्वोर्था अपि स्युरेकः पाक इत्यत्र "एकस्य सकृच्च" [पा० सू० ५-४-१९] द्वौ पाकौ त्रयश्चत्वार इत्यत्र "द्वित्रिचतुर्भ्यः सुच्" [पा० सू० ५-४-१८] पञ्चेत्यत्र कृत्वसुच् स्यात् । तथा च सकृत्पाकः, द्विस्त्रिश्चतुः पाका इत्याद्यापत्तिरिति चेदिष्टापत्तिः । द्विर्वचनमित्यादिदर्शनात् । अतिप्रसङ्गस्त्वनभिधानान्नेत्याह—**अतीति** ।

---

**काल इति** । क्रियाफलकक्रियावाचक उपपदे सति, अर्थात्फलीभूतक्रियावाचकधातोस्तुमुन्ण्वुलौ विधीयेते, फलीभूता च क्रियोत्तरकालवृत्तिरेवेति भावः । समानकर्तृकयोरित्यत्रोपपदसंज्ञायाः प्रयोजनाभावान्न तत्र उपपदे सतीत्यर्थः, किं तु क्रियावाचके सतीत्येवार्थः । तच्च क्रियावाचकं पदं वा भवतु अपदं वेति बोध्यम् । अत एव भुक्त्वा गत इत्यत्र क्त्वाप्रत्यय उपपद्यते । तत्र क्रियावाचकस्य पदस्यैव ग्रहणे तु गम्धातोः पदत्वाभावात्तदप्राप्तिः स्पष्टैवेत्यभिप्रायः । **कृत्वोर्था अपि स्युरिति** । तथा च एकः पाकः, द्वौ पाकौ, इत्याद्यर्थे सकृत्पाकः, द्विः पाकः, पञ्चकृत्वः पाक इत्याद्यापद्येतेत्यर्थः । विशेषणीभूतक्रियां निमित्तीकृत्य सुचः प्रयोगस्य प्रामाणिकैः कृतत्वात्कृत्वोर्था अपि विशेषणीभूताक्रियामादायेष्टा एवेत्याह—**द्विर्वचनमित्यादीति** । आदिशब्देन द्विरण्विधिर्द्विरावृत्तिर्द्विःप्रयोग इत्यादि ग्राह्यम् । अत्र ल्युट्किघञादिप्रकृत्युपस्थाप्यविशेषणीभूतक्रियानिमित्तकः सुच्प्रयोगः । नन्वेवमनिष्टापत्तिरत आह—**अतिप्रसङ्ग इति** । सकृत्पाकः, चतुः पाकः, पञ्चकृत्वः पाक इत्याद्यनिष्टप्रसङ्ग इत्यर्थः । **अनभिधानादिति** । द्विः पाकस्त्रिः पाक इत्यादिप्रयोगात्क्रियाजन्मगणनस्याप्रतीतेरित्यर्थः । किं तु तत्र द्रव्यगणनस्यैव प्रतीतिरतस्तत्र द्वौ पाकावित्येव न तु द्विः पाक इति । यदि तु क्रियाजन्मगणनं प्रतीयेत तर्हि द्वौ पाकाविति द्विवचनं न स्यात् । क्रियाया निवृत्तभेदाया एव प्रतीतेः । तथा च यत्र क्रियाजन्मगणनात्मकमर्थमभिधातुं समर्थाः कृत्वोर्थास्तत्र स्युरेव । यथा द्विरण्विधिरित्यादौ । न चैवं प्रकृते द्विः पाक इत्यादावतो नैव भवन्तीति भावः । तदेवाऽऽ-

" न हि वचिरन्तिपरः प्रयुज्यते " इत्याद्यभियुक्तरीत्या समाधेयमिति भावः केचित्तु " क्रियाभ्यावृत्तिगणने " इत्यत्र क्रियाग्रहणं व्यर्थं तस्य अभ्यावृत्ति- संभवेन सामर्थ्यात्तल्लाभात् । तथा च साध्यमात्रस्वभावक्रियालाभाय तदिति वा- च्यम् । न च पाक इत्यादौ तादृशीति नातिप्रसङ्गः । द्विर्वचनमिति च द्विः प्र- योगो द्विर्वचनमिति व्युत्पत्त्या " द्विर्वचनेऽचि " [ पा० सू० १-१-५९ ] इति ज्ञापकं वाऽऽश्रित्योपपादनीयमित्याहुः ॥ २० ॥

ह——न हि वचिरन्तीति । अन्तिपरकाद्वचेः ' वदन्ति ' इत्यत्रेव वचनार्था- प्रतीतेर्यथा तादृशो वचिर्न प्रयुज्यते शाब्दिकैः प्रामाणिकैस्तद्वत्कृत्वसुजन्मगणन- रूपार्थाप्रतीतेर्द्विः पाक इत्यादि न प्रयोक्तव्यमित्यर्थः । नन्वभ्यावृत्तिगणन इत्य- त्रोपसर्गबलेन वृतुधातोरुत्पत्तौ शक्तेर्नियमितत्वादभ्यावृत्तिशब्दस्य पुनः पुनर्भवनम- र्थः । जन्मेति यावत् । तच्च जन्म नैकं, एकस्य गणनायोग्यत्वात् । किं त्वनेकं, अनेकस्यैव गणनार्हत्वात् । तथा च पुनः पुनर्जन्मनो गणनं संख्यानमभ्यावृत्तिग- णनम् । तत्र द्रव्यगुणयोः स्वभावसिद्धयोर्न गणनयोग्यं पुनः पुनर्जन्म, यत एकैव तेषामुत्पत्तिः । क्रियायास्तु धातुतो निवृत्तभेदाया एव प्रतीतेर्भवति पुनः पुनरुत्प- त्तिरावृत्तिश्च । द्रव्यस्य त्वनिवृत्तभेदस्यैव शब्दतः प्रतीतेर्न पुनः पुनरुत्पत्तिर्ना- भ्यावृत्तिः । पुनः पुनर्जन्मयोग्यस्यैव जन्म चाभ्यावृत्तिशब्देनोच्यते, अभ्येत्युपसर्ग- द्वयस्वारस्यात् । पुनः पुनर्जन्मयोग्या च क्रियैव, न द्रव्यादीत्यभ्यावृत्तिग्रहणा- देव क्रियाया लाभे सति पुनः क्रियाग्रहणादत्र साध्यमात्रावस्थैव क्रिया गृह्य- ते । पाक इत्यादौ च घञुपस्थाप्या तु नोक्तस्वरूपेति न द्विस्त्रिः पाक इत्यादौ सुच्प्रयोग इत्याशयवानाह——केचित्त्वित्यादि । पाक इत्यादौ तादृशीति । पाकशब्दे घञुपस्थाप्या क्रिया साध्यमात्रस्वभावा नेवेत्यर्थः । न च घञुपस्था- प्यायास्तथात्वाभावेऽपि तत्प्रकृतिभूतपच्धातूपस्थाप्याक्रियायाः साध्यमात्रस्वभाव- त्वाक्षतेस्तन्निमित्तकः सुच् दुर्वार इति वाच्यम् । कृदन्ते प्रत्ययार्थस्य प्रायः प्रा- धान्यदर्शनात्प्रधानभूतया घञर्थक्रियया आत्मनेव स्वप्रकृत्यर्थविशेषणीभूतक्रि- यागतसाध्यमात्रस्वभावत्वप्रयुक्तकार्यस्याभिभवादित्याशयात् । नन्वेवं रीत्या द्वि- र्वचनं, द्विः प्रयोगः, इत्याद्यपि न स्यादिति तादृशप्रयोगाणां का गतिरत आह— द्विर्वचनमिति चेत्यादि । भाष्यकारादिभिः तादृशप्रयोगकरणाद्द्विर्वचनेऽची- ति निर्देशाच्च भावार्थकप्रत्ययप्रकृतिभूततादृशप्रयोगघटकधातूपस्थाप्यक्रियामा-

( धात्वाख्यातार्थनिर्णयः )

ननु सिद्धान्ते बोधकतारूपा शक्तिराख्यातशक्तिग्रहवतां बोधादावश्यकीति धातोरेव भावना वाच्या नाऽऽख्यातस्येति कथं निर्णय इत्याशङ्कां समाधत्ते—

**भेद्यभेदकसंबन्धोपाधिभेदनिबन्धनम् ।**
**साधुत्वं तदभावेऽपि बोधो नेह निवार्यते ॥ २१ ॥**

( इति भट्टोजिदीक्षितविरचितकारिकासु धात्वर्थाख्यातसामान्यार्थनिर्णयः ) ।

भेद्यं विशेष्यं भेदकं विशेषणं तयोर्यः संबन्धस्तस्य यो भेदस्तन्निबन्धनं साधु-

---

दाय द्विशब्दे सुज्भवतीति ज्ञाप्यत इत्यर्थः । एवं च विशेषणीभूतक्रियामादाय सुजादिकरणे यत्र सूत्रकारादीनामनुग्रहो दृश्येत तत्रैव कृत्वोर्थाः साधुत्वं लभन्त इति कल्पनात्सर्वं सुस्थम् । अत्र केचित्त्वित्यनेनारुचिः सूचिता । तद्बीजं तु द्विवचनेऽचीति निर्देशेन यथाकथंचिदपि क्रिया ग्राह्येति ज्ञापनस्यैव न्याय्यत्वात् । क्रियाभ्यावृत्तीत्यत्रत्यं क्रियाग्रहणं स्पष्टार्थमुत्तरार्थं वेति स्पष्टं कैयटादाविति बोध्यम् ॥ २० ॥

ननु धाताविवाऽऽख्यातेऽपि भावनाबोधकतारूपा शक्तिरस्त्वेव, मीमांसकानां तिङ्प्रत्ययाद्भावनाबोधस्य जायमानत्वात् । तथा च कथं धातोरेव वाच्या भावना, न तिङ्प्रत्ययस्येति निर्णीयते, इत्याशङ्क्ते——**ननु सिद्धान्त इति । आख्यातशक्तिग्रहेति** । आख्याते तिबादिप्रत्यये भावनाबोधकताशक्तिरस्तीति ग्रहवतां मीमांसकादीनामित्यर्थः । **बोधादिति** । तिबादिप्रत्ययाद्भावनाबोधोदयादाख्याते भावनाबोधकताशक्तिरावश्यकीति भावः । तथा च धातोरेव भावना वाच्येत्यनिर्णय इत्याशङ्कायां समाधत्ते——**भेद्यभेदकसंबन्धेति** । भेद्यं—विशेष्यं, भेदकं—विशेषणं, तयोर्यः संबन्धस्तादृशसंबन्धरूपो य उपाधिस्तस्य यो भेदः, विशेष इत्यर्थः । **तन्निबन्धनमिति** । विशेष्यविशेषणभावसंबन्धनिमित्तकं साधुत्वमित्यर्थः । अयं भावः——यस्मिन्विशेष्ये यादृशविशेषणान्विते यादृगानुपूर्व्या सूत्रवार्तिकभाष्यकाराद्यन्यतमेन साधुत्वमुक्तं स शब्दस्तत्र साधुरन्यत्रासाधुरेव । अत एव दन्त्यसकारमध्योऽस्वशब्दोऽश्वे साधुर्न, किं तु निर्धने साधुः । एवं तालव्यशकारमध्योऽश्वशब्दोऽश्वे साधुः, न दरिद्रे । एवमाख्यातस्य कर्तुरनभिधायकत्वे धातोश्च भावनानभिधायकत्वेऽसाधुत्वमेव स्यात् । व्याकरणेन तथैव साधुत्वबोधनादिति । ननु व्याकरणं साधुत्वान्वाख्यायकमेव, न तु शक्तिग्राहकम् । अत एव ' अथ शब्दानुशासनम् ' इत्येव महाभाष्य उक्तम् । ' सा-

त्वम् । अयमर्थः—व्याकरणस्मृतिः शब्दसाधुत्वपरा, तत्रैवावच्छेदकतया कल्प्यमानधर्मस्य शक्तित्वं वदतां **मीमांसकानां** पुनः शकत्वं साधुत्वमित्येकमेवेति तद्रीत्या विचारे साधुत्वनिर्णय एव शक्तिनिर्णय उच्यते । अतिरिक्तशक्तिवादेऽपि आख्यातानामसाधुता भावनायां स्यादेव । तथा च चतुर्थ्यर्थे तृतीयाप्रयोगवत्सा-

---

धुत्वज्ञानविषया सैषा व्याकरणस्मृतिः' इतिवाक्यपदीयेऽपि 'साधुत्वज्ञानविषया' इत्येवोक्तं, न त्वर्थबोधिकेत्याशङ्कां दूरीकुर्वन्नाह–**अयमर्थ इत्यादि** । व्याकरणशास्त्रं, अच्परकेगुच्चारणप्रसङ्गे यणुच्चारणीयः, यणघटितं च तत्साध्वित्येवं शब्दसाधुत्वप्रतिपादकमित्यर्थः । **तत्रैवेति** । साधुशब्देष्वेवेत्यर्थः । **अवच्छेदकतयेति** । अर्थबोधजनकतावच्छेदतया कल्प्यमानो यो धर्मः सैव शक्तिरित्येवं मन्वानानां मीमांसकानां मत इत्यर्थः । **एकमेवेति** । जनकताया अवच्छिन्नत्वनियमेन जनकतावच्छेदकतया धर्मकल्पनाऽऽवश्यकीति साधुत्वस्यैव शक्तत्वं युक्तमिति शक्तत्वं साधुत्वमित्येकमेव नार्थान्तरमित्यर्थः । साधुशब्देभ्य एवार्थबोधोत्पत्त्यङ्गीकारेण शक्तेः साधुशब्दमात्रवृत्तित्वेन शक्तत्वस्यैव साधुत्वादिति भावः । **तद्रीत्येति** । निरुक्तमीमांसकरीत्येत्यर्थः । **साधुत्वनिर्णय एव शक्तिनिर्णय इति** । शक्तिग्रहं व्याकरणोपमानेत्याद्यभियुक्तोक्तौ शक्तिग्राहकेषु प्रथमतो व्याकरणस्य निर्देशाद् व्याकरणस्य तत्तदर्थपुरस्कारेण तेषां तेषां पदानां साधुत्वबोधनार्थं प्रवृत्तत्वेन व्याकरणशास्त्रस्य शक्तिनिर्णायकत्वस्य निष्प्रतिबन्धं सिद्धत्वेन लः कर्मणीत्यादिव्याकरणशास्त्रविरोधाद् भावनाभिप्रायेण तिङ्प्रयोगोऽसाधुरेवेति भावः । ननु साधुत्वं न शक्तत्वं, असाधुशब्दादप्यर्थबोधदर्शनात् । किं तु साधुत्वापेक्षयाऽतिरिक्तं तत् । अत एव साधुः शक्त इति प्रयोगः संगच्छते । तयोरेकत्वे तु सहप्रयोगानुपपत्तेरित्याशयेनाऽऽह—**अतिरिक्तशक्तिवादेऽपीति** । साधुत्वमनपभ्रष्टत्वादिरूपं, शक्तिस्त्विच्छाविशेषः पदार्थान्तरं वेति साधुत्वापेक्षयाऽतिरिक्ता शक्तिरित्येवंवादेऽपीत्यर्थः । 'नित्ये शब्दार्थसंबन्धे' इत्यत्र समानायामर्थावगतौ शब्देन चापशब्देन चेति धर्मनियमः क्रियते साधुभिर्भाषितव्यं नासाधुभिर्गम्यागम्येतिवदित्युक्तं, अत्र साधुत्वापेक्षयाऽतिरिक्ता शक्तिरिति स्पष्टम् । **स्यादेवेति** । व्याकरणस्मृतेः शब्दसाधुत्वज्ञापनार्थं प्रवृत्तत्वेऽपि साधुत्वस्य तत्तदर्थविशेषपुरस्कारनिबन्धनत्वेनाऽऽर्थसमाजवशादेवाऽऽयातं शक्तिनिर्णायकत्वमिति कृत्वा व्याकरणविरोधादग्नये स्वाहेति चतुर्थ्यर्थेऽग्निनेति तृतीया-

( धात्वाख्यातार्थनिर्णयः )

स्वर्थभावनायामाख्यातप्रयोगे याज्ञे कर्मण्यसाधुशब्दप्रयोगात् " नानृतं वदेत् "

---

प्रयोगस्येव भावनायां तिबादिप्रत्ययप्रयोगस्यासाधुता स्यादेवेत्यर्थः। अयं भावः वाक्यस्फोट एव मुख्य इति वैयाकरणसिद्धान्तः। स्फोटो नाम स्फुटति प्रकाशतेऽर्थोऽस्मादिति व्युत्पत्त्या वाचक इति। तथा च वाक्यस्फोट इत्यस्य वाक्यं वाचकमित्यर्थः। शक्तिग्राहकशिरोमणिना वृद्धव्यवहारेण प्रथमं वाक्य एव शक्तिग्रहात्तस्यैव लोकेऽर्थबोधजनकत्वान्निराकाङ्क्षस्यार्थस्य वाक्यादेव ज्ञानेन तेनैवार्थस्य परिपूर्णत्वदर्शनाच्च वाक्यस्फोटस्य मुख्यत्वम्। तत्र देशकालकर्तृभेदेन वाक्यानामानन्त्यात्प्रतिवाक्ये संकेतग्रहस्यात्यन्तासंभवान्निखिलवाक्यानामन्वाख्यानस्य लघूपायेनाशक्यत्वाच्च कल्पनया तत्र पदानि प्रविभज्य पदेषु च प्रकृतिप्रत्ययविभागं परिकल्प्य कल्पिताभ्यामन्वयव्यतिरेकाभ्यां पदप्रकृतिप्रत्ययार्थविभागं च परिकल्पयन्ति स्म पाणिन्यादय आचार्याः। तेन घटमानयेत्यादिवाक्ये घटशब्दस्य कम्बुग्रीवादिमानर्थः, आनयेत्यस्य च मत्समीपदेशसंयोगानुकूला क्रियाऽर्थः। एवमश्वं नय, गां बधानेत्यादिवाक्येऽप्यूह्यम्। तथा च तालव्यशकारमध्योऽश्वशब्दस्तुरगे साधुः, दरिद्रे त्वसाधुः। पूर्वोक्तरीत्या कल्पितान्वयव्यतिरेकाभ्यां तुरगार्थ एवाश्वशब्दशक्तिकल्पनादिति। नन्वस्त्वसाधुतेत्याह—**याज्ञे कर्मणीति**। यथा यज्ञकर्मणि असाधुशब्दप्रयोगे प्रायश्चितमुक्तं तथा आख्यातस्य भावनायां शक्तिरित्येवंग्रहवाद्भिर्याज्ञे कर्मणि भावनाभिप्रायेणाऽऽख्याते प्रयुक्ते सति नानृतं वदेदिति निषेधोल्लङ्घनप्रयुक्तं प्रायश्चित्तं तेषां प्राप्नुयात्। सूत्रकारादिभिराख्यातस्य भावनायामननुशासनात्कर्त्राद्यर्थ एव तद्विधानादिति भावः। ननु जैमिनिमहामुनिसूत्रविरुद्धत्वात्पाणिनिस्मृतिस्त्यज्यतां दुर्बलत्वादिति चेन्न। साधुत्वविषये पाणिनिस्मृतेरेव बलीयस्त्वात्। साधुत्वोद्देशेनैव पाणिनिव्याकरणस्य प्रवृत्तत्वादित्याशयः। वस्तुतो जैमिनीयसूत्रव्याख्यातृवचनविरोधेऽपि सूत्राक्षरविरोधलेशोऽपि पाणिनिस्मृतौ नाऽऽपतति। तथा हि—' भावार्थाः कर्मशब्दास्तेभ्यः क्रिया प्रतीयेतैष ह्यर्थो विधीयते ' इति हि जैमिनिमुनिसूत्रं भावार्थाधिकरणे। यजुहुयादित्यादयः कर्मशब्दा भावार्थाः = प्राधान्येन क्रियार्थकाः, ' भावप्रधानमाख्यातं ' इति निरुक्तात् ' अतस्तेभ्यः क्रिया प्रतीयेत = प्राधान्येन प्रतीयेत। हि—यतः प्राधान्याद्धेतोः, एष एव = क्रियारूप एवार्थो विधीयते, न तु द्रव्यरूपः। क्रियायाश्चाऽऽशुतरविनाशित्वात्कालान्तरभाविफलजनकता न संभव-

तीति द्वारमपूर्वं कल्पनीयमिति तदर्थः। एतत्सूत्राक्षरार्थाद्भावना आख्यातार्थः, न कर्त्रेत्यादिकं कथमपि न लभ्यत इति विभाव्यतां सुधीभिः। व्याख्यातृभिर्वृत्तिकारादिभिस्तज्जैमिनिसूत्रमेवं व्याख्यातम्—भावार्थाः—भावनारूपो य आख्यातार्थः, तस्य परिच्छेदोऽर्थः प्रयोजनं येषामेतादृशाः। आख्यातेन भावनासामान्ये उपस्थिते इतरदानादिभावनातो व्यावर्तयन् यागरूपो धात्वर्थोऽवच्छेदको भवत्येवेति भावः। एवमवच्छेदकीभूता ये कर्मशब्दा धात्वर्था इति यावत्। तेभ्यः क्रिया अपूर्वं प्रतीयेत ज्ञायेत। हि यत एषोऽर्थो विधीयते। एकपदश्रुत्या तस्यैव विधानात्। यो विधीयते स तत्करणत्वेन संबध्यत इति व्याप्तिरिति। तथा च व्याख्यातृवचनाविरोधः, न सूत्राक्षरविरोध इत्याकलनीयं जैमिनिरहस्यवोदिभिः।

ननु दर्शपूर्णमासप्रकरणे 'नानृतं वदेत्' इति योऽयमनृतवदननिषेध उक्तः स किं पुरुषमुद्दिश्य विहितोऽथवा दर्शपूर्णमासावुद्दिश्येति संदिग्धोभयाकाङ्क्षारूपप्रकरणप्रमाणेन दर्शपूर्णमासयोरयं निषेधः। तथा हि—अनृतवदननिषेधस्याभावात्मकत्वेन कथंभावाकाङ्क्षया ग्रहणासंभवात्तत्सिद्ध्यर्थं तत्र क्रियां परिकल्प्यानृतवदननिषेधपरिपालनेन भावयेदित्यर्थे फलविशेषस्यानिर्देशादस्ति अत्र किं भावयेदित्युपकार्याकाङ्क्षा। दर्शपूर्णमासाभ्यां स्वर्गं भावयेदित्यत्रापि कथं भावयेदित्यस्त्युपकारकाकाङ्क्षा। अत उभयाकाङ्क्षया परस्परसंबन्धेनकवाक्यतया दर्शपूर्णमासयोरनृतवदनानिषेधपरिपालनेनोपकारं संपाद्य स्वर्गं भावयेदित्यर्थाद्दर्शपूर्णमासयोरयं निषेधो विधीयते। ततश्च दर्शपूर्णमासप्रकरणे सर्वत्रानृतवदनं वर्जनीयम्। तत्र यदा व्रीहिमयः पुरोडाशः कर्तव्य इत्येवमादावभ्युपगम्योक्त्वा ओदनार्थं मे व्रीहयो भविष्यन्तीति यवमयः क्रियतामित्युच्यते तदा निषेधापरिपालनं नैव भवति। पूर्ववदनापेक्षयोत्तरवदनस्य भिन्नत्वेनानृतवदनात्। यो हि पूर्वभाषणविरुद्धमुत्तरं भाषते सोऽनृतवादीति लोके प्रसिद्धम्। किं त्वनुष्ठानकाले पूर्वोक्तिविरुद्धानुष्ठानेन पूर्वोक्तेरनृतत्वमिति 'व्रीहिमयः पुरोडाशः कर्तव्यः' इत्याकारकपूर्वसंकल्पस्यानृतवदनत्वमेव भवति। यवमयपुरोडाशानुष्ठानस्य संकल्पविसंवादित्वात्। तथा च क्रतोर्वैगुण्यं निषेधोल्लङ्घनं च स्यात्। तस्माद्विसंवादि न वदितव्यम्। एवं षोडशिग्रहणाग्रहणरूपवैकल्पिकप्रयोगारम्भेऽध्वर्य्वादिनाऽन्यतरपक्षं संकल्प्य पुनः पक्षान्तरग्रहणेनं नानृतं वदितव्यम्। अनृतवदनेन क्रतुवैगुण्यान्निषेधोल्लङ्घनाच्च प्रायश्चित्तापत्तेः। यदा तु योऽनुष्ठानवेलायां पूर्वसं-

इति निषेधोल्लङ्घनप्रयुक्तं प्रायश्चित्तं दर्शनान्तरीयग्रन्थेषु परिच्छिन्नं स्यादिति । ननु त्वन्मते नानृतमिति निषेधः क्रत्वर्थ एव न सिध्येत् । आख्यातेन कर्तुरुक्तत्वाच्छ्रुत्या पुरुषार्थतैव स्यात् । प्रकरणाद्धि क्रत्वर्थता, तच्च श्रुतिविरोधेन बाध्यत

---

कल्पानुसारेणैवानुतिष्ठति तदा सोऽनृतवदननिषेधं परिपालयति । यथा यवमयं संकल्प्य यवमय एव पुरोडाशः क्रियते, अत्रैव सम्यङ्निषेधस्य परिपालनं भवति । यवमयपुरोडाशानुष्ठानस्य पूर्वसंकल्पसंवादित्वात् । नात्र क्रतोर्वैगुण्यं नापि निषेधोल्लङ्घनमिति सुतरां प्रायश्चित्ताभावः । तथा चैवमनृतवदननिषेधपरिपालनेन दर्शपूर्णमासोपकारे संपादितेऽङ्गिभ्यां दर्शपूर्णमासाभ्यां यत्फलं स्वर्गरूपं जननीयं तदेवाङ्गस्यानृतवदननिषेधस्य फलमिति प्रतिपादितं भवति । एवं रीत्याऽनृतवदननिषेधस्य दर्शपूर्णमासाङ्गत्वं कर्मैत्रिकरणे ( जै. सू. ३ । ४ । १३ ) सिद्धान्तितं, तदाख्यातेन कर्तुरभिधानं वदतो वैयाकरणस्य मते विरुध्येतेत्याशयेन मीमांसकः शङ्कते—नन्वित्यादि । त्वन्मत इति । आख्यातेन ( तिङा ) कर्तुरभिधानमित्येवंवादिवैयाकरणमत इत्यर्थः । क्रत्वर्थ एवेति । नानृतं वदेदिति निषेधस्य दर्शपूर्णमासरूपक्रत्वङ्गत्वमेव न सिध्येदित्यर्थः । नानृतमिति निषेधस्य क्रत्वङ्गत्वासिद्धौ हेतुमाह—आख्यातेनेत्यादिना बाध्यत इत्यन्तेन । अयं भावः—वैयाकरणमते लः कर्मणीत्यादिसूत्रप्रामाण्यादाख्यातस्य ( तिबादेः प्रत्ययस्य ) कर्तृकर्माद्यर्थः । धातोश्च फलानुकूला भावनाऽर्थः । प्रत्ययार्थत्वेन कर्तुः प्राधान्यमित्यभिमानः शङ्कितुः । तथा च वदेदित्याख्यातश्रुत्या कर्ता पुरुष उक्तः । धातुना च वदनमुक्तम् । एवं सत्येकपदरूपया विनियोक्त्र्या श्रुत्या स्वघटकप्रकृतिप्रत्ययरूपभागद्वयप्रतिपाद्ययोरर्थयोर्मिथोऽङ्गाङ्गिभावसंबन्धबोधनादाख्यातस्य पुरुषवाचकत्वे सति प्रकृत्यर्थस्य वदनस्य पुरुषसंबन्धित्वेन पुरुषार्थत्वं पुरुषधर्मत्वं प्रतीयते । ततश्च प्रतियोगिनोऽनृतवदनस्य पुरुषधर्मतया तन्निषेधस्यापि पुरुषधर्मत्वेनैव विधातव्यत्वात्पुरुषार्थत्वं भवति । एवं च नानृतं वदेदिति निषेधस्योभयाकाङ्क्षारूपप्रकरणप्रमाणेन क्रतूपकारकत्वरूपं क्रत्वर्थत्वं प्राप्नोति, श्रुतिप्रमाणेन च पुरुषोपकारकत्वरूपं पुरुषार्थत्वं प्राप्नोति । तत्र प्रकरणापेक्षया श्रुतेर्बलवत्त्वात्प्रकरणप्राप्तं क्रत्वर्थत्वं बाधित्वा नानृतमिति निषेधस्य पुरुषोपकारकत्वात्मकं पुरुषार्थत्वमेव स्यात् । तथा च यदा रागद्वेषादिना अनृतवदने पुरुषस्य प्रवृत्तिः संभवेत्तदाऽनृतवदननिषे-

धेन तत्राप्रवृत्तौ सत्यां नानृतवदनजन्यपातकोत्पत्तिरिति न पातकजन्यनरकपाताद्यनर्थानुभवो नापि सत्यवदनरूपपुण्यकर्मजन्यफलानुभवप्रतिबन्धश्च भवति । अत्रानृतवदनेऽप्रवृत्तिः पुरुषे उपकारस्तद्द्वारोत्पत्स्यमाननरकाद्यनिष्टप्रतिबन्ध एव फलमित्येवंरीत्याऽनृतवदननिषेधस्य पुरुषार्थत्वमेव सिध्येन्न क्रत्वर्थत्वम् । तथा च पुरुषकर्तृकानृतवदने सति पुरुषस्यैव प्रत्यवायः, न क्रतोरिति क्रतावनृतवदने क्रतुभ्रेषप्रयुक्तप्रायश्चित्तानुष्ठानरूपसकलयाज्ञिकमीमांसकाचारविरोध आपतेदित्यर्थः । ननु नानृतमिति निषेधे प्रकरणप्राप्तस्य क्रत्वर्थत्वस्य श्रुतिविरोधे सति बाध्यत्वे किं प्रमाणमिति चेदुच्यते—अङ्गप्रधानसंबन्धबोधकविनियोगविधेः सहकारिभूतानि श्रुत्यादीनि षट् प्रमाणानि । तत्र परस्परविरुद्धयोः प्रमाणयोरेकत्रोपस्थितौ मिथो विरोधात्समुच्चयासंभवेनैकेन द्वितीयस्य बाधो वक्तव्यः, स च बलीयसा दुर्बलस्येति लोकप्रसिद्धमिति श्रुत्यादिषण्णां मध्ये कस्य बलीयस्त्वं कस्य च दुर्बलत्वमिति जिज्ञासायां 'श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात्' इति सूत्रयांबभूव भगवाञ्जैमिनिमहर्षिः ( ३ । ३ । १४ ) । श्रुत्यादीनां विनियोजकानां षण्णां प्रमाणानां मध्ये विरुद्धयोर्द्वयोरेकत्र संनिपाते पारदौर्बल्यं परं परं पूर्वपूर्वाद् दुर्बलं पूर्वेणोत्तरस्य बाधः । तत्र हेतुः—अर्थविप्रकर्षात्, उत्तरप्रमाणस्य पूर्वप्रमाणकल्पकत्वादर्थस्य विनियोगस्याङ्गाङ्गित्वानिर्णयस्य विप्रकर्षाद्विलम्बादिति तदर्थः । अत्रोत्तरोत्तरस्य दुर्बलत्वोक्त्या पूर्वपूर्वस्य बलीयस्त्वं सूचितम् । तत्र निरपेक्षो रवः श्रुतिः । रवः शब्दः । कस्यचित्क्वचिद्विनियोगे कर्तव्ये यः शब्दो विनियोजकं प्रमाणान्तरं नापेक्षते स शब्दः श्रुतिरित्युच्यते । सा हि कस्यचित्क्वचिद्विनियोगे कर्तव्ये स्वोत्तरवर्तिलिङ्गादिप्रमाणपञ्चकमध्ये किमपि नापेक्षते । लिङ्गादीनि पञ्च विनियोजकप्रमाणानि तु स्वस्वपूर्ववर्तियावत्प्रमाणापेक्षयैव विनियोगं कुर्वन्ति । अतस्तेषु लिङ्गादिष्वतिव्याप्तिवारणाय श्रुतिलक्षणे निरपेक्ष इत्युक्तम् । तत्र श्रुतिलिङ्गयोर्विरोधे श्रुतिप्राबल्योदाहरणं प्रदर्श्यते—'ऐन्द्र्या गार्हपत्यमुपतिष्ठते' इति श्रूयते । कदाचन स्तरीरसि नेन्द्र सश्चसि दाशुषे ( तै. सं. १ । ४ । २२ ) भो इन्द्र, कदाचिदपि घातको न भवसि । किं त्वाहुतिं दत्तवते यजमानाय प्रीयसे, इति तदर्थः । इयमैन्द्री ऋक् । इन्द्रो देवताऽस्या इत्यैन्द्री । अस्याः श्रुतेरिन्द्ररूपार्थप्रकाशनसामर्थ्यं दृश्यते । तेन च लिङ्गेनैन्द्र्येन्द्रमुपतिष्ठते इति श्रुतिमनुमाय तादृशानुमितश्रुत्याऽस्या

ऋच इन्द्रोपस्थाने विनियोगो लिङ्गप्रमाणेन संभवति। परं तु ऐन्द्रया गार्हपत्यमिति निरुक्तप्रत्यक्षश्रुत्याऽस्या ऋचो गार्हपत्योपस्थाने विनियोगस्य कृतत्वात्प्रत्यक्षश्रुतेश्चानुमितश्रुत्यपेक्षया बलवत्त्वाद्गार्हपत्योपस्थाने विनियोगो भवति। कदाचन स्तरीरसीति मन्त्रे इन्द्रशब्दः 'इदि परमैश्वर्ये' इति धात्वर्थानुसारात्परमैश्वर्यगुणयोगेन यज्ञसाधनत्वेन वा गार्हपत्याभिधायको मन्तव्यः। अत्रैन्द्रीशब्दो गार्हपत्यशब्द उपसर्गविशिष्टः स्थाधातुश्चाभिधात्री श्रुतिः। ऐन्द्रयेति तृतीया गार्हपत्यमिति द्वितीया च विनियोक्त्री श्रुतिः। तत्र तृतीयया ऐन्द्रया ऋच उपस्थानाङ्गत्वं प्रतिपाद्यते। द्वितीयया च गार्हपत्यस्योपस्थानाङ्गित्वं बोध्यते। गृहपतिना संयुक्तो गार्हपत्योऽग्निः। 'गृहपतिना संयुक्ते ञ्यः' (पा. सू ४। ४ ९०) इति सूत्रेण गृहपतिशब्दात् ञ्यप्रत्ययः। एवं स्थिते यदत्र श्रुतिप्रमाणेन लिङ्गप्रमाणं बाध्यते तत्रेयं युक्तिर्दृश्यते—विनियोजकेषु षट्सु प्रमाणेषु साक्षाद्विनियोजिका श्रुतिरेव। अतः श्रुतिः प्रमाणमूर्धन्यभूतेति सर्वैर्व्यवह्रियते। लिङ्गादीनि पञ्च प्रमाणानि तु न साक्षाद्विनियोजकानि। अर्थप्रकाशनसामर्थ्यं लिङ्गमित्युच्यते। यथा कदाचन स्तरीरसीति मन्त्रस्येन्द्ररूपार्थप्रकाशनसामर्थ्यम्। परं तु तादृशसामर्थ्यानुसारिणी 'ऐन्द्रयेन्द्रमुपतिष्ठते' इत्येवं विनियोजिका श्रुतिर्यावन्न ज्ञायते तावल्लिङ्गमकिंचित्करमेव। अतः कदाचन स्तरीरिति मन्त्रस्य क्व विनियोग इत्येवमुत्पन्नाकाङ्क्षा, ऐन्द्रमन्त्रस्य क्वचित्कर्मणि विनियोगसाधनाय स्वपुरस्कृते लिङ्गप्रमाणे स्वभावतो विद्यमानां प्रकल्पकत्वशक्तिमुत्तेजयति। ततस्तल्लिङ्गं स्वानुगुणां 'ऐन्द्रयेन्द्रमुपतिष्ठते' इत्येवं विनियोजिकां श्रुतिं कल्पयति। तया च श्रुत्या तत्र विनियोग इति लिङ्गप्रमाणं श्रुतिद्वारा परम्परया विनियोजकम्। एवं च श्रुतिः स्वाभिधेयं प्रतिपाद्य द्वितीयक्षण एव विनियुङ्क्ते। लिङ्गं तु मन्त्रपदान्यादौ स्वाभिधेयमर्थं प्रतिपादयन्ति। तत ऊर्ध्वं मन्त्रस्य सामर्थ्यं निरूप्यते। (नाम—मन्त्रस्येन्द्रविषयकक्रियासाधनत्वमवगम्यते) पश्चात्सामर्थ्यवशात्साधनत्ववाचिनी (ऐन्द्रमन्त्रेणेत्येवं तृतीया विभक्तिः) साध्यत्ववाचिनी (इन्द्रमित्येवं द्वितीयाविभक्तिः) च श्रुतिः (विभक्तिरूपा) कल्प्यते। सा च श्रुतिः 'ऐन्द्रमन्त्रेणेन्द्रमुपतिष्ठते' इत्येवं विनियुङ्क्त इति चतुर्थक्षणपर्यन्तं विलम्बते। तथा सति प्रत्यक्षश्रुतौ स्वाभिधेयप्रतिपादनविनियोगयोर्मध्यवर्तिनौ सामर्थ्यनिरूपणश्रुतिकल्पनव्यापारौ न स्तः। एवं च श्रुतिप्रमाणेन जायमानो विनियोगः साक्षादेव

इति चेन्न । " तिङर्थस्तु विशेषणम् " इत्यनेन परिहृतत्वात् । न हि गुणभूत-

---

जायत इत्यव्यवहितः । लिङ्गप्रमाणेन जायमानो विनियोगस्तु श्रुतिं कल्पयित्वा तद्द्वारा जायत इत्येकान्तरितः । एवं वाक्यादिप्रमाणेन जायमानो विनियोगो लिङ्गादि च श्रुतिं च कल्पयित्वा जायत इति द्व्याद्यन्तरित इत्यूह्यम् । यथा यथा च प्रमाणस्य विनियोगे व्यवधानाधिक्यं तथा तथा तस्य दुर्बलत्वम् । विलम्बेन विनियोजकं यत्प्रमाणं तदपेक्षया शैघ्र्येण विनियोजकस्य प्रमाणस्य प्राबल्यं युक्त्यैव सिद्धं भवति । लिङ्गाद्युत्तरप्रमाणं हि स्वापेक्षया यावन्ति पूर्वप्रमाणानि तावन्ति क्रमेण परिकल्प्य तद्द्वारा विनियोगं बोधयति । तेन चैकत्रानेकप्रमाणसंनिपात उत्तरस्य पूर्वं बाधकं भवति । उत्तरप्रमाणस्य बाधो नाम तत्राप्रवृत्तिरेव । यत उत्तरप्रमाणेन वाक्येन स्वापेक्षया पूर्ववृत्तिप्रमाणजाते ( लिङ्गश्रुती ) परिकल्प्य कंचिदर्थं कुत्रचिद्विनियोक्तुं यदा प्रवर्तितव्यं तदा पूर्ववृत्तिप्रमाणजातस्य ( लिङ्गश्रुत्योरपि ) आत्मस्वरूपलाभसमकालमेव पूर्वप्रमाणेन ( लिङ्गेन श्रुत्या वा ) सोऽर्थः कुत्रचिद्विनियोज्यते । जाते च विनियोगे क्व विनियोगः, इत्याकाङ्क्षाया निवृत्तत्वादुत्तरप्रमाण( वाक्य )गता लिङ्गादिप्रकल्पकत्वशक्तिरेव व्याहता जायत इति सर्वथा व्यापारोपरमात्तत्र तस्याप्रवृत्तिरिति । एवं च इन्द्ररूपार्थप्रकाशनसामर्थ्यरूपेण लिङ्गप्रमाणेन श्रुतिकल्पनाद्वारा यावदैन्द्रमन्त्रस्येन्द्रोपस्थाने विनियोगः कर्तव्यस्तावत् ' ऐन्द्र्या गार्हपत्यमिति प्रत्यक्षया तृतीयाश्रुत्या, ऐन्द्रमन्त्रेणेन्द्रमिति श्रुतिकल्पनात्प्रागेव ऐन्द्र्या ऋचो गार्हपत्योपस्थाने विनियोगस्य कृतत्वाल्लिङ्गप्रमाणगता कल्पकत्वशक्तिरेव व्याहन्यत इति प्रत्यक्षश्रुतेर्बलवत्त्वात्तया लिङ्गं बाध्यते । एवं प्रकृते नानृतं वदेदित्यत्राऽऽख्यातश्रुत्या कर्तुरभिधाने सति, उभयाकाङ्क्षारूपप्रकरणप्रमाणेन वाक्यलिङ्गश्रुतीः कल्पयित्वा नानृतमित्यस्य यावद्दर्शपूर्णमासप्रकरणे विनियोगः कर्तव्यस्तावद् वदेदित्येकपदरूपया श्रुत्या नानृतमित्यस्य कर्तरि पुरुषे विनियोगस्य कृतत्वात् क्व विनियोगः, इत्याकाङ्क्षाया निवृत्तत्वात् प्रकरणप्रमाणनिष्ठा वाक्यलिङ्गादिप्रकल्पकत्वशक्तिर्व्याहन्यत इति श्रुतेर्बलवत्त्वात्तया प्रकरणप्रमाणं बाध्यते । तथा चानृतवदनक्रियानिषेधाश्रयः कर्तेति बोधान्नानृतं वदेदिति निषेधस्य पुरुषार्थत्वमेव स्यान्न क्रत्वर्थत्वमित्याशङ्क्य समाधातुमाह—इति चेन्नेति । मीमांसकमतेनाऽऽख्यातेन भावनाया अभिधानाच्छ्रुत्या कर्तुः पुरुषस्याप्रतीयमानत्वाच्छ्रुतिविरोधाभावे सति

( धात्वाख्यातार्थनिर्णयः )

कर्ता निषेधं स्वाङ्गत्वेन ग्रहीतुमलम् । भावना तु प्रधानं तं ग्रहीतुं समर्थेति प्रक-

केवलप्रकरणप्रमाणेन नानृतयिति निषेधस्य क्रत्वर्थत्वमेव भवतीति भावः । इदानीं वैयाकरणमते आख्यातेन ( तिङा ) कर्तुः पुरुषस्याभिधीयमानत्वेऽपि नानृतमिति निषेधस्य न पुरुषार्थत्वं संभवतीत्याह—तिङर्थस्त्वित्यादि । अयं भावः—लः कर्मणीत्यादिशास्त्रप्रामाण्यादाख्यातेन ( तिबादिप्रत्ययेन कर्तुरभिधानेऽपि न तस्य प्राधान्यम् । भावो—धात्वर्थः—फलव्यापारान्यतररूपः, प्रधानं यत्रेति बहुव्रीहिः । तिङन्तं चान्यपदार्थः । तथा च तिङन्तं भावप्रधानकं—तिङर्थनिष्ठप्रकारतानिरूपितधात्वर्थनिष्ठविशेष्यताशालिबोधजनकमित्यर्थकात् ‘ भावप्रधानमाख्यातम् ’ इति निरुक्तवचनाद्व्यापाररूपभावनायाः प्राधान्यस्य, तिङर्थकर्त्रादेर्विशेषणत्वस्य चावगमात् । ततश्च प्रकृतिप्रत्ययार्थयोः प्रत्ययार्थस्य प्राधान्यमिति न्यायस्य संकोचोऽवश्यं स्वीकार्यः । स चेत्थं—प्रकृतिप्रत्ययार्थयोरित्यत्र प्रत्ययपदस्य तिङ्भिन्नप्रत्ययपरत्वेन संकोचः । तथा च प्रकृति—तिङ्भिन्नप्रत्ययार्थयोर्मध्ये प्रत्ययार्थस्य प्राधान्यमित्यर्थात्तिङन्तेऽयं न्यायो न प्रवर्तते । एवं चाऽऽख्यातवाच्यकर्तुर्धात्वर्थव्यापारात्मकभावनां प्रति विशेषणत्वाद्विशेषणस्य च विशेष्यपरतन्त्रत्वान्मम विशेषणं किमिति विशेषणाकाङ्क्षानुदयात् ‘ गुणानां च परार्थत्वादसंबन्धः समत्वात्स्यात् ’ ( जै. सू. ३ । १ । २२ ) इति न्यायेन नानृतमिति निषेधस्याङ्गत्वे( विशेषणत्वे )न संबन्धो विशेषणभूते कर्तरि न संभवतीत्याह—**न हि गुणभूत इति** । विशेष्य एवाङ्गित्वस्य न्याय्यत्वाद्विशेषणे ( कर्तरि ) नानृतमिति निषेधस्य विशेषणत्वेन संबन्धे कृते विशेषणे ( कर्तरि ) प्राधान्यमप्राधान्यं चेत्येकस्मिन्विरुद्धद्वयमापद्येतेति न विशेषणे विशेषणत्वेन पदार्थान्तरसंबन्धः कर्तुं युज्यते । तदाह—गुणभूतः कर्ता निषेधं स्वाङ्गत्वेन ग्रहीतुं नालं न समर्थ इति । इतरविशेषणत्वेनोपस्थिते विशेषणत्वेन पदार्थान्तरान्वयस्य विरुद्धत्वादेव सोमेन यजेतेत्यत्र यागेन भावयेदित्येवमाख्यातार्थभावनायां यागस्य विशेषणत्वेनान्वये कृते तादृशे तत्रैव पुनः सोमेन यागं भावयदित्येवं सोमस्य विशेषणत्वेनान्वयो निराकृतो मीमांसकैः । ननु धात्वर्थभावनाऽपि कथं निषेधं गृह्णीयात्तस्या अपि आख्यातार्थकर्तृसंबन्धित्वादित्यत आह—**भावना त्विति** । **प्रधानमिति** । यतो भावना तिङर्थकर्तारं प्रति प्रधानं—विशेष्यभूताऽतस्तस्या विशेषणत्वेन नञर्थनिषेधेऽन्वये बाधकाभावात्सा निषेधं ग्रहीतुं समर्थैव । अयं भावः—वदेदित्यत्र धात्व-

रणात्क्रत्वर्थत्वैव । अस्तु वा क्रतुयुक्तपुरुषधर्मः । अनुष्ठाने विशेषाभावात् । "ज-

र्थवदनक्रियां प्रति तिङर्थः कर्ता विशेषणं वदनक्रिया च विशेष्यं, कर्तृनिष्ठा वदनक्रियेति बोधः । अनृतमिति वदनस्य विशेषणं—अनृतवदनक्रियेत्यर्थः । तादृशानृतवदनक्रियायाः प्रधानभूताया नञर्थे विशेषणतयाऽन्वयः । तथाच कर्तृनिष्ठानृतवदनाक्रियानिषेध इत्यर्थे संपन्ने किमर्थोऽयं निषेध इति निषेधस्य कैमर्थ्याकाङ्क्षायां प्रकरणप्रमाणाद्वाक्यलिङ्गश्रुतीः कल्पयित्वा तद्द्वारा निषेधस्य दर्शपूर्णमासप्रकरणे विनियोगात्क्रत्वर्थत्वैव सिध्यतीत्यर्थः । नन्वेवं रीत्या न हिंस्यात्सर्वा भूतानि, न कलञ्जं भक्षयेदित्यादिनिषेधानामपि श्रुत्या पुरुषार्थत्वं न स्यात् , श्रुत्युपस्थितस्य कर्तुः क्रियां प्रति विशेषणत्वात् । यदि तु न कलञ्जमित्यादिनिषेधस्थलेऽन्यस्याङ्गिनोऽसंभवाद्विशेषणभूतकर्तुरपि निषेधोऽङ्गं भवतीत्युच्यते तर्हि, इतरविशेषणत्वेनोपस्थितेऽर्थे विशेषणत्वेनेतरार्थानन्वय इति पूर्वोक्तनियमस्य व्यभिचारेण नानृतं वदेदित्यत्रापि निषेधः कर्तुरङ्गं स्यादत आह—**अस्तु वेत्यादि । क्रतुयुक्तपुरुषधर्म इति** । आख्यातस्य कर्तृवाचकत्वे पदश्रुत्या नानृतं वदेदिति निषेधस्य पुरुषार्थत्वं प्राप्नोति, प्रकरणेन च क्रत्वर्थत्वम् । तत्रैकस्यैव कस्यचित्क्वचिद्विनियोगार्थं प्राप्तयोर्द्वयोः प्रमाणयोर्यद्यविरोधः संभवति तर्हि तत्र विरोधकल्पनमन्याय्यम् । विरोधे हि बलाबलविचारेण प्रबलेन दुर्बलस्य बाधः कर्तव्यो भवतीति महागौरवम् । अविरोधे तु कस्याप्यबाधेनोभयोः समावेश इति लाघवम् । प्रकृते नानृतमिति निषेधं विनियोक्तुं प्रसक्तयोः श्रुतिप्रकरणयोर्मध्ये श्रुतिस्तं पुरुषे विनियुङ्क्ते, प्रकरणं तु क्रताविति विरोधो भासते तथाऽपि स आभास एव । यतः क्रतावपि पुरुषसंभवेन श्रुतिप्रकरणयोरविरोधे सति उभाभ्यां क्रतुयुक्तपुरुषधर्मत्वं निषेधस्येत्यवगम्यते, श्रुतिप्रकरणाभ्यामेकवाक्यतया निषेधे क्रतुयुक्तः पुरुषोऽङ्गित्वेन समर्प्यत इति यावत् । तथा च क्रतुसंयुक्तपुरुषकर्तृकानृतवदननिषेध इति बोधान्निषेधः साक्षात्पुरुषस्याङ्गं, क्रतोस्तु परम्परया निषेधोऽङ्गमिति । यथा स्वयं गुणभूतः सेवको राजानं प्रधानं मन्यते, तस्यापि राज्ञो यद्गुणभूतं पुत्रकलत्रादि तदप्यसौ स्वप्रधानमिति मन्यते तद्वदित्यर्थः । ननु यद्ययं निषेधः क्रतुयुक्तपुरुषार्थः स्यात्तर्हि क्रतौ कर्तुर्यजमानस्य मुख्यत्वात्तेनैवानृतवदननिषेधः संलग्नो भवेदिति यजमानेनैवानृतवदननिषेधः परिपालनीयो भवेन्नर्त्विगादिभिरित्यनुष्ठाने वैषम्यं स्यादित्यनुसंधायाऽऽह—**अनुष्ठाने विशेषाभावादिति** ।

ञ्जृम्भमानोऽनुब्रूयान्मयि दक्षक्रतू ” इतिवाक्योक्तमन्त्रविधिवदित्यादि भूषणे प्रप-

---

पुरुषस्य क्रतुयुक्तत्वेन विशेषणात्क्रतुयुक्तः क्रतुसंबद्धो यः पुरुषस्तत्कर्तृकं यदनृत-वदनं तस्य निषेध इत्यर्थो यथा यजमानः क्रतुना संबद्धस्तथर्त्विगादिरपि क्रतुना संबद्ध इति क्रतुसंबद्धत्वाविशेषाद्यजमानवदृत्विगादिभिरप्यनृतवदनं वर्जनीयमित्य-नुष्ठाने विशेषाभाव इत्यर्थः । यदि तु युक्तशब्दस्थाने कर्तृपदं प्रक्षिप्य क्रतुकर्तृ-पुरुषकर्तृकानृतवदनविषेधः—क्रतोर्यः कर्ता पुरुषो यजमानस्तत्कर्तृकानृतवदननिषेध इत्युच्येत तदा यजमानव्यतिरिक्तर्त्विगादीनामनृतवदननिषेधाप्रसक्त्या यजमानेना-नृतवदनं वर्ज्यं न तदन्यैर्ऋत्विग्भिरित्यनुष्ठाने विशेषः संजायेत, तथा विशेषो मा भूदित्याकलय्यैव क्रतुयुक्तपुरुषेत्युक्तं मूल इति भूषणसारकर्तुरभिप्रायो बोध्यः ।

एकस्यैव विनियोगे प्रसक्तयोर्द्वयोर्विरुद्धप्रमाणयोरविरोधसंपादनेन क्रतुयुक्तपुरु-षधर्मत्वसमर्थने मीमांसकाभिमतं दृष्टान्तमाह—**जञ्जभ्यमानोऽनुब्रूयादिति ।** जञ्जभ्यमानोऽनुब्रूयान्मयि दक्षक्रतू इति दर्शपूर्णमासयोः श्रुतम् । जञ्जभ्यमान इत्यत्र जभधातोर्भावगर्हायां यङ्, ततः कर्तरि शानच् । ‘ जभी जृभि गात्रवि-नामे ’ इति पाणिनिस्मृतेर्गात्रविनामेन विदारितमुख इति तदर्थः । तत्र किमयं मन्त्रपाठः पुरुषमुद्दिश्य विधीयतेऽथवा क्रतुमुद्दिश्येति संदिह्य वाक्यप्रमाणेन ताव-ज्जञ्जभ्यमानपुरुषधर्मत्वेनायं प्रतीयते, शानचा कृत्प्रत्ययेन कर्तुः प्राधान्येनाभिधी-यमानत्वात् । प्रकरणप्रमाणेन तु क्रत्वङ्गत्वेन प्रतीयते, वाक्यं च प्रकरणाद्ब-लीयः, तस्मात्पुरुषधर्मोऽयमिति पूर्वपक्षयित्वा—वाक्यप्रकरणाभ्यामविरुद्धाभ्यां क्र-तुयुक्तपुरुषसंस्कारद्वारा क्रत्वर्थोऽयमिति सिद्धान्तितं जैमिनीये तृतीयाध्याये चतु-र्थपादे पञ्चमे जञ्जभ्यमानाधिकरणे । न च प्रकरणाद्वाक्यलिङ्गे श्रुतिं च कल्प-यित्वा तया श्रुत्या चतुर्थक्षणे विनियोगः कर्तव्यः, ततः प्रागेव वाक्याल्लिङ्गं श्रुतिं च कल्पयित्वा तया श्रुत्या तृतीयक्षण एव विनियोगस्य कृतत्वात्पुरुषार्थत्व-निर्णयेन क्व विनियोग इत्याकाङ्क्षाया विरहान्न क्रतावप्यन्वयः सिध्यतीति वा-च्यम् । तथा सति प्रमाणयोर्विरोधः स्यात् । विरोधे च बलवता दुर्बलं बाधनी-यम् । तच्च न न्याय्यम् । अबाधेनोपपत्तौ बाधस्यान्याय्यत्वादिति न्यायात् । त-स्माद्वाक्यप्रमाणेन यदेतन्मन्त्रानुवचनं जञ्जभ्यमानपुरुषाङ्गत्वेन विहितं तत्र सोऽ-ङ्गी जञ्जभ्यमानपुरुषो नासंबद्धः, किं तु क्रतुसंबद्धो ग्राह्य इत्येतत्प्रकरणप्रमा-णसाहाय्येन प्रतिपाद्यते । तेन विरोधाभावेन बाधाभावाद्द्वयोः प्रमाणयोः सफा-

श्रितम् । नन्वाख्यातस्य भावनायामसाधुत्वे ततस्तद्बोधो न स्यात्साधुत्वज्ञानस्य शाब्दबोधहेतुत्वादित्यत आह—बोध इति । असाधुत्वेऽपि साधुत्वभ्रमाद्बोधोऽस्तु नाम, अपभ्रंशवत् । असाधुत्वं तु स्यादेवेति भावः । वस्तुतः साधुत्वज्ञानं न

---

वेशः साधितः । तथा च क्रतुसंयुक्तजञ्जभ्यमानपुरुषकर्तृकं मन्त्रानुवचनमिति बोधान्मन्त्रानुवचनस्य पुरुषार्थत्वं पुरुषद्वारा च क्रत्वर्थं च समर्थितमिति भावः । एवं च बलाबलविचारस्व विरोध एवावसरादविरुद्धाभ्यां वाक्यप्रकरणाभ्यां जञ्जभ्यमानवाक्ये मन्त्रानुवचनस्य क्रतुयुक्तपुरुषार्थत्ववत्प्रकृतेऽप्यनृतवदननिषेधस्याविरुद्धाभ्यां श्रुतिप्रकरणाभ्यां क्रतुयुक्तपुरुषार्थत्वमेवे युक्तमित्याशयः । तदुक्तं भट्टपादैः—रुयुपायमांसभक्षादि पुरुषार्थमपि श्रितः । प्रतिषेधः क्रतोरङ्गमिष्टः प्रकरणाश्रयात् ॥ भक्षादीति नपुंसकद्वितीयान्तम् । रुयुपायमांसभक्षादीन् विषयीकृत्य यः प्रतिषेध उक्तः स पुरुषार्थं श्रितोऽपि प्रकरणाश्रयात्क्रतोरङ्गमिष्ट इति तदर्थ इति । अनया भट्टोक्त्या विशेषणे विशेषणत्वेनेतरानन्वय इत्येवंरूपो नियमो न सार्वत्रिक इति ज्ञेयम् । क्रतुसंबन्धी यः पुरुषः, तत्कर्तृकानृतवदनाभाव इति बोधात्पुरुषं प्रति क्रतोर्विशेषणत्वात्पुरुषस्य वदनक्रियां प्रति विशेषणत्वाच्चेति भावः। नन्वाख्यातस्य भावनार्थकत्वाभिप्रायेण प्रयोगे तस्य ( आख्यातस्य ) तत्र ( भावनायां ) असाधुत्वेनाऽऽख्यातात्भावनाया बोधो न स्यात्, साधुत्वज्ञानस्य शाब्दबोधं प्रति कारणत्वादत आह—तदभावेऽपीत्यादि । आख्यातस्य भावनाया-मसाधुत्वेऽप्याख्यातात्भावनाबोधो भवत्येवेत्यर्थः । अपभ्रंशवदिति । यथाऽपभ्रंशानां साधुत्वभ्रमाद्बोधकत्वेऽप्यसाधुत्वं तथा साधुत्वभ्रमाद्भावनाबोधकत्वेऽपि तस्यां तिबादेरसाधुत्वं स्यादेवेत्यर्थः । ननु पाणिन्याद्यनुशासनस्य निष्प्रमाणत्वात्तिबादेर्भावनाबोधकत्वेऽपि साधुत्वं निष्प्रतिबन्धमेवेति चेन्न । 'ब्राह्मणेन निष्कारणं षडङ्गो वेदोऽध्येयो ज्ञेयश्च' इति महाभाष्यकारोद्धृतश्रुतेः, पाणिनीयं महाशास्त्रं पदसाधुत्वलक्षणम् । सर्वोपकारकं ग्राह्यं कृत्स्नं, त्याज्यं न किंचन ॥ इति पराशरोपपुराणादेश्चापि प्रमाणत्वात् । ननु साधुत्वज्ञानमन्तराऽपि शाब्दबोधोदयदर्शनात्साधुत्वज्ञानस्य शाब्दबोधकारणत्वाभावेऽपि असाधुत्वज्ञानसत्त्वे शाब्दबोधोदयादर्शनादसाधुत्वज्ञानस्य शाब्दबोधं प्रति प्रतिबन्धकत्वं वक्तव्यमेव । तथा च भावनायामसाधुस्तिबादिरित्येवं वैयाकरणानां ज्ञानसत्त्वात्कथं तिबादेर्भा-

( लकारविशेषार्थनिर्णयः )

हेतुस्तव्द्यतिरेकानिर्णयोऽपि न प्रतिबन्धक इत्यसाधुरनुमानेनेत्यत्र वक्ष्यामः ॥२१॥

रङ्गोजिभट्टपुत्रेण कौण्डभट्टेन निर्मिते ।
पूर्णो भूषणसारेऽस्मिन्धात्वाख्यातार्थनिर्णयः ॥ १ ॥

इति कौण्डभट्टविरचिते वैयाकरणभूषणसारे धात्वर्थाख्यातसामान्यार्थनिर्णयः समाप्तः ॥

---

( अथ लकारविशेषार्थनिरूपणम् )।

---

प्रत्येकं दशलकाराणामर्थं निरूपयति--

---

वनाबोधकत्वमित्याशङ्कां समाधातुमाह--**वस्तुत इत्यादि** । **तव्द्यतिरेकेति** । साधुत्वस्य व्यतिरेकोऽभावः, तन्निर्णयोऽपीत्यर्थः । असाधुत्वज्ञानमिति यावत् । न प्रतिबन्धकमिति शेषोऽस्त्येव । **वक्ष्याम इति** । साधुत्वज्ञानरहितानामसाधुत्वज्ञानवतामपि गगर्यादिशब्देभ्यो बोधोदयस्य सर्वानुभवसिद्धत्वात्साधुत्वज्ञानं न हेतुर्नाप्यसाधुत्वज्ञानं तत्प्रतिबन्धकमित्यग्रेऽसाधुरनुमानेन( का. ३८ )इत्यत्र शक्तिनिर्णये वक्ष्यत इति सर्वं शिवम् ॥ २१ ॥

इति वैयाकरणभूषणसारव्याख्यायां शांकर्यां धात्वाख्यातयोः सामान्यार्थस्य निरूपणम् ॥ १ ॥

रङ्गभट्टतनूजस्य शंकरस्य विनिर्मितौ ।
पूर्णः सारीयटीकायां धात्वाख्यातार्थनिर्णयः ॥ १ ॥

---

## अथ लकारविशेषार्थनिरूपणम् ।

---

विशेषार्थजिज्ञासायाः सामान्यार्थज्ञानपूर्वकत्वनियमादाख्यातसामान्यार्थे निरूपितेऽवसरसंगत्या लकारविशेषार्थनिरूपणमारभत इत्याह--**प्रत्येकमिति** । एकैकस्येत्यर्थः । एकमेकं प्रतीति वीप्सायामव्ययीभावे षष्ठ्या अम्भावादिति भावः। **दशलकाराणामिति** । दशानां लकाराणामित्यर्थः । दिक्संख्ये संज्ञायामिति समासः । सप्तर्षिवदियं लडादीनां संज्ञेति भावः । लकाराणामिति संबन्धसामान्ये

( लकारविशेषार्थनिर्णयः )

**वर्तमाने परोक्षे श्वोभाविन्यर्थे भविष्यति ।**
**विध्यादौ प्रार्थनादौ च क्रमाज्ज्ञेया लडादयः ॥१॥ (२२)**

लडादयष्टितः षट् क्रमेणार्थेषु द्रष्टव्याः । तथा हि--**वर्तमानेऽर्थे** लट् । " वर्तमाने लट् " [ पा० सू० ३–२–१२३ ] इति सूत्रात् । प्रारब्धापरिसमाप्तत्वं भूतभविष्यद्भिन्नत्वं वा वर्तमानत्वम् । पचतीत्यादावधिश्रयणाद्यधःश्रयणा-

---

षष्ठी । प्रत्येकमित्यत्रान्वयः । दशलकाराणां मध्ये एकैकस्येत्यर्थः । **अर्थमिति** । जात्येकवचनम् । निरूपयति—प्रतिपादयति—**वर्तमाने परोक्ष इति** । कारिकाया गोलार्थमाह—**लडादय इत्यादिना** । वर्तमानत्वस्य लडर्थत्वे प्रमाणमाह—**वर्तमाने लडितीति** । वर्तमानत्वं लक्षयति **प्रारब्धापरीति** । प्रारब्धापरिसमाप्तक्रियोपलक्षितकालत्वमित्यर्थः । वर्तमानत्वस्य कालगतत्वेन सर्वानुभवसिद्धत्वादिति भावः । प्रारब्धा च अपरिसमाप्ता च या क्रिया तादृशक्रियाश्रयकालत्वमिति अक्षरार्थः । भाष्ये ' न्याय्या त्वेषा वर्तमानकालताऽऽरम्भानपवर्गाद्वश्यं भुञ्जानो हसति, जल्पति, पिबति, निमिषति च ' इत्युक्तम् । नान्तरीयकत्वाच्चासां न विच्छेदकत्वमिति हसनादिदशायामपि ' भुङ्क्ते ' इति प्रयोगोपपत्तिः । अनेकदिनादिसाध्यग्रन्थाध्ययनसमये भोजनगमनादिनानाविधक्रियाणामपि न विच्छेदकत्वम् । अत एव संहिताद्यध्ययनसमाप्तिपर्यन्तं देवदत्तः संहितां पठतीति प्रयोग उपपद्यते । इतोऽपि लघु लक्षणमाह—**भूतेति** । तथा च भूतभविष्यद्भिन्नकालत्वं वर्तमानत्वमित्यर्थः । तत्र भूतत्वं—वर्तमानध्वंसप्रतियोगिक्रियाश्रयकालत्वं, भविष्यत्त्वं तु—वर्तमानप्रागभावप्रतियोगिक्रियाश्रयकालत्वं ज्ञेयम् । वर्तमानत्वं च ध्वंसे प्रकृतप्रयोगाधिकरणकालवृत्तित्वं, एवमेव प्रागभावेऽपि वर्तमानत्वं बोध्यम् । प्रकृतप्रयोगाधिकरणकालश्च अहरादिन्याद्यात्मको बुद्धिस्थस्तत्र तत्र विशिष्य निवेश्यः । लक्ष्ये लक्षणं संगमयति—**पचतीत्यादाविति** । **अधिश्रयणादीति** । अधिश्रयणं—चुल्ल्युपरि स्थालीस्थापनं, आदिर्यस्य, अधःश्रयणं—चुल्ल्या सकाशात्स्थाल्यवतारणं, अन्तो यस्येति बहुव्रीहिद्वये कृते सति कर्मधारयः । क्रियासमूहोऽन्यपदार्थः । कर्मधारयेऽपि स समूह एव विशेष्यः । तादृशसमूहान्तर्गतमध्ये इत्यर्थः । तत्तत्फलानुकूलव्यापारारम्भक्षणसमाप्तिक्षणयोरन्तराले इति यावत् । तत्—उक्तरूपं वर्तमानत्वमस्तीति लट्प्रयोगो भवतीत्यर्थः । नन्वात्माऽस्ति पर्वताः सन्तीत्यादौ लट्प्रयोगानुपपत्तिः । तत्राऽऽत्मधारणानुकूलव्यापारस्य नित्य-

न्ते मध्ये तद्दस्तीति भवति लट्प्रयोगः । आत्माऽस्ति पर्वताः सन्तीत्यादौ तत्तत्कालिकानां राज्ञां क्रियाया अनित्यत्वात्तद्विशिष्टस्योत्पत्त्यादिकमादाय वर्तमानत्वमूह्यम् । उक्तं हि भाष्ये—"इह भूतभाविष्यद्वर्तमानानां राज्ञां क्रियास्तिष्ठतेरधिकरणम्" इति ।

---

तया प्रारब्धत्वाभावात्प्रारब्धापरिसमाप्तत्वरूपवर्तमानत्वस्यासंभवादित्याशङ्क्य समाधत्ते—**आत्मेत्यादिना** । तत्तत्कालिकानां भूतभविष्यद्वर्तमानानां राज्ञां याः क्रियाः स्थित्यादिरूपास्तासामनित्यतया—उत्पत्तिध्वंसशालितया तद्विशिष्टस्य—अनित्यराजक्रियाविशिष्टात्मधारणानुकूलव्यापारस्योत्पत्त्यादिकं—उत्पत्तिसमाप्तिभूतादिकालभेदमादाय—आत्मादिनिष्ठात्मधारणानुकूलव्यापारे तत्तत्कालविशिष्टराजक्रियागतोत्पत्त्यादिमत्त्वमारोप्य प्रारब्धापरिसमाप्तत्वरूपं वर्तमानत्वमात्मधारणानुकूलव्यापारस्य निर्वाह्यम् । अयमर्थः—पर्वतादिकर्तृकात्मधारणानुकूलव्यापारस्य नित्यतयोत्पत्त्यादिरहितत्वेऽपि भूतभविष्यदादिकालिकराजक्रियाविशिष्टस्य निरुक्तव्यापारस्योत्पत्त्यादिमत्त्वेन प्रारब्धापरिसमाप्तत्वरूपवर्तमानत्वं सूपपादमिति । आत्माऽस्तीत्यत्राऽऽत्मनो नित्यतयोत्पत्त्यादिशून्यत्वेऽपि शरीरस्योत्पत्त्यादिमत्तया तादृशशरीरविशिष्टस्याऽऽत्मन उत्पत्त्यादिकं कल्पयित्वा वर्तमानत्वादिबोधकप्रत्ययानां प्रयोग उपपादनीयः । तथा च केवले आत्मधारणानुकूलव्यापाररूपार्थे उत्पत्त्याद्यसत्त्वेऽपि उक्तविशेषणविशिष्टे तस्मिन् विशेषणद्वारोत्पत्त्यादिसत्त्वं नैवानुपपत्तिमित्याशयः । अथवा तद्विशिष्टस्येत्यत्रत्यतच्छब्देनाव्यवहितपूर्वत्वादनित्यत्वस्य परामर्शः। तथा च तादृशानित्यक्रियागतं वर्तमानत्वादिकमारोप्य तदर्थको लट् प्रत्यय इत्यर्थः । अत्रार्थे प्रमाणत्वेन वर्तमानेलट्सूत्रस्थं भाष्यं निर्दिशति—**उक्तं हीति । तिष्ठतेरधिकरणमिति** । राजक्रियाणामाधेयतासंबन्धेन कालविशिष्टत्वात्तादृशक्रियाधारः कालस्तिष्ठतेः पर्वतादिगतस्थितिक्रियाया अधिकरणमित्यर्थः । राजादिक्रियाधारकालस्य पर्वतादिस्थितावाधेयतासंबन्धेनाऽऽरोप इति यावत् । तत्र कैयटोऽप्यर्थं व्याचष्ट—'राज्ञां स्थितिर्भूतादिभेदेन भिन्ना पर्वतादिस्थित्यादेर्भेदिकेति क्रियारूपत्वं कालत्रययोगश्चोपपद्यते' इति । क्रियारूपत्वं कालत्रययोगश्च पर्वतादिस्थित्यादेरुपपद्यत इत्यर्थः । अन्यथा पर्वतादिस्थितीनां सदृशावयवत्वात्पूर्वापरीभूतावयवकसमूहत्वरूपक्रियात्वानुपपत्तिः, एवं तासां दुरवधारभेदतया कालभेदानुपपत्तिश्च स्यादिति भावः । **परतो भिद्यत इति । सर्व**—

( लकारविशेषार्थनिर्णयः )

" परतो भिद्यते सर्वमात्मा तु न विकल्पते ।
पर्वतादिस्थितिस्तस्मात्पररूपेण भिद्यते " ॥

इति वाक्यपदीये च ।

एवं " तम आसीत् " " तुच्छेनाम्वपिहितं यदासीत् " " अहमेकः प्रथ-

---

आत्मसत्तादिकं, पच्यादिधात्वर्थसामान्यमिति यावत् । परतो भिद्यते—परत एव भिद्यते, स्वापेक्षया परेणान्येन वर्तमानत्वादिना भिद्यत इत्यर्थः । आत्मा तु—आत्मसत्तादिकं तु न विकल्पते न स्वतो भेदकं भवति, भेदसाधकं स्वातिरिक्तमेव । आत्मसत्तादेः सदृशावयवत्वेन तद्भेदस्य दुरवधारत्वादिति भावः । यत्र तु विसदृशावयवसंतानो व्यापारः, यथा—अधिश्रयणादिविसदृशस्वभावावयकस्तत्रैकसमाप्त्यनन्तरं द्वितीयस्याऽऽरम्भात्ततस्तृतीयस्येत्येवमवधृतभेदतया कालत्रयभेदः प्रसिद्धः- आत्मसत्तादौ तु नैवमित्याशयः । तस्मात्—आत्मसत्तादेः स्वतो भेदसाधकत्वासंभवादेवेत्यर्थः । पर्वतादीति । आदिशब्देनाऽऽत्मादेर्ग्रहणम् । पररूपेणेति - स्वापेक्षया परस्य राजादिनिष्ठक्रियारूपार्थस्य रूपेण—तद्धर्मेणोत्पत्त्यादिमत्त्वेन भिद्यते इत्यर्थः । इति वाक्यपदीये चोक्तमित्यनेन संबन्धः । ननु तम आसीत्, तुच्छेनाभ्वपिहितं यदासीत्, एको ह वै नारायण आसीत्, अहमेकः प्रथममासं वर्तामि च भविष्यामि च, इत्यादिश्रुतिषु तमआदिपदार्थानां सदा सत्त्वेन वर्तमानध्वंसप्रतियोगिक्रियाश्रयत्वरूपभूतत्वाभावाद्भूतकालार्थकप्रत्ययोऽनुपपन्न इत्याशङ्क्य समाधत्ते—एवमिति । अयं भावः—अधिश्रयणादिरधःश्रयणपर्यन्त ओदनफलावच्छिन्नः संतानरूपो व्यापारनिचयः क्रिया पचेरर्थः । एवं सर्वत्र । स च यावता कालेन निवर्तते तावान्कालो वर्तमानः । तद्योगाद्वर्तमानो धात्वर्थः । तेन निष्पन्नस्यार्थस्य भूतत्वादनिष्पन्नस्य च भावित्वान्निष्पन्नानिष्पन्नव्यतिरेकेण राश्यन्तरस्याभावाद्वर्तमानाभाव इति शङ्का निरस्ता । ततः पर्वतास्तिष्ठन्ति, आत्माऽस्ति, स्रवन्ति सिन्धव इत्यादौ पर्वतादिस्थित्यादेः सर्वदा विद्यमानत्वाद्भूतभविष्यदभावात्तत्प्रतिद्वंद्विरूपस्य वर्तमानस्याप्यभाव इति लण्न प्राप्नोतीत्याशङ्क्य कालत्रयवर्तिनां राज्ञां याः क्रियाः परिपालनादिरूपा भूतादिभेदेन भिन्नास्ताः पर्वतादिस्थित्यादेर्भेदिकाः । ततश्च संप्रति ये राजानस्तत्क्रियाभेदेन भिन्नायाः पर्वतादिस्थितेर्वर्तमानत्वं, एवं च कृत्वा भूतभविष्यत्कालोऽप्युपपद्यते—तस्थुः पर्वता नलदुष्यन्तादिकाले, स्थास्यन्ति पर्वताः कल्किविष्णुकाले, इत्येवंरीत्या यथा प-

( लकारविशेषार्थनिर्णयः )

ममासं वर्तामि च भविष्यामि च " इत्यादिश्रुतयोऽपि योज्याः । तच्च वर्तमानत्वादि लडादिभिर्द्योत्यते । क्रियासामान्यवाचकस्य तद्विशिष्टे लक्षणायां लङादे-

---

र्वैतादिस्थित्यादौ भूतत्वादिकं साधितं तद्वत्तमआदिसत्तायां भूतत्वं साधनीयमिति । ननु वर्तमानत्वादीनां लडादिप्रत्ययद्योत्यत्वमथवा तद्वाच्यत्वम् ? तत्र न द्वितीयः । वर्तमानत्वादीनां लडादिप्रत्ययवाच्यत्वे हि सति कर्त्रादीनामर्थानां लकारान्तरे ( लोट्लिङादौ ) चारितार्थानां वर्तमानत्वादयोऽर्था बाधका भवेयुः । विशेषेण सामान्यस्य बाधात् । ततश्च लडादीनां कर्त्राद्यभिधायकत्वं न स्यात् । तथा च चैत्रमैत्रौ पचतः, मैत्राः पचन्तीत्यादौ कर्तुरभानात्तद्गतद्वित्वाद्यप्रतीतौ द्विवचनबहुवचने न स्याताम् । शबादयश्च न स्युः । लडादेर्वर्तमानत्वाद्यभिधायकत्वेन कर्त्राद्यभिधायकत्वाभावाद्युष्मदादेस्तत्सामानाधिकरण्याभावात्पुरुषव्यवस्था न स्यात् । चैत्रः पचतीत्यत्र लटा कर्तुरनभिधानेनानभिहितत्वप्रयुक्ता कर्तरि तृतीयापत्तिश्च स्यादिति वर्तमानत्वादीनां लडादिप्रत्ययद्योत्यत्वमेव युक्तम् । द्योतकत्वं च स्वसमभिव्याहृतपदगतशक्त्युन्नायकत्वम । वर्तमानत्वादीनां लडादिप्रत्ययवाच्यत्वे त्वित्थमुपपत्तिः—वर्तमानत्वादिभिरर्थैः कर्त्रादयोऽर्था न बाध्यन्ते, परस्परविरोधाभावात् । शक्ततावच्छेदकभेदेनार्थद्वयसंभवात् । तथा हि—लः कर्मणीत्यत्र 'लः' इति बहुवचननिर्देशेन सर्वलकाराणां संग्रहाल्लडादीनामपि कर्त्रादयोऽप्यर्था भवेयुः । तथा च कर्त्राद्यर्थे शक्ततावच्छेदकं लकारत्वं, वर्तमानत्वाद्यर्थे तु लट्त्वादिकमिति भावः । किं च कर्त्रादयोऽपि निरवकाशाः । न च लिङादयोऽवकाशाः । वर्तमानत्वादिवद्विध्यादेरपि लिङादिवाच्यत्वादिति । तदेवं पक्षद्वयस्य भाष्यारूढत्वेऽपि वाचकतापक्षे प्रत्ययार्थतया वर्तमानत्वादीनां प्राधान्यापत्तिः । तदर्थं प्रकृतिप्रत्ययार्थयोः ' इति न्यायस्य तिङन्तातिरिक्तत्वेन संकोचः कल्पनीयः । द्योतकतापक्षे तु द्योत्यार्थस्य विशेषणत्वनियमात्प्रत्ययवाच्यविषयस्य ' प्रत्ययार्थः प्रधानं ' इति नियमस्य नात्रावतार इति न नियमसंकोचप्रसङ्ग इति लाघवाद्द्योतकतापक्ष एव साधीयानित्याशयेनाऽऽह—तच्चेत्यादि । वर्तमानत्वादीत्यर्थः । द्योत्यत इति । लडादिर्द्योतकः । द्योतकत्वं च लडादिसमभिव्याहृतधातुगतशक्त्युद्बोधकत्वम् । तच्च धातोर्वर्तमानत्वादौ शक्तिं विना न संभवति । एवं च बहूनां धातूनां तत्र शक्तिकल्पनायां गौरवापातादल्पतरप्रत्ययानामेव वाचकत्वमेव स्यान्न द्योतकत्वमित्याशङ्क्याऽऽह—क्रियासामान्येति । कालस्य सर्वाधार-

स्तात्पर्यग्राहकत्वेनोपयोगात् । अन्वयव्यतिरेकाभ्यां तद्रूपं लडादिवाच्यमेव । अन्यथा प्रत्ययानां वाचकत्वविलोपापत्तिरित्यपि पक्षान्तरम् ।

---

त्वात्कालसामान्यवृत्तिक्रियावाचकस्य धातोर्वर्तमानादिकालविशेषविशिष्टे व्यापारे लक्षणेत्यर्थः । वैशिष्ट्यं च व्यापारे, वर्तमानादिकालनिष्ठाधिकरणतानिरूपिताधेयतासंबन्धेन बोध्यम् । **तात्पर्यग्राहकत्वेनेति** । विशिष्टलक्षणायां तात्पर्यग्राहकत्वमेव प्रकृते लडादेर्द्योतकत्वमिति भावः । तथा च लडाद्यादेशत्वेन तिबादीनां वर्तमानकालादिद्योतकत्वात्पचति, अपाक्षीदित्यादौ न भूतक्रियावर्तमानक्रिययोः प्रतीतिः । वाचकतापक्षमभ्युपेत्याऽऽह—**अन्वयेति** । यत्सत्त्वे यत्सत्त्वमन्वयः । यदभावे यदभावो व्यतिरेकः । यथा दण्डसत्त्वे घटनिष्पत्तिर्दृश्यते, दण्डाभावे घटनिष्पत्तिर्न दृश्यत इत्यन्वयव्यतिरेकाभ्यां घटं प्रति दण्डकारणता, एवं लडादिसत्त्वे वर्तमानत्वादेः प्रतीतिर्जायते, यथा—पचति, पक्ष्यति, अपाक्षीदिति । लडाद्यभावे वर्तमानत्वादेः प्रतीतिर्न जायते, यथा—पचतु, पचेत्, पच्यादित्यादि । एवमन्वयव्यतिरेकाभ्यां तद्रूपं—वर्तमानत्वादिरूपं, लडादिवाच्यमित्यर्थः । अन्वयव्यतिरेकाभ्यां वाच्यवाचकभावो निर्धार्यत इति यावत् । वाचको लडादिः । वाचकतावच्छेदकं लट्त्व—लिट्त्वादिकं तदपि लडाद्यादेशे तिबादावनुभवसिद्धमेव । अनुभवबलादेव च तल्लट्त्वादिकं तिबाद्यादेशेष्वारोपितं बोध्यम् । अत एव यजेतेत्यत्र प्रत्ययेऽप्यस्ति अंशद्वयम् । आख्यातत्वं लिङ्त्वं च । तत्र लिङ्त्वांशेन शाब्दीभावनोच्यत इति मीमांसाग्रन्थः संगच्छते । अंशद्वयं शक्ततावच्छेदकद्वयमित्यर्थः । वैयाकरणा अपि—पच्यादिष्वस्ति वाचकतावच्छेदकद्वयम् । पच्यादित्वं धातुत्वं च । तत्र धातुत्वेन सामान्यरूपेण पच्यादय उत्पत्त्यनुकूलव्यापारात्मिकां क्रियामाहुः । पच्यादित्वविशेषरूपेण तु विक्लित्त्यादितत्तत्फलविशेषानुकूलफूत्कारादितत्तद्व्यापारविशेषात्मिकां क्रियामाहुरिति वदन्ति । अन्यथा—अन्वयव्यतिरेकाभ्यां वाच्यवाचकभावानिर्धारणे । **विलोपापत्तिरिति** । पक्तेत्यादावपि पचेर्व्यापाराश्रये लक्षणा । न च कर्तरि कृदित्यादीनां वैयर्थ्यम् । धातोस्तादृशेऽर्थे लक्षणायां कर्तरि कृदित्यादिसूत्राणां तात्पर्यग्राहकत्वेनोपयोगसंभवात् । एवं सर्वत्रापीति प्रत्ययानां वाचकत्वं क्वापि न सिध्येदिति तादृशोक्तेरुच्छेद एव स्यादिति भावः ।

( लकारविशेषार्थनिर्णयः )

लिडर्थमाह—परोक्ष इति। "परोक्षे लिट्" [ पा० सू० ३-२-११५ ] इति सूत्रात्। कालस्तावदद्यतनानद्यतनभेदेन द्विविधः। द्विविधोऽपि भूतभविष्यद्रूपः। तत्रानद्यतने भूते परोक्षे लिडित्यर्थः। तेनाद्यतने भूतेऽनद्यतने भविष्यति भूतेऽप्यपरोक्षे च न लिट्प्रयोगः। परोक्षत्वं च साक्षात्करोमीत्येतादृशविषयताशा-

---

परोक्षे लिडिति सूत्रादिति। अनद्यतने लङित्यतोऽनद्यतन इति अनुवर्तते, भूत इत्यधिकृतम्। परोक्षत्वं च धात्वर्थविशेषणम्। परोक्षशब्दोऽयमतीन्द्रियवाची प्रसिद्धः। व्युत्पत्तिस्तु—अक्ष्णः परं परोक्षं, मयूरव्यंसकादित्वात्समासः। अक्ष्णोऽदर्शनादित्यच् समासान्तः। वृत्तिविषये चाक्षिशब्दः सर्वेन्द्रियवचनो, न चक्षुःपर्यायः, अन्यथेन्द्रियान्तरविज्ञातं वस्तु परोक्षमापद्येतेत्यर्थः। तथा च—अद्य भवोऽद्यतनस्तद्भिन्नभूतकालवृत्तिर्या परोक्षा क्रिया तद्वाचकाद्धातोर्लिडिति सूत्रार्थः। एवं चैतन्मते भूतानद्यतनकालद्योतको लिट्। पक्षान्तरे तु लङ्वत्तद्वाचकः। एवं सर्वलकारेषु द्योतकत्वं वाचकत्वं च बोध्यम्। कालशून्येषु लिङादिषु तु द्योतकत्वं वाचकत्वं च मूल एव स्पष्टम्। अद्यतनानद्यतनविभागस्तु—अतीताया रात्रेः पश्चार्धेनाऽऽगामिन्याः पूर्वार्धेन च सहितो दिवसोऽद्यतनस्तद्भिन्नोऽनद्यतन इत्येकः प्रकारः। अतीताया रात्रेरन्त्यतृतीयभागेनाऽऽगामिन्या आद्यतृतीयभागद्वयेन च सहितो दिवसोऽद्यतनस्तद्भिन्नोऽनद्यतन इति द्वितीयः। उदयादुदयं यावदद्यतनस्तद्भिन्नोऽनद्यतन इति तृतीयः। एष्वन्यतमाङ्गीकारे देशाचाराद्व्यवस्था। परोक्षत्वं तु वर्षशतवृत्तत्वमित्येके। वर्षसहस्रवृत्तत्वमित्यपरे। द्व्यहवृत्तत्वं त्र्यहवृत्तत्वं चेत्यन्ये। कुड्यकटाद्यन्तरितत्वमितीतरे। एते पक्षा भाष्ये स्थिताः। तत्र प्रयोक्तुरिन्द्रियागोचरत्वं परोक्षत्वमित्येव सर्वसंमतं, सर्वत्रेन्द्रियागोचरत्वस्याव्यभिचरितत्वादिति बोध्यम्। अनद्यतने, भूते, परोक्षे, इति विशेषणत्रयस्य क्रमेण व्यावर्त्यमाह—तेनाद्यतन इत्यादिना। अद्य प्रातरेव जगामेति न भवति। अत्र गमनक्रियाया भूतकालवृत्तित्वेऽपि प्रयोक्तुरिन्द्रियागोचरत्वेऽपि भूतकालस्याद्यतनत्वात्। श्वो जगामेति न लिट्। अत्र गमनक्रियाया अनद्यतनत्वेऽपि भविष्यत्कालवृत्तित्वेन भूतकालवृत्तित्वाभावात्। अद्राक्षमहं गतेऽह्नि प्रातरेवं जगामेति लिण्न प्रयुज्यते। अत्र गमनक्रियाया अनद्यतनभूतकालवृत्तित्वेऽपि प्रत्यक्षत्वेन परोक्षत्वाभावात्। परोक्षत्वं लक्षयति—साक्षात्करोमीत्यादि। साक्षात्करोमीत्येतादृशशब्दाभिलप्यमानविषयताशालि यज्ज्ञानं तादृशज्ञानविषयत्वाभावः

लिङ्ज्ञानाविषयत्वम् । न च "क्रिया नामेयमत्यन्तापरदृष्टा पूर्वापरीभूतावयवा न शक्या पिण्डीभूता निदर्शयितुम्" इति भाष्यात्तस्या अतीन्द्रियत्वेन परोक्ष इत्यव्यावर्तकमिति शङ्क्यम् । पिण्डीभूताया निदर्शयितुमशक्यत्वेऽप्यवयवशः साक्षात्करोमीति प्रतीतिविषयत्वसंभवात् । अन्यथा पश्य मृगो धावतीत्यत्र तस्या द-

---

वत्त्वम् । ज्ञानं च प्रयोक्तृनिष्ठत्वेन विवक्षितम् । ततश्च प्रयोक्तुरिन्द्रियागोचरत्वं परोक्षत्वमित्येव फलितम् । परोक्ष इति धात्वर्थविशेषणमित्युक्तं तत्र शङ्कते—न चेत्यादि । क्रिया नामेति । साध्यत्वेनाभिधीयमानो गुणभूतावयवः पूर्वापरीभूतानेकव्यापाराणामेकफलजनकत्वाविषयैकबुद्ध्या विषयीकृतः समूहः क्रियेत्युच्यते तान्त्रिकैः । इयमिति । सा चेयं क्रिया यतः पूर्वापरीभूतानेकव्यापारसमूहरूपाऽतोऽत्यन्तापरदृष्टा—परेण प्रत्यक्षप्रमाणेनात्यन्तमदृष्टा प्रत्यक्षप्रमाणजन्यज्ञानाविषयेत्यर्थः । पिण्डीभूतेति । अवयवानामाशुतरविनाशित्वेन पिण्डीभावस्यैवाभावेन निदर्शयितुं न शक्येति भाष्येण तस्या इन्द्रियागोचरत्वाभिधानात्परोक्ष इति तद्विशेषणं व्यर्थमिति शङ्काशयः । अव्यावर्तकमिति । यदि तु कस्याश्चित्क्रियायाः प्रत्यक्षं स्यात्तर्हि तादृशप्रत्यक्षविषयक्रियायां लिड्वारणाय परोक्ष इति विशेषणं सार्थकं स्यात् । सर्वस्या अपि क्रियायाः परोक्षत्वे तु व्यावर्त्याभावात्तदाकिंचित्करमिति भावः । समाधत्ते—पिण्डीभूताया इत्यादिना । अवयवानां क्षणिकत्वेन तन्मेलनात्यन्तासंभवात्पिण्डस्यैवाभावात्पिण्डीभूताया निदर्शयितुमशक्यत्वेऽपि अवयवशः—एकैकावयवस्य साक्षात्करोमीत्यतादृशलौकिकप्रतीतिविषयत्वसंभवादवयवद्वारा वक्तुः प्रत्यक्षविषयक्रियायां लिड्वारणाय तत्सार्थकमिति भावः । अवयवानां प्रत्यक्षत्वे साधकमाह—अन्यथेति । उक्तवैपरीत्ये, अवयवानामपि प्रत्यक्षत्वाभाव इत्यर्थः । पश्य मृगो धावतीत्यत्र मृगकर्तृकधावनक्रियाया दर्शनक्रियानिरूपितकर्मत्वं न स्यात् । तथा च तादृशप्रयोगे भाष्यसंमतैकवाक्यत्वानुपपत्तिरिति भावः । ननु क्षणावच्छिन्ना अवयवा अपि अप्रत्यक्षा एव । वस्तुसौक्ष्म्यवत्सूक्ष्मकालावच्छिन्नत्वस्यापि प्रत्यक्षे प्रतिबन्धकत्वावश्यकत्वेन प्रत्यक्षासंभवात् । अत्यन्तापरदृष्टेति भाष्यस्यापि समूहरूपेणावयवरूपेण च प्रत्यक्षप्रमाणेनात्यन्तमदृष्टेत्येवार्थः । तस्मादादित्यगतिवद्गुनर्देशसंयोगादिरूपफलानुमेयैव सर्वा क्रिया । पश्य मृगो धावतीत्यत्र दृशेर्ज्ञानसामान्यार्थकत्वाङ्गीकारेण क्षिप्रं क्षिप्रं देशान्तरसंयोगदर्शनेन च धावनमनुमीयत इत्यनुमिति-

( लकारविशेषार्थनिर्णय. )

शनकर्मता न स्यादिति प्रतिभाति । व्यापाराविष्टानां क्रियानुकूलसाधनानामेवात्र पारोक्ष्यं विवक्षितमतो नोक्तदोषः । अयं पपाचेत्याद्यनुरोधाद्व्यापाराविष्टानामिती-

---

विषयत्वमेव तत्र धावनस्येति लघुमञ्जूषायां नागेशभट्टैरुक्तत्वात्तदनुसारेण परोक्ष-पदसार्थक्यं प्रदर्शयति—व्यापाराविष्टानामिति । व्यापारविशिष्टानां क्रियानु-कूलसाधनानामेवात्र पारोक्ष्यं विवक्षितमित्यस्य व्यापारविशिष्टे कारके परोक्ष इति विशेषणं, न तु धात्वर्थक्रियायां, तस्या अतीन्द्रियत्वेन परमाणोरिव बहिरिन्द्रिय-जन्यप्रत्यक्षायोग्यत्वात् । ततश्च अनद्यतनभूतकालिको यो व्यापारस्तादृशव्यापार-विशिष्टः परोक्षश्च यो देवदत्तादिस्तन्निष्ठक्रियावाचकाद्धातोर्लिडिति परोक्षे लि-डिति सूत्रार्थः । तेन पचनादिक्रियानाविष्टस्य चैत्रस्य प्रत्यक्षत्वेऽपि चैत्रः पपाचेति प्रयोगस्य नानुपपत्तिः । पचनादिव्यापाराविष्टस्य परोक्षत्वादिति भावः । नोक्त-दोष इति । प्रयोक्तुर्व्यापाराविष्टसाधनस्य देवदत्तादेः प्रत्यक्षत्वदशायां 'अयं पपाच' इति प्रयोगवारणार्थतया परोक्षपदसार्थक्ये सति अव्यावर्तकत्वरूपो दोषो नेत्यर्थः । व्यापाराविष्टानामित्यस्य प्रयोजनमाह—अयं पपाचेति । व्यापा-राविष्टस्य प्रत्यक्षत्व एव लिण्नेष्यते, न तु व्यापारानाविष्टस्य प्रत्यक्षत्व इति भावः । एवं च प्रयोक्तुः प्रत्यक्षाविषयकर्तृकस्थल एव चैत्रः पपाचेति लिट्प्रयो-गो भवति । यदा हि प्रयोक्ताऽनद्यतनभूतकालिकगमनादिक्रियाकर्तारं सज्जीकृता-श्वादिकं बद्धपरिकरं गमनोद्यतं साक्षात्कृतवांस्तदाऽयं जगामेति प्रयोगो न भवति व्यापाराविष्टस्य बद्धपरिकरादिकस्य गन्तुः परोक्षत्वाभावात् । यदा तु तादृशग-मनादिक्रियाकर्तारं क्रियानाविष्टत्वेन साक्षात्करोति तदाऽयं जगामेति लिड् भव-ति । क्रियाविष्टस्य गन्तुः परोक्षत्वादिति तात्पर्यम् । यद्यपि क्रियाया अप्रत्य-क्षत्वे, विशिष्टज्ञाने विशेषणज्ञानस्य कारणत्वेन तत्र विशेषणभूतक्रियायाः प्रत्य-क्षत्वाभावेन तादृशक्रियाविशिष्टसाधनप्रत्यक्षं दुरुपपादमेव, तथा च तद्वैयर्थ्यं तद-वस्थमेव तथाऽपि फूत्कारसीत्कारादिक्रियावैशिष्ट्यसमये साधनसमये साधन-परोक्षत्वस्य विवक्षितत्वान्नोक्तदोष इति ध्येयम् । यत्र साधनशक्त्याश्रयभूतं फू-त्कारसीत्कारादिविशिष्टं संरब्धरूपं द्रव्यं प्रत्यक्षं तत्र धात्वर्थ एव प्रत्यक्षाभिमानो लौकिकानां, अभिमानो मिथ्याज्ञानं तद्व्यावृत्तये परोक्षग्रहणमिति यावत् । अत्रेदं बोध्यम्—प्राचीनमते परोक्षत्वं धात्वर्थे विशेषणं, नवीनमते तु धात्वर्थसाधने तद्वि-

त्यपि वदन्ति । कथं तर्हि " व्यातेने किरणावलीमुदयनः " इति, स्वक्रियायाः स्वप्रत्यक्षत्वादिति चेत् । असंगतमेव । व्यासङ्गादिना स्वव्यापारस्य परोक्षत्वो-पपादनेऽपि बहुतरमनःप्रणिधानसाध्यशास्त्रार्थनिर्णयजनकशब्दरचनात्मके ग्रन्थेऽ-

---

शेषणम् । तत्र प्रथममतमेवोचितम् । यतो धातोरित्यधिकारस्य चार्थे लक्षणायां स्व( धातु )वाच्यत्वं संबन्धः, साधनलक्षणायां तु स्व( धातु )वाच्यसाधनत्वं संबन्ध इति गौरवात् । न च सर्वा क्रिया परोक्षेत्यव्यावर्तकं तत् ; समुदायस्य परोक्षत्वेऽपि प्रत्येकमवयवस्यापरोक्षत्वात् । अत एव ' पिण्डीभूता न निदर्शयितुं शक्या इति भाष्ये विशिष्य पिण्डीभूताया एव निदर्शयितुमशक्यत्वं प्रदर्शितम् । अत एव पश्य मृगो धावतीत्यत्र धावनक्रियाया एव पश्येत्यत्र कर्मत्वं संगच्छ-मेव । न च प्रत्येकं न क्रियात्वमिति वाच्यम् । तावताऽपि धात्वर्थत्वाक्षतेः । किं च फलस्यापि स्वजनकव्यापारगतपौर्वापर्यारोपेण क्रियात्वम् । अत एव प-च्यते तण्डुलः स्वयमेवेत्यादौ फलमात्रवाचकत्वे तस्य धातुसंज्ञासिद्धिः । परोक्षत्व-मपि भाष्योक्तं क्रियायां संगच्छत इति प्रतिभाति इति । नन्वेवं क्रियायाः क्रि-याविष्टसाधनस्य वा प्रत्यक्षत्वे लिडनुपपन्न इत्याशङ्कते—कथं तर्हीति । उदय-नः किरणावलीं व्यातेने इत्यत्रेत्यर्थः । वितस्तरे इत्यर्थः । तनु विस्तार इति स्मरणात् । कथंत्वे हेतुमाह—स्वक्रियाया इति । उदयनकर्तृकक्रियायाः प्रयो-क्तुरुदयनस्यावश्यं प्रत्यक्षत्वेन विस्तारक्रियायाः पारोक्ष्याभावाल्लिडनुपपन्न इत्यर्थः। साधनपारोक्ष्यपक्षे क्रियाविष्टसाधनस्य स्वप्रत्यक्षत्वादिति हेतुर्बोध्यः । ननु स्वव्या-पारस्यापि वर्तमानदशायां विषयान्तरासक्तिरूपव्यासङ्गादिना स्वयमप्रतिसंधाने-ऽपि ततः कार्येणानुमितौ भवत्येव लिट् । यथा—बहु जगद पुरस्तात्तस्य मत्ता किलाहम् ' इति । अत्र यथा हर्षातिरेकादिना मनसोऽसंनिहितत्वात्क्रियापा-रोक्ष्यं तद्वत्प्रकृतेऽपि विषयान्तरसंचाररूपव्यासङ्गादिना उदयनकर्तृकव्यापारस्य व्यापारविशिष्टसाधनस्य चोदयनप्रत्यक्षविषयत्वाभावरूपपरोक्षत्वसंभवान्न लिटोऽ-संगतिरिति चेन्न । स्वव्यापारस्य यथा कथंचित्परोक्षत्वोपपादनेऽपि तत्रानद्यतना-तीतत्वयोरुपपादयितुमशक्यत्वेन लिटोऽसंगतिरेवेत्याह—बहुतरमनःप्रणीति । अतिशयितं यन्मनःप्रणिधानं मनसस्तदेकतानत्वं तेन साध्यो यः शास्त्रार्थनिर्णय-स्तज्जनके वाक्यसंदर्भविरचनरूपग्रन्थे या विस्तृतिक्रिया तस्यामद्यतनभिन्नत्वं वर्तमानध्वंसप्रतियोगिक्रियाश्रयकालत्वरूपभूतत्वं चोपपादयितुं सर्वथा दुःशकमिति

( लकारविशेषार्थनिर्णयः )

नद्यतनत्वातीतत्वयोर्विस्तारक्रियायामसत्त्वेनानद्यतनातीतत्वयोरभावेन तदर्थकलिड-संभवात् ।

लुडर्थमाह—**श्वो भाविनीति** । अनद्यतने भाविनीत्यर्थः । "अनद्यतने लुट्" [ पा० सू० ३ ३-१५ ] इति सूत्रात् । यथा श्वो भवितेत्यादौ ।

---

'व्यातेने' इति अनद्यतनातीतत्वार्थको लिट्प्रयोगोऽयुक्त एवेति भावः । **असंभवादिति** । किरणावलीकर्मकाविस्तारानुकूलव्यापारावच्छेनाद्यतनाभिन्नत्वाभावादतीनकालसंबन्धाभावाच्च तदसंभव इत्याशयः । व्यातेने इत्यादि तु भूतत्वानद्यतनत्वपरोक्षत्वानामारोपेणोपपन्नम् । आरोपफलं तु ग्रन्थेऽतिसुकरत्वशीघ्रनिष्पाद्यत्वादिप्रत्यायनम् । तत्फलं तच्छ्रोतॄणां पदार्थतत्त्वनिश्चयफलकैतद्ग्रन्थं ज्ञातुं सोत्कण्ठानामाह्लाद इत्यादि मञ्जूषायामनुसंधेयम् । कृभ्वाद्यनुप्रयोगस्थलेऽप्रयुक्तानां कृभ्वसां क्रियासामान्यमर्थः । क्रियात्वरूपसामान्यधर्माश्रय इति यावत् । आमृप्रकृतेस्तु तत्तत्क्रियाविशेषः । सामान्यविशेषयोरभेदान्वयः । तथा च 'एधांचक्रे' इत्यत्र एकचैत्राभिन्नाश्रयिका भूतानद्यतनकालाधिकरणिका पारोक्ष्यवती वृद्ध्यभिन्ना क्रियेति बोधो ज्ञेयः । अथवा एकत्वपरोक्षत्वविशिष्टचैत्राभिन्नाश्रयिका भूतानद्यतनकालाधिकरणिका वृद्ध्यभिन्ना क्रियेति बोधः । लुडर्थमाह—**अनद्यतने लुडिति सूत्रादिति** । भविष्यति गम्यादय इत्यतो भविष्यतीत्यनुवर्तते । धातोरित्यधिकृतम् । भविष्यत्यनद्यतन इत्यस्य धात्वर्थक्रियायामन्वयः । तथा च भविष्यदनद्यतनकालवृत्तिर्या क्रिया तद्वाचकाद्धातोर्लुडिति तदर्थः । अनद्यतनपदार्थो लिट्सूत्रे पूर्वमुक्तः । भविष्यत्त्वं च वर्तमानप्रागभावप्रतियोगिक्रियाश्रयकालत्वम् । उदाहरणं—घटः श्वो भवितेति । अत्र घटनिष्ठसत्तायाः परस्मिन्नहनि भावित्वेनाद्य तादृशसत्तायाः प्रागभावो वर्तत इति वर्तमानो यः प्रागभावस्तादृशाभावप्रतियोगिनी या क्रिया घटनिष्ठसत्ता तादृशसत्ताश्रयपरदिनरूपकालत्वं भविष्यत्त्वमिति लक्षणसमन्वयः । एकघटाभिन्नाश्रयिका भविष्यदनद्यतनकालाधिकरणिका सत्तेति बोधः । ननु कारिकायां श्वो भाविनीत्युक्तं तदयुक्तम् । यतः श्वःशब्दार्थस्याव्यवहितागामिदिनतया तृतीयादिदिनभाविन्यपि पाकादौ पक्तेत्यादिप्रयोगस्येष्टत्वादतः श्वो भाविनीत्यस्यानद्यतने भाविनीत्यर्थः सार उक्तः । एवं च श्वोग्रहणमनद्यतनोपलक्षणमिति भावः । एवं च चैत्रस्तण्डुलं पक्ता इत्यत्र तण्डुलनिष्ठविक्लित्त्यनुकूला एकचैत्राभिन्नाश्रयिका भविष्यदनद्यतनकालिकी क्रि-

[ पा० सू० ३ २-१११ ] इति सूत्रात्। यथाऽस्य पुत्रोऽभवदित्यादि।

लिङर्थमाह—प्रेरणादाविति। "विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनेषु लिङ्" [पा० सू० ३-३-१६१] इति सूत्रात् तत्र विधिः प्रेरणं भृत्यादेर्नि-

---

त्वमित्युक्तमेव। उदाहरणमाह—अस्य पुत्र इति। यद्या च लङ् प्रयुज्यते तत्पाग्दिन एव पुत्रोत्पत्तेः संपूर्णतया जातत्वेन क्रियाया वर्तमानध्वंसप्रतियोगित्वरूपानद्यतनभूतकालवृत्तित्वं संगतम्। तथा चानद्यतनभूतकालिक एतत्संबन्ध्येकपुत्राभिन्नाश्रयक उत्पत्त्यनुकूलो व्यापार इति बोधः। प्रेरणादिलिङर्थत्वे प्रमाणमाह—विधिनिमन्त्रणेत्यादि। विध्यादिष्वर्थेषु द्योत्येषु वाच्येषु वा धातोर्लिङ् स्यादिति तदर्थादित्यर्थः। विध्यादीनां द्योत्यत्वं वाच्यत्वं चेति पक्षद्वयमपि भाष्ये स्थितम्। तत्र द्योत्यत्वे इत्थमुपपत्तिः—विध्यादीनां लिङ्वाच्यत्वमनुचितम्। तथाहि सति कर्त्राद्यर्थानां लडादिलकारान्तरे चरितार्थानां विध्याद्यर्थोऽर्थो बाधकाः स्युः। ततश्च लिङः कर्त्राद्यभिधायकत्वं न स्यात्। तथा च चैत्रमैत्रौ भवेतामित्यादौ कर्तुरभानात्तद्गतद्वित्वाद्यप्रतीतौ द्विवचनबहुवचनानापत्तिः। सार्वधातुकस्य कर्त्रर्थकत्वाभावाच्छबाद्यनुपपत्तिः। लिङो विध्याद्यर्थाभिधायकत्वेन कर्त्राद्यभिधायकत्वाभावाद्युष्मदादेस्तिङ्वाच्यकारकवाचकत्वाभावेन पुरुषव्यवस्था न स्यात्। निरुक्तोदाहरणेऽभिहितत्वप्रयुक्ततृतीयादिविरहश्च न सिध्येदिति विध्यादीनां लिङ्द्योत्यत्वमेव युक्तम्। वाच्यत्वे त्वित्थमुपपत्तिः—विध्यादिभिः कर्त्रादयो न बाध्यन्ते। परस्परविरोधाभावात्। शक्यतावच्छेदकभेदेनार्थद्वयस्यापि संभवात्। तथा हि—लः कर्मणीत्यत्र 'लः' इति बहुवचननिर्देशेन सर्वलकाराणां संग्रहाल्लिङोऽपि कर्त्रादयोऽप्यर्थाः स्युरेव। तथा च कर्त्राद्यर्थे शक्यतावच्छेदकं लकारत्वं, विध्याद्यर्थे तु लिङ्त्वमिति भावः। किं च कर्त्रादयोऽपि निरवकाशा एव। न च लडादयोऽवकाशाः। विध्यादिवद्वर्तमानत्वादेरपि लडादिवाच्यत्वादिति ज्ञेयम्। अथापि भवेदित्यादौ धात्वर्थे सति विध्यादेः प्रत्ययार्थतया विशेष्यत्वं स्यात्। तथा चैकचैत्राभिन्नाश्रयकं विधिविषयो भवनमिति धात्वर्थमुख्यविशेष्यकशाब्दबोधवर्णनमयुक्तं स्यात्। प्रत्ययार्थतया विशेष्यत्वापादनस्य कर्त्रादावपि तुल्यत्वात्। प्रत्ययार्थः प्रधानं, प्रकृत्यर्थो विशेषणमित्यौत्सर्गिकप्राख्याते त्यज्यते, भावप्रधानमाख्यातमिति भाष्यानुरोधादिति चेत्तर्हि तत एव न दोष इत्यवधेयम्। विध्यादिशब्दार्थान्निर्वक्ति—तत्रेति। तेषां विध्यादीनां मध्य

( लकारविशेषार्थनिर्णयः )

कृष्टस्य प्रवर्तनम् । **निमन्त्रणं** नियोगकरणम् । आवश्यके प्रेरणेत्यर्थः । **आमन्त्रणं** कामचारानुज्ञा । **अधीष्टः** सत्कारपूर्वको व्यापारः । एतच्चतुष्टयानुगतप्रवर्तनात्वेन वाच्यता लाघवात् ।

---

इत्यर्थः । **प्रेरणमिति** । प्रवर्तनमित्यर्थः प्रवर्तनं च प्रवृत्त्यनुकूलो व्यापारः । यथा निकृष्टस्य भृत्यादेः प्रभुणा स्वाभिलषिते प्रवर्तनम् । इयमेवाऽऽज्ञा । अप्रवृत्तप्रयोज्यस्य तदभिलषिताज्ञातोपायप्रवर्तनमुपदेशः । यथा स्वर्गकामो यजेतेत्यादिः । यथा वाऽनेन पथा याहीत्याप्तवचः । सोऽपि विधिरेव । आद्ये स्वर्गोऽभिलषितः । अत्राप्रवृत्तस्य प्रयोज्यस्य देवदत्तादेर्यदभिलषितं स्वर्गः, तत्प्राप्तिविषये योऽज्ञातोपायः—यागः, तादृशे स्वर्गप्राप्त्युपायभूते यागे प्रवर्तनं देवदत्तादेरनेन वाक्येन क्रियत इत्ययमपि विधिरित्यर्थः । अन्त्ये काश्यादिप्राप्तिरभिलषिताभिप्रायेणोक्तम् । **भृत्यादेर्निकृष्टस्येति** । स्वसमानोत्तमयोः प्रवर्तनायामाज्ञात्वाभावाभिप्रायेण निकृष्टत्वोक्तिः । एवं च न तत्र विधित्वमिति भावः । आज्ञापदेन निकृष्टत्वं विवक्षितमिति बोधयितुं—भृत्यादेरिति । तेन स्वापेक्षयाऽधिकवयस्कभृत्यप्रेरणाया विधित्वमेव । **नियोगकरणमिति** । आवश्यके श्राद्धभोजनादौ स्वाभिलषिते दौहित्रादेः प्रवर्तनमित्यर्थः । **आमन्त्रणमिति** । स्वाभिलषिते कामचारेण प्रवर्त्यप्रवर्तनमित्यर्थः । कामचारश्च प्रवर्त्यस्यैव । एषैव च कामचारानुज्ञा । प्रवृत्तस्य प्रयोज्यस्य निवृत्तिप्रतिबन्धेन तद्विषये प्रवर्तिकोक्तिरनुज्ञा । आरब्धं कुर्वेवेत्येवंरूपा । तथा कुरुष्व यथाहितमित्यप्यनुज्ञैव । एतत्सर्वोपलक्षणमामन्त्रणम् । **अधीष्ट इति** । **सत्कारपूर्वक इति** । सत्कृत्य क्वचनोचिते महति कर्मणि प्रवर्तनमित्यर्थः । यथा—माणवकमध्यापयेति । एषैवाभ्यर्थना । प्रार्थना तु स्वाभिलषितवस्तुदानादिप्रवर्तिकोक्तिः । **संप्रश्नः— संप्रधारणमिति** । एकतरकोटिकानिर्णयेच्छा । यथा—किं भो वेदमधीयीयोत तर्कमिति । **एतच्चतुष्टयेति** । विध्याद्यधीष्टान्तेषु चतुर्ष्वनुस्यूतमनुगतं यत्प्रवर्तनात्वं प्रवर्तनागतं सामान्यं तद्रूपेणैव चतुर्णां वाच्यता स्वीकर्तव्या शक्यतावच्छेदकत्वे लाघवात्, न तु विधित्वादितत्तद्विशेषरूपेण, शक्यतावच्छेदकत्वे गौरवात् । यजेतेत्यादिविधिवाक्याद्विध्यादीनां बोधस्य सर्वानुभवसिद्धत्वेऽपि तत्तद्विशेषरूपेण वाच्यतायां तत्तद्रूपस्यानेकत्वेन शक्यतावच्छेदकानेकत्वस्य दुर्वारतया गौरवात्प्रवर्तनात्वेन वाच्यतायां प्रवर्तनात्वस्यैकत्वेन तस्य शक्यतावच्छेदकत्वकल्पने लाघवं भवतीति प्रवर्तनात्वे-

उक्तं च—

“ अस्ति प्रवर्तनारूपमनुस्यूतं चतुर्ष्वपि ।
तत्रैव लिङ् विधातव्यः किं भेदस्य विवक्षया ॥
न्यायव्युत्पादनार्थं वा प्रपञ्चार्थमथापि वा ।
विध्यादीनामुपादानं चतुर्णामादितः कृतम् ” इति ॥

प्रवर्तनात्वं च प्रवृत्तिजनकज्ञानविषयतावच्छेदकत्वम् । तच्चेष्टसाधनत्वमस्तीति तदेव विध्यर्थः । यद्यप्येतत्कृतिसाध्यत्वस्यापि तज्ज्ञानस्यापि प्रवृत्तिजनकत्वात् प्रवृत्ति-

---

नैव विध्यादीनां वाच्यतोचितेति भावः । अत्रार्थे वाक्यपदीयानुकूल्यं दर्शयितुमाह—**उक्तं चेति** । हरिकारिकायामित्यर्थः । **प्रवर्तनारूपमिति** । प्रवर्तनाया रूपं प्रवर्तनात्वमित्यर्थः । तत्प्रवर्तनात्वं विध्यादिषु चतुर्षु अनुगतमस्तीत्यतस्तत्रैव प्रवर्तनात्ववत्येव लिङ् विधातव्यः, आकृत्यधिकरणन्यायेन धर्ममात्रे शक्तिरिति मते प्रवर्तनात्व एव लिङ् विधातव्य इति यथाश्रुतमेव साधु । **किं भेदस्येति** । तत्तद्विशेषरूपेण पार्थक्याद्भेदविवक्षया किं प्रयोजनं न किमपीत्यर्थः । प्रत्युत भेदविवक्षा गौरवग्रस्तेति भावः । नन्वेवं तर्हि सूत्रकृता चतुर्णां पृथगुपादानं किमिति कृतं तदाशयमाह—**न्यायव्युत्पादनेति** । न्यायः—विध्यादिगतप्रवृत्तिनिमित्तविशेषः, तदवगमार्थमित्यर्थः । प्रवर्तनाया भेदबोधनायेति यावत् । ननु लोकव्युत्पत्त्यैव तदवगमो भवेदित्यत आह—**प्रपञ्चार्थमिति** । लोकव्यवहारेण प्रवर्तनाभेदावगम उत्तमाधिकारिणां सुशकः, मध्यमाद्यधिकारिणां तु दुरवगम इति तेषां स्पष्टप्रतिपत्तये सूत्रे चतुर्णामुपादानमिति भावः । **प्रवर्तनात्वं चेति** । प्रोपसृष्टाद्वृतुधातोर्ण्यन्तात् ण्यासश्रन्थो युच् इति युचि निष्पन्नस्य प्रवर्तनाशब्दस्य प्रवृत्त्यनुकूलो व्यापारविशेषोऽर्थः । तस्य व्यापारविशेषस्य स्वरूपतः प्रवृत्तिजनकत्वादर्शनात्प्रवृत्तिविषयस्येष्टसाधनत्वज्ञानत्वज्ञानद्वारैव तस्य प्रवृत्तिजनकत्वं वाच्यम् । अन्यथा प्रवृत्तिविषयस्येष्टसाधनत्वाज्ञाने प्रवृत्त्यनुपपत्तिः स्यात् । अतः प्रवृत्तिजनकं यज्ज्ञानं, तादृशज्ञानीयविषयतायां यदवच्छेदकं तत्त्वमवच्छेदकत्वं-तद्रूपमेव प्रवर्तनात्वमित्यर्थः । **तच्चेति** । प्रवृत्तिजनकज्ञानीयविषयतावच्छेदकत्वं चेत्यर्थः । **तदेवेति** । इष्टसाधनत्वमेवेत्यर्थः । एवकारेण कृतिसाध्यत्वादेर्व्यावृत्तिः । विध्यर्थो ज्ञेय इति शेषः । नन्विष्टसाधनत्वज्ञानस्येव कृतिसाध्यताज्ञानस्यापि प्रवृत्तिहेतुत्वमवश्यमङ्गीकर्तव्यम् । अत एव कृत्यसाध्यमुपेक्षितमना-

( लकारविशेषार्थनिर्णयः )

यागादौ सर्वत्र तल्लोकत एवावगम्यत इत्यन्यलभ्यत्वान्न तच्छक्यम् । बलवदनिष्टाननुबन्धित्वज्ञानं च न हेतुः । द्वेषाभावेनान्यथासिद्धत्वात् । आस्तिककामुक-

---

दावप्रवृत्तिरुपपद्यत इति चेदाह—यद्यपीत्यादि । एतदिति । प्रवृत्तिजनकज्ञानाविषयतावच्छेदकत्वमित्यर्थः । कृतिसाध्यत्वस्यापीति । अस्तीति शेषः । तत्सत्त्वे हेतुमाह—तज्ज्ञानस्येति । कृतिसाध्यत्वज्ञानादपि प्रवृत्तिदर्शनादित्यर्थः । कृतिसाध्यत्वज्ञानस्य प्रवृत्तिहेतुत्वं निरस्यति—तथाऽपीति । लोकत एवेति । यागो मत्कृतिसाध्यः, मत्कृतिसाध्यत्वविरोधिधर्मानाक्रान्तत्वादित्याद्यनुमानाख्यलौकिकप्रमाणादेवेत्यर्थः । गम्यत इति । यागादौ सर्वत्र कृतिसाध्यत्वमनुमानेनावगम्यत इत्यर्थः। यागादौ स्वर्गादीष्टसाधनत्वं तु न लौकिकप्रमाणतोऽवगन्तुं शक्यं किंतु वेदेनैव तदवगन्तुं शक्यत इति तत्र शक्तिकल्पनमावश्यकमिति भावः । अन्ये तु कृतिसाध्यताज्ञानं न प्रवर्तकं, कृत्यसाध्यत्वेन निश्चिते प्रवृत्तिस्तु न, तत इष्टाभावेन वृथाश्रमजनकत्वेन द्वेषादिति वदन्ति । एवं च कृतिसाध्यत्वस्यान्यलभ्यत्वादनन्यलभ्यो हि शब्दार्थ इति न्यायान्न तल्लिङ्शक्यमिति भावः । ननु मधुविषसंपृक्तान्नभोजनादौ प्रवृत्तिवारणाय बलवदनिष्टाजनकत्वज्ञानस्यापि प्रवृत्तिहेतुत्वं कल्पनीयं, तथा च तत्रापि लिङः शक्तिरावश्यकीति चेदाह—बलवदनिष्टेत्यादि । बलवदनिष्टाजनकत्वज्ञानं चेत्यर्थः । न हेतुरिति । न प्रवृत्तिहेतुरित्यर्थः । ननु यागपाकादेरपि नान्तरीयकानिष्टदुःखजनकत्वेन कथं तत्र प्रवृत्तिः स्यादत उक्तं बलवदिति । तथा च यागपाकादौ यत्किंचिद्दुःखादिस्वल्पानिष्टजनकत्वेऽपि सुखाधिकदुःखाभावाद्बलवदनिष्टाजनकत्वेन प्रवृत्तिर्भवत्येव । बलवदनिष्टं च सुखाधिकदुःखमिति भावः । बलवदनिष्टाजनकत्वज्ञानस्य प्रवृत्तिहेतुत्वाभावे युक्तिमाह—द्वेषाभावेनान्यथासिद्धत्वादिति । अयं भावः—कार्यमात्रं प्रति प्रतिबन्धकाभावो हेतुरित्यवश्यमङ्गीकरणीयम् । अन्यथा चक्रचीवरकुलालादियावदपेक्षितकारणसामग्रीसत्त्वेऽपि यद्घटोत्पत्त्यदर्शनं तन्न संगच्छेत । प्रतिबन्धकाभावस्य हेतुत्वे तु तत्र सहसैव कुलालस्याऽऽमवातरूपरोगविशेषोद्भूतत्वाज्जडीभूतकलेवरत्वरूपप्रतिबन्धकसत्त्वेन युज्यते घटोत्पत्त्यदर्शनम् । मधुविषसंपृक्तान्नभोजने तृप्तिसुखापेक्षयाऽधिकस्य मरणरूपदुःखातिशयस्य सत्त्वात्तादृशदुःखे यो द्वेषस्तादृशद्वेषरूपप्रतिबन्धकसत्त्वेन प्रवृत्त्यभावः । यत्र तु तादृशप्रतिबन्धकस्याभाव-

कस्य नरकसाधनताज्ञानदशायामप्युत्कटेच्छया द्वेषाभावदशायां प्रवृत्तेर्व्यभिचारा-च्च । तस्मादिष्टसाधनत्वमेव प्रवर्तना ॥

उक्तं च मण्डनमिश्रैः—

स्तत्र प्रवृत्तिर्भवत्येव । यथा बह्वायासद्रव्यव्ययादिसाध्ये यागादौ बहुतरदुःखज-नकत्वेऽपि तादृशदुःखे स्वर्गसुखापेक्षयाऽऽधिक्याभावेन द्वेषाभावाद्द्वेषरूपप्रतिबन्ध-काभावात्प्रवृत्तिर्निर्बाधा । एवं च द्वेषाभावेन ( प्रतिबन्धकाभावेन ) प्रवृत्त्युपपत्तौ न बलवदनिष्टाजनकत्वज्ञानस्य प्रवृत्तिहेतुत्वं स्वीकार्यम् । प्रतिबन्धकाभावेनान्यथा-सिद्धेः—गतार्थत्वान्न पृथग्बलवदनिष्टाजनकत्वज्ञानस्य प्रवृत्तिहेतुत्वं कल्पनीयमिति भावः । किं च नियतान्वयव्यतिरेकाभ्यां कार्यकारणभावो निर्धार्यते तान्त्रिकैः । तत्रान्वयव्यभिचाराभावेऽपि व्यतिरेकव्यभिचारदर्शनेन बलवदनिष्टाजनकत्वज्ञानस्य प्रवृत्तिहेतुत्वं दुरवधारमित्याह **आस्तिककामुकेति** । बलवदनिष्टनरकयातनादिजन-कत्वज्ञानसत्त्वेऽपि आस्तिककामुकस्य रागान्धस्य परकीयसुन्दरीगमने रागोत्क-टत्वेन द्वेषाभावकल्पनया प्रवृत्तिदर्शनेन व्यभिचारात्—व्यतिरेकव्यभिचारात्कारणा-भावे कार्यसत्त्वरूपाद्बलवदनिष्टाजनकत्वज्ञानस्य न प्रवृत्तिहेतुत्वं संभवतीत्यर्थः । बलवदनिष्टाजनकत्वज्ञानसत्त्वे प्रवृत्तिसत्त्वमित्यन्वयः, बलवदनिष्टाजनकत्वज्ञाना-भावे ( बलवदनिष्टजनकत्वज्ञानसत्त्वे ) प्रवृत्त्यभाव इति व्यतिरेकः । व्यतिरेक-व्यभिचारस्तु कारणाभावे कार्यसत्त्वरूपः । परकीयसुन्दरीगमने बलवदनिष्टाजन-कत्वज्ञानरूपकारणाभावे प्रवृत्तिरूपकार्यसत्त्वाद्व्यभिचार इति बोध्यम् । अत्राऽऽ-स्तिकेत्युक्त्या परकीयसुन्दरीगमने नरकसाधनताज्ञानसत्त्वावश्यकत्वं सूचितम् । उत्कटेच्छयेत्यनेन तत्र द्वेषाभावस्य भ्रमरूपत्वं सूचितम् । एतेन यत्र बलवदनिष्ट-जनकत्वज्ञानं तत्र द्वेषध्रौव्यं, यत्र तु द्वेषाभावस्तत्र बलवदनिष्टाजनकत्वज्ञानसत्त्वा-द्युक्तैव प्रवृत्तिरिति न व्यतिरेकव्यभिचार इत्यपास्तम् । तत्र द्वेषाभावस्य भ्रमरूप-त्वादिति भावः । एवं च वस्तुतो बलवदनिष्टजनकत्वज्ञानसत्त्वेन बलवदनिष्टाज-नकत्वज्ञानरूपकारणाभावेऽपि आस्तिकस्य परकीयसुन्दरीगमने प्रवृत्तिदर्शनाद्दृढो व्यतिरेकव्यभिचार इत्याशयः । तथा च कृतिसाध्यत्वस्यानुमानेन गम्यत्वात्, बलवदनिष्टाजनकत्वस्य प्रवृत्त्यनुपयोगित्वाच्चेष्टसाधनत्वमेव लिङ्शक्यार्थ इत्याह— **तस्मादित्यादि** । **प्रवर्तनेति** । लिङाद्यर्थ इत्यर्थः । इष्टसाधनत्वमेव लिङा-दिशक्यमित्यत्र मण्डनमिश्रोक्तिं प्रमाणयति—**उक्तं चेति** । **पुंसां नेष्टेत्यादि** ।

( लकारविशेषार्थनिर्णयः )

" पुंसां नेष्टाभ्युपायत्वात्क्रियास्वन्यः प्रवर्तकः ।
प्रवृत्तिहेतुं धर्मं च प्रवदन्ति प्रवर्तनाम् " इति ॥

प्रपञ्चितं चैतद्वैयाकरणभूषणे । आदिना " हेतुहेतुमतोर्लिङ् " [ पा० सू० ३-३-१५६ ] " आशिषि लिङ्लोटौ " [ पा० सू० ३-३-१७३ ] इतिसूत्रोक्ता हेतुहेतुमद्भावादयो गृह्यन्ते । " यो ब्राह्मणायावगुरेत्तं शतेन यातयेत् " इति यथा ।

---

इष्टाभ्युपायत्वं—इष्टसाधनत्वं, तस्मादन्यः—बलवदनिष्टाजनकत्वादिः, पुंसां यागादिक्रियासु प्रवर्तको न—प्रवृत्तिजनकज्ञानविषयो न भवति, अपि तु इष्टसाधनत्वमेव प्रवृत्तिजनकज्ञानविषय इत्यर्थः । चशब्दो हेतौ । यतः । प्रवृत्तिहेतुं धर्मं—प्रवृत्तिजनकज्ञानविषयतावच्छेदकं धर्मं प्रवर्तनाशब्दार्थं वदन्तीत्यर्थः । अयं भाव.—प्रोपसर्गविशिष्टवृतुधातोर्णिजन्ताद्युचि निष्पन्नः प्रवर्तनाशब्दः प्रवृत्त्यनुकूलव्यापारमाह । तादृशव्यापारश्च यागादिगतेष्टसाधनत्वज्ञानमेव । यजेतेत्याद्युक्तेऽपि यदा ह्यसौ यागादि मदिष्टसाधनमित्येवं जानाति तदैवायं यागादौ प्रवर्तते नान्यथेति दृष्टत्वात् । तथा च यागादिकर्तरि समवेतं यज्ज्ञानं तादृशज्ञानीयविषयता यागाभिन्ने मदिष्टसाधने, तादृशविषयतावच्छेदकं च, ' संभवति लघुधर्मस्यावच्छेदकत्वे गुरुधर्मस्यावच्छेदकत्वं न कल्प्यम् ' इति न्यायेन लघुत्वादिष्टसाधनत्वमेवेति तदेव प्रवर्तनाशब्दार्थः, स एव च लिङादिशक्य इति । **प्रपञ्चितं चैतदिति** । लौकिकप्रमाणावगतत्वात्कृतिसाध्यत्वज्ञानस्य, प्रवृत्त्यनुपयोगित्वाच्च बलवदनिष्टाननुबन्धित्वज्ञानस्य प्रवृत्तिहेतुतानिराकरणेनेष्टसाधनताज्ञानस्यैव प्रवृत्तिहेतुत्वनिर्धारणं चेत्यर्थः । प्रपञ्चस्तु संक्षेपतो निरुक्तरीत्या दर्शितप्राय एवेति बोध्यम् ।

**आदिनेति** । कारिकायां प्रेरणादौ चेत्यत्रत्यादिशब्देनेत्यर्थः । **हेतुहेतुमतोरिति** । हेतुभूतक्रियावाचकात् फलभूतक्रियावाचकाच्च धातोर्लिङ् स्याद्भविष्यतीति तत्सूत्रार्थः । **हेतुहेतुमद्भावेति** । हेतुर्हेतुमानाशीश्चेत्यर्थः । तत्राऽऽशिष्युदाहरणमुक्तम् । अथ हेतुहेतुमद्भावोदाहरणं **वक्ति—यो ब्राह्मणायेत्यादि** । अवगोरणं—हननार्थं दण्डाद्युद्यमनम् । ब्राह्मणायेति क्रियया यमभिप्रैतीतिवार्तिकात्यये शेते इतिवत्संप्रदानत्वाच्चतुर्थी, तथा च यो—यत्कर्तृकः, ब्राह्मणाय—ब्राह्मणोद्देश्यकः, अवगुरेत्—दण्डाद्युद्यमनादिव्यापारः, तादृशव्यापारहेतुकाः, तं—तादृशपुरुषकर्मिकाः, शतेन यातयेत्—शतसंवत्सरपर्यन्तं यमदूतकर्तृका यातनाः, इति

( लकारविशेषार्थनिर्णयः )

लुङर्थमाह—**भूतमात्र इति** । भूतसामान्य इत्यर्थः । भूत इत्यधिकृत्य "लुङ्" [ पा० सू० ३–२–११० ] इति सूत्रात् । अत्र वर्तमानध्वंसप्रतियोगित्वं भूतत्वम् । तच्च क्रियायां निर्बाधमिति विद्यमानेऽपि घटे घटोऽभूदिति प्रयोगः । विद्यमानध्वंसप्रतियोगी घटाभिन्नाश्रयक उत्पत्त्याद्यनुकूलो व्यापार इति बोधः । अयमत्र संग्रहः—कालो द्विविधः । अद्यतनोऽनद्यतनश्च । आद्यस्त्रिविधः-भूतभविष्यद्वर्तमानभेदात् । अन्त्यो द्विविधः-भूतो भविष्यंश्च । तत्र वर्तमा-

---

शाब्दबोधः । अत्र कारकविशिष्टक्रियायाः—यत्कर्तृकब्राह्मणोद्देश्यकदण्डाद्युद्यमनक्रियायाः, यातयेदिति यातनारूपक्रियायां हेतुहेतुमद्भावसंबन्धेनान्वयः, न तु हेतुहेतुमदर्थकत्वं लिङः । हेतुहेतुमद्भूतक्रियावाचकाद्धातोर्लिङिति सूत्रार्थस्य पूर्वमुक्तत्वात् । तादृशसंबन्धेनान्वयबोधे तात्पर्यग्राहकत्वेन सूत्रस्यार्थक्ये सति पुनस्तत्र लिङः शक्तिकल्पनस्य गौरवपराहतत्वात् । लुङर्थमाह—**भूतमात्र इति** । मात्रशब्दोऽवधारणार्थक इत्याशयवानाह—**भूतसामान्य इति** । भूतत्वरूपसामान्यधर्मावच्छिन्ने, न तु विशेषधर्मावच्छिन्न इत्यर्थः । तत्र प्रमाणमाह—**भूते लुङिति सूत्रादिति** । भूतत्वरूपसामान्यधर्मावच्छिन्नं 'भूते' इति पदमाधिधिकृत्य धातोर्लुङ्विधानादित्यर्थः । तत्र भूते इति धात्वर्थक्रियायां विशेषणम् । भूतकालिकक्रियावाचकाद्धातोर्लुङिति तदर्थः । **अत्रेति** । 'भूते' इत्यधिकारसूत्र इत्यर्थः । भूतत्वमाह—**वर्तमानेति** । वर्तमाने, वर्तमानो वा ध्वंस इति द्विविधसमाससंभवेऽपि अर्थैक्यसंभवाद्वर्तमानकालिको यो ध्वंसः—अतीतक्रियाध्वंसः, तादृशध्वंसप्रतियोगिनी या अतीतक्रिया तस्यां प्रतियोगित्वसत्त्वाद्वर्तमानध्वंसप्रतियोगिक्रियाश्रयकालत्वं भूतत्वमित्यर्थः फलतीत्याशयेनाऽऽह—**तच्च क्रियायां निर्बाधमिति** । वर्तमानध्वंसप्रतियोगित्वं च क्रियायामतीतक्रियायामक्षतमित्यर्थः । तेन संप्रति घटस्य विद्यमानत्वेऽपि घटनिष्ठोत्पत्त्यनुकूलव्यापारस्य परिसमाप्तत्वादेकघटाभिन्नाश्रयको भूतकालिक उत्पत्त्यनुकूलो व्यापार इत्यर्थबोधकः, 'घटोऽभूत्' इति प्रयोग उपपद्यते । वर्तमानध्वंसप्रतियोगीत्यनेन भूतकालिकत्वं प्रदर्शितम् । **अयमत्रेति** । अयं—बुद्धिस्थत्वेन संनिहितो वक्ष्यमाणः । संग्रह इत्यस्य द्रष्टव्य इत्यनेन संबन्धः । **आद्य इति** । अद्यभवोऽद्यतन इत्यर्थः । **भेदादिति** । तथाचाऽऽद्ये पचति, पक्ष्यति, अपाक्षीदिति त्रिविधोऽपि प्रयोगो दृश्यते । **अन्त्य इति** । अद्यतनभिन्नोऽनद्यतन इत्यर्थः ।

( लकारविशेषार्थनिर्णयः )

नत्वे लट्। भूतत्वमात्रे लुङ्। भविष्यन्मात्रे लृट्। हेतुहेतुमद्भावाद्यधिकार्थविवक्षायामनयोर्लृङ्। अनद्यतने भूते तत्त्वेन विवक्षिते लङ्। तत्रैव परोक्षत्वाविवक्षायां लिट्। तादृशे भविष्यति लुट्, इति द्रष्टव्यः।

लृङर्थमाह—**सत्यामिति**। क्रियाया अतिपत्तिरनिष्पत्तिस्तस्यां गम्यमानायाम्। **भूते भाविनि** हेतुहेतुमद्भावे सति लृङित्यर्थः। "लिङ्निमित्ते लृङ् क्रियातिपत्तौ" [पा० सू० ३-३-१३९] इति सूत्रात्। लिङो निमित्तं हेतुहेतुमद्भावादि। यथा सुवृष्टिश्चेदभविष्यत्सुभिक्षमभविष्यत्। वह्निश्चेत्प्राज्वलि-

---

**भूतो भविष्यंश्चेति**। भूतत्वरूपसामान्यधर्मावच्छिन्नो भूतः, भविष्यत्त्वरूपसामान्यधर्मावच्छिन्नो भविष्यन्नित्यर्थः। **भूतत्वमात्र इति**। मात्रशब्दोऽवधारणार्थकः। भूतत्वरूपसामान्यधर्मेणैव विवक्षायां लुङ्, इत्यर्थः। अनद्यतनत्वावच्छिन्नभूतत्वरूपविशेषधर्मेण विवक्षायां तु लङ्। तत्रैव परोक्षत्वविवक्षायां लिट्। **भविष्यत्तामात्र इति**। अत्रापि मात्रशब्दोऽवधारणार्थकः। भविष्यत्त्वरूपसामान्यधर्मेणैव विवक्षायां लृट्। अनद्यतनत्वावच्छिन्नभविष्यत्त्वरूपविशेषधर्मेण विवक्षायां तु लुट्। **हेतुहेतुमद्भावादीति**। आदिशब्देन इच्छार्थेषु लिङ्लोटौ, शकि लिङ्चेत्यादिलिङ्निमित्तानां संग्रहः। **अनयोरिति**। भूतत्वभविष्यत्त्वरूपसामान्यधर्मेण विवक्षितयोर्भूतभविष्यत्कालयोरित्यर्थः। **लृङिति**। लिङ्निमित्ते, भूते च, इति सूत्राभ्यां भूते भविष्यति च सामान्यधर्मेण विवक्षिते लृङ्विधानात्। लृङर्थमाह—**सत्यामितीति**। क्रियाया अनिष्पत्तौ गम्यमानायां भूते भविष्यति च काले हेतुहेतुमद्भावादिलिङ्निमित्ते सति लृङ् भवतीत्यर्थः। अत्रार्थे प्रमाणमाह—**इति सूत्रादिति**। हेतुहेतुमद्भावादिलिङ्निमित्तत्वाक्रान्तक्रियावाचकाद्धातोर्भूतत्व—भविष्यत्त्वरूपसामान्यधर्मेण विवक्षिते भूते भविष्यति च काले लृङ् स्यादिति तत्सूत्रार्थादित्यर्थः। तत्र भविष्यत्यर्थे उदाहरणं—**सुवृष्टिश्चेदित्यादि**। अत्र सुवृष्टिभवनं सुभिक्षभवनस्य हेतुः। सुभिक्षभवनं च हेतुमत्—फलमित्यर्थः। अत्रासकृत्प्राक्सुवृष्टिभवने सति सुभिक्षभवनं दृष्ट्वा भाविनोऽपि सुवृष्टिभवनस्य सुभिक्षभवनं प्रति हेतुत्वमनुमानादवगच्छति। एवं क्रियातिपत्तिमपि प्रतिबन्धकसद्भावात्साधनवैकल्याद्वाऽवगच्छति। प्रतिबन्धकसद्भावो यथा—समीपस्थयोर्बुधशुक्रयोर्मध्ये सूर्यश्चेत्स्यात्स वृष्टिप्रतिबन्धकः। तदुक्तं—बुधशुक्रौ समीपस्थौ कुर्वतः सजलां महीम्। तयोरन्तर्गतो भानुः समुद्रमपि शोषयेत्॥

प्यदोदनमपक्ष्यदित्यादौ । अत्र वह्न्यभिन्नाश्रयकप्रज्वलनानुकूलव्यापाराभावप्रयुक्त ओदनाभिन्नाश्रयकविक्लित्त्यनुकूलव्यापाराभाव इति शाब्दबोध इतिरीत्या द्रष्टव्यम् । अयं चार्थनिर्देश उपलक्षणम् । अर्थान्तरेऽपि बहुशो विधानदर्शनात् ।

एवमादिप्रतिबन्धकम् । साधनं—सजलं प्रवेशलग्नं दशमं सजलं चन्द्रशुक्रादिशुभग्रहाणां जललग्ने पूर्णदृष्ट्यादिकं स्त्रीपुरुषयोगश्चन्द्रसूर्ययोगः, गजमहिष्यादिजलप्रियवाहनयोगश्चेत्यादि । तस्य वैकल्यमभावः । एवं प्रतिबन्धकात्साधनाभावाद्वा सुवृष्टिक्रियाया अनिष्पत्तावगतायां तदनिष्पत्त्यैव च सुभिक्षभवनक्रियाया अतिपत्तिर्गम्यते । प्रकरणात्क्रिययोरातिपत्तिरिति द्विवचनान्तस्य समासः । एवं हेतुहेतुमद्भावं क्रियातिपत्तिं च प्रमाणान्तरादवगत्य वक्ता वाक्यं प्रयुङ्क्ते—'सुवृष्टिश्चेदभविष्यत्सुभिक्षमभविष्यत्' इति । तत्र हेतुहेतुमतोः सुवृष्टिभवनसुभिक्षभवनयोर्भविष्यत्कालविषययोरतिपत्तिरितो वाक्याद्गम्यते । तथा च सुवृष्ट्यभिन्नाश्रयकभविष्यत्कालाधिकरणकातिपन्नभवनहेतुकं सुभिक्षाभिन्नाश्रयकं भविष्यत्कालिकमतिपन्नं भवनमिति बोधः । लृङ्समभिव्याहारे धातोर्लृङो वाऽभावोऽप्यर्थः, अभावे धात्वर्थव्यापारस्यान्वयः, अभावयोश्च प्रयोज्यप्रयोजकभावसंबन्धेनान्वय इत्यभिप्रायेणोदाहरणान्तरमाह—**वह्निश्चेत्प्राज्वलिष्यदित्यादि** । अत्र पक्षे शाब्दबोधं प्रकटयति—**वह्न्यभिन्नेत्यादि** । वह्न्यभिन्नाश्रयको यः प्रज्वलनानुकूलव्यापारः, तादृशव्यापाराभावप्रयोज्यः—ओदनाभिन्नाश्रयको यो विक्लित्त्यनुकूलव्यापारस्तादृशव्यापाराभाव इत्यर्थः । अत्राभावयोः प्रयोज्यप्रयोजकभावसंबन्धोत्कीर्तनमभावप्रतियोगिनोर्वह्निप्रज्वलनौदनपाकयोर्हेतुहेतुमद्भावप्रदर्शनार्थम् । यस्याभावो यदभावाधीनः स तज्जन्य इति नियमात् । यस्य—ओदनपाकस्य अभावः, यदभावाधीनः—वह्निप्रज्वलनाभावाधीनः, अतः सः—ओदनपाकः, तज्जन्यः—वह्निज्वलनजन्य इति नियमार्थः । तनश्चौदनपाकाभावस्य वह्निप्रज्वलनाभावाधीनत्वेऽवगते तत्प्रतियोगिनोर्वह्निप्रज्वलनौदनपाकयोर्हेतुहेतुमद्भावावबोधः सुगमो भवतीत्याशयः । एवं भूतेऽप्युदाहरणं—यदि चैत्रो नाभविष्यत्तदोदनपाको नाभविष्यदित्याद्यूह्यम् । कालिदासेन तु रघुवंशे बहुसमीचीनं भूतलृङुदाहरणं प्रदर्शितम् । यथा—परस्परेण स्पृहणीयशोभं न चेदिदं द्वंद्वमयोजयिष्यत् । अस्मिन्द्वये रूपविधानयत्नः पत्युः प्रजानां विफलोऽभविष्यत् । इति । **अर्थनिर्देश इति** । वर्तमाने लडित्यादिना प्रदर्शितो वर्तमानत्वाद्यर्थ इत्यर्थः ।

प्रसिद्धत्वादेष्वेवार्थेषु शक्तिरन्यत्र लक्षणेति मतान्तररीत्या वोक्तम् । एतेषां क्रमनियामकश्चानुबन्धक्रम एव । अत एव पञ्चमो लकार इत्यनेन मीमांसकैर्लेङ् व्यवह्रियत इति दिक् ॥ २ ॥ ( २३ )

इति श्रीकौण्डभट्टविरचिते वैयाकरणभूषणसारे लकारविशेषार्थनिरूपणं समाप्तम् ।

---

( अथ सुबर्थनिर्णयः ) ।

---

**उपलक्षणमिति** । लडाद्यर्थैकदेशप्रदर्शनमित्यर्थः । **अर्थान्तरेऽपीति** । लट् स्मे, स्मे लोट् , इत्यादिना भूतेऽपि प्राप्तकालेऽपि च लट्लोटादेर्दर्शनादित्यर्थः । प्रसिद्धत्वाद्वर्तमानत्वाद्यर्थे लडादेः शक्तिः, अन्यत्रार्थे तु लडादेर्लक्षणेति तु दर्शनान्तरीया रीतिः । वैयाकरणमते तु सर्वस्मिन्नुक्तेऽर्थे लडादेः शक्तिरेव, न लक्षणेति बोध्यम् । प्रसङ्गसंगत्या लडादिक्रमनियामकं ब्रवीति—**एतेषामिति** । दशलकाराणामित्यर्थः । **अनुबन्धक्रम एवेति** । अकारेकाराद्यनुबन्धक्रम एवेत्यर्थः। ङकारादीनां तु ङकारानुबन्धसहकृताकारेकाराद्यनुबन्धक्रमो नियामक इति । वर्तमाने लडित्यादिना पाणिनिनाऽऽद्यौ टित्लकाराणां निर्देशादेव मीमांसकैर्लेटः पञ्चमो लकार इति व्यवहारः कृतः संगच्छते । एवं च पाणिनिनोक्तो लकारक्रमो मीमांसकानामपि संमत इति भावः । **दिगिति** । तदर्थस्तु यत्र प्रत्ययस्य प्रकृतेर्वाऽश्रवणं तत्र श्रूयमाणस्यैवाश्रुतार्थबोधकत्वं कल्प्यम् । अत एव यः शिष्यते स लुप्यमानार्थाभिधायीति प्रवादः संगतो भवतीति भावः ॥ २३ ॥

इति वैयाकरणभूषणसारव्याख्यायां शांकर्यां लकारविशेषार्थनिरूपणम् ।

रङ्गभट्टतनूजेन शंकरेण विनिर्मिते ।
व्याख्याने भूषणे पूर्णो लकारार्थविनिर्णयः ॥ २ ॥

---

अथ सुबर्थनिर्णयः ।

---

( अथ सुबर्थनिर्णयः )

सुबर्थमाह—

**आश्रयोऽवधिरुद्देश्यः संबन्धः शक्तिरेव वा ॥**

**यथायथं विभक्त्यर्थाः सुपां कर्मेति भाष्यतः ॥१॥** (२४)

द्वितीयातृतीयासप्तमीनामाश्रयोऽर्थः । तथा हि—" कर्मणि द्वितीया " [पा० सू० २–३–२] तच्च कर्तुरीप्सिततमं [पा० सू० १–४–४९] क्रियाजन्यफलाश्रय इत्यर्थः । क्रियाजन्यफलवत्त्वेन कर्मण एव कर्तुरीप्सिततमत्वात् । " तथा युक्तं चानीप्सितम् " [पा० सू० १–४–५०] इत्यादिसंग्रहाच्च-

---

**सुबर्थ इति** । प्रातिपदिकप्रकृतिकानां स्वादीनामर्थानित्यर्थः । आह—प्रतिपादयति—**आश्रयोऽवधिरिति** । **आश्रयोऽर्थ इति** । ननु कर्मणि द्वितीया, कर्तृकरणयोस्तृतीया, इत्याद्यनुशासनदर्शनाद्द्वितीयादीनां कर्मकरणाद्यर्थकत्वं लभ्यते, नाऽऽश्रयार्थकत्वं, आश्रये द्वितीया, आश्रये तृतीया, इत्यादिविधानाभावादित्याशङ्क्याऽऽह—**तथा हीत्यादिना** । **तच्चेति** । चकारस्त्वर्थे । तत्—कर्मणि द्वितीयेत्यत्रघटककर्म त्वित्यर्थः । **कर्तुरीप्सिततममिति** । आप्नोतेः संबन्धार्थकात्सन्नन्तात्कर्मणि वर्तमानकाले मतिबुद्धीति क्तः । तद्योगाच्च कर्तुरिति 'क्तस्य च वर्तमाने' इति कर्तरि षष्ठी । तथा च कर्त्रा आप्तुं—संबन्धुमिष्यमाणं कर्मेत्यर्थः । कर्ता च स्वाभिप्रेतव्यापारानुकूलव्यापाराश्रयः । स च कर्ता केनाऽऽप्तुमिच्छतीति जिज्ञासायां उपस्थितत्वात्कर्तृपदार्थविशेषणीभूतव्यापारजन्यफलेनेत्यर्थो लभ्यते । उपस्थितं परित्यज्यानुपस्थितकल्पने प्रमाणाभावादिति भावः । तथा च ईप्सिततमं—तादृशव्यापारप्रयोज्यफलाश्रय इति पर्यवसानादाह—**क्रियाजन्यफलाश्रय इति** । ननु ईप्सितेत्यत्रत्यसना इच्छाया बोधनादीप्सिततमपदेन तादृशफलवत्त्वेनोद्देश्यत्वेन लाभात्फलाश्रयमात्रोक्तिरसंगतेत्याह—**क्रियाजन्यफलवत्त्वेनेति कर्मण एवेति** । तादृशफलाश्रयस्यैवेत्यर्थः । **ईप्सिततमत्वादिति** । अतिशयितेच्छाविषयत्वादित्यर्थः । तथा च तादृशफलवत्त्वेन उद्देश्यत्वं कर्मसंज्ञायामेवोपयोगि, न तु वाच्यकोटौ तस्यान्तर्भाव इत्याशयः । इच्छाविषयत्वांशस्य वाच्यकोटावनन्तर्भावे युक्तिमाह—**तथा युक्तं चेति** । तथा युक्तं चानीप्सितमित्यनेन द्वेष्योदासीनयोः कर्मसंज्ञा विहिता ; तथा गतिबुद्धीत्यनेनापि कर्तुर्णौ कर्मसंज्ञा, अधिशीङ्स्थेत्यनेन च आधारस्य कर्मसंज्ञा विहिता । यदि तु व्यापारजन्यफलाश्रयत्वेनेच्छाविषयत्वं कर्मत्वमित्येवमि-

( सुबर्थनिर्णय. )

वमेव युक्तम् । ईप्सितानीप्सितत्वयोः शाब्दबोधे मानाभावेन संज्ञायामेव तदुपयोगो न तु वाच्यकोटौ तत्प्रवेशः । तथा च क्रियायाः फलस्य च धातुनैव लाभादन-

---

च्छाविषयत्वमन्तर्भाव्य कर्मलक्षणे स्वीक्रियते चेत् द्वेष्यादिकर्मणि क्रियाजन्यफलाश्रयत्वसत्त्वेऽपीच्छाविषयत्वाभावेन कर्मलक्षणाप्रवृत्त्याऽव्याप्तिः स्यात् । कर्मव्यवहारस्य द्वेष्यादावपि सत्त्वेन तत्रापि कर्मलक्षणप्रवृत्तिसिद्ध्यर्थं क्रियाजन्यफलाश्रयः कर्मत्येव द्वेष्यादिसाधारणं कर्मलक्षणमुचितम् । तेन च द्वेष्यादीनामपि कर्मलक्षणे संग्रहो भवति । एवं चेच्छाविषयत्वरूपोद्देश्यत्वस्य न द्वितीयावाच्यकोटौ प्रवेशः किं तु संज्ञाप्रवृत्तावेवोपयोग इत्याह—**एवमेव युक्तमिति ।** उद्देश्यत्वाघटितमेव लक्षणं युक्तमित्यर्थः । ननु द्वितीयायाः क्रियाजन्यफलाश्रयमात्रार्थवाचकत्वे तण्डुलं पचतीत्यादावीप्सिततमत्वादिना बोधो न स्यादित्यत आह—**ईप्सितानीप्सितेत्यादि ।** ईप्सितत्वानीप्सितत्वयोरिच्छाविषयत्वानिच्छाविषयत्वयोरित्यर्थः । **मानाभावेनेति ।** इच्छाविषयत्वादिना बोधाननुभवस्य सर्वजनीनत्वादित्यर्थः । यथाऽधिशेते वैकुण्ठं हरिरित्यत्र वैकुण्ठाधारकहरिकर्तृकशयनमिति बोधाद्वैकुण्ठस्याऽऽधारत्वमात्रेण बोधः सर्वानुभवसिद्धः, नाधिशीङादिसमभिव्याहृतत्वेनेति अधिशीङादिसमभिव्याहारस्याऽऽधारस्य कर्मसंज्ञाकरण एवोपयोगो न तु वाच्यकोटौ प्रवेशस्तद्वदीप्सितत्वादेः कर्मसंज्ञाकरण एवोपयोगो नतु द्वितीयावाच्यकोटौ प्रवेशः, कस्यापि तथाऽनुभवाभावेनेप्सितत्वादिना बोधस्य सर्वैरनङ्गीकृतत्वादिति भावः । नन्वेवंरीत्या माऽस्तु इच्छाविषयत्वादेर्द्वितीयावाच्यकोटौ प्रवेशः, अस्तु च कर्मसंज्ञाप्रवृत्तौ तदुपयोगः । तथाऽपि निरुक्तसूत्रार्थानुसारात् क्रियाजन्यफलविशिष्टस्यैवाऽऽश्रयस्य द्वितीयार्थत्वं लभ्यते, न केवलाश्रयस्येत्याशङ्कयाऽऽह—**तथा चेति ।** क्रियाजन्यफलाश्रयस्य द्वितीयार्थत्वे सतीत्यर्थः । क्रिया व्यापारः, फलं विक्लित्त्यादि, आश्रयः—तण्डुलादिराधारः, इति त्रयाणामर्थानां मध्ये व्यापारः फलं चेत्येतावर्थौ धातुनैवोक्तौ, फलव्यापारयोर्धातुरित्युक्तत्वात् । तथा च तयोरर्थयोरन्यलभ्यत्वे सति पुनस्तत्र शक्तिकल्पने गौरवापत्तेर्न तौ शब्दार्थौ—शब्दशक्यौ भवितुमर्हतः । द्वितीयावाच्यौ न भवत इति यावत् । आश्रयोऽर्थस्तु न केनाप्युक्त इति स एव शब्दार्थः—शब्दशक्यः, द्वितीयावाच्य इति यावदित्यर्थः । अनन्यलभ्यो हि शब्दार्थ इति

न्यायादिति भावः। यद्यपि आश्रयोऽपि तण्डुलादिपदैर्लभ्यते तथाप्याश्रयत्वेन न लभ्यत इति स एव शक्यः। एवं च केवलाश्रय एव द्वितीयार्थः, न तु क्रियाजन्यफलविशिष्ट इति बोध्यम्। आश्रयशब्देन चाऽऽश्रयत्वशक्तिमानुच्यते। ननु यदीप्सिततत्वानीप्सिततत्वयोः शाब्दबोधे भानाभावस्तथाऽननुभवात्, तर्हि 'क्रियाजन्यफलाश्रयः कर्म' इत्येव सूत्रमस्तु, तावतैव तण्डुलं पचति, ग्रामं गच्छंस्तृणं स्पृशति, विषं भुङ्क्ते, इत्यादिसर्वलक्ष्याणां संग्रहो भवतीति कर्तुरीप्सिततमं कर्म, तथायुक्तं चानीप्सितम्, इति किमीप्सिततमानीप्सितयोः पृथग्ग्रहणेनेति चेन्न। 'क्रियाजन्यफलाश्रयः कर्म' इत्युक्तौ हि वारणार्थानामिति सूत्रमस्य (क्रियाजन्यफलाश्रयः कर्मेत्यस्य) अपवादः स्यात्। विशेषविहितत्वात्। तथा चाग्नेर्माणवकं वारयतीत्यत्र माणवकस्य कर्मसंज्ञा न स्यात्। वारणार्थानां धातूनां प्रयोगे सतीप्सितार्थस्यापादानसंज्ञा विधीयते। वारणार्थानामित्यस्य चापादानसंज्ञाविधावुपयोगः, न तु वारणार्थत्वस्य शाब्दबोधे भानम्। वारणार्थत्वेन बोधाननुभवात्। ईप्सितत्वं च प्रत्यासत्त्या वारणार्थकधातूपस्थाप्यव्यापारजन्यफलाश्रयत्वम्। तच्चाग्नौ माणवके चाक्षतम्। वारयतेश्च संयोगाद्यनुकूलव्यापाराभावानुकूलो व्यापारोऽर्थः। एवं सति अग्नेर्माणवकस्य च यत्किंचिद्धातूपस्थाप्यव्यापारजन्यफलाश्रयः कर्मसंज्ञको भवतीत्यर्थकेन 'क्रियाजन्यफलाश्रयः कर्म' इति सामान्यसूत्रेण कर्मसंज्ञा प्राप्ता, अथ च वारणार्थकधातूपस्थाप्यव्यापारजन्यफलाश्रयोऽर्थोऽपादानसंज्ञो भवतीत्यर्थकेन वारणार्थानामिति विशेषसूत्रेणापादानसंज्ञा च प्राप्ता, तयोर्मध्ये तण्डुलं पचतीत्यादौ कर्मसंज्ञायाः सावकाशत्वात् सामान्यसूत्रेण प्राप्तां कर्मसंज्ञां बाधित्वा वारणार्थानामिति विशेषविहितत्वादग्निमाणवकयोरपादानसंज्ञा स्यात्। ततश्च माणवकमिति द्वितीया न स्यात्स्याच्चाग्नाविव माणवकेऽपि पञ्चमी। तां वारयितुं 'कर्तुरीप्सिततमं कर्म' इति वक्तव्यमेव। ईप्सिततमत्वं च—प्रकृतधातूपस्थाप्यप्रधानीभूतव्यापारजन्यतद्धात्वर्थत्वफलाश्रयत्वम्। तत्र प्रकृते वारणार्थकधातूपस्थाप्यप्रधानीभूतो द्वितीयव्यापारः, तादृशव्यापारजन्यतद्धात्वर्थफलं व्यापाराभावः, तदाश्रयो माणवक इति माणवकस्य प्राप्तामपादानसंज्ञां बाधित्वा परत्वादीप्सिततमत्वेन कर्मसंज्ञा भवति। अग्नेस्तु प्रकृतधातूपस्थाप्यव्यापारजन्यफलाश्रयत्वेनेप्सितत्वेऽपि प्रधानीभूतव्यापारजन्यफलाश्रयत्वाभावेनेप्सिततमत्वाभावान्न कर्मसंज्ञा किं त्वपादानसंज्ञैव। एवं चेप्सितमात्रेऽपादा-

न्यलभ्य आश्रय एवार्थः। तत्त्वं चाखण्डशक्तिरूपमवच्छेदकम्। ओदनं पच-

नसंज्ञा, ईप्सिततमत्वे तु कर्मसंज्ञेति सिध्यति। ईप्सिततमत्वस्य कर्मसंज्ञाप्रयोजकत्वादेव चानीप्सिते कर्मसंज्ञा न प्राप्नोतीति तदर्थं 'तथायुक्तं चानीप्सितम्' इति पृथग्वक्तव्यमेवेति भावः।

नन्वाश्रयस्य शक्यत्वस्वीकारे आश्रयत्वं शक्यतावच्छेदकमभ्युपेतव्यम्, आश्रयत्वं चाऽऽधारत्वम्। तच्च फलव्यापारादिनिरूपकसंबन्धिभेदेन भिन्नत्वादनन्तं, तदानन्त्याच्च शक्त्यानन्त्यमित्याशङ्कयाऽऽह—तत्त्वं चेति। आश्रयत्वं चेत्यर्थः। अखण्डेति। शक्तिर्धर्मः, तद्रूपमित्यर्थः। स च धर्मोऽखण्डः, अखण्डत्वं च निरूपकभेदेऽपि तद्भेदप्रयुक्तभेदराहित्यम्। भेदराहित्याच्चैकः, एकत्वाच्च नित्यः। अर्थान्निरवच्छिन्नजातिविशेषरूप इति यावत्। यथा गोशब्दोपस्थितगोव्यक्तीनामानन्त्येऽपि व्यक्तिभेदप्रयुक्तभेदराहित्यात्तद्‌गता गोत्वादिजातिर्गोत्वत्वादिधर्मान्तरानिरवच्छिन्नैकैव तद्वदाश्रयत्वमपि निरूपकभेदप्रयुक्तभेदशून्यत्वादेकं सदाश्रयत्वत्वादिधर्मान्तरानिरवच्छिन्नमिति भावः। आश्रयत्वस्वादीतरधर्माघटितधर्यस्वरूपमाश्रयत्वमिति यावत्। तथा च शक्यतावच्छेदकस्याऽऽश्रयत्वस्यैकत्वात्तदनुगतीकृतेषु आश्रयेषु द्वितीयादेः शक्तिरिति न शक्त्यानन्त्यमित्याशयः। यद्याश्रयत्वमप्याश्रयत्वत्वादिधर्मान्तरावच्छिन्नं सखण्डमिति यावत्, स्याचर्ह्यनवस्थाप्रसङ्गो निरवच्छिन्न( निर्विकल्पक )ज्ञानाभावश्चाऽऽपद्येतेत्यर्थः। यथा गोत्वविशिष्टाया गोव्यक्तेर्वाच्यत्वमिति पक्षे गामानयेत्यादिवाक्ये श्रुताद्गोशब्दाद्गोत्वविशिष्टाया गोव्यक्तेरुपस्थितौ तादृशगोव्यक्तेरानयनादिक्रियास्वन्वयो भवतीति युज्यते। तथापि विशिष्टबुद्धौ विशेषणज्ञानस्य कारणत्वात्तादृशगोत्वविशिष्टगोव्यक्तेरुपस्थितेः पूर्वं विशेषणीभूतस्य गोत्वस्य ज्ञानं जातमिति वक्तव्यमेव। विशिष्टशक्तौ विशेषणशक्तेरर्थसिद्धत्वेन गोत्वेऽपि शक्तिसत्त्वात्। तत्र गोत्वविशिष्टव्यक्तौ या शक्तिः सा गोत्वावच्छिन्नैवेति निर्विवादम्। गोत्वे तु सा शक्तिः सावच्छिन्ना निरवच्छिन्ना वा ? सावच्छिन्नत्वे गोत्वत्वमवच्छेदकं वाच्यम्। शक्यतावच्छेदकस्य शक्यान्तर्गतत्वनियमाद्गोत्वत्वस्यापि सावच्छिन्नत्वेऽवच्छेदकान्तरमित्यनवस्था प्रसज्येत, तद्वारणार्थं गोत्वे शक्तिर्निरवच्छिन्नैवेत्यङ्गीकार्यम्। तथा च गोव्यक्तिज्ञानात्पूर्वं यद्गोत्वस्य ज्ञानं जायते तन्निष्प्रकारत्वान्निरवच्छिन्नं निर्विकल्पकं भवतीति निरवच्छिन्नज्ञानं संगच्छते। गोत्वस्यापि सविशेषणत्वे

तीत्यत्र विक्लित्त्याश्रयत्वात्कर्मता । घटं करोतीत्यत्रोत्पत्त्याश्रयत्वात् । उत्पत्तेर्धात्वर्थत्वात् । जानातीत्यत्राऽऽवरणभङ्गरूपज्ञाधात्वर्थफलाश्रयत्वात् । अतीतानागतादिपरोक्षस्थलेऽपि ज्ञानजन्यस्य तस्याऽऽवश्यकत्वात् । अन्यथा यथापूर्वं न

निर्विकल्पकज्ञानस्य विलय एव स्यात् । एवं च गोत्वमखण्डं नामावच्छेदकधर्मघटितं यथा, तद्वद्दाश्रयत्वमप्यखण्डं, अवच्छेदकधर्मावटितामिति भावः। जलं जलमित्यनुगतबुद्धया जलपदशक्यतावच्छेदकतया च जलत्ववदाश्रयत्वसिद्धिर्ज्ञेया । उदाहरणेषु कर्मत्वलक्षणस्य समन्वयं दर्शयति—ओदनं पचतीत्यत्रेति । विक्लित्त्याश्रयत्वादित्यनेन कर्तृनिष्ठपक्तृत्वानुपात्तव्यापारप्रयोज्यत्वे सति तादृशव्यापारव्यधिकरणतद्धात्वर्थफलाश्रयत्वं कर्मत्वमित्युक्तम् । नैयायिकैः कृञो यत्नमात्रार्थकत्वमङ्गीकृतं तदयुक्तमिति सूचयन्नाह—घटं करोतीति । उत्पत्तेर्धात्वर्थत्वादिति । किं कृत्पादनमेवात इत्यत्र यत्नार्थकत्वनिरसनपूर्वकं कृञ उत्पत्त्यर्थकत्वस्य साधितत्वादिति भावः। घटं जानातीच्छतीत्यादिसविषयार्थकधातुषु ज्ञानेच्छाद्यतिरिक्तस्य तदनुकूलव्यापारस्य सूक्ष्मदृष्ट्याऽप्यप्रतीतेर्घटादेः क्रियाजन्यफलाश्रयत्वाभावात्कर्मत्वानुपपत्तेरित्याशङ्क्य परिहर्तुमाह—जानातीत्यत्रेति । आवरणभङ्गेति । आवरणभङ्गानुकूलव्यापारो जानात्यर्थः । घटं जानातीत्यत्र क्रियाजन्यावरणभङ्गरूपफलाश्रयत्वाद्घटस्य कर्मत्वमित्यर्थः । आवरणभङ्गानुकूलव्यापारश्च घटाद्याकारा बुद्धिवृत्तिरेव । तदुक्तं—बुद्धितत्स्थचिदाभासौ द्वावेतौ व्याप्नुतो घटम् । तत्राज्ञानं धिया नश्येदाभासेन घटः स्फुरेत् ॥ इति । धीवृत्त्याऽज्ञाननाश आवरणभङ्ग इति तदर्थः । ननु विद्यमाने घटे धीवृत्तिजन्यावरणभङ्गाश्रयत्वसंभवेऽपि विनष्टेऽनुत्पन्ने वा घटे तदाश्रयत्वासंभवात्कथं तस्य कर्मत्वमत आह—अतीतानागतेति । परोक्षस्थलेऽपीति । प्रत्यक्षस्थल इव परोक्षस्थलेऽपीत्यर्थः । ज्ञानजन्यस्य—धीवृत्तिजन्यस्य, तस्य—आवरणभङ्गस्य, आवश्यकत्वात्—अवश्याङ्गीकर्तव्यत्वादित्यर्थः । परोक्षघटे तदा आवरणभङ्गाश्रयत्वाङ्गीकारे युक्तिं दर्शयति—अन्यथेति । विनष्टादिघटे आवरणभङ्गानङ्गीकारे । यथा पूर्वमिति । पूर्वं घटस्य विद्यमानत्वादिदानींतनधीवृत्तेरावरणभङ्गजनकत्वेऽपि इदानीं घटस्याविद्यमानत्वादिदानींतनधीवृत्तेरावरणभङ्गजनकत्वासंभवात् 'घटं यथापूर्वं जानामि' इति प्रयोगो न स्यादित्यर्थः । अत्र यथापूर्वमिति पदार्थानतिक्रमेऽव्ययीभावः । जानातिक्रियाविशेषणमेतत् । पूर्वं पूर्व-

( सुबर्थनिर्णयः )

जानामीत्यापत्तेः । अतीतादेराश्रयता च विषयतया ज्ञानाश्रयतायां **नैयायिकानामिव** सत्कार्यवादसिद्धान्ताद्वोपपद्यत इति ।

---

ज्ञानमनतिक्रम्येति यथापूर्वम् । पूर्वज्ञानस्यानतिक्रमो यस्मिंस्तथाभूतं ज्ञानं न स्यादित्यर्थः । अयं भावः—घटस्य विद्यमानतादशायां तात्कालिकधीवृत्त्या विद्यमानघटगतं यदावरणमाच्छादनमज्ञानरूपं तद्भङ्गस्य ( आवरणनाशस्य ) कृतत्वाद्यथा सुव्यक्तं घटज्ञानं जायते तद्वद्घटस्याविद्यमानतादशायां तात्कालिकधीवृत्त्याऽविद्यमानघटगतावरणभङ्गस्याकृतत्वादावरणस्य सत्त्वात्सुव्यक्तं घटज्ञानं न जायत इति पूर्वज्ञानस्यातिक्रमसत्त्वाद्यथापूर्वं जानामीति प्रयोगो न भवेत् । परं तु विद्यमानघटस्य यथा सुव्यक्तं ज्ञानं जायते तथाऽविद्यमानघटस्यापि सुव्यक्तं ज्ञानं जायत इत्यनुभवसिद्धम् । तादृशानुभवोपपत्तयेऽविद्यमानघटेऽपि आवरणभङ्गोऽस्तीत्यवश्यमङ्गीकार्यम् । सुव्यक्तज्ञानं प्रति आवरणभङ्गस्य कारणत्वादित्यर्थः । अन्यथा विद्यमानघट इवाविद्यमानघटे सुव्यक्तं ज्ञानं न स्यादिति भावः । ननु विनष्टे भाविनि वा घटे आवरणभङ्गाश्रयता कथं घटेत, आश्रयस्याविद्यमानत्वात्, विद्यमान एव हि सा वक्तुं युज्यत इत्यत आह—**अतीतादेराश्रयता चेति । नैयायिकानामिवेति ।** नैयायिकैर्हि अनुभवानुसारेण यथाऽतीतादिघटादेर्विषयतया ज्ञानाश्रयताऽङ्गीकृता तथाऽस्माभिरपि अतीतादिघटे विषयतयाऽऽवरणभङ्गाश्रयताऽनुभवानुरोधेन स्वीक्रियत इति भावः । नन्वतीतादिघटे विषयतासत्त्वेऽपि विषयतया ज्ञानाश्रयत्वे विप्रतिपत्तिदर्शनाद्दृष्टान्तासंगतिरत आह—**सत्कार्यवादेति** । ‘सदेव सोम्येदमग्र आसीत्’ इति श्रुतेर्घटादिकं सर्वं कार्यजातं कारणे सूक्ष्मरूपेण पूर्वमवस्थितमेव । यद्यपि घट उत्पन्नो घटो नष्ट इति व्यवहारो दृश्यते तथाऽपि उत्पन्न इत्यस्य दण्डचक्रादिव्यापारेण व्यक्तीभूत इत्यर्थः । नष्ट इत्यस्य चाव्यक्तो जात इत्यर्थः । घटस्तु व्यक्तीभावात्पूर्वं मृत्तिकायामास्त्येव तथा नाशोत्तरमपि मृत्तिकायामव्यक्तरूपेण घटोऽस्त्येव । न हि असतः सत्त्वं, सतो वा नाशः संभवति ? सिकतासु व्यापारसहस्रेणापि तैलादर्शनात् । कारणे सूक्ष्मरूपेणावस्थानमेव तत्प्रागभावः कारणे सूक्ष्मरूपेणावस्थानादेव यथा घटो जायत इत्यत्र घटस्य कारकत्वं कर्तृत्वं चोप-

उक्तं च—

" तिरोभावाभ्युपगमे भावानां सैव नास्तिता ।
लब्धक्रमे तिरोभावे नश्यतीति प्रतीयते " इति ॥

ननु चैत्रो ग्रामं गच्छतीत्यत्र ग्रामस्येव चैत्रस्यापि क्रियाजन्यग्रामसंयोगरूपफलाश्रयत्वात्कर्मतापत्तौ चैत्रश्चैत्रं गच्छतीत्यापत्तिः । प्रयागतः काशीं गच्छति चैत्रे प्रयागं गच्छतीत्यापत्तिश्च । क्रियाजन्यसंयोगस्य काश्यामिव विभागस्य प्र-

---

पद्यते तद्वदावरणभङ्गरूपफलाश्रयत्वमभ्युपपद्यत इत्यर्थः । कार्यं सदा सदैव विद्यमानमेव न तु कदाप्यविद्यमानमित्येवं यो वादः स सत्कार्यवाद इति भावः । ननु कार्यस्य सर्वदा सत्त्वे नास्ति नश्यतीति व्यवहारानुपपत्तिरत आह—**तिरोभावाभ्युपेत** तिरोभावसंपादककारणसामग्र्या तिरोभावे कृते सैव तिरोभावावस्थैव भावानां नास्तिता नष्टतेत्यर्थः । लब्धः क्रमो येन तादृशे तिरोभावे सतीत्यर्थः । तिरोभावोत्पत्तिगतवर्तमानत्वनिमित्तको नश्यतीति व्यवहार इत्यर्थः । लब्धक्रम इत्यनेन तस्य व्यापाररूपताऽऽवेदिता । प्रतीयत इत्यनेन प्रतीतिः प्रमाणत्वेनोक्ता । तिरोभावो नाम कारणे सूक्ष्मरूपेणावस्थानं, तथा च घटस्य तिरोभावेऽपि कारणे सूक्ष्मरूपेणावस्थानात्तत्राऽऽवरणभङ्गाश्रयत्वस्य नानुपपत्तिरिति भावः ।

निरुक्तकर्मत्वलक्षणस्य निष्कृष्टार्थं स्पष्टयितुमाशङ्कते—**नन्विति** । **चैत्रश्चैत्रमिति** । प्रकृतधातूपात्तव्यापारजन्यफलाश्रयः कर्म, इत्येवं कर्मलक्षणमुक्तम् । चैत्रो ग्रामं गच्छतीत्यत्र गमिधात्वर्थः—संयोगानुकूलो व्यापारः । स च पादप्रक्षेपरूपश्चैत्रे कर्तरि वर्तते । तथा च गमधातूपात्तपादप्रक्षेपरूपव्यापारजन्यं यत्फलं संयोगः, तदाश्रयत्वाद्ग्रामस्य यथा कर्मसंज्ञा भवति तद्वत्संयोगस्य द्विष्ठत्वेन तादृशसंयोगस्य चैत्रेऽपि सत्त्वाच्चैत्रस्यापि प्रकृतधातूपात्तव्यापारजन्यफलाश्रयत्वात्कर्मतापत्तौ चैत्रश्चैत्रं गच्छतीति प्रयोग आपद्यते । चैत्ररूपार्थस्य कर्तृत्वकर्मत्वोभयत्वप्रकारतावैकल्येनैव चैत्रशब्दस्य प्रथमान्तता द्वितीयान्तता च स्यादिति भावः । तथा प्रयागतो निःसृत्य काशीं गच्छति चैत्र इत्यत्र गमधातूपात्तपादप्रक्षेपरूपव्यापारजन्यफलं यथा संयोगः स च काश्यां वर्तते तथा तादृग्व्यापारजन्यत्वाद्विभागोऽपि फलमिति कृत्वा विभागरूपफलाश्रयत्वात्प्रयागस्यापि कर्मतापत्तौ प्रयागं गच्छति इति च प्रयोग आपद्यत इति भावः । एतामाशङ्कां निराक-

( सुबर्थनिर्णयः )

यागेऽपि सत्त्वादिति चेन्न । ग्रामस्येव चैत्रस्यापि फलाश्रयत्वेऽपि तदीयकर्तृसंज्ञया कर्मसंज्ञाया बाधेन चैत्रश्चैत्रमिति प्रयोगासंभवात् । द्वितीयोत्पत्तौ संज्ञाया एव। नियामकत्वात् । अन्यथा गमयति कृष्णं गोकुलमित्यत्रेव पाचयति कृष्णेनेत्यत्रापि कृष्णपदाद्द्वितीयापत्तेः । शाब्दबोधश्चैत्रश्चैत्रमित्यत्र स्यादिति चेन्न

---

रोति—नेति । तत्र प्रथमामापत्तिं निरस्यति—ग्रामस्येवेत्यादि । ग्रामो यथा गमधात्वर्थव्यापारजन्यसंयोगरूपफलाश्रयस्तथा चैत्रोऽपि कर्ता यद्यपि तादृशसंयोगरूपफलाश्रयो भवति तथाऽपि व्यापाराश्रयत्वेन तज्जन्यफलाश्रयत्वेन च चैत्रस्य कर्तृकर्मसंज्ञयोः प्राप्तौ परत्वात्कर्तृसंज्ञया कर्मसंज्ञाया बाधान्न चैत्रश्चैत्रमिति प्रयोग आपद्यत इत्यर्थः । ननु कर्मसंज्ञाया बाधेऽपि क्रियाजन्यफलाश्रयत्वरूपवास्तवं कर्मत्वमादाय द्वितीया दुर्वारेत्यत आह—द्वितीयोत्पत्ताविति । कर्मसंज्ञायां सत्यामेव द्वितीयोत्पद्यते, न केवलं फलाश्रयत्वमादायेत्यर्थः । द्वितीयोत्पत्तौ फलाश्रयत्वस्य निमित्तत्वे स्वीकृते दूषणमाह—अन्यथेति । गमयतीति । पुरोदेशसंयोगानुकूलव्यापारो गमधात्वर्थः । तदुत्तरणिचश्च तादृशव्यापारानुकूलव्यापारोऽर्थः । तत्र णिजुपात्तव्यापाराश्रयत्वेन चैत्रस्य कर्तृसंज्ञा । गमधातूपात्तव्यापारजन्यफलाश्रयत्वेन गोकुलस्य कर्मसंज्ञा । कृष्णस्य तु णिजर्थव्यापारजन्यफलाश्रयत्वेन कर्मसंज्ञा । तथा च गमयति गोकुलं कृष्णं चैत्र इति गोकुलपदादिव कृष्णपदादपि द्वितीया भवति । पाचयतीति । विक्लित्त्यनुकूलव्यापारः पचेरर्थः । तदुत्तरणिचश्च तादृशव्यापारानुकूलव्यापारोऽर्थः । तत्र णिजर्थव्यापाराश्रयत्वेन चैत्रस्य कर्तृसंज्ञा । पचिधात्वर्थव्यापारजन्यविक्लित्तिरूपफलाश्रयत्वेन तण्डुलस्य कर्मसंज्ञा । पचूधात्वर्थव्यापाराश्रयस्य कृष्णस्य तु णिजर्थव्यापारजन्यफलाश्रयत्वेन कर्मसंज्ञाप्राप्तावपि णिजर्थव्यापारजन्यफलाश्रयस्य कर्मसंज्ञा कर्तव्या चेद्भवति तर्हि गतिबुद्धीतिसूत्रोपात्तधातुप्रकृतिकणिजर्थव्यापारजन्यफलाश्रयस्यैव कर्तव्या नान्यस्येति गतिबुद्धीत्यनेन नियमात् प्रकृते णिजन्तस्य पचिप्रकृतिकत्वेन गत्याद्यर्थधातुप्रकृतिकत्वाभावान्न कृष्णस्य कर्मसंज्ञा, किंतु कर्तृसंज्ञैवेति ततस्तृतीया भवति । तथा च पाचयति तण्डुलं कृष्णेन चैत्र इति प्रयोगः संपद्यते । एवं सति कर्मसंज्ञाया अभावेऽपि वस्तुतः क्रियाजन्यफलाश्रयत्वमादाय यदि द्वितीयोत्पत्तिः स्वीक्रियेत तर्हि गमयति गोकुलं कृष्णमित्यत्र कृष्णपदादिव पाचयत्यादियोगेऽपि कृष्णपदाद्द्वितीयापत्तौ पाचयति कृष्णमित्यनिष्टं प्रसज्येतातो द्विती-

( सुबर्थनिर्णयः )

तथा व्युत्पन्नानामिष्टापत्तेः। उच्यतां वा प्रकारतासंबन्धेन धात्वर्थफलविशेष्यकबोधं प्रति धात्वर्थव्यापारानधिकरणाश्रयोपस्थितिर्हेतुरिति कार्यकारणभावान्त-

---

र्योत्पत्तौ कर्मसंज्ञैव निमित्तं, न तु वस्तुतः क्रियाजन्यफलाश्रयत्वमात्रमित्यवश्यमङ्गीकरणीयमिति भावः। ननु चैत्रश्चैत्रमित्यस्य कर्तृवाचकचैत्रादाद्क्रियाजन्यफलाश्रयत्वेन द्वितीयापत्तिः स्यादिति न ब्रवीमि, किं तु चैत्रस्य व्यापाराश्रयत्वेन व्यापारजन्यफलाश्रयत्वेन च चैत्रकर्तृकं चैत्रकर्मकं वर्तमानं गमनमित्येवं शाब्दबोध आपद्येतेत्यर्थ इति चेत्तदपि नेत्याह—तथा व्युत्पन्नानामिति। चैत्रो गच्छतीति वाक्ये चैत्रश्चैत्रमिति चैत्रकर्तृकं चैत्रकर्मकं गमनमित्याकारकशाब्दबोधजनकत्वसामर्थ्यमस्तीत्येवं शक्तिग्रहवतां निरुक्तशाब्दबोध इष्ट एव, नानिष्ट इत्यर्थः। धात्वर्थफलविशेष्यकशाब्दबोधं प्रति सामान्यत आश्रयोपस्थितेर्हेतुत्वादिति भावः। तथा च चैत्रो गच्छतीति वाक्यात्तादृशशाब्दबोधस्यानिष्टत्वापादनमसंगतमिति भावः। चैत्रो गच्छतीति वाक्याच्चैत्रकर्तृकं चैत्रकर्मकं गमनमिति बोधस्याननुभवादिष्टापत्तिरयुक्तेत्यत आह—उच्यतां वेति। अङ्गीक्रियतामित्यर्थः। प्रकारतासंबन्धेनेति। धात्वर्थफलविशेष्यकशाब्दबोधे जननीये, धात्वर्थफलनिष्ठविशेष्यतानिरूपितप्रकारतासंबन्धेन धात्वर्थव्यापारानधिकरणत्वविशिष्टाश्रयोपस्थितिः कारणमित्येवं कार्यकारणभावः स्वीकार्य इति भावः। अत्र धात्वर्थफलविशेष्यकशाब्दबोधः कार्यं, धात्वर्थव्यापारानधिकरणत्वविशिष्टाश्रयोपस्थितिः कारणमिति बोध्यम्। चैत्रो ग्रामं गच्छतीत्यत्र लक्षणसमन्वयः—पुरोदेशसंयोगानुकूलो व्यापारो गमधात्वर्थः, व्यापारश्चात्राग्रेऽग्रेपादनिक्षेपः। पुरोदेशश्च ग्रामः। वैयाकरणानां मते व्यापारमुख्यविशेष्यकः शाब्दबोध इति सिद्धान्तान्निरुक्तव्यापारः सर्वतः प्रधानं विशेष्य इत्यर्थः। लडर्थकर्तृनिष्ठत्वसंबन्धेन व्यापारेऽन्वयः। चैत्रस्याभेदेन लडर्थकर्तर्यन्वयः। ग्रामस्य निष्ठत्वसंबन्धेन गमधात्वर्थफले देशसंयोगरूपेऽन्वयः। तादृशसंयोगरूपफलस्यानुकूलत्वासंबन्धेन व्यापारेऽन्वयः। तथा च ग्रामस्य धात्वर्थफलाश्रयस्य प्रकारता, तन्निष्ठधात्वर्थफलस्य च विशेष्यतेति ज्ञेयम्। धात्वर्थफलं यः पुरोदेशसंयोगस्तद्विशेष्यको यः शाब्दबोधस्तस्मिञ्शाब्दबोधे जननीये धात्वर्थफलनिष्ठविशेष्यतानिरूपितप्रकारतासंबन्धेन धात्वर्थव्यापारानधिकरणत्वविशिष्टो य आश्रयः—फलाश्रयस्तदुपस्थितेः कारणत्वात्तादृशोपस्थितिर्ग्रामस्यैवेति कृत्वा चैत्रकर्तृकं ग्रामकर्मकं गमनमित्येव बोधो भवति,

रम्। प्रकृते चैत्रस्य व्यापारानधिकरणत्वाभावान्न दोषः। प्रयागस्य कर्मत्वं तु संभावितमपि न। समभिव्याहृतधात्वर्थफलशालित्वस्यैव क्रियाजन्येत्यनेन विवक्षणस्योक्तप्रायत्वात्। नैयायिकास्त्वाद्यदोषवारणाय परसमवेतत्वं द्वितीयदोपवा-

---

न तु चैत्रकर्मकमिति। यतश्चैत्रस्य धात्वर्थफलाश्रयत्वेऽपि धात्वर्थव्यापाराश्रयत्वेन धात्वर्थव्यापारानधिकरणत्वविशिष्टफलाश्रयत्वेनोपस्थित्यभावान्न चैत्रकर्मकं गमनमिति बोधो जायते। किं तु चैत्रकर्तृकं ग्रामकर्मकं गमनमित्येव बोधः सर्वानुभवसिद्ध इति भावः। तथा च न दोष इत्याशयेनाऽऽह—**प्रकृते चैत्रस्येत्यादि**। प्रयागात्काशीं गच्छतीत्यत्र प्रयागं गच्छतीत्यापत्तिरित्याकारिकां द्वितीयामापत्तिं निराकुर्वन्नाह—**प्रयागस्य कर्मत्वं त्वित्यादि**। **संभावितमपीति**। प्रयागे कर्मत्वस्य संभवोऽपि नेत्यर्थः। **उक्तप्रायत्वादिति**। 'क्रियाजन्यफलाश्रयत्वं कर्मत्वं' इति कर्मत्वलक्षणग्रन्थे क्रिया च धात्वर्थ एवेति धात्वर्थक्रियाजन्यफलाश्रयत्वमित्युक्तं भवति। तथा च धात्वर्थत्वस्य क्रियायां विशेषणत्वात्प्रत्यासत्तिन्यायेन फलेऽपि धात्वर्थस्य विशेषणत्वं लभ्यत इति तद्धात्वर्थक्रियाजन्यत्वे सति तद्धात्वर्थफलाश्रयत्वं कर्मत्वमित्येवं कर्मलक्षणं पर्यवसन्नम्। प्रयागात्काशीं गच्छतीत्यत्र पुरोदेशसंयोगानुकूलव्यापारो गमधात्वर्थ इत्युक्तम्। संयोगरूपफलस्य तदनुकूलव्यापारस्य चेति द्वयोर्धातुवाच्यत्वमिति यावत्-तत्र चैत्रनिष्ठपादप्रक्षेपरूपव्यापारजन्यत्वात्संयोगस्येव विभागस्यापि यद्यपि फलत्व वक्तुं शक्यं तथाऽपि संयोगो यथा गमधातुवाच्यस्तथा विभागो गमधातुवाच्यो न न भवति, किं तु नान्तरीयकतया गमने उत्पद्यते। ततश्च प्रयागस्य गमधात्वर्थव्यापारजन्यविभागरूपफलाश्रयत्वेऽपि विभागस्य गमधातुवाच्यत्वाभावेन गमधात्वर्थव्यापारजन्यगमधात्वर्थफलाश्रयत्वाभावान्न कर्मत्वशङ्काऽपीति भावः। प्रयागे कर्मत्वसंभवप्रतिषेधोक्तिर्विभागस्य गमधात्वर्थत्वं नास्तीत्यभिप्रायेणेति बोध्यम्। विधान्तरेण पूर्वोक्तस्थलद्वये दोषमुद्धरतां नैयायिकानां मतमनुवदति—**नैयायिकास्त्वित्यादि**। **आद्यदोषवारणायेति**। चैत्रो गच्छतीत्यत्र चैत्रश्चैत्रं गच्छतीत्येवं प्रयोगापत्तिरूपो यो दोषस्तद्वारणायेत्यर्थः। **परसमवेतत्वमिति**। द्वितीयाप्रकृत्यर्थापेक्षया यः परः—अन्यश्चैत्रादिः कर्ता, तस्मिन्समवायसंबन्धेन विद्यमानत्वमित्यर्थः। एतद्द्वितीयावाच्यमुपाददते—स्वीकुर्वन्तीत्यर्थः। तथा च—परस-

रणाय धात्वर्थतावच्छेदकत्वं फले विशेषणं द्वितीयावाच्यमित्युपाददते । परसमवेतत्वं धात्वर्थक्रियायामन्वेति । तथैव कार्यकारणभावान्तरकल्पनात् । परत्वं च द्वितीयया स्वप्रकृत्यर्थापेक्षया बोध्यते । तथा च चैत्रस्तण्डुलं पचतीत्यादौ तण्डुलान्यसमवेतव्यापारजन्यधात्वर्थतावच्छेदकाविक्लित्तिशालित्वात्तण्डुलानां कर्मता।

---

मवेतक्रियाजन्यफलशालि कर्मेति द्वितीयावाच्यमित्यर्थः संपन्न इति भावः । एवमपि द्वितीयदोषनिवारणं न भवतीत्याह—द्वितीयदोषेति। प्रयागात्काशीं गच्छतीत्यत्र प्रयागस्य कर्मतापत्तिरूपद्वितीयदोषेत्यर्थः । धात्वर्थतावच्छेदकत्वमिति । एतत्फले विशेषणमुपाददत इत्यर्थः । ततश्च—परसमवेतक्रियाजन्यधात्वर्थतावच्छेदकफलशालि कर्मेत्येवं लक्षणं पर्यवसन्नमिति भावः । फले धात्वर्थतावच्छेदकत्वं च—धातुवाच्यत्वे सति धातुवाच्यनिष्ठविशेष्यतानिरूपितविशेषणतापन्नत्वम् । धात्वर्थक्रियायामिति । तत्र द्वितीयावाच्यपरसमवेतत्वविशेषणस्य फलजनकसमभिव्याहृतधात्वर्थक्रियायामन्वयः । द्वितीयाप्रकृतिभूतग्रामाद्यर्थापेक्षया यः परश्चैत्रादिः, तस्मिन्समवायेन संबन्धेन विद्यमाना या धात्वर्थक्रिया—व्यापारस्तज्जन्यफलशालि कर्मेत्यर्थात् गमधात्वर्थफलरूपसंयोगस्य ग्राम—चैत्रैतदुभयनिष्ठत्वाविशेषेऽपि ग्रामसंयोगस्य द्वितीयाप्रकृत्यर्थग्रामापेक्षया परो यश्चैत्रस्तन्निष्ठव्यापारजन्यत्वेन परसमवेतक्रियाजन्यफलशालितया ग्रामस्य कर्मतया द्वितीया भवति, चैत्रसंयोगस्य चैत्रमिति द्वितीयाप्रकृत्यर्थचैत्रापेक्षया कर्तुश्चैत्रस्य परत्वाभावेन परसमवेतक्रियाजन्यफलशालित्वाभावात् ( स्वसमवेतक्रियाजन्यफलशालित्वात् ) न चैत्रस्य कर्मसंज्ञेति द्वितीयाऽप्राप्तेर्न चैत्रश्चैत्रमिति प्रयोगापत्तिरिति भावः । तथैव कार्यकारणेति । द्वितीयावाच्यपरसमवेतत्वप्रकारकशाब्दबोधे जननीये धात्वर्थक्रियायाः विशेष्यतया धातुजन्योपस्थितिः कारणमित्येवं कार्यकारणभावान्तरं स्वीक्रियते । तेन परसमवेतत्वविशेषणस्य विशेष्यतासंबन्धेन धात्वर्थक्रियायामन्वयोक्तिर्युक्तेति भावः । परत्वं चेति । द्वितीयावाच्यपरसमवेतत्वघटकपरत्वं चेत्यर्थः । प्रत्यासत्त्या द्वितीयाप्रकृत्यर्थग्रामाद्यपेक्षया परत्वं गृह्यत इत्यर्थः । ततश्च चैत्रस्तण्डुलं पचतीत्यादौ तण्डुलस्य कर्मत्वसिद्धया यादृशः शाब्दबोधो जायते तं स्पष्टयति—तण्डुलान्येति । द्वितीयाप्रकृत्यर्थतण्डुलाद्यपेक्षयाऽन्यो यश्चैत्रादिः कर्ता, तस्मिन्समवायसबंन्धेन विद्यमानो यो व्यापारस्तज्जन्यं, धातुवाच्यत्वसमानाधिकरणाविशेषणताविशिष्टं च यत्फलं विक्लित्तिरूपं तदाश्रयत्वात्तण्डुलस्य कर्मसंज्ञा

( सुबर्थनिर्णयः )

शाब्दबोधस्तु तण्डुलसमवेतधात्वर्थतावच्छेदकाविक्लित्यनुकूलतण्डुलान्यसमवेताक्रियाजनककृतिमांश्चैत्र इत्याहुः । तन्न रोचयामहे । परसमवेतत्वादेर्गौरवेणावाच्यत्वात् । अतिप्रसङ्गः = किं द्वितीयायाः, शाब्दबोधस्य वा । नाऽऽद्यस्तावत् । वाच्यकथनेऽपि तत्तादवस्थ्यात् । गमयति कृष्णं गोकुलमितिवत्पाचयति

---

भवति । चैत्रश्चैत्रमित्यत्र तु द्वितीयाप्रकृत्यर्थचैत्रनिष्ठसंयोगानुकूलव्यापारस्य चैत्रान्यनिष्ठत्वाभावान्न तादृशः प्रयोगः । तथा च—तण्डुलसमवेतेत्यादि शाब्दबोधाकारप्रदर्शनम् । तदर्थस्तु संक्षेपत एवम्—तण्डुलनिष्ठा, धातुवाच्या च या विक्लित्तिस्तादृशविक्लित्यनुकूलस्तण्डुलान्यचैत्रनिष्ठो यो व्यापारस्तादृशव्यापारानुकूला या कृतिस्तादृशकृतिमांश्चैत्र इति । अयं च शाब्दबोधो नैयायिकमतेन बोध्यः । तन्मतवर्णनस्यैवोपक्रमादिति भावः । प्रथमान्तमुख्यविशेष्यकः शाब्दबोधः, फलानुकूलो व्यापारो धात्वर्थः, लकारार्थश्च कृतिरिति हि तत्सिद्धान्तः । तदेतन्नैयायिकमतं गौरवग्रस्तत्वादयुक्तमित्याह—तन्नेति । परसमवेतत्वादेरिति । सूत्राक्षरासंस्पृष्टस्यात एव स्वकपोलकल्पितस्य परसमवेतत्वस्य द्वितीयावाच्यत्वकल्पने गौरवादेः स्पष्टत्वान्न तस्य द्वितीयावाच्यत्वकल्पनं युक्तमिति भावः । ननु परसमवेतत्वस्य गुरुभूतत्वेऽपि द्वितीयावाच्यत्वं विना दूषणनिरासासंभवात्तादृशगौरवस्यादूषकत्वादित्यत आह—अतिप्रसङ्गः किमिति । द्वितीयाया इति । चैत्रश्चैत्रमिति प्रयोगापत्तिरूपोऽतिप्रसङ्ग इत्यर्थः । नाऽऽद्य इति । परसमवेतत्वस्य द्वितीयावाच्यत्वे कल्पिते चैत्रश्चैत्रमिति प्रयोगापत्त्यसंभवेऽपि अन्यत्र द्वितीयापत्तिरूपातिप्रसङ्गस्य तदवस्थत्वादिति भावः । तमेवान्यत्रातिप्रसङ्गं प्रदर्शयति—पाचयति कृष्णमिति । कृष्णेनेत्यस्य स्थाने कृष्णमिति द्वितीयापत्तेरित्यर्थः । अत्र प्रयोज्यः कृष्णः, प्रयोजको गोपः । तथा च द्वितीयाप्रकृत्यर्थकृष्णापेक्षया परो यो गोपस्तत्समवेतव्यापारजन्यं, णिजन्तधातुवाच्यं सत् णिजर्थव्यापारविशेषणात्मकं यत्फलं विक्लित्यनुकूलव्यापाररूपं, तादृशफलशालित्वरूपकर्मत्वस्य प्रयोज्ये कृष्णे सत्त्वात्कृष्णपदाद्द्वितीयापत्तिः स्यादित्यर्थः । ततश्च द्वितीयाप्रवृत्तौ कर्मसंज्ञैव निमित्तं, न तूक्तफलशालित्वमित्यङ्गीकरणीयम् । यदि तु पाचयत्यादियोगे गतिबुद्धीतिनियमादुक्तफलशालिनः कर्मसंज्ञा न भवतीत्युच्यते तर्हि तत एव द्वितीयापत्तिवारणसंभवेऽलं परसमवेतत्वस्य द्वितीयावाच्यत्वकल्पनयेति भावः । गोकुलं कृष्णमिति दृष्टान्ते प्रयोज्यस्य कृष्णस्य प्रयोजकनिष्ठणिजर्थव्यापारजन्य-

कृष्णं गोप इत्यापत्तेः। तण्डुलं पचति चैत्र इतिवत्तण्डुलं पच्यते स्वयमेवेत्या-पत्तेश्च। विक्लित्त्यनुकूलतण्डुलान्यसमवेताग्निसंयोगरूपधात्वर्थाश्रयत्वात्। शाब्द-

---

फलशालित्वेन यथा कृष्णपदाद् द्वितीया भवति तथा पाचयत्यादियोगे कृष्ण-मिति द्वितीया स्यादित्यर्थो बोध्यः। ननु परसमवेतव्यापारजन्यधात्वर्थतावच्छे-दकफलशालित्वरूपमेव कर्मत्वं द्वितीयाप्रवृत्तौ निमित्तं, न तु कर्मसंज्ञा। पाचयति कृष्णेन गोप इत्यत्र द्वितीयाप्रकृत्यर्थकृष्णान्यगोपसमवेतव्यापारजन्यधात्वर्थताव-च्छेदकफलशालित्वरूपकर्मत्वस्य प्रयोज्ये कृष्णे सत्त्वेऽपि गतिबुद्धीति सूत्रेणैत-त्सूत्रोपात्तगतिबुद्ध्यादिधातुप्रकृतिक एव णिजन्ते परसमवेतेत्याद्युक्तकर्मत्वस्य वि-वक्षा कर्तव्या, न गत्याद्यतिरिक्तधातुप्रकृतिकणिजन्ते पाचयत्यादाविति बोधनान्न पाचयति कृष्णं गोप इति द्वितीयापत्तिः, कर्मत्वादिविवक्षाया एव विभक्त्युत्पत्तौ निमित्तत्वादत आह—तण्डुलं पच्यते स्वयमेवेति। कर्मकर्तरि द्वितीयापत्तिः स्यादित्यर्थः। तत्र दृष्टान्तं प्रदर्शयन्नाह—तण्डुलं पचतीति। द्वितीयाप्रकृ-त्यर्थतण्डुलापेक्षया परो यश्चैत्रस्तत्समवेतव्यापारजन्यधात्वर्थतावच्छेदकविक्लित्तिरू-पफलशालित्वात्तण्डुलस्य कर्मत्वात्ततो यथा द्वितीया भवति, विक्लित्त्यनुकूलव्या-पारस्य पच्धात्वर्थत्वात्, फलव्यापारेतदुभयोः पचधातुवाच्यत्वादिति यावदिति भावः। एवं तण्डुलः पच्यते स्वयमेवेत्यत्र कर्मकर्तुस्तण्डुलस्य, द्वितीयाप्रकृत्य-र्थतण्डुलापेक्षया परो योऽग्निस्तत्समवेतसंयोगरूपव्यापारजन्यधात्वर्थतावच्छेदकवि-क्लित्तिरूपफलशालित्वाद् कर्मतया ततो द्वितीयोत्पत्तौ तण्डुलं पच्यते स्वयमेवेति प्रयोगापत्तिः स्यादित्यर्थः। तथा चात्र विक्लित्त्यनुकूलाग्निसंयोगः पच्धात्वर्थो विवक्षितः। विक्लित्त्यग्निसंयोगैतदुभयोः पच्धातुवाच्यत्वं विवक्षितमिति भावः। तदाह—विक्लित्त्यनुकूलतण्डुलान्येत्यादि। धात्वर्थाश्रयत्वादिति। अग्नि-संयोगरूपधात्वर्थजन्यविक्लित्तिरूपफलाश्रयत्वादित्यर्थः। तस्माद्द्वितीयाविभक्त्यु-त्पत्तौ कर्मसंज्ञैव निमित्तं, न तु परसमवेतेत्याद्युक्तरूपं फलशालित्वमित्यङ्गीकर्त-व्यम्। विभक्त्युत्पत्तौ कर्मादिसंज्ञाया निमित्तत्वे स्वीकृते तण्डुलः पच्यते स्वय-मेवेत्यत्र कर्मकर्तुस्तण्डुलस्य कर्मसंज्ञायाः प्राप्तावपि परया कर्तृसंज्ञया तद्बाधान्न द्वितीयापत्तिः, किं तु प्रथमैवेति न कश्चिद्दोष इत्याशयः। अत्राग्निसंयोगो धा-त्वर्थत्वेन विवक्षित इत्याश्रित्यैवेदं दूषणं बोध्यम्। यदि तु कर्मकर्तरि विक्लि-त्त्यनुकूलतण्डुलमात्रनिष्ठव्यापारस्य, फलमात्रस्य वा धात्वर्थत्वमुच्यते तदा नेदं

( सुबर्थनिर्णय. )

बोधातिप्रसङ्गोऽप्युक्तरीत्यैव निरस्तः । परसमवेतत्वस्य शक्यत्वेऽपि परत्वस्य परसमवेतत्वस्य चेष्टान्वयलाभायानेकशः कार्यकारणभावाभ्युपगमे गौरवतरत्वादिति स्पष्टं भूषणे ।

एतच्च सप्तविधम्—

“ निर्वर्त्यं च विकार्यं च प्राप्यं चेति त्रिधा मतम् ।
तच्चेप्सिततमं कर्म चतुर्धाऽन्यत्तु कल्पितम् ॥
औदासीन्येन यत्प्राप्यं यच्च कर्तुरनीप्सितम् ।
संज्ञान्तरैरनाख्यातं यद्यच्चाप्यन्यपूर्वकम् ” इति वाक्यपदीयात् ॥

---

दूषणं भवतीति ज्ञेयम् । नन्वेवं चैत्रश्चैत्रमिति प्रयोगापत्तिरूपदोषासंभवेऽपि चैत्रो गच्छतीत्यत्रश्चैत्रकर्तृकं चैत्रकर्मकं गमनमिति शाब्दबोधापत्तिरिति चेदाह—**शाब्दबोधातिप्रसङ्गोपीति। उक्तरीत्यैवेति**। तथा व्युत्पन्नानां,उच्यतां वा...कार्यकारणभावान्तरम् , इत्याद्युक्तप्रकारेणैव निरस्त इत्यर्थः। किं च परसमवेतत्वस्य द्वितीयावाच्यत्वेऽङ्गीकृतेऽपि द्वितीयाप्रकृत्यर्थप्रतियोगिकमेव परत्वं, नान्यप्रतियोगिकं, परसमवेतत्वस्य धात्वर्थक्रियायामेवान्वयः, न फले, इत्येवं नियमद्वयलाभाय तादृशतादृशकार्यकारणभावान्तरकल्पने गौरवाधिक्यस्यानिवार्यत्वात्सर्वथाऽयुक्तं तार्किकमतमिति भावः ।

वाक्यपदीयोक्तं कर्मणो विभागमाह—**एतच्चेति** । धात्वर्थव्यापारजन्यफलाश्रयरूपं कर्म चेत्यर्थः । **सप्तविधमिति** । सप्तप्रकारकमित्यर्थः । तानेव सप्त प्रकारान् दर्शयति—**निर्वर्त्यं चेत्यादिना** । यत्—ईप्सिततमं कर्म, तत्—निर्वर्त्यं, विकार्यं, प्राप्यं चेति त्रिधा मतमित्यन्वयः । **अन्यात्त्विति** । ईप्सिततमभिन्नं त्वित्यर्थः । **चतुर्धेति**—चतुर्विधमित्यर्थः । चतुर्विधत्वमेव प्रदर्शयति—**औदासीन्येनेति** । ईप्सितत्वाभावे सति द्वेष्यत्वाभावे च सति यत्प्राप्यं क्रियाजन्यफलाश्रयः, तदेकमित्यर्थः । अनीप्सितं—द्वेष्यं, तद्द्वितीयम् । संज्ञान्तरैरनाख्यातम्—अपादानादिसंज्ञादिभिरविवक्षितं, अकथितं चेति सूत्रविहितं कर्म, तत्तृतीयमित्यर्थः । **अन्यपूर्वकमिति** । अन्यसंज्ञाप्राप्तौ सत्यां कर्मसंज्ञकम् । यथा क्रूरमभिक्रुध्यतीत्यत्र क्रुधद्रुहेर्ष्येति संप्रदानसंज्ञा प्राप्ता क्रुधद्रुहोरुपसृष्टयोरिति विहितकर्मसंज्ञकम् । तच्चतुर्थमित्यर्थः । अत्र चतुर्विधत्वप्रदर्शनमात्रे तात्पर्यं, न तु प्रथमद्वितीयादिक्रमवर्णने । निर्वर्त्यादिकर्मत्रयस्य लक्षणमाह—**यदसदिति** ।

( सुबर्थनिर्णयः )

" यदसज्जायते सद्वा जन्मना यत्प्रकाशते ।
तन्निर्वर्त्यं विकार्यं तु द्वेधा कर्म व्यवस्थितम् ॥
प्रकृत्युच्छेदसंभूतं किंचित्काष्ठादि भस्मवत् ।
किंचिद्गुणान्तरोत्पत्त्या सुवर्णादि विकारवत् ॥
क्रियाकृतविशेषाणां सिद्धिर्यत्र न गम्यते ।
दर्शनादनुमानाद्वा तत्प्राप्यमिति कथ्यते " ॥

इति च तत्रैवोक्तम् । घटं करोतीत्याद्यम् । काष्ठं भस्म करोतीति सुवर्णं कुण्डलं करोतीति च द्वितीयम् । घटं पश्यतीति तृतीयम् । तृणं स्पृशतीत्युदा-

---

नैयायिकमते उत्पत्तेः प्रागसत एव घटादिकार्यस्योत्पत्तिर्जायते इति तन्मतेनेदं निर्वर्त्यकर्मलक्षणम् । सांख्यमतेनाऽऽह—सद्वेति । तन्मते हि सत एव घटादिकार्यस्य जन्मना प्रकाशो जायते । प्रकृत्युच्छेदेति । द्विविधविकार्यकर्ममध्ये किंचिदेकं प्रकृतिभूतस्याऽऽत्मनः काष्ठादेरित्यर्थः, उच्छेदं—नाशं, संभूतं प्राप्तं, भूप्राप्तावित्यस्मात्कर्तरि क्तः । किंचित्तु गुणान्तरोत्पत्त्याऽऽकारान्तरोत्पत्त्या जायते, तद्द्वितीयं विकार्यं कर्मेत्यर्थः । प्राप्यकर्मणो लक्षणमाह—क्रियाकृतेति । क्रिया धात्वर्थो व्यापारः, तत्प्रयोज्यो विशेषो दर्शनादनुमानाद्वा यत्र न प्रतीयते तत्प्राप्यं कर्मेत्यन्वयः । क्रमेणोदाहरणान्याह—घटं करोतीति । आद्यं निर्वर्त्यम् । असत्कार्यवादो नैयायिकानाम् । सत्कार्यवादः सांख्यानाम् । वैयाकरणानां तु सांख्यसंमतसत्कार्यवाद एवाभिमेतः । काष्ठं भस्मेति, सुवर्णं कुण्डलमिति च । अत्र कृधातोर्विकारानुकूलव्यापारपूर्वकोत्पत्त्यनुकूलो व्यापारोऽर्थः । अत एव काष्ठभस्मयोः, सुवर्णकुण्डलयोश्चेत्येवं प्रत्येकमुभयोः कर्मत्वनिर्वाहो भवति । काष्ठं विकुर्वन् भस्मोत्पादयतीति प्रतीतेः । आद्ये काष्ठं भस्मेत्यत्र प्रकृतेः काष्ठस्योच्छेदरूपो विकारः, अन्त्ये सुवर्णं कुण्डलमित्यत्राऽऽकारविशेषात्मको विकार इत्युभयत्र विकार्यकर्मता । तृतीयं—प्राप्यमित्यर्थः । अत्र घटे प्रत्यक्षादनुमानाद्वा न कश्चित्क्रियाकृतो विशेषः प्रतीयते । निर्वर्त्ये स्वरूपलाभात्मको विशेषः, विकार्येऽपि क्वचित्स्वरूपलाभः, क्वचिद्गुणान्तरोत्पत्त्यात्मकः । अनुमानाद्यथा—पुत्रः सुखमनुभवति । अत्र हि मुखप्रसादेन सुखानुमानं भवति । तृणं स्पृशतीति । अस्य ग्रामं गच्छन्नित्यादिः । एतदुदासीनम् । द्वेष्यं तु विषं भुङ्क्ते इति । उभयत्रापि ' तथा युक्तं च ' इति कर्मसंज्ञा । गां गोग्धीति । गोनिष्ठापादान-

( सुबर्थनिर्णयः )

सीनम् । विषं भुङ्क्ष्व इति द्वेष्यम् । गां दोग्धीति संज्ञान्तरैरनाख्यातम् । क्रूरमभिक्रुध्यतीत्यन्यपूर्वकम् । कर्तृतृतीयाया आश्रयोऽर्थः । तथा हि—“ स्वतन्त्रः कर्ता ” [ पा० सू० १-४-५४ ] । स्वातन्त्र्यं च धात्वर्थव्यापाराश्रयत्वं

---

त्वाविवक्षया अकथितं चेति विहितकर्मसंज्ञकमित्यर्थः । क्रूरमभिक्रुध्यतीति । अत्र क्रुधद्रुहेर्ष्येति संप्रदानसंज्ञायां प्राप्तायां तां बाधित्वा क्रुधद्रुहोरिति कर्मसंज्ञाया विहितत्वादन्यपूर्वकं कर्मेत्यर्थः । एवं वैकुण्ठमध्यास्त इत्यादौ वैकुण्ठस्यान्यपूर्वककर्मत्वं बोध्यम् ।

क्रमप्राप्तं तृतीयार्थं प्रतिपादयति—तृतीयाया इति । कर्तृतृतीयाया इत्यर्थः । आश्रय इति । आश्रयमात्रमित्यर्थः । करणतृतीयायास्त्वाश्रयव्यापारौ वाच्याविति वक्ष्यते । कर्तृतृतीयाया आश्रयार्थकत्वे प्रमाणमाह—तथा हीत्यादि ‘ नागृहीतविशेषणा बुद्धिर्विशेष्य उपजायते ’ इति न्यायेन स्वतन्त्रपदार्थगतस्वातन्त्र्यस्य पुरःस्फूर्तिकत्वेन बुद्धिस्थत्वादाह—स्वातन्त्र्यं चेति । स्वातन्त्र्यस्येतरानधीनत्वरूपस्याऽऽश्रयणे चैत्रेण पाचयति मैत्र इत्यादौ प्रयोजकाधीनतया चैत्रस्य कर्तृत्वानापत्तिरित्याशङ्क्य विवक्षितार्थमाह—धात्वर्थेति । धातूपात्तेत्यर्थः। धात्वर्थाश्रयत्वमित्येवोच्यमाने धात्वर्थफलाश्रयत्वेन कर्मण्यतिव्याप्तिरतो व्यापारपदोपादानम् । व्यापाराश्रयत्वमित्येवोच्यमाने कर्तृनिष्ठव्यापारप्रयोज्यव्यापाराश्रयत्वेन करणेऽतिव्याप्तिरतो धात्वर्थेति । यत्किंचिद्धातूपात्तव्यापाराश्रयस्य कर्तृत्वे काष्ठैः स्थाल्यां पचतीत्यत्र पचधातुसमभिव्याहारेऽपि काष्ठादीनामपि कर्तृत्वं स्यात् । काष्ठानि ज्वलन्ति, स्थाली प्रकाशते इत्यादौ काष्ठादीनां यत्किंचिद्धातूपात्तव्यापाराश्रयत्वात् । तथा च यत्किंचिद्धातूपात्तस्याव्यावर्तकत्वात्प्रकृतधातूपात्त एव व्यापारो ग्राह्यः । तेन प्रकृतपचधातूपात्तफूत्कारादिव्यापाराश्रयत्वाभावान्न काष्ठादीनां पचधातुसमभिव्याहारे कर्तृत्वापत्तिः । प्रकृतधातूपात्तव्यापारोऽपि प्रधानीभूत एव ग्राह्यः । तेन नयतेः संयोगानुकूलव्यापारानुकूलव्यापारवाचित्वे चैत्रो ग्राममजां नयतीत्यत्राजाया न कर्तृत्वम् । अत्र द्वितीयो व्यापारो विशेष्यभूतः, स च चैत्रनिष्ठः । प्रथमस्तु व्यापारो द्वितीयव्यापारस्य विशेषणभूतः, स एव चाजानिष्ठ इति नाजायाः कर्तृत्वमिति बोध्यम् । न च कर्मसंज्ञया बाधान्नाजायाः कर्तृतापत्तिरिति वाच्यम् । कर्तुरीप्सिततममिति कर्मसंज्ञायाश्चैत्रस्तण्डुलं पचतीत्यादौ सावकाशतयाऽपवादत्वाभावात्परत्वाभावाच्च, प्रत्युत परत्वात्कर्तृसंज्ञैव

" धातुनोक्तक्रिये नित्यं कारके कर्तृतेष्यते " इति वाक्यपदीयात् । अत एव यदा यदीयो व्यापारो धातुनाऽभिधीयते तदा स कर्तेति स्थाली पचति, अग्निः पचति, एधांसि पचन्ति, तण्डुलः पच्यते स्वयमेवेत्यादि संगच्छते । नन्वेवं " क-

---

बाधिका स्यात् । स्वतन्त्रपदस्य निरुक्तार्थकत्वे किं प्रमाणमत आह—धातुनोक्तेति । धातुनोक्तक्रिये कारके कर्तृता नित्यमिष्यत इत्यन्वयः । यन्निष्ठा व्यापारात्मिका क्रिया धातुनोक्ता तत्कारकं कर्तेति वाक्यपदीयाद्धात्वर्थव्यापाराश्रयत्वं कर्तृत्वमित्येव फलतीति भावः । नन्वेतादृशस्वातन्त्र्याश्रयणे स्थाल्यां पचतीत्यादावपि स्थाल्यादेः कर्तृत्वापत्तिः, पचधातूपात्तधारणाद्यात्मकव्यापाराश्रयत्वाद् , विक्लित्त्यनुकूलतण्डुलधारणाद्यात्मकव्यापारस्य पच्धात्वर्थत्वेन विवक्षितत्वादत आह—अत एव यदेति । अत एव—निरुक्तोदाहरणे स्थाल्यादावतिव्याप्तेरेव । न च निरवकाशाभिरधिकरणादिसंज्ञाभिः कर्तृसंज्ञाया बाध इति वाच्यम् । कर्तृसंज्ञाविषयेऽप्यधिकरणसंज्ञा प्राप्ता, तस्या अपि निरवकाशतया पर्यायतापत्तिः स्यादित्याशयात् । यो यदा धातूपात्तव्यापाराश्रयः स तदा कर्तेति स्वीकारादेवाग्निः पचतीत्यादि संगच्छते इत्याह—स्थाली पचतीत्यादि संगच्छत इत्यन्तम् । ननु यदा यन्निष्ठो व्यापारो धातुनाऽभिधीयते तदा स कर्तेति स्वीकारे, विवक्षयैकस्यापि कर्तृत्वकर्मत्वयोः संबन्धस्य संभवात् 'कर्तृकर्मव्यपदेशाच्च' (ब्र.सू.१।२।४) इत्यधिकरणे भगवता व्यासेनैकस्य कर्तृत्वकर्मत्वोभयसंबन्धो विरुद्धत्वादयुक्त इत्युक्तं तद्विरुध्येतेत्याशङ्कते—नन्वेवमित्यादिना । अयं भावः—स क्रतुं कुर्वीतेत्यनेनोपासनं विधाय तादृशोपासनविधिविषयतया ' मनोमयः प्राणशरीरः ' इत्युक्तम् । तत्र मनःप्राणादिसंबन्धस्य जीवात्मन्याञ्जस्येन संभवादिहोपास्यत्वेन मनोमयादिशब्दवाच्यो जीवो निर्दिष्ट इत्याशङ्क्य, यदि मनोमयादिशब्दप्रतिपाद्यस्य जीवत्वं स्यात्तदा वाक्यशेषे—' एतमितः प्रेत्याभिसंभवितास्मि ' इत्यत्र मनोमयादिशब्दप्रतिपाद्यस्य जीवस्यैकस्य प्राप्तिकर्मत्वेन प्राप्तिकर्तृत्वेन च कृतः कर्तृकर्मोभयव्यपदेशो विरुद्धः, इतः—अस्माच्छरीरात्, प्रेत्य—निःसृत्य, एतच्छरीरं परित्यज्येत्यर्थः, एतं—मनोमयादिशब्दप्रतिपाद्यं प्रकृतं जीवात्मानं, अभिसंभवितास्मि-प्राप्तास्मि, इति तदर्थादिति । अत्र एतमित्यनेन प्रकृतमनोमयो जीवात्मा प्राप्तिकर्मत्वेन निर्दिष्टः, अभिसंभवितास्मि—प्राप्तास्मीति लुट्तमेन पुरुषेण उपासकः शारीरः

( सुबर्थनिर्णयः )

मैकर्तृव्यपदेशाच्च ” [ ब्र० सू० १–२–४ ] इति सूत्रे मनोमयः प्राणशरीर इतिवाक्यस्थमनोमयस्य जीवत्वे वाक्यशेषे तस्य “ एतमितः प्रेत्याभिसंभविताऽस्मि ” इति प्राप्तिकर्मत्वकर्तृत्वव्यपदेशो विरुद्ध इति भगवता व्यासेन निर्णीतं कथं संगच्छताम्। उच्यते—जीवस्यैव ज्ञेयत्वे प्राप्तिकर्मत्वमपि वाच्यम्। कर्तृत्वं च तस्याऽऽख्यातेनोक्तम् । न चैकस्यैकदा संज्ञाद्वयं युक्तम्। कर्तृसंज्ञया कर्मसंज्ञाया बाधात्। तथा चैतमिति द्वितीया न स्यात्। कर्मकर्तृतायां च यगाद्याप-

---

प्राप्तिकर्तृत्वेन व्यपदिष्टः। समुपसृष्टाद्राधृ वीयाद्भू प्राप्तावित्यात्मनेपदिनो व्यत्ययेन लुटः स्थाने परस्मैपदम्। अथ वा णिच्संनियोगेनैवाऽऽत्मनेपदमित्येकीयपक्षे णिजभावे व्यत्ययन्तरेवोत्सर्गत एव परस्मैपदमिति ज्ञेयम्। अत्र शांकरभाष्यम्—‘ न च सत्यां गतावेकस्य कर्तृकर्मव्यपदेशो युक्तः ’ इति। अत्र सत्यां गतावित्युक्त्या आत्मानमात्मना हन्तीत्यादिवदौपाधिकभेदकल्पनाऽगतिकगतिरूपा न युक्तेति सूचितम् तत्र कालभेदेनैकस्य संज्ञाद्वयसंभवेऽपि, न युगपदेकस्य संज्ञाद्वयं युक्तम्। प्रकृतश्रुतौ तु युगपदेव संज्ञाद्वयकार्योपलम्भो विरुद्ध इत्याशयेन समाधत्ते—उच्यत इति। **एवमिति**। एकस्य कर्तृत्वकर्मत्वोभयाङ्गीकारे, इत्यर्थः। **मनोमयस्येति**। मनोमयशब्दबोध्यस्येत्यर्थः। **जीवत्व इति**। ब्रह्मभिन्नत्वे, इत्यर्थः। **वाक्यशेष इति**। एतमितः प्रेत्येत्यादिवाक्यशेष इत्यर्थः। **तस्येति**। मनोमयशब्दबोध्यजीवात्मन इत्यर्थः। इति मूलस्थशब्दार्थविवरणं द्रष्टव्यम्। समाधानप्रकारमाह—**जीवस्यैवेति**। मनोमयः प्राणशरीरः, इत्यादिना जीवस्यैवोपास्यत्वेन बोधने सति प्राप्तिकर्मत्वमपि तस्यैव वाच्यम्। एतमित्येतच्छब्दस्य पूर्वप्रक्रान्तार्थपरामर्शित्वात्। **तस्येति**। जीवात्मन इत्यर्थः। अभिसंभवितास्मि, इति—क्रियापदघटकाख्यातेन तिङा कर्तृत्वमुक्तम्। लः कर्मणि च भावे चेत्यनेन लुटः कर्तरि विधानादित्यर्थः। तत्रैकस्य युगपत्कर्तृकर्मसंज्ञाद्वयं न युज्यते—न संभवति। आकडारीयतया परया कर्तृसंज्ञया कर्मसंज्ञाया बाधात्। तथा च एतमिति द्वितीया न प्राप्नुयात्। अथ अभिसंभवितास्मीति न शुद्धे कर्तरि लुट्, अपि तु कर्मकर्तरीति यद्युच्येत—एतमिति पूर्ववाक्ये कर्मतया निर्दिष्टस्य कर्तृत्वं यथा तण्डुलं पचतीति वाक्ये कर्मसंज्ञकस्य तण्डुलस्य तण्डुलः पच्यते स्वयमेवेति वाक्ये कर्तृत्वमिति न युगपत्संज्ञाद्वयमित्युच्यते चेत्तन्नेत्याह—

त्तिरिति शब्दविरोधद्वारा भवति स भेदहेतुः। एवं च व्यापारांशस्य धातुलभ्यत्वादाश्रयमात्रं तृतीयार्थः। कारकचक्रप्रयोक्तृत्वं कृत्याश्रयत्वं वा दण्डः करोतीत्यत्राव्याप्तम्। अयं च त्रिविधः। शुद्धः प्रयोजको हेतुः कर्मकर्ता च। मया

---

यगाद्यापत्तिरिति। ननु लुटः कर्मकर्तृत्वेऽपि तासः सार्वधातुकत्वाभावान्न यगापत्तिरत आह—यगादीति। आदिपदाच्चिण्वद्भावात्मनेपदादेर्ग्रहणम्। तथा च चिण्वद्भावाद्वृद्धिरात्मनेपदं चाऽऽपद्येतेति भावः। शब्दविरोधद्वारेति। एकस्य युगपत्संज्ञाद्वयकार्यासंभवात्मकविरोधद्वारेत्यर्थः। सः युगपदेकस्य संज्ञाद्वयासंभवरूपो विरोध इत्यर्थः। भेदहेतुरिति। उपास्योपासकयोः परमात्मजीवात्मनोर्भेदहेतुर्भवतीत्यर्थः। तथा च मनोमयादिशब्देन परमात्मैव निर्दिष्टः, न जीवात्मेति सिध्यतीति न पूर्वोक्तभगवद्भाष्यनिर्णयविरोध इत्याशयः।

नन्वेवं कर्तृतृतीयाया अपि करणतृतीयावद्व्यापारविशिष्टाश्रयवाचकत्वं प्राप्नोति, नाऽऽश्रयमात्रवाचकत्वमित्यत आह—एवं चेति। धातूपात्तव्यापाराश्रयत्वस्य कर्तृत्वे चेत्यर्थः। व्यापारांशस्येति। कर्तृत्वलक्षणघटकस्य व्यापारांशस्येत्यर्थः। धातुलभ्यत्वादिति। धातुना प्रतिपाद्यमानत्वादित्यर्थः। आश्रयमात्रमिति। अनन्यलभ्यस्यैव शब्दार्थत्वादिति न्यायादिति भावः। मात्रपदेन व्यापारव्यवच्छेदः। मीमांसकोक्तं कर्तृत्वं दूषयितुमनुवदति—कारकचक्रप्रयोक्तृत्वमिति। प्रकृतधातूपात्तक्रियान्वययोग्यकारकसमुदायप्रवर्तकत्वमित्यर्थः। उक्तापेक्षयाऽपि लाघवानुरोधेन नैयायिकसंमतं कर्तृत्वमनुवदति—कृत्याश्रयत्वं वेति। प्रकृतधात्वर्थव्यापारानुकूलकृत्याश्रयत्वं कर्तृत्वमित्यर्थः। आश्रयत्वं च समवायसंबन्धेन ग्राह्यम्। तेन पाकानुकूलकृतेः कालिकसंबन्धेनाऽऽश्रयत्वस्य घटे सत्त्वेऽपि न घटः पचति, घटेन पच्यत इत्यादेरापत्तिः। तदेतद्द्विविधमपि कर्तृत्वमव्याप्तिदोषग्रस्तमित्याह—अव्याप्तमिति। दण्डः करोति, स्थाली पचतीत्यादौ दण्डादेरचेतनत्वेन कारकचक्रप्रयोक्तृत्वाभावात्कृत्याश्रयत्वाभावाच्च कर्तृत्वं न स्यादिति भावः। कर्तुर्विभागमाह—अयं चेति। तृतीयार्थत्वेनोक्तः कर्तेत्यर्थः। विभागश्च कर्तृत्वव्याप्यधर्मपुरस्कारेण कथनम्। त्रिविधत्वं प्रदर्शयति—शुद्ध इत्यादिना। हेतुकर्तृ—कर्मकर्तृभ्यां भिन्नः कर्ता शुद्ध इत्यर्थः। णिजर्थव्यापाराश्रयः कर्ता प्रयोजककर्तेत्यर्थः। कर्मकर्ता तु णिच्प्रकृतिभूतधातूपात्तव्यापाराश्रयत्वे सति णिजर्थव्यापारजन्यफलाश्रयः, प्रयोज्यकर्तेति भावः। यो लण्य-

( सुबर्थनिर्णयः )

हरिः सेव्यते । कार्यते हरिणा । गमयति कृष्णं गोकुलम् । मद्भिन्नाश्रयको हरिकर्मकसेवनानुकूलो व्यापारः । हर्यभिन्नाश्रयक उत्पादनानुकूलो व्यापारः । गोकुलकर्मकगमनानुकूलकृष्णाश्रयकव्यापारानुकूलो व्यापार इति शाब्दबोधः । करणतृतीयायास्त्वाश्रयव्यापारौ वाच्यौ । तथा हि—“ साधकतमं करणम् ” [ पा० सू० १–४–४२ ] । तमबर्थः प्रकर्षः । स चाव्यवधानेन फलजनक-

न्तावस्थायां कर्तृसंज्ञः सण्ण्यन्तावस्थायां कर्मसंज्ञको भवति स कर्मकर्तेति यावत् । न तु फलाश्रयमात्रवृत्तिव्यापाराश्रयत्वरूपकर्मकर्तृत्वमिह विवक्षितमित्याशयः । शुद्धादीनां कर्तृणां क्रमेणोदाहरणान्याह—मया हरिः०, कार्यते०, गमयति कृष्णं० इति । उदाहरणक्रमेणैव तच्छाब्दबोधान् प्रदर्शयति—**मद्भिन्नाश्रयक...... व्यापारः, हर्यभिन्नाश्रयक......व्यापारः, गोकुलकर्मकगमना...... व्यापारः,** इत्येवं क्रमेण तेषां शाब्दबोधा ज्ञेयाः । प्रथमोदाहरणे मयेति प्रयोजकत्वकर्मत्वव्यधिकरणव्यापारवत्त्वाच्छुद्धः कर्ता । द्वितीयोदाहरणे करोतेर्णिजन्तात्कर्मणि लट्, यक् । अत्र हरिः प्रयोजककर्ता । तृतीयोदाहरणे कृष्णस्याणौ कर्तुर्ण्यन्ते गतिबुद्धीतिसूत्रेण कर्मसंज्ञाविधानात्कृष्णः कर्मकर्ता । तथा च कर्म चासौ कर्ता चेति कर्मधारयः, कर्मसंज्ञया कर्तृसंज्ञाया बाधात्तदभावेऽपि प्रकृतधातूपात्तव्यापाराश्रयत्वरूपवास्तवकर्तृत्वसत्त्वान्न काचित्क्षतिः । **सेवनानुकूल** इति । सेवा—पादसंवाहनादिकं, प्रीतिर्वा । नवीनमते तु—मदभिन्नाश्रयकव्यापारजन्या हरिकर्मिका सेवेत्यादिः शाब्दबोधो ज्ञेयः । तैर्हि कर्मप्रत्ययसमभिव्याहारे फलमुख्यविशेष्यकशाब्दबोधाङ्गीकारात् । एवं कार्यते हरिणेत्यत्रापि हर्यभिन्नाश्रयकव्यापारजन्योत्पादनेति बोधोऽवसेयः ।

करणतृतीयाया व्यापारविशिष्टाश्रयो वाच्य इत्याह—**करणतृतीयायास्त्विति** । नन्वाश्रयव्यापारयोः करणतृतीयावाच्यत्वे न मानं, साधकतमस्यैव करणसंज्ञाविधानादत आह—**तथा हीति** । साधकतमं हि करणं, तत्र तमबर्थः प्रकर्षः । स चाव्यवधानेन फलजनको यो व्यापारस्तद्वत्ता । तादृशप्रकर्षश्च कारकान्तरापेक्षो ग्राह्यः, न तु करणान्तरापेक्षः । कारकसामान्यवाचिनः साधकशब्दाद्विहितेन तमप्प्रत्ययेन कारकावधिकप्रकर्षस्यैव बोधनात् । करणान्तरापेक्षप्रकर्षस्य करणान्तरेऽभावाच्च । तेन, रथेन दीपिकया पथा व्रजतीति प्रयोगस्य नानुपपत्तिः । नह्यत्र रथापेक्षया दीपिकायां दीपिकापेक्षया वा रथे कियानपि

व्यापारवत्ता । तादृशव्यापारवत्कारणं च करणम् ।

उक्तं च वाक्यपदीये—

" क्रियायाः परिनिष्पत्तिर्यव्द्यापारादनन्तरम् ।
विवक्ष्यते यदा यत्र करणं तत्तदा स्मृतम् ॥
वस्तुतस्तदानिर्देश्यं न हि वस्तु व्यवस्थितम् ।
स्थाल्या पच्यत इत्येषा विवक्षा दृश्यते यतः " इति ॥

विवक्ष्यत इत्यनेन सकृदनेकेषां तदभावाद्द्वितीयासप्तम्यादेरवकाशं सूचयति । न चैवं " कर्ता शास्त्रार्थवत्त्वात् " [ ब्र० सू० २—३—३३ ] इत्युत्तरमीमां-

---

प्रकर्षः प्रतीयते ? । **तादृशव्यापारेति** । फलनिष्पत्त्यव्यवहितपूर्ववर्ती यो व्यापारस्तद्विशिष्टं यत्कारणं तदेव करणमिति भावः । तथा च व्यापाराश्रययोः करणतृतीयाशक्यत्वे साधकतममिति सूत्रमेव प्रमाणमित्याशयः । एवं च ' आश्रयोऽवधिरुद्देश्यः ' इति मूले आश्रयपदं व्यापारस्याप्युपलक्षणमिति ज्ञेयम् । अत्रार्थे वाक्यपदीयसंमतिमाह—**उक्तं चेति** । **क्रियाया इति** । अत्र क्रियापदं फलपरम् । फलस्य धात्वर्थफलस्य साध्यतया प्रतीयमानत्वात्क्रियात्वेन व्यवहारः कर्मवत्कर्मणेति सूत्रे स्पष्टः । विवक्ष्यत इत्यस्य प्रयोजनं प्रतिपादयति—**वस्तुत इति** । तत्—करणत्वं, वस्तुतः—वस्तुविशेषानिष्ठत्वेनानिर्देश्यं—निर्देष्टुमशक्यम् । तत्र हेतुमाह—**न हीति** । हि—यस्माद्धेतोस्तत्करणत्वं, वस्तुव्यवस्थितं- वस्तुविशेषमात्रनिष्ठं न भवतीत्यर्थः । वस्तुविशेषमात्रनिष्ठत्वाभावे कारणमाह—**स्थाल्येति** । अधिकरणत्वानिश्चयविषयीभूताऽपि स्थाली विवक्षया करणत्वं भजतीत्यर्थः । एवमुक्तरीत्या सर्वेषां करणत्वसंभवेऽपि न युगपत्सर्वेषां करणत्वविवक्षेति न सर्वत्र तृतीयापत्तिः । युगपत्सर्वेषां करणत्वविवक्षणाभावादेव द्वितीयासप्तम्यादेरवकाशः संभवतीत्याह—**तदभावादिति** । करणत्वविवक्षाभावादित्यर्थः । सकृत् युगपदित्यर्थः । तण्डुलस्थाल्यादीनां युगपदनेकेषां करणत्वविवक्षाया अभावात्तण्डुलं स्थाल्यां पचतीत्यत्र तण्डुलादौ द्वितीयादयो भवन्ति इति भावः । ननु विवक्षया सर्वेषां करणत्वाङ्गीकारे कर्ता शास्त्रार्थवत्त्वादित्यधिकरणविरोध इत्याह—**न चैवमिति** । जीवः कर्ता, उत बुद्धिः, इत्याशङ्क्य जीव एव कर्ता न तु बुद्धेः कर्तृत्वमिति कर्ता शास्त्रार्थवत्त्वात् ( ब्र. सू. २ । ३ । ३३ ) इत्यनेनोक्तम् । तद्दृढीकरणार्थमेव ' शक्तिविपर्ययात् ( ब्र. सू. २ । ३ । ३८ ) इत्य-

( सुबर्थनिर्णयः )

साधिकरणे " शक्तिविपर्ययात् " [ ब्र० सू० २-३-३८ ] इति सूत्रेणान्तःकरणस्य कर्तृत्वे करणशक्तिविपर्ययापत्तिरुक्ता न युज्येतेति वाच्यम् । " तदेतेषां प्राणानां विज्ञानेन = विज्ञानमादाय " इति श्रुत्यन्तरे करणतया क्लृप्तस्य कर्तृतां प्रकल्प्य शक्तिविपर्ययापत्तिर्निष्प्रमाणा कल्प्येतेत्यभिप्रायात् । वस्तुतस्त्वन्वाचयमात्रमेतदिति " यथा च तक्षोभयथा " [ ब्र० सू० २-३-४० ] इत्यधिकरणे भाष्य एव स्पष्टमित्यादि प्रपञ्चितं भूषणे । सप्तम्या अप्याश्रयोऽर्थः।

---

परो हेतुरुक्तः । तदर्थस्तु यदि विज्ञानशब्दवाच्या बुद्धिरेव कर्त्री स्यात्तर्हि ' तदेषां प्राणानां विज्ञानेन ' इति श्रुतौ तृतीयाविभक्त्या यद्विज्ञानपदवाच्यबुद्धेः करणत्वं निर्दिष्टं तस्य विपर्ययः स्यात् । अर्थाद्बुद्धेः करणशक्तिर्नश्येत् । कर्तृशक्तिश्चाऽऽपद्येतेत्यर्थः । तथा चाहं गच्छाम्यहं पिबामीत्यादौ सर्वत्राहंकारपूर्विकाया एव प्रवृत्तेर्दर्शनात्कर्तृत्वशक्तियुक्ताया बुद्धेरेवाहंप्रत्ययविषयत्वमङ्गीकर्तव्यं भवतीति बुद्धेः कर्त्र्याः करणमन्यत्किंचित्कल्प्यं स्यादिति जीव एव कर्ता, न तु बुद्धिरिति शक्तिविपर्ययापत्त्या साधितं तन्न संगच्छेत । विवक्षया शक्तिविपर्ययस्य शास्त्रसिद्धत्वेनाविरोधाद्दोषापादकत्वाभावात् । तथा च न सर्वेषां वैवक्षिकं करणत्वं युक्तमाश्रयितुमिति चेन्न—तदेषामिति । प्राणानां—इन्द्रियाणां, विज्ञानं—ग्रहणशक्तिं, विज्ञानेन—मनोजन्यबुद्धिवृत्त्या, आदाय—गृहीत्वा, स्वापे जीवो हृदयं गच्छतीति श्रुतौ विज्ञानशब्दवाच्यान्तःकरणे क्लृप्तस्य करणत्वस्य हानिः, अक्लृप्तकर्तृशक्तिश्चाऽऽपद्येतेति क्लृप्तहानिरक्लृप्ताभ्यागमप्रसङ्ग इति तत्तात्पर्यात् । न तु सर्वेषां वैवक्षिकं करणत्वं नेत्यर्थकम् । एकत्र श्रुतौ करणत्वेन क्लृप्तस्याप्यन्यत्र श्रुतौ कर्तृत्वेन विवक्षायां न किंचिदपि बाधकं, युगपत्कर्तृत्वकरणत्वविवक्षाया एव विरुद्धत्वादित्याशयादिति भावः । अत एवाऽऽह—**वस्तुतस्त्विति** । **अन्वाचयमात्रमिति** । **एतदिति** । शक्तिविपर्ययापत्तिरूपं दूषणमन्वाचयमात्रमानुषङ्गिकमात्रं, न तु मुख्यमित्यर्थः । बुद्धेः कर्तृत्वनिराकरणस्यैव मुख्यत्वादिति भावः । एतदेव स्पष्टयति—**यथा च तक्षेति** । **भाष्य एवेति** । पूर्वोक्तैः शास्त्रार्थवत्त्वादिभिर्हेतुभिः साधितं यज्जीवस्य कर्तृत्वं तत्किं स्वाभाविकमुतौपाधिकमिति संदिह्य कर्तृत्वस्य स्वाभाविकत्वे मुक्तिर्न स्यात् । कर्तृत्वस्य दुःखस्वरूपत्वात् , कर्तृत्वस्वभावत्वे हि अग्नेरिवौष्ण्यादात्मनः कर्तृत्वाद्वियोगासंभवात् । कर्तृत्वस्य दुःखरूपत्वे दृष्टान्तः—यथा तक्षा, वास्यादिकरणहस्तो दुःखी

" सप्तम्यधिकरणे च " [ पा० सू० २-३-३६ ] इत्यधिकरणे सप्तमी। तच्च " आधारोऽधिकरणम् " [ पा० सू० १-४-४५ ] इति सूत्रादाधारः। तत्त्वं चाऽऽश्रयत्वम्। तत्राऽऽश्रयांशः शक्यः। तत्त्वमवच्छेदकम्। न चाऽऽश्रयत्वमात्रेण कर्तृकर्मकरणानामाधारसंज्ञा स्यात्। स्यादेव यदि ताभिरस्या न बाधः

---

भवति तद्रहितस्तु सुखी संपद्यते, तद्वदात्माऽपि बुद्ध्यादिसाधनापेक्षः कर्ता सन्दुःखी भवति, तदनपेक्षस्तु अकर्ता सन्सुखी भवतीत्येवं दृष्टान्तप्रदर्शनेनाऽऽत्मनः कर्तृत्वमुपाधिनिमित्तमिति स्पष्टमेव। एवं च शक्तिविपर्ययस्य बुद्धिकर्तृत्वनिराकरण एव तात्पर्यं, न तु बुद्धेः करणत्वपरित्याग इति शक्तिविपर्ययस्याऽऽनुषङ्गिकत्वं स्पष्टमेवेति भावः।

सप्तम्या अर्थमाह—सप्तम्या अपीति। नन्वधिकरणे सप्तमी विहिता, तत्कथं तस्या आश्रयोऽर्थ इत्यत आह—तच्चेति। अधिकरणसंज्ञं चेत्यर्थः। ननु तावताऽपि आधारोऽधिकरणमिति सूत्रादाधारस्य सप्तम्यर्थत्वं लभ्यते नाऽऽश्रयस्येत्यत आह—तत्त्वं चेति। आधारत्वं चेत्यर्थः। आश्रयत्वमिति। आधारत्वस्याऽऽश्रयत्वादतिरिक्तत्वे प्रमाणाभावादित्यर्थः। तथा च नाममात्रे भेदो, न वस्तुनीति भावः। ननु कर्तृकर्मद्वारा तन्निष्ठक्रियाश्रयस्य सप्तम्यर्थत्वं सूत्रार्थाल्लभ्यते, न केवलाश्रयस्येत्यत आह—तत्राऽऽश्रयांश इति। क्रियातदाश्रययोर्मध्ये क्रियाया धातुनैव लाभादनन्यलभ्यः केवल आश्रयांश एव सप्तम्या शक्योऽर्थ इत्यर्थः। तत्त्वमिति। आश्रयत्वं शक्यतावच्छेदकमित्यर्थः। तच्चाखण्डशक्तिरूपमिति प्रागुक्तमेव। नन्वाधारोऽधिकरणमिति सूत्रेणाऽऽश्रयत्वमात्रपुरस्कारेण विहिताऽधिकरणसंज्ञा कर्मकर्तृकरणानां स्यादित्याशङ्क्य—न चेत्यादि। कर्मकर्त्रीति। कर्मणः—फलाश्रयस्य, कर्तुः फलानुकूलव्यापाराश्रयस्य, करणस्य—फलरूपक्रियानिष्पत्त्यव्यवहितपूर्ववर्तिव्यापाराश्रयस्येत्यर्थः। आधारसंज्ञेति। आधारस्य विहिता संज्ञाऽधिकरणसंज्ञेत्यर्थः। आधारसंज्ञाया अविधानाद्यथाश्रुतेऽसंगत्यापत्तेरित्यर्थः। न चाऽऽधारसंज्ञैवाधिकरणस्य विधीयते सूत्रेणेति वाच्यम्। आधारस्य प्राङ्निर्दिष्टत्वेनोद्देश्यत्वात्पश्चान्निर्दिष्टस्यैव संज्ञात्वादाधारस्यैवाधिकरणसंज्ञा विधित्सिता, न वैपरीत्येन। स्पष्टं चेदं वृद्धिसंज्ञासूत्रे भाष्य इति भावः। समाधत्ते—स्यादेवेत्यादिना। अयं भावः—यद्यपि फलाद्याश्रयाणामधिकरणसंज्ञा प्राप्नोति तथाऽपि कर्मादिसंज्ञाभिरधिकरण-

( सुबर्थनिर्णयः )

स्यात् । "कारके" [ पा० सू० १-४-२३ ] इत्यधिकृत्य विहितसप्तम्याः क्रियाश्रय इत्येव यद्यपि तात्पर्यं तथाऽप्यत्र कर्तृकर्मद्वारा तदाश्रयत्वमस्त्येव स्थाल्यादेर्भूतलकटादेश्चेति स्थाल्यां पचति भूतले वसति कटे शेत इत्याद्युपपद्यते । उक्तं च वाक्यपदीये—

"कर्तृकर्मव्यवहितामसाक्षाद्धारयत्क्रियाम् ।

---

संज्ञा बाध्यते । यदि च सर्वत्रैवाऽऽधारस्याधिकरणसंज्ञा भवेत्तर्हि कर्मादिसंज्ञा निरवकाशाः स्युरिति आकडारीयत्वान्निरवकाशाभिः कर्मादिसंज्ञाभिरधिकरणसंज्ञाया बाधितत्वान्न सा भवतीत्यर्थः । ननु यदि कर्मादिसंज्ञाभिरधिकरणसंज्ञा बाध्यते तर्हि अधिकरणसंज्ञायाः कोऽवकाशः ? न च परम्परया यः क्रियाश्रयः सोऽधिकरणसंज्ञाया अवकाश इति वाच्यम् । साक्षात्क्रियाश्रये संभवति परम्परया क्रियाश्रयग्रहणस्यान्याय्यत्वादित्यत आह—'**कारके इत्यधिकृत्ये**'त्यादि । **विहितसप्तम्या इति** । कारकाधिकारीयं यदधिकरणसंज्ञकं तत्र विहितसप्तम्या इत्यर्थः । **क्रियाश्रय इत्यवेति** । साक्षात्क्रियाश्रय इत्येवेत्यर्थः । एवकारेण चैत्राद्याश्रयकटादेर्व्यावृत्तिः । तथा च तादृशस्य कर्तुः कर्मण एव वाऽधिकरणसंज्ञा स्यान्न तु चैत्राद्याश्रयकटादेरिति भावः । साक्षात्क्रियाश्रयस्य कर्तृकर्मसंज्ञाविधानात्परिशेषन्यायेन साक्षात्क्रियाश्रयद्वारा क्रियाश्रयस्य ग्रहणमित्याशयेनोत्तरमाह- **तथाऽप्यत्रेति** । **कर्तृकर्मद्वारेति** । एतादृशार्थः सूत्रसामर्थ्यादेव लभ्यते । तथा हि—आधारोऽधिकरणमित्यत्र कारके, इत्यधिकृतं प्रथमान्ततया विपरिणम्यते । तच्चाऽऽधारस्य विशेषणम् । आधारः कारकमधिकरणसंज्ञमिति लभ्यते । कारकं च क्रियाजनकं, करोति क्रियां जनयतीति कारकमिति व्युत्पत्तेः । एवं च कस्याऽऽधार इत्याकाङ्क्षायामुपस्थितत्वात्क्रियाया इति लभ्यते । क्रिया च धात्वर्थव्यापारफलात्मिका, तत्र साक्षात्क्रियाधारयोः पराभ्यां कर्तृकर्मसंज्ञाभ्यामाक्रान्तत्वादिदं सूत्रमनवकाशं सत् कर्तृकर्मद्वारा धात्वर्थक्रियाश्रयस्याधिकरणसंज्ञाविधायकमित्यर्थात् । **तदाश्रयत्वमिति** । कर्तृकर्मगतव्यापारफलात्मकक्रियाश्रयत्वमित्यर्थः । **अस्त्येवेति** । परम्परया क्रियाश्रयत्वमस्त्येवेति स्थाल्यां पचति, कटे शेते, इत्यादयोऽधिकरणसप्तम्यन्ताः प्रयोगा उपपद्यन्त इति बोध्यम् । उक्तसूत्रार्थे हरिसंमतिं दर्शयति—**उक्तं चेति** । **कर्तृकर्मव्यवहितामिति** । लोके द्रव्यगुणक्रियाविषयमधिकरणम् । अत्र शास्त्रे

( सुबर्थनिर्णयः )

उपकुर्वात्क्रियासिद्धौ शास्त्रेऽधिकरणं स्मृतम् " ( इति ) ॥

एतच्च त्रिविधम् । औपश्लेषिकं वैषयिकमभिव्यापकं च । कटे शेते गुरौ

---

कारकाधिकारात्क्रियाविषयमेव तत् । साक्षाद्धात्वर्थव्यापारफलात्मकक्रियाश्रययोः कर्तृकर्मणोस्ते संज्ञे बाधिके, अतस्तद्व्यवहितामित्युक्तम् । यद्यपि कालः साक्षात्क्रियाधारस्तथाऽपि कारकाधिकारे तरतमयोगो नास्तीति तमब्ग्रहणेन साधितम् । तथा हि—कारकं साधकमित्यनर्थान्तरम् । समानार्थकमिति यावत् । तथा च कारक इत्यधिकारादेव सिद्धे पुनः साधकग्रहणं क्रियमाणं साधकतममित्यर्थकं विज्ञायेतेति व्यर्थेन तमब्ग्रहणेन, कारकाधिकारे शब्दसामर्थ्यगम्यः प्रकर्षो नाऽऽश्रीयत इति ज्ञाप्यते । तेन गङ्गायां घोषः, कूपे गर्गकुलमित्यादौ गङ्गादेरधिकरणसंज्ञा सिध्यति । अन्यथा, आधारोऽधिकरणमित्यत्राधिकरणमित्यन्वर्थमहासंज्ञाबलादेवाऽऽधारलाभे सिद्धे पुनस्तद्ग्रहणसामर्थ्यात्सर्वावयवव्याप्त्या य आधारः सोऽधिकरणसंज्ञः स्यात् । तथा च तिलेषु तैलं, दधनि सर्पिरित्यादौ तिलादेरेवाधिकरणसंज्ञा स्यात् । न गङ्गादेरिति । एवं च प्रकृते परम्परया क्रियाधारस्यापि ग्रहणं सिध्यति । व्यवहितामित्युक्तेऽप्यसाक्षादित्युक्तिर्लोकानुसारेणान्वयोऽपि परम्परयैवेति सूचनाय । उपकुर्वत्क्रियासिद्धाविति । कटे आस्ते, स्थाल्यां पचतीत्याद्यावर्धृते कर्तृकर्मणी न क्रियां संपादयत इत्याधिकरणं क्रियाधारः उपकुर्वत्तस्थां क्रियामुपकरोतीत्यर्थ इति हेलाराजः । स्वनिष्ठधारणादिक्रियया प्रधानक्रियां निर्वर्तयतीति यावत् । यद्यपि तण्डुलं पचतीत्यादौ धात्वर्थफलरूपकर्मद्वारा क्रियाश्रयत्वं तण्डुलादेरस्ति तथाऽपि व्यापारजन्यफलाश्रयत्वसत्त्वेन परया कर्मसंज्ञया बाधान्न दोष इति बोध्यम् । परे त्वधिकरणकारकस्य कर्त्रादावेवान्वयः । कटे शेते इत्यादौ कटाधिकरणकचैत्रकर्तृकशयनमित्यादिरीत्या बोधात् । तद्द्वारकमेवास्य क्रियान्वयित्वम् । कारकाणां भावनान्वयव्युत्पत्तिरपि एतच्छास्त्रबलादीदृशपरम्परयाऽन्वयविषयाऽपि । अत एवाक्षशौण्ड इत्यादौ समासः । अत एव भाष्ये तत्रासामर्थ्यशङ्का न कृता । एवं चान्तर्भूतक्रियाद्वारा सामर्थ्यमिति कैयटादयश्चिन्त्या एव । अक्षशौण्डः, अक्षप्रवीण इत्यादौ दध्योदनादाविव क्रियान्तर्भावेण बोधस्याननुभवात् । अक्षविषयकप्रावीण्यवानित्येव बोधानुभवादिति प्राहुः ।

निरुक्तमधिकरणं त्रिविधमित्याह—एतच्चेति । त्रिविधमिति । त्रिप्रकार-

( सुबर्थनिर्णयः )

वसति मोक्ष इच्छाऽस्ति तिलेषु तैलमिति । एतच्च " संहितायाम् " [ पा० सू० ६-१-७२ ] इति सूत्रे भाष्ये स्पष्टम् ।

अवधिः पञ्चम्यर्थः । " अपादाने पञ्चमी " [ पा० सू० २-३-२८ ]। तच्च " ध्रुवमपायेऽपादानम् " [ पा० सू० १-४-२४ ] इति सूत्रादपायो

---

कमित्यर्थः । सामान्यस्य भेदको विशेषः प्रकारः । तदेव विशदयति—**औपश्लेषिकामित्यादिना** । उपश्लेषः संयोगादिसंबन्धस्तत्कृतमधिकरणमौपश्लेषिकमित्यर्थः । विषयतासंबन्धकृतं वैषयिकम् । सकलावयवव्याप्तिकृतमभिव्यापकमित्यर्थः । क्रमेणोदाहरणान्याह—**कटे शेते,** इति । देवदत्त इति शेषः । अत्र साक्षाद्देवदत्तात्मककर्तृगतां शयनक्रियां प्रति कटस्य संयोगसंबन्धं पुरस्कृत्य देवदत्तद्वारा तदाधारत्वादधिकरणत्वम् । इदं कर्तृद्वारकौपश्लेषिकाधिकरणस्योदाहरणम् । परम्परया कटाभिन्नाश्रयकः शयनानुकूलो व्यापार इति बोधः । एवं गुरौ वसतीत्यपि कर्तृद्वारकमौपश्लेषिकाधिकरणम् । उप—समीपे श्लेषः संबन्धस्तत्कृतमौपश्लेषिकमिति व्युत्पत्तेः । परम्परया गुर्वभिन्नाश्रयको वासानुकूलो व्यापार इति बोधः । कर्मद्वारकौपश्लेषिकाधिकरणोदाहरणं स्थाल्यां पचतीत्यादि बोध्यम् । अत्र साक्षात्तण्डुलात्मककर्मगतां पाकक्रियां प्रति स्थाल्याः संयोगसंबन्धं पुरस्कृत्य तण्डुलद्वारा आधारत्वादधिकरणत्वम् । परम्परया स्थाल्यभिन्नाश्रयिका या विक्लित्तिस्तदनुकूलो व्यापार इत्येवं बोध ऊह्यः । वैषयिकाधिकरणमुदाहरति—**मोक्ष इच्छाऽस्तीति** । औपश्लेषिकाभिव्यापकाभिन्नमधिकरणं वैषयिकम् । अत्र साक्षात्कर्तृभूतेच्छागतां सत्ताक्रियां प्रति मोक्षस्य विषयतासंबन्धपुरस्कारेण इच्छाधारत्वादधिकरणत्वम् । परम्परया मोक्षाभिन्नविषयकः सत्तानुकूलो व्यापारः । मोक्षविषयकेच्छानिष्ठसत्तेति वा बोधः । अभिव्यापकमधिकरणमुदाहरति—**तिलेषु तैलमिति** । अत्र साक्षात्तैलरूपकर्तृगतां सत्ताक्रियां प्रति कृत्स्नव्याप्तिं पुरस्कृत्य तैलद्वारा सत्ताधारत्वात्तिलानामधिकरणत्वम् । परम्परया तिलाभिन्नाश्रयकस्तैलनिष्ठसत्तानुकूलो व्यापार इति बोधः ।

पञ्चम्यर्थमाह—**अवधिरिति** । अवधेः पञ्चम्यर्थत्वे मानमाह—**अपादाने पञ्चमीति** । ननु सूत्रेणापादानस्य पञ्चम्यर्थत्वलाभेऽपि अवधेः कथं पञ्चम्यर्थत्वलाभोऽत आह—**तच्चेति** । तच्च—अपादानं चेत्यर्थः । अपायो विभागज-

विश्लेषस्तज्जनकाक्रिया तत्रावधिभूतमपादानमित्यर्थकाद्वधिभूतमिति भावः ।

उक्तं च वाक्यपदीये—

" अपाये यदुदासीनं चलं वा यदि वाऽचलम् ।
ध्रुवमेवातदावेशात्तदपादानमुच्यते ॥
पततो ध्रुव एवाश्वो यस्मादश्वात्पतत्यसौ ।
तस्याप्यश्वस्य पतने कुडयादि ध्रुवमुच्यते ॥
उभावप्यध्रुवौ मेषौ यद्यप्युभयकर्मके ।
विभागे प्रविभक्ते तु क्रिये तत्र व्यवस्थिते ॥
मेषान्तरक्रियापेक्षमवधित्वं पृथक्पृथक् ।
मेषयोः स्वक्रियापेक्षं कर्तृत्वं च पृथक्पृथक् " इति ॥

अस्यार्थः—अपाये विश्लेषहेतुक्रियायाम् । उदासीनमनाश्रयः । अत-

---

नको व्यापारस्तस्मिन्सति प्रत्यासत्त्या तादृशव्यापारजन्यविभागाश्रययोर्मध्ये यद्ध्रुवं स्थिरमवधिभूतं तदपादानं, द्वयोः संयुक्तयोरन्यतरस्य चलनाद्विभागो जायते, तत्र तादृशचलनानाश्रयभूतं, अर्थाद्विभागजनकव्यापारानाश्रयभूतं यत्तत्स्थिरं तच्चेहावधित्वेन विवक्षितमिति अवधिभूतमपादानसंज्ञकं भवतीति सूत्रार्थाद्ध्रुवमपाये, इत्यनेनावधेरपादानसंज्ञाविधानादवधेः पञ्चम्यर्थत्वमिति भावः। उक्तेऽर्थे हरिसंमतिं प्रदर्शयति- **उक्तं चेति । अपाये यदुदासीनमित्यादिना पृथक्पृथगित्यन्तेन** । अस्य हरिग्रन्थस्यार्थमाह—**अपाय इति** । अपायो विश्लेषः, विभाग इति यावत् । अत्रापायपदमपायजनकक्रियापरं लक्षणयेत्याशयेनाऽऽह—**विश्लेषहेतुक्रियायामिति** । उदासीनमित्यनेन ध्रुवपदार्थ उक्तः। औदासीन्यं क्रियानाश्रयत्वमित्याह—**अनाश्रय इति** । प्रत्यासत्त्या प्रकृतधातूपात्तविश्लेषहेतुक्रियानाश्रय इत्यर्थः। तच्चोदासीनं चलं वाऽचलं वा कथमप्यस्तु-तद्ध्रुवमेवोच्यते । ननु निरुक्तमुदासीनं यद्यचलं तदा ध्रुवमुच्यतां, परंतु यदि चलं तदा कथं ध्रुवमुच्यत इत्याशङ्क्याऽऽह—**अतदावेशादिति** । विश्लेषहेतुक्रियानाविष्टत्वादित्यर्थः। तथा च लोके स्पन्दादियत्किंचित्क्रियारहितं स्थिरं वस्तु ध्रुवमित्युच्यते । अत्र शास्त्रे तु विश्लेषहेतुमात्राक्रियारहितं ध्रुवमुच्यत इति भावः। विश्लेषस्य द्विष्ठत्वेन विश्लेषाश्रययोर्द्वयोर्मध्ये यद्विश्लेषजनकक्रियानाश्रयस्तदपादानमित्युक्ते तादृशक्रियानाश्रयस्य संज्ञिनोऽर्थाद्विश्लेषाश्रयत्वं लभ्यत

( सुबर्थनिर्णयः )

द्वावेशात्तत्क्रियानाश्रयत्वात् । एवं च विश्लेषहेतुक्रियानाश्रयत्वे सति विश्लेषाश्र-

---

इत्याशयेनाऽऽह—एवं चेति । अपाये ध्रुवमित्यनेन विश्लेषजनकक्रियाशून्यत्वविवक्षणे चेत्यर्थः । विश्लेषेत्यादि सत्यन्तं विशेषणं यदि नोच्येत तर्हि प्रयागात्काशीं गच्छति चैत्र इत्यत्र गन्तरि चैत्रेऽपादानसंज्ञाया अतिव्याप्तिः स्यात् । गच्छतेर्विश्लेषजनकक्रियावाचित्वेन विश्लेषस्य च द्विष्ठत्वेन प्रयाग इव चैत्रेऽपि सत्त्वाविशेषात् । तथा च कर्तृसंज्ञां बाधित्वाऽपादानसंज्ञैव स्यात् । कर्तृसंज्ञायास्तु तण्डुलं पचति चैत्र इत्यादाववकाश इति भावः । सत्यन्तविशेषणोक्तौ तु चैत्रस्य विश्लेषाश्रयत्वेऽपि विश्लेषजनकक्रियाश्रयत्वेन नोक्तातिव्याप्तिरिति भावः । अथ यदि विश्लेषाश्रयत्वमिति विशेष्यं नोच्येत तर्हि पूर्वोक्त एव प्रयोगे काश्यां कर्मण्यतिव्याप्तिः स्यात् । प्रयागस्येव काश्या अपि विश्लेषजनकक्रियानाश्रयत्वात् । विशेष्योक्तौ तु प्रयागस्येव काश्या विश्लेषाश्रयत्वाभावान्नातिव्याप्तिः । तथा च कर्तरि कर्मणि चेत्युभयत्रातिव्याप्तिवारणाय विशेषणविशेष्योभयमुपात्तम् । अत्रेदं बोध्यम्—गच्छति, याति, इयर्ति, अतति, इत्यादौ तत्तद्धातोर्विभागजनकक्रियावाचित्वेऽपि विभागस्य तत्तद्धातुवाच्यत्वाभावः । अत एव तादृशविभागस्य धातुवाच्यव्यापारजन्यत्वेऽपि फलत्वाभावः । फलत्वस्य तद्धातुवाच्यव्यापारजन्यत्वे सति तद्धातुजन्योपस्थितिविषयत्वात् । यत्र च विभागस्य धातुवाच्यत्वाभावस्तादृशविभागाश्रयस्यापादानत्वम् । यथा वृक्षात्पर्णं पततीत्यादौ पतधात्वर्थो विभागजनकः संयोगानुकूलव्यापारः । तत्र संयोगस्य धातुवाच्यत्वेऽपि विभागस्य तदवाच्यत्वेन तादृशविभागाश्रयस्य वृक्षस्यापादानत्वम् । यत्र च विभागस्य धातुवाच्यत्वं तत्र विभागस्य फलत्वात्तादृशविभागाश्रयस्यापादानसंज्ञां बाधित्वा परत्वात्कर्मसंज्ञैव भवति, नापादानसंज्ञा । यथा वृक्षं त्यजति खग इत्यत्र विभागानुकूलो व्यापारस्त्यजधात्वर्थः । अत्र विभागस्य धातुवाच्यत्वेन फलत्वात्तादृशविभागाश्रयस्य वृक्षस्य कर्मसंज्ञैव भवति, नापादानसंज्ञा, विभागस्य धातुवाच्यत्वादिति । नवीनमते पूर्वोक्तधातुष्वपि विभागस्यापि धातुवाच्यत्वम् । अत एव अवधित्वं च 'प्रकृतधातूपात्तविभागजनकव्यापारानाश्रयत्वे सति प्रकृतधात्वर्थविभागाश्रयत्वं, इति वदन्ति । तत्र ग्रामादायाति, ग्रामाद्विभजते, इत्यादौ विभागसमानाधिकरणव्यापारार्थकधातुयोगे विभागस्य फलत्वेऽपि तादृशविभागाश्रयस्यापादानत्वम् । वृक्षं त्यजतीत्यादौ विभागव्यधिकरणव्यापारार्थकधा-

यत्वं फलितम् । वृक्षात्पर्णं पततीत्यत्र पर्णस्य तद्वारणाय सत्यन्तम् । धावतोऽश्वात्पततीत्यत्राश्वस्य क्रियाश्रयत्वाद्विश्लेषहेत्विति । कुड्यात्पततोऽश्वात्पततीत्यत्राश्वस्य विश्लेषजनकक्रियाश्रयत्वेऽपि तन्न विरुद्धमित्याह—यस्मादश्वादिति ।

---

तुयोगे विभागाश्रयस्य कर्मत्वमिति व्यवस्था । एवं च प्रयागात्काशीं गच्छतीत्यादौ विभागस्य धात्वर्थत्वेऽपि व्यापारसमानाधिकरणविभागस्य प्रतीत्या तादृशविभागाश्रयस्य प्रयागस्य न कर्मत्वम् । व्यापारव्यधिकरणविभागाश्रयस्यैव कर्मत्वादिति बोध्यम् । अपादानत्वलक्षणघटकसत्यन्तविशेषणस्य व्यावर्त्यमाह—वृक्षात्पर्णं पततीति । अत्र विभागजन्यसंयोगानुकूलव्यापारः पतधात्वर्थः । अत्र पर्णवृत्तिर्यः संयोगानुकूलव्यापारः स वृक्षपर्णयोर्विभागजनकः, विभागश्च संयोगवद्द्विष्ठत्वेन वृक्षपर्णोभयनिष्ठः । एवं स्थिते यदि विश्लेषाश्रयत्वमपादानत्वमित्येवोच्येत तदा वृक्षस्येव पर्णस्यापि विश्लेषाश्रयत्वादपादानसंज्ञा प्रसज्येत, तद्वारणाय सत्यन्तं विशेषणमुक्तम् । ततश्च पर्णस्य विश्लेषाश्रयत्वेऽपि विश्लेषजनकव्यापाराश्रयत्वेनापादानसंज्ञाया व्यावृत्तिः सिध्यति । ननु विश्लेषाश्रयत्वे सति प्रकृतधातूपात्तक्रियानाश्रयत्वमित्येतावतैव पर्णेऽतिप्रसङ्गवारणे सति विश्लेषहेत्विति क्रियाविशेषणनिवेशनस्य किं प्रयोजनमित्याशङ्क्याऽऽह—धावतोऽश्वादिति । अत्रापि पतधात्वर्थः पूर्ववदेव । अश्वारूढपुरुषनिष्ठो यः संयोगानुकूलव्यापारः, सोऽश्वपुरुषयोर्विभागजनक इत्यश्वस्य विभागाश्रयत्वेऽपि धावत इति विशेषणात्प्रकृतधातूपात्तधावनक्रियाविशिष्टत्वात्प्रकृतधातूपात्तक्रियानाश्रयत्वाभावेनाश्वस्यापादानत्वं न स्यादतो विश्लेषहेत्विति क्रियाया विशेषणं दत्तम् । तेन चाश्वस्य धातूपात्तधावनक्रियायुक्तत्वेऽपि विश्लेषहेतुपतधातूपात्तसंयोगानुकूलक्रियानाश्रयत्वादपादानसंज्ञा प्रवर्तते, विश्लेषहेतुक्रियाया अश्वारूढपुरुषमात्रनिष्ठत्वादिति भावः । एतेनाश्वस्य चलत्वेऽपि यस्मादश्वादसौ पतति तस्य पतनस्तादृशोऽप्यश्वो ध्रुव एवेति स्पष्टीकृतम् । वृक्षावधिकविभागजनकः पर्णनिष्ठः संयोगानुकूलव्यापार इति बोधः वृक्षात्पर्णं पततीत्यत्र बोध्यः । अश्वात्पततीत्युक्ते यत्किंचिदितरक्रियानाश्रयत्वदशायामेवाश्वस्यापादानत्वं भवतीत्याशङ्का स्यादतस्तन्निवृत्तये धावत इत्यश्वविशेषणमुपात्तम् । अश्वावधिकविभागजनकः संयोगानुकूलव्यापारोऽश्ववारनिष्ठ इति रीत्या बोधः । ननु कुड्यात्पततोऽश्वात्पततीत्यत्र पतत इति विशेषणाद्विश्लेषजनकक्रियाश्रयत्वप्रतीतेरश्वस्यापादानत्वं न

( तथा च पुरुषपतनहेतुक्रियानाश्रयत्वं न विरुद्धमिति भावः ) । तद्विश्लेषहेतुक्रियानाश्रयत्वे सतीति विशेषणीयमिति भावः । एवमश्वनिष्ठक्रियानाश्रयत्वात्कुड्यादेरपि ध्रुवत्वमित्याह—तस्यापीति । उभयकर्मजविभागस्थले विभागस्यैक्यात्तद्विश्लेशजनकक्रियानाश्रयत्वाभावात्परस्परस्मान्मेषावपसरत इति न स्यादि-

---

स्यादित्याशङ्क्याऽऽह—यस्मादश्वादिति । यस्मादश्वादसौ पतति सोऽश्वो यत्किंचिदवधिकविभागजनकक्रियाश्रयोऽपि पततस्तस्य ध्रुव एव विश्लेशजनकक्रियानाश्रय एवेत्यर्थ । अयं भावः—अत्र प्रयोगे विश्लेशजानिके द्वे क्रिये वर्तेते । तत्रैका कुड्यावधिकविश्लेषजनिका, साऽश्वनिष्ठा, द्वितीया त्वश्वावधिकविश्लेशजनिका, सा पुरुषनिष्ठा । तथाऽऽश्रयभेदाद्विश्लेषोऽपि द्विविधः कुड्याश्वयोर्विश्लेषः, स च कुड्यावधिकोऽश्वनिष्ठः । अश्वाश्वारोहयोर्विश्लेषश्च द्वितीयः, स चाश्वावधिकोऽश्वारोहनिष्ठः । एवं स्थिते विश्लेषहेतुक्रियानाश्रयेत्यत्र विश्लेषसामान्योपादानेन निरुक्तस्थलेऽश्वस्यापादानत्वानुपपत्तिशङ्का, यन्निष्ठविश्लेशावधित्वं तद्विश्लेषजनकक्रियानाश्रयत्वमित्येवं विश्लेषविशेषोपादाने नोक्तानुपपत्तिः । कुड्यात्पततोऽश्वात्पततीत्यत्राश्वस्याश्वाश्वारोहानिष्ठविश्लेषावधित्वं, तादृश (अश्वाश्वारोहनिष्ठ ) विश्लेषजनकक्रियाया अश्वारोहमात्रनिष्ठाया अश्वेऽसत्त्वेनाश्वस्य तद्विश्लेषजनकक्रियानाश्रयत्वादपादानत्वमुपपद्यते । यद्यप्यश्वस्य कुड्याश्वविश्लेषजनकक्रियाश्रयत्वं विद्यते तथाऽपि सा क्रिया अश्वाश्वारोहविश्लेषजनिका न भवतीत्यश्वस्य तद्विश्लेषजनकक्रियानाश्रयत्वं निर्बाधमित्याशयेनाऽऽह—तद्विश्लेषहेतुक्रियेत्यादि विशेषणीयमित्यन्तम् । तच्छब्दार्थस्य यच्छब्दार्थसापेक्षत्वात्—यद्विश्लेषावधित्वं तद्विश्लेषहेतुक्रियानाश्रयत्वे सतीत्येवं यत्तच्छब्दाभ्यां निर्वृत्तो विश्लेषव्यक्तिविशेषोऽवधिलक्षणे प्रवेशनीय इत्याशयः । तथा चाश्वस्याश्वारोहनिष्ठविश्लेषजनकक्रियानाश्रयत्वमविरुद्धमिति भावः । एवं कुड्यादेरपि ध्रुवत्वं सिध्यतीत्याह—तस्यापीति । यस्मादश्वादयं पतति तस्याप्यश्वस्य पतने कुड्यादि ध्रुवं भवति । कुड्याश्वनिष्ठविश्लेषजनकक्रियाया अश्वमात्रनिष्ठायाः कुड्यादावसत्त्वेन कुड्यादेस्तद्विश्लेष( कुड्याश्वविश्लेष ) जनकक्रियानाश्रयत्वादित्यर्थः । नन्वेवमपि यत्र संयुक्तावुभौ युगपत्पृष्ठतोगमनक्रियया विश्लेषं जनयतस्तत्र विश्लेषस्यैक्यात्प्रत्येकमपि तद्विश्लेषजनकक्रियावत्त्वेन तद्विश्लेषजनकक्रियानाश्रयत्वाभावात्परस्परस्मान्मेषावपसरत इत्यपादानत्वं न स्यादित्याशङ्कां प्रत्याचष्टे—उभाव

स्याशङ्क्य समाधत्ते—उभावपीति । मेषान्तरेति । यथा निश्चलमेषादपसरद्द्वितीयमेषस्थले निश्चलमेषस्यापसरन्मेषक्रियामादाय ध्रुवत्वं तथाऽत्रापि विभागैक्येऽपि क्रियाभेदादेकक्रियामादाय परस्य ध्रुवत्वमिति । तथा च विश्लेषाश्रयत्वे सति तज्जनकतात्क्रियानाश्रयत्वं तत्क्रियायामपादानत्वं वाच्यम् । क्रिया

---

पीति, मेषान्तरक्रियेति च । तत्रोभावपीत्यादिना विभागे, इत्यन्तकारिकांशेन शङ्का । तदर्थस्त्वेवम्—उभयकर्मके—उभयं—मेषद्वयं, तस्य कर्म—तत्संबन्धिनी क्रिया । अथवा—उभयोः कर्म—द्वयोर्मेषयोः क्रियेत्यर्थः । तादृशी क्रिया जनकत्वेनास्ति यस्येति व्यधिकरणो बहुव्रीहिर्विभागश्च न्यपदार्थः । अथवा उभयपदं लक्षणयोभयस्थापरं, तथा चोभयस्थं कर्म—क्रिया, अस्ति यस्येति समानाधिकरणो बहुव्रीहिः । अन्यत्पूर्ववत् । उभयनिष्ठक्रियाजन्यविभागे, इत्यर्थः । क्वचित्तु मुद्रितपुस्तकेऽत्र प्रदेशे 'उभयकर्मजे' इति पाठो दृश्यत, स तु सुगम इति प्रतिभाति । यद्यपि उभयनिष्ठक्रियाजन्यविभागे उभावपि मेषावध्रुवौ विश्लेषजनकक्रियाश्रयौ, स्त इति शेषः । तथा चापादानत्वं न स्यादिति । प्रविभक्ते त्वित्याद्यवशिष्टकारिकांशेन निरुक्तशङ्काप्रत्याख्यानम् । प्रविभक्ते इति। आश्रयभूततत्तन्मेषभेदात्तद्वृत्ती विश्लेषजनकक्रिये भिन्ने सत्यौ व्यवस्थिते भवतः, तन्मेषवृत्तिर्विश्लेषजनकक्रियाऽपरमेषवृत्तिरपरमेषवृत्तिश्च तादृशक्रिया तन्मेषवृत्तिर्न भवतीत्येवं व्यवस्थिते स्तः, न त्वव्यवस्थिते इत्यर्थः । तत्रेति । यत्रैको मेषो निश्चलं स्थितस्तस्माच्च मेषादपरो मेषोऽपसरति, तत्रेत्यर्थः । एतदेव मेषान्तरक्रियेत्यादिकारिकया स्पष्टीक्रियत इत्याह—यथा निश्चलेति । अयमन्यतरकर्मजन्यविभागस्थलीयदृष्टान्तः । निश्चलमेषादिति । विश्लेषजनकक्रियानाश्रयो यो मेषस्तस्मादपसरन्पृष्ठतो गच्छन् यो द्वितीयमेषस्तादृशस्थले यथाऽपसरन्मेषस्थक्रियापेक्षया क्रियानाश्रयमेषस्य ध्रुवत्वं, तद्वदुभयनिष्ठक्रियाजन्यविभागस्थले विभागस्यैक्येऽपि तत्तन्मेषनिष्ठत्वरूपधर्मवैशिष्ट्येन क्रियाया भेदं प्रकल्प्यैकमेषनिष्ठक्रियापेक्षयाऽपरस्य मेषस्य ध्रुवत्वं, अपरमेषनिष्ठक्रियामादायैकमेषस्य च ध्रुवत्वं सूपपादम् । अन्यतरनिष्ठक्रियाजन्यविभागस्थले तद्विश्लेषजनकक्रियानाश्रयत्वस्यान्यतरस्मिन्संभवान्मेषो मेषादपसरतीतिवदुभयनिष्ठक्रियाजन्यविश्लेषस्थलेऽपि आत्मानमात्मनेत्यादावन्तःकरणाद्युपाधिकृतभेदवत्तत्तन्मेषनिष्ठत्वरूपधर्मोपाधिना क्रियाभेदं गृहीत्वाऽन्यतरस्मिंस्तद्विश्लेषजनकक्रियानाश्रयत्वस्य संभवात्परस्परस्मान्मेषाव-

चात्र धात्वर्थो न तु स्पन्दः। तेन वृक्षकर्मजविभागवति वस्त्रे वृक्षाद्वस्त्रं पततीति संगच्छते। वस्तुतो नैतावत्पञ्चम्या वाच्यम्। किं त्ववधेर्लक्षणमात्रं, द्वितीयार्थो-

---

पसरत इत्युपपद्यत इति भावः। नवीनास्तु—प्रकृतधातूपात्तव्यापारजन्यविभागाश्रयत्वमपादानत्वं, तच्च परस्परपदोपात्तयोरेव विवक्ष्यते, मेषादोपात्तयोस्तु क्रियाश्रयत्वात्कर्तृत्वं विवक्ष्यते, न विभागाश्रयत्वम्। प्रयोगानुसारित्वाद्विवक्षणस्येत्याहुः। एवं च यादृशमपादानलक्षणं फलितं तत्प्रदर्शयति—**तद्विश्लेषेत्यादिना तात्क्रियायामपादानत्वमित्यन्तेन**। तत्र सतीत्यन्तस्यार्थः स्पष्ट एव। **तज्जनकेति**। तच्छब्देन विश्लेषग्रहणाद्विश्लेषजनकेत्यर्थः। **तत्क्रियानाश्रयेति**। अत्र तच्छब्देन तत्तन्मेषनिष्ठत्वरूपोपाधिविशिष्टक्रियाविशेषस्य ग्रहणात्क्रियाविशेषानाश्रयत्वमित्यर्थः। **तत्क्रियायामिति**। अत्रापि तत्पदं क्रियाविशेषपरम्। विशेषक्रियायां तदपादानमिति सिद्धमिति भावः। क्रियाविशेषग्रहणं च परस्परस्मान्मेषावपसरत इत्यत्रापादानत्वसिद्ध्यर्थमिति भावः। ननु यत्र वृक्षनिष्ठक्रिययैव विभागो जन्यते तत्र वृक्षाद्वस्त्रं पततीति प्रयोगो न स्यात्। वृक्षस्य वृक्षवस्त्रविभागजनकतत्क्रियानाश्रयत्वाभावादत आह—**क्रिया चात्रेति। धात्वर्थ इति**। पततीत्यादिप्रकृतधातुवाच्यैव गृह्यते, न स्पन्दमात्रमित्यर्थः। स्पन्दमात्रग्रहणेन वृक्षे स्पन्दसत्त्वाद्वृक्षस्यापादानत्वानुपपत्तिशङ्का, धात्वर्थग्रहणे तु पततीतिप्रकृतपतधात्वर्थविभागजनकसंयोगानुकूलक्रियानाश्रयत्वाद्वृक्षस्यापादानत्वोपपत्तिः। **तेनेति**। प्रकृतधातूपात्तक्रियाग्रहणेनेत्यर्थः। **संगच्छत इति**। विभागजनकसंयोगानुकूलक्रिया पततेरर्थः। तथा च वृक्षवस्त्रविभागजनिका या क्रिया प्रकृतपतधातूपात्ता, सा वस्त्रे विद्यते, न वृक्ष इति कृत्वा वृक्षस्य प्रकृतधातूपात्तविभागजनकक्रियानाश्रयत्वादपादानत्वं संगच्छत इत्यर्थः। नन्वत्र वस्त्रनिष्ठक्रियया वृक्षवस्त्रविभागः, न वृक्षनिष्ठक्रिययेति वृक्षकर्मजविभागवतीति वस्त्रविशेषणं न संगच्छत इति चेन्न। वृक्षचलनेन वस्त्रे तादृशी क्रिया समुत्पन्ना, यया वृक्षाद्विभज्य तद्वस्त्रमधः पतितम्। यदि तु वृक्षे चलनक्रिया नाजनिष्ट तर्हि वस्त्रे विभागजनिका क्रिया नोदपादि, ततश्च वस्त्रमपि नाधोऽपप्तत् इति परम्परया वस्त्रपतनं प्रति वृक्षनिष्ठचलनक्रिया कारणमित्याशयेन वृक्षकर्मजविभागवतीति विशेषणमुक्तम्। ननु निरुक्तापादानस्य पञ्चम्यर्थत्वे गौरवमनुसंधायाऽऽह—**वस्तुत इति। एतावदिति**। विश्लेषाश्रयत्वे सति विश्ले-

( सुबर्थनिर्णयः )

करीत्या प्रयोगातिप्रसङ्गस्यासंभवेन वाच्यकोटौ प्रवेशस्य गौरवेणासंभवादिति तु प्रतिभाति । न चैवमपि वृक्षात्स्पन्दत इति स्यादिति शङ्क्यम् । आसनाच्च-

---

षजनकतत्क्रियानाश्रयत्वमित्येवं विशेषणविशिष्टमित्यर्थः । **पञ्चम्या वाच्यमिति** । पञ्चमीवाच्यतावच्छेदकं नेत्यर्थः । पञ्चम्या वाच्यं—अपादानं, तच्च विश्लेषाश्रयं सद्विश्लेषजनकतत्क्रियानाश्रयं, वाच्यतावच्छेदकं त्वपादानत्वं, तच्च निरुक्तविशेषणविशिष्टं विश्लेषाश्रयेत्यादि क्रियानाश्रयत्वमित्यन्तम् । तथा च निरुक्तमपादानत्वं न पञ्चमीवाच्यं, किं तु पञ्चमीवाच्यतावच्छेदकं तदिति भावः। वाच्यतावच्छेदकस्यापि वाच्यत्वदर्शनादपादानत्वं पञ्चमीवाच्यं नेत्येवं वाचोयुक्तिरपि युक्तैवेति ज्ञेयम् । **लक्षणमात्रमिति** । मात्रशब्देन वाच्यतावच्छेदकत्वव्यावृत्तिः । ननु यदि विश्लेषाश्रयं सद्विश्लेषजनकतत्क्रियानाश्रयमित्येवं विशिष्टं पञ्चमीवाच्यं न, तर्हि किं पञ्चमीवाच्यमित्यपेक्षायां यद्विश्लेषाश्रयं तावदेव पञ्चमीवाच्यमाश्रीयते । तथा च विश्लेषाश्रयत्वमित्येतावदेवापादानत्वमभिप्रेयते चेत्—ग्रामादायाति देवदत्त इत्यत्र आयातेर्विभागपूर्वकोत्तरदेशसंयोगानुकूलव्यापारार्थत्वेन संयोगवद्विभागस्य द्विष्ठत्वेन आयातिधात्वर्थक्रियाजन्यविभागस्य ग्रामनिष्ठत्वस्येव देवदत्तनिष्ठत्वस्यापि सत्त्वेन ग्रामस्येव देवदत्तस्याप्यपादानत्वं प्राप्नोतीति ग्रामाद्देवदत्तादायातीत्यनिष्टः प्रयोग आपद्येतेति चेन्न । ग्रामं गच्छति चैत्र इत्यत्र गमधात्वर्थव्यापारजन्योत्तरदेशसंयोगरूपफलस्य ग्रामवृत्तित्ववच्चैत्रवृत्तित्वस्यापि सत्त्वेन ग्रामस्येव चैत्रस्यापि कर्मत्वाच्चैत्रश्चैत्रं गच्छतीत्याशङ्क्य चैत्रस्य व्यापारजन्यफलाश्रयत्वेन कर्मसंज्ञाप्राप्नोति, अथ च व्यापाराश्रयत्वेन कर्तृसंज्ञा प्राप्नोति, तत्र आकडारीयत्वेन परत्वात्कर्तृसंज्ञया कर्मसंज्ञाया बाधान्न चैत्रश्चैत्रमित्यापत्तिरित्येवं समाहितम् । तद्रीत्या प्रकृतेऽपि प्रकृतधात्वर्थव्यापारजन्यविभागाश्रयत्वेन देवदत्तस्यापादानत्वं प्राप्तमथ च प्रकृतधात्वर्थव्यापाराश्रयत्वेन कर्तृत्वं च प्राप्तं, तत्र परत्वात्कर्तृसंज्ञया अपादानसंज्ञाया बाधान्न ग्रामाद्देवदत्तादित्यनिष्टं प्रसज्येतेति समाधानस्य वक्तुं शक्यत्वाद्गौरवेण न पञ्चमीवाच्यकोटौ विश्लेषजनकतत्क्रियानाश्रयत्वमित्यंशस्य प्रवेशः कल्पनीय इति प्रतिभाति—रोचत इति भावः । एतत्सर्वमनुसंधायाऽऽह—**द्वितीयार्थोक्तरीत्येत्यादि प्रतिभातीत्यन्तम्** । **शङ्कते—न चैवमपीति** । देवदत्तो देवदत्तादित्याद्यनिष्टप्रयोगवारणेऽपीत्यर्थः । **वृक्षात्स्पन्दत इति** । वृक्षाचत्सकाशात्किंचिच्चालितमीषद्विभक्तं

लितः, राज्याच्चलित इतिवदिष्टत्वात्। एतेन पञ्चमीजन्यापादानत्वबोधे सकर्मकधातुजन्योपस्थितेर्हेतुत्वमिति समाधानाभासोऽप्यपास्तः। न चैवमपि वृक्षा-

---

भवतीत्यर्थप्रतीतेः प्रकृतस्पन्दधात्वर्थव्यापारानाश्रयत्वे सति तज्जन्यविभागाश्रयत्वस्य वृक्षे सत्त्वेन वृक्षस्यापादानत्वापत्तिरिति शङ्ककाशयः। विश्लेषाश्रयत्वे सति तज्जनकतत्क्रियानाश्रयत्वमित्येवं विशिष्टस्य पञ्चमीवाच्यत्वपक्षेऽप्ययमापत्तिः। उक्तामापत्तिमिष्टापत्त्या परिहरति—इष्टत्वादिति। आसनाच्चलितः, राज्याच्चलितः, इत्यादौ चलधातूपात्तव्यापारजन्यविभागाश्रये अपादानत्वस्येष्यमाणत्वात्तद्वत्तदर्थकस्पन्दधातूपात्तव्यापारजन्यविभागाश्रयेऽपादानत्वाङ्गीकारे बाधकाभावेनेष्टत्वादित्यर्थः। वृक्षात्स्पन्दते इति प्रयोगापत्तिरूपदूषणदातुरित्थमभिप्रायः—आसनाच्चलित इत्यादिप्रयोगदर्शनाच्चलधातूपात्तव्यापारजन्यविभागस्य प्रतीतेर्विभागस्य चावधिसापेक्षतया तत्र तादृशविभागाश्रयस्यापादानत्वेऽपि स्पन्दधातोः कम्पनमात्रार्थकतया विभागाप्रतीतेरवधित्वाभावेन वृक्षात्स्पन्दत इति प्रयोगो नोचितः, किंतु वृक्षे स्पन्दत इत्येव। अन्ये तु सकर्मकधातुसमभिव्याहारे तादृशधातूपात्तव्यापारजन्यविभागाश्रयस्यापादानत्वं—यथा प्रयागात्काशीं गच्छतीत्यादौ, स्पन्देस्त्वकर्मकतया तत्समभिव्याहारे तादृशधातूपात्तव्यापारजन्यविभागाश्रयस्यापादानत्वं नोचितमित्याशयेनाऽऽह—पञ्चमीजन्येत्यादि उपस्थितेर्हेतुत्वमित्यन्तम्। पञ्चमीजन्यो योऽपादानत्वप्रकारकबोधस्तस्मिन् बोधविषये—प्रत्यासत्त्याऽपादानपदार्थघटकविभागजनकतया सकर्मकधातुजन्यव्यापारोपस्थितिर्हेतुरिति कार्यकारणभावाङ्गीकाराद् वृक्षात्स्पन्दत इत्यत्र विभागजनकव्यापारोपस्थापकस्पन्दधातोरकर्मकतया न तत्समभिव्याहारेऽपादानत्वबोध इति कृत्वा वृक्षात्स्पन्दत इत्यनुचितमिति भावः। सोऽयं समाधानप्रकारः समाधानाभास इत्याह—समाधानाभास इति। वृक्षात्स्पन्दत इत्यत्रापादानत्वबोधवारणाय यदि निरुक्तकार्यकारणभावोऽङ्गीक्रियते तर्हि राज्याच्चलित इत्यत्रापि विभागजनकव्यापारोपस्थापकचलधातोरकर्मकतया तत्समभिव्याहारेऽप्यपादानत्वबोधो न स्यादिति राज्याच्चलित इत्यादिप्रयोगानिर्वाहो, यदि तु आसनाच्चलित इत्यादिप्रयोगनिर्वाहाय चलधातुसमभिव्याहारेऽपादानत्वबोधोऽनुभवबलादभिप्रेयते तर्हि तदर्थकस्पन्दधातुसमभिव्याहरेऽपादानत्वबोधस्यापरिहार्यतया वृक्षात्स्पन्दत इति प्रयोगस्य दुर्वारतया

त्यजतीति दुर्वारम् । कर्मसंज्ञयाऽपादानसंज्ञाया बाधेन पञ्चम्यसंभवात् । भ्रमात्कृते तथा प्रयोगे यदि बोधाभावोऽनुभवसिद्धस्तर्हि पञ्चमीजन्यापादानत्वबोधे त्यजादिभिन्नधातुजन्यबुद्धेर्हेतुत्वं वाच्यम् । बलाहकाद्विद्योतते विद्युदित्यादौ निःसृत्येत्यध्याहार्यम् । रूपं रसात्पृथगित्यत्र तु बुद्धिपरिकल्पितमपादानत्वं द्रष्टव्यम् ।

---

निरुक्तकार्यकारणभावरूपसमाधानस्य समाधानप्रतिभासत्वमिति भावः । अपास्त इति । तादृशसमाधानाभासोऽप्यपास्त इत्यर्थः । वृक्षात्स्पन्दत इति प्रयोगवारणायोक्तकार्यकारणभावाङ्गीकारे राज्याच्चलित इत्यादिप्रयोगस्य शिष्टस्यानुपपत्तेस्तादृशकार्यकारणभावो नाभ्युपगन्तुं शक्य इति वृक्षात्स्पन्दत इति प्रयोगेऽपीष्टापत्तिकरणादित्याशयः । शङ्कते—न चैवमपीति । विभागाश्रयत्वस्यापादानसंज्ञाप्रयोजकत्वेन वृक्षात्स्पन्दत इति प्रयोगनिर्वाहेऽपीत्यर्थः । वृक्षात्त्यजतीति । अत्र खगः कर्ता । दुर्वारमिति । विभागाश्रयत्वे सति विभागजनकव्यापारानाश्रयत्वस्य वृक्षे सत्त्वेनापादानसंज्ञाप्राप्तेर्वृक्षात्त्यजतीति दुर्वारमिति चेन्न । विभागानुकूलव्यापारस्य त्यजत्यर्थत्वाद्विभागस्य धात्वर्थतया फलत्वाद्व्यापारजन्यफलाश्रयत्वेन प्राप्तया कर्मसंज्ञया परत्वरूपबलाश्रितयाऽपादानसंज्ञाया बाधात्पञ्चम्यसंभवेन द्वितीयैव भवतीति । ननु कर्मसंज्ञया बाधादपादानसंज्ञाया अभावात्पञ्चम्याः साधुत्वाभावेऽपि अपादानसंज्ञाभ्रमेण कृतात्तादृशप्रयोगादपादानत्वबोधापत्तिरित्याशङ्कां प्रत्याचष्टे—भ्रमादित्यादिना । बोधाभाव इति । अपादानत्वबोधाभाव इत्यर्थः । अनुभवसिद्ध इति । अनुभवरूपप्रत्यक्षप्रमाणसिद्ध इत्यर्थः । पञ्चमीजन्येति । पञ्चमीजन्यो योऽपादानत्वबोधस्तस्मिन्प्राव्यत्वेन विवक्षिते त्यज्यादिधातुभिन्नधातुजन्यविभागजनकव्यापारोपस्थितिर्हेतुरिति कार्यकारणभावो मन्तव्यः । अथ पञ्चमीजन्यापादानत्वबोधः कार्यं, त्यज्यादिधातुभिन्नधातुजन्यबुद्धिः कारणमित्यर्थः । त्यज्यादीत्यादिपदेन नरकं पतित इति भाष्यप्रयोगघटकः पतधातुर्ग्राह्यः । तत्र हि विभागानुकूलव्यापारः पतधात्वर्थ इति स्पष्टम् । यदि बोधाभाव इत्यत्र यदीत्युपादानेन तत्रापादानत्वबोध इष्ट एवेति गम्यते । तथा च निरुक्तः कार्यकारणभावोऽकिंचित्कर इति भावः । ननु बलाहकाद्विद्योतत इत्यत्र द्युतधातोः प्रकाशार्थतया सविता प्रकाशत इत्यत्रेव तस्माद्विभागाप्रतीतेर्बलाहकादित्यपादानत्वानुपपत्तिरत आह—निःसृत्येत्यध्याहार्यमिति । निःसरणपूर्वके विद्योतने द्युतधातुं वर्तयित्वा निःसरणक्रियानिरूपि-

( सुबर्थनिर्णय. )

पृथग्विनेति पञ्चमी वा । इदं च—

" निर्दिष्टविषयं किंचिदुपात्तविषयं तथा ।
अपेक्षितक्रियं चेति त्रिधाऽपादानमुच्यते " ॥

इति वाक्यपदीयात्त्रिविधम् । यत्र साक्षाद्धातुना गतिर्निर्दिश्यते तन्निर्दिष्टविषयम् । यथाऽश्वात्पतति । यत्र धात्वन्तरार्थाङ्गं स्वार्थं धातुराह तदुपात्तविषयम् । यथा बलाहकाद्विद्योतते । निःसरणाङ्गे विद्योतने द्युतिर्वर्तते । अपेक्षिता

---

त्वमपादानत्वमभ्युपगम्य पञ्चम्युपपाद्येति भावः । निःसरणपूर्वके विद्योतने धातोर्वृत्तिरेवात्राध्याहारः । बलाहकान्निःसृत्य विद्योतत इत्यर्थः । तदुक्तं कैयटे—बलाहको नाम धूमज्योतिःसलिलमरुतां संघातः, तादृशसमुदायात्मकमेवादवयवभूतज्योतीरूपविद्युतो भेदविवक्षणाद्बलाहकस्यावधित्वमिति । ननु रूपं रसात्पृथगित्यत्र रूपे विभागपूर्वकसंयोगानुकूलव्यापाररूपनिःसरणस्याभावाद्रसादित्यपादानत्वानुपपत्तिरित्याशङ्कां निराकरोति—बुद्धिपरिकल्पितेत्यादिना । रूपरसयोर्गुणयोः परस्परं वास्तवसंयोगस्य तथा विभागस्य चासंभवाद्बुद्धिपरिकल्पितौ तयोः संयोगविभागौ गृहीत्वा तादृशविभागावधित्वमाश्रित्य रसादिति पञ्चम्युपपाद्येति भावः । बुद्धिपरिकल्पितापादानत्वस्य गौणत्वं मत्वाऽऽह—पृथग्विनेति । एतत्सूत्रेण पृथक्शब्दार्थयोगे रसादिति पञ्चमी बोध्या । रसप्रतियोगिकपृथक्त्वविशिष्टं रूपमित्यर्थः । इदं चेति अपादानं चेत्यर्थः । अपादानत्वावान्तरधर्मभेदात्त्रिविधमित्याह—निर्दिष्टविषयमित्यादि । निर्दिष्टः—शक्त्या बोधितः, विषयो—विभागनिरूपकार्थो यस्येत्यर्थः । अत्र विषयशब्दो निमित्तभूत(विभागनिरूपक )गतिपर इत्याशयेनाऽऽह यत्र साक्षादिति । विभागजनकक्रियाध्याहारं विनैवेत्यर्थः । धातुनेति । विभागजनकव्यापारार्थकत्वेन प्रसिद्धेन पतति-गच्छतीत्यादिधातुनेत्यर्थः । गतिरिति । विभागजनिका क्रियेत्यर्थः । निर्दिश्यते—उपस्थाप्यते, तत्र यदपादानं तन्निर्दिष्टविषयमिति निर्दिष्टविषयलक्षणमिति भावः । निर्दिष्टविषयस्योदाहरणमाह—यथा—अश्वात्पततीति । उपात्तविषयं लक्षयति—उपात्तो लक्षणादिना स्वीकृतो न तु शक्त्येति यावत् , विषयो—विभागनिरूपकार्थो यस्येति समासार्थाश्रयेणाऽऽह—यत्र धात्वन्तरेति । विभागनिरूपको धात्वन्तरार्थो निःसरणादिरङ्गं विशेषणं यस्य तादृशं स्वार्थं धातुर्ब्रूते तदुपात्तविषयमपादानमित्यर्थः । एतस्योदाहरणमाह—यथा बलाहकादिति स-

क्रिया यत्र तदन्त्यम् । यथा कुतो भवान्पाटालिपुत्रात् । अत्राऽऽगमनमर्थमध्याहृत्यान्वयः कार्यः ॥

उद्देश्यश्चतुर्थ्यर्थः । तथा हि—संप्रदाने चतुर्थी । तच्च " कर्मणा यमभिप्रैति स संप्रदानम् " [ पा० सू० १-४-३२ ] इतिसूत्रात्कर्मणा करणभूतेन

---

विता प्रकाशत इत्यत्रैव दीप्त्यर्थकाद्विद्योततेर्विभागाप्रतीतेर्लक्षणया धात्वन्तरार्थनिःसरणपूर्वक विद्योतने विद्योततेर्वृत्तिः स्वीक्रियत इत्याह निःसरणाङ्गेत्यादि बलाहकावधिकं यन्निःसरणं, तदनन्तरकालिकं विद्युत्कर्तृकं विद्योतनमिति बोधः। अपेक्षितक्रियं लक्षयति—अपेक्षितेति । अपेक्षिताऽऽकाङ्क्षिता, क्रिया विभागजनिका क्रिया यत्रेत्यर्थः । अन्त्यमिति । अपेक्षितक्रियमित्यर्थः । आकाङ्क्षा च प्रतीयमानाया अनुपादाने सति भवतीति प्रत्यक्षसिद्धमागमनं मनसि निधाय पृच्छति—कुतो भवानिति । उत्तरयिताऽपि तथैवोत्तरयति—पाटलिपुत्रादिति । अत्र प्रश्नोत्तररूपे द्वे अपि वाक्ये अपेक्षितक्रिये इत्याशयेनाह—आगमनमर्थमध्याहृत्येति । तथा च कुतो भवानिति प्रश्नवाक्ये आगत इति, तथोत्तरवाक्ये पाटलिपुत्रादित्यस्मिन्, आगतोऽहमिति च शेषः कल्प्य इति भावः । किंप्रदेशावधिकविभागजनकागमनव्यापारवान् भवानिति प्रश्नवाक्यार्थः, पाटलिपुत्रावधिकविभागजनकागमनव्यापारवानहमिति चोत्तरवाक्यार्थो ज्ञेयः । एतेन गम्यगम्यमानाऽपि क्रिया कारकविभक्तौ प्रयोजिकेति सूचितम् ।

अथ चतुर्थ्यर्थमाह—उद्देश्य इति । चतुर्थ्यर्थ इति । संप्रदानचतुर्थ्यर्थ इत्यर्थः । उद्देश्यस्य संप्रदानचतुर्थ्यर्थत्वे प्रमाणमाह—तथा हीति । ननु चतुर्थी संप्रदाने, इति सूत्रात्संप्रदानस्य चतुर्थ्यर्थत्वसिद्धावपि नोद्देश्यस्य चतुर्थ्यर्थत्वं सिध्यतीत्याशङ्कां निराकुर्वन्नाह—तच्चेति । संप्रदानं चेत्यर्थः । कर्मणा यमभिप्रैतीति सूत्रादुद्देश्यमित्यन्वयः । संप्रदानस्योद्देश्यरूपतासंपादकं विशेषणमाह—कर्मणेत्यादिना इत्यर्थकादित्यन्तेन । कर्मणा—करणभूतेनेति । करणत्वं च संबन्धक्रियापेक्षम्, कर्मसंज्ञकेन गवादिद्रव्येण संबन्धुं कर्ता यमभिप्रैति—ईप्सति, उद्दिशतीति यावत् । स संप्रदानमित्यर्थः । कर्म चात्र पारिभाषिकं कर्तुरीप्सिततममित्यादि ग्राह्यम् । अत एव क्रियया यमभीति अकर्मकक्रियोद्देश्यस्य संप्रदानसंज्ञा विहिता । तथा च "यत्किंचिद्धातूपस्थाप्यव्यापारजन्यफलाश्रयरूपकर्मसंबन्धाय क्रियायां यदुद्देश्यं तत्संप्रदानमित्यर्थादुद्देश्यस्य चतुर्थ्यर्थत्वं फलतीति

( सुबर्थनिर्णयः )

यमभिप्रैतीप्सति तत्कारकं संप्रदानमित्यर्थकादुद्देश्यः । इदमेव शेषित्वम् । तदुद्देश्यकेच्छाविषयत्वं च शेषत्वमित्येव पूर्वतन्त्रे निरूपितम् । अत एव " प्रासनवन्मैत्रावरुणाय दण्डप्रदानम् " इत्यधिकरणे क्रीते सोमे मैत्रावरुणाय दण्डं प्रयच्छतीति विहितं दण्डदानं न प्रतिपत्तिः किं तु चतुर्थीश्रुत्याऽर्थकर्मेति तत्र निर्णीतम् । रजकाय वस्त्रं ददातीत्यपि खण्डिकोपाध्यायः शिष्याय चपेटां ददा-

---

भावः । **इदमेवेति** । उद्देश्यत्वमेव शेषित्वमङ्गित्वमित्युच्यत इत्यर्थः । **तदुद्देश्यकेति** । तत्—संप्रदानं, उद्देश्यं यत्र, तादृशेच्छाविषयीभूतं वस्तु, गवादि, तच्छेषमित्युच्यते । **पूर्वतन्त्र इति** । पूर्वमीमांसायां ' शेषः परार्थत्वात् ' ( ३ । १ । २ । २ ) इत्यत्रेत्यर्थः । परार्थत्वं च परोद्देशप्रवृत्तकृतिव्याप्यत्वम् । परं—प्रधानं—मुख्यं कर्म, अथवा परं—उत्कृष्टं फलं स्वर्गादि, तदुद्देशेन प्रवृत्तस्य पुरुषस्य या कृतिः—तद्व्याप्यत्वं—कारकत्वेन तत्संबन्धित्वमित्यर्थः । यथा दर्शपूर्णमासोद्देशेन प्रवृत्तपुरुषकृतिव्याप्यत्वं प्रयाजानुयाजावघातप्रोक्षणादीनां सुप्रसिद्धमिति तेषां शेषत्वम् । दर्शादेस्तु प्रयाजाद्युद्देशेन प्रवृत्तपुरुषकृतिव्याप्यत्वाभावान्नातिव्याप्तिः । केवलप्रयाजाद्युद्देशेन कस्यचिदपि पुरुषस्य प्रवृत्त्यभावादित्यर्थः । **निरूपितमिति** । इत्यादि वर्णितमित्यर्थः । एतेन विधेः शेषित्वं, गवि शेषत्वं च प्रदर्शितम् । **अत एवेति** । शेषित्वस्य प्रधानकर्मप्रयोजकत्वादेव । प्रासनवदिति । ( ४ । २ । ६ । १६ ) इति जैमिनीयाधिकरणे । **क्रीते सोम इति** । सोमक्रयणानन्तरं मैत्रावरुणाय प्रोक्तं दण्डदानं प्रतिपत्तिकर्म, अर्थकर्म वेति संदिह्य चात्वाले कृष्णविषाणां प्रास्यतीतिवद्दण्डदानं प्रतिपत्तिकर्म, दण्डेन दीक्षयतीति दीक्षायां दण्डस्य विनियुक्तत्वादिति पूर्वपक्षयित्वा मैत्रावरुणायेति संप्रदाने चतुर्थीश्रवणात्, संप्रदानत्वस्य च क्रियोद्देश्यत्वात्, उद्देश्यत्वस्य च प्रधानत्वसमानियतत्वान्मैत्रावरुणस्योद्देश्यत्वलक्षणप्राधान्यावगमाद्दण्डप्रदानमर्थकर्म—प्रधानकर्मैव, न तु प्रतिपत्तिकर्मेति सिद्धान्तितं संगच्छते । उपयुक्तस्याऽऽकीर्णककरस्य द्रव्यस्य विहितप्रदेशे प्रक्षेपः प्रतिपत्तिकर्म । यत्तु स्वातन्त्र्येण मुख्यकर्मण उपकारकं तत्प्रधानकर्मार्थकर्म चेत्युच्यत इति अर्थप्रतिपत्तिकर्मणोर्भेदः । ननु यत्र दाधातोर्निर्णेजनानुकूलेच्छारूपो व्यापारस्तत्र तादृशेच्छारूपव्यापारजन्यनिर्णेजनरूपफलाश्रयत्वेन कर्मत्वात्कर्मणा वस्त्रेणाभिप्रेयमाणत्वाद्रजकस्येति संप्रदानत्वाद्रजकाय वस्त्रं ददातीत्याशङ्क्यपेष्टापत्त्या परिहरति—**रजकायेत्यादि** । इत्यपीति ।

तीतिभाष्योदाहरणादिष्टमेव । वृत्तिकारास्तु सम्यक्प्रदीयते यस्मै तत्संप्रदानमित्यन्वर्थसंज्ञया स्वस्वत्वनिवृत्तिपर्यन्तमर्थं वर्णयन्तो रजकस्य वस्त्रमित्येवाऽऽहुः ।

इदं च—

---

अस्येष्टमेवेत्यग्रिमेण संबन्धः । रजकायेत्यादिप्रयोगस्येष्टत्वे भाष्यप्रयोगः प्रमाणमित्याह—**खण्डिकोपाध्याय इति** । बालकानामुपाध्यायः । **शिष्याय चपेटामिति** । चपेटा प्रसतकरतलम् । प्राकृतभाषायां 'चापट' इत्युच्यते । अत्र ददातेः संयोगविशेषानुकूलव्यापारार्थकतया मुख्यदानार्थकदाधातुयोग एव संप्रदानसंज्ञाङ्गीकारे शिष्याय चपेटां ददातीति भाष्योदाहरणानुपपत्तिः । न चात्र ददातीव ददातीति ददातिर्भाक्तः । सिंहो माणवक इत्यत्रेवेति वाच्यम् । संप्रदानसंज्ञाया अन्वर्थत्वाभिप्रायेण वार्तिककृता पत्ये शेते, इत्यत्र चतुर्थ्युपपत्तये कृतं 'क्रियाग्रहणं कर्तव्यं' इति वचनं खण्डयद्भिर्भाष्यकारैः, यत्किंचिद्धातूपस्थाप्यव्यापारजन्यफलाश्रयरूपकर्मणा संबन्धुमभिप्रेयमाणोऽर्थः संप्रदानमिति सूत्रार्थाश्रयणात्संप्रदानसंज्ञाया अन्वर्थत्वानङ्गीकारेणोक्तप्रयोगस्य रजकायेत्यादिप्रयोगस्य च मुख्यत्वोपगमात् । एवं न शूद्राय मतिं दद्यादित्यप्यत एव संगच्छते । तत्र ददातिर्बोधनार्थः । मतिशब्दस्तज्जनकवेदादिपरः । शूद्रसंप्रदानकं ज्ञानजनकवेदादिकर्मकं यद्बोधनं तन्न कुर्यादित्यर्थो ज्ञेयः । संप्रदानसंज्ञाया अन्वर्थत्वं मन्यमानानां वृत्तिकाराणां मतं वर्णयति—**वृत्तिकारास्त्विति** । **सम्यक्प्रदीयते यस्मायिति** । **अन्वर्थसंज्ञयेति** । तथा च स्वस्वत्वनिवृत्तिपूर्वकपरस्वत्वोत्पत्त्यनुकूलो व्यापारो दाधात्वर्थ इति भावः । एवं च रजकाय वस्त्रं ददातीत्यादौ निरुक्तदाधात्वर्थाभावाद्रजकस्य वस्त्रं ददातीत्येवं संबन्धसामान्ये षष्ठ्येवेति वदन्ति । विप्राय गां ददातीत्यत्र दानक्रियाकर्मीभूतगोसंबन्धाय विप्रो दानक्रियोद्देश्यः । गोविप्रयोः स्वस्वामिभावः संबन्धः । तथा च विप्रोद्देश्यकः, गोकर्मकः, परस्वत्वोत्पत्त्यनुकूलो व्यापार इति बोधः । मैत्राय वार्ताः कथयतीत्यत्र कथनक्रियाकर्मीभूतवार्तासंबन्धाय मैत्रः कथनक्रियोद्देश्यः । मैत्रवार्तयोर्ज्ञातृज्ञेयभावः संबन्धः । तथा च मैत्राभिन्नसंप्रदानकं वार्ताकर्मकं कथनमिति बोधः । तद्विभजते—**इदं चेति** । कर्मणा यमभिप्रैतीत्यनेनोक्तं संप्रदानं चेत्यर्थः । अस्य त्रिविधमित्यनेनान्वयः । विभागश्च संप्रदानत्वावान्तरधर्मपुरस्कारेण कथ-

( सुबर्थनिर्णयः )

" अनिराकरणात्कर्तुस्त्यागाङ्गं कर्मणेप्सितम् ।
प्रेरणानुमतिभ्यां च लभते संप्रदानताम् " ॥

इति वाक्यपदीयात्त्रिविधम् । सूर्यायार्घ्यं ददातीत्याद्यम् । नात्र सूर्यः प्रार्थयते । नानुमन्यते । न निराकरोति । प्रेरकं—विप्राय गां ददाति । अनुमन्तृ,—उपाध्यायाय गां ददाति । अत्र सर्वत्र प्रकृतिप्रत्ययार्थयोरभेदः संसर्गः, विभक्तीनां धर्मि-

---

नम् । **अनिराकरणादिति** । **त्यागाङ्गमिति** । त्यागो—दानं, तस्याङ्गं विशेषणं, समभिव्याहृतधात्वर्थे त्यागे विशेषणतया प्रतीयमानत्वं त्यागाङ्गत्वमित्यर्थः । **कर्मणेप्सितमिति** । समभिव्याहृतधात्वर्थत्यागजन्यफलाश्रयरूपकर्मणा संबन्धुमभिप्रेयमाणमित्यर्थः । तथा च त्यागाङ्गं सत् यत्कर्मणा संबन्धुमभिप्रेयमाणं तत्कारकं, कर्तुरनिराकरणात्, तथा कर्तुः प्रेरणया, कर्तुरनुमतिप्रदानेन च संप्रदानतां लभते इत्यर्थः । तत्रानिराकरणहेतुकं संप्रदानं प्रदर्शयति—**सूर्यायेति** । अत्र स्वस्वत्वनिवृत्तीच्छाधीनपरस्वत्वोत्पत्तीच्छारूपस्त्यागो दाधातोरर्थः । अत्र सूर्योऽर्घ्यप्रदातारं न देयमर्घ्यमिति न प्रत्याचष्टेऽतः सूर्यः संप्रदानम् । **न प्रार्थयते नानुमन्यत इति** । सूर्ये प्रार्थनानुमत्योर्निराकरणं तद्रूपानाक्रान्तत्वबोधनाय । तथा च प्रवृत्तिनिवृत्त्यनुकूलव्यापारशून्यत्वमनिराकरणमिति भावः । प्रेरणाहेतुकं संप्रदानं दर्शयति—**विप्रायेति** । अत्र विप्रेण मह्यं देहीति प्रवर्तितो ददातीत्यर्थः । प्रेरणा च कर्तृनिष्ठदानादिविषयकेष्टसाधनत्वबोधनानुकूलव्यापारः । अनुमतिहेतुकं संप्रदानमाह—**उपाध्यायायेति** । अत्रोपाध्यायो गोप्रदानं न प्रार्थयते न निराकरोति वा, किं तु दीयमानं गोप्रदानमनुमन्यते इति भावः । अनुमतिश्च—इमां गां तुभ्यं दातुमिच्छामीति परोक्तार्थस्य यत्स्वीकरणं तदनुकूलो व्यापारः—दीयतां प्रतिग्रहीष्यामीत्येवंशब्दप्रयोगरूपः । गवादिनिष्ठस्वस्वत्वादिफलाभ्युपगमानुकूलव्यापारस्तथेत्यादिशब्दप्रयोगरूप इति यावत् । अन्ये तु संप्रदानत्वं च—तत्तद्धात्वर्थकर्मनिष्ठफलनिरूपकत्वेनेच्छाविषयो यस्तत्त्वम् । तत्तद्धात्वर्थभूतं यत् कर्मनिष्ठफलं तन्निरूपकत्वेनेच्छाविषयत्वमित्यर्थः । गवादिकर्मनिष्ठं यद्धात्वर्थफलं—स्वस्वत्वनिवृत्तिपूर्वकपरस्वत्वोत्पत्तिरूपं, तन्निरूपकत्वसंबन्धेनेच्छाविषयो विप्र इति तस्य संप्रदानसंज्ञेति वदन्ति । द्वितीयादिकारकप्रकृत्यर्थविभक्त्यर्थयोरन्वयबोधं निरूपयति—**अत्र सर्वत्रेति** । हरिं भजतीत्यादिषु । **प्रकृतिप्रत्ययार्थयोरिति** । प्रकृत्यर्थस्य प्रत्ययार्थेऽभेदसंबन्धेन

वाचकत्वात् । धर्ममात्रवाचकत्वे “ कर्मणि द्वितीया ” [पा० सू० २–३–२] इतिसूत्रस्वरसभङ्गापत्तेः । कर्मार्थककृत्तद्धितादौ तथादर्शनाच्च । द्वितीयाद्यर्थ-

---

विशेषणत्वमित्यर्थः । तत्र द्वितीयार्थस्याऽऽश्रयस्याऽऽधेयतासंबन्धेन फलेऽन्वयः—तण्डुलाभिन्नो य आश्रयस्तन्निष्ठाधारतानिरूपिताधेयतावती विक्लित्तिरित्यन्वयः । विप्राभिन्नोद्देश्यकं गोकर्मकं दानं, वृक्षाभिन्नावधिकं पर्णनिष्ठं पतनमित्यादिरीत्याऽन्वयबोध ऊह्यः । करणतृतीयार्थस्याऽऽश्रयस्य तृतीयोपात्ते व्यापारेऽन्वयः । बाणाभिन्नो य आश्रयस्तन्निष्ठाधारतानिरूपिताधेयतावान् व्यापार इत्यन्वयबोधः ।

ननु द्वितीयार्थाश्रयस्याऽऽधेयतासंबन्धेन धात्वर्थफलेनान्वयो न संभवति । हर्यादिनामार्थाभिन्नस्य तस्य धात्वर्थे भेदसंबन्धेनान्वयस्याव्युत्पन्नत्वादिति चेन्न । नामार्थधात्वर्थयोर्विभक्त्यर्थमद्वारीकृत्य परस्परमन्वयो न भवतीत्येव व्युत्पत्तेः । प्रकृते विभक्त्यर्थद्वारा तथान्वये बाधकाभावात् । ननु प्रकृतिप्रत्ययार्थयोरभेदः संसर्गो न संभवति, विभक्तीनां कर्मत्वादिधर्ममात्रवाचकत्वादित्यत आह—**विभक्तीनां धर्ममात्रवाचकत्व इति** । विभक्तीनां लाघवात्कर्मत्वादिधर्ममात्रवाचकत्वमुचितम् । मात्रपदेन धर्मिव्यवच्छेदः । **कर्मणीति** । **कर्मणि द्वितीयेत्यादिसूत्रस्वरसभङ्गापत्तेरिति** । अयं भावः—लोके कर्मादिपदानां कर्मत्वविशिष्टे शक्तत्वेन धर्मिपरत्वेन प्रतीतेः शास्त्रेऽपि धर्मिपरत्वावश्यकत्वात् । अन्यथा कर्मत्वे द्वितीयेत्याद्येव वदेत्, न तु कर्मणि, करणे, इत्यादीति । तथा च कर्मादिपदानां कर्मत्वादिधर्मवाचकत्वे सूत्रस्वरसभङ्गः स्यादित्यर्थः । ननु कर्मणि द्वितीयेत्यादेः कर्मणि वाच्ये द्वितीयेत्यादिरर्थो नाभिप्रेयते, किं तु कर्मणि बोध्ये द्वितीयेत्यादिरर्थोऽभिमतः । तादृशार्थनिर्वाहश्च प्रकृत्यर्थस्य प्रत्ययार्थेऽन्वयाद्भवति । एवं च न सूत्रस्वरसभङ्गापत्तिः । न च प्रत्ययार्थभूते आश्रयत्वे हर्यादेः प्रकृत्यर्थस्यान्वयेऽपि हरिनिष्ठमाश्रयत्वमित्येव बोधः, न त्वाश्रयत्ववान् हरिस्तत्कथं कर्मबोधनिर्वाहकत्वं द्वितीयाया इति वाच्यम् । आश्रयत्वे प्रकृत्यर्थहर्यादेरन्वयबोधे हरिराश्रय इति पार्ष्ठिकमानसबोधसंभवात् । यथा राजसखो देवदत्त इति वाक्याद्देवदत्ते राजमित्रत्वस्य शब्दशक्तिमर्यादया प्रतीतौ सत्यां, मित्रत्वस्योभयनिरूपितत्वात्तुल्यन्यायाद्राजनि देवदत्तमित्रत्वं पश्चान्मानसं प्रतीयते तद्वदित्यर्थः । इत्याशङ्कामपनिनीषुराह—**कर्मार्थककृत्तद्धितादाविति** । कृत्प्रत्यये—पक्वस्तण्डुल इत्यादौ, तद्धितप्रत्यये—शत्योऽश्व इत्यादौ । आदिपदात्पच्यमानस्त-

( सुबर्थनिर्णयः )

कबहुव्रीहौ प्राप्तोदक इत्यादौ धर्मिवाचकत्वालाभाच्च । " सुपां कर्मादयोऽप्यर्थाः संख्या चैव तथा तिङाम् " इति भाष्याच्चेति दिक् । आश्रयस्यापि प्रकृत्यैव

---

ण्डुल इत्यादिः शानच् प्रत्ययो ग्राह्यः। तथा दर्शनादिति । निरुक्तस्थले कर्मवाचककृदादिप्रत्ययानां धर्मिवाचकताया दृष्टत्वादित्यर्थः । तथा च तयोरेवेत्यादिसूत्रविहितकादीनां धर्मिवाचकत्ववत्कर्मणि द्वितीयेत्यादावपि धर्मिवाचकत्वमेव युक्तमिति भावः। ननु कर्मणि द्वितीयेत्यादेः कर्मणि शक्तिग्राहकसूत्रस्य, फलस्य धातुलभ्यतया आश्रयमात्रे शक्तिग्राहकत्वकल्पनया भवन्मतेऽपि सूत्रस्वरसभङ्गापत्तिः । लाघवानुरोधेन आश्रयमात्रे तत्कल्पनमितिचेन्ममापि मते लाघवाद्धर्मे तत्कल्पनमिति तुल्यमेवेत्यत आह–द्वितीयाद्यर्थकेति । प्राप्तोदक इति, धर्मिवाचकत्वेति । प्राप्तोदक इत्यत उदककर्तृकप्राप्तिकर्म, इत्याकारकसमासार्थस्य, ग्रामस्य च सामानाधिकरण्यविषयकबोधस्यानुभवसिद्धस्य निर्वाहाय द्वितीयायाः कर्मणि शक्तिरावश्यकी । अन्यथा द्वितीयार्थकबहुव्रीहेरपि कर्मत्वबोधकत्वापत्त्या सामानाधिकरण्यानुपपत्तेः । कर्मादिपदानां धर्मिवाचकतायां भाष्यमपि प्रमाणमित्याह–सुपां कर्मादय इति । यदि द्वितीयादिसुब्विभक्तीनां कर्मत्वादिधर्मोऽर्थो वाच्यत्वेनाभिप्रेतः स्यात्तर्हि सुपां कर्मत्वादयोऽप्यर्था इत्येव वदेत् । यस्माच्च तथा नोक्तं तस्मात्कर्मत्वादिधर्माणां द्वितीयादिविभक्तिवाच्यत्वं मुनित्रयासंमतत्वादप्रामाणिकमिति भावः। ननु कर्मणि द्वितीयेत्यादौ कर्मादिपदे लक्षणापत्तावपि द्वितीयादीनां धर्ममात्रवाचकत्वमुचितं लाघवात्, अस्तु च बहुव्रीहेरपि धर्ममात्रवाचकत्वं, सामानाधिकरण्यं च लक्षणयोपपाद्यमित्यत आह–इति दिगिति । दिगर्थस्तु–एवं सति कृतस्तद्धितस्यापि तव्यादेर्धर्मिवाचकत्वं न सिध्येत् । 'पक्तव्यास्तण्डुलाः' इत्यादौ तण्डुलादिसामानाधिकरण्यानुभवानुरोधात्तेषां धर्मिवाचकत्वमिति चेन्न । लक्षणयैव सामानाधिकरण्योपपत्तेः। पक्तव्य इत्यादितः कर्मत्वमात्रबोधोऽनुभवविरुद्ध इति चेत्प्राप्तोदकादावपि स तुल्य इति भावः ।

ननु द्वितीयादीनामाश्रयेऽपि न शक्तिः। फलव्यापारयोर्धातुलभ्यत्ववदाश्रयस्यापि प्रकृतिभूतप्रातिपदिकेन लभ्यत्वात्, अपि त्वाश्रयत्वमात्रे—अनन्यलभ्यत्वात् । धर्मधर्मिणोरभेदात्कर्मणीत्यादिनिर्देशो नानुपपन्नः । अत एव द्वितीयादेः कर्मत्वादिशक्तिवाचकत्वमिति सिद्धान्ते प्राप्तोदकादिबहुव्रीहेर्धर्मिबोधकतानिर्वाहः ।

लाभान्न विभक्तिवाच्यता किं त्वाश्रयत्वमात्रं वाच्यं तदेव च तादात्म्येनावच्छेदकम्। करणतृतीयायाश्च व्यापारोऽपि पञ्चम्या विभागमात्रं चतुर्थ्या उद्देश्यत्वमात्रमत एवाऽऽकृत्यधिकरणमपि न विरुध्यत इत्यभिप्रेत्याऽऽह–**शक्तिरेव वेति**।

---

शक्तिमदभेदापन्नाया एव शक्तेर्विभक्तिवाच्यत्वात्। तिङ्कृदादे तु पचति, पक्ता, पक्व इत्यादित एवाऽऽश्रयप्रतीतेः 'युष्मद्युपपदे समानाधिकरणे' इति व्यवहारानुरोधाच्चाऽऽश्रये शक्तिर्युक्तेत्याशयेनाऽऽह–**आश्रयस्यापीत्यादिना**। आश्रयस्यापि प्रकृत्यैव लाभान्न विभक्तिवाच्यतेत्यन्वयः। **न विभक्तीति**। न द्वितीयादिविभक्तिवाच्यतेत्यर्थः। नन्वाश्रयत्वस्य वाच्यत्वे आश्रयतात्वस्य शक्यतावच्छेदकत्वमुपेयं, तथा च गौरवं, तस्य तदाश्रयाद्यतिरिक्तावृत्तित्वे सति सकलतदाश्रयवृत्तित्वरूपत्वादित्यत आह–**तदेवेति**। आश्रयत्वमेवेत्यर्थः। एवकारेणाऽऽश्रयतात्वव्यवच्छेदः। ननु तद्वृत्तेस्तस्य कथं तन्निष्ठवाच्यतावच्छेदकत्वमित्याशङ्क्याऽऽह–**तादात्म्येनेति**। तादात्म्यस्य वृत्त्यनियामकत्वेऽपि संबन्धित्वं तेन संभवत्येवेत्याश्रयत्वस्य तादात्म्येन स्वसंबन्धितया न स्वनिष्ठवाच्यतावच्छेदकत्वानुपपत्तिरिति भावः। **व्यापारोऽपीति**। अत्रापिनाऽऽश्रयसमुच्चयः। **विभागमात्रमिति**। मात्रपदेनाऽऽश्रयत्वव्यवच्छेदः। उद्देश्यत्वमात्रमित्यनेन मात्रशब्देनाऽऽश्रयत्वस्य व्यवच्छेदः। **अत एवेति**। द्वितीयादेः कर्मत्वादिशक्तिवाचकत्वप्रतिपादनादेवेत्यर्थः। **आकृत्याधिकरणमिति**। ( जै. सू. १।३।३० ) इत्यत्र हि व्रीहीनवहन्ति, गामानय, पशुमालभेत, इत्यादिप्रयोगेषु व्रीह्यादिशब्दानां व्यक्तिरर्थः। कुतः। अवहननादिक्रियाभिर्व्यक्तेरन्वेतुं शक्यत्वात्। न ह्याकृतिरवहन्तुमानेतुमालब्धुं वा योग्या। तस्माद्व्यक्तिः पदार्थः, इति पूर्वपक्षयित्वा, अनन्ता हि व्यक्तयः, अतीतानागतानामनेकदेशवर्तिनां गवामियत्ताया अनवधारणात्। किं च शुक्लव्यक्तौ व्युत्पन्नो गोशब्दः कृष्णव्यक्तौ प्रयुज्यमानः स्वार्थं व्यभिचरेत्। तस्मादानन्त्यव्यभिचाराभ्यां न व्यक्तौ व्युत्पत्तिः संभवति। किं तु नहि द्रव्यपदार्थकस्य चाऽऽकृतिर्न पदार्थ इति भाष्यादिविशिष्टं वाच्यम्। तत्र नागृहीतविशेषणा बुद्धिर्विशेष्य उपजायते, इति, विशेष्यं नाभिधा गच्छेत्क्षीणशक्तिर्विशेषणे, इति च न्यायाच्चाऽऽकृतेरेव शब्दार्थत्वमुचितम्। यद्याकृतावहननादिक्रिया न पर्यवस्येत्तर्हि व्यक्तिस्तत्रोपलक्षणीया। किं च श्येनाचितं चिन्वीतेत्यादावाकृतेरेव सादृश्यप्रतियोगितया कार्यान्वयो दृश्यते। तस्मादाकृतिः पदार्थ

( सुबर्थनिर्णयः )

षण्णामपीति शेषः। "षष्ठी शेषे" [ पा० सू० २-३-५० ] इति सूत्रात्तस्याः संबन्धमात्रं वाच्यम्। कारकषष्ठ्यास्तु शक्तिरेवेत्यूह्यम्। "सप्तमीपञ्चम्यौ कारकमध्ये" [ पा० सू० २-३-७ ] इति सूत्रे शक्तिः कारकमिति

---

इति सिद्धान्तितं न विरुद्धं भवतीति मन्यमान आह—**शक्तिरेव वेति**। षण्णामपि कारकविभक्तीनां कर्मत्वादिशक्तिरेवार्थ इत्यर्थः।

एवं कारकविभक्त्यर्थं प्रतिपाद्य प्रसङ्गसंगत्या षष्ठ्यर्थं प्रतिपादयति कारिकायां—**संबन्ध इति। शेष षष्ठी इति**। कारकप्रातिपदिकार्थव्यतिरिक्तः स्वस्वामिभावादिसंबन्धः शेषपदार्थस्तत्र षष्ठीविधानात्तस्याः संबन्धोऽर्थ इत्यर्थः। तत्रेतरविभक्तीनामेकीयमते धर्मिवाचकत्ववदस्या अपि तथा भ्रमः स्यात्तं निराकुर्वन्नाह सारे—**संबन्धमात्रमिति**। मात्रपदेन संबन्धिव्यवच्छेदः। स च संबन्धः क्वचित्संबन्धत्वसामान्यरूपेण वाच्यः। यथा मातुः स्मरतीत्यादौ। क्वचित्तु विशेषरूपेण वाच्यः। यथा—राजपुरुष इत्यादौ। **कारकषष्ठ्या** इति। कर्तृकर्मणोः कृतीत्यादिसूत्रविहितषष्ठ्यास्तु तत्तत्कारकत्वशक्तिरर्थः। **शक्तिः कारकमितीति**। अयं भावः—सप्तमीपञ्चम्यौ—( पा. सू. २। ३। ७ ) अत्र कारकशब्दः कर्तृत्वादिशक्तिपरः, न तु कर्त्रादिपरः, व्याख्यानात्। मध्यस्य पूर्वपरावधिद्वयसापेक्षत्वात्कारकयोर्मध्यमिति विग्रहः। कालाध्वनोरित्यनुवर्तते। तथा च शक्तिद्वयमध्ये यौ कालाध्वानौ तद्वाचकात्सप्तमीपञ्चम्यौ स्त इति तदर्थः। उदा०—अद्य भुक्त्वाऽयं द्व्यहे द्व्यहाद्वा भोक्तेति। अद्यतनभुजिक्रियानिरूपितकर्तृत्वमेकं, द्व्यहोत्तरदिनगतभुजिक्रियानिरूपितकर्तृत्वं चापरमिति कर्तृत्वशक्त्योर्मध्येऽयं कालः। यदि चात्र कारकशब्दः कर्त्रादिपरः स्यात्तर्हीह, क्त्वाप्रत्ययस्य कर्त्रैकत्वे विधानाद्देवदत्तरूपस्य कर्तुरेकत्वान्मध्यव्यवहारासंभवात्सप्तमीपञ्चम्यौ न स्याताम्। कर्तृत्वशक्तिस्तु अधिकरणकालभेदेन भुजिक्रियाभेदाद्भिद्यत एवेति। इत्यादि भाष्ये दृश्यते इत्यर्थः। अनन्तरकालवृत्तित्वं सप्तमीपञ्चमीविभक्त्यर्थः। अद्यपदार्थैतद्दिवसाधिकरणकत्वस्य भोजनक्रियायामन्वयः, तदन्वितक्त्वान्तप्रतिपाद्यभोजनक्रियायाः स्वोत्तरकालवृत्तित्वस्वसमानकर्तृकत्वोभयसंबन्धेन भोजने, प्रकृतविभक्त्यर्थस्यापि तत्रैव। एवं चैतद्दिवसाधिकरणकभोजनोत्तरकालिकं तथाविधभोजनसमानकर्तृकमेतद्दिवसानन्तरव्यहानन्तरकालवृत्ति यद्भोजनं तदाश्रय इत्यर्थः। इहस्थोऽयं क्रोशे क्रोशाद्वा लक्ष्यं विध्येदित्यत्रानन्तरदेशवृत्तित्वं विभक्त्य-

पक्षस्य भाष्ये दर्शनात् । एवं च देवदत्तस्य गौर्ब्राह्मणाय गेहाद्गङ्गायां हस्तेन मया दीयत इत्यत्र देवदत्तसंबन्धिनी या गौस्तदभिन्नाश्रयकत्यागानुकूलो ब्राह्मणोद्देश्यको गेहनिष्ठविभागजनको गङ्गाधिकरणको हस्तकरणको मन्निष्ठो व्यापार इति बोधः । यथायथम् । उक्तप्रकारेण । अत्र मानमुपदर्शयन्घटं जानातीत्यादौ द्वितीयाया विषयतायां लक्षणेति बह्वाकुलं वदतो नैयायिकादीन्प्रत्याह—सुपां कर्मेति । अयं भावः—

" सुपां कर्मादयोऽप्यर्थाः संख्या चैव तथा तिङाम् ।

---

र्थः । इहशब्दप्रतिपाद्यस्यैतद्देशाधिकरणकत्वस्य स्थितावन्वयः । तादृशस्थितेः कृदर्थाश्रये, तस्याऽऽख्यातार्थकर्तरि, तस्य व्यधनक्रियायां तत्रैव क्रोशानन्तरदेशस्थितलक्ष्यकर्मकत्वस्य । तथा चैतद्देशाधिकरणकस्थितिकर्तृकर्तृकमेतद्देशानन्तरक्रोशानन्तरदेशस्थितलक्ष्यकर्मकं संभावनाविषयीभूतं व्यधनमिति बोध इति ज्ञेयम् ।

एवं सुब्विभक्त्यर्थानुपवर्ण्य तदनुसारेण संबन्धसहित—सकलकारकघटित—वाक्यार्थबोधं वर्णयति—एवं चेति । उक्तरीत्या द्वितीयादीनां कर्तृकर्मादिधर्मिवाचकत्वे स्थिते चेत्यर्थः । देवदत्तस्येत्यादि । देवदत्तस्येति स्वस्वामिभावसंबन्धे षष्ठी । देवदत्तस्योक्तसंबन्धेन गव्यन्वयः । गौरिति कर्म । ब्राह्मणायेति संप्रदानम् । गेहादित्यपादानम् । गङ्गायामित्यधिकरणम् । हस्तेनेति करणम् । मयेति कर्तृकारकम् । दीयत इति कर्मणि क्रियापदम् । एतत्सर्वमनुसंधाय वाक्यार्थबोधं निर्दिशति—देवदत्तसंबन्धिनीत्यादिना मन्निष्ठो व्यापार इत्यन्तेन । कारिकास्थं यथायथमिति पदं विवृणोति—उक्तप्रकारेणेति । यथास्वं यथायथमिति निपातनम् । यादृशार्थबोधने या विभक्तिः समर्था तद्विभक्तेः सोऽर्थोऽवगन्तव्यः । तदुक्तं पूर्वं सारे—द्वितीयातृतीयासप्तमीनामाश्रयोऽर्थ इत्यादि । अत्रेति । सुपां कर्मादिधर्मिवाचकत्वे इत्यर्थः । विषयतायामिति । घटं जानातीत्यतो घटविषयकं ज्ञानमिति बोधानुभवाद्द्वितीयाविभक्तेस्तादृशस्थले विषयतायां लक्षणेति वदतो नैयायिकप्राचीनान्प्रत्याह—सुपां कर्मेतीति । एतदर्थं विशदयति—अयं भाव इत्यादिना । सुपां कर्मादयोऽप्यर्थाः । संख्याचेति । कर्मादय इत्यादिपदेन करणादिकारकान्तरग्रहः । अपिशब्देन शक्तिः कारकमिति 'सप्तमीपञ्चम्यौ' इति सूत्रभाष्योक्तकर्मत्वादिशक्तयो गृह्यन्ते । तथा तिङा-

प्रसिद्धो नियमस्तत्र नियमः प्रकृतेषु च ”

मिति । तद्वत्तिङामपि कर्तृकर्मणी संख्या चार्थ इत्यर्थः । तत्रेति । सुप्सु तिङ्क्षु चेत्यर्थः । नियम इति । नियमो हि द्विविधः । प्रत्ययनियमोऽर्थनियमश्चेति । तत्र प्रत्ययनियमोऽपि द्विविधः । सामान्यापेक्षः प्रकृतार्थापेक्षश्चेति । तत्र प्रातिपदिकार्थ एव प्रथमा कर्मण्येव द्वितीया, इत्येवंरूपः प्रत्ययनियमः । यत एवकारस्ततोऽन्यत्र नियम इत्यभियुक्तोक्तेः । प्रातिपदिकार्थादन्यत्र प्रथमा न, कर्मार्थादन्यत्र द्वितीया न, इत्यर्थान्तरे प्रथमाद्वितीययोर्व्यावृत्तिपर्यवसानात् । नियमो व्यावृत्तिः । कर्मणि द्वितीयैव, प्रातिपदिकार्थे प्रथमैवेति अर्थनियमः । यत एवकार इति पूर्वोक्तयुक्तेः । कर्मणि अन्या नेति अन्यासां कर्मार्थसंबन्धस्य निवृत्तिपर्यवसानात् । तत्र द्विविधप्रत्ययनियममध्ये यदि प्रातिपदिकाच्चेत्प्रथमा तर्हि कर्मादियोग्यतद्रहित प्रातिपदिकार्थ एव, न तु प्रातिपदिकार्थत्वसमानाधिकरणकर्मत्वाद्याधिक्ये, इत्येवं सामान्यापेक्षप्रत्ययनियम आश्रीयते तदा अव्ययार्थे लिङ्गसंख्याकारकत्वानामभावादव्ययानां कर्मादियोग्यत्वाभावादव्ययेभ्यो विभक्तिर्न प्राप्नोतीत्याह—नियम इति । अर्थनियमः प्रसिद्ध इत्यर्थः । तत्र कर्माद्यर्थयोग्यप्रातिपदिकाच्चेत्कर्मणि विभक्तिस्तदा द्वितीयैव, कर्मादिरहिते तद्योग्यप्रातिपदिकार्थे प्रातिपदिकाच्चेद्विभक्तिस्तदा प्रथमैव, इत्यर्थनियमपक्षे कर्मणि द्वितीयैव, प्रातिपदिकार्थे प्रथमैवेति नियमेन हि यत्र कर्माद्यर्थसंभवस्तत्रैवान्यासां निवृत्तिः संपाद्यत इति प्रत्यासत्त्या कर्माद्यर्थयोग्येत्यस्य लाभः । तथा च कर्माद्यर्थशून्यार्थकाव्ययादपि विभक्तिः सिध्यति । कर्माद्यर्थयोग्याच्चेद्विभक्तिः करणीया तदा अमुकार्थे प्रथमा, अमुकार्थे द्वितीया कर्तव्येति नियमाकारः संपन्नः । ततश्चाव्ययानां कर्माद्यर्थयोग्यत्वाभावेन नियमाकारे प्रवेशाभावान्नियमाप्रवृत्तौ सामान्यसूत्रेणाव्ययात्सप्तापि विभक्तयो भवन्तीति भावः । एवं प्रत्ययनियमपक्षेऽप्यव्ययाद्विभक्तिसिद्ध्यर्थमाह—नियमः प्रकृतेषु चेति । प्रकृतेष्वर्थेषु नियमः, प्रकृतार्थापेक्षः प्रत्ययनियम इति यावत् । अत्र पक्षे कर्माद्यर्थयोग्यप्रातिपदिकाच्चेद्द्वितीया तदा कर्मण्येव, न करणादौ । कर्मादियोग्ये तद्रहितप्रातिपदिकार्थ एव प्रथमा, न कर्मादौ । संख्यावदर्थयोग्यप्रातिपदिकादेकत्वादावेकवचनादि, न द्वित्वादाविति नियमाकारः । अत्रापि पक्षेऽव्ययानां नियमाकारे प्रवेशाभावान्नियमाप्रवृत्तौ प्रातिपदिकात्स्वादयो भवन्तीति सामान्यसूत्रेणाव्ययेभ्यः सप्तापि विभक्तयः सिध्यन्ति।

( सुबर्थनिर्णयः )

इति वार्तिकतद्भाष्याभ्यां कर्मादेर्वाच्यतायास्तन्नियमस्य च लाभः । तथा हि-" स्वौजसमौट् " ( पा० सू० ४-१-२ ) कर्मणि द्वितीया " ( पा० सू० २-३-२ " द्व्येकयोर्द्विवचनैकवचने " [ पा० सू० १-४-२२ ) इत्यादेः " लस्य " ( पा० सू० ३ ४-७७ ) " तिप्तस्झि " ( पा० सू० ३-४-७८ ) " तान्येकवचनद्विवचन-" [ १-४-१०२ ] इत्यादेरेकवाक्यतया कर्मादेस्तत्संख्यायाश्च वाच्यता लभ्यते । तथा तन्नियमश्च द्विविधो लभ्यते । द्वितीया कर्मण्येव तृतीया करण एवेत्येवमादिरर्थनियमः । कर्मणि द्वितीयैव करणे तृतीयैवेत्येवं शब्दनियमश्च । उभयथाऽपि सिद्धनियमाविरुद्धं लक्षणा-

---

केवलं सामान्यापेक्षप्रत्ययनियमपक्षेऽव्ययाद्विभक्तिर्न प्राप्नोतीति अव्ययादाप्सुप इति ज्ञापकात्सा साध्या । यद्यपि सुपां संख्याकर्मोभयार्थकत्वेन कर्मण्येव नान्यत्र, प्रातिपदिकार्थ एव नान्यत्रेति वक्तुमशक्यं तथापि कर्मण्येव, न तु तदभावे, प्रातिपदिकार्थ एव, न तु तदभावे, इत्याकारो वक्तुं शक्यः । तदभावे, इत्यस्य कर्मत्वाभावसमानाधिकरणार्थान्तरे करणादौ, प्रातिपदिकार्थाभावसमानाधिकरणार्थान्तरे कर्त्रादावित्यर्थः । न च प्रातिपदिकार्थाभावसमानाधिकरणार्थान्तरस्याप्रसिद्धया नियमव्यावर्त्याप्रसिद्धिरिति वाच्यम् । प्रातिपदिकार्थ एव प्रथमा, न तु निरर्थके, इति तद्व्यावृत्तेरेव फलत्वात् । न च निरर्थकाप्रसिद्धिः । चवैतुहीत्यादिपादपूरणार्थकानामनर्थकनिपातानां च सत्त्वात् । तेषां स्वार्थद्रव्य(प्रवृत्तिनिमित्त-तदाश्रय ) रूपप्रातिपदिकार्थाभाववत्त्वात् । न चानर्थके विभक्तिव्यावृत्तिरिष्टैवेति वाच्यम् । धार्मिकोऽसि वै त्वा सुखं प्राप्नोतीत्यत्र ' सपूर्वायाः प्रथमाया विभाषा ' इति त्वादेशप्रवृत्तेरेव फलत्वादनर्थके विभक्तिव्यावृत्तेरनिष्टत्वात् । ' अव्ययादाप्सुप ' इति ज्ञापकसत्त्वे तु अनर्थकनिपातेभ्यः प्रथमाया अप्राप्तिरूपो दोषो न भवति । एवं च प्रकृतश्लोकवार्तिकात्तत्स्थभाष्यात्कर्मादेर्धर्मिणो वाच्यता, तथा कर्माद्यर्थनियमश्च लभ्यते । तथा च द्वितीयाया विषयत्वाद्यर्थे लक्षणाङ्गीकरणं नैयायिकानामुक्तभाष्यवार्तिकविरुद्धत्वादयुक्तमित्याशयेनाऽऽह-उभयथाऽपि सिद्धनियमाविरुद्धमिति । तत्र कर्मण्येव द्वितीयेत्यादिप्रत्ययनियमविरोधो द्वितीयाया विषयतायां लक्षणाङ्गीकारे स्पष्ट एव । विषयतायाः शेषत्वाच्छेषे षष्ठयेवेति नियमविरोधोऽर्थनियमपक्षेऽपीति ज्ञेयम् । तथा च नियमविरुद्धलक्षणादिकमसाधुत्वप्रयोजकमिति कृत्वा विषयतायां निरुक्तकर्मत्वात्मक-

दिकमसाधुत्वमप्रयोजकमिति याज्ञे कर्मणि " नानृतं वदेत् " इतिनिषेधविषयो भवत्येवेति स्वेच्छया लक्षणाऽपि विभक्तावप्रयोजिकैव । अत एव " विभक्तौ न लक्षणा " इत्यादिर्नैयायिकवृद्धानां व्यवहार इति दिक् ॥ १ ॥ ( २४ )

इति रङ्गोजिभट्टात्मजकोण्डभट्टविरचिते वैयाकरणभूषणसारे
सुबर्थनिर्णयः समाप्तः ॥

---

( अथ नामार्थनिर्णयः ) ।

---

नामार्थानाह—

---

त्त्वाभावात्तत्र द्वितीयायाः शास्त्रेणाविधानात् । विषयतातात्पर्येण द्वितीयोच्चारणस्यानृतवदनत्वाद्याज्ञे कर्माणि नानृतं वदेदिति निषेधः प्रवर्तत एव । एवं च स्वानुभवबलेन लक्षणाङ्गीकरणमपि विभक्तिप्रवृत्तौ कारणं न भवतीत्यत आह—अत एवेति । विभक्तिप्रवृत्तौ लक्षणाया निमित्तत्वाभावादेवेत्यर्थः । व्यवहार इति । विभक्तौ लक्षणा न कर्तव्येति प्राचीननैयायिकानां व्यवहार इत्यर्थः । तादृशव्यवहारेऽयमेवाभिसंधिः—यत्-लाक्षणिकेऽर्थे शास्त्रेण तत्तदर्थे विहिता विभक्तिर्न प्रवर्तत इति । तथा च नैयायिकनव्यानां न केवलं व्याकरणविरोधोऽपि तु स्वीयवृद्धप्राचीननैयायिकसिद्धान्तविरोधोऽपीति नव्यनैयायिकोक्तिरुपेक्ष्यैवेति भावः । दिगिति । दिगर्थस्तु-विषयत्वाख्यनुकूलव्यापारस्य घटं जानातीत्यादौ ज्ञाधात्वर्थतया मुख्यकर्मतयैवोक्तप्रयोगोपपत्तिसंभवेन स्वेच्छया लक्षणाभ्युपगमे विभक्त्यर्थनिर्देशस्य नैष्फल्यापत्त्याऽत्यन्तायुक्तं तत्र लक्षणाङ्गीकरणमिति ॥ २४ ॥

इति वैयाकरणभूषणसारव्याख्यायां शांकर्यां सुबर्थनिर्णयनिरूपणम् ।

रङ्गभट्टतनूजेन शंकरेण विनिर्मिते ।
व्याख्याने भूषणे पूर्णः सुबर्थानां विनिर्णयः ॥ ३ ॥

---

## अथ नामार्थनिर्णयः ।

---

सकलनाममूलभूतधात्वर्थास्तत्प्रकृतिकतिङर्थास्तत्प्रसङ्गेन सुबर्थाश्च निरूप्यावसरसंगत्या नामार्थान्निरूपयतीत्याह—नामार्थानिति । प्रातिपदि-

( नामार्थनिर्णयः )

एकं द्विकं त्रिकं चाथ चतुष्कं पञ्चकं तथा।
नामार्थ इति सर्वेऽमी पक्षाः शास्त्रे निरूपिताः ॥१॥ (२५)

एकं जातिः, लाघवेन तस्या एव वाच्यत्वौचित्यात्। अनेकव्यक्तीनां वाच्यत्वे गौरवात्। न च व्यक्तीनामपि प्रत्येकमेकत्वाद्विनिगमनाविरहः, एवं ह्येकस्या-

---

कार्थानित्यर्थः। नामार्थाश्च—एकं द्विकं त्रिकमिति। एकादिशब्दानां साधारणतयाऽनभिमतार्थपरत्वशङ्कानिवृत्तये प्रकृते विवक्षितानर्थानाह—एकं जातिरित्यादिना। जातिपदेनात्र तत्तत्पदार्थगतासाधारणो धर्मो विवक्षितः, न तु नित्यत्वे सति एकत्वे च सत्यनेकसमवेतत्वरूपा जातिः असाधारणत्वं च तत्पदार्थेतरावृत्तित्वे सति तत्पदार्थवृत्तित्वम्। तेनाऽऽकाशत्वाभावत्वादीनामनेकसमवेतत्वरूपजातित्वाभावेऽपि नाव्याप्तिः। तत्तत्पदार्थगतासाधारणधर्मस्यैव शास्त्रे स्वार्थशब्देन व्यवहारः। अयमेव च प्रवृत्तिनिमित्तमित्युच्यते। जातेः शब्दशक्यत्वे प्रमाणं तु 'सवर्णेऽण्ग्रहणमपरिभाष्यमाकृतिग्रहणात्सिद्धम्' इति जात्याख्यायामिति सूत्रस्थं वार्तिकं, 'आकृतिं वाजप्यायनः' इति सरूपसूत्रस्थं भाष्यं च बोध्यम्। अयं च जातिशक्तिवादो मीमांसकाभिमतः। ते हि—शब्दानां जातौ शक्तिर्लाघवात्। जातेरेकत्वेनैकविषयिण्याः शक्तेरप्येकत्वेन लाघवादिति भावः। ननु शक्तिग्राहकशिरोमणिना व्यवहारेण व्यक्तावेव शब्दानां शक्त्यवधारणात्कथं जातौ शक्तिसिद्धिरिति शङ्कायां—व्यक्तीनामानन्त्येन तत्र शक्तौ गौरवात्। भूतभविष्यद्वर्तमानानां गोव्यक्तीनामनन्तत्वादेकदोपस्थित्यसंभवेन तावतीषु शक्तिग्रहासंभवात्तत्तदाश्रयभेदेन नानाशक्तिकल्पने गौरवात्। ननु शक्तिगौरवपरिहारायैकस्यामेव व्यक्तौ शक्तिः कल्प्यतामिति चेन्न॥ व्यक्त्यन्तरे शक्त्यभावेन तद्बोधो न स्यात्। अतो जातावेव शक्तिर्निर्धार्यते। नन्वेवं गामानय व्रीहीनवहन्तीत्यादौ कथमन्वयः? जातावानयनावहननयोरसंभवादिति चेत्—तत्र स्वाश्रयलक्षकत्वेनान्वयनिर्वाहः। एवं च सर्वत्र लक्षणयैव स्वाश्रयत्वसंबन्धेन व्यक्तिभानसंभवे तत्र शक्तिकल्पनं निष्फलमेवेति प्राहुः। एतन्मतानुसारेण जातेः शक्यत्वे युक्तिं प्रदर्शयति—लाघवेनेति। जातेरेकत्वेनैकविषयकशक्तेरप्येकत्वसंभवेन लाघवात्तस्या एव वाच्यत्वस्योचितत्वादित्यर्थः। गौरवादिति। शक्तिग्राहकेषु मुख्यस्य नयनानयनादिव्यवहारस्य व्यक्तावेवाऽऽश्रयेण संभवाद् व्यक्तावेव शब्दशक्तेरुचितत्वेऽपि व्यक्तीनामनन्तत्वात्सर्वासामेक-

दोपस्थित्यसंभवेन सकलव्यक्तिषु शक्तिग्रहोपदेशासंभवादेकस्यां व्यक्तौ शक्तिग्रहे, शक्त्यविषयस्य व्यक्त्यन्तरस्य शाब्दबोधे भानानापत्त्या प्रतिव्यक्ति शक्तिकल्पने शक्तीनामप्यनन्तत्वेन गौरवान्न व्यक्तौ शब्दशक्तिः कल्पयितुं युज्यत इति भावः। ननु जातिशक्तिवादे जातेर्वाच्यत्वेन तादृशजातिगतगोत्वत्वादिधर्मे शक्यतावच्छेदकत्वं स्वीकार्यं, ततश्च तस्य ( गोत्वत्वरूपशक्यतावच्छेदकस्य ) समवायसंबन्धेन गवेतरावृत्तित्वे सति सकलगोवृत्तित्वरूपस्य शक्यत्वमावश्यकं, शक्यतावच्छेदकत्वस्य शक्यैकदेशे प्रकारत्वरूपत्वादिति विपरीतं गौरवमिति चेन्न। अलक्ष्यस्यापि लक्ष्यतावच्छेदकत्ववदशक्यस्यापि शक्यतावच्छेदकत्वसंभवाच्छक्यतावच्छेदकस्य शक्यत्वावश्यकत्वे मानाभावात्। अपरे तु यथा व्यक्तिशक्तिमते गोत्वाद्यंशे शक्तिः, शक्यतावच्छेदकता वा निरवच्छिन्ना ( विशेषणीभूतधर्मान्तराघटिता ) तथा जातिशक्तिमतेऽपि सा शक्तिर्निरवच्छिन्ना, नाम— विशेषणीभूतधर्मान्तराघटितेति प्राहुः। यथाऽयं घट इत्यादौ घटज्ञानस्य घटत्वप्रकारकत्वेन सावच्छिन्नत्वेऽ( विशेषणीभूतघटत्वरूपधर्मान्तरघटितत्वेऽ )पि घटत्वज्ञानस्य घटत्वत्वरूपविशेषणीभूतधर्मान्तराघटितत्वेन निरवच्छिन्नत्वं तद्वद्गोत्वरूपजातिज्ञानस्य गोत्वत्वरूपधर्मान्तराघटितत्वेन निरवच्छिन्नत्वान्न गौरवमिति भावः।

ननु व्यक्तीनामानन्त्येऽपि प्रत्येकं व्यक्तेरेकत्वादेकैव शक्तिः। तथा च जातिशक्तिव्यक्तिशक्तिपक्षयोरविशेषाज्जातिशक्तिवाद एव कथं पक्षपात इति चेत्। एकव्यक्तिशक्तिपक्षे सकलव्यक्तीनां तादृशशक्तौ संग्रहो न भवतीति। ननु जातिशक्तिपक्षेऽपि शक्त्या जातेरुपस्थितावपि व्यक्तौ शक्त्यभावेनैकस्या अपि व्यक्तेरनुपस्थानात्कथं सकलव्यक्तिसंग्रहः। न च तत्पक्षे माऽस्त्वेव व्यक्त्युपस्थितिरिति वाच्यम्। आनयनादिकार्यान्वयाय व्यक्त्युपस्थितेरावश्यकत्वादिति चेत्सत्यम्। लक्षणया सकलव्यक्तिसंग्रहसंभवात्। तथा च जातिशक्तिवादिभिः प्रतिव्यक्ति लक्षणया सकलव्यक्तयः संगृह्यन्ते। व्यक्तिशक्तिवादिभिस्तु एकव्यक्तिशक्तिकल्पनेन व्यक्त्यन्तरे लक्षणयैव सकलव्यक्तिसंग्रहः क्रियत इति जातिशक्तिव्यक्तिशक्तिपक्षयोरुभयोरपि समानमेव वृत्तिनानात्वकल्पनम्। एवं च जातिशक्तिवादेऽपि लाघवाभाव इत्याशयेनाऽऽह—**न च व्यक्तीनामपीति। विनिगमनाविरह इति**। अन्यतरकोटिनिश्चायकयुक्तिशून्यत्वमित्यर्थः। जा-

मेव व्यक्तौ शक्त्यभ्युपगमे व्यक्त्यन्तरे लक्षणायां स्वसमवेताश्रयत्वं संसर्ग इति गौरवम् । जात्या तु सहाऽऽश्रयत्वमेव संसर्ग इति लाघवम् । किं चैवं विशिष्टवाच्यत्वमपेक्ष्य नागृहीतविशेषणन्यायेन जातिरेव वाच्येति युक्तं, व्यक्तिबोधस्तु ल-

---

तिशक्तिपक्षपातिनीं लाघवरूपां युक्तिं प्रतिपादयन्नादौ व्यक्तिशक्तिपक्षे गौरवं प्रदर्शयति—**एवं हीत्यादिना** । **व्यक्त्यन्तरे लक्षणायामिति** । स्वीक्रियमाणायामिति शेषः । तादृशलक्षणास्वीकारश्च व्यक्त्यन्तरबोधान्यथानुपपत्त्याऽऽवश्यकः । **स्वसमवेतेति** । स्वस्मिन्समवेता या जातिस्तदाश्रयत्वमित्यर्थः । अत्र स्वशब्देन शक्त्याश्रयत्वेनाभिमता पीतगोव्यक्तिः, तत्समवेता—तस्यां समवायसंबन्धेन विद्यमाना गोत्वजातिः, तदाश्रयत्वं श्वेतगव्यपीति लक्षणसमन्वयः । जातिशक्तिपक्षेऽपि व्यक्तौ लक्षणाङ्गीकारस्तु आनयनादिकार्यान्वयान्यथानुपपत्त्याऽऽवश्यकस्तदाह—**जात्या त्विति** । **आश्रयत्वमिति** । स्वाश्रयत्वमित्यर्थः स्वं गोत्वं तदाश्रयत्वं सकलगोव्यक्तिष्विति लक्षणसमन्वयः । ततश्च जातिपक्षे जातौ शक्तिर्व्यक्तौ लक्षणा, व्यक्तिपक्षे तु व्यक्तौ शक्तिर्व्यक्त्यन्तरे लक्षणेति उभयोरपि पक्षयोः सकलव्यक्तिसंग्रहोपपत्त्यै शक्तिसहकृतलक्षणावृत्त्यङ्गीकारस्याऽऽवश्यकत्वेऽपि जातिशक्तिपक्षे संनिकृष्टा लक्षणा, व्यक्तिशक्तिपक्षे विप्रकृष्टा लक्षणेति जातिपक्षे लाघवं, व्यक्तिपक्षे च गौरवमस्त्येव । तथा हि—लक्षणा हि स्वशक्यसंबन्धः । स्वं—गोशब्दः, स्वशक्य—गोत्वजातिः, तत्संबन्धः साक्षात्सकलगोव्यक्तिष्विति शक्यसंबन्धः संनिकृष्यते जातिशक्तिपक्षे । व्यक्तिशक्तिपक्षे तु—स्वं गोशब्दः, स्वशक्यं—पीतगोव्यक्तिः, तत्संबन्धो व्यक्त्यन्तरे साक्षान्नास्तीति कृत्वा तत्समवेतगोत्वद्वारा व्यक्त्यन्तरसंबन्धो वाच्यो भवति । तथा च स्वशक्यं—पीतगोव्यक्तिः, तत्समवेतं-तत्र समवायसंबन्धेन विद्यमानं गोत्वं, तत्संबन्धः श्वेतादिसकलगोव्यक्त्यन्तरेष्विति व्यक्तेर्व्यक्त्यन्तरसंबन्धो विप्रकृष्यत इति कृत्वा शक्यसंबन्धविप्रकर्षरूपं गौरवं व्यक्तिशक्तिवादे, जातिशक्तिवादे तु तन्नेति शक्यसंबन्धसंनिकर्षलक्षणं लाघवमिति भावः । तथा चोक्तलाघवं विनिगमकमिति न विनिगमनाविरह इत्याशयः । ननु गोत्वादितत्तज्जात्यनुगतीकृतासु सकलव्यक्तिषु शक्त्यभ्युपगमान्न व्यक्त्यानन्त्यप्रयुक्तशक्त्यानन्त्यगौरवमित्याशयवानाह—**किं चैवं विशिष्टवाच्यत्वेति** । एवं—विशिष्टशक्तिस्वीकारे । **नागृहीतेति** । नागृहीतविशेषणा बुद्धिर्विशेष्यमवगाहत इति हि न्यायशरीरम् । विशिष्टबुद्धिं प्रति

क्षणया । एवं च तत्र विभक्त्यर्थान्वयोऽप्युपपद्यत इति दिक् । यद्वा केवलव्यक्तिरेवैकशब्दार्थः । केवलव्यक्तिपक्ष एवाण्ग्रहणस्यैकशेषस्य चाऽऽरम्भेण त-

---

विशेषणज्ञानस्य कारणत्वादगृहीतविशेषणा एतादृशी बुद्धिर्न विशेषणविशिष्टविशेष्यविषयिणी भवति । नागृहीतेति नञ्द्वयोपादानेनाऽऽदौ विशेषणविषयकज्ञानस्याऽऽवश्यकत्वं सूचितम् । तथा च विशेष्यज्ञानात्पूर्वं विशेषणज्ञानमवश्यमपेक्षितम् । जाते च विशेषणज्ञाने तावतैव क्षीणा सती शक्तिर्विशेष्यं न प्राप्नोति । तदुक्तम्—' विशेष्यं नाभिधा गच्छेत्क्षीणशक्तिर्विशेषणे ' इति । एवं च विशिष्टशक्तिवादो गौरवग्रस्तत्वाज्जातिशक्तिपक्ष एव पर्यवसन्न इति लाघवादुपजीव्यत्वाच्च जातिरेव वाच्येति युक्तमिति भावः । नन्वेवं जातेरेव वाच्यत्वाभ्युपगमे ततो व्यक्तिबोधो न स्यात् । न चाऽऽक्षेपात् पीनो देवदत्त इत्यत्र रात्रिभोजनवदिति वाच्यम् । वृत्त्यनुपस्थिततया गां दद्यादित्यादौ व्यक्तौ कर्मत्वाद्यन्वयानुपपत्तेः । प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वमिति व्युत्पत्तेः । पदार्थान्तरान्वयश्च व्यक्तौ न स्यात् । वृत्तिग्रहविशेष्य एव तदन्वयात् । अन्यथा घटमानयेति वाक्यश्रवणात्समवायेनोपस्थिताकाशेऽपि आनयनाद्यन्वयापत्तेः । अत आह—**व्यक्तिबोधास्त्विति । लक्षणयेति** । स्वाश्रयत्वसंबन्धेन लक्षणया व्यक्तिबोधः सुलभः । तथा च वृत्त्युपस्थितत्वाद्व्यक्तौ विभक्त्यर्थाद्यन्वयः संभवत्येवेत्यर्थः । ननु लक्षणायाः शक्यान्वयाद्यनुपपत्तिप्रतिसंधानसापेक्षत्वाद् गोत्वमस्तीत्यर्थेऽन्वयाद्यनुपपत्तिप्रतिसंधानाभावेन गौरस्तीति प्रयोगे गोत्वविशिष्टगोव्यक्तिबोधानापत्तिरिति चेत्—लक्षणयेत्यस्य निरूढलक्षणयेत्यर्थः । निरूढलक्षणायाः शक्त्यनतिरिक्तत्वात्तत्र नान्वयाद्यनुपपत्तिप्रतिसंधानापेक्षेति भावः । एतदाशयेनैवाऽऽह—**इति दिगिति** । जातिशक्तिमते दूषणमुद्भावयन् व्यक्तिशक्तिमते साधकं वदंश्चैकशब्दस्य व्यक्तिपरत्वं व्याचष्टे—**यद्वेति । केवलव्यक्तिरेवेति** । एवकारेण जातेर्व्यावृत्तिः । केवलशब्देनैव जातिव्यावृत्तिसिद्धावेवकारः स्पष्टार्थः । एकशब्दस्य केवलव्यक्तिपरत्वे हेतुमाह—**केवलव्यक्तिपक्ष इत्यादिना** । जातिविशिष्टव्यक्तेः पदार्थत्वमिति मते तु तज्जातिप्रकारकतदाश्रयविशेष्यकशाब्दबोधे जननीये, तज्जात्यवच्छिन्नविशेष्यताकशक्तिग्रहस्य कारणत्वात् ' अस्य च्वौ ', ' एरच् ' इत्यादावकारेकारादिभिरत्वादितत्तज्जात्याश्रयाष्टादशाकारादिव्यक्तिग्रहणसंभवेनाणुदित्सूत्रेऽण्ग्रहणं व्यर्थं स्यात्, केवलजातिशक्तिमतेऽपि तद्वैयर्थ्यं स्पष्ट-

स्यापि शास्त्रसिद्धत्वात् । युक्तं चैतत् । व्यवहारेण व्यक्तावेव तद्ग्रहणात् । संबन्धितावच्छेदकस्य जातेरैक्याच्छक्तिरप्येकैवेति न गौरवमपि । न चैवं घट-

---

मेव । किंतु केवलव्यक्तिशक्तिपक्षेऽष्टादशसंख्याकाकारादिव्यक्तिग्रहणसिद्ध्यर्थं तदावश्यकमित्यण्पदोपादानेन पाणिनिना मनसि केवलव्यक्तिशक्तिपक्ष एवानुसंहित इत्यनुमीयत इति भावः। तथा च केवलव्यक्तिशक्तिपक्षोऽपि शास्त्रशास्त्रकारसंमत इत्याशयः। तथा केवलजातिशक्तिपक्षे जातिविशिष्टव्यक्तिशक्तिपक्षे च तज्जात्यनुगतीकृतानेकव्यक्तीनामेकेनापि शब्देनाभिधानसंभवादेकशेषसूत्रं नाऽऽरम्भणीयम्। केवलव्यक्तिशक्तिपक्षे त्वेकेन शब्देनैकस्या एव व्यक्तेरभिधानाद् द्व्यादिव्यक्तिबोधार्थं द्व्यादिशब्दोपादानस्याऽऽवश्यकत्वेन तत्रेतरनिवृत्तिपूर्वकैकस्यावस्थानार्थं तदारम्भणीयम्। एकशेषसूत्रारम्भेण च पाणिनिमुनिना केवलव्यक्तिशक्तिपक्षो मनसि धृत इत्यवगम्यते। तथा च केवलव्यक्तिशक्तिपक्षः सरूपसूत्रस्यापि संमत इत्यर्थः। 'अण्ग्रहणस्य' इत्यस्य 'आरम्भेण' इत्यत्रान्वयः **एकशेषस्य चेति**। सरूपाणामितिसूत्रस्य चाऽऽरम्भेणेत्यर्थः। **तस्यापीति**। केवलव्यक्तिशक्तिपक्षस्यापीत्यर्थः। **शास्त्रसिद्धत्वादिति**। शास्त्रानुगृहीतत्वादित्यर्थः। एवं केवलव्यक्तिशक्तिपक्षे शास्त्रं प्रमाणमुक्त्वा तत्र युक्तिमपि प्रमाणयन्नाह—**युक्तं चैतादिति**। युक्तिसहमप्येतादित्यर्थः युक्तिमेव प्रदर्शयति—**व्यवहारेणेति**। घटमानयेति प्रयोजकवाक्यश्रवणानन्तरं प्रयोज्यचैत्रकर्तृकघटानयनादिरूपव्यवहारेण व्यक्तावेव शक्तिग्रहस्य निश्चयादित्यर्थः। ननु व्यक्तीनामानन्त्याच्छक्त्यानन्त्यं प्राप्नोति। कुत्रचिदेव व्यक्तौ शक्तिरिति नोक्तदोष इति चेत्—शक्त्यविषयव्यक्त्यन्तरस्यापि शाब्दबोधे भानाभ्युपगमे गोपदादश्वस्यापि भानापत्तिः। तद्विषयकशाब्दबोधे तद्विषयकशक्तिग्रहस्य कारणत्वामित्येवं शाब्दबोधहेतोः कार्यकारणभावस्य भङ्गापत्तिश्चेत्याशङ्कामपाकुर्वन्नाह—**संबन्धितावच्छेदकस्येति**। संबन्धी—संबन्धाश्रयः, संबन्धश्च—शक्तिः। शक्त्याश्रय इत्यर्थः। स एव शक्य इत्युच्यते। तस्मिञ्शक्यता, तदवच्छेदकस्य शक्यतावच्छेदकस्येति यावत्। जातेः—जातिरूपस्य तस्येति योजना। एवं च शक्यतावच्छेदकस्यैव विशेष्यतया विवक्षणान्नपुंसकनिर्देशः। शक्यतावच्छेदकस्येत्यस्य विशेषणतया विवक्षणे तु विशेषणस्य विशेष्यलिङ्गग्राहितया शक्यतावच्छेदिकायाः, इति वक्तव्यं स्यादिति भावः। **जातेरैक्यादिति**। जात्यनु-

( नामार्थनिर्णयः )

त्वमपि वाच्यं स्याच्छक्यतावच्छेदकत्वात् । तथा च नागृहीतविशेषणन्याया-त्तदेव वाच्यमस्त्विति शङ्क्यम् । अकारणत्वेऽपि कारणतावच्छेदकत्ववदलक्ष्य-त्वेऽपि लक्ष्यतावच्छेदकत्ववत्तथाऽत्रापि संभवात् ।

उक्तं च—

"आनन्त्येऽपि हि भावानामेकं कृत्वोपलक्षणम् ।
शब्दः सुकरसंबन्धो न च व्यभिचरिष्यति" इति ॥

---

गतीकृतासु व्यक्तिषु एकधर्मावच्छिन्नाया एकस्या एव शक्तेः सत्त्वान्न गौरवम् । शक्यतावच्छेदकस्यैक्याच्छक्तेरैक्यमिति तत्त्वम् । शङ्कते—न **चैवमिति**। एवं—घटत्वादेः शक्यतावच्छेदकत्वे । **शक्यतावच्छेदकत्वादिति** । शक्यत्वे सति शक्यैकदेशनिष्ठविशेष्यतावच्छेदकत्वरूपत्वाच्छक्यतावच्छेदकत्वस्य घटत्वा-देरपि वाच्यत्वमावश्यकमिति भावः। **तदेव वाच्यमिति**। तथा च केवलव्य-क्तिवाच्यतापक्षोऽत्यन्तासंभवग्रस्त इति तात्पर्यम्। **अकारणत्वेऽपीति** । अन्व-यव्यतिरेकादिना घटं प्रति दण्डस्य कारणत्वे गृहीते, दण्डत्वस्यान्यथासिद्धत्वेना, कारणत्वेऽपि कारणतावच्छेदकत्वाङ्गीकारवत्, तीरत्वस्य प्रवाहासंबन्धितयाऽल-क्ष्यत्वेऽपि लक्ष्यतावच्छेदकत्वस्वीकारवच्चाशक्यस्यापि घटत्वादेस्तादृशशक्यताव-च्छेदकत्वस्वीकारे बाधकाभावात्, शक्यत्वे सति शक्यैकदेशार्थनिष्ठविशेष्यता-निरूपितविशेषणतापन्नस्य शक्यतावच्छेदकत्वमिति नियमाङ्गीकारे मानाभाव इति भावः। उक्तेऽर्थेऽरुणाधिकरणस्थभट्टोक्तिं साधकतयोपन्यस्यति—**उक्तं चेति**। **आनन्त्येऽपीति** । भावानां—वाच्यत्वेनाभिमतानां घटादिव्यक्तीनां नानात्वादपरिच्छेद्यत्वेऽपि, एकं—अनुगतजात्यादिधर्मं, उपलक्षणं—अशक्य-त्वेऽपि शक्यव्यावर्तकं, कृत्वा—अङ्गीकृत्य, शक्यतावच्छेदकतया स्वीकुर्याद्यावत्, शब्दः—गवाद्यात्मकः, सुकरसंबन्धः—सुग्राह्यगवादिनिष्ठवाच्यतासंबन्धः न च—शक्तिग्रहाविषयव्यक्तिं न बोधयिष्यतीति कारिकार्थः । उपलक्षणस्य जात्यादेः स्वभावोऽयं यत्स्वाश्रयाणां सर्वेषां शक्तिग्रहविषयत्वं संपाद्य स्वयं शक्तिग्रहाविषयो बोधाविषयश्च । गोत्वादिसामान्यलक्षणया सर्वास्वेव व्यक्तिषु श-क्त्यवधारणादिति भावः । ननु जातिशक्तिवादेऽपि दानाद्यन्वयार्थं व्यक्तिबोध आवश्यकः, व्यक्तिशक्तिवादेऽपि शक्यतावच्छेदकत्वार्थमुपलक्षणतया जातेराश्रयणं चाऽऽवश्यकमिति कृत्वा निरुक्तपक्षद्वयापेक्षया विशिष्टशक्तिवाद एव युक्त इत्याह—

वस्तुतस्तु " न ह्याकृतिपदार्थकस्य द्रव्यं न पदार्थः " इति भाष्याद्विशिष्टं वाच्यम् । एकमित्यस्य चायमभिप्रायः-शक्तिज्ञाने च विषयतयाऽवच्छेदिका जातिरे-

---

वस्तुतस्त्विति । न ह्याकृतिपदार्थकस्येति । आकृतिः पदार्थो यस्येति बहुव्रीहिः । इति भाष्यादिति । सरूपसूत्रस्थमिदं भाष्यम् । विशिष्टं वाच्यमिति । जातिविशिष्टं गवादिकं गवादिशब्दवाच्यमित्यर्थः । परे तु न ह्याकृतिपदार्थकस्य द्रव्यं न पदार्थः, द्रव्यपदार्थकस्य वाऽऽकृतिर्न पदार्थः, उभयोरुभयं पदार्थः, कस्यचित्किंचित्प्रधानभूतं किंचिद्गुणभूतं, इत्यादिभाष्ये द्रव्यपदार्थवादे आकृतेर्विशेषणत्वोक्त्या तज्जात्यनुगतीकृतानेकव्यक्तिबोधस्यैकशब्देनैव संभवात्तत्पक्षेऽप्येकशेषो नाऽऽरम्भणीय इति सूचितम् । जातिवादे व्यक्तेर्व्यक्तिवादे जातेः शक्यतावच्छेदकत्वमिति च सूचितम् । इति प्राहुः । परं तु जातिविशिष्टा गवादिव्यक्तिरेव वाच्या, नतु गोविशिष्टा जातिः । गवादिपदाद्गोविशिष्टगोत्वजातिबोधस्याननुभवेन निरुक्तपक्षासंभवात् । ननु विशिष्टस्य पदार्थत्वपक्षे एकमिति विरुद्धं स्यादत आह—एकमित्यस्य चेति । चस्त्वर्थे । एकमित्यस्य त्वित्यर्थः अयमिति । वक्ष्यमाण इत्यर्थः । शक्तिज्ञाने चेति । अयं भावः—तद्विषयकशाब्दबोधे तद्विषयकशक्तिग्रहः कारणम् । यथा घटविषयकशाब्दबोधो घटविषयकशक्तिग्रहे सति जायते इत्यनुभवसाक्षिकम् । घटपदं घटत्ववदर्थस्य बोधकमित्येवं शक्तिज्ञाने सत्येव घटमानयेति वाक्ये घटपदाद्घटविषयकबोधो भवतीति यावत् । शक्तिज्ञानं कारणं, व्यक्तिबोधश्च कार्यम् । तत्र शक्तिज्ञानं यद्धर्मविशिष्टं सद् बोधकारणं स धर्मः कारणतावच्छेदकः । घटत्वविशिष्टबोधे च घटत्वविषयकमेव शक्तिज्ञानं कारणं भवतीति तादृशकारणतावच्छेदकं घटत्वादिजातिरित्यर्थः । शक्तिविषयः—शब्दः, अर्थः, बोधश्च बोधनिष्ठजन्यतानिरूपितजनकतारूपशक्तिविषयः शब्दो, वाचकः, पदजन्यबोधविषयत्वेन शक्तिविषयोऽर्थः, स तु वाच्य इत्यर्थः । तथा च शक्तिज्ञाननिष्ठा या बोधकारणता तद्विषये, विषयतासंबन्धेन पदजन्यबोधे यो विषयः—गवादिः, तन्निष्ठविषयतावच्छेदिका गोत्वादिजातिरेव, सा चैकैवेत्यर्थः । विषयतासंबन्धेन बोध्यत्वरूपशक्तिविषयो या गवादिव्यक्तिः, तन्निष्ठविषयताया अवच्छेदिका गोत्वादिजातिः, सा चैकैवेत्याशयेन एकं नामार्थ इति योज्यम् । एकमित्यस्य एकं सामान्यमेवान्तर्भाव्य कार्यकारणभावो ग्राह्य इत्यभिप्रायः । एकं सामान्यमेव तादृशकारणतावच्छेदकमिति भावः ।

( नामार्थनिर्णयः )

कैव । तथा च घटत्वप्रकारकविशिष्टबोधे घटत्वांशेऽन्याप्रकारकघटत्वशक्तिज्ञानत्वेन हेतुतेति कार्यकारणभाव इत्यादि प्रपञ्चितं भूषणे । तदेतदभिप्रेत्याऽऽह—द्विकमिति । जातिव्यक्ती इत्यर्थः । [ पूर्वपक्षाद्विरोधपरिहारः पूर्ववत् ] । त्रिकमि-

---

तथा च इयं गौरित्येतादृशबोधे गोत्वादिजातिशक्तिज्ञानत्वेन कारणता, लाघवात् । नतु गोत्वादिजातिविशिष्टव्यक्तिविषयकशक्तिज्ञानत्वेन, गौरवादिति भावः । एवं च शक्तिज्ञाननिष्ठबोधकारणताया अवच्छेदकं—तादृशकारणतानिरूपकं गोत्वादिसामान्यमेवेति तत्त्वम् । अस्मात्पदादयमर्थो बोद्धव्य इत्येवं पदविशेषणकार्थविशेष्यकः, इदं पदममुमर्थं बोधयत्वित्येवमर्थविशेषणकपदविशेष्यको वा शक्तिग्रहो गोत्वादिजात्यवच्छिन्नगवादिव्यक्तावेवेति तज्जात्यनुगतीकृतसकलव्यक्तिभानं शक्तिग्रहसमये जायते । अत एव शाब्दबोधसमयेऽपि तज्जात्यनुगतीकृतसकलव्यक्तिभानं भवति । कार्यकारणभावस्तूक्तरीत्या बोध्यः । ननु गौर्गोपदशक्य इत्येवं शक्तिज्ञानाद् गोत्वप्रकारकगोव्यक्तिविशेष्यकबोधस्येव गोत्वत्वप्रकारकगोत्वविशेष्यकबोधापत्तिरित्यत आह——यथा चेति । घटत्वविशिष्टघटबोधे जननीये घटत्वांशे घटत्वत्वाद्यप्रकारकस्य ( घटत्वत्वादिप्रकारशून्यस्य ) घटत्वमात्रविषयकशक्तिज्ञानस्य कारणतेत्येवं कार्यकारणभाव इत्यादि भूषणे संगृहीतमिति तत एवावगन्तव्यम् । तदेतदभिप्रेत्येति । वस्तुतस्त्वित्यादिनोक्तं विशिष्टस्य वाच्यत्वमङ्गीकरोतेत्यर्थः । द्विकमितीति । द्वयोः समूहः, 'संख्यायाः संज्ञासंघ' इति सूत्रेण कन् । जातिव्यक्ती इति । परस्परं विशेषणविशेष्यभावमापन्ने, जातिविशिष्टा व्यक्तिर्व्यक्तिविशिष्टा वा जातिर्नामार्थ इत्यर्थः । यद्यपि 'आकृतिपदार्थकस्य द्रव्यं न पदार्थः, द्रव्यपदार्थकस्य चाऽऽकृतिर्न पदार्थः । उभयोरुभयं पदार्थः' इति भाष्येण विशकलितयोरेव जातिव्यक्त्योः शब्दार्थता लभ्यते तथाऽपि 'कस्यचित्किंचिद्गुणभूतं किंचित्प्रधानं' इत्युत्तरभाष्येण विशिष्ट एव शक्तिर्निर्धार्यत इति भावः । पूर्वपक्षादिति । एकं पदार्थ इति पक्षादित्यर्थः । पूर्ववदिति । विषयतासंबन्धेन एकं सामान्यमेव शक्तिज्ञाननिष्ठकारणतायामवच्छेदकमित्यर्थाङ्गीकारेण परिहर्तव्यः । अन्यथा एकमिति मते एकस्यैव नामार्थत्वं, द्विकमिति मते द्वयोर्नामार्थत्वमिति विरोधः स्यादित्यर्थः । पूर्वत्र विशिष्टस्य पदार्थत्वे विरोधः परिहृतः । इह तु द्वयोः पदार्थत्वे स परिहृत इति बोध्यम् । ननु स्तनकेशवती नारीत्यादिलक्षणलक्षितमवयवसंस्थानविशेषात्मकं लौकिकं स्त्री-

( नामार्थनिर्णयः )

ति । जातिव्यक्तिलिङ्गानीत्यर्थः । सत्त्वरजस्तमोगुणानां साम्यावस्था नपुंसकत्वम् । आधिक्यं पुंस्त्वम् । अपचयः स्त्रीत्वम् । तत्तच्छब्दनिष्ठं तत्तच्छब्दवाच्यं च । तमेव विरुद्धधर्ममादाय तटादिशब्दा भिद्यन्ते । केषांचिदनेकलिङ्गत्वव्यवहारस्तु

---

त्वादिलिङ्गमसार्वत्रिकत्वान्नैतच्छास्त्रप्रक्रियोपयोगि, दारानित्यादौ नत्वाभावप्रसङ्गादचेतने सर्वथा तादृशलिङ्गाभावेन खट्वादौ टाबाभावप्रसङ्गाच्चेत्यतो भाष्यरीतिमनुसरन्नादौ लिङ्गमपि नामार्थं इत्याह—**त्रिकमिति** । त्रयाणां समूहस्त्रिकं, पूर्ववत्कन् । त्रिकशब्दार्थं स्पष्टयन्नाह—**जातिव्यक्तीत्यादि** । लिङ्गानां त्रित्वात्तद्विशेषान्नपुंसकत्वादीन् भाष्यमतेन लक्षयति—**सत्त्वरजस्तम इति** । **साम्यावस्थेति** सत्त्वादिगुणानां न्यूनाधिकभावराहित्येनावस्थानं तदेव नपुंसकत्वमित्यर्थः । **आधिक्यमिति** । सत्त्वादीनामुपचय इत्यर्थः । तदेव पुंस्त्वम् । **अपचय इति** । ह्रासस्तन्न्यूनतेति यावत् । तद्रूपं स्त्रीत्वमिति भावः । ननूपचयापचयादेर्विरुद्धस्यैकत्रार्थे तीरादौ समावेशायोगात्तटस्तटी तटमित्यादेरनुपपत्तिः । किंच सर्वविकारातीते परब्रह्मण्युपचयाद्यसंभवादात्मा ब्रह्मेति पुंस्त्वनपुंसकत्वयुक्तव्यवहारानुपपत्तिश्चेत्यत आह—**तत्तच्छब्दनिष्ठमिति** । जातिगुणक्रियासंज्ञारूपप्रवृत्तिनिमित्तभेदभिन्नशब्दनिष्ठमित्यर्थः । पुंलिङ्गः शब्द इत्यादिसामानाधिकरण्येन व्यवहारात् 'आङो नाऽस्त्रियां तस्माच्छसो नः पुंसि, स्वमोर्नपुंसकात्, इत्यादिशास्त्रप्रामाण्याच्च भाष्योक्तलिङ्गस्य शब्दनिष्ठत्वं सिध्यति । यद्युपचयाद्यात्मकलिङ्गस्यार्थनिष्ठत्वं स्यात्तर्हि तटस्तटी तटमित्यादौ लिङ्गत्रयनिमित्तककार्याणामसिद्धिः, परस्परविरुद्धाया उपचयाद्यवस्थाया एकत्र शब्देऽनवस्थानात्, आत्मा ब्रह्मेत्यस्याप्यनुपपत्तिः स्यादिति भावः । **तत्तच्छब्दवाच्यं चेति** । स्वनिष्ठलिङ्गस्य स्ववाच्यत्वमित्यर्थः । स्वं—कृष्णः, श्रीः, ज्ञानं, इत्यादिः शब्दः, तन्निष्ठलिङ्गस्य पुंस्त्वादेः कृष्णादिशब्दवाच्यत्वमिति समन्वयः । ननु भाष्योक्तलिङ्गस्य शब्दनिष्ठत्वमिति पक्षेऽप्येकस्मिञ्छब्दे परस्परविरुद्धानेकलिङ्गसमावेशासंभवतादवस्थ्यमत आह—**तमेव विरुद्धेति** । स्त्रीत्वपुंस्त्वादिरूपमेव विरुद्धं धर्ममादाय शब्दा भिद्यन्ते । परस्परविरुद्धस्य स्त्रीत्वपुंस्त्वादिधर्मस्यैकत्रावस्थानासंभवेन धर्मभेदाच्छब्दभेदो भवति । यथा ह्रस्वत्वदीर्घत्वोदात्तत्वानुदात्तत्वादिभिरकारादयो वर्णा भिद्यन्ते तद्वत्समानुपूर्वीकास्तटादिशब्दा भिन्ना भवन्ति । यथा च पुंलिङ्गस्तटशब्दो भिन्नः स्त्रीलिङ्गस्तटशब्दो भिन्न इत्येवं शब्दभेदान्नोक्तदूष-

( नामार्थनिर्णयः )

समानानुपूर्वीकत्वेन शब्दानामभेदारोपात् । एवं च पदार्थपदे पुंस्त्वमेव व्यक्तिपदे स्त्रीत्वमेव वस्तुपदे नपुंसकत्वमेवेति सर्वत्रैवायं पदार्थः, इयं व्यक्तिः, इदं वस्त्विति व्यवहारस्तटस्तटी तटमिति चोपपद्यते । तच्च लिङ्गमर्थपरिच्छेदकत्वेनान्वेतीति पं-

---

णावसरः । एतच्च लिङ्गं केषांचिदेकं केषांचिदुभयं केषांचित्त्रयमपीत्यत्र लिङ्गानुशासनं प्रमाणमिति शब्दकौस्तुभे स्थितम् । ननूपचयाद्यवस्थानां लिङ्गत्वे तासामवस्थानां परस्परं विरुद्धत्वादेकत्रावस्थानासंभवात्केषांचिच्छब्दानामनेकलिङ्गवत्त्वव्यवहारः किंमूलकोऽत आह—केषांचिदनेकलिङ्गत्वेति । उपचयाद्यात्मकस्य पुंस्त्वादेर्लिङ्गस्य विरुद्धत्वेऽपि समानानुपूर्वीकत्वेन हेतुना शब्देष्वभेदारोपात्तेषां तन्त्रेणानुकरणाद्वाऽनेकलिङ्गवत्त्वव्यवहारो निर्वहणीयः । तथा च तटादिशब्देषु समानानुपूर्वीकेषु लिङ्गत्रयं छागादिषूभयं पदार्थादिष्वेकमिति बोध्यम् । एवं चेति । उपचयाद्यात्मकस्य पारिभाषिकलिङ्गस्य शब्दनिष्ठस्यैव स्त्रीपुंसादिव्यवहारनिमित्तत्वे चेत्यर्थः । पदार्थ—व्यक्ति—वस्तुशब्देषु क्रमेण पुंस्त्वस्त्रीत्वनपुंसकत्वान्येवेति सर्वत्रार्थेऽयं पदार्थः, इयं व्यक्तिः, इदं वस्तु, इत्येवं युगपत्पुंस्त्वादिवाचकपदार्थादितत्तच्छब्दप्रयोगरूपो व्यवहारो जायते । तटस्तटीमिति। स्तनकेशवती नारीत्यादिलौकिकलिङ्गस्यार्थेऽविद्यमानत्वेऽपि परस्परविरुद्धपारिभाषिकलिङ्गभेदेन भिन्नानां तटादिशब्दानां पुंस्त्वादितत्तल्लिङ्गप्रयुक्तकार्यानुभव उपपद्यते । यदि तु लौकिकलिङ्गमिव भाष्योक्तं पारिभाषिकलिङ्गमप्यर्थनिष्ठं स्यात्तर्हि स्त्रीव्यक्तावपचयात्मकस्त्रीत्वस्यैव सत्त्वेन तत्रायं पदार्थः, इदं वस्तु इत्येवं पदार्थवस्तुपदाभ्यां व्यवहारो न स्यात् । स्त्रियां पुंस्त्वनपुंसकत्वयोरभावात् । एवं पुंसि उपचयात्मकपुंस्त्वस्यैव सत्त्वेन तत्र इयं व्यक्तिरिदं वस्त्वित्येवं व्यक्तिवस्तुपदाभ्यां व्यवहारो न स्यात् । पुंसि स्त्रीत्वनपुंसकत्वयोरभावात् । उपचयाद्यवस्थानां परस्परविरुद्धत्वेनैकस्मिन्नर्थे समावेशासंभवादेकयैव कयाचिदवस्थया भाव्यमिति एकत्रार्थे कस्यचिदेकस्यैव लिङ्गस्य युक्तिसिद्धत्वात् । ततश्चैकत्रार्थे लिङ्गद्वयस्य लिङ्गत्रयस्य वा सुतरामसंभवात् । लिङ्गस्य शब्दनिष्ठत्वे तु अर्थस्य सर्वथा लिङ्गराहित्येन पुंस्त्वस्त्रीत्वादिमात्रवाचकपदार्थव्यक्त्यादिपदैः सह तत्सामानाधिकरण्ये बाधकाभावात्सर्वत्रायं पदार्थः इयं व्यक्तिरित्यादिर्व्यवहारः साधु संगच्छते । न च भाष्योक्तलिङ्गस्य शब्दनिष्ठत्वेऽपि मिथोविरुद्धस्य लिङ्गस्यैकस्मिञ्छब्दे

समावेशासंभवः, शब्दस्य लिङ्गद्वयादिव्यवहारासंभवश्चेत्यादिशङ्कोत्थानमस्त्येवेति वाच्यम् । दत्तोत्तरत्वात् । अर्थनिष्ठं लौकिकलिङ्गं तु नात्राऽऽश्रयितुं युक्तं, खट्वादावचेतने तस्य बाधात्तत्र टाबाद्यनापत्तेरिति भावः । लौकिकलिङ्गं तु स्तनकेशवती नारी लोमशः पुरुषः स्मृतः । एतयोरन्तरं यच्च तदभावे नपुंसकम् ॥ इत्यत्र केशशब्दस्य भगवाचकत्वाद्भगवत्त्वं स्त्रीत्वं, लोमशः पुरुष इत्यत्र लोमन्शब्दस्य शिश्नवाचकत्वाच्छिश्नवत्त्वं पुंस्त्वम् । तत्तदाकारमात्रधारकत्वं नपुंसकत्वमिति । एतच्चार्थनिष्ठमेव । तत्र सति संभवे सामानाधिकरण्यसंबन्धेन लौकिकपुंस्त्वविशिष्टशास्त्रीयपुंस्त्व एव पुमादिशब्दानां शक्तिः, न केवललौकिके नापि केवलशास्त्रीये । टिघुभादिवल्लघुसंज्ञाकरणौचित्येऽपि पुमान्स्त्रीत्यादिगुरुसंज्ञाकरणात्, संख्यासंज्ञावत्पुमादिसंकेतानामविकसंग्रहार्थत्वेऽपि लोकप्रसिद्धार्थनिरासकत्वाभावाच्चेति भावः । असंभवे तु शास्त्रीय एव । यथा दारशब्दार्थे लौकिकपुंस्त्वाभावेन केवलशास्त्रीयपुंस्त्वमादायैव दारानित्यादौ नत्वप्रवृत्तिरुपपादनीया । लौकिकपुंस्त्वविशिष्टशास्त्रीयपुंस्त्व एव पुमादिशब्दानां शक्तिस्वीकारादेव पशुना यजेतेत्यत्र पशुस्त्रिया कृते यागे वैगुण्यं, तत्र लौकिकपुंस्त्वविशिष्टशास्त्रीयपुंस्त्वस्यैव शब्देन प्रतिपादनादिति भावः । अधिकमग्रे वक्ष्यते । एवं कुमार्यादिशब्दा अपि लौकिकस्त्रीत्वविशिष्टे शास्त्रीयस्त्रीत्वे शक्ता इति बोध्यम् ।

नन्वुक्तपारिभाषिकलिङ्गस्य शब्दनिष्ठस्यैव स्त्रीपुंसादिव्यवहारनिमित्तत्वे, तस्य स्त्रीवाचकपशुशब्देऽपि विद्यमानत्वात्पशुना यजेतेत्यत्र पशुस्त्रियाऽपि यागकरणापत्तिः, पशुशब्दोक्तलिङ्गस्य पदार्थादिपदोक्तलिङ्गवत्स्त्रीपुंसादिसाधारणत्वेनार्थविशेषनिश्चायकत्वाभावादित्यत आह—तच्च **लिङ्गमिति** । शब्दनिष्ठमेव लिङ्गमित्यर्थः । **अर्थपरिच्छेदकत्वेनेति** । अर्थविशेषणत्वेनार्थविशेषमपि निश्चिनोतीत्यर्थः । पशुशब्दश्रवणेन स्त्रीपशोः पुंपशोश्चोपस्थितौ सत्यां कीदृशेन पशुना, किं स्त्रीपशुनोत पुंपशुना यागः करणीय इति जिज्ञासायां पशुशब्दनिष्ठस्य पुंस्त्वस्य, स्वाश्रयवाच्यत्वसंबन्धेन ( स्वं—पुंस्त्वं, स्वाश्रयः—पशुशब्दः, तद्वाच्यत्वं—पुंव्यक्ताविति, तादृशसंबन्धेन ) पशुशब्दोपस्थिते चतुष्पादर्थे विशेषणतयाऽन्वयात्परम्परया पुंस्त्वविशिष्टेन लौकिकपुंस्त्ववता पशुना यजेतेति लौकिकपुंस्त्वविशिष्टपशोरेव विधानान्न पशुस्त्रिया यागकरणापत्तिः । अस्त्रीविहितनाभावान्तपशुनेति प्रयोगात्पशुशब्दस्य पुंस्त्वावगमात्पुंलिङ्गस्य पशुशब्दस्य पुंव्यक्तेरेव

श्वादिशब्दोक्तं [ पशुस्त्रियां नास्तीति ] पशुनेत्यादिविधिर्न च्छागादीनङ्गत्वेन प्रयोजयतीति विभावनीयम् । न च व्यक्त्यादिशब्दोक्तलिङ्गस्येव पश्वादिशब्दोक्तस्यापि साधारण्यं शङ्क्यम् । व्यक्तिशब्दस्य नित्यस्त्रीलिङ्गत्वेन तथा संभवेऽपि पशुशब्दस्य नित्यपुंलिङ्गत्वे प्रमाणाभावात् । " पश्वा न तायुं गुहा चरन्तम् " " पश्वे नृभ्यो यथा गवे " इत्यादि वेदे दर्शनाच्च । मीमांसायां चतुर्थे पशुना

---

वाचकतया लिङ्गविशेषविशिष्टस्यैवार्थविशेषवाचकत्वमित्यस्य लिङ्गानुशासनशास्त्रसिद्धतया च स्त्रीव्यक्तिव्यावृत्तेर्लिङ्गस्यार्थविशेषनिश्चायकत्वादिति भावः । तदेतदभिसंधायोक्तं मूले—पश्वादिशब्दोक्तं—लिङ्गं पुंस्त्वमिति शेषः । पशुस्त्रियां नास्तीति हेतोः पशुनेति विधिश्छागादीन्यागाङ्गत्वेन न प्रयोजयति—न ग्राहयतीति विभावनीयमिति । ननु पशुशब्दोक्तं पारिभाषिकं पुंस्त्वं पुंपशाविव स्वाश्रयवाच्यत्वसंबन्धेन पशुस्त्रियामप्यस्त्येव । तथा च पुंलिङ्गपशुशब्दस्य लौकिकपुंस्त्वविशिष्टपशोरेव वाचकत्वमिति नियमस्य वक्तुमशक्यत्वात्पशुस्त्रीव्यावृत्तेरसंभवाल्लिङ्गस्यार्थविशेषनिश्चायकत्वासंभवात्पशुस्त्रियाऽपि यागकरणापत्तिरूपो दोषस्तदवस्थ एवेत्याशङ्कते—न च व्यक्त्यादीति । आदिशब्देन नित्यनपुंसकत्वपुंस्त्वयोर्वस्तुपदार्थशब्दयोः संग्रहः । स्त्रियां क्तिन्निति स्त्रियां विहितक्तिन्प्रत्ययान्तव्यक्तिशब्दस्य नित्यस्त्रीलिङ्गत्वेन घटपटादेः सर्वस्याप्यर्थस्य व्यक्तिशब्दवाच्यत्वेन व्यक्तिशब्दोपात्तं स्त्रीत्वं स्वाश्रयवाच्यत्वसंबन्धेन यथा सर्वार्थवृत्ति भवति, अत एव न तदर्थव्यावर्तकं तद्वत्पश्वादिशब्दोपात्तपुंस्त्वस्यापि स्वाश्रयवाच्यत्वरूपपरम्परासंबन्धेन पशुस्त्रीवृत्तित्वं संभवत्येव । साधारण्यमिति । स्त्रीपुंसवृत्तित्वमित्यर्थः । तथा च पशुशब्दोक्तं पुंस्त्वमपि न पशुस्त्रीव्यावर्तकं भवेत् । पुंपशुमात्रनिष्ठस्यैव पशुस्त्रीव्यावर्तकत्वान्न तु स्त्रीपुंससाधारणस्येति भावः । क्तिन्नन्तस्य व्यक्तिशब्दस्य नित्यस्त्रीलिङ्गत्वात्तदुपात्तलिङ्गस्य स्त्रीत्वस्य स्वाश्रयवाच्यत्वसंबन्धेन पुंनपुंसकादिसकलार्थसाधारण्येऽपि पशुशब्दस्य नित्यपुंलिङ्गत्वे प्रमाणाभावान्न तदुपात्तलिङ्गस्य पुंस्त्वस्य स्त्रीपुंससाधारण्यमित्याशयेन परिहरति——व्यक्तिशब्दस्येति । वेदे दर्शनादिति । पश्वेत्यादिप्रयोगदर्शनात्स्त्रीलिङ्गेऽपि पशुशब्द इति भावः । पुंलिङ्गे नादेशप्रवृत्त्योक्तरूपासिद्धिः स्पष्टैव । तथा घेर्ङितीति गुणप्रवृत्त्या पश्वे, इति रूपासिद्धिश्च । तथा च वेदे स्त्रीलिङ्गस्यापि पशुशब्दस्य दर्शनेन नास्य व्यक्त्यादिशब्दवत्स्त्रीपुंससाधारण्यमिति भावः । ततश्च लौकिक-

स्त्रीत्वविशिष्टवाची पशुशब्दो भिन्नः, लौकिकपुंस्त्वविशिष्टवाची च पशुशब्दो भिन्नः। तत्रास्त्रियामित्युक्तेः स्त्रियां नाभावाप्रवृत्त्या पशुनेत्यत्र नाभावदर्शनेन पुंलिङ्गस्यैव पशुशब्दस्योपादानाल्लौकिकपुंस्त्वविशिष्टमेव शास्त्रीयपुंस्त्वमयं पशुशब्द आचष्टे। पुंलिङ्गः पशुशब्दः लौकिकपुंपशोरेव वाचक इति यावत्। एवं च लौकिकपुंस्त्वविशिष्टशास्त्रीयपुंस्त्ववत एव पशोर्विधानात्, आनुपूर्वीसाम्याच्छब्देऽष्वभेदारोपेण शास्त्रीयलिङ्गस्य पुंस्त्वस्य स्वाश्रयवाच्यत्वपरम्परासंबन्धेन पशुस्त्रियां सत्त्वेऽपि लौकिकपुंस्त्वविशिष्टशास्त्रीयपुंस्त्वाभावान्न पशुस्त्रिया यागकरणापत्तिरित्याशयः। किंच लौकिकलिङ्गानादरेण केवलशास्त्रीयलिङ्गस्यैव लिङ्गप्रयुक्तकार्यप्रवृत्तौ नियामकत्वे स्त्रीवाचकपशुशब्दनिष्ठलिङ्गस्य स्त्रीत्वस्य स्वाश्रयवाच्यत्वसंबन्धेन पुंपशावपि सत्त्वेनास्त्रियामिति निषेधप्रवृत्तेः पशुनेत्यत्र नाभावो दुर्लभः स्यात्। अतोऽपि लौकिकलिङ्गविशिष्टस्यैव शास्त्रीयलिङ्गस्य लिङ्गप्रयुक्तकार्यप्रवृत्तौ नियामकत्वं वाच्यम्। तथा च लौकिकस्त्रीत्वविशिष्टशास्त्रीयस्त्रीत्ववत्यामेवास्त्रियामिति निषेधप्रवृत्तेः स्त्रीवाचकपशुशब्दे नाभावाप्रवृत्त्या पश्वेति रूपं सिध्यति। पुंपशौ तु शास्त्रीयस्त्रीत्वसत्त्वेऽपि लौकिकस्त्रीत्वविशिष्टशास्त्रीयस्त्रीत्वाभावेनास्त्रियामिति निषेधाप्रवृत्त्या पुंवाचकपशुशब्दे नादेशप्रवृत्तेः पशुनेति निर्देशेन पुंलिङ्गनिर्णय इति भावः। पश्वादिशब्दोक्तं पशुस्त्रियां नास्तीत्यस्य लौकिकपुंस्त्वविशिष्टं शास्त्रीयपुंस्त्वं पशुस्त्रियां नास्तीत्यर्थो बोध्यः। केवलशास्त्रीयपुंस्त्वपरत्वे तु तदसंगतिः स्पष्टैव। पशुनेत्यत्र नाभावश्रवणात्पशुशब्देन लौकिकपुंस्त्वविशिष्टशास्त्रीयपुंस्त्ववत एव पशोर्ग्रहणमित्यर्थे मीमांसकसंमतिं प्रदर्शयति—**मीमांसायामिति**। चतुर्थाध्याये प्रथमपादे (तथा च लिङ्गम् ४–१–१७) इत्यत्र पशुशब्दे पुंलिङ्गमविवक्षितम्। कुतः—अलिङ्गेऽपि वृक्षपदार्थे पुंलिङ्गवृक्षशब्दप्रयोगदर्शनात्पुंमक्षिकावपि स्त्रीलिङ्गमक्षिकाशब्दप्रयोगाच्चेत्याशङ्क्य, वृद्धव्यवहारेऽन्वयव्यतिरेकाभ्यामनन्यथासिद्धाभ्यां यथा पशुत्वजातिस्तदेकत्वं वा शब्दार्थस्तथा लिङ्गस्यापि कुतः शब्दार्थता न स्यात्। वृक्षमक्षिकाशब्दयोस्त्वभियुक्तप्रयोगप्रमाणबलेन साधुत्वम्। तस्मात्—एकत्ववत्पुंलिङ्गमपि विवक्षितमिति सिद्धान्तितम्। ततश्च पुंपशुरेवाऽऽलब्धव्यः स च एक एव, न स्त्रीपशुर्नापि द्वाविति निर्णीतम्। विवक्षितेऽपि पुंस्त्वे यदि लौकिकलिङ्गानादरेण प्रवृत्तिः स्यात्तर्हि केवलशास्त्रीयलिङ्गस्य पुंस्त्वस्य स्त्रीपुंससाधारण्येन स्त्रीव्यक्तिव्यावृत्तिर्न स्यादिति सिद्धान्तो

( नामार्थनिर्णयः )

यजेतेत्यत्रैकत्वपुंस्त्वयोर्विवक्षितत्वान्नानेकपशुभिः पशुस्त्रिया वा याग इति प्रतिपादितत्वाच्च । वस्तुतस्तु विशेषविध्यभाव उप्रत्ययान्तानां पुंस्त्वस्य व्याकरणे निर्णीतत्वाद्वेदभाष्येऽपि " जसादिषु च्छन्दसि वावचनम् " इति नाभावाभाव इत्युक्तेः पशुशब्दस्य नित्यपुंस्त्वनिर्णयात् । प्रकृते " छागो वा मन्त्रवर्णात् " इति न्याव्याकुप्येत । लौकिकलिङ्गसहकारेण प्रवृत्तौ तु लौकिकपुंस्त्वविशिष्टशास्त्रीयपुंस्त्वं पशुस्त्रियां नास्तीति न पशुस्त्रीव्यावृत्त्यनुपपत्तिः । तद्वदेव प्रकृतेऽपि बोध्यमित्याशयेनाऽऽह—**पशुना यजेतेत्यत्रैकत्वपुंस्त्वयोर्विवक्षितत्वादित्यादि प्रतिपादितत्वाच्चेत्यन्तम्** । ननु पशुशब्दस्य नित्यपुंलिङ्गत्वे प्रमाणाभाव इत्युक्तं तदसंगतम् । उप्रत्ययान्तानां नित्यपुंलिङ्गत्वस्य व्याकरणशास्त्रेणैव निर्णीतत्वात् । जसादिषु च्छन्दसि वावचनमिति पश्वेत्यत्र नाभावाभाव इति वेदभाष्य उक्तत्वाच्च । तथा च पशुशब्दोक्तपुंस्त्वस्य व्यक्त्यादिशब्दोपात्तलिङ्गवत्स्त्रीपुंससाधारण्येन स्त्रीव्यक्तिव्यावृत्त्यसंभवात्प्रकारान्तरेण पशुस्त्रीग्रहणप्रसक्तिं वारयति—**वस्तुतस्त्विति** । पशुशब्दस्य नित्यपुंलिङ्गत्वे पश्वेत्यादिप्रयोगानुपपत्तिरित्यत आह—**वेदभाष्येऽपीति । नाभावाभाव इति** । तथा च पशुशब्दस्य नित्यपुंलिङ्गत्वेऽपि न पश्वेत्यादिप्रयोगानुपपत्तिरिति भावः । **नित्यपुंस्त्वनिर्णयादिति** । ततश्च पुंस्त्वस्य साधारण्यात्स्त्रीव्यक्तिव्यावृत्त्यनुपपत्तिरिति भावः । तथाचोक्तयुक्तेः स्त्रीव्यक्तिव्यावर्तकत्वासंभवेऽपि तद्व्यावर्तकं युक्त्यन्तरं व्याचष्टे—**छागो वा मन्त्रेति** । छागो वा मन्त्रवर्णात् ( जै. सू. ६ । ८ । ३३ ) अत्र हि अग्नीषोमीयं पशुमालभेतेत्यत्र पशुपदेनाज एव ग्राह्यो नाश्वादिः । छागस्य वपाया इति मन्त्रवर्णादिति निर्णीतम् । अत्र छागस्येति पशुविशेषश्रवणादश्वाद्यनादरेण छाग एव गृह्यते यथा तद्वच्छागस्येति स्यशब्दान्तं षष्ठ्यन्तं छाग्यां न संभवतीति छागो लौकिकपुंस्त्वविशिष्ट एव गृह्यते, न छागीति पुंस्त्वनिर्णयः क्रियते । छागशब्दस्य व्यक्तिशब्दवन्नित्यलिङ्गत्वाभावादिति भावः । एवं प्रकृतेऽपि तत एव पुंस्त्वं निर्णेतव्यमित्यर्थः । न्यायेनैवेत्येवकारेण पशुशब्दोपात्तस्य पुंलिङ्गस्य स्त्रीव्यक्तिव्यावर्तकत्वासंभवः सूचितः । पशुशब्दस्य पदार्थादिशब्दवन्नित्यलिङ्गत्वादिति भावः । नन्वस्तूक्तस्थले तावदेवं, परंतु सर्वनामनिष्ठलिङ्गस्य चेतनाचेतनस्त्रीपुंससाधारणत्वात् ' प्रास्मा अग्निं भरत ' इत्यग्निप्रैषस्य सारस्वत्यां मेष्यामपि प्रवृत्तिः स्यात् । न चेष्टापत्तिः । ' लिङ्गविशेषनिर्देशात्समानविधानेष्वप्राप्ता सार-

येनैव निर्णयः। मन्त्रवर्णे हि च्छागस्य वपाया मेदस इति श्रूयते। तत्र च्छागस्येति च्छाग्यामसंभावितमिति भवति ततः पुंस्त्वनिर्णय इति विस्तरेण प्रपञ्चितं भूषणे। चतुष्कं संख्यासहितं त्रिकमित्यर्थः। पञ्चकं कारकसहितं चतुष्कमित्यर्थः। नन्वन्वयव्यतिरेकाभ्यां प्रत्ययस्यैव तद्वाच्यम्। तत एव लिङ्गादीनामुपस्थितौ प्रकृतिवाच्यत्वे मानाभावाच्चेति चेत्सत्यम्। प्रत्ययवर्जिते दधि पश्यतीत्यादौ

---

स्वती स्त्रीत्वात्' ( जै. सू. ९ । १ । ४५ ) इत्यूहलक्षणाधिकरणे पशूनां समानविधानत्वेऽपि पुंलिङ्गनिर्देशान्न तत्र मन्त्र इत्युक्तेः। न च सामान्ये नपुंसकमित्यनुशिष्टमस्मै इति नपुंसकमेव मेषीसाधारणमस्त्विति वाच्यम्। अन्वेनं माता मन्यतामनु पितेत्यन्वादेशेन पुंस्त्वनिर्णयात्। अन्वादेशे नपुंसके एनद्वक्तव्य इति वार्तिकादेनदित्यापत्तेरिति चेदुच्यते—पूर्वोपस्थिततत्तद्रूपेणोपस्थापकात्, अस्मै, एनमित्यादिपदाच्छागत्वादिविशिष्टानामिव पुंस्त्वादिविशिष्टानामेव पशूनामुपस्थित्या मेष्यामप्रवृत्तेः संभवादित्यादिर्विस्तरो बृहद्भूषणेऽनुसंधेय इत्याशयेनाह—विस्तरेण प्रपञ्चितं भूषण इति। चतुष्कमिति। एकत्वादिसंख्यासहितं स्वार्थद्रव्यलिङ्गत्रिकमित्यर्थः। चतुर्णां समूहश्चतुष्कम्। पञ्चकमिति। पञ्चानां समूह इत्यर्थः। कर्त्रादिकारकसहितं स्वार्थद्रव्यलिङ्गसंख्याचतुष्कमित्यर्थः। लिङ्गसंख्याकारकाणां नामार्थत्वं साधयितुं शङ्कते—नन्विति। अन्वयव्यतिरेकाभ्यामिति टाबादिसमभिव्याहारेऽजाश्वादिपदात्स्त्रीत्वप्रतीतेष्टाबाद्यभावे च स्त्रीत्वाप्रतीतेरित्येवं प्रतीत्यप्रतीतिरूपाभ्यामित्यर्थः। एवं संख्याकारकविषयेऽपि घटमिति द्वितीयैकवचनश्रवणादेकत्वकर्मत्वयोरवगमात्तदश्रवणे च तयोरनवगमाल्लिङ्गादित्रयस्य प्रत्ययार्थत्वमुचितमिति भावः। तत एवेति। प्रत्ययादेवेत्यर्थः। उपस्थितौ—लिङ्गादीनामुपस्थितौ जायमानायां सत्यां प्रत्ययार्थत्वानिश्चयान्न तेषां नामार्थत्वमाश्रयितुं युक्तमित्याह—सत्यमिति। सत्यमिति याथार्थ्ये, त्वदुक्तिर्यथार्थेत्यर्थः। लिङ्गादित्रिकस्य प्रत्ययार्थत्वसाधकयुक्तिवत्तस्य नामार्थत्वसाधिकाऽपि युक्तिरस्तीत्याह—प्रत्ययवर्जित इति। दधि पश्यतीति। स्वमोर्नपुंसकादितिशास्त्रानुसारेण वैयाकरणानामत्र नपुंसकप्रकृतिकद्वितीयैकवचनामुप्रत्ययज्ञानम्। इतरेषां त्वमुप्रत्ययाश्रवणान्नास्ति प्रत्ययज्ञानम्। प्रत्ययज्ञानाभावेऽपि च क्लीबत्वैकत्वोभयविशिष्टदधिकर्मकं दर्शनमिति बोधोदयस्य तद्वाक्यादनुभवसिद्धत्वेन लिङ्गादित्रिकस्य प्रकृत्यर्थत्वं सिध्यति। अन्यथाऽनुभवविरोधः स्पष्टएव। पश्य-

( नामार्थनिर्णय. )

प्रत्ययमजानतोऽपि बोधात्प्रकृतेरेव वाचकत्वं कल्प्यते । लिङ्गानुशासनस्य प्रकृतेरेव दर्शनाच्चेति । अत एवैषु पक्षेषु न निर्बन्धः । प्रत्ययस्यैव वाचकताया युक्तत्वात् । "द्योतिका वाचिका वा स्युर्द्वित्वादीनां विभक्तयः" इति वाक्यपदीयेऽपि पक्षद्वयस्य व्युत्पादनात् । शास्त्र इति । बहुषु स्थलेषु व्युत्पादनं व्यञ्जयितुं

---

तीर्थ्यादावित्यादिपदेन राजाऽयमियं गच्छतीत्यादेः संग्रहः । किंच शास्त्रेण प्रकृतेरेव लिङ्गमनुशिष्टं दृश्यत इति लिङ्गस्य नामार्थत्वमेवोचितमित्याह—लिङ्गानुशासनस्येति । अत एवेति । लिङ्गादित्रयस्य प्रत्ययवाच्यत्वे प्रकृतिवाच्यत्वे चेत्युभयत्रापि युक्तेः सत्त्वादेवेत्यर्थः । न निर्बन्ध इति । प्रत्ययवाच्यत्वमेव समीचीनमथवा प्रकृतिवाच्यत्वमेव समीचीनमित्येवंविध आग्रहो न धर्तव्य इत्यर्थः । उभयत्र युक्तिसत्त्वेऽपि लाघवानुरोधेन लिङ्गादित्रयस्य प्रत्ययवाच्यत्वं युक्तमित्याह—वाचकताया युक्तत्वादिति । अनन्तप्रकृतीनां वाचकत्वकल्पने गौरवात्तदपेक्षया स्वल्पतरटावादिस्वादिप्रत्ययानां वाचकत्वकल्पने लाघवादिति भावः । ननु टावादिस्त्रीप्रत्ययं विनाऽपि वाक्शरदादिशब्देभ्यः स्त्रीत्वबोधस्य सर्वजनानुभवसिद्धत्वेन कारणाभावेऽपि कार्यसत्त्वरूपव्यतिरेकव्यभिचारात्प्रकृतिप्रत्ययोरितिन्यायेन प्रत्ययार्थत्वाल्लिङ्गस्य प्राधान्यापत्तेश्च लिङ्गस्य नामार्थत्वमेव । संख्याकारकयोस्तु नामार्थत्वं प्रत्ययार्थत्वं वेत्याह—द्योतिका वाचिका वेति । विभक्तीनां द्वित्वादिद्योतकतापक्षे संख्याकारकयोर्नामार्थत्वं, तासां तद्वाचकतापक्षे संख्याकारकयोः प्रत्ययार्थत्वमित्येवं वाक्यपदीये हरिणा संख्याकारकविषये नामार्थत्वं प्रत्ययार्थत्वं वेति पक्षद्वयस्य वर्णनादिति भावः । केचित्तु संख्याकारकयोरपि नामार्थत्वमेव । न चान्वयव्यतिरेकाभ्यां विभक्तीनामेव तद्वाचकत्वकल्पनमुचितमिति वाच्यम् । दधि पश्य, मधु आनयेत्यादौ विभक्तिं विनाऽपि संख्याकारकप्रतीत्या व्यतिरेकव्यभिचारात् । तदेवं पञ्चकं प्रातिपदिकार्थ इति पक्षः श्रेयान् प्रातिपदिकाज्जातिलिङ्गसंख्याकारकप्रकारकद्रव्यविशेष्यकबोधस्यैव सर्वानुभवसिद्धत्वादिति प्राहुः । तत्तत्सूत्रनिर्देशं विना शास्त्रे निरूपिताः, इति सामान्यतः शास्त्रपदोपादानस्य तात्पर्यं वक्ति—बहुषु स्थलेष्विति । भाष्याद्याकरग्रन्थेषु तत्र तत्र सूत्रेऽमीषां पक्षाणां निरूपणमस्तीति सूचयितुं सामान्यतः शास्त्रपदोपादानमित्यर्थः । प्राधान्येनेति । सरूपसूत्रे सर्वेषामेव पक्षाणां भाष्यकारैर्निरूपितत्वादिति भावः । सरूपसूत्रादावित्यादिपदेनानभिहितसूत्र—तत्रोपपदमितिसूत्रस्थकैयटयोः संग्रहो ।

बोध्यः। अत्रेदं बोध्यम्—एकं द्विकं त्रिकं चतुष्कं पञ्चकं प्रातिपदिकार्थः, इति पञ्च पक्षाः शास्त्रे तत्र तत्र निरूपिताः सन्ति। तत्र एकं प्रातिपदिकार्थ इति पक्षो मीमांसकमात्रसंमतत्वेन निरालम्बनाया जातेः प्रतीत्यननुभवादसंभवद्युक्तिकत्वेन चेहोपेक्षितः। तथा च आदितः द्विकं( १ ), आदितस्त्रिकं( २ ) आदितश्चतुष्कं( ३ ), संख्यातिरिक्तं चतुष्कं( ४ ), आदितः पञ्चकं( ५ ) च प्रातिपदिकार्थ इति पञ्च पक्षाः। तत्र कस्मिन्पक्षेऽनाभिहितसूत्रमावश्यकं कस्मिंश्च व्यर्थमिति भाष्यानुसारेणोच्यते—आदितः—द्विकं त्रिकं इति पक्षे संख्या कारकं च विभक्त्यर्थः। आदितश्चतुष्कमिति पक्षे कारकमात्रं विभक्त्यर्थः। संख्यातिरिक्तं चतुष्कमिति पक्षे संख्यामात्रं विभक्त्यर्थः। पञ्चकमिति पक्षे संख्याकारकयोर्विभक्त्यर्थत्वं नास्तीति तत्पक्षे तयोर्विभक्तिद्योत्यत्वमेव। द्योत्यत्वेनैव चैषां, सुपां कर्मादयोऽप्यर्थाः संख्या चैव तथा तिङामित्यत्र भाष्ये विभक्त्यर्थत्वमिति व्यवहारः एवं च आदितः द्विकं, त्रिकं, संख्यातिरिक्तं चतुष्कं चेति पक्षत्रये संख्या विभक्त्यर्थः संपद्यते। तथा आदितः द्विकं त्रिकं चतुष्कं चेति पक्षत्रये कारकं विभक्त्यर्थो भवति। तत्र स्वौजस्, कर्मणि द्वितीया, द्व्येकयोः, इत्यादीनामेकवाक्यता। सा चेत्थम्—स्वौजसित्यत्र पदद्वयं—प्रातिपदिकात्, अम्, इति च। कर्मणि इत्यत्र च पदद्वयं—कर्मणि, द्वितीया, इति च तथा द्व्येकयोरित्यत्रापि पदद्वयं—द्व्येकयोः, द्विवचनैकवचने, इति च। एवं च षट् पदानि जायन्ते। तत्र प्रायो व्याकरणशास्त्रे कारकपञ्चम्यसंभवेन दिग्योगलक्षणपञ्चमी बोध्या। पञ्चम्यर्थोऽवधिः। तथा च प्रातिपदिकात् इत्यस्य पञ्चम्यन्तस्यावधिभावेन विधेये अम्प्रत्ययेऽन्वयः। प्रातिपदिकावधिकपरत्ववान् अम् प्रत्ययो भवतीत्यर्थः। कर्मणीति सप्तम्यन्तस्य निष्ठत्वसंबन्धेन द्व्येकयोरित्यत्रान्वयः—कर्मगते द्वित्वे एकत्वे चेति। द्व्येकयोरित्यस्य च वाचकत्वसंबन्धेनाम्प्रत्ययेऽन्वयः-एकत्ववाचकोऽम् भवतीति। द्वितीया, द्विवचनैकवचने इत्यनयोस्त्वभेदसंबन्धेनाम्येवान्वयः—द्वितीयैकवचनाभिन्नोऽमित्यर्थः। एवं च महावाक्यार्थः—प्रातिपदिकात् कर्मगतैकत्ववाचकोऽम् प्रत्ययो भवतीति। अयं च संख्याविभक्त्यर्थकपक्षत्रये वाक्यार्थः। अत्र सूत्रजबोधे संख्यायाः प्राधान्यम्। कारकविभक्त्यर्थकपक्षत्रये त्वित्थम्—संख्यायाः सर्वत्र विशेषणतयैव भाननियमात् द्व्येकयोरित्यस्य आधेयतासंबन्धेन कर्मणीत्यत्रान्वयः। एकत्वे यत्कर्मेत्यर्थः। वृक्षे शाखेतिवदेकत्व इति सप्तमी आधेय-

( नामार्थनिर्णयः )

प्राधान्येन सरूपसूत्रादौ व्यक्तम् ॥ १ ॥ ( २५ )

शब्दस्तावच्छाब्दबोधे भासते ।

---

स्याऽऽधारत्वविवक्षया । एवंच वाक्यार्थः—प्रातिपदिकात् एकत्वविशिष्टे कर्मणि नाम एकत्वविशिष्टकर्मवाचको द्वितीयैकवचनममिति । अस्मिन्पक्षे सूत्रजबोधे कर्मादेः प्राधान्यम् । पञ्चकं प्रातिपदिकार्थ इति पक्षे त्वेवं वाक्यार्थः—प्रातिपदिकात् तदर्थकर्मगतैकत्वे द्योत्ये द्वितीयैकवचनमम्प्रत्ययो भवतीति । इत्येकोऽर्थः । अपरश्च—प्रातिपदिकात् तदर्थगतैकत्वविशिष्टे कर्मणि द्योत्ये द्वितीयैकवचनमम् प्रत्ययो भवतीति । तत्र प्रथमवाक्यार्थे कर्मगतैकत्वे, इत्यन्वयेन सूत्रजबोधे संख्यायाः प्राधान्यम् । द्वितीये तु एकत्वविशिष्टे कर्मणीत्यन्वयेन सूत्रजबोधे कर्मादेः प्राधान्यम् । पञ्चकं प्रातिपदिकार्थ इति पक्षे संख्यायाः कारकस्य च विभक्त्यर्थत्वं द्योत्यत्वेनैवेति प्रागुक्तमेव । एवं सति यद्यनभिहित इति सूत्रं न क्रियेत तर्हि कृतः कट इत्यत्र क्तेन कर्ममात्रोक्तावपि तदेकत्वस्यानुक्ततया, कर्मगतैकत्वे द्योत्ये द्वितीयैकवचनममिति पञ्चकं प्रातिपदिकार्थ इति पक्षीयप्रथमवाक्यार्थेनाम् दुर्वारः स्यात् । अतोऽप्रधानकर्मादिविशेषणार्थमनभिहिताधिकार आवश्यकः । तथा चानभिहितकर्मगतैकत्वे द्योत्येऽम्प्रत्यय इत्यर्थेन क्तेन कर्मण उक्तत्वात्कृतः कट इत्यत्र नाम्प्रत्ययः प्राप्नोतीत्यर्थः । एवं च संख्याविभक्त्यर्थ इति पक्षेऽनभिहिताधिकार आवश्यक इति भावः । तथा च आदितः द्विकं, त्रिकं, संख्यातिरिक्तं चतुष्कं च प्रातिपदिकार्थ इति पक्षेष्वपि संख्याया विभक्त्यर्थत्वादनभिहितसूत्रमावश्यकमिति बोध्यम् । पञ्चकं प्रातिपदिकार्थ इति पक्षीयद्वितीयवाक्यार्थे तु एकत्वविशिष्टे कर्मणीत्यन्वयेन सूत्रजबोधे कर्मादेः प्राधान्यात्सूत्रजबोधविषयप्रधानविषयेणोक्तार्थानामितिन्यायेन कृतः कट इत्यादौ द्वितीयाया अप्राप्तेः सिद्धत्वादनभिहिताधिकारोऽनावश्यकः । तथा च कारकं विभक्त्यर्थ इति पक्षेऽनभिहितसूत्रं व्यर्थमिति भावः । एवमादितः द्विकं, त्रिकं, चतुष्कं च प्रातिपदिकार्थ इति पक्षेष्वपि कारकस्य विभक्त्यर्थत्वादनभिहितसूत्रं व्यर्थमिति बोध्यमिति ॥ २५ ॥

ननु घटमानयेत्यादिवाक्यजन्यशाब्दबोधे घटादिशब्दभानस्याननुभवात्तस्य प्रातिपदिकार्थत्वसाधनमयुक्तमित्याशङ्कायामाह—शब्दस्तावदिति । शब्दोऽपी-

( नामार्थनिर्णयः )

" न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते ।
अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते "

इत्याद्यानुभविकोक्तेः । " विष्णुमुच्चारय " इत्यादावर्थोच्चारणासंभवेन विना

---

त्यर्थः । भासत इति । स्वार्थद्रव्यादिवच्छब्दस्यापि शाब्दबोधे भानं भवतीत्यर्थः । अत्रार्थे हर्युक्तिं प्रमाणयति—न सोऽस्तीति । लोके—विद्वदनुभवे तादृशः शाब्दबोधात्मकः प्रत्ययो नास्त्येव, यत्र( शाब्दबोधात्मकप्रत्यये ) शब्दरूपविशेषणभानं न भवतीत्येतादृश इत्यर्थः । यतः सर्वं ज्ञानं शाब्दबोधात्मकं शब्देन—शब्दरूपविशेषणेनानुविद्धं नित्यसंबद्धमेव भासते प्रतीयत इति तत्तच्छास्त्रीयसकलतत्त्वविषयकबोधानुभववत्तमहर्युक्तेरिति भावः । यत्र प्रत्यक्षज्ञानं तत्रापि शब्दार्थयोस्तादात्म्यादारोपितं शब्दभानमस्त्येवेति सूचयितुमनुविद्धमिवेतीवशब्दः प्रयुक्तः । प्रत्यक्षादिरूपसकलज्ञाने शब्दभानं शब्दार्थयोस्तादात्म्यादुपपद्यत इति यावत् । शब्दार्थयोस्तादात्म्यं च अर्थं शृणोति अर्थं वदति इत्यादिप्रयोगानुसारेणानुभवसिद्धत्वादनपलपनीयम् । नह्यर्थस्य कम्बुग्रीवादिमतः श्रवणं वदनं वा संभवति ? कदापि नैव संभवतीत्यर्थः । किंतु तद्वाचकशब्दस्यैव श्रवणमुच्चारणं वा संभवति । अतोऽर्थं शृणोतीत्यादिप्रयोगानुपपत्तिः । शब्दार्थयोस्तादात्म्याङ्गीकारे तु तत्तादात्म्यापन्नं शब्दं शृणोतीत्यर्थबोधात्तादृशप्रयोगोपपत्तिः । एवं चार्थश्रवणोच्चारणान्यथानुपपत्त्या शब्दार्थयोस्तादात्म्यमनिच्छताऽप्यङ्गीकार्यम् । अत एव ओमित्येकाक्षरं ब्रह्म, रामेतिद्व्यक्षरं नाम मानभङ्गः पिनाकिनः, वृद्धिरादैच्, इत्येवमादौ शक्तिग्राहकश्रुतिस्मृतिविषये सामानाधिकरण्येन प्रयोगश्च संगच्छते । यत्तु शब्दार्थयोस्तादात्म्येऽग्निशब्दोच्चारणे मुखे दाहापत्तिरित्यादिदूषणं, तत्तु तादात्म्यस्य तद्भिन्नत्वे सति तदभेदेन प्रतीयमानत्वेन भेदाभेदघटितत्वान्निराकृतं मञ्जूषायाम् । शब्दार्थयोर्भेद एव वास्तवोऽभेदस्त्वारोपितः । वास्तवभेदादेव नाग्निशब्दोच्चारणेन मुखे दाहापत्तिसंभवः । नापि आरोपिताभेदात्तत्संभवः । न ह्यारोपिताग्नित्वविशिष्टगुञ्जाफलेभ्योऽग्निकार्यं दाहादि लोके दृश्यते ? नैव दृश्यत इत्यर्थः । अतोऽर्थशब्दयोस्तादात्म्याङ्गीकारेऽपि न निरुक्तदूषणापत्तिरिति भावः । नन्वेवं भवतु शब्दभानं तथापि शब्दस्य नामार्थत्वं कथमित्यत आह—विष्णुमुच्चारयेति । यद्यत्र विष्णुपदात्स्वार्थद्रव्यलिङ्गाद्यर्थवद्विष्णुशब्दस्याप्युपस्थितिर्न स्यात्तर्हि अर्थोच्चारणासंभवेन विष्णुमुच्चारयेति वाक्यार्थबोधानुपप-

( नामार्थनिर्णयः )

शब्दविषयं शाब्दबोधासंगतिश्चेति सोऽपि प्रातिपदिकार्थः । ( अयं भाव —) न च लक्षणया निर्वाहः । निरूढलक्षणायाः शक्त्यनतिरेकात् । " जबगडदशमुच्चारय " इत्यादौ शक्याग्रहेण शक्यसंबन्धरूपलक्षणाया अग्रहाच्च । अज्ञाता-

---

त्तिः स्यात् । अतः शब्दादर्थवत्स्ववाचकशब्दस्याप्युपस्थितिर्भवति । उपस्थितिश्चोच्चरितसमानानुपूर्वीकस्यैव शब्दस्य, न नारायणादेः पर्यायस्य । तथा च विष्णुशब्दस्योपस्थितौ सत्यां तत्र वाचकतासंबन्धेनार्थस्यान्वयाच्चतुर्भुजरूपार्थवाचकं विष्णुशब्दमुच्चारयेत्यर्थबोधोदयाच्छब्दोऽपि प्रातिपदिकार्थ इति भावः । **लक्षणयेति** । स्वशक्यसंबन्धरूपयेत्यर्थः । स्वं—विष्णुशब्दः, स्वशक्यः—लक्ष्मीपतिरूपोऽर्थः, तत्संबन्धो वाच्यतया विष्णुशब्दे इति स्ववाच्यवाचकत्वसंबन्धेन लक्षणया वाक्यार्थबोधनिर्वाह इति चेन्न । तावताऽपि शब्दस्य प्रातिपदिकार्थत्वा( प्रातिपदिकवाच्यत्वा )सिद्धेः । किं च द्विविधा हि लक्षणा प्रयोजनवती निरूढा चेति । प्रयोजनवती चेत्—यथा गङ्गायां घोष इत्यत्र घोषे शैत्यपावनत्वादिप्रतीतिः प्रयोजनं तद्वदत्र लक्षणायाः प्रयोजनं वक्तव्यं स्यात् । प्रयोजनादर्शनान्निरूढेति चेदाह—**शक्त्यनतिरेकादिति** । निरूढलक्षणायाः शक्त्यतिरिक्तत्वाभावादित्यर्थः । यथाऽस्य शब्दस्यैतस्मिन्नर्थे शक्तिरित्यनादितात्पर्यग्रहवशाद्बुध्यते तथा निरूढलक्षणाऽपि अनादितात्पर्यग्रहाधीनेत्यर्थः । अनादितात्पर्यं च यथा विष्णुपदस्य लक्ष्मीपतौ प्रसिद्धं, तथा विष्णुशब्देऽपीति निरूढलक्षणाश्रयणं नाम शक्त्याश्रयणमेवेति भावः । किं च लक्षणाया न सर्वत्र संभव इत्याह—**जबगडदशमुच्चारयेति** । निरुक्तसमुदायस्य कुत्रापि शक्तत्वाभावादेकाक्षरकोशादिप्रामाण्यात्प्रत्येकवर्णस्य शक्यार्थसत्त्वेऽपि जबगडदशेतिसमुदायात्तत्प्रतीत्यभावाच्च शक्यार्थाग्रहेण समुदायस्य शक्यार्थाभावाच्छक्यसंबन्धात्मकलक्षणाया अपि तत्रासंभवात् । यत्र शक्यार्थ एव न गृह्यते तत्र शक्यसंबन्धरूपलक्षणाया वार्ताऽपि दूरोत्सारितेति स्वार्थद्रव्यादिवच्छब्दस्य स्वस्वरूपेऽपि शक्तिराश्रयणीयेति भावः । शब्दादर्थस्येव शब्दस्याप्युपस्थितौ तु तादृशसमुदायस्यैव तादृशपदशक्यत्वेन न जबगडदशमुच्चारयेति वाक्यार्थबोधानुपपत्तिः । ननु तत्र शक्यार्थाज्ञानाल्लक्षणाया अज्ञातत्वेऽपि जबगेतितत्तदवयवशक्यार्थवाचकत्वरूपलक्षणाया वस्तुतः सत्त्वाद्वाक्यार्थबोधोऽस्त्वित्यत आह—**अज्ञाताया इति** । गङ्गायां घोष इत्यत्र गङ्गापदस्य वस्तुतः सतोऽपि स्वशक्यप्रवाहसामीप्यसंबन्ध-

यांश्च वृत्तेरनुपयोगात् । " गावमुच्चारय " इत्यादिभाषाशब्दानामनुकरणे साधुतासंप्रतिपत्तेस्तेषां शक्त्यभावेन परनये लक्षणाया असंभवाच्चेत्यभिप्रेत्य षोढाऽपि क्वचित्प्रातिपदिकार्थ इत्याह—

शब्दोऽपि यदि भेदेन विवक्षा स्यात्तदा तथा ।
नो चेच्छ्रोत्रादिभिः सिद्धोऽप्यसावर्थो व भासते ॥ २६ ॥

---

स्याज्ञाने लक्ष्यतीररूपार्थबोधाजननेन ज्ञाताया एव वृत्तेरर्थोपस्थितौ प्रयोजकत्वमित्यस्याऽऽवश्यकत्वात्प्रकृते लक्षणाया अग्रहान्न वाक्यार्थबोध उदेतीति भावः । ननु निरुक्तस्थले यदाकदाचिज्जातवृत्तिज्ञानवशाद्वाक्यार्थबोधोऽस्त्वित्याग्रहे त्वाह—**गावमुच्चारयेति** । गावेति भाषास्थः शब्दः कश्चिदनर्थकः । गावेतिभाषाशब्दानुकरणेऽपि तादृशानुकरणशब्दानां साधुत्वस्य सर्वैरप्यङ्गीकारादनुकरणानां क्वापि शक्तावसत्यां शक्याग्रहाच्छक्यसंबन्धरूपलक्षणाया अपि नैयायिकसंमताया अग्रहादर्थबोधो न स्यात्, वृत्त्याऽर्थबोधजनकत्वरूपार्थवत्त्वाभावेन प्रातिपदिकसंज्ञाऽपि न स्यात्, साधुत्वं चापि न स्यादिति अनुकरणानां शब्दे शक्तिः स्वीकार्येत्यभिप्रायेण षोढाऽपि स्वार्थद्रव्यादिनिरुक्तपञ्चकसहितः शब्दोऽपि क्वचित्प्रातिपदिकार्थ इत्याह । क्वचिदित्युक्तं स्थलं प्रदर्शयति—**शब्दोऽपि यदीति** । क्वचिदित्युक्त्वा शब्दोऽपि यदि भेदेनेत्युक्त्वात्क्वचिदित्यस्यानुकरणस्थले इत्यर्थः । तच्चानुकरणं द्विविधमव्यक्तस्य व्यक्तस्य चेति । अव्यक्तस्येति ध्वनेरित्यर्थः । व्यक्तस्येति वर्णस्येत्यर्थः। कस्यचित्फलपतनध्वनेरनुकरणं पटदिति। तदाद्यम् । तत्रानुकार्यं ध्वनिरूपं, अनुकरणं तु वर्णमयमिति तयोर्भेदः । द्वितीयं— गौरित्ययमाहेत्यादौ पदार्थविपर्यासकृदितिशब्दसमभिव्याहारे । तत्रानुकार्यं स्वार्थद्रव्यादिपदार्थकं, अनुकरणं तु शब्दपदार्थकमित्यनुकार्यानुकरणयोर्भेदः, उभयोरानुपूर्वीसाम्येऽपि । अनुकरणत्वं च शब्दमात्रतात्पर्यकोच्चारणविषयत्वम् । अत एवाग्नेढगित्यादौ नानुकरणत्वम् । विशेषणतयाऽर्थभानेन शब्दमात्रतात्पर्यकत्वाभावात् । गामानयेति वाक्यघटकगोशब्दाद्यथा स्वार्थादिपञ्चकस्योपस्थितिस्तद्वच्छब्दस्वरूपस्याप्युपस्थितिरनुभवसिद्धा । एवमनुकरणस्थलेऽपीति क्वचित्षोढाऽपि प्रातिपदिकार्थ इत्युक्तम् । तत्रोपस्थापकमनुकरणमुपस्थाप्यं त्वनुकार्यमिति व्यवह्रियते । यदि च तयोर्भेदेन विवक्षा क्रियते तदाऽनुकरणस्यानुकार्यशब्दस्वरूपमर्थः संपद्यते । तथा सति यद्यनुकार्यशब्दस्वरूपेऽर्थेऽनुकरणस्य शक्तिर्न

( नामार्थनिर्णयः )

यद्यनुकार्यानुकरणयोर्भेदविवक्षा तदा शब्दोऽपि प्रातिपदिकार्थः । यदि न भेदविवक्षा तदा श्रोत्रादिभिरुपस्थितोऽप्यर्थवद्भासते, अपिर्हेतौ । उपस्थितत्वाद्भासत इत्यर्थः । अयं भावः—अनुकार्यानुकरणयोर्भेदेऽनुकार्यस्य पदानुपस्थितत्वात्त-

---

स्वीक्रियते तर्हि पदजन्योपस्थित्यविषयस्यार्थस्य शाब्दबोधे भानानुपपत्तिरिति हेतोः शाब्दबोधभानोपपादकपदजन्योपस्थितिविषयत्वसिद्धयेऽनुकरणस्यानुकार्यशब्दस्वरूपेऽर्थे शक्तिरङ्गीकार्या । अन्यथाऽनुकार्यशब्दस्वरूपात्मकेनार्थेनासंबद्धस्यानुकरणस्य वृत्त्या तदुपस्थितिजनकत्वाभावेनानुकार्यशब्दस्वरूपस्य शाब्दबोधे भानं न स्यादिति भावः । अत एवानुकरणस्य वृत्त्याऽर्थबोधजनकत्वरूपार्थवत्त्वात्प्रातिपदिकसंज्ञया सुबाद्युत्पत्त्या गौरित्ययमाहेति प्रयोगस्तत्साधुत्वं च सिध्यति । यदि तु तयोर्भेदो न विवक्ष्यते, किं त्वभेद एव विवक्ष्यते तर्हि वाच्यवाचकभावस्य भेदावलम्बित्वेनाभेदे च वाच्यवाचकभावासंभवेनानुकार्यशब्दस्वरूपस्य पदजन्योपस्थितिविषयत्वाभावाच्छाब्दबोधे भानं न स्यादिति चेदुच्यते—यथा घटे सत्यपि यद्यालोकसहितं चक्षुर्न स्यात्तर्हि घटप्रत्यक्षं न जायते, तथा आलोकसहितचक्षुःसत्त्वेऽपि यदि विषयो घटो न स्यात्तर्ह्यपि घटप्रत्यक्षं नैव जायत इत्यनुभवबलात्प्रत्यक्षे विषयस्य हेतुत्वं क्लृप्तमस्ति । तथा च घटप्रत्यक्षे घटस्येव श्रावणप्रत्यक्षे शब्दस्य हेतुत्वादनुकार्याभिन्नानुकरणस्य श्रोत्रेण स्वप्रत्यक्षरूपा योपस्थितिः सा पदजन्यैवेति कृत्वा तादृशीं पदजन्योपस्थितिमादायानुकार्यस्य शाब्दबोधे भानं जायत एवेति न किंचिद्धीनम् । यद्यपि न सोऽस्ति प्रत्ययो, विषयत्वमनादृत्येति वाक्यपदीयात्सर्वत्रैव घटमानयेत्यादौ शाब्दबोधे घटादिशब्दभानसत्त्वेऽपि अनुकरणस्थले भेदाभेदप्रयुक्तसुबुत्पत्त्यनुत्पत्तिकृतशब्दप्रयोगभेददर्शनेन शब्दात्स्वार्थादेरिव स्वस्वरूपस्याप्युपस्थितेः स्पष्टमुपलभ्यमानत्वात्क्वचित् ( अनुकरणस्थले ) बोद्धाऽपि प्रातिपदिकार्थ इत्युक्तमिति बोध्यम् । ननु भेदाभेदात्मकपक्षद्वयेऽपि अनुकार्योपस्थितये स्वार्थादिपञ्चक इव षष्ठे शब्दांशेऽपि शक्तवृत्तिस्वीकारावश्यकत्वेन मूले भेदपक्ष एव तदावश्यकत्वकथनमनुचितमित्याशयेन मूलाभिप्रायमाविष्करोति—अयं भाव,इत्यादिना । अनुकार्यानुकरणयोर्भेद इति । तयोर्भेदविवक्षायां पटादित्यादावनुकार्यानुकरणयोर्भेदो ध्वनिमयत्ववर्णमयत्वरूपविरुद्धधर्मसंबन्धेन सिद्धः । गौरित्ययमाहेत्यादौ त्वर्थपदार्थकत्वशब्दपदार्थकत्वाभ्यां विरुद्धधर्माभ्यां तयोर्भेदः सिद्ध इति भावः । पदानुपस्थितत्वादिति । अस्य

त्तिसिद्धये शक्तिरुपेया। शब्दार्थयोरभेदे प्रत्यक्षे विषयस्य हेतुत्वात्स्वप्रत्यक्षरूपां पदजन्योपस्थितिमादाय शाब्दबोधविषयतोपपत्तिरिति। यद्यतिप्रसङ्गवारणाय वृत्ति-

---

शक्त्यभावे, इत्यादि। तथा च शक्त्यभावेऽनुकार्यस्य पदजन्योपस्थितिविषयत्वासंभवादित्यर्थः। तत्सिद्धय इति। पदजन्योपस्थितिविषयत्वसिद्धय इत्यर्थः। अन्यथा शाब्दबोधविषयत्वं न स्यात्। वृत्त्या पदजन्यपदार्थोपस्थितेरेव शाब्दबोधहेतुत्वात्। शक्तिरिति। वाच्यवाचकभावरूपा। उपेयेति। स्वीकार्यैवेत्यर्थः। अन्यथाऽसंबद्धस्यानुकरणस्यानुकार्योपस्थापकत्वासंभव इति भावः। अनुकार्यानुकरणयोरभेदेऽतिरिक्तशक्तिं विनैव शाब्दबोधविषयता भवतीत्याह—अभेद इति। विवक्षित इति शेषः। तत्पक्ष इति। अनुकार्यानुकरणयोरभेदपक्ष इत्यर्थः। प्रत्यक्षे विषयस्य हेतुत्वादिति। आलोकसहकृतचक्षुःसत्त्वेऽपि यदि घटो न स्यात्तर्हि घटप्रत्यक्षं न जायते, तत्सत्त्वे तु जायत इत्यनुपपलब्धाद्घटप्रत्यक्षे घटस्येव शब्दीयश्रावणप्रत्यक्षे शब्दस्य कारणत्वादित्यर्थः। स्वप्रत्यक्षरूपामिति। श्रोत्रेन्द्रियेणानुकार्याभिन्नानुकरणशब्दसाक्षात्काररूपामुपस्थितिमित्यर्थः। तादृशी चोपस्थितिः पदजन्यैव, शब्दसत्त्व एव शब्दप्रत्यक्षस्य जायमानत्वादिति भावः। शाब्दबोधविषयतेति। अनुकार्याभिन्नानुकरणशब्दस्य श्रावणप्रत्यक्षरूपां पदजन्योपस्थितिमादायानुकार्यस्य शाब्दबोधविषयतोपपद्यत इति भावः। अत्रेदं बोध्यम्—अभेदपक्षे स्वप्रत्यक्षरूपां पदजन्योपस्थितिमादाय यथा शाब्दबोधे शब्दस्य भानं तद्वद्घटमानयेत्यादौ घटादिपदानामपि श्रोत्रेण स्वप्रत्यक्षरूपां पदजन्योपस्थितिमादाय भानस्यावर्जनीयतया सर्वत्रैव शाब्दबोधे शब्दविषयकत्वं सिध्यति। तदुक्तं स्वं रूपमिति सूत्रे भाष्ये—'नवा शब्दपूर्वको ह्यर्थे संप्रत्ययस्तस्मादर्थनिवृत्तिः' इति। नवा—स्वं रूपमिति सूत्रं न वक्तव्यमित्यर्थः। किं कारणं? शब्दपूर्वको ह्यर्थे संप्रत्ययः—शब्दपूर्वक इत्यस्य शब्दज्ञानपूर्वको हीत्यर्थः। अर्थे संप्रत्ययः—अर्थप्रतीतिरित्यर्थः। उपलब्धस्यैव हि शब्दस्यार्थबोधकत्वं, न तु चक्षुरादिवत्सत्तामात्रेण बोधकत्वम्। अत एव गौरानयेत्यभिप्रायेण गौरानयेति परेणोक्ते, इतरः सम्यगश्रुत्वा परं पृच्छति किमाहेति, तेन गौरित्याहेत्युक्ते तत एवार्थबोधात्प्रवर्तते। एवं शब्दज्ञानसत्त्वेऽर्थज्ञानसत्त्वमित्यन्वयमुक्त्वा व्यतिरेकमाह—आतश्च शब्दपूर्वः, योऽपि ह्यसावाहूयते नाम्ना। नाम च यदाऽनेन नोपलब्धं भवति, तदा पृच्छति—किं भवानाहेति।

( नामार्थनिर्णयः )

जन्यपदोपस्थितिरेव हेतुस्तथाऽप्यत्राऽऽश्रयतया वृत्तिमत्त्वस्य सत्त्वान्नानुपपत्तिः।

एतेन शब्दज्ञानाभावेऽर्थज्ञानाभावरूपो व्यतिरेक उक्तः। तथा चोक्तभाष्याच्छब्दतदर्थयोरुभयोरपि शब्दाज्ज्ञानम्। शब्दपूर्वको हीत्यत्र हिः प्रसिद्ध्यर्थः। श्रोतुः शब्दज्ञानपूर्वकोऽर्थप्रत्यय इति लोके प्रसिद्धमित्यर्थः। इह च व्याकरणे शब्दे कार्यस्य संभवः, अर्थे चासंभवः। तस्मादर्थस्य निवृत्तिः। ननु शब्दतदर्थयोरुभयोरपि शब्दाज्ज्ञानस्यानुभवासिद्धत्वादर्थस्य निवृत्तिरित्युक्तेरयुक्तेति चेदुच्यते। अर्थे कार्यस्यासंभवादर्थो विशेषणं, शब्दे कार्यस्य संभवाच्छब्दो विशेष्यमित्यर्थादर्थवति शब्दे कार्यं करणीयमित्यर्थः। इयमेव ह्यर्थस्य निवृत्तिर्नाम यत्तस्य विशेष्यतापरित्याग इति। न च ज्ञाने सर्वत्र शब्दभाने सर्वपर्यायाणां भानापत्तिर्विनिगमनाविरहादिति वाच्यम्। अर्थबोधानुकूलत्वेन प्रथमप्रतीतत्वरूपकारणत्वादुच्चरितस्यैव शब्दस्य भानेनादोषात्। तथा च—तस्मादर्थनिवृत्तिरित्यस्य—अर्थवाचकशब्दान्तरानिवृत्तिरित्यर्थ उक्त उद्योत इति बोध्यम्। लोके तु यत्र शब्दे इतरपदार्थान्वयरूपकार्यासंभवस्तत्र शब्दस्य विशेषणताऽर्थस्य च विशेष्यतेति शब्दोपस्थितेऽर्थे कार्यं कर्तव्यम्। यथा नीलो भ्रमरः, इत्युक्ते नहि नीलिमा शब्देऽन्वेति, भ्रमरशब्दे नीलिम्नोऽसंभवात्। किंतु भ्रमरशब्दवाच्ये षट्पदे कीटेऽन्वेति, तत्रैव तत्संभवात्। यत्र चार्थे कार्यासंभवस्तत्रार्थस्य विशेषणता, शब्दस्य च विशेष्यतेति तदर्थवाचके शब्दे कार्यं करणीयम्। यथा विष्णुमुच्चारयेत्यत्र विष्णुपदार्थे चतुर्भुजे उच्चारणक्रियान्वयासंभवात्तदर्थवाचके विष्णुशब्दे समभिव्याहृतक्रियान्वय इति बोध्यम्। ननु सामान्यतः पदजन्योपस्थितिविषयस्य शाब्दबोधे भानाङ्गीकारे समवायसंबन्धेन घटादिशब्दजन्योपस्थितिविषयस्याऽऽकाशस्य घटोऽस्तीत्यादिवाक्यजन्यशाब्दबोधविषयत्वापत्तिरत आह—**अतिप्रसङ्गेति। वारणायेति।** निरुक्तापत्तिरूपातिप्रसङ्गनिरसनायेत्यर्थः। **पदोपस्थितिरेवेति।** पदार्थोपस्थितिरेवेत्यर्थः। अनुकार्यशब्दप्रसङ्गात्तु पदोपस्थितिरित्युक्तम्। सा पदार्थोपस्थितिश्च वृत्तिजन्येति विशेषणाद्वृत्तिज्ञानजन्याऽपेक्षितेत्यर्थः। तथा चाऽऽकाशस्य घटपदात्समवायसंबन्धेनोपस्थितावपि वृत्त्या घटपदादुपस्थित्यभावेन घटोऽस्तीत्यादिवाक्यजन्यबोधे न तस्य भानमित्यर्थः। एवं गविरित्ययमाहेत्यादावभेदपक्षेऽनुकार्याभिन्नानुकरणस्य पदादुपस्थितावपि वृत्त्या पदादुपस्थित्यभावेनानुकार्यस्य शाब्दबोधविषयत्वं न संभवतीति ता-

निरूपकताश्रयतान्यतरसंबन्धेन वृत्तिमत एव शाब्दबोधविषयत्वं कल्प्यत इत्यन-

---

त्पर्यम् । **आश्रयतया वृत्तिमत्त्वस्येति** । अनुकार्यानुकरणयोरभेदपक्षेऽनुकार्यस्य यत्किंचिदर्थवाचकत्वाद्वाचकतारूपा वृत्तिरनुकार्येऽस्ति । सा च वृत्तिरर्थनिरूपितत्वादाश्रयतासंबन्धेनेति वृत्तिमत्त्वस्यानुकार्ये सत्त्वान्नानुकार्यस्य शाब्दबोधविषयत्वानुपपत्तिः । आश्रयतासंबन्धेन वृत्तिमतोऽर्थस्य शाब्दे भानाङ्गीकारादिति भावः । नन्वाश्रयतासंबन्धेन वृत्तिमत्त्वस्यैव शाब्दबोधविषयत्वनियामकत्वे निरूपकतासंसर्गेण वृत्तिमतोऽर्थस्य शाब्दबोधे भानं न स्यादित आह—**निरूपकताश्रयतान्यतरेति** । निरूपकतासंबन्धेनाऽऽश्रयतासंबन्धेन वा वृत्तिमतोऽर्थस्य शाब्दे भानं स्वीक्रियते । न तूभयोरेकेनैव संबन्धेन वृत्तिमत इत्याग्रह इति भावः । शक्तिरूपाया वृत्तेर्निरूपकोऽर्थः, तत्र निरूपकता, आश्रयस्तु शब्दः, तत्र आश्रयता । तथा च निरूपकतासंबन्धेन शक्तिरूपवृत्तिमान् अर्थः । आश्रयतासंबन्धेन च तादृशवृत्तिमाञ्छब्दः । सत्येवं घटमानयेत्यादौ वाक्यार्थबोधे निरूपकतया वृत्तिमतः कम्बुग्रीवादिविशिष्टार्थस्यैव भानं पामरजनैरनुभूयते, तथाऽपि न सोऽस्ति प्रत्ययो लोके, विषयत्वमनादृत्येति चाभियुक्तमवाक्यपदीयकृद्धर्यनुभवबलादाश्रयतया वृत्तिमतः शब्दस्यापि बोधे भानं स्वीक्रियत इत्याशयेनोक्तमन्यतरसंबन्धेनेति । अत एव गामानयेत्यत्र गोत्वस्त्रीत्वैकत्वविशिष्ट—गोशब्दवाच्यगोकर्मकमानयनमिति सर्वत्रैवोपस्थापकशब्दघटितं शाब्दबोधवर्णनं संगच्छते । एवं चानुकरणस्थले भेदाभेदोभयपक्षेऽनुकार्यस्य शाब्दे भानसत्त्वेऽपि भेदपक्षेऽनुकरणस्यानुकार्ये शक्तिः । सा च शक्तिरनुकार्ये निरूपकतासंबन्धेनानुकरणे स्वाश्रयतासंबन्धेन वर्तत इति कृत्वा शक्तिरूपवृत्तिनिरूपकार्थप्रतिपादकत्वादनुकरणस्य प्रातिपदिकसंज्ञा, निरूपकतासंबन्धेन वृत्तिमत्त्वादनुकार्यस्य शब्दस्य शाब्दबोधे भानं च सिध्यति । अर्थवत्सूत्रस्य वृत्तिनिरूपकार्थप्रतिपादकशब्दस्य प्रातिपदिकसंज्ञा भवतीत्यर्थः । वृत्त्याऽर्थप्रतिपादकस्य संज्ञेति यावत् । अत एवानुकार्यानुकरणयोरभेदपक्षे भेदमूलिकाया वाच्यवाचकभावापरपर्यायकवृत्तेरसंभवेनानुकार्यानुकरणयोर्वृत्तिमत्त्वस्य वक्तुमशक्यत्वादनुकरणस्य वृत्त्याऽर्थप्रतिपादकत्वरूपार्थवत्त्वाभावेन प्रातिपदिकसंज्ञा न भवति, ततश्च सुबुत्पत्त्यभावात्पदसंज्ञाया अभावेन गवित्ययमाहेत्यत्रापदान्तत्वादुकारस्य लोपः शाकल्यस्येति लोपो न । प्रातिपदिकसंज्ञाया अभावादेव च भुवो वुगित्यत्रैव भू सत्तायामित्यत्र विभक्तिर्न

( नामार्थनिर्णयः )

वद्यम् । संबन्धस्योभयनिरूप्यत्वात्पदादर्थस्येव तद्बोधकत्वेन स्वस्यापि ज्ञानसंभवाच्चेति ।

---

कृता । नन्वेवमभेदपक्षेऽनुकार्यानुकरणयोर्वृत्तिमत्त्वाभावे सत्यनुकार्यस्य शाब्दे भानं न स्यात्, शाब्दे शब्दभाने वृत्तिमत्त्वस्य नियामकत्वादिति चेदुच्यते—अभेदपक्षेऽनुकार्यस्य किंचिदर्थवाचकत्वाच्छब्दतदर्थयोर्वृत्तिरस्ति । तत्रार्थो वृत्तेर्निरूपकः, अनुकार्यशब्दस्त्वाश्रयः । तथा च निरूपकतासंबन्धेनार्थो वृत्तिमान्, अनुकार्यशब्दस्त्वाश्रयतासंबन्धेन वृत्तिमान् । तत्रानुकार्येणाभेदमापन्नस्यानुकरणस्याप्याश्रयतासंबन्धेन वृत्तिमत्त्वादनुकार्यस्य शाब्दे भानं भवति । अनुकरणस्य प्रातिपदिकसंज्ञा तु न भवति । वृत्त्याऽर्थप्रतिपादकत्वरूपार्थवत्त्वाभावात् । न चानुकार्यस्य वृत्त्याऽर्थप्रतिपादकत्वरूपार्थवत्त्वसत्त्वात्तदभेदमापन्नस्यानुकरणस्यापि तादृशार्थवत्त्वस्य दुर्वारतया प्रातिपदिकसंज्ञा स्यादिति वाच्यम् । अभेदपक्षेऽनुकार्यस्य किंचिदर्थवाचकत्वेऽप्यनुकरणस्य तदर्थवाचकत्वाभावात्, अनुकरणादनुकार्यार्थाप्रतीतेरनुभवसिद्धत्वादिति भावः । अभेदपक्षेऽअनुकार्यस्य किंचिदर्थसत्त्वे मानं तु 'भू सत्तायाम्' इत्याद्यर्थनिर्देश एव । नहि तत्र सत्ताद्यर्थोऽनुकरणस्येत्येवं कोऽप्यवगच्छति ? किं त्वनुकार्यस्य भूधातोरेवेति सर्वानुभवः । भेदपक्षे त्वनुकरणान्न कस्याचिदप्यर्थस्य प्रतीतिर्भवति किं त्वनुकरणाच्छाक्तिरूपवृत्त्याऽनुकार्यशब्दरूपस्यार्थस्य प्रतीतिर्जायते । तत्र निरूपकतासंबन्धेन वृत्तिमत्त्वादनुकार्यस्य शाब्दे भानं, अनुकरणस्य तु अनुकार्यशब्दरूपतादृशवृत्तिमदर्थप्रतिपादकत्वात्प्रातिपदिकसंज्ञा च सिध्यतीति बोध्यम् । नन्वनुकरणस्य कथं वृत्त्याश्रयता ? अनुकार्यनिरूपिता वृत्त्याश्रयताऽनुकरणस्येति चेत्—निरूप्यनिरूपकभावस्य भेदमूलकत्वेनानुकार्यानुकरणयोरभेदे तदसंभवादनुकरणस्यानुकार्यनिरूपितवृत्त्याश्रयता वक्तुमशक्या । न चाभेदपक्षेऽनुकार्यस्य किंचिदर्थवाचकत्वाद्गोव्यक्त्यादितत्तदर्थनिरूपितवृत्त्याश्रयताऽनुकार्येयाऽस्ति सैव वृत्त्याश्रयता तदभेदमापन्नेऽनुकरणेऽप्यस्तीति वाच्यम् । अनुकरणादनुकार्यार्थगोव्यक्त्यादिप्रतीतेः कथमप्यनुभवाभावात्तादृशार्थनिरूपितवृत्त्याश्रयताया अप्यनुकार्याभेदमापन्नेऽप्यनुकरणे वक्तुमशक्यत्वादत आह—संबन्धस्योभयेति । संबन्धस्य संबन्धिनौ द्वौ, तौ च संबन्धनिरूपकौ, संबन्धश्च संबन्धिद्वयनिरूप्यः, अतः संबन्धिभ्यां भिन्नो द्विष्ठश्च संबन्ध इत्युच्यते । घटशब्दतदर्थयोर्यः संबन्ध-

उक्तं च वाक्यपदीये—

"ग्राह्यत्वं ग्राहकत्वं च द्वे शक्ती तेजसो यथा ।

---

स्तस्य निरूपकौ संबन्धिनौ घटशब्दस्तदर्थश्चेति द्वौ । संबन्धस्य सर्वत्रोभयनिरूप्यत्वमेव लोके प्रसिद्धं, न क्वाप्येकनिरूप्यत्वं दृश्यते । शब्दार्थयोस्तादृशसंबन्धश्च बोध्यबोधकभावरूपः । एतेनासौ संबन्ध एव शक्तिरिति सूचितम् । तत्र बोधकतारूपा शक्तिः शब्दनिष्ठा, बोध्यतारूपा तु शब्दार्थनिष्ठा । तथा च शब्दतदर्थौ द्वावपि वृत्त्याश्रयौ । एवं च बोध्यतारूपवृत्त्याश्रयत्वाद्यथा शब्दार्थस्य शाब्दे भानं जायते तद्वद्बोधकतारूपवृत्त्याश्रयत्वाच्छब्दस्यापि शाब्दबोधे भानं संभवेत् । अनया रीत्या सर्वत्रैव शाब्दे शब्दभानमुपपादनीयम् । अनुकरणस्थलेऽभेदपक्षेऽनुकार्यस्य गोव्यक्त्यादितत्तदर्थनिरूपितवृत्त्याश्रयत्वात्तदभेदमापन्नस्यानुककरणस्यापि तादृशवृत्त्याश्रयत्वं, शाब्दे जायमानानुकार्यरूपशब्दभानानुभवबलादेवाङ्गीकार्यम् । तथा चानुकरणस्यापि वृत्त्याश्रयत्वाद् वृत्तिजन्यपदोपस्थितेः सत्त्वान्नानुकार्यस्य शाब्दे भानानुपपत्तिरिति भावः । भेदपक्षे तु गोव्यक्त्यादितत्तदर्थनिरूपितवृत्त्याश्रयत्वमनुकार्य एव नानुकरण इत्यनुकरणेनानुकार्योपस्थित्यर्थं तत्र शक्त्यन्तरकल्पनमावश्यकमिति भावः । एवं च शब्दस्य स्वस्वरूपोपस्थापकत्वाच्छब्दे उपस्थाप्यत्वोपस्थापकत्वयोः समावेशः सिध्यति । ननु निरुक्तरीत्याऽनुकरणस्य वृत्त्याश्रयत्वं वक्तुमशक्यम् । अनुकरणाद् गोव्यक्त्यादितत्तदर्थप्रतीतेरननुभवात् । तथा च व्यक्त्याद्यर्थनिष्ठबोध्यतानिरूपितबोधकतारूपशक्त्याश्रयत्वाभावेनानुकरणस्य वृत्त्याश्रयत्वमसंभवि । इति चेदुच्यते—बोधकताशक्तिः शब्दे प्रसिद्धा, बोध्यताशक्तिस्तु गोव्यक्त्याद्यर्थे । तत्रानुकरणस्य शब्दत्वात्तस्मिन्बोधकताशक्तिरस्त्येव । तथा चानुकरणशब्दनिष्ठबोधकतानिरूपितबोध्यताया अर्थत्वेन प्रसिद्धे गोव्यक्त्यादौ बाधादनुकरणशब्द एव सा कल्प्यते । स्वनिष्ठबोधकतानिरूपितबोध्यतारूपसंबन्धाश्रयता स्वस्मिन्नेवेति यावत् । ततश्चानुकरणस्यापि वृत्त्याश्रयत्वाद वृत्त्या पदजन्यपदार्थोपस्थितेः सत्त्वान्न शाब्दे शब्दभानानुपपत्तिरित्याहुरन्ये । एवं च बोध्यताबोधकतयोरेकत्र समवस्थितिः कल्प्यत इति भावः । नेदं बोध्यताबोधकतयोरेकाश्रयत्वं केवलं स्वकपोलकल्पितं, किंतु शास्त्रकृत्संमतमपीति हर्युक्तिप्रमाणेन स्पष्टयति—उक्तं चेति । ग्राह्यत्वं—बोध्यत्वं, ग्राहकत्वं—बोधकत्वम् । तेजसः—दीपादेः । एते—ग्राह्यत्वग्राहकत्वरूपे द्वे शक्ती

( नामार्थनिर्णयः )

तथैव सर्वशब्दानामेते पृथगवस्थिते " इति ॥

" विषयत्वमनादृत्य शब्दैर्नार्थः प्रकाश्यते " ।

इति चेति ॥ २ ॥ ( २६ )

प्रसङ्गादनुकार्यानुकरणयोरभेदपक्षे साधकमाह—

---

इत्यर्थः । सर्वशब्दानां पूर्वोक्ते द्वे शक्ती स्तः । परं तु पृथगवस्थिते—पार्थक्येन समवस्थिते इति भावः । एतेनैतयोः शक्त्योरसमानियतत्वं प्रदर्शितं भवति । अयं भावः—घटादिद्रव्यस्य चाक्षुषप्रत्यक्षे दीपाद्यालोकसंयोगो हेतुरिति निर्विवादम् । अन्यथाऽन्धकारेऽपि घटादिचाक्षुषप्रत्यक्षस्याप्यापत्तेः । तथा च घटदीपाद्यालोकसंयोग एव घटस्येव स्वस्यापि प्रत्यक्षं जनयति । विषयसंनिधाने सति दीपादितेजसि शक्तिद्वयस्य लोके प्रत्यक्षसिद्धत्वात् । एवमर्थगोचरशब्दनिष्ठशक्तिसहकृत एव शब्दोऽर्थस्य स्वस्वरूपस्य च प्रत्यक्षं जनयति । यथा च विषयासंनिधाने तु स एवाऽऽलोकसंयोगः केवलं स्वस्यैव प्रत्यक्षं जनयति, न घटादेः । तथाऽर्थे तात्पर्याभावे शब्दे च तात्पर्ये सति स एव शब्दः स्वनिष्ठतादृशवृत्त्यैव स्वस्यैव प्रत्यक्षं जनयतीति । स्वं रूपमिति सूत्रभाष्यादपि एतदेव लभ्यत इति तदर्थकं प्रमाणभूतं श्लोकान्तरमुदाहरति—विषयत्वमनादृत्येति । शब्दैः स्वात्मनो ज्ञानविषयत्वमनादृत्यासंप्राप्य नार्थो बोध्यते, किं त्वात्मनो ज्ञानविषयत्वं संपाद्यैव शब्दैरर्थो बोध्यते । ज्ञातस्यैव शब्दस्यार्थबोधजनकत्वादिति भावः । घटादिविषयसंनिधाने तेजोनिष्ठग्राहकतानिरूपितग्राह्यता घटादौ प्रत्यक्षसिद्धा, घटादिविषयासंनिधाने तु तेजोनिष्ठग्राहकतानिरूपितग्राह्यताया विषयासंनिधानेन घटादौ बाधसत्त्वात्ततः परावृत्ता प्रत्यावृत्तन्यायेन स्वस्मिन्नेव यदा पर्यवस्यति तदा स्वनिष्ठग्राहकतानिरूपितग्राह्यताया आश्रयः स्व एवेति केवलं तेजस एव प्रत्यक्षं भवति, यथैतत्तद्वदनुकरणस्थलेऽभेदपक्षेऽनुकरणशब्दनिष्ठबोधकतानिरूपितबोध्यताया गोव्यक्त्याद्यर्थे तात्पर्याभावेन बाधात्ततः परावृत्ता सती अनुकरणशब्द एव प्रत्यागतेति केवलं शब्दस्वरूपस्यैव प्रत्यक्षं भवति । एवं च शब्दनिष्ठबोधकतानिरूपितबोध्यतायाः शब्दाश्रयकत्वं शास्त्रकृत्संमतमिति तात्पर्यम् ॥ २६ ॥

प्रसङ्गादिति । शब्दस्य नामार्थत्वेन विचारप्रसङ्गादित्यर्थः । अभेदे साधकमिति । अनुकार्यानुकरणयोरभेदोपपादकमित्यर्थः । आह—ब्रूते—अत

**अत एव गवित्याह भू सत्तायामितीदृशम् ।**
**न प्रातिपदिकं नापि पदं साधु तु तत्स्मृतम् ॥ ३ ॥ ( २७ )**

( इति भट्टोजिदीक्षितविरचितकारिकासु नामार्थनिर्णयः ) ।

" गवित्ययमाह " " भू सत्तायाम् " इत्येवमादयो यतोऽनुकरणशब्दा अनुकार्यान्न भिद्यन्तेऽतस्तेषामर्थवत्त्वाद्यभावात् " अर्थवदधातुः " [ पा० सू० १-२-४५ ] इत्याद्यप्रवृत्तौ न पदत्वं न वा प्रातिपदिकत्वम् । अथ च साधुत्वमित्युपपद्यते । अन्यथा " प्रत्ययः " [पा० सू० ३-१-१ ] " परश्च " । [ पा० सू० ३-१-२ ] " अपदं न प्रयुञ्जीत " इति निषेधादिलङ्घनादसाधुताप्राप्तिरित्यर्थः ॥ ३ ॥ ( २७ ) ॥

---

**एव गवित्याहेति** । अत एवेत्यस्य व्याख्यानं—गवित्याहेत्यादि । **न भिद्यन्त इति** । अनुकार्याद्भिन्नत्वेन न विवक्ष्यन्त इत्यर्थः । एवं चानुकरणशब्दानामर्थवत्त्वाभावेऽनुकार्येण सह तेषामभेदविवक्षैव हेतुरिति भावः । **इत्याद्यप्रवृत्ताविति** । वृत्त्याऽर्थबोधजनकत्वरूपार्थवत्त्वाभावादिति भावः । **साधुत्वमित्युपपद्यत इति** । वक्ष्यमाणरीत्याऽसाधुत्वाभावे शिष्टप्रयुक्तत्वादिना साधुत्वमबाधितमिति भावः । नन्वभेदाभावेऽपि तस्य साधुत्वं कुतो नेत्याशङ्कायामाह—**अन्यथेति** । भेदस्यैवाङ्गीकार इत्यर्थः । प्रत्ययः, **परश्चेति** । प्रत्ययविधौ पञ्चमीनिर्देशात्षष्ठ्यंशविकल्पायाः ' तस्मादित्युत्तरस्य ' इति परिभाषायाः प्रवृत्त्यैव प्रत्ययस्य प्रकृत्यवधिकपरत्वस्य लाभे सिद्धे परश्चेति सूत्रं नियमार्थं—प्रत्ययपरैकैव प्रकृतिः प्रयोक्तव्येति, एतदाशयेनैव पठ्यते—न केवला प्रकृतिः प्रयोक्तव्या, नापि केवलः प्रत्ययः प्रयोक्तव्य इति । तथा च नियमशास्त्राणां निषेधमुखेन प्रवृत्तिरिति पक्षे निषेधोल्लङ्घनं स्पष्टमेव । विधिमुखेन प्रवृत्तिरिति भाष्यसिद्धान्ते तु आर्थिकनिषेधोल्लङ्घनमिति बोध्यम् । अभेदपक्षे, उक्तरीत्या प्रातिपदिकत्वाभावेन प्रत्ययविधावुद्देश्यतावच्छेदकाक्रान्तत्वरूपप्रकृतित्वाभावेन न केवलेति निषेधस्य प्रत्ययविधानावधित्वयोग्ये प्रवृत्त्या, पदत्वयोग्य एव पदत्वरहिते ' अपदं न प्रयुञ्जीत ' इति निषेधप्रवृत्त्या च निषेधद्वयानवतार इति भावः । अभेदपक्षे वृत्त्याऽर्थबोधजनकत्वेऽपि शक्तिनिरूपकार्थबोधजनकत्वाभावान्न प्रातिपदिकत्वमिति बोध्यम् ॥ २७ ॥

इति रङ्गोजिभट्टात्मजकौण्डभट्टविरचिते वैयाकरणभूषणसारे
नामार्थनिर्णयः समाप्तः ॥

---

## ( अथ समासशक्तिनिर्णयः )।

---

समासान्विभजते—

**सुपां सुपा तिङा नाम्ना धातुनाऽथ तिङां तिङा ॥**
**सुबन्तेनेति च ज्ञेयः समासः षड्विधो बुधैः ॥ १ ॥ ( २८ ) ॥**

**सुपां सुपा,** पदद्वयमपि सुबन्तम् । राजपुरुष इत्यादिः । **सुपां तिङा**। पूर्वपदं सुबन्तमुत्तरपदं तिङन्तम् । पर्यभूषत् । अनुव्यचलत् । " गतिमतोदात्त-

---

इति वैयाकरणभूषणसारव्याख्यायां शांकर्यां नामार्थनिर्णयनिरूपणम् ।
रङ्गभट्टतनूजेन शंकरेण विनिर्मिते ।
सारीयेऽभूद्विवरणे नामार्थानां निरूपणम् ॥ ४ ॥

---

### अथ समासशक्तिनिर्णयः

**समासानिति** । समासत्वं च—व्याकरणशास्त्रप्रणेतृपाणिन्यादिमुनिकृतसंकेत-संबन्धेन समासपदवत्त्वम् । यस्मिन्समुदाये पदद्वयं परस्परं समस्यते स समुदायः समास इति यावत् । समासशब्दे हलश्चेत्यधिकरणे घञ् । विभजते—विपूर्वकभज-धात्वर्थोऽवान्तरधर्मपुरस्कारेण कथनम् । तथा च समासत्वावान्तरधर्मपुरस्कारेण कथयति—**सुपां सुपा, तिङा, नाम्नेति । पदद्वयम** **िति** । अपिना पदत्रयादि-संग्रहः । तेन ब्रह्मजातः, चित्राजरद्गुः । होतृपोतृनेष्टोद्गातारः, इत्यादिसमासानां नासंग्रहः । तथा चानेकसुबन्तघटितत्वं समासत्वावान्तरधर्मः । अनेकसुबन्तघ-टितसमासोदाहरणमाह—**राजपुरुष इत्यादिरिति । सुपां तिङेति** । एतद्विव-रणं पूर्वपदं सुबन्तमित्यादि । तथा च सुबन्ततिङन्तात्मकपूर्वोत्तरपदघटितत्वमवा-न्तरधर्मः । एवं रीत्याऽग्रेऽप्यवान्तरधर्मः स्वयमूह्यः । उदाहरणं—पर्यभूषत्, अ-नुव्यचलदिति । **गतिमतोदात्तवतीति** । उपलक्षणमिदं, सहेति योगविभागस्या-पि । देवो देवान् क्रतुना पर्यभूषादिति ऋक्संहितायाम् । अन्वितस्य व्यचलदित्य-नेन, वीत्यस्य चाचलदित्यनेन युगपत्समासः । उभयत्रापि सहेति योगविभागेन

वता तिङाऽपि समासः ” इति वार्तिकात्समासः । **सुपां नाम्ना ।** कुम्भकार इत्यादि । “ उपपदमतिङ् ” [ पा० सू० २–२–१९ ] इति समासः । स च “ गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक्सुबुत्पत्तेः ” इति परिभाषया भवति सुबुत्पत्तेः प्राक् । अत्रोत्तरपदे सुबुत्पत्ते प्रागित्यर्थात् । अन्यथा चर्मक्रीतीत्यादौ नलोपानापत्तेः । **सुपां धातुना ।** उत्तरपदं धातुमात्रं न सुप्तिङन्तम् । कटप्रूः । आयतस्तूः । “ क्विब्वचिप्रच्छ्यायतस्तुकटप्रुजुश्रीणां दीर्घश्च ” इति वार्तिकात् । **तिङां तिङा ।** पिबतखादता पचतभृज्जतेत्यादिः । “ आख्यात-

---

समासे सति ‘ न समासे ’ इति शाकलनिषेधाद्यणादेशः समासोदात्तत्वं च सिध्यति । अन्ये तु तत्र सुबित्येकत्वस्य विवक्षितत्वाद्वेः पूर्वं समासः पश्चादनोः । तत्र शाकलप्रतिषेधाद्यणादेशेऽप्यन्तोदात्तत्वं न भवति, तिङ्ङतिङ इति निघातात् । अनोर्गतिर्गताविति निघातः । वेर्यणादेश उदात्तस्वरितयोरितयटः स्वरितत्वमित्याहुः । सुपां नाम्नेत्यस्योदाहरणं–कुम्भकार इति । कुम्भ–अस् , कार–अ, इत्यलौकिकप्रक्रियावाक्ये उपपदमतिङिति समासः । स च गतिकारकोपपदानामिति परिभाषया कारेतिप्रातिपदिकात्सुबुत्पत्तेः पूर्वं भवति । सुबुत्पत्तेः प्रागित्यस्योत्तरपदे सुबुत्पत्तेः प्रागित्यर्थो बोध्यः । **अन्यथेति ।** पूर्वपदेऽपि सुबुत्पत्तेः प्रागेव समासप्रवृत्तौ चर्मक्रीतीत्यत्र पूर्वपदे चर्माणि विभक्त्यभावेन पदत्वाभावान्नलोपानापत्तेरिति भावः । तथा च सुबन्तपूर्वपदकत्वे सति प्रातिपदिकमात्रोत्तरपदकत्वमवान्तरधर्मः । सुपां धातुनेत्यस्य विवरणं–उत्तरपदं धातुमात्रमिति । सुबन्तपूर्वपदकत्वविशिष्टधातुमात्रोत्तरपदघटितत्वमवान्तरधर्मः । कटं प्रवते कटप्रूः । प्रुङ् गतावित्यस्मात्कर्तरि क्विप् । आयतस्तूः । आयतं स्तौतीत्यर्थः । पूर्ववत्कर्तरि क्विप् । उभयत्रापि क्विब्वचीति धातोर्दीर्घः । **वार्तिकादिति ।** अन्येभ्योऽपि दृश्यते ( पा. सू. ३ । २ । १७८ ) इति सूत्रस्थवार्तिके निपातनात्समासः । यत्र समुदायो निर्दिश्यते तेन चावयवा अनुमीयन्ते तन्निपातनम् । यत्र चावयवा निर्दिश्यन्ते तेन च समुदायोऽनुमीयते स विधिरिति भाष्यम् । क्विपः सर्वापहारित्वाल्लोपेन धातुमात्रमुत्तरपदमिति भावः । **तिङां तिङेति ।** पदद्वयमपि तिङन्तमित्यर्थः । पूर्वोत्तरपदभूततिङन्तद्वयघटितत्वमवान्तरधर्मः । **पिबतेति ।** पिबत खादतेति सततं यस्यां क्रियायामभिधीयते सा पिबतखादतेत्यर्थः । एवं पचतभृज्जतेत्यत्राप्यर्थोऽनुसंधेयः । **आख्यातमिति ।** क्रियायाः सातत्ये नैरन्तर्ये गम्ये

( समासशक्तिनिर्णयः )

माख्यातेन क्रियासातत्ये " इति मयूरव्यंसकाद्यन्तर्गणसूत्रात् । तिङां सुबन्तेन। पूर्वपदं तिङन्तमुत्तरं सुबन्तम् । जहिस्तम्बः । " जहि कर्मणा बहुलमाभीक्ष्ण्ये कर्तारं चाभिदधाति " इति मयूरव्यंसकाद्यन्तर्गणसूत्रात् । अयं षड्विधोऽपि समासः " सह सुपा " [ पा० सू० २–१–४ ] इत्यत्र योगविभागेन भाष्ये व्युत्पादितः स्पष्टः शब्दकौस्तुभादौ ॥ १ ॥ ( २८ ) ।

स्वयं भाष्यादिसिद्धं तद्भेदं व्युत्पाद्य प्राचीनवैयाकरणोक्तविभागस्याव्याप्त्यतिव्याप्त्यादिभिस्तल्लक्षणस्य मायिकत्वं च दर्शयति—

---

तिङन्तं तिङन्तेन समस्यत इत्यर्थः । **अन्तर्गणसूत्रादिति** । अस्य समासो भवतीति शेषः । तिङां सुबन्तेनेत्यस्य विवरणं—पूर्वपदं तिङन्तमित्यादि । तिङन्तपूर्वपदकत्वविशिष्टसुबन्तोत्तरपदघटितत्वमवान्तरधर्मः । **जहिस्तम्ब इति** । स्तम्बं जहीत्याभीक्ष्ण्येन य आह स जहिस्तम्बः । स्तम्बाघातकर्ता समासार्थः । **जहिकर्मणेति** । जहीत्येतत्तिङन्तं, सुबन्तेन कर्मार्थकेन समस्यते, आभीक्ष्ण्ये गम्ये, समासश्चेत्कर्तारमभिदधातीत्यर्थः मयूरव्यंसकाद्यन्तर्गणसूत्रात्समास इत्यर्थः । **भाष्ये व्युत्पादित इति** । तत्र हि—वृद्धो यूनेतिवत्सुपेति तृतीयैव सहार्थमाक्षेप्स्यतीतिसहग्रहणं किमर्थमिति प्रश्ने सहभूतयोरेव समाससंज्ञा यथा स्यात्प्रत्येकं मा भूदित्युक्त्वा समुदाये वाक्यपरिसमाप्तिन्यायेन गर्गदण्डनवत्सहभूतयोरेव समाससंज्ञा स्यान्न प्रत्येकमित्युत्तरितम् । तत एवं तर्हि सिद्धे यत्सहग्रहणं तद्योगाङ्गं विज्ञायते । योगोऽत्राष्टाध्यायी, तस्याः साक्षादङ्गत्वाय योगविभागः क्रियते । ' सह ' इति, सुप् समस्यते, केन ? समर्थेन, पर्यभूषत् , अनुव्यचलत् । ततः ' सुपा ' सुपा च सह सुप् समस्यते । अधिकारश्च लक्षणं च । यस्य समासस्यान्यल्लक्षणं नास्ति तस्येदं लक्षणं भविष्यतीत्युक्तत्वात्षड्विधोऽप्ययं समासः सहेतियोगविभागेन साधित इति भावः ॥ २८ ॥

**तद्भेदमिति** । समासभेदमित्यर्थः । व्युत्पाद्य—व्याख्याय । विभागस्य—चतुर्विधस्य । अव्ययीभाव—तत्पुरुष—बहुव्रीहि—द्वंद्वात्मकस्येति यावत् । **अव्याप्त्यादिभिरिति** । लक्ष्यैकदेशावृत्तित्वमव्याप्तिः । यथा नीलरूपवत्त्वं गोर्लक्षणं कृतं चेत्पीतगव्यामव्याप्तिस्तत्र नीलरूपाभावात् । लक्ष्यवृत्तित्वे सत्यलक्ष्यवृत्तित्वमतिव्याप्तिः । यथा शृङ्गित्वं गोर्लक्षणं कृतं चेल्लक्ष्यभूतायां गवि शृङ्गित्वस्य विद्यमानत्वेऽपि महिष्यादावतिव्याप्तिस्तत्रापि शृङ्गित्वस्य विद्यमानत्वात् । लक्ष्यमा-

**समासस्तु चतुर्धेति प्रायोवादस्तथा परः ॥**
**योऽयं पूर्वपदार्थादिप्राधान्यविषयः स च ॥**
**भौतपूर्व्यात्सोऽपि रेखागवयादिवदास्थितः ॥२॥ (२९)**

**चतुर्धा**, अव्ययीभावतत्पुरुषद्वंद्वबहुव्रीहिभेदात् । अयं प्रायोवादः । भूतपूर्वः, दृन्भूः, काराभूः, आयस्तूः, वागर्थाविवेत्याद्यसंग्रहात् । तथा पूर्वपदार्थप्रधानोऽ-

---

त्रावृत्तित्वमसंभवः । यथा गोरेकशफवत्त्वं लक्षणं कृतं चेद्यावद्गोव्यक्तीनां द्विशफवत्त्वेनैकशफवत्त्वस्य कुत्राप्यसत्त्वात् । **तल्लक्षणस्येति** । अव्ययीभावादिसमासलक्षणस्येत्यर्थः । लक्षणं च—अव्याप्त्यतिव्याप्त्यसंभवदोषत्रयरहितो धर्मः । अत एव लक्षणे तादृशान्येव पदानि देयानि, यादृशैरव्याप्त्यादयो दोषा न प्रादुःष्युरित्युच्यतेऽभियुक्तैः । **प्रायिकत्वमिति** । प्रायेण भवं प्रायिकं तस्य भावस्तत्त्वम् । प्रायोवाद इत्यर्थः । बाहुल्याभिप्रायेण तथा विभागस्तथा लक्षणोक्तिश्चेति यावत् । बहुषु स्थलेषु तथा दर्शनेऽपि केषुचित्तददर्शनेन प्राचीनोक्तविभागस्य तथा लक्षणोक्तेश्च प्रायिकत्वं, न सार्वत्रिकत्वमिति भावः । तदेतदाह—

**समासस्तु चतुर्धेति** । चतुष्प्रकारकः । प्रकारार्थे धाप्रत्ययविधानात् । सामान्यस्य भेदको विशेषः प्रकार इत्युच्यते । प्रकारमेव दर्शयति—**अव्ययीभावे**त्यादि । विभागतावच्छेदकधर्मभेदादित्यर्थः । **अयमिति** । समनन्तरोक्तश्चतुर्धा विभाग इत्यर्थः । **प्रायोवाद इति** । प्रायिक इत्यर्थः । प्राचीनोक्तविभागस्य प्रायिकत्वे हेतुमाह—**भूतपूर्व इत्यादिना** । **असंग्रहादिति** । एषां समासानामव्ययीभावादिसंज्ञारहितत्वादित्यर्थः । तत्र भूतपूर्व इत्यत्र 'सुप्सुपा, आयतस्तूरित्यत्र क्विब्वचीति वार्तिके निपातनात्, वागर्थाविवेत्यत्र 'इवेन सह समासः' इति च समासः । समासाधिकारीयसूत्रविहितत्वाच्चतुर्धाविभागे तेषामसंग्रहे चेष्टापत्तिः कर्तुमशक्या । योऽयं पूर्वपदार्थप्रधानोऽव्ययीभाव इत्यादिवादः सोऽपि प्रायिक इत्याशयेनाऽऽह—**इत्यादिलक्षणमपि प्रायिकमिति** । पूर्वपदार्थप्रधान इत्यस्य पूर्वपदार्थः प्रधानं यत्रेत्यर्थः । तथा च पूर्वपदार्थनिष्ठमुख्यविशेष्यताकबोधजनकोऽव्ययीभाव इति तात्पर्यम् । तेन राजपुरुष इत्यादावपि राजत्वादिनिष्ठप्रकारतानिरूपितराजादिनिष्ठमुख्यविशेष्यताकबोधजनकत्वेऽपि न तत्रातिव्याप्तिः । राजादौ राजपुरुषादिसमासजन्यबोधीयमुख्यविशेष्यताविरहात् । एवमग्रेऽपि बोध्यम् । उपकुम्भमित्याद्यव्ययीभावस्य कुम्भस्य समीपमित्येवंरीत्या

( समासशक्तिनिर्णयः )

व्ययीभावः, उत्तरपदार्थप्रधानस्तत्पुरुषः, उभयपदार्थप्रधानो द्वंद्वः, अन्यपदार्थप्रधानो बहुव्रीहिः, इत्यादिलक्षणमपि प्रायिकम् । उन्मत्तगङ्गम् , सूपप्रति, अर्धपिप्पली, द्वित्राः, शशकुशपलाशमित्यादौ परस्परव्यभिचारात् । तथा हि—

---

पूर्वपदार्थमुख्यविशेष्यकबोधजनकत्वाल्लक्षणसमन्वयः। **उत्तरपदार्थप्रधान इति ।** पूर्वपदार्थनिष्ठप्रकारतानिरूपितोत्तरपदार्थनिष्ठमुख्यविशेष्यताकबोधजनकस्तत्पुरुष इत्यर्थः । तेनोपकुम्भमित्यत्र कुम्भपदे कुम्भत्वनिष्ठप्रकारतानिरूपितकुम्भनिष्ठविशेष्यताकबोधजनकत्वेऽपि न तत्रातिव्याप्तिः । कुम्भपदे उपकुम्भमित्याकारकसमासजन्यबोधीयमुख्यविशेष्यताविरहात् । **उभयपदार्थेति ।** अनेकपदार्थप्रधान इत्यर्थः । तेन त्रिचतुरादिपदघटितसमासस्य नासंग्रहः । **अन्यपदार्थेति ।** समासघटकीभूतपदार्थातिरिक्तपदार्थेत्यर्थः । रामकृष्णावित्यत्र साहित्यविशिष्टयो रामकृष्णयोः पूर्वोत्तरपदार्थयोर्विशेष्यतया, चित्रगुरित्यत्र च चित्राभिन्नगवीस्वामिनोऽन्यपदार्थस्य गोपस्य विशेष्यतया भानाद्यथायथं लक्षणसमन्वयो बोध्यः । लक्षणानां प्रायिकत्वे हेतुमाह—**उन्मत्तगङ्गमित्यादिना । परस्परेति ।** परस्परस्य व्यभिचारात्—लक्षणतावच्छेदक—लक्षिततावच्छेदकयोः परस्पराभाववद्वृत्तित्वादित्यर्थः । व्यभिचारपदस्यातिव्याप्तावेव शास्त्रकृतां व्यवहारेऽप्यत्र दोषवत्तयाऽव्याप्त्यतिव्याप्ती उभयं विवक्षितमिति भावः। व्यभिचारमेव दर्शयति—**तथाहीति । उन्मत्तगङ्गमिति ।** अव्ययीभावोऽयम् । अव्ययीभावत्वं च—पूर्वपदार्थप्राधान्यवत्समासत्वम् । प्रत्यासत्त्योत्तरपदार्थनिष्ठप्रकारतानिरूपितपूर्वपदार्थनिष्ठमुख्यविशेष्यताकबोधजनकत्वमिति यावत् । अत्र पूर्वपदार्थप्रधानः ( पूर्वपदार्थनिष्ठमुख्यविशेष्यताकबोधजनकः ) इति लक्षणम् । लक्ष्यं त्वव्ययीभावः । लक्षणतावच्छेदकं—पूर्वपदार्थनिष्ठमुख्यविशेष्यताकबोधजनकत्वम् । लक्ष्यतावच्छेदकं त्वव्ययीभावत्वम् । उन्मत्तगङ्गमित्यत्रोन्मत्ताभिन्नगङ्गापेक्षया भिन्नस्यान्यपदार्थस्य देशविशेषस्य मुख्यविशेष्यतया प्रतीयमानत्वात् पूर्वपदार्थप्राधान्याभाववति ( लक्षणतावच्छेदकाभावविशिष्टे ) लक्ष्यतावच्छेदकस्याव्ययीभावत्वस्य सत्त्वाल्लक्ष्यैकदेशावृत्तित्वरूपा प्राचीनोक्ताव्ययीभावलक्षणाव्याप्तिः । तथाऽन्यपदार्थप्रधानो बहुव्रीहिरिति बहुव्रीहिलक्षणम् । उन्मत्तगङ्गमित्यत्र चान्यपदार्थप्राधान्येऽपि बहुव्रीहित्वाभावाल्लक्ष्यतावच्छेदकबहुव्रीहित्वाभाववति, अन्यपदार्थप्राधान्यरूपस्य लक्षणता-

( समासशक्तिनिर्णयः )

उन्मत्तगङ्गमित्यव्ययीभावे पूर्वपदार्थप्राधान्याभावादव्याप्तिः। अन्यपदार्थप्राधान्याद्बहुव्रीहिलक्षणातिव्याप्तिश्च। " अन्यपदार्थे च संज्ञायाम् " [ पा० सू० २–१–२१ ] इति समासात्। सूपप्रतीत्यव्ययीभाव उत्तरपदार्थप्राधान्यात्तत्पुरुषलक्षणातिव्याप्तिरव्ययीभावाव्याप्तिश्च। " सुप्प्रतिना मात्रार्थे " [पा०सू० २–१–९] इति समासः। अर्धपिप्पलीतितत्पुरुषे पूर्वपदार्थप्राधान्यसत्त्वादव्ययीभावातिव्याप्तिस्तत्पुरुषाव्याप्तिश्च। " अर्धं नपुंसकम् " [ पा० सू० २–२–२ ] इति समासात्। एवं पूर्वकाय इत्यादौ द्रष्टव्यम्। द्वित्रा इति बहुव्रीहावुभयपदार्थप्रा-

---

वच्छेदकस्य सत्त्वादलक्ष्यवृत्तित्वरूपा प्राचीनोक्तबहुव्रीहिलक्षणातिव्याप्तिश्चेत्यर्थः। उन्मत्तगङ्गमित्यत्रान्यपदार्थप्राधान्ये प्रमाणमाह—' अन्यपदार्थे च संज्ञायां ' ( पा. सू. २। १ २१ इति। समासादिति—अयमन्यपदार्थप्राधान्ये हेतुः। सूपप्रतीति। अव्ययीभावे सूपसंबन्धिलेश इत्यर्थप्रतीत्या तत्पुरुषत्वाभाववति, उत्तरपदार्थनिष्ठमुख्यविशेष्यताकबोधजनकत्वसत्त्वादलक्ष्यवृत्तित्वरूपा प्राचीनोक्ततत्पुरुषलक्षणस्यातिव्याप्तिः, तथा पूर्वपदार्थनिष्ठमुख्यविशेष्यताकबोधजनकत्वस्यासत्त्वाल्लक्ष्यैकदेशावृत्तित्वरूपा प्राचीनोक्ताव्ययीभावलक्षणस्याव्याप्तिरित्यर्थः। ननु सूपप्रतीत्यत्राव्ययीभावत्वसत्त्वे किं प्रमाणं ? किंवाऽव्ययीभावसमासविधायकेऽव्ययस्य प्रथमानिर्दिष्टत्वात्कथमत्राव्ययस्य परनिपात इत्याशङ्क्याऽऽह—सुप्प्रतिना मात्रार्थे ( पा. सू. २। १। ९ इति समासादिति। अव्ययीभावाधिकारस्थेन समासविधानादित्यर्थः। ततश्चाव्ययस्य प्रथमानिर्दिष्टत्वाभावान्नाव्ययोत्तरपदकस्याव्ययीभावसंज्ञायाश्चानुपपत्तिरिति भावः। अर्धपिप्पलीति। तत्पुरुष इति। ' अर्धं नपुंसकम् ' ( पा. सू. २। २। २ ) इति तत्पुरुषाधिकारीयेण सूत्रेण समासविधानादित्यर्थः। पूर्वपदार्थेति। पिप्पलीसंबन्ध्यर्धमित्यर्थप्रतीतेः पूर्वपदार्थनिष्ठमुख्यविशेष्यताकबोधजनकत्वसत्त्वादव्ययीभावत्वाभाववति अलक्ष्यवृत्तित्वरूपा प्राचीनोक्ताव्ययीभावलक्षणस्यातिव्याप्तिः। तथोत्तरपदार्थप्राधान्यासत्त्वाल्लक्ष्यैकदेशावृत्तित्वरूपा प्राचीनोक्ततत्पुरुषलक्षणस्याव्याप्तिः। एवं पूर्वकाय इत्यादावपि निरुक्तरीत्या पूर्वपदार्थप्राधान्यसत्त्वादव्ययीभावलक्षणस्यातिव्याप्तिस्तत्पुरुषलक्षणस्याव्याप्तिश्चेति बोध्यम्। द्वित्रा इति बहुव्रीहाविति। द्वौ वा त्रयो वा इति विग्रहः। शेषो बहुव्रीहिरित्यधिकारपठितेन ' संख्ययाऽव्ययासन्ना ' ( पा. सू. २ २–२५ ) इति सूत्रेण बहुव्रीहिः। ' बहुव्रीहौ संख्येये डज ' ( पा. सू.

( समासशक्तिनिर्णयः )

धान्याद्द्वंद्वातिव्याप्तिर्बहुव्रीह्यव्याप्तिश्च । शशकुशपलाशमित्यादिद्वंद्वे समाहारान्यपदार्थप्राधान्याद्बहुव्रीह्यतिव्याप्तिर्द्वंद्वाव्याप्तिश्च स्यादिति भावः । सिद्धान्ते त्वव्ययीभावाधिकारपठितत्वमव्ययीभावत्वमित्यादि द्रष्टव्यम् । असंभवश्चैषामित्याह—

---

५—४—७३ ) इति समासान्तो डच् । द्वित्रा इत्यत्र द्वित्र्यन्यतर इति बोधोत्पत्तेरुभयपदार्थनिष्ठविशेष्यताकबोधजनकत्वाद्द्वंद्वत्वाभाववति अलक्ष्यवृत्तित्वरूपा प्राचीनोक्तद्वंद्वलक्षणस्यातिव्याप्तिः, अन्यपदार्थनिष्ठमुख्यविशेष्यताकबोधजनकत्वाभावेन च लक्ष्यैकदेशावृत्तित्वरूपा बहुव्रीहिलक्षणस्याव्याप्तिश्च । **शशकुशेति** । चार्थे द्वंद्वः ( पा. सू. २—२—२९ ) इति समाहारे द्वंद्वः । शशकुशपलाशानां समाहार इति बोधोत्पत्तेः समाहाररूपान्यपदार्थनिष्ठमुख्यविशेष्यताकबोधजनकत्वादलक्ष्यवृत्तित्वरूपा प्राचीनोक्तबहुव्रीहिलक्षणस्यात्रातिव्याप्तिः उभयपदार्थनिष्ठविशेष्यताकबोधजनकत्वाभावेन च द्वंद्वलक्षणस्याव्याप्तिश्च । अत्र शशकुशपलाशमित्युपक्रमानुरोधेन द्वंद्वाव्याप्तिरित्यस्य समाहारद्वंद्वाव्याप्तिरित्यर्थो बोध्यः । अन्ये तु सामान्यतो द्वंद्वपदोपादानेन धवखदिरावित्यादीतरेतरयोगद्वंद्वेऽप्युभयपदार्थविशेष्यकबोधजनकत्वासंभवः सूचितः । तस्यायं भावः—चार्थे द्वंद्व इति सूत्रभाष्यपर्यालोचनया बहुव्रीहावन्यपदार्थस्येवेतरेतरयोगेऽपि चार्थसमूहस्यैव प्राधान्यं लभ्यते । तत्रेयान् विशेषः—इतरेतरयोग उद्भूतावयवभेदः समूहः समासार्थः, समाहारद्वंद्वे त्वनुद्भूतावयवभेदः स इति । उद्भूतावयवभेदत्वमवयवगतसंख्यारोपवत्त्वं, अवयवगतसंख्यानारोपे त्वनुद्भूतावयवभेदत्वम् । इदमेव तिरोहितावयवभेदत्वमित्यन्यत्र व्यवहृतम् । एवं चोभयत्रापि समूहस्यैव प्राधान्यादेतन्मते प्राचीनोक्तद्वंद्वलक्षणासंभवो बहुव्रीहिलक्षणातिव्याप्तिश्च द्वंद्वे बोध्या । एवं प्राचीनोक्तानां 'पूर्वपदार्थप्रधानः' इत्यादीनामव्ययीभावादिलक्षणत्वं दूषयित्वा सिद्धान्तिमते तल्लक्षणान्याह—**सिद्धान्ते त्वित्यादि** । अव्ययीभावाधिकारेति । अव्ययीभावाधिकारपठितसूत्रविहितसमासत्वमव्ययीभावत्वम् । तत्पुरुषाधिकारपठितसूत्रविहितसमासत्वं तत्पुरुषत्वमित्यादीत्येवमग्रेऽपि बोध्यम् । लक्ष्यतावच्छेदकत्वं त्वव्ययीभावत्वादिकम् । भूतपूर्वादिसमासानां तु लक्ष्यतावच्छेदकानाक्रान्तत्वात्तदसंग्रहेऽपि न क्षतिः । **असंभवश्चेति** । असंभवो नाम—लक्ष्यमात्रावृत्तित्वम् । लक्ष्यभूतानां गोव्यक्तीनां मध्ये कस्यामपि व्यक्तौ लक्षणसमन्वयाभावः । यथा गोरेकशफवत्त्वम् । यावद्गोव्यक्तीनां द्विशफवत्त्वेनैकशफवत्त्वस्य कुत्राप्यसत्त्वात् । एवं निरुक्तानां

**भौतपूर्व्यादित्यादि** । रेखागवयादिनिष्ठलाङ्गूलादेर्वास्तवपशुलक्षणत्ववदेतेषामपि न समासलक्षणत्वम् । बोधकता तु तद्वदेव स्यादिति भावः ॥ २ ॥ (२९) ।

---

'पूर्वपदार्थप्रधानः' इत्याद्यव्ययीभावादिलक्षणानां लक्ष्यमात्रावृत्तित्वरूपमसंभवं प्रदर्शयति—**भौतपूर्व्यादित्यादि** । पूर्वं भूतं भूतपूर्वम् । भूतपूर्वमेव भौतपूर्व्यम् । स्वार्थे ष्यञ् । वृत्तेः पूर्वकाले ( अर्थात् कुम्भस्य समीपमिति लौकिकविग्रहे ) भूतं यत् पूर्वपदार्थविशेष्यकबोधजनकत्वं तदव्ययीभावसमासलक्षणं न भवति । जहत्स्वार्थावृत्तिपक्षे शक्तपदघटकवर्णानामिव वृत्तिघटकपदानामानर्थक्यात्पूर्वोत्तरपदयोरर्थवत्त्वाभावेनोत्तरपदार्थनिष्ठप्रकारतानिरूपितपूर्वपदार्थनिष्ठविशेष्यताकबोधजनकत्वस्योपकुम्भमित्यव्ययीभावे वक्तुमशक्यत्वात् । एतदेव दृष्टान्तेन स्पष्टयति— **रेखागवयादिनिष्ठेति** । रेखाकारो गवयः—गलकम्बलहीनो गोसदृशः पशुः, रेखागवयश्चित्रितो गवय इत्यर्थः । तन्निष्ठं यद्विषाणलाङ्गूलादि, तस्य चेतनपशुगतत्वाभावान्न तच्चेतनपशोर्लक्षणं भवितुमर्हति । तदेव लक्षणं भवति यन्नियमतो लक्ष्यवृत्ति भवति । यथा सास्नावत्त्वे सति शृङ्गित्वमिति गोर्लक्षणे कृते सास्नाशृङ्गयोर्वास्तवगोव्यक्तौ सत्त्व एव तेन लक्षिता गोव्यक्तिर्ज्ञातुं शक्या, अन्यथा नेति प्रसिद्धम् । अत एवैकशफवत्त्वस्य गव्यसत्त्वान्न तद्गोर्लक्षणं भवति । चित्रितगवयनिष्ठलाङ्गूलादेर्वास्तवपशुगतत्वाभावः स्पष्ट एव । यदि चाऽऽलेख्यगतलाङ्गूलादेः प्राण्याश्रितत्वमेवेति मन्येत तर्हि चित्रितगवयगतचरणच्छेदे प्राणिगतचरणस्याप्युच्छेदो जायेत । किं च चित्रितगोवधे गोहत्याप्रयुक्तप्रायश्चित्तापत्तिश्च स्यात् । तस्मान्मार्त्तिकाद्यचेतनपशुगतलाङ्गूलादेः प्राणिपशुगतत्वाभावान्न तद्वास्तवपशोर्लक्षणं भवति, यथैवं, तद्वत् कार्थं शब्दं मन्वतां वाक्यादेव वृत्तिनिष्पत्तेर्वृत्तेः पूर्वं भवं यद्विग्रहवाक्यं रेखागवयस्थानीयं, तादृशवाक्यगतपूर्वपदार्थनिष्ठविशेष्यताकबोधजनकत्वस्य वास्तवपशुस्थानापन्नाव्ययीभावेऽसत्त्वान्न तदव्ययीभावस्य लक्षणं भवतीति भावार्थः । एवमेवोत्तरपदार्थनिष्ठविशेष्यताकबोधजनकत्वस्यापि न तत्पुरुषलक्षणत्वं संभवति । एवमग्रेऽपि तादृशतादृशार्थबोधजनकत्वस्य तादृशतादृशसमासगतत्वाभावान्न तत्तत्तत्समासलक्षणं भवतीत्यूह्यम् । तत्र विशिष्टशक्तिस्वीकारेणावयवानां वर्णवन्नैरर्थक्यादित्याशयः । तादृशतादृशबोधजनकत्वस्य तत्तत्समासनिष्ठत्वाभावेन तत्तत्समासलक्षणत्वाभावेऽपि तत्तत्समासबोधकत्वं भवत्येवेत्याह—**बोधकता त्विति** । **तद्वदेवेति** । रेखागवयादिवदेवेत्यर्थः ।

ननु पूर्वपदार्थप्राधान्यादि समासे सुवचम् । तथाहि—“ समर्थः पदविधिः ” [ पा० सू० २-१-१ ] इति सूत्रे भाष्यकारैरनेकधोक्तेष्वपि पक्षेषु जहत्स्वार्था-

---

यथा रेखागवयाद्यचेतननिष्ठरेखाकारलाङ्गूलादेः प्राणिपशावविद्यमानत्वेऽपि सादृश्यात्प्राणिपशुगतलाङ्गूलाद्युपस्थापकत्वात्तद्द्वारा प्राणिपशुबोधकत्वं, तथा वृत्तिप्राक्तनविग्रहवाक्यगतपूर्वपदार्थादिप्राधान्यस्य वृत्तावविद्यमानत्वेऽपि सादृश्याद्वृत्तिनिष्ठतत्तदर्थविशेष्यकबोधोपस्थापकत्वात्तद्द्वाराऽव्ययीभावादिसमासबोधकत्वं तस्येति भावः । अत एव सोऽपि—प्राचीनोक्त उत्सर्गोऽपि आस्थितः स्वीकृत इत्युक्तं कारिकायामिति भावः ॥ २९ ॥

ननु जहत्स्वार्थवृत्तिपक्षे पूर्वपदार्थादिनिष्ठविशेष्यताकबोधजनकत्वस्याव्ययीभावादौ दुर्वचत्वेऽप्यजहत्स्वार्थवृत्तिपक्षे तस्य सुवचत्वमित्याशयवानाह—**नन्वित्यादि । पूर्वपदार्थप्राधान्यादीति** । पूर्वपदार्थ-उत्तरपदार्थ-अन्यपदार्थ-उभयपदार्थ-निष्ठमुख्यविशेष्यताकबोधजनकत्वमित्यर्थः । समासे—अव्ययीभावादौ । **सुवचमिति** । सुखेन वक्तुं शक्यमित्यर्थः । तथाच प्राचीनोक्तानि लक्षणानि नासंभवदुक्तिकानीति भावः। **समर्थः पदविधिरिति सूत्र इति** । तत्र सामर्थ्यं द्विविधम् । व्यपेक्षालक्षणं, एकार्थीभावलक्षणं च । तयोर्मध्ये स्वार्थपर्यवसायिनां पदानामाकाङ्क्षादिवशाद्यः परस्परान्वयस्तद्व्यपेक्षाभिधं सामर्थ्यम् । विशिष्टा अपेक्षा व्यपेक्षेति व्युत्पत्तेः, संबन्धार्थः समर्थ इति व्युत्पत्तेश्च । इदं च राज्ञः पुरुष इत्यादिवाक्य एव भवति । तत्र चैकैकस्य शब्दस्य यो यः संनिहितो योग्यश्च तेन तेनान्वयो भवति । तथा राज्ञः पुरुषोऽश्वश्चेति, राज्ञो देवदत्तस्य च पुरुष इति, ऋद्धस्य राज्ञः पुरुष इति च । एकार्थीभावलक्षणं सामर्थ्यं तु प्रक्रियादशायां प्रत्येकमर्थवत्त्वेन पृथग्गृहीतानां पदानां समुदायशक्त्या विशिष्टैकार्थप्रतिपादकत्वरूपम् । संगतार्थः समर्थः, संसृष्टार्थः समर्थ इति व्युत्पत्तेः । संगतिः संसर्गश्चैकीभाव एव यथा संगतं घृतं तैलेनेति, एकीभूतमिति गम्यत । यथा वा संसृष्टोऽग्निरिति, एकीभूत इति गम्यत इति भाष्याच्च । इदं च सामर्थ्यं राजपुरुष इत्यादिवृत्तावेव । अत एव ऋद्धस्य राजपुरुष इत्येवं पुरुषविशेषणे राज्ञि ऋद्धत्वविशेषणं नान्वेति । विशिष्टस्यैकपदार्थतया राज्ञः पदार्थैकदेशत्वादित्याद्यर्थकमुक्तम । **अनेकधेति** । एकार्थीभावः सामर्थ्यमधिकारः, व्यपेक्षा सामर्थ्यमधिकारः, द्विविधं सामर्थ्यमधिकारः, इति त्रयः पक्षाः, एवं समर्थसूत्रस्य परिभाषात्वे, एका-

जहत्स्वार्थपक्षयोरेवैकार्थीभावव्यपेक्षारूपयोः पर्यवसानं लभ्यते । तत्राजहत्स्वार्थपक्ष उक्तव्यवस्था नासंभविनीत्याशङ्कां मनसिकृत्याऽऽह—

**जहत्स्वार्थाजहत्स्वार्थे द्वे वृत्ती ते पुनस्त्रिधा ।**
**भेदः संसर्ग उभयं वेति वाच्यव्यवस्थितेः ॥३॥ (३०)**

जहति पदानि स्वार्थं यस्यां सा जहत्स्वार्था । पदे वर्णवद्वृत्तौ पदानामानर्थक्यमित्यर्थः । अयं भावः—समासशक्त्यैव राजविशिष्टपुरुषभानसंभवे न राजपु-

---

र्थीभावः सामर्थ्यं परिभाषा चेत्येवमादिपक्षत्रये सति षट् पक्षाः संभवन्तीति अनेकधेत्यस्य षड्धेत्यर्थः । **जहत्स्वार्थेति** । तत्र जहत्स्वार्थत्वमेवैकार्थीभावः, अजहत्स्वार्थत्वमेव च व्यपेक्षेति पर्यवस्यति । एकार्थीभावपक्षे समुदायशक्त्यैव विशिष्टार्थोपस्थितिसंभवेऽवयवा न स्वार्थोपस्थितिं कुर्वन्ति, वैयर्थ्यात् । अजहत्स्वार्थतां विना परस्परमन्वयाकाङ्क्षारूपव्यपेक्षाया असंभवाद्व्यपेक्षापक्षेऽवयवाः स्वार्थोपस्थापका एवेति भावः । **उक्तव्यवस्थेति** । पूर्वपदार्थप्रधानोऽव्ययीभाव इत्यादिव्यवस्थेत्यर्थः । **नासंभाविनीति** । उपकुम्भमित्याद्यव्ययीभावादौ तस्याः संभवात् । यथा सूपमतीत्यादावव्याप्त्यतिव्याप्तिरूपो दोषः संभवति तथाऽयं समनन्तरमभिहितोऽसंभवो न संभवतीत्यर्थः । एवमनुसंधायाऽऽह—**जहत्स्वार्थाऽजहत्स्वार्थेति** । **जहाति पदानि स्वार्थमिति** । जहतीति शत्रन्तप्रकृतिकजसन्तं, नतु लडन्तं क्रियापदम् । सप्तमीविशेषणे ( पा. सू. २ । २ । ३५ ) इति सूत्रे सप्तमीग्रहणाज्ज्ञापकात्क्वचिद्व्यधिकरणानामपि पदानां बहुव्रीहिर्भवतीति भावः । जहति स्वानि—वृत्तिघटकीभूतपदानि, यं स जहत्स्वः, तादृशोऽर्थो यस्यामिति समानाधिकरणपदकोऽपि संभवतीति परे । **वृत्तौ पदानामानर्थक्यमिति** । शक्तपदघटकवर्णानामिव वृत्तिघटकपदानामानर्थक्यानङ्गीकारे शक्तघटकवर्णानामप्यानर्थक्यं न स्यादिति भावः । ननु शक्तघटकवर्णानां कुत्राप्यर्थाबोधकतया नैरर्थक्यसंभवेऽपि राजादिपदानां वाक्येऽर्थबोधकतया समासे वाक्यदृष्टार्थबोधजनकत्वेन च नैरर्थक्यासंभव इत्यभिप्रेत्याऽऽह—**अयं भाव इत्यादि** । **समासशक्त्यैवेति** । समुदायशक्त्यैवेत्यर्थः । एवकारेणावयवशक्तेर्व्यावृत्तिः । समुदायशक्तिश्चेत्थम्—राजपुरुषादिपदं राजसंबन्धवत्पुरुषादौ शक्तमित्याकारिका । सा चाऽऽवश्यक्येव । अन्यथा संबन्धस्य वृत्तिघटकपदावाच्यतया बोधे तद्भानानुपपत्तेः । न च राज्ञः पुरुष इति व्यस्ते संबन्धस्य संसर्गतयैव भानाङ्गीकारस्याऽऽ-

( समासशक्तिनिर्णय. )

रुषपदयोरपि पुनस्तद्बोधकत्वं कल्प्यम् , वृषभयावकादिपदेषु वृषादिपदानामिव ।

---

वश्यकतया वृत्तावपि संसर्गतयैव तद्भानस्योचितत्वाद् वृत्तिविग्रहयोः समानार्थत्वस्य नानुपपत्तिश्चेति वाच्यम् । वाक्यजबोधे संबन्धस्य प्रकारतया भानानुपपत्तेः। तथा च राज्ञः पुरुष इत्यत्रापि अवयवशक्तिसहकृतसमुदायशक्त्यैव विशिष्टार्थोपस्थितिः । वृत्तौ तु केवलसमुदायशक्त्यैव विशिष्टार्थोपस्थितिः । अवयवपदानां नैरर्थक्यात् । किंच रथंतरं शुश्रूषेत्यादावयवार्थाननुभवात्समुदायशक्तिरावश्यिकैवेति भावः । अधिकमग्रे वक्ष्यते । **राजविशिष्टेति** । स्वामित्वादिसंबन्धेन राजविशिष्टपुरुषेत्यर्थः । भानसंभवे—सतीत्यर्थः । **तद्बोधकत्वमिति** । वृत्तिघटकपदयो राजाद्यर्थबोधकत्वं न कल्प्यमित्यन्वयः । प्रयोजनाभावाद् बोधावृत्तिप्रसङ्गाच्चेति भावः । ननु संभेदेनान्यतरवैयर्थ्यमितिन्यायेन न बोधावृत्तिप्रसङ्गः । न्यायस्वरूपं त्वेवम्—संभेदः संगमः । संभेदः सिन्धुसंगम इत्यमरकोशात् । कृष्णावेन्नयोर्नद्योः संगमेनान्यतरस्या वेन्नानद्या वैयर्थ्यं नैरर्थक्यं, कृष्णान्तर्भूतत्वेन कृष्णानद्यैव तत्कार्यकरणेन प्रयोजनाभावात् । अत एव संगमादूर्ध्वं कृष्णानाम्नैव व्यवहारो, न वेन्नानाम्ना । तथा च संगमेन संमेलनेनान्यतरस्य प्रयोजनाभावाद् वैयर्थ्यं लोकप्रसिद्धमिति भावः । तद्वदेकत्र स्थले द्वयोर्वाचकयोः, प्रत्यययोर्द्योतकयोः, प्रकृतिप्रत्यययोर्वा वाचकद्योतकयोश्च संमेलने सति अन्यतरस्य नैरर्थक्यं, एकस्य वाचकत्वमविवक्षितव्यमित्यर्थः । अत एव द्वावपूपावित्यत्र द्विशब्देन द्वित्वार्थस्योक्तत्वादपूपाविति द्विवचनस्यानुवादकत्वाद्द्विवचनस्य द्वित्वार्थकत्वाद्द्वावित्यस्यानुवादकत्वाद्वा न द्वौ द्वाविति द्वित्वसंख्यावृत्त्या चत्वारोऽपूपा इत्यर्थबोधापत्तिः । द्विर्बद्धं सुबद्धमितिन्यायेन तदर्थदार्ढ्यार्थमुक्तार्थानां प्रयोगस्यापि लोकसिद्धत्वादिति भावः । संभेदेनेत्यादिनिरुक्तन्यायस्यापरोऽप्यर्थः संभवति—संभेदे सति अन्यतरवैयर्थ्यं न भवति । किंतु द्वावित्यत्र द्वयोरप्युपयोगोऽस्ति । यथा—द्विपुत्र इत्यादौ द्विशब्देनानुद्भूतावयवभेदो द्वयोः समूह उपस्थाप्यते । द्वावित्यत्र तु प्रकृतितः प्रतीतः समूहो द्विवचनेनोद्भूतावयवभेदत्वेन प्रत्याय्यत इति विशेषसत्त्वान्न कस्यापि वैयर्थ्यमिति तात्पर्यात् । तथा च प्रकृतेऽवयवानामर्थबोधकत्वेऽप्यनुवादकत्वाद्बोधावृत्त्यप्रसङ्गान्न किंचिद्बाधकमित्याशङ्क्याऽऽह—**वृषभेति** । निरुक्तन्यायेन वृत्तावयवानां नैरर्थक्यकल्पनमेव युक्तमिति वृषभयावकशब्ददृष्टान्तेन स्पष्टयति । अयं भावः-वृषशब्दस्य वृषभशब्दसमानार्थकत्वेऽपि वृषभशब्दघटकस्य

( समासशक्तिनिर्णयः )

अन्यथा राजपदेन विग्रहवाक्य इव राज्ञः स्वातन्त्र्येणोपस्थितिसत्त्वादृद्धस्य राज्ञः

---

वृषशब्दस्य न तदर्थबोधकत्वं, किंवा यावशब्दस्य यावकशब्दसमानार्थकत्वेऽपि, यावकशब्दघटकस्य यावशब्दस्य न तदर्थबोधकत्वमित्येवमनुभवसिद्धम् । तथा च तादृशानुभवनिर्वाहाय शक्तताबच्छेदकाननुप्रविष्टाया एवाऽऽनुपूर्व्याः शक्तताबच्छेदकत्वमित्येवं नियमोऽवश्यमङ्गीकार्यः । यदि च यावकशब्दघटकयावशब्दस्यार्थवत्त्वमङ्गीक्रियेत तर्हि यावकशब्दनिष्ठा या शक्तताबच्छेदकानुपूर्वी यावकेति यकारादिककारान्ता, तत्प्रविष्टाया यावेति वर्णानुपूर्व्याः शक्तताबच्छेदकत्वं स्वीकार्यं स्यादिति पूर्वोक्तनियमभङ्गादनुभवविरोधः स्यादिति भावः । तथा च यावशब्दो वाक्यान्तरविषयोऽन्य एव, अन्यश्च यावकशब्द इति तात्पर्यम् । एवं राजपुरुषेत्यादिवृत्तिघटकावयवपदानामर्थवत्त्वस्वीकारे समुदायनिष्ठा शक्तताबच्छेदिका राजपुरुषेत्याकारिका या वर्णानुपूर्वी, तादृशवर्णानुपूर्वीप्रविष्टाया राजेति, पुरुषेति वर्णानुपूर्व्याः शक्तताबच्छेदकत्वं स्वीकार्यं भवेत् । तच्चोपर्युक्तनियमविरोधादयुक्तमिति भावः । तथा च कथं वृत्तिघटकपदानामर्थबोधकत्वसंभव इत्याशयः । ननु यावयावकादिशब्दानां पर्यायतया यावकशब्दघटकयावशब्दस्यार्थबोधकत्वाभावेऽपि राजपुरुषशब्दयोः समानार्थकत्वाभावेन समासघटकराजादिपदानां नैरर्थक्ये न किंचित्साधकं दृश्यते । वृषवृषभादिसमानार्थशब्दस्थले एव शक्यताबच्छेदकानन्तर्गताया एवाऽऽनुपूर्व्याः शक्तताबच्छेदकत्वमिति नियम इति प्रकृते न दोषः । किंच योगरूढे पङ्कजादिशब्दे शक्तताबच्छेदसमुदायनिष्ठानुपूर्वीप्रविष्टाया अवयवानुपूर्व्याः शक्तताबच्छेदकतया पूर्वोक्तनियमासंभवश्चेत्यनुसंधाय वृत्तावयवानां स्वार्थबोधकत्वे बाधकमाह—**अन्यथा राजपदेनेति** । अन्यथा—समासावयवानां स्वार्थबोधकत्वे । राज्ञः पुरुष इति वाक्ये राजपदाद्राज्ञो यथा स्वातन्त्र्येण ( इतरानन्वितत्वेन ) उपस्थितिस्तथा समासेऽपि राजपदाद्राज्ञः स्वातन्त्र्येणोपस्थितिसत्त्वाद्राज्ञि ऋद्धस्येति विशेषणान्वयेन ऋद्धस्य राज्ञः पुरुष इतिवदृद्धस्य राजपुरुष इत्याप्रद्येतेत्यर्थः । जहत्स्वार्थत्वे तु राजाद्यर्थस्य पुरुषविशेषणत्वेनैवोपस्थिततया पदार्थैकदेशत्वाद्विशेषणान्वयाभावान्न दोषः । एवं च वृत्त्यावयवानां स्वातन्त्र्येणानुपस्थितत्वमेव नैरर्थक्यं, नतु वर्णवत्सर्वथाऽनर्थकत्वमित्याशयः । **अजहदिति** । न जहति स्वार्थं यस्यामित्यनेन व्यधिकरणपदोऽयं बहुव्रीहिरिति प्रदर्शितम् । न जहति स्वानि यं सोऽजहत्स्वः, अजहत्स्वः—अर्थो यस्यामिति समा-

( समासशक्तिनिर्णयः )

पुरुष इत्यत्रैवं ऋद्धस्य राजपुरुष इत्यस्याप्यापत्तेरिति । अजहदिति । न जहति पदानि स्वार्थं यस्यां साऽजहत्स्वार्था । अयमभिप्रायः—राजपुरुषादिसमासादौ नातिरिक्ता शक्तिः कल्पकाभावात् । क्लृप्तराजादिपदादेवार्थोपस्थितिसंभवे तत्कल्पनस्य गौरवपराहतत्वाच्च । क्लृप्तशक्तित्यागोऽप्यप्रामाणिकः कल्प्येत । तथा चाऽऽकाङ्क्षादिवशात्क्लृप्तशक्त्यैव विशिष्टार्थबोधः । अयमेव व्यपेक्षापक्षो मतान्त-

---

नाधिकरणपदको बहुव्रीहिगर्भो बहुव्रीहिः पूर्ववद्बोध्यः । ननु समुदायशक्त्यैव राजादिविशिष्टपुरुषादिबोधसंभवेऽवयवानां पूर्वोक्तरीत्या न स्वार्थोपस्थापकत्वं संभवतीत्यजहत्स्वार्थत्वपक्षोऽसंभवदुक्तिक इत्याशङ्कां निराचष्टे—अयमभिप्राय इति। नातिरिक्तेति । क्लृप्तावयवशक्त्यपेक्षयाऽतिरिक्तेत्यर्थः । कल्पकस्यान्यथानुपपत्तिरूपप्रमाणस्यासत्त्वादिति भावः । कल्पकाभावादिति ननु राजादिसंबन्धप्रतीतिरेवातिरिक्तशक्तिकल्पिका । न चानुपस्थितस्यापि संबन्धस्य संसर्गतया भानमविरुद्धमिति वाच्यम् । नामार्थयोर्भेदसंबन्धेनान्वयस्य व्युत्पत्तिविरुद्धत्वात् । तदेतदभिप्रेत्याऽऽह—क्लृप्तराजादिपदादेवेति । तत्कल्पनस्येति । समुदायशक्तिकल्पनस्येत्यर्थः । गौरवपराहतत्वादिति । अवश्यक्लृप्तप्रत्येकावयवशक्त्यैव बोधनिर्वाहे पुनः समुदाये शक्तिकल्पनस्य गौरवेण निरस्तत्वादित्यर्थः । नामार्थयोरभेदान्वय इति व्युत्पत्तेः समासातिरिक्तविषयत्वेन संकोचाद्भेदसंबन्धेनान्वयोपपत्तेः संसर्गविधया स्वस्वामिभावादिसंबन्धप्रतीतिरपि नानुपपन्नेति भावः । ननु नामार्थयोरित्यत्र वृत्तिघटकेतरत्वविशेषणदानेन वृत्तिघटकेतरनामार्थयोरभेदान्वय इत्यर्थकरणे गौरवमित्यत आह—क्लृप्तशक्तित्यागोऽपीति । वृत्तेः प्राक् क्लृप्तायाः प्रत्येकपदनिष्ठशक्तेः परित्याग इत्यर्थः । अप्रामाणिक इति । वृत्तेः प्रागर्थवत्त्वं, वृत्त्यनन्तरं चानर्थकत्वमित्येवमेकस्यैव पदस्यासमाससमासभेदेनार्थवत्त्वानर्थकत्वकल्पनस्यायुक्तत्वात्, सप्तऋषीणामित्यादौ समासे पदान्तत्वप्रयुक्तप्रकृतिभावादिसिद्ध्यर्थं वृत्तिघटकपदानामर्थवत्त्वस्वीकारस्यैव सामञ्जस्याच्चेति भावः । ननु प्रत्येकपदनिष्ठशक्त्या राजाद्यर्थोपस्थितावपि विशिष्टशक्त्यनङ्गीकारे स्वामित्वादिसंबन्धेन राजविशिष्टपुरुष इत्येवं विशिष्टार्थानुपस्थितेस्तस्य शाब्दबोधविषयत्वं न स्यादत आह—तथा चेति । आकाङ्क्षादीति । आदिपदाद्योग्यतासंनिध्यादेर्ग्रहणम् । आकाङ्क्षा चैकपदार्थज्ञाने तदर्थान्वय्यर्थः क इत्येवं

त्वेन भाष्यकारैरुक्तः । न चात्र मते समास ऋद्धस्येतिविशेषणान्वयापत्तिः । "सविशेषणानां वृत्तिर्न वृत्तस्य वा विशेषणयोगो न" इति वार्तिकात् । तथा चैतन्मतवादिनां पूर्वोत्तरपदार्थसत्त्वात्पूर्वपदार्थप्रधान इत्यादिव्यवस्था सूपपादेति

---

रूपा । योग्यता च परस्परान्वयप्रयोजकधर्मवत्त्वम् । संनिधिस्तु—प्रकृतान्वयबोधानानुकूलपदाव्यवधानम् । **क्लृप्तशक्त्यैवेति** । राजादिप्रत्येकपदार्थोपस्थितौ सत्यामाकाङ्क्षादिवशात्स्वस्वामिभावसंबन्धेन परस्परान्वयेन राजविशिष्टपुरुष इत्येवं विशिष्टार्थबोधस्य संभवान्न विशिष्टे शक्तिरावश्यिकेति भावः । **अयमेवेति** । क्लृप्तावयवशक्त्यैव विशिष्टार्थबोधनिर्वाहात्समुदायशक्तिकल्पनाभावरूप एवेत्यर्थः । **मतान्तरत्वेनेति** । तथा च समर्थसूत्रे भाष्यम्—'परस्परव्यपेक्षां सामर्थ्यमेके' इति । चित्रगुरित्यादिबहुव्रीहावपि समुदायशक्येऽन्यपदार्थे चित्राद्यन्विताया गोः स्वस्वामिभावसंबन्धेनान्वय इति तत्रापि व्यपेक्षासंभवः । द्वंद्वेऽपि समुदायार्थे समूहे वृत्तिघटकपदार्थयोरवयवावयविभावसंबन्धेनान्वय इति तत्रापि व्यपेक्षासंभवोऽस्त्येव । अव्ययीभावतत्पुरुषादौ तु व्यपेक्षा स्पष्टैव । अन्यपदार्थादेः समुदायशक्यत्वे प्रमाणं तु—अनेकमन्यपदार्थे, चार्थे द्वंद्वः, इति च सूत्रमेव । व्यपेक्षाविरहादेव भार्या—राज्ञः, पुरुषो—देवदत्तस्य, इत्यादौ राजपुरुषादिपदयोर्न समास इत्यवगन्तव्यम् । अत्र मते प्रसक्तामापत्तिमुद्धर्तुमाह-**न चात्रेति** । **विशेषणान्वयापत्तिरिति** । राज्ञः पुरुष इति वाक्ये राज्ञः स्वातन्त्र्येणोपस्थितिसत्त्वाद्यथा तत्र-र्द्धस्येति विशेषणान्वयो भवति तद्वद्राजपुरुषेति समासघटकराजपदार्थेऽप्यृद्धस्येति विशेषणान्वयः स्यात् । राजपदार्थस्य विशेषणान्वयहेतुभूतस्वातन्त्र्येणोपस्थितिसत्त्वादिति भावः । **वार्तिकादिति** । भाष्यवार्तिकमिदम् । विशेषणयोगे समासासाधुत्वस्य वार्तिकेन बोधनादित्यर्थः। समासादौ शक्त्यन्तरकल्पनापेक्षया वचनारम्भ एव लघीयानिति तेषामाशयः । **एतन्मतवादिनामिति** । समर्थः पदविधिरिति सूत्रे सामर्थ्यं व्यपेक्षारूपमेवेति वदतां प्राचामित्यर्थः । **व्यवस्थेति** । व्यपेक्षापक्षे पूर्वोत्तरपदयोरर्थवत्त्वसत्त्वात्पूर्वपदार्थप्रधान इत्यादिव्यवस्थेत्यर्थः । **सूपपादेति** । अव्याप्त्यादिदोषसत्त्वेऽप्यसंभवरूपदोषानास्पदत्वान्नासंभवितेत्यर्थः । आवश्यकश्चायं पक्षः । समर्थसूत्र एकार्थीभावरूपसामर्थ्यस्यैव परिग्रहे पराङ्गवद्भावस्य संग्रहो न स्यात् । तत्रैकार्थीभावासंभवात् । न च पराङ्गवद्भावासंग्रह इष्ट एवेति वाच्यम् । तथा सति 'सुबामन्त्रिते पराङ्गवत्' इति सूत्रानन्तरमेव

भावः। प्रसङ्गाद्वृत्तिभेदमपि निरूपयति–ते पुनरिति। द्वे अपि वृत्ती त्रिविधे वाच्यत्रैविध्यात्। वाच्यमेवाऽऽह–भेद इत्यादि। भेदोऽन्योन्याभावः। तथा च

---

समर्थसूत्रं कुर्यात्। किंच यत्ते दिवो दुहितर्मर्तभोजनमित्यादौ दिवःशब्दस्य पराङ्गवद्भावेन यथाऽऽष्टमिकामन्त्रितनिघातो भवति, तथा 'ऋतेन मित्रावरुणावृतावृतस्पृशा' इत्यत्र ऋतेनेत्यस्यापि पराङ्गवद्भावेन षाष्ठिकामन्त्रिताद्युदात्तत्वापत्तिः। पदात्परत्वाभावेन पादादिस्थत्वेन चाऽऽष्टमिकनिघाताप्राप्तेः। व्यपेक्षारूपसामर्थ्यपक्षे तु समर्थपरिभाषाप्रवृत्तौ सत्यां, ऋतेनेत्यस्य आनशाथे इत्यर्थकाशाथे इति पदोपात्तव्याप्तिक्रियायामेवान्वयेन मित्रावरुणावित्यनेन व्यपेक्षाभावान्नोक्तदोषः, स्पष्टं चेदं वेदभाष्यादाविति ज्ञेयम्।

एवं वृत्तिद्वयं व्याख्याय स्मृतस्योपेक्षानर्हत्वरूपप्रसङ्गसंगतया वृत्तिभेदं व्याचष्टे–ते पुनरितीति वृत्तेः–समासादिवृत्तेः, भेदं–भेदसंसर्गाद्यर्थप्रयुक्तं भेदमित्यर्थः। द्वे अपि वृत्ती इति। जहत्स्वार्थाजहत्स्वार्थरूपे द्वे अपि वृत्ती इत्यर्थः। त्रिविधे इति। भेदः संसर्ग उभयं चेति त्रिविधवाच्यसत्त्वाद्वृत्त्योस्त्रैविध्यमित्यर्थः। भेदशब्दस्य विशेषेऽपि प्रयोगदर्शनादभिमतमर्थं दर्शयति–भेद-अन्योन्याभाव इति। संसर्गाविनाभावी भेदः, संसर्गोऽपि भेदाविनाभावीति भेदसंसर्गयोर्यद्यपि समनियतत्वं तथाऽपि यदा भेदो वाच्यस्तदा संसर्गोऽनुमेयः। यदा च संसर्गो वाच्यस्तदा भेदोऽनुमेयः। भेदः संसर्गो वा सामर्थ्यमिति भाष्य उक्तं तत्र भेद इत्यस्य भेदवदर्थोपस्थापकत्वं, संसर्ग इत्यस्य च संसर्गवदर्थोपस्थापकत्वं सामर्थ्यमित्यर्थः। भेदवदित्यत्र तप एव धनं यस्य तपोधन इतिवदेवकारार्थान्तर्भावेण वृत्तिः। भेद एवास्ति यस्मिन्निति भेदवानित्यर्थः। एवं संसर्गः सामर्थ्यमित्यत्रापि बोध्यम्। यदि च वृत्तौ भेदसंसर्गौ न स्यातां तदा सामर्थ्यमेव न स्यात्। सामर्थ्यस्य भेदसंसर्गात्मकत्वात्। भेदसंसर्गरूपसामर्थ्यसत्त्व एव राज्ञः पुरुषोऽश्वश्च, राज्ञः पुरुषो भार्या चाश्वेतिवद्राजपुरुषोऽश्वश्च, राजपुरुषो भार्या चाश्वेति न भवति। अतो भेदसंसर्गवानेवार्थो वृत्त्योपस्थाप्यत इत्यवश्यं वक्तव्यम्। एवं च भेदसंसर्गवदर्थप्रतिपादकत्वमेवैकार्थीभावसामर्थ्यमिति सिध्यतीति बोध्यम्। भेदसंसर्गौ च पार्थक्येन साहित्येन वा वृत्त्योपस्थाप्येते। भेदः संसर्ग उभयं वा सामर्थ्यमिति भाष्ये पक्षत्रयवर्णनानुरोधादिति तात्पर्यम्। तथा चेति। भेदस्य वाच्यान्तर्भावे चेत्यर्थः। राजपुरुष इत्यादौ बोधप्रकारं दर्शयति–अराजकीयाभि-

राजपुरुष इत्यादावराजकीयभिन्न इति बोधः । अस्यावाच्यत्वे च राजपुरुषः

न्न इति । अराजकीयः—राजभिन्नसंबन्धी, तद्भिन्न इत्यर्थः । राजभिन्नस्वामिको यः पुरुषः, तन्निष्ठप्रतियोगिताकभेदवान्, राजपुरुष इत्यस्यार्थः । राजभिन्नासंबन्धीति यावत् । राजपुरुषे राजभिन्ननिष्ठस्वामितानिरूपितस्वत्वाभावो बोध्यत इति भावः । बालबोधार्थमुदाहरणम्—राजा—देवदत्तः, तत्स्वामिकः पुरुषो विष्णुमित्रः । राजभिन्नः—चैत्र', तत्स्वामिकः पुरुषः-मैत्रः, तादृशमैत्रापेक्षया विष्णुमित्रो भिन्न इति तादृशमैत्रनिष्ठप्रतियोगिताकभेदो विष्णुमित्रे इत्यर्थः। विष्णुमित्रे राजभिन्नस्य चैत्रस्य संबन्धो नास्तीति यावत् । लोके कश्चित्पुरुषो—वैशाखः, ज्येष्ठनामानं पुरुषमराजकीयं—राजसंबन्धिभिन्नं मत्वा राजानं निन्दितुं प्रवृत्तः, अत्रान्तरे आषाढनामकपुरुषेण वैशाखं प्रति कथितं—अयं ज्येष्ठनामा राजपुरुष इति । तच्छ्रुत्वा राजनिन्दनाद्विरतो वैशाखः । एतावता राजपुरुषपदादराजकीयभिन्न इत्यर्थः स्पष्ट एव प्रतीयते । राजपुरुष इति समुदायस्य राजभिन्नसंबन्धिभिन्ने, शक्तिरिति भावः । अत्रेदं बोध्यम्—यथा राजपुरुषे विष्णुमित्रे राजभिन्नस्य चैत्रस्य संबन्धो व्यावर्त्यते तथा देवदत्तसंज्ञके राज्ञ्यपि राजपुरुषाभिन्नविष्णुमित्रभिन्नस्य मैत्रस्य संबन्धो व्यावर्त्यत इत्यन्योन्याभावरूपो भेदः । देवदत्तनामा राजा, स्वनिष्ठस्वामितानिरूपितस्वतासंबन्धो विष्णुमित्र एव, नान्यस्मिन्राजपुरुषभिन्ने मैत्र इत्यवगच्छति, एवं राजपुरुषो विष्णुमित्रोऽपि स्वनिष्ठस्वत्वानिरूपितस्वामितासंबन्धो देवदत्तनाम्नि राज्ञ्येव, नान्यस्मिंश्चैत्र इत्यवगच्छतीत्युभयतो व्यवच्छेदादन्योन्याभावः स्पष्टः। तदुक्तं भाष्ये—'इह राज्ञ इत्युक्ते सर्वं स्वं प्रसक्तं, पुरुष इत्युक्ते सर्वः स्वामी प्रसक्तः । इहेदानीं राजपुरुषमानयेत्युक्ते राजा पुरुषं निवर्तयत्यन्येभ्यः स्वामिभ्यः, पुरुषोऽपि राजानमन्येभ्यः स्वेभ्यः' इति । एवं चावश्यं भेदो वाच्येऽन्तर्भावनीय इति भावः। इतरथा बाधकमाह—**अस्यावाच्यत्व इति** । भेदस्य वाच्यानन्तर्भावे चेत्यर्थः । **राजपुरुषः सुन्दर इति** । वृत्ति घटके पुरुषे यथा सुन्दर इति विशेषणान्वयो भवति तथा देवदत्तस्येति विशेषणस्याप्यन्वयः स्यात् । यो राजस्वामिकः पुरुषः स सुन्दर इति बोधोदयवद्यो राजसंबन्धी पुरुषः स देवदत्तसंबन्धीति यो राजस्वामिकः पुरुषः स देवदत्तस्वामिकोऽपीति बोधोदयात् । ततश्च राजपुरुषो देवदत्तस्य चेति प्रयोग आपद्येतेत्यर्थः । देवदत्तोऽत्र राजभिन्नः कश्चिन्नागरिकः । ननु वृत्तस्य

( समासशक्तिनिर्णयः )

सुन्दर इतिवद्राजपुरुषो देवदत्तस्य चेत्यपि स्यात्। वाच्यत्वे तद्विरोधान्नैवं प्रयोग इति भावः। राजसंबन्धवानित्येव शाब्दं भानं भेदस्तूत्तरकालमुपतिष्ठत इत्याशये-

---

वा विशेषणयोगो नेति वार्तिकेन वृत्तिघटकस्य विशेषणसंबन्धनिषेधात्कथं वृत्तिघटके पुरुषे सुन्दर इति विशेषणान्वय इति चेन्न। वृत्तिघटकस्याप्रधानस्यैव विशेषणसंबन्धनिषेधो, न तु प्रधानस्य, प्रधानस्य तु विशेषणसंबन्धो भवत्येवेति तदर्थात्। अत एव पुरुषो व्याघ्र इव शूर इत्यत्र प्रधानपुरुषनिरूपितविशेषणत्वस्य शूरपदार्थे सत्त्वेऽपि ' उपमितं व्याघ्रादिभिः ' इति समासप्रवृत्तिः स्यादिति तन्निषेधार्थं ' सामान्याप्रयोगे ' इति चरितार्थम्। तथा चात्र शौर्यस्योपमानोपमेयसाधारणधर्मस्य प्रयोगान्न समासः। अन्यथा वृत्तिघटकस्य विशेषणसंबन्धनिषेधाद्विशेषणयोगे सति समासप्रवृत्तिरेव न स्यादिति समासनिषेधार्थं क्रियमाणं ' सामान्याप्रयोगे ' इतिवचनं व्यर्थं स्यात्। एवं च ' सामान्याप्रयोगे ' इति वचनमेव ज्ञापयति—भवति हि वृत्तिघटकस्यापि प्रधानस्य उपात्तविशेषणविजातीयविशेषणयोग इति ज्ञाप्यत इति भावः। तत्र सुन्दर इति समानाधिकरणं विशेषणं, देवदत्तस्येति तु व्यधिकरणं तदिति विशेषः। यथा पुरुषपदार्थे राज्ञ इति व्यधिकरणं विशेषणं तद्वदिति भावः। ननु भेदस्य वाच्यान्तर्भावे सति राजपुरुषो देवदत्तस्य चेति प्रयोगापत्तेः कथं निरसनमित्यत आह—**तद्विरोधादिति**। राजपुरुषपदाद्राजभिन्नासंबन्धीत्यर्थप्रतीते राजेतरनिरूपितस्वत्वसंसर्गस्य पुरुषे निषिध्यमानत्वाद्राजेतरस्य देवदत्तस्य पुरुषे यस्तथासंबन्धस्तस्य राजेतरसंबन्धनिषेधविरोधित्वान्न राजपुरुषो देवदत्तस्य चेति प्रयोगापत्तिरिति भावः। ननु राजसंबन्धी राजनिरूपितसंबन्धवानिति यथाश्रुतबोधादेव राजपुरुषो देवदत्तस्य चेति प्रयोगवारणं सुशकम्। राजेतरसंबन्धी नेत्यार्थिकप्रतीते राजनिरूपितसंबन्धस्य राजेतरनिरूपितसंबन्धविरोधित्वात्। तथा च भेदस्य वाच्यानन्तर्भावेऽपि न क्षतिरिति चेद्भ्रान्तोऽसि। राजेतरसंबन्धिनि पुरुषे, बाधकाभावाद्राजसंबन्धस्यापि संभवाल्लोके तथा प्रत्यक्षं दृष्टत्वाच्च राजसंबन्धस्य राजेतरसंबन्धविरोधित्वाभावेनाऽऽर्थिक्या अपि राजेतरसंबन्धी नेत्येवं प्रतीतेर्नियमतोऽनुदयादिति भावः। संसर्ग एव वाच्यो, न भेद इति मतमवतारयितुं भूमिकामारचयति—**राजसंबन्धवानिति**। राजनिरूपितस्वत्वसंबन्धवानित्यर्थः। **शाब्दं भानमिति**। इत्येतादृशज्ञानं शब्दात्प्रथमतो भवति, अराजकीयभिन्नः—राजभिन्नासंबन्धीत्येवं भेद

( समासशक्तिनिर्णयः )

नाऽऽह—**संसर्ग इति**। विनिगमनाविरहमस्वामिकेऽपि राजपुरुष इत्यादिप्रयोगापत्तिं च मनसि कृत्वोभयं वाच्यमित्याह—**उभयं वेति**। तथा चाराजकीयभिन्नो राजसंबन्धवांश्चायमिति बोधः ॥ ३ ॥ ( ३० )

---

ज्ञानं तु तात्पर्यग्राहकवशात्पश्चाज्जायत इति प्रथमोपस्थितत्वरूपान्तरङ्गत्वात्संसर्ग एव वाच्य इत्याशयेनाऽऽह—**संसर्ग इति**। भेदस्तु तात्पर्यग्राहकसापेक्षत्वेन बहिरङ्गत्वान्न स वाच्यः किं त्वार्थिक इति भावः। यदा तु राजसंबन्ध्येव पुरुषः किंचित्कार्यार्थमपेक्ष्यते तदा राजपुरुष इत्यत्र संसर्गो वाच्य इत्यर्थः। इदानीमुभयं वाच्यमिति मतं दर्शयितुं पातनिकामाह—**विनिगमनाविरहमिति**। भेद एव वाच्योऽथवा संसर्ग एव वाच्य इत्यनयोर्मध्ये एकतरनिश्चायकप्रमाणाभावमित्यर्थः। **अस्वामिकेऽपीति**। यश्च न राजसंबन्धी, नापि राजभिन्नसंबन्धी तत्र, सर्वथा स्वामिसंबन्धरहिते स्वतन्त्रेऽपीत्यर्थः। **प्रयोगापत्तिं चेति**। स्वामिसंबन्धशून्येऽपि राजपुरुष इति प्रयोगापत्तिमित्यर्थः। भेद एव वाच्य इति मत इयमापत्तिः। तन्मते हि राजपुरुष इत्यस्याराजकीयभिन्नः—राजभिन्नासंबन्धीत्यर्थः। राजेतरनिरूपितसंबन्धरहित इति यावत्। तत्र राजेतरसंबन्धराहित्यं यथा राजसंबन्धिनि पुरुषेऽस्ति तथा स्वामिसंबन्धशून्ये पुरुषेऽपि तत्संभवतीति अस्वामिकेऽपि राजपुरुष इति प्रयोग आपद्येतेत्यर्थः। तदेतन्मनस्यनुसंधायाऽऽह—**उभयं वेति**। भेदः संसर्गश्चेत्यर्थः। **तथा चेति**। उभयस्य वाच्यत्वे सति चेत्यर्थः। भेदसंसर्गौ सामर्थ्यमिति भाष्य उक्तं तस्यायमाशयः—भेदसंसर्गयोः समनियतत्वादेकतरकोटिनिश्चायकप्रमाणाभावादुभयं वाच्यमित्यर्थः। तथा च वृत्तौ राजपदसंनिधानात्पुरुषपदेनैव राजसंबन्धवती राजान्यस्वामिसंबन्धाभाववती च या पुरुषव्यक्तिः सोपस्थाप्यते। अतो न राज्ञः स्वान्तरेण संबन्धः। राजपदस्यार्थाभावात्। नापि पुरुषस्य स्वाम्यन्तरेण संबन्धः। राजसंबन्धस्यैव पुरुषेण गृहीतत्वादिति भावः एतदाशयेनाऽऽह—**अराजकीयभिन्नो राजसंबन्धवांश्चेति**। अराजकीयभिन्नत्वविशिष्टराजसंबन्धवति राजपुरुष इति समुदायस्य शक्तेरिति भावः। तथा चास्वामिकेऽराजकीयभिन्नत्व( राजभिन्नसंबन्धिभिन्नत्व )सत्त्वेऽपि राजसंबन्धाभावान्न राजपुरुष इति प्रयोगापत्तिरिति न किंचिद्दूषणमित्याशयः ॥ ३० ॥

( समासशक्तिनिर्णयः )

व्यपेक्षावादस्यैव युक्तिभाष्यविरुद्धत्वात्तन्मूलकः पूर्वपदार्थप्रधान इत्याद्युत्सर्गोऽप्ययुक्तः। किं तु रेखागवयन्यायेनोत्सर्गोऽपि परम्परयैव बोधक इत्याशयेन समाधत्ते—

**समासे खलु भिन्नैव शक्तिः पङ्कजशब्दवत् ।**
**बहूनां वृत्तिधर्माणां वचनैरेव साधने ॥**
**स्यान्महद्गौरवं तस्मादेकार्थीभाव आश्रितः ॥ ४ ॥ ( ३१ )**

**समास इति।** वृत्तिमात्रोपलक्षणम् । " समर्थः पदविधिः " [ पा०सू० २–१–१ ] इत्यत्र पदमुद्दिश्य यो विधीयते समासादिः स समर्थः, विग्रहवा-

---

**व्यपेक्षावादस्येति।** अजहत्स्वार्थवृत्तिरूपत्वेन वर्णितस्येत्यर्थः। **युक्तीति।** वृषभयावकशब्दघटकयोर्वृषयावशब्दयोरनर्थकत्ववद्वृत्तिघटकयो राजपुरुषपदयोरनर्थकत्वकल्पनमित्युक्तयुक्तिगौरवरूपवक्ष्यमाणयुक्तीत्यर्थः । **भाष्येति।** 'नानाकारकान्निघातयुष्मदस्मदादेशप्रतिषेधः' इत्यादिभाष्येत्यर्थः । **विरुद्धत्वादिति।** निरुक्तयुक्तिभाष्यविरोधादित्यर्थः। **तन्मूलक इति ।** व्यपेक्षावादमूलक इत्यर्थः। व्यपेक्षावादे पूर्वोत्तरपदयोरर्थवत्त्वसत्त्वादिति भावः । **अयुक्त इति।** व्यपेक्षावादस्य युक्तिभाष्यविरुद्धत्वेनायुक्तत्वे सति तदुपजीव्यस्य पूर्वपदार्थप्रधान इत्याद्युत्सर्गस्याप्ययुक्तत्वमिति भावः । अयुक्तोऽप्युत्सर्गो रेखागवयवत्परम्परया समासार्थबोधको भवतीत्याह—**किं त्विति । रेखागवयेति।** यथा हि रेखागवयस्थितलाङ्गूलादिना चेतनपशुस्थितलाङ्गूलाद्यवयवानां बोधस्तेन च तादृशावयववान्पशुर्बुध्यत इति परम्परया वास्तवपशुं बोधयति तद्वत्पूर्वपदार्थप्रधान इत्याद्युत्सर्गेण समासादिवृत्तिनिष्ठशक्तेर्बोधः, तेन च समासादिवृत्त्यर्थो बुध्यत इति परम्परयोत्सर्गो विशिष्टार्थं बोधयतीति मन्यमानः समादधाति—**समासे खलु भिन्नैवेति।** **बहूनां वृत्तिधर्माणामिति।** न्यूनतां परिहर्तुमाह—**समास इति। वृत्तिमात्रोपेति।** कृदन्तादिवृत्तीरित्यर्थः। मात्रशब्दः कृत्स्नार्थक इति भावः। एकोपस्थितिजनकसमुदायशक्तिरूपवृत्त्याश्रयत्वात्कृदन्तादीनां वृत्तिरिति व्यवहारः। **पदविधिरिति ।** विधीयत इति विधिः, कर्मणि किप्रत्ययः। कार्यमित्यर्थः। पदानां विधिरिति शेषलक्षणषष्ठ्यन्तेन समासः। पदसंबन्धीत्यर्थः। तथा च पदानां सतां यत्कार्यं विधीयत इत्यर्थः । समर्थपदं व्याचष्टे—**विग्रहवाक्येति।** विशेषेण गृह्यते ज्ञायते समासार्थोऽनेनेति विग्रहः। तादृशं

क्याभिधाने शक्तः सन्साधुरिति सूत्रार्थस्य भाष्यात्लाभात् । पदोद्देश्यकविधित्वं च कृत्तद्धितसमासैकशेषसनाद्यन्तधातुरूपासु पञ्चस्वपि वृत्तिष्वस्त्येव । विशिष्टशक्त्य-

---

त्वं तद्वाक्यं चेति विशेषणसमासः । यथा राजपुरुष इत्ययं समासः, तदर्थकं विग्रहवाक्यं राज्ञः पुरुष इति, अस्य योऽर्थस्तदभिधाने राजपुरुषशब्दः समर्थः, अतोऽपि तत्प्रतीतेः, वृत्त्यर्थावबोधकवाक्यस्यैव विग्रहत्वात्तदर्थाभिधाने समासादिः शक्त इति भावः । स तु राजविशिष्टः पुरुष इति । एतादृशः समासादिः समर्थं इत्यर्थः । समर्थं इत्यस्य शक्तः सन् साधुरित्यर्थः । **भाष्याल्लाभादिति** । तत्र हि पृथगर्थानामेकार्थीभावः सामर्थ्यं, राज्ञः पुरुष इति वाक्ये पृथगर्थानि, समासे एकार्थानीत्युक्तम् । तत्र सामर्थ्यमसत्त्व वचनशतेनापि विधातुं शक्यत इति समर्थस्य—सामर्थ्यविशिष्टस्य साधुत्वं विधीयत इति लभ्यत इति भावः। **पदोद्देश्यकेति** । पदानां विधिरिति संबन्धसामान्यषष्ठ्या समासे वैवक्षिकः पाश्चात्यबोधविषयोऽयमर्थः । न तूद्देश्यविधेयभावरूपसंबन्धाभिधायिन्या तथा समासः । तादृशसंबन्धस्य संसर्गतयैव भानस्यानुभवसिद्धत्वेन समासे तदयोगात् । नीलमुद्दिश्य घटविधायके नीलो घट इत्यादौ षष्ठीवारणाय तस्यागत्या षष्ठ्यर्थत्वाभावाच्च । यत्तु समासस्थल उद्देश्यविधेयभाव एव न प्रतीयत इति तन्न लोहितोष्णीषा ऋत्विजः प्रचरन्तीत्यादौ प्राप्ताप्राप्तविचारेणोष्णीषाद्युद्देश्यकलौहित्यादिविधेयकपाश्चात्यबोधस्याखिलानुभवसिद्धत्वादिति ज्ञेयम् । **पञ्चस्वपि वृत्तिष्वस्त्येवेति** । पदशब्देनात्रार्थवद् गृह्यते, नतु सुबन्तामित्यर्थः । तेनैकशेषे कृदन्तादौ च नाव्याप्तिः । पदशब्देन विभक्त्यन्तस्य ग्रहणे तु राजपुरुष इत्यादौ समासे औपगव इत्यादौ तद्धितान्ते च पदविधित्वं स्पष्टमेव । कृतामपि उपपदनिमित्तकानां ‘ कर्मण्यण् ’ इत्यादीनां परम्परया पदविधित्वम् । सनाद्यन्तधातुषु क्यजादीनां सुबन्ताद्विधानेन सुब्धातुषु पदविधित्वम् एकशेषस्यापि द्वंद्व इत्यनुवृत्त्या विधानाद्यथाकथंचित्पदविधित्वं निर्वाह्यम् । कृत्तद्धितेत्यत्र कृत्पदेन कृदन्तं, तद्धितपदेन च तद्घटितं गृह्यते । तेन बहुपटुः, सर्वक इत्यनयोर्नासंग्रहः । कृत्तद्धितयोः समर्थपरिभाषाप्रवृत्त्या पटं करोति कुम्भमानयेत्यत्र न कर्मण्यण् , ऋद्धस्योपगोरपत्यमित्यत्र न तद्धितः । पृथगर्थानामेकार्थीभावः सामर्थ्यमिति भाष्यात्—यत्किंचित्पदजन्यपृथगुपस्थितिविषयार्थकत्वेन लोकदृष्टशब्दानां विशिष्टविषयैकशक्त्यैकोपस्थितिजनकत्वमेकार्थीभाव इति पर्यवसितम् । एकार्थीभाव इति

( समासशक्तिनिर्णयः )

स्वीकर्तॄणां व्यपेक्षावादिनां मते दूरगं शक्तिसाधकमेवेत्याशयेनाऽऽह—**पङ्कजश-**

---

च्विनिर्देशो गौणमेकार्थत्वं समासघटकपदानामिति बोधयितुम् । यथा पदानाम-सत्त्वात्तत्सत्ताव्यवहारो गौणस्तथा तेषामेकार्थत्वव्यवहारोऽपीति बोध्यम् । विभ-क्त्यन्ते एकार्थीभाववारणाय लोकदृष्टशब्दानामित्यन्तम् । विभक्त्यर्थस्य यथा वि-भक्त्या प्रतिपत्तिस्तथा न केनाप्यन्येन शब्देनेति विभक्तेर्लोके पृथगुपस्थितिविष-यार्थकत्वेन दृष्टत्वाभावान्न विभक्त्यन्तेऽतिप्रसङ्गः । औपगवादौ प्रत्ययानां पृथ-गुपस्थितिविषयार्थकत्वेन लोके दृष्टत्वाभावाद्यत्किंचित्पदजन्येत्युपस्थितिविशेषणम् । अपत्यरूपार्थस्योपगोरपत्यमस्तीत्यादावपत्यपदजन्यपृथगुपस्थितिविषयत्वेन लोकदृ-ष्टत्वान्न तदसंग्रहः । यत्किंचित्पदजन्या या पृथगुपस्थितिः—इतरार्थासंबद्धत्वेनो-पस्थितिस्तादृशोपस्थितिविषयोऽर्थो येषां ते यत्किंचित्पदजन्यपृथगुपस्थितिविषया-र्थकाः, तेषां भावस्तत्त्वं, तेन तादृशार्थकत्वेन लोके दृष्टानां शब्दानां विशिष्टविष-यिण्यैकया शक्त्या एकोपस्थितिजनकत्वमित्यर्थः । यथा राज्ञः पुरुष इति वाक्ये राजशब्दात्पुरुषपदार्थासंबद्धत्वेन राजपदार्थोपस्थितिः, पुरुषपदाच्च राजपदार्थासं-बद्धत्वेन पुरुषपदार्थोपस्थितिरिति लोके पृथगुपस्थितिविषयार्थकत्वेन दृष्टयो राज-पुरुषपदयो राजविशिष्टपुरुषविषयिण्यैकशक्त्या राजविशिष्टपुरुष इत्याकारैको-पस्थितिजनकत्वमिति लक्षणसमन्वयः । राजपुरुष इति समुदायस्य राजविशिष्ट-पुरुषे शक्तिः । वाक्ये पृथगर्थोपस्थित्यनन्तरं परस्परमाकाङ्क्षादिवशादन्वयः, स-मासादिवृत्तौ तु परस्परमन्वितत्वेनवार्थोपस्थितिरिति तात्पर्यम् । एतच्चैकार्थीभावरू-पं सामर्थ्यं वृत्तावेवेति कृत्तद्धितादिपञ्चस्वप्यावश्यकम् । तत्र राजपुरुष इत्यादि-समासे, औपगव इत्यादितद्धितान्तविशेषे च विग्रहवाक्यार्थाभिधानसामर्थ्यरूपैको-पस्थितिजनकत्वसत्त्वादवृत्तित्वं स्पष्टमेव । व्याकरणमधीते वैयाकरणः, पचतीति पाचकः, इत्यत्र तद्धितकृदर्थबोधकाख्यातस्य कर्त्रर्थविशेष्यकबोधजनकत्वाङ्गी-कारान्न विग्रहवाक्यार्थाभिधानसामर्थ्यस्य क्षतिरिति तत्रापि वृत्तित्वमस्त्येव । एक-शेषे तु न वृत्तित्वं मानाभावात् । उक्तैकार्थीभावासंभवेन परार्थान्वितस्वार्थोप-स्थापकत्वाभावात् । तत्र स्ववृत्त्यैव तत्तत्समूहरूपार्थस्य मानमिति शेखर उक्तत्वा-दिति बोध्यम् । ननु पङ्कजशब्दस्याप्युपपदसमासत्वेन तत्रापि पूर्वोक्तरीत्या वि-शिष्टशक्तिर्निष्पन्न एवेति दृष्टान्तत्वेन तदुपादानमसंगतमिति मूलमन्यथा व्याचष्टे—**विशिष्टशक्त्यस्वीकर्तॄणामिति** । अस्य वृत्तावित्यादिर्बोध्यः । व्यपेक्षावादि-

द्वदिति । पङ्कजनिकर्तुरपि योगादेवोपस्थितौ तत्रापि समुदायशक्तिर्न सिध्येत् । न च पद्मत्वरूपेणोपस्थितये तत्कल्प्यत इति वाच्यम । चित्रग्वादिपदेऽपि स्वामित्वेनोपस्थित्ये तत्कल्पनावश्यकत्वात् । लक्षणयैव तथोपस्थितिरिति चेत्पङ्कजप-

---

णां नैयायिकादीनामित्यर्थः । **शक्तिसाधकमिति** । वक्ष्यमाणरीत्या व्यपेक्षावादिमतोपरि दूषणप्रदर्शनविधया विशिष्टशक्तिसाधकमेवेदमिति भावः । वृत्तौ विशिष्टशक्त्यनङ्गीकुर्वतां व्यपेक्षावादिनां मते राजपुरुष इत्यादौ वस्तुतराजपदाद्यवयवशक्त्यैव पदार्थोपस्थितौ परस्परमाकाङ्क्षादिवशाद्यथा विशिष्टार्थबोधो जायते तथा पङ्कजशब्दादपि विशिष्टार्थोपस्थितिसंभवेन रूढेरुच्छेद आपद्येतेत्यर्थः । ननु भवतु रूढेरुच्छेदः, इष्ट एव स इति चेन्नेत्याह—**पङ्कजनिकर्तुरपीति** । पङ्कजनिकर्तृत्वरूपेणेष्टस्यापीत्यर्थः । रूढेरुच्छेदमुपपादयति-**योगादेवेति** । योगोऽवयवशक्तिस्तयैवेत्यर्थः । तत्र व्युत्पत्तिवैचित्र्येण——अर्थबोधकशक्तेर्विलक्षणसामर्थ्येन नामार्थस्यापि पङ्कस्य जनधात्वर्थोत्पत्तावधिकरणतानिरूपकत्वसंबन्धेनान्वयः । तादृशोत्पत्तेश्च डप्रत्ययार्थकर्तर्याश्रयतासंबन्धेनान्वयः । एवं च पङ्काधिकरणकोत्पत्त्याश्रय इति बोधोपपत्तौ सत्यां नैष्फल्यात्समुदायशक्तिर्न सिध्येदिति तदुच्छेदः स्यादिति भावः । पङ्काधिकरणकोत्पत्त्याश्रयत्वेन पद्मस्यापि बोधविषयत्वसंभवेऽपि पद्मत्वेन रूपेण पद्मबोधार्थमेकार्थीभावरूपा समुदायशक्तिः कल्प्यत इत्याशङ्क्य निराचष्टे—**न च पद्मत्वरूपेणेत्यादिना** । **उपस्थितय इति** । पद्मत्वावच्छिन्ने शक्तिं विना पद्मत्वरूपेण पद्मोपस्थितेरसंभवात्, तद्धर्मप्रकारकोपस्थितिं प्रति तद्धर्मावच्छिन्नशक्तिज्ञानस्य कारणत्वात् । घटत्वावच्छिन्ने घटपदं शक्तमित्याकारकशक्तिज्ञानं विना घटपदाद्घटत्वप्रकारकघटविशेष्यकबोधानुदयादिति भावः । विशेषरूपेण बोधार्थं समुदायशक्तिं कल्पयसि चेदन्यत्रापि तथा कल्पनापत्तिरिति प्रतिबन्दीमाह—**चित्रग्वादिपदेऽपीति** । चित्रा गावो यस्येति योगेन चित्रगोसंबन्धित्वसामान्यरूपेण गोस्वामिनो बोधसंभवेऽपि स्वामित्वेन विशेषरूपेणान्यपदार्थस्य स्वामिनो बोधार्थं चित्रग्वादिपदेऽपि समुदायशक्तिकल्पनाऽऽपद्येतेत्यर्थः । ननु चित्रग्वादौ माऽस्तु समुदायशक्तिकल्पना, किंतु समुदायलक्षणयोत्तरपदलक्षणया वा तत्र स्वामित्वेन स्वामिन उपस्थितिः स्यादिति चेत्पङ्कजशब्देऽप्येवं वक्तुं शक्यमित्याह—**लक्षणयैवेत्यादिना** । **सा सुवचेति** । समुदायलक्षणया डप्रत्ययलक्षणया वा पङ्कज-

देऽपि सा सुवचा। एवं रथकारपदेऽपि। तथा च "वर्षासु रथकारोऽग्निमादधीत" इत्यत्रापि विना लक्षणां क्लृप्तयोगेन ब्राह्मणादिविषयतयैवोपपत्तौ तत्कल्पनां कृत्वा जातिविशेषस्याधिकारित्वं प्रकल्प्यापूर्वविद्याकल्पनमप्ययुक्तं स्यादिति

---

शब्देऽपि पद्मत्वेन पद्मोपस्थितिर्वक्तुं शक्येत्यर्थः। तथा च समुदायशक्तिर्न सिध्येदिति भावः। पङ्कजशब्दोऽन्यस्यापि योगरूढस्योपलक्षणमित्याह—**एवमिति। रथकारपदेऽपीति।** अत्र समुदायशक्तिर्न सिध्येदित्यस्यानुषङ्गेणान्वयः। ननु माऽस्त्वत्र समुदायशक्तिः, रथकर्मकोत्पादनकर्तृत्वेनैव बोधोऽनुभूयत इत्याशङ्क्याह—**तथाचेति। वर्षासु रथकार इति।** अनया श्रुत्या वर्षाकाले रथकारस्याग्न्याधानं विहितम्। अत्र रथकारशब्दस्त्रैवर्णिकातिरिक्ते कस्मिंश्चिज्जातिविशेषे रूढः। तदुक्तं—माहिष्येण करण्यां तु रथकारः प्रजायते (या. स्मृ. १। ९२) वैश्यायां क्षत्रियादुत्पन्नो माहिष्यः। शूद्रायां वैश्यादुत्पन्ना करणी( या. स्मृ. १। ९५ ) इति। अस्मिंश्च जातिविशेषे रथकारशब्दो न रथं करोतीति व्युत्पत्त्या प्रवर्तते। रथमकुर्वत्यपि तज्जातीये रथकारशब्दप्रयोगदर्शनात्। तथा च जातिविशेषे रूढोऽयं रथकारशब्दः सौधन्वनापरपर्यायः। वर्षासु रथकार इति श्रुतौ रथकारशब्देनायमेव जातिविशेषो गृह्यते, न तु रथं करोतीति व्युत्पत्त्या रथनिर्माता यः कश्चिद्विप्रादिः। योगापेक्षया रूढेः शीघ्रोपस्थितिकत्वेनान्तरङ्गत्वात्। नन्वत्रावयवार्थानुरोधेन रथकारशब्देन विप्रादिस्त्रैवर्णिक एव गृह्यताम्। तथा सति तस्याऽऽधानं सिद्धमेवेति केवलमत्र रथकरणेन निमित्तेन वर्षाकालमात्रविधानमिति लाघवम्। रूढ्यर्थग्रहणे तु तस्य त्रैवर्णिकातिरिक्तत्वादाधानस्यासिद्धत्वेन तदपि विधेयं तदुपयुक्तं वेदाध्ययनं च कल्पनीयमिति गौरवमितिचेन्न। योगार्थस्य यौगिकशब्दावयवप्रकृतिप्रत्ययतदर्थतदन्वयानुसंधानोत्तरमुपस्थितेः, रूढ्यर्थस्य तु प्रकृतिप्रत्ययाद्यनालोचनेनैव तादृशशब्दश्रवणसमनन्तरमेवोपस्थितेर्योगाद्रूढेर्बलीयस्त्वादिति सिद्धान्तितम्। तदेतत्सर्वं, रथकारशब्दे विनैव लक्षणादिकं क्लृप्तावयवशक्त्यैव निर्वाहे विरुध्येतेत्याशयेनाऽऽह—**विना लक्षणां क्लृप्तयोगेनेत्यादिना अयुक्तं स्यादित्यन्तेन॥**

ननु पङ्कजशब्दे लक्षणा नैव वक्तुं शक्या। तथाहि—पङ्कजेति समुदाये लक्षणा चेत्समुदाये शक्त्यभावेन तच्छक्यार्थस्यैवाभावाच्छक्यसंबन्धरूपलक्षणाया अपि तत्रासम्भवं दुर्विज्ञेयत्वात्। प्रत्यये सा चेत्—प्रकृत्यर्थस्य तत्रान्वयानाप-

भावः। साधकान्तरमाह—बहूनामिति। वृत्तेर्धर्मा विशेषणालिङ्गसंख्याद्ययोगादयस्तेषां वचनैः साधने गौरवमित्यर्थः। अयं भावः—विशिष्टशक्त्यस्वीकारे राज्ञः पुरुष इत्यत्रेव राजपुरुष इत्यत्रापि स्यादिविशेषणाद्यन्वयः, राजपदेन स्वतन्त्रोपस्थि-

तेश्चेति लक्षणावकाशाभावात्तत्रागत्या समुदायशक्तिरभ्युपगन्तव्यैव। राजपुरुष इत्यादौ तु प्रत्येकावयवशक्त्यैव विशिष्टार्थबोधनिर्वाहसंभवेन समुदायशक्तिकल्पनस्य तत्रानौचित्यमेव। रथकाराधिकरणविरोधोऽपि दुर्वचः। सौधन्वना ऋभवः सुरचक्षसः, ऋभूणां त्वा देवानां व्रतपते व्रतेनाऽऽदधामीति रथकारस्येत्यादिमन्त्रलिङ्गात्सौधन्वनापरपर्यायानुलोमजातीयरथकारस्यैवाधिकारावगमेन रूढार्थे तत्र विशिष्टाधानकल्पनात्, न चापूर्वविधाकल्पनं दोषावहं—फलमुखगौरवस्यादूषकत्वात्। राजपुरुषादिसमुदाये न तादृशशक्तिग्राहकं किंचिन्मानं, येन तद्बलादवयवार्थः परित्यज्येतेत्यत आह—साधकान्तरमिति। अवयवार्थपरित्यागेऽन्यत्साधकमित्यर्थः। वृत्तिधर्माणामिति। वृत्तिधर्माः—विशेषणालिङ्गसंख्याद्ययोगादयो भाष्योक्ताः। राजपुरुष इति वृत्तौ राज्ञि ऋद्धस्येति विशेषणाभावः, मृगक्षीरमित्यादौ मृगादिपदे स्त्रीत्वाप्रतीतिः, राज्ञो राज्ञां वेति वृत्तिघटकराजपदे संख्याविशेषाप्रतीतिः। आदिपदाद्राज्ञः पुरुषोऽश्वश्चेतिवद्राजपुरुषोऽश्वश्चेति चशब्दाप्रयोगो ग्राह्यः। इत्यादिवृत्तिधर्मसाधनार्थं तत्र तत्र तादृशतादृशवचनकरणेऽतीव गौरवं स्यादिति समुदायशक्तिरभ्युपगन्तव्या। अनेकवचनप्रणयनतापेक्षया समुदायशक्तिस्वीकार एव लाघवमिति भावः। उक्तमर्थमेव विशदयितुमाह—अयं भाव इति। स्याद्विशेषणाद्यन्वय इति। तथा च ऋद्धस्य राज्ञः पुरुष इति प्रयोगवदृद्धस्य राजपुरुष इत्यपि प्रयोगः स्याद्विशिष्टशक्त्यनङ्गीकार इति भावः। विशेषणान्वये हेतुमाह—राजपदेनेति। स्वतन्त्रेति। वाक्ये राजादिपदे राजादिपदार्थोपस्थितौ सत्यां पश्चादाकाङ्क्षादिवशात्परस्परमन्वय इति राजादिपदैः स्वातन्त्र्येण स्वस्वार्थ उपस्थाप्यते। तथा च यदा राज्ञः पुरुषेऽन्वयस्तदा राज्ञि ऋद्धस्येति विशेषणान्वयः, तदा राज्ञः स्वातन्त्र्येणोपस्थितिसत्त्वात्। विशेषणान्वयकरणे यत्र विशेषणान्वयश्चिकीर्ष्यते तत्रेतराविशेषणत्वेन ज्ञातत्वस्य हेतुत्वादिति भावः। इदमेव हि स्वातन्त्र्यं, यदितराविशेषणत्वेन ज्ञातत्वमित्यर्थः। इतराविशेषणत्वेनेत्यस्येतरनिरूपिताविशेषणतापन्नत्वेनेत्यर्थः। अत एव नित्यो घट इत्यादौ घटत्वादेरितरनिरूपितविशेषणतापन्नत्वेन ज्ञातत्वान्न तत्र नित्यपदा-

( समासशक्तिनिर्णयः )

तिसत्त्वात्, विभाषावचनं च समासनियमवारणाय कार्यम् । ननु " सविशेषणानाम् " इति वचनान्न विशेषणाद्यन्वयः । विभाषावचनं च कृतमेवेत्याशङ्कां समाधत्ते—वचनैरेवेति । न्यायसिद्धमेव सूत्रम् । व्यपेक्षाविवक्षायां वाक्यस्यैकार्थान्वयः ।

---

एवं च वाक्ये यथा राजादेरन्वयकरणकाले इतरनिरूपितविशेषणतानापन्नत्वेन ज्ञातत्वात्तत्र ऋद्धस्येति विशेषणान्वयो भवत्येव तथा राजपुरुष इति समासेऽपि राज्ञि ऋद्धस्येति विशेषणान्वयेन ऋद्धस्य राजपुरुष इत्यनिष्टः प्रयोगः स्यात् । विशिष्टशक्त्यनङ्गीकर्तृमते वाक्य इव समासेऽपि राज्ञ इतरनिरूपितविशेषणतानापन्नत्वेन ज्ञातत्वरूपस्वातन्त्र्येणोपस्थितिसत्त्वादिति भावः । समुदायशक्तिकल्पने तु तद्वशाद्वृत्तौ जायमानः पदार्थबोधः परस्परं विशेष्यविशेषणभावापन्नविशिष्टविषय एव जायत इति राजादिपदेन पुरुषनिरूपितविशेषणतापन्न एव स्वार्थ उपस्थाप्यतेऽतो राज्ञः स्वातन्त्र्येणोपस्थितिविरहान्न तत्र ऋद्धस्येत्यादिविशेषणान्वय इत्याशयः । एवं राज्ञः पुरुषोऽश्वश्चेतिवद्राजपुरुषोऽश्वश्चेति न । एकत्र विशेषणत्वेन ज्ञातस्य परत्र विशेषणायोगात् । तथा राज्ञः पुरुषो भार्यायाश्चेतिवद्राजपुरुषो भार्यायाश्चेति न । राजवैशिष्ट्येनैव पुरुषस्योपस्थितेरेकविशेषणवैशिष्ट्येन ज्ञाते विशेष्ये तत्सजातीयसंबन्धेन विशेषणान्तरसंबन्धस्याव्युत्पन्नत्वात् । राजपुरुषः सुन्दर इति तु भवत्येव, बाधकाभावात् । तत्र सुन्दरनिष्ठप्रकारतानिरूपितपुरुषनिष्ठविशेष्यताया अवच्छेदकं पुरुषत्वमेव, नतु राजसंबन्धोऽपीत्यभिप्रायेण प्रधानस्य सविशेषणत्वेऽपि वृत्तिर्भवत्येवेति तात्पर्यम् । **समासनियमवारणायेति** । यदि व्यपेक्षायामेव सामर्थ्ये सति समासोऽपि भवति तर्हि अवश्यं वाक्यप्रयोगे प्राप्ते आरभ्यमाणः समासो नित्यं वाक्यनिवर्तकः स्यात् । अतो विकल्पेन तन्निवर्तकत्वसिद्ध्यर्थं विभाषेति सूत्रं कर्तव्यं स्यात् । एकार्थीभावपक्षे त्वकार्थीभावे समासस्य, व्यपेक्षायां वाक्यस्य च सिद्धतया विभाषाधिकारो न कर्तव्यः । विभिन्नविषयत्वात्समासेन वाक्यबाधाप्रसक्तेरिति भावः । शङ्कते—**नन्वित्यादिना** । **कृतमेवेत्याशङ्क्येति** । तथा च सविशेषणानामिति वचनान्न राजपुरुषेतिसमासघटके राज्ञि विशेषणान्वयः, नापि समासेन नित्यं वाक्यनिवृत्तिरिति निरुक्तदूषणाभाव इति शङ्काशयः । एकार्थीभावाङ्गीकर्तृमते विभाषेति सूत्रं युक्तिसिद्धमित्याह—**व्यपेक्षाविवक्षायामि-**

र्थीभावे समासस्येति स्वभावत एव प्रयोगनियमसंभवात् । सविशेषणेत्यपि विशिष्टशक्तौ राज्ञः पदार्थैकदेश ऽन्वयासंभवान्न्यायसिद्धमिति भावः । अत एव व्यपेक्षापक्षमुत्पाद्य " अथैतस्मिन्व्यपेक्षायां सामर्थ्ये योऽसावेकार्थीभावकृतो विशेषः स वक्तव्यः " इति भाष्यकारेण दूषणमप्युक्तम् ॥ ४ ॥ ( ३१ )

तथा धवखदिरौ निष्कौशाम्बिर्गोरथो घृतघटो गुडधानाः केशचूडः सुवर्णालंकारो द्विदशाः सप्तपर्ण इत्यादावितरेतरयोगातिक्रान्तयुक्तपूर्णमिश्रसंघातविकार-

---

त्यादि । सविशेषणेत्याद्यपि युक्तिसिद्धमेवेत्याह—**विशिष्टशक्ताविति** । इतरार्थान्वितस्यैव राजाद्यर्थस्योपस्थितेः पदार्थैकदेशत्वमिति भावः । **अन्वयासंभवादिति** । वृत्तौ ह्युपसर्जनपदं परार्थान्वितं स्वार्थमाचष्टे, स्वस्य विशेषणाकाङ्क्षायां च प्राधान्यमिति कथमेकदैव प्राधान्यमुपसर्जनत्वं च स्यात् । युगपत्प्रधानोपसर्जनभावविरोधात्सविशेषणेतिवचनस्य युक्तिसिद्धत्वमेवेत्यर्थः । अत एवेति—एकार्थीभावस्य सिद्धान्तिसंमतत्वादेवेत्यर्थः । **दूषणमपीति** । नानाकारकान्निघातयुष्मदस्मदादेशप्रतिषेधः ' इत्यादिवचननिचयकरणापत्तिरूपं दूषणमित्यर्थः ॥३१॥

एकार्थीभावास्वीकारे भाष्यकैयटाद्युक्तं दोषजातं स्वयमाह—तथेति । धवखदिरावित्यादीनां सप्तपर्णान्तानां नवानामितरेतरयोगादिभिर्वीप्सान्तैर्नवभिः साकं क्रमेणान्वयः । तथा च धवखदिरावित्यादौ प्रतीयमानाः साहित्यादयोऽर्था वचनेन वक्तव्या इत्यर्थः । तत्र धवखदिरावित्यादिद्वंद्वे ' चार्थे द्वंद्वः ' इत्यनेन अनेकं सुबन्तं चार्थे वर्तते, तच्च द्वंद्वसंज्ञकं भवतीति वाक्यभेदमङ्गीकृत्यार्थविधानं कर्तव्यमिति गौरवम् । तथा ' निरादयः क्रान्ताद्यर्थे ' इत्यनेन निरादिपूर्वकपञ्चम्यन्तसमुदायः क्रान्ताद्यर्थे वर्तते, स च समाससंज्ञको भवतीति वाक्यभेदपुरस्कारेणैवार्थादेशनं विधेयमिति गौरवम् । गोरथादिविषयकं तु तत्तदर्थविधायकं वचनं कल्पनीयमिति गौरवमेव । तत्र गोरथ इत्यत्र गोयुक्तो रथ इति युक्तार्थः, घृतघट इत्यत्र घृतपूर्णो घट इति पूर्णार्थः, गुडधाना इत्यत्र गुडमिश्रा धाना इति मिश्रार्थः, केशचूड इत्यत्र केशसंघातभूता चूडा यस्येति संघातार्थः, सुवर्णालंकार इत्यत्र सुवर्णविकारोऽलंकार इति विकारार्थः, द्विदशा इत्यत्र द्विरावृत्ता दशेत्यर्थात्सुच्प्रत्ययलोपः, सप्तपर्ण इत्यत्र सप्त सप्त पर्णानि यस्येति वीप्सार्थः प्रतीयते । तथा च वृत्तावेकार्थीभावानङ्गीकारे सविशेषणानामिति,

सुप्प्रत्ययलोपो वीप्साद्यर्थो वाचनिको वाच्य इत्यतिगौरवं स्यादिति दूषणान्तरमाह—

**चकारादिनिषेधोऽथ बहुव्युत्पत्तिभञ्जनम् ॥**
**कर्तव्यं ते न्यायसिद्धं त्वस्माकं तदिति स्थितिः ॥५॥ (३२)**

आदिना घनश्यामः, हंसगमनः, इत्यादाविवादीनां पूर्वोक्तानां च संग्रहः। दूषणान्तरमाह—बहुव्युत्पत्तिभञ्जनमिति। अयमाशयः—चित्रगुरित्यत्र स्वा

---

(वृत्तौ चलोपो वक्तव्यः) इत्याद्यपूर्वानेकवचनप्रणयनप्रयुक्तं गौरवमेव दूषणमित्याशयेनाऽऽह—**चकारादिनिषेधोऽथेति**। **चकारादीति**। यथा धवश्च खदिरश्चेति वाक्ये चकारप्रयोगो भवति तथा धवखदिरावित्यादिवृत्तावपि चप्रयोगः प्राप्तस्तस्य लोपो विधेयः। एकार्थीभावपक्षे तु समूहलक्षणैकार्थप्रादुर्भावाद्भेदस्य निवृत्त्या भेदनिबन्धनसमुच्चयरूपस्य द्योत्यस्याभावेन द्योतकस्याप्यभाव इति चप्रयोगो न प्राप्नोतीति भावः। इदं च वृत्तेर्विशिष्टशक्तिमत्त्वं लोकसिद्धमेव। शास्त्रेऽर्थविधानाभावात्। अचतुरेत्यादावदर्शनात्। धवखदिरेति समुदायस्य धवखदिरसमूहरूपे विशिष्टेऽर्थे शक्तिः, सा च लोकसिद्धैवेति चार्थे वृत्तिमनूद्य द्वंद्वसंज्ञामात्रविधायकं चार्थे द्वंद्व इत्यादीति लाघवमेकार्थीभावपक्षे। व्यपेक्षावादे विशिष्टार्थोऽपि विधेय इति वाक्यभेदेन गौरवमिति प्रागुक्तमेव। एवं निष्कौशाम्बिरित्यादावुत्तरत्रापि बोध्यम्। चकारादीत्यादिशब्दसंग्राह्यमाह—**घनश्याम इत्यादि**। **इवादीनामिति**। अत्र लोप इत्यस्य संबन्धाल्लोपो वक्तव्य इत्यर्थः। **पूर्वोक्तानां चेति**। निष्कौशाम्बिरित्यादौ क्रान्तादिशब्दानां लोपो वक्तव्यः स्यादित्यर्थः। घनगतश्यामत्वसदृशश्यामत्ववानिति विशिष्टार्थबोधः। एवं हंस इव गमनं यस्येति विग्रहे हंसकर्तृकगमनसदृशगमनकर्तेति विशिष्टार्थबोध एकार्थीभावस्वीकारे। तथा चेवार्थस्य समुदायार्थेऽन्तर्भूतत्वादप्रयोगः सिद्ध एवेति भावः। एतद्दूषणानामग्रे निराकरिष्यमाणत्वादाह—**दूषणान्तरमिति**। **बहुव्युत्पत्तिभञ्जनमिति**। भङ्गमेव विशदयति—**अत्रायमाशय इत्यादिना**। **स्वाम्यादिप्रतीतिरनुभवसिद्धेति**। चित्रा गावो यस्येति विग्रहवाक्याद्यस्य चित्रा गाव इत्येवं गोपदार्थमुख्यविशेष्यको बोधः, समासात्तु चित्रगोसंबन्धी-चित्रगोस्वामीत्येवं चित्रगोविशेषणकान्यपदार्थमुख्यविशेष्यकबोधोदयात्स्वाम्यादिप्रतीतिरनुभवसिद्धेत्यर्थः। ननु चित्रगुरिति समासस्य चित्रगोस्वामिनि लक्षणयेष्टार्थ-

म्यादिप्रतीतिरनुभवसिद्धा । न च तत्र लक्षणा । प्राप्तोदको ग्राम इत्यादौ तदसंभवात् । प्राप्तिकर्त्रभिन्नमुदकमित्यादिबोधोत्तरं तत्संबन्धिग्रामलक्षणायामप्युदककर्तृकप्राप्तिकर्म ग्राम इत्यर्थालाभात् । प्राप्तेति क्तप्रत्ययस्यैव कर्त्रर्थकस्य कर्मणि लक्षणेति चेत्तर्हि समानाधिकरणप्रातिपदिकार्थयोरभेदान्वयव्युत्पत्तेरुदकाभिन्नप्राप्तिकर्मेति स्यात् । अन्यथा समानाधिकरणप्रातिपदिकार्थयोरभेदान्वयव्युत्पत्तिभङ्गापत्तेः-

---

बोधः स्यादित्याशङ्कते—**न चेति** । समाधत्ते—**तदसंभवादिति** । लक्षणयेष्टार्थलाभासंभवादित्यर्थः । चित्रगुरित्यत्र लक्षणया यथाकथंचित्स्वाम्यादिलाभसंभवेऽपि प्राप्तोदक इत्यादौ लक्षणयेष्टार्थलाभासंभवेन न सर्वत्र लक्षणया निर्वाहो भवतीति चित्रगुरित्यत्र लक्षणाश्रयणमयुक्तमिति भावः । प्राप्तमुदकं यमिति वाक्याद्यत्कर्मकप्राप्तिकर्त्रुदकमिति बोधः, समासात्तूदककर्तृकप्राप्तिकर्म ग्राम इति । तत्र प्रथमत एवोदकपदे उदकसंबन्धिलक्षणायामुदकस्य पदार्थैकदेशतया तत्र प्राप्तपदार्थप्राप्तिकर्तुरन्वयो न स्यादत आह—**प्राप्तिकर्त्रभिन्नमिति** । प्रपूर्वकाप्धातोर्गत्यर्थेति कर्तरि क्तः, प्राप्तिक्रियाकर्त्रित्यर्थः, क्तप्रत्ययार्थकर्तुश्चाभेदेनोदकेऽन्वय इत्यर्थः । **लक्षणायामपीति** । प्राप्तिकर्त्रभिन्नोदकमिति बोधोत्तरं तात्पर्यानुपपत्तिप्रतिसंधानेन तादृशोदकसंबन्धी ग्राम इत्येवं लक्षणायामपीत्यर्थः । **इत्यर्थालाभादिति** । संबन्धिलक्षणया प्राप्तिकर्त्रभिन्नोदकसंबन्धी ग्राम इति बोधस्यैव संभवेनोदककर्तृकप्राप्तिकर्मेत्यभीप्सितार्थालाभादित्यर्थः । ग्रामस्य तादृशोदकसंबन्धित्वेन बोधेऽपि कर्मत्वेन बोधो न स्यादिति भावः । ननु कर्त्रर्थकस्य क्तप्रत्ययस्यैव कर्मणि लक्षणाऽस्तु, उदकस्य प्राप्तौ कर्तृतयाऽन्वय, तथा चोदकनिष्ठप्राप्तिकर्मेत्यभीष्टार्थलाभः संभवतीत्याशङ्क्य समाधत्ते—**तर्हीत्यादिना** । क्तप्रत्ययस्य कर्मणि लक्षणायां प्राप्तोदकपदयोः समानाधिकरणत्वात्समानाधिकरणयोश्च प्रातिपदिकार्थयोरभेदेनैवान्वय इति नियमादुदकाभिन्नं प्राप्तिकर्मेत्येवमर्थः स्यान्न तु उदकनिष्ठप्राप्तिकर्मेति भावः । **प्राप्तिकर्मेति स्यादिति** प्राप्तिकर्माभिन्नमुदकमिति बोधः स्यादित्यर्थः । प्राप्तशब्दस्य क्रियाशब्दत्वेनोदकशब्दस्य च जातिशब्दत्वेनोदकस्यैव विशेष्यतया युक्तत्वात् उदकस्य प्राप्तौ कर्तृत्वेनेष्टोऽन्वयो न स्यादित्यत्र तात्पर्यमिति बोध्यम् । **अन्यथेति** । उक्तैतद्रीत्ये । उदकस्य प्राप्तौ कर्तृत्वसंबन्धेनान्वयाभ्युपगम इत्यर्थः । **समानाधिकरणेति** । समानविभक्तिकप्रातिपदिकार्थयोरित्यर्थः । **भङ्गापत्तेरिति** । नामार्थधात्वर्थयोः साक्षाद्भेदे-

( समासशक्तिनिर्णयः )

प्राप्तेर्धात्वर्थतया कर्तृतासंबन्धेन भेदेनोदकस्य तत्रान्वयासंभवाच्च । अन्यथा देवदत्तः पच्यत इत्यत्र कर्तृतासंबन्धेन देवदत्तस्यान्वयसंभवेनानन्वयानापत्तेः । अथोदकाभिन्नकर्तृका प्राप्तिरिति बोधोत्तरं तत्संबन्धिग्रामो लक्ष्यत इति चेन्न । प्राप्तेर्धात्वर्थतया कार्थकर्तारं प्रति विशेष्यताया असंभवात् । प्रकृतिप्रत्ययार्थयोः प्रत्ययार्थ-

---

नान्वयस्य व्युत्पत्तिविरुद्धत्वादुदकस्य प्राप्तौ कर्तृत्वेनान्वयः कर्तुमशक्य इत्याह— **प्राप्तेर्धात्वर्थतयेत्यादि** । तथा चोदककर्तृकप्राप्तिकर्म ग्राम इत्यभीप्सितार्थलाभो नैव स्यादिति भावः । **अन्यथेति** । नामार्थधात्वर्थयोरित्यादिनियमानङ्गीकार इत्यर्थः । नामार्थस्य धात्वर्थे भेदेनान्वयाङ्गीकार इति यावत् । **देवदत्तः पच्यत इति** । देवदत्तेन तण्डुलः पच्यत इत्यर्थे देवदत्तः पच्यत इति प्रयोगः सिद्धान्ते नेष्यते । देवदत्तशब्दोत्तरं तृतीयाया अभावेन कर्तृत्वाप्रतीतेर्देवदत्तस्य क्रियायामन्वयस्य वक्तुमशक्यत्वात्तादृशेऽर्थे तादृशः प्रयोगो न भवति । तादृशप्रयोगसंभवस्त्वेवम्—देवदत्तस्य कर्तृत्वेनाविवक्षितत्वात्तृतीयाभावः । न च षष्ठी स्यादिति वाच्यम् । केवलप्रातिपदिकार्थविवक्षायां षष्ठ्यप्रसङ्गात् । अत एव प्रथमा भवतीति । एवं च देवदत्तः पच्यत इत्येवमनन्वितार्थकः प्रयोग इति ज्ञेयम् । कर्त्रर्थकतृतीयादिविभक्तिविशेषसंनिधानात्तिङ्क्तसंनिधानाच्च नामार्थस्य क्रियायां कर्तृत्वेनान्वयदर्शनात् । **अनन्वयानापत्तेरिति** । यदि च तृतीयादिसंनिधानाभावेऽपि कर्तृत्वेन क्रियायामन्वयः स्यात्तर्हि निरुक्तप्रयोगे देवदत्तस्य पाकक्रियायां कर्तृत्वसंबन्धेनान्वयसंभवाद्देवदत्तः पच्यत इति वाक्येऽनन्वितार्थकत्वस्येष्टस्यानुपपत्तेरित्यर्थः । ननु पचतीत्यादौ भावप्रधानमाख्यातमिति वचनबलात्क्वचित्त्यागस्य प्रत्ययार्थप्राधान्यस्य प्राप्तपदादिरूपवृत्तौ त्यागेन विशेष्यविशेषणभाववैपरीत्यस्य सिद्धतयोदकस्य प्रकारीभूतक्तार्थकर्तर्यभेदेनान्वयेन क्तार्थकर्तुश्च क्रियायामन्वयेनोदकाभिन्नकर्तृका प्राप्तिरिति बोधोत्तरं तादृशप्राप्तिक्रियासंबन्धिग्रामलक्षणायां नाभीष्टार्थासंभवो नापि नामार्थधात्वर्थयोरिति नियमभङ्गोऽपीत्याशङ्कते— **अथोदकाभिन्नेत्यादिना** । तत्संबन्धीति । प्राप्तिक्रियाकर्मेत्यर्थः । समाधत्ते— **इति चेन्नेति** । उदकाभिन्नकर्तृका प्राप्तिरित्येवं बोधसंभवे, ततो लक्षणाऽपि कथंचित्संभवेत्, किंतु निरुक्ताकारको बोध एवाऽऽदौ न संभवतीत्याह—**प्राप्तेर्धात्वर्थतयेत्यादि** । **विशेष्यताया इति** । क्तार्थकर्तृनिष्ठप्रकारतानिरूपित-

स्यैव प्राधान्यमिति व्युत्पत्तेः। प्राप्तपदे प्राप्तेर्विशेष्यत्वे तस्या एव नामार्थत्वेनादेकने सममभेदान्वयापत्तेश्च । एवमूढरथः, उपहृतपशुः, उद्धृतौदना, बहुपाचिकेत्यादावपि द्रष्टव्यम् । अत्र हि रथकर्मकवहनकर्ता, पशुकर्मकोपहरणोद्देश्यः, ओदनक-

---

प्राप्तिनिष्ठविशेष्यताया इत्यर्थः । **असंभवादिति** । वक्तुमशक्यत्वादित्यर्थः । असंभवमेवोपपादयितुं हेतुमाह---**प्रकृतिप्रत्ययार्थयोरिति** । **प्रत्ययार्थस्यैव प्राधान्यमिति** । पाचकः, औपगव इत्यादौ प्रत्ययार्थप्राधान्यस्यानुभवादित्यर्थः। अत एवौपगवमानयेत्यादावुपगवप्रत्ययस्यैवाऽऽनयनं दृश्यते, न तूपगोरपीति बोध्यम् । सत्त्वप्रधानानि नामानीति वचनविरोधोऽप्यत्र द्रष्टव्यः । तथा च सर्वथा प्राप्तौ विशेष्यता वक्तुमशक्या । तिङन्ते प्रत्ययार्थप्राधान्यत्यागे प्रमाणसत्त्वेऽप्यत्र तत्त्यागे मानाभावादिति भावः । ननु गामानयेत्यादावेकत्वविशिष्टां गामिति प्रतीतेः प्रत्ययार्थत्वेऽपि संख्याया विशेषणतयाऽन्वयदर्शनात्प्रत्ययार्थप्राधान्यस्य व्यभिचारमाशङ्क्याऽऽह—**प्राप्तपद इति** । ननु अपेक्षितबोधान्यथानुपपत्त्या प्रत्ययार्थप्राधान्यस्य वृत्तौ त्यागोऽस्तु तथा सत्त्वप्रधानानीत्यस्यापि वृत्त्यप्रविष्टनामपरत्वमस्त्वित्याशङ्क्याऽऽह—**नामार्थत्वेनेति** । नामजन्यप्रतीतिविशेष्यत्वेनेत्यर्थः नामजन्यप्रतीतिविशेष्ययोरेवान्वयः, स चाभेदेनैवेति नामार्थयोरित्यस्यार्थादिति भावः । **अभेदान्वयापत्तेश्चेति** । प्राप्तेर्नामजन्यप्रतीतिविशेष्यत्वे तयैव सह नामजन्यप्रतीतिविशेष्यस्योदकस्याभेदान्वयेन भाव्यं, स च द्रव्यक्रिययोरत्यन्तभेदेन बाधितत्वान्न भवतीत्यन्यत् । किंतु नामजन्यप्रतीतिविशेषणभूतेन कर्त्रा तादृशोदकस्याभेदान्वयः सर्वथाऽसंभवीति अभेदान्वयापत्तेरित्यस्य विशेषणीभूतकर्त्रा सहोदकस्याभेदान्वयबोधानापत्तेरित्यर्थः । न केवलं द्वितीयार्थकबहुव्रीहावेव लक्षणयेष्टार्थबोधलाभासंभवः, किंतु तृतीयाद्यर्थकबहुव्रीहावपीत्याह—-**एवमूढरथ इति** । ऊढो रथो येनेति विग्रहवाक्याद्यत्कर्तृकवहनक्रियाकर्मभूतो रथः, उपहृतः पशुर्यस्मा इत्यतो यदुद्देश्यकोपहरणक्रियाकर्मभूतः पशुः, उद्धृत ओदनो यस्या इत्यस्माद्यदवधिकोद्धरणक्रियाकर्मभूत ओदनः बहवः, पाचका यस्यामिति वाक्याद्यदधिकरणकबह्वभिन्नाः पचनकर्तार इत्येवं रथाद्युत्तरपदार्थमुख्यविशेष्यको बोधो, न त्वन्यपदार्थमुख्यविशेष्यकः । समासात्त्वन्यपदार्थमुख्यविशेष्यकबोध इष्यते, स च समासशक्तिस्वीकारमन्तराऽनुपपन्न इत्याशयेन समासात्प्रतीयमानं तादृशबोधं प्रदर्शयति—**अत्र हीत्यादिना** । रथकर्मकवहनक्रियाकर्तर्येवंप्रकारे-

( समासशक्तिनिर्णय. )

मैकोद्धरणावधिः, बहुपाककर्त्रधिकरणम् , इति बोधाभ्युपगमात् । अतिरिक्तशक्तिपक्षे च घटत्वविशिष्टे घटपदस्येवोदककर्तृकप्राप्तिकर्मत्वविशिष्टे प्राप्तोदक इत्या-

---

णान्यपदार्थमुख्यविशेष्यकशाब्दबोधोऽभ्युगतः । एवमग्रेऽप्युपहृतपशू रुद्र इत्यादावन्यपदार्थमुख्यविशेष्यकः शाब्दबोधोऽवसेयः । न चात्र लक्षणा । यदि प्रथमतो रथादिपदस्य रथसंबन्धीत्येवं संबन्धित्वेन रूपेणान्यपदार्थे लक्षणा क्रियते तदा रथस्य पदार्थैकदेशतया तत्रोढपदार्थान्वयो न स्यात् । अतो वहनकर्माभिन्नो रथ इति शक्यार्थबोधानन्तरमभीप्सितार्थबोधानुपपत्तिप्रतिसंधानेन तादृशरथसंबन्धीत्येवं लक्षणायां कृतायामपि रथकर्मकवहनक्रियाकर्तेत्येवमभीष्टार्थबोधो न स्यात् । संबन्धिलक्षणायां वहनकर्माभिन्नरथसंबन्ध्यनड्वानिति बोधस्यैव संभवात् । किं च संबन्धित्वेन सामान्यरूपेण बोधः स्यान्नतु कर्तृत्वादिविशेषरूपेणेति भावः । ननु ऊढेति कर्मार्थस्य क्तप्रत्ययस्य कर्तरि लक्षणा, वहनक्रियायां च रथस्य कर्मतासंबन्धेनान्वयः क्रियत इति न विवक्षितार्थलाभानुपपत्तिरिति चेन्न । रथरूपस्य कर्मणोऽनुक्तत्वेन ततो द्वितीयापत्तौ वैयधिकरण्यात् , भवदुक्तरीत्याऽन्यपदार्थत्वेनाभिमेतस्य कर्तुरूढपदेनैव लाभेनान्यपदार्थस्य दुरुपपादत्वाच्चानेकसुबन्तानामन्यपदार्थे विहितस्य बहुव्रीहेरनापत्तेः । अथोढरथ इत्यस्य रथाभिन्नकर्मिका वहनक्रियेति बोधोत्तरं तादृशवहनक्रियाकर्ताऽनड्वान् लक्ष्यत इति चेत्तदपि न । वहनक्रियाया धात्वर्थतया प्रकृतिप्रत्ययार्थयोरिति नियमात् क्तप्रत्ययार्थकर्मनिरूपितविशेष्यत्वस्य वक्तुमशक्यत्वात् । किं च नामजन्यप्रतीतिविशेष्ययोरेवान्वयः, स चाभेदेनैवेति नामार्थयोरभेदान्वय इतिव्युत्पत्तेरर्थादूढपदे वहनक्रियाया विशेष्यत्वे तस्या एव नामार्थत्वेन रथेन सममभेदान्वयापत्तेर्नामजन्यप्रतीतिविशेषणकर्मणा समं नामजन्यप्रतीतिविशेष्यस्य रथस्याभेदान्वयबोधानुपपत्तेः।

न्धिलक्षणायां पूर्वोक्तबहुव्युत्पत्तिभङ्गाभावेऽपि अभीप्सितार्थबोधानिर्वाहः स्पष्ट एव । एवमग्रेऽपि द्रष्टव्यम् । बहुपाचिकेत्यत्रापि संबन्धिलक्षणायां तत्संबन्धित्वेनैवान्यपदार्थबोधः स्यान्न त्वधिकरणत्वेनेत्यादिदूषणान्यूह्यानीति समुदितार्थः । तस्माद्विशिष्टशक्तिरेवाङ्गीकर्तव्येत्याह—**अतिरिक्तशक्तीति** । अवयवशक्त्याद्यपेक्षयाऽतिरिक्तविशिष्टसमुदायशक्तीत्यर्थः । **घटपदस्येवेति** । विशिष्टशक्तिपक्षे यथा घटपदस्य घटत्वविशिष्टशक्त्या विशिष्टार्थोपस्थापकत्वं, तथा प्राप्तोदकेत्यादिसमुदायस्यापि विशिष्टशक्त्योदककर्तृकप्राप्तिकर्मत्वविशिष्टार्थोपस्थापकत्वम् । एव-

दिसमुदायशक्त्यैव निर्वाह इति भावः ॥ ५ ॥ ( ३२ ) ।

साधकान्तरमाह—

अषष्ठ्यर्थबहुव्रीहौ व्युत्पत्त्यन्तरकल्पना ॥
क्लृप्तत्यागश्चाऽस्ति तव तत्किं शक्तिं न कल्पयेः ॥६॥ (३३)

अयं भाव—चित्रगुरित्यादिषु चित्रगवीनां स्वाम्यादिप्रतीतिर्न विना शक्तिमुपप-

---

मूढरथादिसमुदायस्यापि विशिष्टशक्त्या रथकर्मकवहनकर्तेत्यादिविशिष्टार्थोपस्थापकत्वमूह्यमिति न काचित्पूर्वोक्तानुपपत्तिः ननु यद्यतिरिक्तैव विशिष्टा शक्तिः समुदायेऽङ्गीक्रियते तर्हि नामार्थयोः० प्रकृतिप्रत्ययार्थयोः० नामार्थधात्वर्थयोः० इत्यादयो बहव एव व्युत्पत्तयो निर्विषयाः स्युरिति चेन्न । भिन्नाभ्यां शब्दाभ्यां जनिता या भिन्नशक्त्योपस्थितिस्तद्विषयत्वात्पूर्वोक्तव्युत्पत्तीनामिति भावः । परे तु वस्तुतः वृत्तिविग्रहयोः समानार्थत्वनियमानुरोधेन समासाद्वाक्याच्च प्राप्तिकर्त्रभिन्नोदककर्मेत्येव बोधः । अत एव पूर्वोत्तरपदयोः सामानाधिकरण्य एव विहितबहुव्रीहिसमासस्योपपत्तिः । एवमूढरथ इत्यादावपि वहनक्रियाकर्माभिन्नरथकर्तेत्यादिरेव बोधः । बहुव्रीहिघटकपूर्वोत्तरपदयोः सामानाधिकरण्यस्याभङ्गादेव प्राप्तभार्य इत्यादौ प्राप्तिकर्माभिन्नभार्याकर्ता इत्येवं बोधसत्त्वात्प्राप्तपदभार्यापदयोः सामानाधिकरण्यात्पुंवद्भावः सिध्यति । अत्र प्राप्ता भार्या येनेति विग्रहो बोध्यः। कर्मत्वस्य क्रियानिरूपितत्वेन द्रव्यत्वादुदकादौ विशेष्ये कर्मतादिनिरूपकत्वस्य बाधेऽपि तद्विशेषणप्राप्त्यादिक्रियायां तत्पर्यवसानं बोध्यम् । यथा शिखी ध्वस्त इत्यत्र ध्वंसान्वयस्य शिखाविशेष्ये पुरुषे बाधात्तद्विशेषणे शिखायां तदन्वयादस्य शिखा ध्वस्तेत्यर्थो बुध्यते तद्वदिति प्राहुः ॥ ३२ ॥

**साधकान्तरमिति** । अन्यत्साधकमित्यर्थः । मयूरव्यंसकादित्वात्समासः । अस्यावयवशक्त्यतिरिक्तसमुदायशक्तिकल्पन इत्यादिः । आह—ब्रवीमि—**अषष्ठ्यर्थबहुव्रीहाविति। अषष्ठ्यर्थेति** । अत्र षष्ठीपदं सप्तम्या अप्युपलक्षणं, षष्ठ्यर्थबहुव्रीहाविव सप्तम्यर्थबहुव्रीहावपि व्युत्पत्त्यन्तरकल्पनाया अप्रसक्तेः । षष्ठीसप्तम्यर्थबहुव्रीहिव्युदासे हेतुं प्रदर्शयितुमाह—**अयं भाव इति** । **चित्रगवीनामिति** । अत्र कुमतिचेति णत्वेन भाव्यम् । **विना शक्तिमिति** । समुदायशक्तिं विनेत्यर्थः । मूले—**कल्पयेरिति** । विधिनिमन्त्रणेति संप्रश्ने लिङ् । लक्षणा किं पूर्वपदेऽथवोत्तरपद इति विकल्प्य तत्र नाऽऽद्य इत्याह—**सा हि न**

द्यते । न च तत्र लक्षणा । सा हि न चित्रपदे । चित्रस्वामी गौरितिबोधापत्तेः। नापि गोपदे । गोस्वामी चित्र इत्यन्वयबोधापत्तेः । चित्रादिमात्रस्य लक्ष्यैकदेशत्वेन तत्र गवादेरन्वयायोगात् । न च चित्राभिन्ना गौरिति शक्त्युपस्थाप्ययोरन्वयबोधोत्तरं तादृशगोस्वामी गोपदेन लक्ष्यत इति वाच्यम् । गोपदस्य चित्रप-

---

**चित्रपद इति** । चित्रस्वामी गौरिति । चित्रान्वितगोपदार्थस्य स्वामिन्यन्वयानुपपत्तिः समानाधिकरणनामार्थयोरिति न्यायेन गोपदार्थे चित्रस्वामिनोऽभेदान्वयापत्तिश्चेति भावः। एवं जरच्चित्रगुरित्यादावेकैकपदस्य स्वार्थस्वामिलक्षकत्वे जरदभिन्नो यः स्वामी, जरच्चित्राभिन्नो यः स्वामी तदभिन्नो गौरिति बोधः स्यात् । न तु जरदाद्यर्थस्य गवा सहान्वयबोध इति द्रष्टव्यम् । नान्त्य इत्याह—**नापीति** । **गोस्वामी चित्र इतीति** । चित्रान्वितगोपदार्थस्य स्वामिन्यन्वयो न स्यात् । किं तु गोरेव तत्रान्वयः स्यात् । चित्रपदोपस्थापितार्थे तु गोस्वामिनोऽभेदान्वयापत्तिश्च स्यात् । गोपदार्थस्य स्वामिन्यभेदान्वयेन गवाभिन्नो यः स्वामी तदभिन्नश्चित्र इति बोधः स्यात् । न तु चित्रपदार्थस्य गवा सहाभेदान्वय इत्यपि द्रष्टव्यम् । ननु चित्रपदलक्ष्यार्थैकदेशचित्रपदार्थेन गोपदार्थस्याभेदान्वये सति गवाभिन्नचित्रस्वामी इति वा, गोपदलक्ष्यार्थैकदेशगोपदार्थेन चित्रपदार्थस्याभेदान्वये सति चित्राभिन्नगोस्वामी इति वा बोधो भवति । तथा च नोक्ताकारबोधापत्तिरित्यत आह—**चित्रादिमात्रस्येति** । मात्रपदेन स्वामिनो व्यावृत्तिः । केवलचित्रपदार्थस्य केवलगोपदार्थस्य वेत्यर्थः । **अन्वयायोगादिति** । पदार्थः पदार्थेनान्वेति, नतु पदार्थैकदेशेनेति व्युत्पत्तिविरोधादिति भावः । **अन्वयबोधोत्तरमिति** । पदार्थोपस्थित्यादिसामग्र्यां तयोरेवाऽऽदावन्वयो भवति प्रत्यासत्तेः, तदनन्तरं चित्राभिन्नाया गोर्बोधग्रहे सति गोपदेन चित्राभिन्नगोस्वामित्वेन रूपेणान्यपदार्थो लक्ष्यते । प्राथमिकश्चित्राभिन्ना गौरिति बोधश्च चित्रत्वादिविशिष्टगोस्वामित्वोपस्थितय आवश्यकः । तादृशबोधोत्पादकतया च चित्रापदसार्थक्यमिति भावः । तथा च चित्रगुरित्यादौ चित्रगवीनां स्वाम्यादिप्रतीतिरनुभवसिद्धा लक्षणयैव निर्वोढुं शक्येति वाच्यमित्याशङ्क्य विनिगमनाविरहेण पदद्वयस्यापि लक्षकत्वासंभवादित्याशयेनाऽऽह—**गोपदस्य चित्रपदस्य वेत्यादि** । **विनिगमनाविरहेणेति** । पूर्वपदस्यैव लक्षणा कर्तव्योतोत्तरपदस्यैवेत्यत्र नि-

दस्य वा विनिगमनाविरहेण लक्षकत्वासंभवात् । न च गोपदे साक्षात्संबन्ध एव विनिगमक इति वाच्यम् । एवमपि प्राप्तोदकः कृतविश्व इत्याद्यषष्ठयर्थबहुव्रीहौ विनिगमकाप्राप्तेः । यौगिकानां कर्त्रर्थकतया साक्षात्संबन्धाविशेषात् । न च प-

---

श्चायकप्रमाणराहित्येनेत्यर्थः । **लक्षकत्वासंभवादिति** । व्याघ्रशङ्कया वनगमनान्निवृत्तिदर्शनेन संदेहस्य प्रवृत्तिप्रतिबन्धकत्वसिद्धेरत्रापि पूर्वपदे वा लक्षणोत्तरपदे वेति संदेहसत्त्वेन लक्षकत्वप्रतिबन्धात्पदद्वयस्यापि लक्षकत्वासंभवादित्यर्थः । शङ्कते—**न चेति । साक्षात्संबन्ध इति** । स्वत्वनिरूपितस्वामित्वरूपः शक्यसंबन्ध इत्यर्थः । स च गोपदार्थस्यान्यपदार्थेन सह साक्षात्संबन्धोऽस्ति, चित्रपदस्य तु गुणवाचकतया स्वशक्यचित्ररूपसमवायिगोनिष्ठस्वत्वानिरूपितस्वामित्वरूप आश्रयद्रव्यघटितः परम्परासंबन्धो वाच्य इति गौरवमिति भावः । तथा च गोपदार्थस्यान्यपदार्थेन सह यः साक्षात्संबन्धः स एवोत्तरपदलक्षणायां विनिगमक इति भावः । इदं मीमांसकरीत्योक्तम् । वैयाकरणमते तु चित्रपदस्यापि गुणविशिष्टद्रव्यवाचकत्वेन चित्रगोपदार्थयोरभेदान्वयेन पदार्थैक्याद्गोपदस्येव चित्रपदस्यापि अन्यपदार्थेन सह साक्षात्संबन्धसंभवादिति बोध्यम् । **एवमपीति** । चित्रगुरित्यादिषष्ठयर्थसप्तम्यर्थबहुव्रीहौ साक्षात्संबन्धस्योत्तरपदलक्षणायां विनिगमकत्वे सत्यपीत्यर्थः । **अषष्ठयर्थबहुव्रीहाविति** । अत्र षष्ठीपदं सप्तम्या अप्युपलक्षणम् । तथा च षष्ठयर्थसप्तम्यर्थबहुव्रीहिव्यतिरिक्ते प्राप्तोदकादिद्वितीयाद्यर्थबहुव्रीहावित्यर्थः । **विनिगमकाप्राप्तेरिति** । प्राप्तमुदकं यं, कृतं विश्वं येनेति व्युत्पत्त्या उदककर्तृकप्राप्तिकर्मत्वेन, विश्वकर्मकोत्पत्तिकर्तृत्वेनान्यपदार्थः प्रतीयते । तत्र प्राप्त इत्यत्र कर्तरि क्तः, कृत इत्यत्र कर्मणि, स्नानीयं चूर्णमित्यादौ करणाद्यर्थकः कृत्प्रत्ययः । तथा च प्राप्त इत्यत्र कृत्प्रत्ययस्य कर्तृवाचकतया तादृशकृत्प्रत्ययात्कर्तृत्वेन यस्यार्थस्य बोधो भवति, तस्यैवार्थस्योदकपदादुदकत्वेन बोधो भवति । उभयत्र प्रवृत्तिनिमित्तं भिन्नं, विशेष्यभूतोऽर्थस्त्वेक एवेति पदद्वयार्थैक्यादुदकस्येव प्राप्तपदार्थस्याप्यन्यपदार्थेन साक्षात्संबन्धस्य समत्वाद्विनिगमकस्याप्राप्तेरित्यर्थः । पूर्वोत्तरपदार्थयोरन्यपदार्थेन साक्षात्संबन्धमुपपादयितुमाह—**यौगिकानामित्यादि** । तथा चाषष्ठयर्थबहुव्रीहौ साक्षात्संबन्ध उत्तरपदलक्षणायां विनिगमको भवितुं नार्हतीति भावः । नैयायिकरीत्या शङ्कते—**न चेति । पदद्वय इति** । चित्रपदे गोपदे च चित्रगोस्वामिलक्षणेत्यर्थः । **नै-**

दद्वये लक्षणेति नैयायिकोक्तं युक्तम् । बोधावृत्तिप्रसङ्गात् । न च परस्परं तात्पर्यग्राहकत्वादेकस्यैवैकदा लक्षणा न द्वयोरिति न बोधावृत्तिरिति वाच्यम् । एवमपि विनिगमनाविरहतादवस्थ्येन लक्षणाया असंभवात् । न च चरमपद एव सा प्रत्ययार्थान्वयानुरोधात् , प्रत्ययानां संनिहितपदार्थगतस्वार्थबोधकत्वव्युत्पत्तेरिति वाच्यम् । एवं हि बहुव्रीह्यसंभवापत्तेः ' अनेकमन्यपदार्थे " [ पा० सू० २–

---

यायिकेति । प्राचीननैयायिकेत्यर्थः । समाधत्ते—बोधावृत्तीति । पदद्वये चित्रगोस्वामीति लक्षणायां वारद्वयं चित्रगोस्वामीति बोधापत्तिः स्यादित्यर्थः । पदद्वयस्य युगपत्स्वामिमात्रलक्षकत्वे स्वामिनो बारद्वयं बोधोऽभीष्टार्थलाभासंभवश्च । बोधावृत्तिप्रसङ्गं परिहर्तुं शङ्कते—नचेति । परस्परमिति । चित्रपदे चित्रगोस्वामिलक्षणायां गोशब्दसमभिव्याहारस्तादृशलक्षणायां तात्पर्यग्राहकः, गोपदे चित्रगोस्वामिलक्षणायां चित्रशब्दसमभिव्याहारस्तादृशलक्षणायां तात्पर्यग्राहक इति एकस्यैकदैव लक्षणाङ्गीकारान्न बोधावृत्तिर्नापि चित्रपदस्य गोपदस्य वा वैयर्थ्यमिति भावः । चित्रपदं तात्पर्यग्राहकमथवा गोपदं तात्पर्यग्राहकमित्यन्यतरकोटिनिश्चायकप्रमाणविरहस्यावास्थिततवान्न लक्षणायाः संभव इत्याशयेन समाधत्ते—एवमपीति । असंभवादिति । एकदाऽन्यतरपदे लक्षणाया असंभवादित्यर्थः । एवं शोभना.चित्रगुरित्यादौ शोभनादिपदार्थस्यान्वयानुपपत्तेः । चित्रादेः पदार्थैकदेशत्वेन तत्रान्वयासंभवात् । शोभनादिपदेऽपि शोभनचित्रगोस्वामीत्येवं लक्षणास्वीकारे त्रयाणामपि पदानां तादृशविशिष्टार्थलक्षकत्वेन समुदायशक्त्यपेक्षया लाघवं दुर्वचम् । पदद्वये युगपल्लक्षणायां बोधावृत्तिप्रसङ्गदोष उक्त एवेति भावः । प्रत्ययार्थान्वयानुसारेण उत्तरपद एव लक्षणेति सिद्धान्तयतां नव्यनैयायिकानां मतं दूषयितुं शङ्कते—न च चरमपद एवेति । सेति । लक्षणेत्यर्थः । संनिहितपदार्थगतेति । संनिहितपूर्वपदार्थगतेत्यर्थः । स्वसमीपोच्चारितं यत्पूर्वपदं तदर्थगतो य एकत्वादिः स्वार्थस्तद्बोधकत्वं प्रत्ययस्येति नियमादित्यर्थः । पूर्वेत्यस्य निवेशाभावे तु राज्ञः पुरुष इत्यत्र पुरुषपदार्थेऽपि षष्ठ्यर्थसंबन्धान्वयापत्त्या पुरुषसंबन्धिराजेत्यपि प्रतीयेत । तथाचोक्तनियमानुरोधेन प्राप्तोदकादावप्युदकपद एवोदककर्तृकप्राप्तिकर्मेत्येवमादिलक्षणा स्वीक्रियत इति भावः । समाधत्ते—एवं हीति । उत्तरपदस्यैव स्वाम्याद्यन्यपदार्थलक्षकत्वे हीत्यर्थः । बहुव्रीह्यसंभवापत्तेरिति । अन्यपदार्थत्वेनाभिप्रेतस्य स्वाम्याद्यर्थ-

( नामार्थनिर्णयः )

२—४ ] इत्यनेनानेकसुबन्तानामन्यपदार्थप्रतिपादकत्वे तद्विधानात् । किं चैवं सति घटादिपदेष्वपि चरमवर्ण एव वाचकताकल्पना स्यात् । पूर्वपूर्ववर्णानां तात्पर्यग्राहकत्वेनोपयोगसंभवात् । एवं सति चरमवर्णमात्रश्रवणेऽर्थबोधापत्तिरिति चेद्-

---

स्योत्तरपदादेवोपस्थितेस्तादृशस्वाम्याद्यर्थेऽन्यपदार्थत्वस्य वक्तुमशक्यत्वेन बहुव्रीहिसमासासंभवापत्तेरित्यर्थः । बहुव्रीहिसमासासंभवे हेतुमाह—**अनेकमन्येति** । वृत्तिघटकीभूतपदार्थातिरिक्तत्वरूपान्यपदार्थत्वविशिष्टार्थप्रतिपादकानामनेकसुबन्तानां बहुव्रीहिसमासविधानादित्यर्थः । अयं भावः—वृत्तेर्विशिष्टार्थप्रतिपादकत्वं न शास्त्रसमधिगम्यं, शास्त्रेऽर्थविधानाभावात्, अचतुरेत्यादावदर्शनात्, वृक्षादीनामर्थाविधानाच्च । किंतु लौकिकव्यवहारेणानुभवासिद्धम्, 'स्वभावत एव तेषां शब्दानामेष्वर्थेष्वभिनिविष्टानां निमित्तत्वेनान्वाख्यानं क्रियते' इति समर्थसूत्रस्थभाष्यात् । अनेकमन्यपदार्थे, चार्थे द्वंद्वः, अनेकं प्रथमान्तं सुबन्तमन्यार्थप्रतिपादकं बहुव्रीहिसंज्ञकं, चार्थे वर्तमानो योऽनेकसुबन्तसमुदायः स द्वंद्वसंज्ञको भवतीति अनुक्रमेण लोकव्यवहारासिद्धार्थानुवादेन बहुव्रीह्यादिसंज्ञामात्रविधायकत्वं न त्वर्थस्यापि विधायकत्वम् । तथा सति अनेकं प्रथमान्तमन्यपदार्थप्रतिपादकं भवति, तादृशं च तद् बहुव्रीहिसंज्ञकं भवतीति वाक्यभेदः स्यात् । किं च स्वसमानार्थकवाक्यनिवृत्तये विभाषाधिकारोऽपि कर्तव्य इति गौरवं स्यात् । तथा च सुबन्तसमुदायस्यान्यपदार्थप्रतिपादकत्वाभावे कथंतरां बहुव्रीहिः प्राप्नुयादिति । नन्वन्यपदार्थप्रतिपादकत्वं नाम तत्प्रतीत्यनुकूलत्वं, तत्र चरमपदस्य स्ववृत्त्या तदुपस्थापकत्वेनेतरपदस्य च तात्पर्यग्राहकतया तद्बोधानुकूलत्वं भवतीति समुदायस्य विशिष्टार्थप्रतिपादकत्वमविचाल्यमित्यत आह—**किं चेति** । **एवं सतीति** । बहुव्रीहौ चरमपद एव लक्षणास्वीकारे सतीत्यर्थः । **चरमवर्ण एव वाचकतेति** । यथा बहुव्रीहौ प्रत्ययाव्यवहितपूर्ववर्तित्वाच्चरमपदस्यैवान्यपदार्थबोधकत्वं कल्प्यते तद्वद् घटादिपदेऽपि प्रत्ययाव्यवहितपूर्ववर्तित्वाच्चरमवर्णस्यैवाचूप्रत्ययरूपस्य घटपटादितत्तदर्थवाचकत्वं कल्प्येतेत्यर्थः । तथा च विशिष्टशक्तिकथाविलय एवाऽऽपद्येतेति भावः । न च घटादिपदे चरमवर्णस्य वाचकत्वे तत्पूर्ववर्तिनां घकारादिवर्णानामानर्थक्यमिति वाच्यम् । चरमवर्णस्य वाचकत्वे तात्पर्यग्राहकतया तदुपयोगसंभवात् । **एवं सतीति** । चरमवर्णस्य वाचकत्वे सतीत्यर्थः । **चरमवर्णमात्रश्रवण इति** । घटादिपदे घकारादिवर्णत्रयाश्रवणपू-

( समासशक्तिनिर्णयः )

त्राप्युदकपदमात्रश्रवणादर्थप्रत्ययापत्तिस्तुल्येत्यन्यत्र विस्तरः । एवं चाषष्ठ्यर्थबहुव्रीहौ व्युत्पत्त्यन्तरकल्पना, उक्तयुक्तेः, अगत्या शक्त्यन्तरकल्पना। क्लृप्तत्यागः, क्लृप्तशक्त्योपपत्तिरिति व्युत्पत्तित्यागश्च तवास्ति तात्किं सर्वत्र समासे शक्तिं

र्वकं चरमवर्णस्याकारस्य श्रवणे कम्बुग्रीवादिमदाद्यर्थप्रतीत्यापत्तिरिति घटादिपदे तावद्वर्णसमुदायस्य वाचकत्वमिति चेत्प्राप्तोदकादावप्युत्तरपदस्यैव श्रवणेनान्यपदार्थप्रतीत्यापत्तिरिति सममेव । ननु कोशादिप्रामाण्येन घटादिपदस्य तावद्वर्णसमुदायरूपस्यैव वाचकत्वमभ्युपगम्यते । प्राप्तोदकादौ तु चरमपदलक्षणयैवोपपत्तौ न समुदायशक्तिः सिध्यति, कोशादेरभावात्, अनन्यलभ्यस्यैव शब्दार्थत्वाच्च । न चोत्तरपदमात्रश्रवणाल्लक्ष्यार्थबोधापत्तिः स्यादिति वाच्यम् । तदानीं प्राप्तादिपूर्वपदसंनिधानेऽपि तदश्रवणेन तादृशलक्षणायां तात्पर्यग्राहिकायाः पूर्वपदोपस्थितेरभावात्, श्रुतस्यैव स्वस्वरूपोपस्थापकत्वादित्याशयवानाह—अन्यत्रेति । बृहद्भूषणादावित्यर्थः । विस्तर इति । प्रत्ययानां संनिहितपूर्वपदार्थेत्यादिव्युत्पत्तिः स्वीकर्तुं न युज्यते । सर्वक इत्यादौ प्राक्टेरित्युक्तेरकचो मध्ये विधानात्सर्वशब्दस्य पूर्वपदत्वाभावेन व्यभिचारात् । दधीयद्दातीत्यादौ दध्नि वतुबर्थान्वयापत्तेः। दधि बहुपटुर्ददातीत्यादौ दध्नि बहुजर्थान्वयापत्तेः, पटावनन्वयापत्तेश्च । किं चैवं प्रातिपदिकात्कर्मादौ स्वादय इति शास्त्रात् प्रत्यासत्तिलब्धया प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वमिति व्युत्पत्त्योत्तरपदबोध्यलाक्षणिकेऽर्थे प्रकृत्यर्थत्वाभावात्तत्र प्रत्ययार्थान्वयानुपपत्तिः । उत्तरपदमात्रस्य प्रकृतित्वाभावात् । प्रकृतित्वस्य प्रत्ययविधानावधित्वात्, तज्जन्यबोधविशेष्यत्वस्य च प्रकृत्यर्थत्वादिति भावः । तत्र व्युत्पत्त्यन्तरं स्वीक्रियते चेत्तदपेक्षया विशिष्टशक्तिस्वीकार एवोचित इति बोध्यम् । फलितमाह—एवं चेति । अषष्ठ्यर्थेति । प्राप्तोदकादावित्यर्थः । उक्तयुक्तेरिति । प्राप्तोदकादावन्वयानुपपत्तिरूपयुक्तेरित्यर्थः । व्युत्पत्त्यन्तरकल्पना—शक्त्यन्तरकल्पनाऽगत्या कर्तव्यैवेत्यर्थः । क्लृप्तत्यागपदं व्याचष्टे—क्लृप्तशक्त्येति । व्युत्पत्तित्यागश्चेति । क्लृप्तावयवशक्त्यैव निर्वाह इति नियमत्यागश्चेत्यर्थः । अन्यथोदककर्तृकप्राप्तिकर्मेतिबोधानुपपत्तेरिति भावः । तात्किं शक्तिमिति । यस्मात्प्राप्तोदकादावनायत्या समुदायशक्तिकल्पना कर्तव्या भवति तस्मात्सर्वत्रैव समासे सा कर्तव्ये-

न कल्पयेरिति वाक्यार्थः। यत्तु व्यपेक्षावादिनो **नैयायिकमीमांसकादयः**— न समासे शक्तिः। राजपुरुष इत्यादौ राजपदादेः संबन्धिलक्षणयैव राजसंबन्ध्यभिन्नः पुरुष इति बोधोपपत्तेः। अत एव राज्ञः पदार्थैकदेशतया न तत्र शोभनस्येत्यादिविशेषणान्वयः। न वा घनश्यामो निष्कौशाम्बिर्गोरथ इत्यादाविवा-

---

त्यर्थः। कुत्रचित्समासे समुदायशक्तिः कुत्रचिन्नेत्यर्धजरतीयस्यायुक्तत्वाद्राजपुरुषादौ समासेऽगत्या समुदायशक्तिस्वीकारावश्यकत्वस्याग्र उपपादयिष्यमाणत्वाच्चेति भावः। अथ स्वातन्त्र्येण पृथक्पृथगर्थोपस्थापकानां पदानामाकाङ्क्षादिवशाद्यः संबन्धः सा व्यपेक्षेति व्यपेक्षालक्षणसामर्थ्यवादिनां नैयायिकमीमांसकादीनां मतं खण्डयितुमनुवदति—**यत्त्विति**। **न समासे शक्तिरिति**। राजपुरुषेत्यादिसमुदायरूपे समासेऽवयवशक्त्यतिरिक्ता विशिष्टसमुदायशक्तिर्नास्तीत्यर्थः। **राजपुरुष इत्यादाविति**। **संबन्धिलक्षणयैवेति**। राजादिपदं लक्षणया राजसंबन्धिपरमिति भावः। **इति बोधोपपत्तेरिति**। तथा च राजपुरुषेतिसमासस्य स्वामित्वादिसंबन्धेन राजविशिष्टपुरुषे शक्तिकल्पनां विनैव संबन्धिलक्षणया संबन्धबोधनिर्वाहे सति राजसंबन्धविशिष्टपुरुषेत्यादिविशिष्टबोधान्यथानुपपत्त्या समुदायशक्त्यङ्गीकारश्चिन्त्यप्रयोजन, गौरवापत्तेः। न च वृत्त्याऽर्थप्रतिपादकत्वरूपार्थवत्त्वाभावेन समासस्य प्रातिपदिकसंज्ञा न स्यादिति वाच्यम्। अर्थवत्पदस्य स्व—स्वावयवान्यतरवृत्त्याऽर्थबोधकमित्यर्थाश्रयणेनादोषात्। समासत्वादेव प्रातिपदिकसंज्ञासंभवाच्चेति भावः। ननु राजपदादेः संबन्धिनि लक्षणायां गौरवापत्त्या लाघवात्संबन्ध एव लक्षणाऽस्तु। संबन्धरूपस्य लक्ष्यार्थस्याऽऽश्रयतासंबन्धेन पुरुषेऽन्वयाद्राजसंबन्धाश्रयः पुरुष इति बोधोपपत्तेरिति चेन्न। समानाधिकरणप्रातिपदिकार्थयोरभेदान्वयनियमात्संबन्धस्याऽऽश्रयतारूपभेदसंबन्धेन पुरुषेऽन्वयासंभवाद्राजसंबन्धरूपः पुरुष इति बोधापत्तेः। स च पुरुषस्य संबन्धरूपत्वाभावादत्यन्तासंभवीति संबन्धिनि लक्षणाऽनुसृता। **अत एवेति**। संबन्धिनि लक्षणास्वीकारादेवेत्यर्थः। **न शोभनस्येत्यादिविशेषणान्वय इति**। यथा शोभनायां गङ्गायां घोष इत्यत्र गङ्गापदमेव शोभनगङ्गातीरं लक्षयति, शोभनापदं तु तादृशलक्षणायां तात्पर्यं ग्राहयति, अतस्तत्र लक्ष्यार्थैकदेशगङ्गायां शोभनान्वयवदत्रापि लक्ष्यार्थैकदेशे राजादावपि शोभनान्वयः स्यादिति शङ्का न कर्तव्या, राज्ञः पदार्थैकदेशत्वेन पदार्थः पदार्थेनेति नियमाच्च

दिप्रयोगापत्तिः। उक्तार्थकतयेवकान्तादिपदप्रयोगासंभवात्। न वा " विभाषा" [पा० सू० २-१-११] इतिसूत्रावश्यकत्वम्। लक्षणया राजसंबन्ध्यभिन्न

तत्र शोभनस्येत्यादिविशेषणान्वय इत्यर्थः। यदि तु समासघटकराजपदस्य शोभनराजसंबन्धिनि लक्षणां कृत्वा शोभनपदं तादृशलक्षणाकरणे तात्पर्यग्राहकमित्युच्यते, तर्हि शोभनस्य राजपुरुष इति प्रयोगापत्तिरिति चेद्भ्रान्तोऽसि। तदानीं केवलराजपदस्य पदार्थैकदेशार्थकत्वेन पुरुषपदेन समासो न स्यात्, पदार्थः पदार्थेनेति नियमात्, किंतु शोभनपदसहितस्यैव राजपदस्य पुरुषपदेन समासः स्यादित्यर्थः। एवं च विशेषणविशिष्टस्वार्थघटितलक्षणा( शोभनराजसंबन्धीत्येवमाकारिका ) विशेषणस्य तादृशलक्षणायां तात्पर्यग्राहकता च वाक्य एव भवति, न तु समासे, इत्येवं नियमस्तीकारस्य समासशक्त्यनङ्गीकुर्वतां नैयायिकानामप्यावश्यकत्वादिति बोध्यम्। घनश्याम इत्यत्र घनपदस्य सादृश्यसंबन्धेनोत्तरपदार्थेऽन्वयः, निष्कौशाम्बिरित्यत्र निष्क्रमणावधित्वेन, गोरथ इत्यत्र स्वयुक्तत्वसंबन्धेन पूर्वपदार्थस्योत्तरपदार्थेऽन्वयः। एवं च संसर्गतयेवाद्यर्थोक्तावपि सादृश्यादि[1]प्रकारकबोधार्थमिवादिशब्दप्रयोगो दर्वार इत्याशङ्क्य समाधत्ते—न वेत्यादि। उक्तार्थकतयेति। समासे घनादिपदस्य घनादिसदृशाद्यर्थे लक्षणाकरणेन घनादिपदेनैव सदृशाद्यर्थस्योक्तत्वादुक्तार्थानामिति न्यायेनेवादिपदप्रयोगाभावस्य सिद्धत्वादित्यर्थः। घनादिपदे लक्षणानङ्गीकारे तु नामार्थयोरभेदान्वय इत्यन्वयनियामकव्युत्पत्त्यनुरोधेन सादृश्यादिभेदसंबन्धेनान्वयानुपपत्तिः स्यादिति भावः। संबन्धिनि लक्षणाकरणादेवं वाक्यबाधकसमासविकल्पार्थं विभाषेति सूत्रमपि नात्यावश्यकमित्याह—न वा विभाषेतिसूत्रावश्यकत्वमिति। अयं भावः—यदा तत्पुरुषसमासे पूर्वपदस्य तत्संबन्धिनि लक्षणामङ्गीकृत्य राजसंबन्ध्यभिन्नः पुरुष इत्यर्थबोधनेच्छा तदा राजपुरुष इति समासः, यदा तु राजसंबन्धवान् पुरुष इत्यर्थबोधनेच्छा तदा राज्ञः पुरुष इति वाक्यमेवावतिष्ठते न तत्र समासः प्राप्नोति। राज्ञः पुरुष इत्यत्र राजपुरुषयोः संबन्धस्य वाचिका षष्ठी, संबन्धो हि संबन्धिभ्यां भिन्नः, द्विष्ठश्च भवतीति षष्ठीवाच्यसंबन्धस्याऽऽश्रयतासंबन्धेनान्वयः समासे तु विभक्त्यभावेन नामार्थयोः साक्षाद्भेदसंबन्धेनान्वयस्याव्युत्पन्नत्वात्स्वस्वामिभावरूपभेदसंबन्धेनान्वयस्य वक्तुमशक्यत्वेन राजपदे लक्ष-

१ सादृश्यत्वादिविशेषरूपेण सादृश्यादिबोधार्थमित्यर्थः।

इति बुबोधयिषायां समासस्य राजसंबन्धवानिति बुबोधयिषायां विग्रहस्येत्यादि-प्रयोगानियमसंभवात् । नापि पङ्कजपदप्रतिबन्दी शक्तिसाधिका । तत्रावयवश-

---

णाऽऽवश्यकी । सा च संबन्धिन्येव, न तु संबन्धे । तथा सति नामार्थस्य संबन्धस्याऽऽश्रयतासंबन्धेन पुरुषेऽन्वयो न स्यात् । नामार्थयोः साक्षाद्भेदेनानन्वय इति निरुक्तव्युत्पत्तेः । नामार्थयोः साक्षाद्भेदेनानन्वय इति व्युत्पत्तेरन्वय-नियामिकाया अस्वीकारे राजा पुरुष इत्यत्रापि राजभिन्नः पुरुषः—राजनिष्ठस्वामितानिरूपितस्वत्ववान् पुरुष इत्यर्थको भेदसंबन्धेनान्वयः स्यात् । स च सर्वेषामनभिमतः । राज्ञः पुरुष इत्यत्र प्रत्ययार्थसंबन्धद्वारैव राजपुरुषयोरन्वयदर्शनात्साक्षादित्युक्तम् । प्रत्ययार्थमद्वारीकृत्वेति तदर्थः । नीलो घट इत्यादौ नामार्थयोरभेदेनान्वयदर्शनाद्भेदेनेत्युक्तं नियमशरीरे । अर्थान्नामार्थयोरभेदान्वयः सिद्ध एव, किं तु भेदेनान्वयोऽव्युत्पन्न इति भावः । एवं च समासव्यासयोर्भिन्नविषयत्वेन समासेन बाधाप्रसक्ते राजसंबन्ध्यभिन्नः पुरुष इत्यर्थे राजपुरुष इति समासः, राजसंबन्धवान् पुरुष इत्यर्थे राज्ञः पुरुष इति वाक्यमेवेत्येवं प्रयोगनियमसंभवेन विभाषाधिकारोऽपि नावश्यक इति भावः । नीलोत्पलादिकर्मधारये तु प्रवृत्तिनिमित्तसाहित्ये, नीलोत्पलयोः साहित्ये वा लक्षणा । आद्ये—नीलोत्पलत्वसमूहवन्नीलमुत्पलमिति बोधः । द्वितीये तु—नीलसमानाधिकरणं तदभिन्नमुत्पलमिति । नीलं च तदुत्पलं चेति वाक्ये चद्वयेन तत्साहित्यं प्रतिपाद्यतेऽतो भिन्नविषयत्वं वृत्तिवाक्ययोः । एवं द्वंद्वेऽपि बोध्यम् । अन्ये तु नीलं च तदुत्पलं चेति वाक्ये नीलादिपदोत्तरविभक्तेरभेदोऽर्थः । तस्याऽऽश्रयत्वसंबन्धेनोत्तरपदार्थेऽन्वयः । समासे तु नीलादिपदेनैव लक्षणया नीलाद्यभेदः प्रतिपाद्यते । तथा च लक्षणया तादृशार्थ( नीलाभिन्नमुत्पलमित्यर्थ )विवक्षायां समासः, विभक्त्या तद्विवक्षायां वाक्यमिति व्यवस्थायाः संभव इत्यूचुः । एवमौपगवादावपि उपग्वादिशब्दस्योपग्वादिसंबन्धे लक्षणेति बोध्यम् । यदुक्तं समुदायशक्तिवादिभिर्यदि समासे विशिष्टशक्तिर्न स्वीक्रियते तर्हि पङ्कजशब्देऽवयवशक्त्यैव पङ्कजनिकर्तृत्वरूपेण पद्मस्याप्युपस्थितौ सत्यां तत्रापि समुदायशक्तिर्न सिध्येदित्येवंरूपा या प्रतिबन्दी कोटिः साऽपि समुदायशक्तिसाधिका न भवतीत्याह—नापि पङ्कजपदप्रतिबन्दीति । शक्तिसाधिकेत्यस्य वृत्तिमात्रे शक्तिसाधिकेत्यर्थः । न भवतीति शेषोऽस्त्येव । पङ्कजपदप्रतिबन्दी यावद्वृत्तौ शक्तिं साधयितुं न प्रभवतीत्यत्र

क्तिमजानतोऽपि बोधात्। न च शक्त्यग्रहे लक्षणया तेभ्यो विशिष्टार्थप्रत्ययः संभवति। अत एव राजादिपदशक्त्यग्रहे राजपुरुषश्चित्रगुरित्यादौ न बोधः। नापि चित्रगुरित्यादौ लक्षणासंभवेऽन्यषष्ठ्यर्थबहुव्रीहौ लक्षणाया असंभवः। बहुव्युत्पत्तिभञ्जनापत्तेरिति वाच्यम्। प्राप्तोदक इत्यादावुत्तरपद एव लक्षणास्वीकारात्। पूर्वपदस्य यौगिकत्वेन तल्लक्षणाया धातुप्रत्ययतदर्थज्ञानसाध्यतया विलम्बि-

---

हेतुमाह—**अवयवशक्तिमजानतोऽपीति**। पङ्काधिकरणकोत्पत्त्याश्रयमित्याद्यवयवशक्तिज्ञानाभाववतोऽपीत्यर्थः। **बोधादिति**। पद्मत्वेन पद्मबोधान्न पङ्कजशब्दो लाक्षणिक इति भावः। नन्ववयवशक्तिज्ञानाभावेऽपि लक्षणाकरणे किं प्रतिबन्धकमित्याशङ्क्य समाधत्ते—**नचेति**। नहीत्यर्थः। **शक्त्यग्रह इति**। अवयवशक्तिज्ञानाभावे सत्यवयवशक्यार्थोपस्थित्यसंभवेन शक्यसंबन्धरूपलक्षणायाः सुतरामसंभवात्तेभ्यः—पङ्कजादिशब्दघटकावयवेभ्यो विशिष्टार्थप्रत्ययः—पद्मत्वविशिष्टपद्मार्थबोधो न संभवतीति संबन्धः। तथा चावयवशक्तिज्ञानाभावावस्थायामपि पङ्कजशब्दात्पद्मत्वप्रकारकबोधस्यानुभवसिद्धस्योपपत्तये समुदायशक्तिरावश्यकीत्यर्थः। राजपुरुष इत्यादौ च समासघटकावयवयो राजपुरुषयोः शक्तिज्ञानसत्त्वाल्लक्षणैव। एवं चानुभवसिद्धपद्मत्वादिविशिष्टबोधान्यथानुपपत्तिरवयवशक्तिज्ञानशून्यस्थले पङ्कजादिपद एव समुदायशक्तिं कल्पयति न त्ववयवशक्तिज्ञानसत्त्वे राजपुरुषादौ सर्वत्र वृत्ताविति तात्पर्यार्थः। एवं रथकारशब्देऽपि समुदायशक्तिरङ्गीकार्यैवेति न पूर्वोक्ताधिकरणविरोध इति बोध्यम्। नन्वेवं राजाद्यवयवशक्तिज्ञानविरहदशायां राजसंबन्धी पुरुष इत्येवं बोधो न स्यादिति कृत्वा तत्रापि समुदायशक्तिः स्वीकर्तव्येत्याशङ्क्येष्टापत्तिरेव तदा बोधानुदयस्येति समाधत्ते—**अत एवेति**। अवयवशक्तिज्ञानस्य लक्षणायां कारणत्वादेवेत्यर्थः। **न बोध इति**। यदि राजपुरुषपदयोः शक्यार्थ एवाज्ञातस्तर्हि तत्संबन्धरूपलक्षणाया असंभवाद्विशिष्टार्थबोधस्यानुभवसिद्धत्वादित्यर्थः। तथा चावयवशक्तिज्ञानविरहसमये बोधानुदय इष्ट एवेति भावः। **अषष्ठ्यर्थबहुव्रीहौ लक्षणाया असंभव इति**। बहुव्युत्पत्तिभञ्जनमिति मूल एव प्रागेतद्व्याख्यातम्। बहुव्रीहावुत्तरपद एव लक्षणायां विनिगमकमाह—**पूर्वपदस्येति**। **यौगिकत्वेनेति**। प्रकृतिप्रत्यययोर्योगेन निष्पन्नत्वादित्यर्थः। **तल्लक्षणाया इति**। पूर्वपदलक्षणाया ज्ञानस्येत्यर्थः। **धातुप्रत्ययतदर्थेति**। धातुप्रत्यययोस्तदर्थ-

त्त्वात् । प्रत्ययानां संनिहितपदार्थगतस्वार्थबोधकत्वव्युत्पत्त्यनुरोधाच्च । घटादिपदे चातिरिक्ता शक्तिः कल्प्यमाना विशिष्टे कल्प्यते विशिष्टस्यैव संकेतितत्वात् । बोधकत्वस्यापि प्रत्येकं वर्णेष्वसत्त्वात् । प्रकृते चात्यन्तसंनिधानेन प्रत्ययार्थान्वय-

---

योश्च यज्ज्ञानं तज्जन्यतयेत्यर्थः । अयं विलम्बितत्वे हेतुः । स्वशक्यसंबन्धात्मकलक्षणाया ज्ञानेऽवयवशक्तिज्ञानस्य कारणत्वादवयवशक्तिज्ञाने चावयवज्ञानस्य कारणत्वात्प्रकृतिप्रत्ययज्ञानस्यापि लक्षणाहेतुत्वेन पूर्वपदलक्षणाया विलम्बितत्वमित्यर्थः । एतेनोत्तरपदलक्षणायां शीघ्रोपस्थितिकत्वरूपं प्रमाणं सूचितमिति भावः। ननु उन्दी क्लेदने ' इति धातोः ' क्वुन्शिल्पिसंज्ञयोः ' ( उ. २-३२ )इति क्वुन्प्रत्यये नलोपे चोदकशब्दस्य निष्पन्नत्वेन यौगिकत्वादुदककर्तृकप्राप्तिकर्मेत्यर्थे लक्षणायां प्राप्तपदस्य तात्पर्यग्राहकत्वेनोपयोगाच्चोत्तरपदलक्षणायामपि धातुप्रत्यययोस्तदर्थयोश्च ज्ञानस्याऽऽवश्यकत्वेन साम्यमेवेत्याशङ्कयोत्तरपद एव लक्षणायां मानान्तरं वक्ति—**प्रत्ययानामित्यादि** । **संनिहितपदेति** । स्वसंनिहितं सत्पूर्ववर्ति च यत्पदं तदर्थगतो यः स्वार्थः संख्याकर्मत्वादिस्तद्बोधकत्वं प्रत्ययानामित्यन्वयनियामकानुरोधाच्चोत्तरपद एव लक्षणा समुचितेत्यर्थः । राजपुरुषमानयेत्यत्र राज्ञि प्रत्ययार्थकर्मत्वाद्यन्वयो न, राज्ञः प्रत्ययपूर्ववर्तित्वेऽपि संनिहितत्वाभावात् । अन्यथा द्विवचनापत्तेः, पुरुषवद्राजानयनापत्तेश्चेति भावः । एवं कुण्डलिनं पश्येत्यादौ व्यवहिते कुण्डलादौ कर्मत्वाद्यन्वयापत्तिनिरासो ज्ञेयः । नन्वेवं घटादिपदेष्वपि चरमवर्णस्यैव वाचकता स्यात् , प्रत्ययाव्यवाहितपूर्ववर्तित्वात्पूर्वपूर्ववर्णानां च वाचकतायां तात्पर्यग्राहकत्वेनोपयोगादित्येवं वैयाकरणोक्तां प्रतिबन्दीं निरासयितुमाह—**घटादिपदे चेति** । **अतिरिक्तेति** । घटादिपदघटकचकारादिशक्त्यपेक्षयाऽतिरिक्ता वाचकता शक्तिरित्यर्थ । विशिष्टे कल्प्यते—विशिष्ट एव कल्प्यते । एवकारान्तर्भावेण व्याख्याने हेतुमाह——**संकेतितत्वादिति** । कोशादिनाऽभियुक्तव्यवहारेण च घटेत्येवमानुपूर्वीकसमुदायस्यैव कम्बुग्रीवादिमत्यर्थे संकेतितत्वेन बोधनादित्यर्थः । एवं पटादिशब्देष्वपि ज्ञेयम् । ननु व्यवहाराद्दिना वाचकत्वस्य विशिष्टे निर्धारणेऽपि बोधकत्वं चरमवर्णस्यैव स्यादित्याशङ्कयाऽऽह—**बोधकत्वस्यापीति** । पर्याप्तिसंबन्धेन बोधजनकत्वाधिकरणत्वस्यापीत्यर्थः । अपिशब्देन वाचकत्वस्य संग्रहः । स च दृष्टान्तार्थः । तथा च यथा वाचकत्वस्य पर्याप्तिसंबन्धेन प्रत्येकवर्णेऽसत्त्वमेवं बोधकत्वस्यापि पर्याप्तिसंबन्धेन प्रत्येक-

( समासशक्तिनिर्णयः )

सौलभ्यायोत्तरपद एव सा कल्प्यत इति विशेषः । स्वीकृतं च घटादिपदेष्वपि चरमवर्णस्यैव वाचकत्वं मीमांसकंमन्यैरित्याहुः । अत्रोच्यते—समासे शक्त्यस्वीकारे तस्य प्रातिपदिकसंज्ञादिकं न स्यात् । अर्थवत्त्वाभावेन " अर्थवदधातुरप्रत्ययः

स्मिन्वर्णेऽसत्त्वादित्यर्थः । तेनाधिकरणत्वसंबन्धेन बोधकत्वस्य प्रतिवर्णे सत्त्वेऽपि न क्षतिरिति भावः । ननु चित्रगुरित्यत्र चित्रगोस्वामीति बोधान्यथानुपपत्त्या कल्प्यमाना लक्षणोत्तरपदवत्पूर्वपदेऽपि कल्प्या स्यादविशेषादित्यनुसंधाय ब्रूते—**प्रकृते चेति** । **अत्यन्तसांनिधानेनेति** । प्रत्ययाव्यवहितत्वरूपात्यन्तसंनिधानेनेत्यर्थः । **उत्तरपद एवेति** । प्रत्ययार्थान्वयसौकर्यमपि तत्रैव लक्षणाकरणे बीजमिति भावः । **विशेष इति** । प्रत्ययं प्रति पूर्वपदापेक्षयोत्तरपदस्यात्यन्तसंनिधानमेव विशेष इति उत्तरपद एव लक्षणेति भावः अथवा घटपटादिपदापेक्षया समासोत्तरपदलक्षणाया अन्वयसौकर्यादिकं विशेष इत्यर्थः । तथा च घटपटादिपदेषु चरमवर्णस्यात्यन्तं प्रत्ययसंनिधानेऽपि तस्यार्थबोधकत्वाननुभवात्समुदायस्यैव वाचकत्वं कल्प्यत इति भावः । किं च प्रत्ययात्यन्तसंनिधानेन चरमवर्णस्यैव वाचकत्वमस्तु, तच्चेष्टमेव नानिष्टमित्यत्र मीमांसकसंमतिं दर्शयति—**स्वीकृतं चेत्यादिना** । **चरमवर्णस्यैवेति** । पूर्वपूर्ववर्णगततात्पर्यग्राहकत्वविशिष्टचरमवर्णस्येत्यर्थः । पूर्ववर्णगततात्पर्यग्राहकत्वं च पूर्वपूर्ववर्णानां यः श्रौतः साक्षात्कारस्तज्जनितसंस्कारवत्त्वं, तादृशसंस्कारवत्त्वसहितचरमवर्णस्यैवेति यावत् । तेन केवलचरमवर्णाच्चार्थप्रत्ययो, नापि पूर्वपूर्ववर्णानर्थक्यमिति बोध्यम् ।

एवं परस्परान्वययोग्यत्वरूपव्यपेक्षालक्षणसामर्थ्यवादिनां नैयायिकमीमांसकादीनां मतमुपपाद्य तदयुक्तत्वं प्रतिपादयन्नाह—**अत्रोच्यत इति** । समासेऽपि व्यपेक्षैवेतिमतविषये दूषणमुच्यत इत्यर्थः । **शक्त्यस्वीकार इति** । समासे समुदायशक्त्यनङ्गीकार इत्यर्थः । तस्य—समासस्येत्यर्थः । **प्रातिपदिकसंज्ञादिकमिति** । आदिना सुब्लुक्, समुदायात्पुनः सुबुत्पत्तिः, अनुदात्तं पदमेकवर्जमित्यस्य प्रवृत्तिश्च गृह्यते । संज्ञादेरभावमुपपादयन्नाह-**अर्थवत्त्वाभावेनेति**। अर्थवत्सूत्रेऽर्थवदित्यत्र प्रशंसायां मतुप् । प्राशस्त्यं च वृत्त्याऽर्थबोधजनकत्वम् शब्दशास्त्रप्रस्तावाच्छब्दस्वरूपमिति विशेष्यस्याध्याहारः । तथा च वृत्त्याऽर्थप्रतिपादकं यच्छब्दस्वरूपं तत्प्रातिपदिकसंज्ञकं भवतीत्यर्थः । न तु संबन्धमात्रे मतुपं स्वीकृत्य यथाकथंचिदर्थवत्त्वम् । तथा सति अनुकार्यानुकरणयोरभेदपक्षेऽ-

प्रातिपदिकम् " [ पा० सू० १–२–४५ ] इत्यस्याप्रवृत्तेः । न च "कृत्तद्धितसमासाश्च " [ पा० सू० १–२–४६ ] इत्यत्र समासग्रहणात्सा । तस्य नियमार्थताया भाष्यसिद्धाया वैयाकरणभूषणे स्पष्टं प्रतिपादितत्वात् । समासवाक्ये

---

नुकरणस्य वृत्त्याऽनुकार्यार्थप्रतिपादकत्वाभावेऽपि सादृश्यादिनाऽनुकार्यार्थस्मारकत्वेन यथाकथंचिदर्थवत्त्वसत्त्वात्प्रातिपादिकसंज्ञायां सुबुत्पत्त्या 'भूः सत्तायाम्' इत्यादि सविभक्तिकमेव निर्देष्टव्यं स्यात्, न तु- भू सत्तायामिति विभक्तिशून्यमिति तदसंगतमेव स्यादिति भावः । एवं च समासघटकपदयोः प्रत्येकं वृत्त्याऽर्थप्रतिपादकत्वेऽपि समुदाये शक्त्यनङ्गीकारेण राजपुरुषेत्यादिसमासस्य वृत्त्याऽर्थप्रतिपादकत्वाभावेन प्रातिपदिकसंज्ञा न स्यात् । ततश्चालौकिकप्रक्रियावाक्यस्थसुब्लुङ्न स्यात्, अनुदात्तं पदमिति शेषनिघातश्च न स्यादित्यर्थः । न चाऽऽकाङ्क्षादिवशात्स्वस्वावयवान्यतरवृत्त्याऽर्थप्रतिपादकत्वरूपमर्थवत्त्वमर्थवत्सूत्रे ग्राह्यमिति वाच्यम् । गौरवात्, चित्रगुरित्यादौ तदसंभवाच्च । गोशब्दस्यैव लक्षणया विशिष्टार्थप्रतिपादकत्वात् । न चार्थबोधजनकत्वविशिष्टज्ञानविषयशब्दत्वमेवार्थवत्त्वं तत्र ग्राह्यम् । तच्चैकस्य पदस्य लक्षणया, अपरस्य पदस्य तत्र तात्पर्यग्राहकतया चेत्येवं समासरूपसमुदायस्याक्षतमेवेति न चित्रगुरित्यादौ प्रातिपदिकसंज्ञाद्यनुपपत्तिरिति वाच्यम् । तथा सति प्रत्येकमपि प्रातिपदिकसंज्ञासंभवेन प्रत्येकस्माच्छब्दाद्विभक्त्युत्पत्त्यापत्तेः । न चैकाच्द्विर्वचनन्यायेन समुदायादेव विभक्तिरुत्पत्स्यते, न प्रत्येकस्मादिति वाच्यम् । यत्र समुदायकार्येण तदवयवा अपि तत्कार्यभाजो जायन्ते तत्रैव तन्न्यायप्रवृत्तिस्वीकारात् । यथा पच् इति समुदाये द्विरुक्ते अ, अच्, प, इत्येवमन्येऽपि तदवयवा द्विरुक्ता भवन्ति । यथा वा मूलप्रदेशे वृक्षे प्रचालितेऽन्येऽपि तदवयवाः शाखादयः प्रचालिता भवन्ति तद्वदित्यर्थः । एकाचो द्वे प्रथमस्येत्यादिनिर्देशेन प्रत्येकस्माद्विभक्तिवारणे तु महद्गौरवमिति स्पष्टमेवेति भावः । नन्वेवं राजपुरुषादिसमासेऽर्थवत्सूत्राप्राप्तावपि कृत्तद्धितेत्युत्तरसूत्रे समासग्रहणादेव समासस्य प्रातिपदिकसंज्ञा स्यादिति शङ्कते— **न च कृत्तद्धितेति । समासग्रहणादिति ।** सा—प्रातिपदिकसंज्ञा । तथा च समासग्रहणं विध्यर्थमित्यभिमानः शङ्कितुः । **नियमार्थताया भाष्यसिद्धाया इति ।** सिद्धे सत्यारम्भो नियमार्थ इति न्यायेन समासस्य प्रातिपदिकसंज्ञासिद्धिं विना नियमार्थत्वासिद्धेः संज्ञासिद्धिश्च पूर्वसूत्रेणैव वक्तव्येति तदुद्देश्या-

र्थवत्पदार्थज्ञानं विना संज्ञासिद्धेर्वक्तुमशक्यत्वादर्थवत्सूत्रे यादृशमर्थवत्त्वं विवक्षितं तदुच्यते--अर्थशब्दान्मतुप्, अर्थशब्दश्चाभिधेयवचनः, एवं च वृत्त्याऽर्थबोधकं यत्तत्प्रातिपदिकसंज्ञमित्यर्थाद्वृत्त्याऽर्थप्रतिपादकत्वमर्थवत्त्वमित्यर्थः। वृत्तिशब्देन च लौकिकालौकिकसाधारण्येन वृत्तिसामान्यमभिप्रेयते। तत्र यस्य शब्दस्यान्वये योऽर्थः प्रतीयते, व्यतिरेके च व्यतिरिच्यते स तस्यार्थ इत्यन्वयव्यतिरेकसिद्धा वृत्तिर्लौकिकी इयमेवाभिधा, वाच्यवाचकभावः शक्तिरिति शब्दैर्व्यवह्रियते 'कर्तरि कृत्, तयोरेव कृत्यक्त, द्व्येकयोर्द्वि, तस्यापत्यम्, इत्यादिरलौकिकी। एतदनुसंधायैवोक्तं बृहद्वैयाकरणभूषणे पृष्ठे ( १६२ ) अर्थवत्सूत्रेऽर्थवत्त्वमर्थप्रतीत्यनुकूलवृत्तिमत्त्वमात्रमिति। शक्तिलक्षणाद्योतनान्यतमसंबन्धेनार्थबोधजनकत्वमित्यर्थः। लघुमञ्जूषायां ( प्रक. ५ पृष्ठं १२ ) वृत्त्याऽर्थबोधकत्वमेवेति। शब्दरत्नटीकायां भैरव्यामपि—पूर्वसूत्रेऽर्थवत्त्वं वृत्तिमत्त्वसामान्यमभिप्रेतमिति। तथा चार्थवत्सूत्रेण प्रातिपदिकसंज्ञायाः सिद्धत्वात्समासग्रहणं नियमार्थमेव, न विध्यर्थम्। राजपुरुषादिसमुदाये सिद्धान्ते विशिष्टशक्तिस्वीकारादिति भावः। ननु सिद्धान्तेऽपि असूर्यंपश्याः, अश्राद्धभोजीत्यादावसूर्यमिति अश्राद्धमिति चासमर्थसमासः, अत्र नञर्थस्य सूर्यकर्मिकया दृशिक्रियया संबन्धो, न सूर्येण, सूर्यं न पश्यन्तीत्यर्थावगमात्, तथाऽश्राद्धमित्यत्रत्यनञो भुजिक्रियया संबन्धो न श्राद्धेन, श्राद्धभोजननिषेधावगमात्। तथा चासमर्थसमासे वृत्त्याऽर्थप्रतिपादकत्वरूपार्थवत्त्वाभावात्तत्र संज्ञाविधानार्थमावश्यकं समासग्रहणमिति तदेवेदानीं समुदायशक्त्यनङ्गीकर्तृमते वृत्त्याऽर्थाभिधायकत्वाभावेऽपि समासे संज्ञाविधायकं स्यादिति चेन्नैवम्। असूर्यमित्यादावपि असूर्यमित्यादेः सूर्यकर्मकदर्शनाभाववति, श्राद्धकर्मकभोजनाभाववति च शक्तिकल्पनेनार्थवत्सूत्रेणैव सिद्धत्वात्। न च शशशृङ्गमित्यादौ शशीयशृङ्गस्यात्यन्ताप्रसिद्धेरर्थाभावेनानर्थकस्य संज्ञार्थं तदावश्यकं, अन्यथा प्रातिपदिकसंज्ञा न स्यादिति वाच्यम्। तत्रापि विशकलितप्रसिद्धं शृङ्गादिकमारोपितसंबन्धे शक्यं, नाम—गवादिष्वनुभूतं शृङ्गं शशमस्तकवर्तितया बुद्ध्योत्प्रेक्षितं शशशृङ्गपदवाच्यमतोऽर्थवत्सूत्रस्य प्राप्तिसत्त्वात्। किं च समासरूपधर्मिग्राहकात्, असूर्यललाटयोरिति मानादसूर्येत्यस्य प्रातिपदिकसंज्ञा सिध्यति। नहि प्रातिपदिकत्वं सुबुत्पत्तिं च विना समीपोच्चारितपदत्वरूपमुपपदत्वं निर्वहति। स्वामपदार्थानुभवा-

नुरोधेन बौद्धपदार्थस्याऽऽवश्यकत्वेन शशशृङ्गादौ बौद्धः शशशृङ्गादिरर्थो वाच्य इति स्पष्टं निबन्धेष्विति बोध्यम् । तथा च सिद्धान्ते समासग्रहणस्य नियमार्थत्वमेव । ननु विशिष्टशक्त्यस्वीकारे राजपुरुषादिसमासे प्रत्येकमवयवस्य वृत्त्याऽर्थप्रतिपादकत्वेऽपि समुदायस्य वृत्त्याऽर्थप्रतिपादकत्वरूपार्थवत्त्वाभावात्प्रातिपदिकसंज्ञा न प्राप्नोतीति तद्विध्यर्थमेवास्तु, नियमव्यावर्त्यस्य ग्रामानयेत्यादेर्वृत्त्याऽर्थप्रतिपादकत्वाभावादेव प्रातिपदिकसंज्ञाया अप्राप्तेर्दोषाभावेन तस्य नियमार्थत्वाभावेऽपि न क्षतिः । नचाप्रत्ययस्येति निषेधाज्जन्मवान् कर्तेत्यादौ प्रातिपदिकसंज्ञा न स्यादिति वाच्यम् । कृत्तद्धितेत्युत्तरसूत्रेण तत्संभवात् । न च संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं नास्तीति निषेधात्तदन्तविधेरसंभव इति वाच्यम् । केवलयोः कृत्तद्धितयोः संज्ञायाः प्रयोजनाभावेन तदन्तविधेरनिवार्यत्वादिति चेन्न । केवलकृत्तद्धितयोः प्रातिपदिकसंज्ञायां फिषोऽन्त उदात्त इति फिट्स्वरप्रवृत्तेरेव प्रयोजनत्वात् । न च प्रत्ययस्वरेण बाधान्न फिट्स्वरप्रवृत्तिसंभव इति वाच्यम् । येन नाप्राप्तिन्यायेन प्रत्ययस्वरापेक्षया प्रातिपदिकस्वरस्य सुब्धातौ धातुस्वरस्येव बलीयस्त्वात् । तथा च तदन्तविधेरभावाज्जन्मवानित्यादौ प्रातिपदिकसंज्ञा न स्यादिति चेन्न । उत्तरसूत्रे तदन्तग्रहणायार्थवदित्यनुवृत्तेरावश्यकत्वेन कृत्तद्धितानामनर्थकानामप्रसिद्धेर्वृत्त्याऽर्थबोधजनकत्वरूपार्थवत्त्वग्रहणेऽर्थवद्ग्रहणानुवृत्तिवैयर्थ्येन तत्सामर्थ्यात्समुदायशक्त्या विशिष्टार्थबोधजनकत्वरूपविशिष्टार्थवत्त्वमुत्तरसूत्रे गृह्यते । तादृशविशिष्टार्थवत्त्वं च न केवलकृत्तद्धितानां संभवति, तत्र पारिभाषिकार्थवत्त्वाभावात । ततश्च तादृशविशिष्टार्थवन्तौ यौ कृत्तद्धितावित्यभेदेन विशेषणविशेष्यभावानुपपत्तिरिति तदुपपत्तये कृत्तद्धितांशे तदन्तविधिः सिध्यति - कृत्तद्धितान्तेष्वेव पारिभाषिकार्थवत्त्वस्य सत्त्वात् । तथा च जन्मवानित्यादौ न संज्ञाया अनुपपत्तिः । एवं विशिष्टार्थवत्पार्थकार्थवत्पदस्याभेदेन समासपदेनान्वयाद्विशिष्टार्थवान् यः समासस्तस्य प्रातिपदिकसंज्ञाविधानात्समासे विशिष्टशक्त्यनङ्गीकारे समासग्रहणेनापि न संज्ञा सिध्यति । तथा च समासग्रहणस्य विध्यर्थत्वं न संभवति । न चानुवृत्तार्थवत्पदस्य तदन्तविधिसिद्ध्यर्थं कृत्तद्धितयोरेवान्वयोऽस्तु, न समासेऽपि प्रयोजनाभावात् । तथा च विशिष्टशक्त्यनङ्गीकारेऽपि समासस्य कृत्तद्धितेति सूत्रे समासग्रहणादेव संज्ञा सिध्येदिति वाच्यम् । तथा सति ' कृत्तद्धितसमासाः ' इति द्वंद्वस्यासाधुत्वापत्तेः । अन्यतरस्य प्राधा-

त्ये मैत्रचैत्रौ पण्डिताविति प्रयोगाभावात्। द्वंद्वघटकयावत्पदार्थे इतरपदार्थान्वय एव द्वंद्वस्य साधुत्वं, न तु तद्घटकयत्किंचित्पदार्थे इतरपदार्थान्वये, इत्यनुशासनतोऽभ्युपगमात्। सौत्रत्वात्साधुत्वकल्पनं त्वगतिकगतित्वाद्गौरवापादकमेव। परस्परसापेक्षाणां भेदानभ्युपगमेन समुदायरूपतामापन्नानामेकस्मिन्नर्थेऽन्वय एवेतरेतरयोगे समासः संभवति। परस्परसापेक्षत्वसूचनार्थैव चैत्रश्च मैत्रश्चेति वाक्ये प्रत्येकं चशब्दप्रयोगः। तयोः परस्परापेक्षित्वं च प्रत्यासत्त्या स्वसमभिव्याहृतपाण्डित्य एवेति परस्परापेक्षित्वलक्षणसामर्थ्यसत्त्वादितरेतरयोगद्वंद्वः समासो भवति। एकतरस्यापाण्डित्ये परस्परापेक्षित्वसामर्थ्याभावाद्द्वंद्व एव न प्राप्नोतीति तत्र द्वंद्वस्यासाधुत्वमुच्यते। एवं च द्वंद्वघटकयावत्पदार्थे, इतर ( द्वंद्वाघटक ) पदार्थान्वय एव द्वंद्वस्य साधुत्वं, न द्वंद्वघटकयत्किंचित्पदार्थे, द्वंद्वाघटकपदार्थान्वये, इति नियमो लभ्यते। इतरेत्यस्य द्वंद्वघटकीभूतपदार्थातिरिक्तेत्यर्थः। एवं सति वृत्तिघटकपदार्थातिरिक्तस्य विशिष्टार्थबोधजनकत्वरूपानुवृत्तार्थवत्पदार्थस्य यदि कृत्तद्धितयोरेवान्वयः स्यान्नसमासे, तर्हि कृत्तद्धितसमासेति पदत्रयस्य विशिष्टार्थबोधजनकत्वरूपेऽर्थवत्त्वे परस्परानपेक्षित्वेन परस्परसापेक्षत्वलक्षणसामर्थ्याभावात्समासो न स्यात्, किं तु 'कृत्तद्धितौ समासश्च' इत्येव निर्देष्टव्यं स्यात्। यस्माच्च तथाऽकृत्वा पदत्रयस्येतरेतरयोगे द्वंद्वः कृतस्तस्मादनुवृत्तार्थवत्पदस्य समासपदेऽप्यन्वयः कार्य एव। तथा च समासादौ विशिष्टशक्त्यनङ्गीकारेऽर्थवत्त्वाभावात्समासस्य संज्ञा न भवति। न चैवं समासादौ विशिष्टशक्त्यनङ्गीकर्तृमते समासग्रहणं व्यर्थमेव स्यादिति तद्विधायकमेवास्तु समासश्च सौत्रत्वादुपपादनीय इति वाच्यम्। तथा सति बहुपटच इत्यत्र जसन्तात्पूर्वं बहुचि कृते तस्य तद्धितान्तत्वाभावान्नोत्तरसूत्रेण संज्ञा प्राप्नोति। नापि पूर्वसूत्रेण, प्रकृतिप्रत्यययोः प्रत्येकं वृत्त्याऽर्थप्रतिपादकत्वेऽपि समुदायस्य वृत्त्याऽर्थप्रतिपादकत्वाभावात्। तथा च चितः सप्रकृतेरिति वचनेन चित्त्वप्रयुक्तान्तोदात्तत्वं वकारोत्तरवर्तिनोऽकारस्य स्यात्, बहुपटवः इति, इष्यते तु टकारोत्तरवर्तिनोऽकारस्य बहुपटवः, इति।

प्रातिपदिकसंज्ञायां सत्यां तु अन्तरङ्गानपि विधीन् बहिरङ्गो लुग्बाधते, इति न्यायेन प्रथमजसो लुगुत्तरमेव प्रवर्तते स्वर इतीष्टसिद्धिः। न च तद्धितशब्दस्य तद्विशिष्टपरतया कृत्तद्धितेतिसूत्रेणैवात्र प्रातिपदिकसंज्ञेति वाच्यम्। पचतकीत्यादावतिप्रसङ्गात्। अव्ययसर्वनाम्नामित्यत्र तिङश्चेत्यनुवर्तनात्पचतीति तिङन्तस्या-

कच् । बहुपटवस्तिष्ठन्तीति वाक्यस्य तद्धितविशिष्टत्वात्तत्रातिप्रसङ्गाच्च । एवं च बहुपटव इत्यत्रावश्यमेष्टव्या संज्ञा न स्यादित्येको दोषः । अपरश्च मूलकेनोपदंशमित्यत्र तृतीयाप्रभृतीन्यन्यतरस्यामिति समासाभावपक्षे कृदन्तत्वात्प्रातिपदिकसंज्ञापत्तिः स्यात् । न च समुदायोत्तरं कृद्विहित इति न तत्कृदन्तमिति वाच्यम् । कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणमिति परिभाषया विशिष्टग्रहणसंभवात् । मूलकस्योपदंशनकर्मत्वं भुजौ करणत्वं चास्ति, विभक्तिस्तु प्रधानाक्रियां प्रति करणत्वप्रयुक्ता तृतीयैव कृतेति मूलकस्योपदंशनकारकत्वाक्षतेः । तथा च मूलकेनेति विभक्तेर्लुक् स्यात् । न च समासतदभावयोरैकरूप्ये समासविकल्पे फलाभाव इति वाच्यम् । समासे उत्तरपदप्रकृतिस्वरः, असमासे तूदात्तद्वयमिति स्वरविशेषस्य तत्फलत्वसंभवात् । तथा चात्रापि दोष एव । किं च वृत्त्याऽर्थप्रतिपादकत्वमर्थवत्त्वमर्थवत्सूत्रे गृह्यते चेद्विशिष्टशक्तिमस्वीकुर्वतां प्राचीनवैयाकरणानां मते हरिषु करोषीत्यादौ प्रकृतिप्रत्ययोः प्रत्येकं वृत्त्याऽर्थप्रतिपादकत्वेऽपि समुदायस्य वृत्त्याऽर्थप्रतिपादकत्वाभावात्संज्ञा न प्राप्नोतीति प्रत्ययान्तपर्युदासो विफलः, तत्सार्थक्याय प्रकृति-प्रत्ययसमुदायस्य प्रातिपदिकसंज्ञा भवतीति कल्प्यते । कृत्तद्धितान्तयोः प्रत्ययान्तत्वान्निषेधे प्राप्ते विध्यर्थ( प्रतिप्रसवार्थ )मुत्तरसूत्रे कृत्तद्धितग्रहणम् । बहुपटव इत्यत्र प्रकृतिप्रत्ययसमुदायत्वात्प्रातिपदिकसंज्ञायां सत्यां सिद्ध इष्टः स्वरः । तथाऽपि बहुपटव इत्यत्रेष्टस्वरसिद्ध्यर्थं प्रत्ययान्तपर्युदासोऽवश्यं वक्तव्य इति गौरवमेव दोषः । विशिष्टशक्तिस्वीकारे कृत्तद्धितान्तयोर्वृत्त्याऽर्थप्रतिपादकत्वेनार्थवत्सूत्रेणैव संज्ञायाः सिद्धत्वाद्धातोः प्रत्ययान्तस्य च चेद्भवति संज्ञा तर्हि कृत्तद्धितान्तयोरेवेति नियमेन धातुपर्युदासः प्रत्ययान्तपर्युदासश्च प्रत्याख्यातो भाष्ये । न चोत्तरसूत्रे संज्ञाविधौ प्रत्ययग्रहण इति निषेधात्तदन्तग्रहणं न स्यात । कृत्तद्धितान्तयोर्विशिष्टार्थप्रतिपादकत्वाभावेनार्थवदित्यनुवृत्तिसामर्थ्यादपि न तदन्तविधेः संभवः । किं तु प्रत्ययपर्युदासान्निषेधे प्राप्ते केवलप्रत्यययोरेव संज्ञाविधानार्थं कृत्तद्धितग्रहणमिति वाच्यमिति चेन्न । भाष्ये प्रत्ययपर्युदासानुक्तेर्वृत्त्याऽर्थप्रतिपादकत्वात्प्रत्ययस्यार्थवत्सूत्रेणैव सिद्धेः पुनस्तद्ग्रहणं तदन्तार्थमेवेत्यनुमीयते । न च सिद्धे सत्यारम्भो नियमार्थ इति न्यायेन प्रत्ययस्य चेद्भवति संज्ञा तर्हि कृत्तद्धितयोरेवेति नियमार्थं तद्ग्रहणमिति वाच्यम् । प्रत्ययपर्युदासानुक्तिपरभाष्यविरुद्धत्वात् । प्रत्ययपर्युदासानुक्तिभाष्यात्प्रत्ययस्य संज्ञाया-

मपि फलाभावदोषाभावयोरवगमात् । फलदोषयोः संभवेऽवश्यं स पर्युदास उक्तः स्यात् । तथा च तदन्तसंज्ञार्थमेवेति बहुपटव इत्यत्र प्रातिपदिकसंज्ञार्थं प्रत्ययान्तपर्युदासः कर्तव्य इति गौरवमेको दोषः । अपरश्च मूलकेनोपदंशमित्यादौ कृद्ग्रहणपरिभाषया कृदन्तत्वात्संज्ञा प्राप्नोतीति दोषः । एवं च न प्राचीनवैयाकरणोक्तरीत्या क्लृप्तशक्त्योपपत्तिर्भवतीति सर्वत्र समासादौ विशिष्टशक्तिः स्वीकार्येत्यभिप्रायः । सा च विशिष्टशक्तिः कृत्तद्धितादिपञ्चवृत्तिष्विव वाक्येऽप्याश्रयणीया । इयान् परं विशेषः—कृत्तद्धितादिपञ्चवृत्तिषु वर्तमाना विशिष्टशक्तिरेकार्थीभावशब्देन व्यवह्रियते, न वाक्ये वर्तमानेति । वाक्ये विशिष्टशक्तिस्वीकारादेव 'वाक्यप्रतिषेधोऽर्थवत्त्वात्' वाक्यस्य प्रातिपदिकसंज्ञायाः प्रतिषेधः कर्तव्यः, कुतः ? अर्थवत्त्वात्, वाक्यस्य विशिष्टार्थवत्त्वादित्यर्थः । इत्युक्त्वा 'न वै पदार्थादन्यस्यार्थस्योपलब्धिर्भवति वाक्ये' पदानि स्वस्वमर्थं प्रतिपादयन्ति वाक्यम् । पदार्था एव त्वाकाङ्क्षायोग्यतासंनिधिवशात्परस्परसंसृष्टा वाक्यार्थः । न तु वाक्यं वाक्यार्थो वा पृथगस्तीति । एवं च पदार्थैरेवाऽऽकाङ्क्षादिभिः संसर्गस्य गम्यमानत्वान्न तत्र वाक्यशक्तिर्वाक्यस्यातिरिक्तस्याभावाच्चेत्याशङ्क्य तदुपरि सिद्धान्त उक्तः—'पदार्थादन्यस्यानुपलब्धिरिति चेत्पदार्थाभिसंबन्धस्योपलब्धिः,' देवदत्त गामभ्याज शुक्लामिति वाक्यस्थपदानां सामान्ये वर्तमानानां यद्विशेषेऽवस्थानं स वाक्यार्थः, तस्मात्प्रतिषेधो वक्तव्य इत्यर्थवत्सूत्रे भाष्य उक्तम् । अत्र कैयटः—ध्वनिव्यङ्ग्यं नित्यं वाक्यं विशिष्टार्थस्य = विशेषणत्वादिविशिष्टस्यार्थस्य, पदार्थसंसर्गरूपस्य वाचकम् । अन्यथा ह्यशाब्दो वाक्यार्थः स्यादिति । सामान्ये वर्तमानानां—विशेषणविशेष्यत्वरहितस्वस्वार्थे वर्तमानानामित्यर्थः । विशेषेऽवस्थानं— विशेषणत्वादिविशिष्टे पदार्थसंसर्गरूपे वाक्यार्थेऽवस्थानमित्यर्थः । यदि च पदार्थसंसर्गो वाक्यशक्यो न स्यात्तर्हि वाक्यार्थस्याशाब्दत्वेनाप्रामाण्यादनाश्वासेन 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इत्यादिः श्रौतव्यवहारो लौकिकव्यवहारश्च सर्व उच्छिन्नः स्यादित्यनेन ग्रन्थेन पदार्थसंसर्गरूपे वाक्यार्थे वाक्यस्य शक्तिः समाश्रयणीयैवेति सिध्यति । एवं च समासस्य शक्तिवृत्त्याऽर्थप्रतिपादकत्वेनार्थवत्त्वादर्थवत्सूत्रेणैव संज्ञासिद्धेः समासग्रहणं नियमार्थं संपद्यते । नियमाकारश्च—यत्र संघाते पूर्वो भागः पदं, उत्तरश्च प्रत्ययो नेत्येवंरूपो मनोरमोक्तो बोध्यः । तेन च मूलकेनोपदंशमित्यत्र कृ-

शक्त्यभावेन शक्यसंबन्धरूपलक्षणाया अप्यसंभवेन लाक्षणिकार्थवत्त्वस्याप्यसंदन्तत्वात्प्राप्ता, गामानयेत्यादिवाक्यस्याप्रत्ययान्तत्वादर्थवत्सूत्रेण प्राप्ता च संज्ञा न भवति । ततश्च सुब्लोपादिकं न भवतीति दोषाभावः । बहुपटव इत्यस्य नियमाकारकुक्षिप्रविष्टत्वाभावादर्थवत्सूत्रेण संज्ञासिद्धिरिति सर्वं सुस्थम् । यत्तूच्यते यद्यर्थवत्सूत्रे वृत्त्याऽर्थप्रतिपादकत्वरूपमर्थवत्त्वं गृह्यते तर्ह्येकार्थीभावस्य वृत्तिमात्रे सत्त्वात्कृत्तद्धितान्तयोः समासस्य चार्थवत्सूत्रेणैव संग्रहात्सुबन्ततिङन्तयोरेकार्थीभावाभावेनासंग्रहादर्थवत्सूत्रे प्रत्ययान्तपर्युदासस्य कृत्तद्धितेति सूत्रस्य च वैयर्थ्यापत्तिर्दुर्वारेति । तन्न । क्विबन्तधातूनां क्विब्लोपे सति छिद् भिद्, इत्यादावधातुरिति पर्युदासात्, इयान् इयदित्यादाविदम्शब्दात्परस्य वतुपो वकारस्य घकारादेशे तस्येयादेशे च इदंकिमोरीश्की, इतीदंशब्दस्येशादेशे तस्य यस्येति चेति लोपे, इयत्, इति केवलं प्रत्ययरूपमवशिष्टं, तत्राप्रत्यय इति पर्युदासात्संज्ञानापत्तेः । विधायकाभावात् । तदर्थं कृत्तद्धितग्रहणस्य विध्यर्थत्वे प्रागुक्तेषु मूलकेनोपदंशं, दश दाडिमानीत्यादिषु दोषप्रसङ्ग इति समासग्रहणं नियमार्थमिति बोध्यम् । एवं प्राचीनवैयाकरणरीत्या समासे शक्त्यस्वीकारे क्लृप्तशक्त्योपपत्तिर्न भवतीति प्रतिपाद्याथ नैयायिकादिरीत्या लक्षणयाऽप्युपपत्तिर्न भवतीति ब्रूते-**समासवाक्ये शक्त्यभावेनेत्यादि** । समासे विशिष्टशक्त्यस्वीकारे समासरूपवाक्यस्य कस्मिंश्चिदप्यर्थे शक्तिर्नास्तीति समासस्य शक्यार्थाभावाच्छक्यसंबन्धरूपलक्षणाया अपि वक्तुमशक्यत्वाल्लाक्षणिकार्थवत्त्वस्यापि समासेऽसत्त्वान्न लक्षणया नैयायिकादिरीत्याऽप्युपपत्तिर्भवतीति सर्वत्र समासे विशिष्टशक्तिस्वीकार आवश्यकः । अत्रेदं बोध्यम्——न्यायवैशेषिकादिमते वाक्ये लक्षणा नास्ति । स्ववाच्यसंबन्धो लक्षणा इति तल्लक्षणात् । स्वं—गङ्गापदं, तच्छक्योऽर्थः जलप्रवाहविशेषः, तस्य साक्षात्संबन्धः संयोगाख्यस्तीरे, सोऽर्थनिष्ठः संबन्ध एव गङ्गाशब्दे आरोपितो लक्षणेति समन्वयः । तेन चाऽऽरोपितेन शब्दव्यापारेण गङ्गापदाल्लक्ष्यभूततीरोपस्थित्या गङ्गातीरे घोष इति शाब्दबोधो भवति । स्वशक्यसंबन्धो लक्षणेत्युक्तेः । स्वस्य—पदस्य, लक्ष्यार्थेन परम्परासंबन्धो यः स एव लक्षणेत्यभिप्रेतमिति गम्यते । यतः पदस्य साक्षात्संबन्धः शक्यार्थेनैव, तस्यैव पदस्य लक्ष्यार्थेन परम्परासंबन्धो यः सैव लक्षणा । साक्षात्संबन्ध एव शक्तिर्वाच्यवाचकभावोऽभिधावृत्तिरिति वा भण्यते । परम्परासंबन्धस्तु लक्षणा, जघन्यवृ-

त्तिरिति चोच्यते । एवं च पदसमुदायरूपस्य वाक्यस्य कस्मिंश्चिदप्यर्थे शक्यभावेन वाक्यशक्यताप्रसिद्धेः कथं तत्र शक्यसंबन्धात्मिका लक्षणा घटेत । वाक्यशक्याप्रसिद्ध्या तच्छक्यसंबन्धरूपलक्षणाया अपि वाक्येऽप्रसिद्धिरिति भावः । मीमांसकास्त्वेवं मन्यन्ते— यदि वाक्ये लक्षणा न स्वीक्रियते कथं तर्हि गभीरायां नद्यां घोष इत्यत्र लक्षणा । तत्र प्रत्येकं पदेषु लक्षणा न संभवति । यदि गभीरपदं तीरलक्षकं, तर्हि नद्यामित्यनेन सहानन्वयापत्तेः । नहि तीरं नदी । नद्यामित्यनेनानन्वयापत्तेरेव नापि नदीपदं तीरलक्षकं, नहि गभीरं तीरम् । न च गभीरपदं गभीरतीरपरं, नदीपदं च नदीतीरपरमिति पदद्वये प्रत्येकं सा । तथा सति गाम्भीर्यविशिष्टा या नदी, तादृशनदीतीराप्राप्तिप्रसङ्गात् । तस्मात्पदलक्षणाया वक्तुमशक्यत्वेन वाक्येऽपि साऽवश्यमभ्युपेया । परं तु वाक्ये शक्तिरेव नास्तीति कथं तत्र शक्यसंबन्धरूपा लक्षणेति चेत्तर्हि स्वबोध्यसंबन्ध एव लक्षणालक्षणमस्तु । बोध्यत्वं च शाब्दबोधे भासमानत्वम् । स्वं—राजपुरुषेत्यादिसमासरूपं वाक्यं, तस्य साक्षात्संबन्धो वाक्यावयवराजपुरुषपदाभ्यां, तयोश्च पदार्थसंसर्गरूपवाक्यार्थेनेति वाक्यस्य परम्परया वाक्यार्थेन संबन्धाल्लक्षणसमन्वयः । पदानुपस्थाप्यस्यापि लक्ष्यतावच्छेदकतीरत्वादेः शाब्दबोधे भानसत्त्वाद्यथा बोध्यत्वं तद्वत्पदानुपस्थितस्यापि पदार्थसंसर्गरूपवाक्यार्थस्य शाब्दबोधे भानसत्त्वाद्बोध्यत्वम् । तथा च यथा पदीयशक्यता शक्तिवृत्तिबोध्या, तथा परम्परासंबन्धविशिष्टः पदार्थसंसर्गरूपो वाक्यार्थोऽपि वाक्यबोध्यो भवति । ततश्च बोध्यसंबन्धरूपा लक्षणा पदवद्वाक्येऽप्यस्तीति वाक्यमपि लक्षकमिति । एवं च राजपुरुष इत्यादिसमासवाक्येन पदार्थसंसर्गरूपो वाक्यार्थो गङ्गायां घोष इत्यत्र गङ्गापदेन तीरमिव लक्ष्यत इति मीमांसकमतेन वाक्येऽपि लक्षणा सिध्यति । तदुक्तं—'सर्वत्रैव हि वाक्यार्थो लक्ष्य एवेति च स्थितम्' इति । वाक्ये लक्षणास्वीकारादेव प्राभाकरा अप्यर्थवादवाक्ये प्राशस्त्यलक्षणां मेनिरे । तदुक्तं नयविवेकटीकायां वरदराजेन—यद्यप्येकैकपदसंबन्धिता प्राशस्त्ये नास्ति, एकैकपदादप्रतीतेस्तथाऽपि समुदायसंबन्धिताऽस्त्येवेति । अत एव ग्राहवती नदी, इति वाक्यस्यात्र मा स्नाहीत्यर्थे लक्षणेत्युद्घोषः संगच्छते । तदेतन्नैयायिका न सहन्ते—यदुक्तं गभीरायां नद्यां घोष इत्यत्र वाक्यलक्षणेति तदसारम् । तत्र नदीपदमेव गभीरनदीतीरलक्षकं, न तु वाक्यं, गभीरपदं तु तादृशलक्षणायां तात्पर्यग्राहकमिति न तस्य

भवात्। अथ " तिप्तस् " इत्यारभ्य ङ्योस्सुप् " इति तिप्प्रत्याहारो भाष्यसिद्धः। तमादायातिप्प्रातिपदिकमित्येव सूत्र्यताम्, कृतमर्थवदादिसूत्रद्वयेन, समासग्रहणं च नियमार्थमस्तु, तथा च तिबन्तभिन्नं प्रातिपदिकमित्यर्थात्समासस्यापि सा स्यादिति चेत्तथाऽपि प्रत्येकं वर्णेषु संज्ञावारणायार्थवत्त्वावश्यकत्वेन समासा-

---

वैयर्थ्यं नाप्यनन्वयापत्तिदोषः। एवं च पदलक्षणयैव निर्वाहे वृथैव वाक्यलक्षणायां मीमांसकादर इति भावः। किं च स्वबोध्य इत्यत्र स्वनिष्ठबोधकतानिरूपितबोध्यतावदर्थसंबन्ध इत्यर्थो वाच्यः। तत्र बोधकत्वं किं वृत्त्या बोधजनकत्वमथवा ज्ञानजनकज्ञानविषयत्वम्। नाऽऽद्यः। वाक्ये लक्षणाभावप्रसङ्गात्। वाक्यार्थस्य वृत्त्यबोध्यत्वात्। नान्त्यः। कम्बुग्रीवादिमदर्थज्ञानजनकज्ञानविषयत्वं घटेतिसंघातस्येव तदवयवघकारादीनामप्यस्तीति प्रत्येकं वर्णानामर्थवत्त्वापत्त्या विभक्त्युत्पत्त्या नलोपादिबहूपप्लवापत्तेः। तस्मात्स्वशक्यसंबन्धो लक्षणेत्येवमुररीकरणीयम्। तथा च समासे शक्त्यभावेन शक्याप्रसिद्ध्या लक्षणाया असंभवेन प्रातिपदिकसंज्ञानुपपत्तिस्तदवस्थैवेति तन्निरासार्थं समासे विशिष्टशक्तिस्वीकार आवश्यक इति भावः। अथ सूत्रन्यासान्तरेण समासे प्रातिपदिकसंज्ञां साधयितुमाह—**तिप्तस्झीत्यारभ्येति**। तिप्तस्० ( ३। ४। ७८ ) इत्यत्रत्यं तिशब्दमारभ्येत्यर्थः। स्वौजस्...ङ्योस्सुप् ( ४। १। २ ) सुबिति पकारेण प्रत्याहार इत्यर्थः। **भाष्यसिद्ध इति**। ' अप्रत्यय इति चेत् तिबेकादेशे प्रतिषेधो वक्तव्यः, काण्डे कुड्ये, इत्यर्थवत्सूत्रभाष्यासिद्ध इत्यर्थः। अत्र तिबेकादेश इति प्रतीकमुपादाय तिपस्तिशब्दादारभ्य सुपः पकारेण प्रत्याहार इति कैयटो व्याख्यत्। **अतिप्प्रातिपदिकमिति**। एवं सूत्रं करणीयमित्यर्थः। **कृतमिति**। अलमित्यर्थः। अर्थवदादिसूत्रद्वयं नाऽऽरम्भणीयं, किंतु अतिप्प्रातिपदिकं, समासश्च, इत्येवं सूत्रद्वयं करणीयम्। सुप्तिङन्तभिन्नं प्रातिपदिकसंज्ञमित्यर्थात्समासस्यापि संज्ञा सिध्यतीति समासग्रहणं नियमार्थमित्यर्थः। **समासस्यापीति**। समासस्य तिबन्तभिन्नत्वात्। तिपः प्रत्ययत्वेन प्रत्ययग्रहणे यस्मादिति परिभाषायाः प्रवृत्तेरिति भावः। **अर्थवत्त्वावश्यकत्वेनेति**। अर्थवच्छब्दघटकानर्थकवर्णेषु प्रत्येकं संज्ञावारणायातिप्प्रातिपदिकमित्यत्रार्थवदिति विशेषणप्रवेशस्याऽऽवश्यकत्वेनेत्यर्थः। ननु संख्याकर्मादेरभावादेकैकस्माद्वर्णात्सुबुत्पत्तिर्न भविष्यति, औत्सर्गिकैकवचनमपि गमकसत्त्व एवेति स्पष्टम्। अत एव

( समासशक्तिनिर्णयः )

व्याप्तितादवस्थ्यमेव । तथा च प्रातिपदिकसंज्ञारूपं कार्यमेवार्थवत्त्वमनुमापयति धूम इव वह्निम् । किं चैवं चित्रगुमानयेत्यादौ कर्मत्वाद्यनन्वयापत्तिः । प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वव्युत्पत्तेः । विशिष्टोत्तरमेव प्रत्ययोत्पत्तेर्विशिष्टस्यैव प्रकृतित्वात् । यत्तु संनिहितपदार्थगतस्वार्थबोधकत्वव्युत्पत्तिरेव कल्प्यत इति तन्न । उपकुम्भमर्धपिप्पलीत्यादौ पूर्वपदार्थे विभक्त्यर्थान्वयेन व्यभिचारात् । न

---

ङ्याप्सूत्रे भाष्ये तत्सूत्राभावे तिङन्तेभ्यः सुबुत्पत्तिमाशङ्क्यैकत्वादीनामुक्तत्वान्नेति समाहितम् । एवं च फलाभावात्प्रतिवर्णं प्रातिपदिकसंज्ञाऽपि न भविष्यतीति चेत्तथाऽपि दश दाडिमानि, षडपूपाः, इत्याद्यनन्वितार्थकसमुदायस्य संज्ञावारणायार्थवदिति विशेषणस्याऽऽवश्यकत्वम् । तत्र प्रातिपदिकत्वे सति सुपो धात्विति लुक् स्यात् । नियमार्थसमासग्रहणेन तु न वारणं कर्तुं शक्यम् । नियमस्य सजातीयापेक्षतया परस्परान्वितार्थकसमुदायस्यैव तेन वारणात् । अत एव गवित्याहेत्यादौ समुदायस्य न प्रातिपदिकत्वमिति स्पष्टं शब्देन्दुशेखरादौ । **समासाव्याप्तीति** । समासस्य शक्त्या लक्षणया वा विशिष्टार्थप्रतिपादकत्वाभावेनार्थवत्त्वाभावादतिप्प्रातिपदिकमिति न्यासेऽपि प्रातिपदिकसंज्ञाया अप्राप्तिरित्यर्थः । ततश्च प्रातिपदिकसंज्ञादिरूपकार्येण धूमेन वह्निरिव समासस्यार्थवत्त्वमनुमीयत इति भावः । समासग्रहणस्य विध्यर्थत्वे तु मूलकेनेत्यादिपूर्वोक्तदूषणप्रसङ्ग इति भावः । ननु समासग्रहणस्य विध्यर्थत्वेऽपि कृद्ग्रहण इति परिभाषाया ज्ञापकसिद्धतया सार्वत्रिकत्वाभावात्कृत्तद्धितेत्यत्राप्रवृत्त्या न मूलकेनोपदंशमित्यत्रातिप्रसङ्ग इत्यतो दूषणान्तरमाह—**किं चैवमिति** एवं—समासे विशिष्टशक्त्यनङ्गीकारे । **अनन्वयापत्तिरिति** । चित्रगुमित्यादौ गवादिपदार्थे कर्मत्वाद्यनन्वयापत्तिरित्यर्थः । तत्रैव हेतुमाह—**प्रत्ययानामित्यादि** । यस्मात्प्रत्ययो विधीयते सा प्रकृतिः, तदर्थेनान्वितो यः स्वार्थः कर्मत्वादिरूपः, तद्बोधकता प्रत्ययानामिति नियमशरीरम् । प्रत्ययाश्च विभक्तिकृत्तद्धिताख्याता इति तस्यार्थः । एवं च प्रकृतित्वं प्रत्ययविधानावधित्वं, न तु प्रत्ययाव्यवहितपूर्वत्वम् । ततश्च समासोत्तरपदस्य प्रत्ययविधानावधित्वरूपप्रकृतित्वाभावेन तदर्थे न कर्मत्वाद्यन्वयः संभवतीति भावः । यत्तु प्रत्ययानां स्वसंनिहितपदार्थगतस्वार्थबोधकत्वमित्येव व्युत्पत्तिरिति तन्नेत्याह—**अर्धपिप्पलीत्यादाविति** । आदिना पूर्वकाय इत्यादेरितरेतरद्वंद्वस्य

च तत्रापि संनिधानमेव । आनुशासनिकसंनिधेर्विवक्षितत्वात् । तथा च यत्पदोत्तरं याऽनुशिष्टा सा तदर्थगतं स्वार्थं बोधयति । समासे च समस्यमानपदोत्तरमेवानुशासनमिति वाच्यम् । अर्थवत्सूत्रेण विशिष्टस्यैव प्रातिपदिकत्वेन विशिष्टोत्त-

---

च संग्रहः । उपकुम्भमित्यत्र कुम्भनिरूपितसामीप्यवमर्त्तं, पिप्पलीसंबन्ध्यर्धं चाऽऽनयेतिबोधाद्विभक्त्यर्थस्य पूर्वपदार्थेऽन्वयेन प्रत्ययानां स्वसंनिहितपदार्थेति नियमस्य व्यभिचारः । संनिहितत्वं चाव्यवहितपूर्वत्वेनानुसंधीयमानत्वत् । ततश्चोपकुम्भमित्यादावुपपदार्थादेः प्रत्ययपूर्वत्वेऽपि व्यवहितत्वेनाव्यवहितत्वरूपकारणाभावेऽपि कार्यसत्त्वरूपो व्यभिचार इति भावः । ननु संनिहितत्वं नाव्यवहितपूर्वत्वं, धवखदिरावित्यादौ धवादिपदार्थे विभक्त्यर्थानन्वयापत्ते । किं तु संनिहितत्वेनानुशासनबोधितत्वम् । तच्च धवादिपदार्थानामिवोपादिपदार्थानामप्यस्तीत्याशङ्कते—**न चेत्यादिना** । **तत्रापीति** । उपकुम्भादिसमासेऽपीत्यर्थः । **आनुशासनिकेति** । संनिहितत्वेनानुशासनबोधितत्वरूपानुशासनिकसंनिधेर्विवक्षितत्वे यादृशोऽर्थः संपन्नस्तमाह—**यत्पदोत्तरं याऽनुशिष्टेति** । समासोत्तरमनुशासनसत्त्वेऽपि समस्यमानपूर्वपरादिपदोत्तरं कथमनुशासनमत आह—**समासे चेत्यादि** । समासस्यानेकपदसमूहरूपत्वात्समूहस्य च तद्घटप्रत्येकपदानतिरिक्तत्वात्समासरूपप्रातिपदिकाद्विहितविभक्तेस्तत्तत्पदसंनिहितत्वमित्यर्थः । यद्वा **समस्यमानपदेति** । समस्यमानं पदं च समासघटकीभूतं पदं—पूर्वं परं मध्यमं च । तथा चाव्ययीभावेऽव्ययं, एकदेशिसमासे एकदेशवाचिपदं, द्वंद्वे सर्वाण्यपि पदानि समस्यमानानीति तत्तदर्थे विभक्त्यर्थान्वयः । अव्ययीभावादिसमासेऽव्ययं सुबन्तेन समस्यत इत्यादिनाऽव्ययादेरेव समसनक्रियाकर्मत्वं बोध्यते । तेन संनिहितत्वेनानुशासनबोधितत्वं समासे क्वचित्पूर्वपदार्थे क्वचिदुत्तरपदार्थे क्वचिद्यावत्समस्यमानपदार्थे इति तत्रैव विभक्त्यर्थान्वय इत्यत्र तत्तदनुशासनमेव नियामकम् । इति चेन्न—**विशिष्टस्यैवेति** । समासग्रहणस्य नियमार्थत्वादर्थवत्सूत्रेणैव समासस्य प्रातिपदिकसंज्ञा वाच्या सा च राजपुरुषेत्यादिविशिष्टसमुदायस्यैवेति प्रातिपदिकात्स्वादयो भवन्तीत्यनेन समासरूपसमुदायोत्तरमेव विभक्तेरनुशासनं सिध्यति न समस्यमानपदोत्तरमिति शास्त्रबोधितसंनिहितत्वमपि उपकुम्भमित्यादौ विशिष्टस्यैव न केवलपूर्वपदस्येति कृत्वोक्तस्थले व्यभिचारो दुर्वार इति ज्ञेयम् । ननु प्रकृत्यर्थान्वितेत्यादिपूर्वोक्तनियमशरीरे पर्याप्तिसंबन्धेन प्रकृतित्वाधिकरणार्थे, इत्यनिवेश्य आश्रयता-

( समासशक्तिनिर्णयः )

रमेव विभक्त्यनुशासनात्। अथ प्रकृतित्वाश्रये विभक्त्यर्थान्वय इत्येव कल्प्यत इति चेत्तर्हि पङ्कजमानय दण्डिनं पश्य शूलिनं पूजयेत्यादौ पङ्कदण्डशूलेष्वानयनदर्शनपूजनादेरन्वयप्रसङ्गः। अघटमानयेत्यत्र घटेऽप्यानयनान्वयापत्तेश्च। न च दण्डादीनां विशेषणतया न तत्राऽऽनयनाद्यन्वयः। पाकान्नीलः, धर्मात्सुखी-

---

संबन्धेन प्रकृतित्वाधिकरणार्थे विभक्त्यर्थान्वय इत्येवं व्युत्पत्तिः कल्प्यते। तथा चोपकुम्भमर्धपिप्पलीत्यादौ पूर्वपदार्थे आश्रयतासंबन्धेन प्रकृतित्वसत्त्वान्न तत्र विभक्त्यर्थान्वयानुपपत्तिरित्याशङ्कते—**अथ प्रकृतित्वाश्रय इत्यादिना**। **कल्प्यत इति**। आश्रयतासंबन्धेन प्रकृतित्वाश्रयार्थे, इत्येव कल्प्यत इत्यर्थः। आश्रयतासंबन्धेन प्रकृतित्वं चोत्तरपद इव पूर्वपदेऽपीति नोक्तदोष इति भावः। **अन्वयप्रसङ्गादिति**। अपर्याप्त्याख्याश्रयतासंबन्धेन प्रकृतित्वस्य पङ्कादिषु सत्त्वात्तत्राऽऽनयनादिक्रियानिरूपितकर्मत्वान्वयापत्त्या पङ्कमानयेत्यादिबोधापत्तेः। न चेष्टापत्तिः, तादृशशाब्दबोधाननुभवादिति भावः। एवमसंनिहितप्रकृत्यर्थे दूषणमभिधाय संनिहितप्रकृत्यर्थेऽपि तदभिधातुं ब्रूते—**अघटमानयेत्यत्रेति**। आश्रयतासंबन्धेन प्रकृतित्वसत्त्वात्संनिहितत्वाच्च घटेऽपि कर्मत्वान्वये नञ्घटितवाक्यादपि घटमानयेत्यनिष्टबोधापत्तेः। आरोपितघटं, घटभिन्नं वाऽऽनयेत्यनुभवसिद्धः शाब्दबोध इति भावः। पूर्वोक्तस्थले दण्डादिविशिष्टे क्रियान्वये विशेषणीभूतदण्डादावप्यन्वये कदाचिदिष्टापत्तिः स्यात्, अघटमित्यत्र तु न कस्यापि घटे आनयनकर्मत्वान्वयोऽनुभवसिद्ध इति तत्त्वम्। **विशेषणतया न तत्रेति**। प्रकृतिजन्यप्रतीतिविशेष्य एव विभक्त्यर्थान्वय इति नियमादित्यर्थः। चित्रगुरित्यत्र स्वामिनस्तु प्रकृतिजन्यप्रतीतिविशेष्यतया न तत्र विभक्त्यर्थान्वयानुपपत्तिः। **आनयनाद्यन्वय इति**। आनयनादिक्रियानिरूपितकर्मत्वान्वय इत्यर्थः। ननु यत्किंचित्प्रकृतिजन्यप्रतीतिविशेषणे न विभक्त्यर्थान्वय इति चेतन्न युक्तमित्याह—**पाकान्नील इत्यादिना**। अत्र नीलशब्दो नीलरूपवदर्थपरः, सुखिशब्दश्च सुखविशिष्टबोधकः। तथा च स्वाश्रयेऽर्थे विशेषणयोर्नीलरूपसुखयोर्नीलादिशब्दजन्यप्रतीतिविशेष्यत्वाभावात्तत्र पाकादित्यादिविभक्त्यन्तान्तर्गतपञ्चम्यर्थजन्यताया अन्वयो न स्यात्। इष्यते चात्र विशेषणभूतयोर्नीलरूपसुखयोः पञ्चम्यर्थजन्यताया अन्वयः। पाकजन्यं यन्नीलरूपं तद्वान्, धर्मजन्यं यत्सुखं तद्वान्, इति बोधानुभवानुरोधात्। नन्वेकत्र विशेषणतयाऽन्वितस्य परत्र विशेष-

त्यादौ पाकधर्मादिजन्यतया रूपसुखादावनन्वयप्रसङ्गात् । यच्च प्रकृत्यर्थत्वं तज्जन्यज्ञानविषयत्वमात्रं तच्चात्राविरुद्धमिति, तन्न । घटं पश्येत्यत्र घटपदात्समवायेनोपस्थिताकाशवारणाय वृत्त्या प्रकृत्यर्थत्वस्याऽऽवश्यकत्वात् । अथ प्रत्ययप्रा-

---

णतया नान्वयः, इत्येव कल्प्यते, नतु एकत्र विशेषणतयाऽन्वितस्य परत्र विशेष्यतया नान्वय इति । तथा च दण्डिनं पूजयेत्यादौ दण्डिनि पुरुषे विशेषणतयाऽन्वितस्य दण्डस्य परत्रपूजनक्रियायां विशेषणत्वेनान्वयोऽव्युत्पन्न इति, न दण्डादौ पूजनादिक्रियाकर्मत्वान्वयापत्तिः । पाकान्नील इत्यादौ तु स्वाश्रये विशेषणत्वेनान्वितयोर्नीलरूपसुखयोः परत्र—पञ्चम्यर्थजन्यतायां विशेष्यत्वेनान्वये प्रतिबन्धकाभावान्न नीलादौ पाकादिजन्यत्वान्वयानुपपत्तिरपीति चेन्नैतद्युक्तम् । शूली पूज्य इत्यादौ शूलिनि महेश्वरे विशेषणतयाऽन्विते शूलादौ पूज्य इति विशेषणान्वयाच्छूलः पूज्य इत्यनुभवविरुद्धबोधप्रसङ्गादिति ध्येयम् । अथान्यदपि दूषयितुमनुवदति——**यच्च प्रकृत्यर्थत्वमिति** । **तज्जन्येति** । तच्छब्देन प्रकृतेः परामर्शः । प्रकृतिजन्येत्यर्थः । **ज्ञानविषयत्वमात्रमिति** । मात्रशब्देन वृत्त्याऽभिधेयत्वस्य व्यावृत्तिः । तथा च प्रकृतिजन्यज्ञानविषयत्वं प्रकृत्यर्थत्वं, नतु वृत्त्या प्रकृतिजन्यज्ञानविषयत्वमित्यर्थः । **तच्चेति** । प्रकृतिजन्यज्ञानविषयत्वमित्यर्थः । **अत्रेति** । चित्रग्वादिसमासघटकोत्तरपदादिलक्ष्यचित्रगोस्वाम्यादावित्यर्थः । **अविरुद्धमिति** । निर्बाधमित्यर्थः । अत्र प्रकृतिः—चित्रग्वादिसमासः । तदुत्तरपदेन गोशब्देन चित्रपदसमभिव्याहृतेन लक्षितस्य चित्रगोस्वाम्यर्थस्य प्रकृतिवृत्त्या प्रतिपाद्यमानत्वाभावेऽपि प्रकृतिजन्यज्ञानविषयत्वमक्षतमस्तीति भावः । एवमुक्तरूपं प्रकृत्यर्थत्वं ग्रहीतुमयोग्यमित्याह——**तन्नेति** । **घटं पश्येति** । घटशब्द उच्चारिते एकसंबन्धिज्ञानमपरसंबन्धिस्मारकमिति न्यायेन शब्दाकाशयोर्गुणगुणिनोः समवायाद्घटशब्दात्समवायेनोपस्थिते आकाशे घटशब्दोत्तरवर्तिद्वितीयार्थकर्मत्वान्वयो मा भूदिति प्रकृतिजन्यज्ञानेत्यत्र वृत्त्येतिनिवेशेन वृत्त्या प्रकृतिजन्यज्ञानविषयत्वं नाम—वृत्तिजन्योपस्थितिविषयत्वमित्यर्थस्याऽऽवश्यकत्वात् । अन्यथा घटं पश्येति वाक्यादाकाशं पश्येति बोधापत्तेः । **वृत्त्या प्रकृत्यर्थत्वेति** । शक्तिलक्षणान्यतरवृत्त्या प्रकृतिप्रतिपाद्यमानार्थत्वं प्रकृत्यर्थत्वमिति स्वीकृते तु घटशब्दाच्छक्त्या लक्षणया वा आकाशस्योपस्थित्यभावेन न तत्र दृशिक्रियाकर्मत्वान्वयः । एवं चात्र दृशिधातुर्ज्ञानसामान्यार्थक इति भावः । पुनरपि पूर्व-

( समासशक्तिनिर्णयः )

ग्वर्तिपदजन्योपस्थितिविशेष्यत्वं प्रकृत्यर्थत्वमिति चेन्न। गामानयति कृष्णो दण्डेनेत्यत्र कृष्णे तृतीयार्थान्वयप्रसङ्गात्। अथ समस्यमानपदार्थगतस्वार्थबोधकत्वं समासोत्तरविभक्तेः कल्प्यत इति चेत्तन्न। अक्लृप्तकल्पनां क्लृप्तव्युत्पत्तित्यागं चापेक्ष्य समुदायशक्तिकल्पनस्यैव युक्तत्वादिति दिक्। अपि च समासे विशिष्टश-

---

पक्षी प्रकारान्तरेण प्रकृत्यर्थत्वं निर्वक्ति—अथ प्रत्ययप्राग्वर्तीति। यत्किंचित्प्रत्ययात्प्राग्विद्यमानं यत्पदं तादृशपदजन्या योपस्थितिस्तद्विशेष्यत्वमेव प्रकृत्यर्थत्वमित्येव सामान्यतो मन्यते शङ्कक इत्यर्थः। तदपि न युक्तमतिव्याप्तत्वादित्याह—इति चेन्नेति। अतिव्याप्तिस्थलमाह—गामानयति कृष्ण इति। अत्र कृष्णः कर्ता, दण्डः करणं, गौः कर्म, आनीधातोः प्रापणमर्थः, तच्च कर्मभूताया गोः स्वस्थाने गोष्ठे, इति शेष इत्यर्थः। कृष्णे तृतीयार्थेति। प्रसङ्गादिति। टाप्रत्ययप्राग्वर्तिपदजन्योपस्थितीयविशेष्यत्वस्य कृष्णे सत्त्वाद्दण्डेनेति तृतीयार्थस्य करणत्वस्य तत्रान्वयप्रसङ्गादित्यर्थः। यदि तु प्रत्ययाव्यवहितप्राग्वर्तीत्येवमव्यवधानांशो निवेश्यते तर्हि कृष्णस्य टाप्रत्ययात्पूर्ववर्तित्वेऽपि दण्डादिशब्देन व्यवधानादव्यवहितत्वाभावान्न तत्र तृतीयार्थान्वयप्रसङ्गदोष इति चेन्न। उपकुम्भमित्यादौ प्रत्ययाव्यवहितप्राग्वर्तिपदजन्योपस्थितिविशेष्ये कुम्भपदार्थे विभक्त्यर्थान्वयापत्तेः। दधीयती ददातीत्यादौ प्रत्ययाव्यवहितप्राग्वर्तिपदजन्योपस्थितिविशेष्ये दधानि वतुप्प्रत्ययनिरूपितप्रकृत्यर्थत्वातिव्याप्तेः। अथ प्रत्ययविधानावधित्वे सति तज्जन्यप्रतीतिविशेष्यत्वं प्रकृत्यर्थत्वमिति चेच्चित्रगुरित्यादावुत्तरपदस्य प्रकृतित्वाभावात्तदर्थे विभक्त्यर्थकर्मत्वादेरनन्वयापत्तेरिति ध्येयम्। अथैतद्दोषपरिहाराय व्युत्पत्त्यन्तरमेव कल्प्यत इत्याह—समस्यमानपदार्थेति। समस्यमानं यत्पदं तदर्थगतो यः स्वार्थः—कर्मत्वादिः, तद्बोधकत्वं समासोत्तरविभक्तेरित्येव व्युत्पत्तिः स्वीक्रियत इत्यर्थः। समस्यमानपदं समासघटकीभूतपदं पूर्वं परं मध्यमं चेति तत्तत्पदार्थे समासोत्तरविभक्त्यर्थस्य कर्मत्वादेरन्वयः करणीय इति भावः। एतदपि न युक्तमित्याह—इति चेन्नेति। अक्लृप्तकल्पनामिति। समस्यमानपदार्थगतेत्यादिकार्यकारणभावान्तरकल्पनामित्यर्थः। क्लृप्तव्युत्पत्तीति। प्रत्ययानां प्रकृत्यर्थान्वितेत्यादिः पूर्वोक्तकार्यकारणभाव इत्यर्थः। तथा च क्लृप्तकार्यकारणभावत्यागं, अक्लृप्तकार्यकारणभावं चेति दोषद्वयं स्वीकृत्य निर्वाहकरणापेक्षया समुदायशक्तिस्वीकार एवोचित इति भावः। दिगिति। तदर्थ-

क्त्यस्वीकारे राजपुरुषश्चित्रगुर्नीलोत्पलमित्यादौ सर्वत्रानन्वयप्रसङ्गः। राजपदादेः संबन्धिनि लक्षणायामपि तण्डुलः पचतीत्यादौ कर्मत्वादिसंसर्गेण तण्डुलादेः पाकादावन्वयवारणाय प्रातिपदिकार्थप्रकारकबोधं प्रति विभक्तिजन्योपस्थितेर्हेतुताया

---

स्तु—राजपुरुष इत्यादौ राजसंबन्धिलक्षणायां राज्ञ एकदेशतया विशेषणान्वयवारणेऽपि दास्याःपुत्र इत्याद्यलुक्समासे लक्षणायां मानाभावेन दास्यादौ शोभनादिविशेषणान्वयो दुर्वारः स्यात्। तत्रापि संबन्धिलक्षणायां दासीसंबन्धिबोधः स्यात्। न चेष्टापत्तिः। सर्वानुभवविरोधात् एवं च राज्ञः पुरुष इति वाक्यादिव समासादपि संबन्धसंसर्गको राजप्रकारकपुरुषविशेष्यको बोधो भाष्यादिसिद्धः संबन्धिलक्षणायां न निर्वहतीत्यादिर्बोध्यः। ननु प्रकृतिप्रत्ययानामनन्तत्वात्तत्तत्प्रकृतिप्रत्ययव्यक्तिभेदेन भिन्नं भिन्नं कार्यकारणभावं प्रकल्प्य समासस्थले समस्यमानपदार्थे समासोत्तरप्रत्ययार्थान्वये बाधकाभावः, अनेककार्यकारणभावप्रकल्पनं त्वनेकसमासरूपसमुदायेषु विशिष्टशक्तिकल्पनापेक्षया न गुरुभूतमतो दूषणान्तरमाह—**अपि चेत्यादिना**। **विशिष्टशक्त्यस्वीकार इति** राजपुरुषेति समासस्य राजसंबन्धविशिष्टपुरुषे शक्तिः, एवं चित्रग्विति बहुव्रीहेश्चित्रगोस्वामिनि शक्तिः, प्राप्तोदक इत्यादेश्चोदककर्तृकप्राप्तिकर्मणि ग्रामे शक्तिरित्येवंरीत्या समासे विशिष्टशक्त्यनङ्गीकार इत्यर्थः। **सर्वत्रेति**। राजपुरुषश्चित्रगुरित्यादौ सर्वत्रेत्यर्थः। **अनन्वयप्रसङ्ग इति**। पूर्वोत्तरपदार्थयोः परस्परमन्वयो न स्यादित्यर्थः। अन्वयाभावे कारणमाह—**राजपदादेरिति**। **लक्षणायामपीति**। राजपदं राजसंबन्धिनि लाक्षणिकं, एवं गोपदं चित्रगोस्वामिनि, उत्पलपदं नीलोत्पलयोः साहित्ये लाक्षणिकमित्येवं लक्षणायां स्वीक्रियमाणायामपीत्यर्थः। अपिशब्देन संबन्धलक्षणायां सुतरामन्वयाभाव उक्तः। **तण्डुलः पचतीत्यादाविति**। अत्र तण्डुलो न कर्ता, किंतु कर्मैव। तथाऽपि कर्मत्वेनाविवक्षायां द्वितीयाभावेन प्रातिपदिकार्थत्वात्प्रथमा। कर्ता तु चैत्रादिः पृथगेव। तथा च तण्डुलः पचतीत्यसाधुः प्रयोगः। अत्र क्रियाकारकभावसंबन्धबोधकस्य द्वितीयाप्रत्ययस्याभावात्क्रियान्वयाभावेन न तादृशः प्रयोगः। यदि तु द्वितीयाभावेऽपि कर्मत्वसंसर्गेण तण्डुलस्य क्रियायामन्वयः क्रियेत, तर्हि तण्डुलकर्मकः पाकः स च चैत्रनिष्ठ इति प्रसज्येत, स चानिष्टः, सर्वानुभवविरुद्धत्वात्। अतस्तादृशबोधवारणायैवं कार्यकारणभावः कल्पनीयः—प्रातिपदिकार्थः प्रकारो—विशेषणं य-

( समासशक्तिनिर्णय. )

आवश्यकत्वात्पुरुषादेस्तथात्वाभावात् । तण्डुलः शुभ्र इत्यादौ च प्रातिपदिकार्थप्र-

---

स्मिन्नित्याकारके बोधे जननीये विशेष्यतया तदुत्तरविभक्तिजन्योपस्थितिर्हेतुरित्य-वश्यं वक्तव्यम् । तथा च तण्डुलस्य पाकक्रियायां यादृशसंसर्गेणान्वयः करणी-यस्तादृशसंसर्गबोधिकाया विभक्तेस्तण्डुलपदोत्तरमसत्त्वान्न तण्डुलस्य पाकक्रियाया-मन्वयः । एवं च निरुक्तकार्यकारणभावस्याऽऽवश्यकत्वे सति लाक्षणिकस्यापि राजादिपदार्थस्य पुरुषादिपदार्थेऽन्वयो न स्यात्, तत्रैव हेतुमाह— **पुरुषादेस्त-थात्वाभावादिति** । पुरुषादेरित्यादिपदेन स्वामिसाहित्ययोर्ग्रहणम् । विभक्तिज-न्योपस्थितिविषयत्वाभावादित्यर्थः । अत्र राजप्रकारकः पुरुषविशेष्यको बोधः, चित्रगवीप्रकारकः स्वामिविशेष्यकः, नीलोत्पलप्रकारकः साहित्यविशेष्यको बोध इष्टः । यदि तु विशेष्यत्वेनाभिमतार्थस्य पुरुषादेर्विभक्तिजन्योपस्थितिविषयत्वं स्यात्तर्ह्येव राजादेः प्रकारतया पुरुषादावन्वयः स्यान्नान्यथा, उक्तनियमानुरोधा-दिति भावः । ननु शुभ्रस्तण्डुल इत्यादौ शुभ्रादिरूपनामार्थप्रकारकः शाब्दबोधो विशेष्यतासंबन्धेन तण्डुलादौ जायते, न च तत्र विशेष्यतासंबन्धेन विभक्तिज-न्योपस्थितिरस्तीति व्यभिचारान्नोक्तकार्यकारणभावः संभवति । तण्डुलः पचती-त्यादौ तण्डुलादेः कर्मत्वसंबन्धेन क्रियायामन्वयो मा भूदित्येतदर्थं प्रातिपदिकार्थ-प्रकारकशाब्दबोधं प्रति धातुभिन्नजन्योपस्थितिर्हेतुः । अथवा विशेष्यतया धातु-जन्योपस्थितिः प्रतिबन्धिकेत्येवं कारणं प्रतिबन्धकं वा कल्पनीयम् । तथा च रा-जपुरुष इत्यादौ प्रकारताविशिष्टस्य प्रातिपदिकार्थरूपराजादेः विशेष्यतासंब-न्धेन पुरुषादावन्वये बाधकाभाव इत्याशयेनाऽऽह— **तण्डुलः शुभ्र इत्यादौ चेति** । **प्रातिपदिकार्थकप्रथमार्थ इति** । प्रातिपदिकस्यार्थ इवार्थो यस्या इत्युष्ट्रमुखवत्समासः, प्रातिपदिकार्थसदृशार्थवती या प्रथमाविभक्तिस्तदर्थे, इत्यर्थः । तण्डुलरूपप्रातिपदिकार्थाभिन्नो यो विभक्त्यर्थ इत्येवं तण्डुलादेरभेदेनान्वयः । **तस्य चेति** । विभक्त्यर्थस्य चेत्यर्थः । तण्डुलरूपप्रातिपदिकार्थाभिन्नस्य विभ-क्त्यर्थस्येति यावत् । तण्डुलरूपविभक्त्यर्थाभिन्नो यः शुभ्रपदार्थ इत्येवं शुक्लप-दार्थेऽभेदेनैवान्वय इत्यर्थः । पाक इत्यादौ पच्धातूपस्थाप्यव्यापारस्यासत्त्वरूपेण भानं, घञुपस्थाप्यव्यापारस्य तु सत्त्वरूपेणेति यथा व्यापारस्य द्वेधा भानं तद्वत्प्रा-तिपदिकार्थस्यापि द्वेधा भानं, शब्दात्प्रातिपदिकार्थस्य सत्त्वरूपेण भानं, विभक्त्या त्वसत्त्वरूपेण प्रातिपदिकार्थस्य भानमित्यभेदान्वयसंभवात्तण्डुलान्वयवति असत्त्व-

प्रथमार्थे तण्डुलादेस्तस्य च शुक्लेऽभेदेनैवान्वयः। शुभ्रेण तण्डुलेनेत्यादौ च विशेषणविभक्तिरभेदार्थां प्राणिको वाऽन्वय इति नातिप्रसङ्गः। तथा च समासे

रूपे प्रातिपदिकार्थे विशेष्यतया विभक्तिजन्योपस्थितेः सत्त्वान्नात्र प्रातिपदिकार्थप्रकारकबोधं प्रति विभक्तिजन्योपस्थितिर्हेतुरित्येवंरूपस्य कार्यकारणभावस्य व्यभिचार इति भावः। ननु तण्डुलः शुभ्र इत्यत्र व्यभिचारनिवारणेऽपि शुभ्रं तण्डुलं, शुभ्रेण तण्डुलेनेत्यादौ व्यभिचारो दुर्निवारः, द्वितीयादिविभक्तेः प्रातिपदिकार्थे विहितत्वाभावादित्याशङ्क्य समाधत्ते--**शुभ्रेणेत्यादिना**। **अभेदार्थिकेति**। विशेषणवाचकाद्या विभक्तिस्तस्या अभेदोऽर्थः। नीलमुत्पलं पश्येत्यादौ नीलाभिन्नं यदुत्पलं तत्कर्मकं दर्शनमिति बोधस्य सर्वानुभवसिद्धत्वादित्यर्थः। ध्यायेन्नित्यं महेशमित्यत्र ध्यानक्रियानिरूपितं कर्मत्वं महेशस्य प्रतीयते, तच्च महेशपदोत्तरद्वितीयया स्पष्टमुक्तं, ततश्च महेशसमानाधिकरणं पञ्चवक्त्रं त्रिनेत्रमित्यादि यद्विशेषणं तदुत्तरद्वितीयाविभक्तेः कर्मत्वेन कर्मार्थकत्वाप्रतीतेर्महेशरूपकर्माभेदबोधकत्वं फलति। अत एव विशेषणविभक्तेरभेदार्थकत्वमित्युद्घोषः। ननु कर्मणि द्वितीया विहिता, न त्वभेद इति कथं विशेषणविभक्तेरभेदार्थकत्वमुच्यत इति चेन्न। कर्माभेदस्य कर्मरूपतयाऽभेदस्य 'कर्मणि द्वितीया' इत्यनुशासनविषयत्वात्। एवं विशेषणोत्तरतृतीयादिविभक्तेरप्यभेदार्थकत्वं ज्ञेयम्। ननु विशेष्यवाचकपदोत्तरविभक्त्यैव कर्माद्यर्थस्यावगमाद्विशेषणोत्तरविभक्तिः प्रयोगसाधुत्वायैव, न त्वर्थलाभाय। ततश्च शुभ्रपदार्थस्य तण्डुलेनैवान्वयो वक्तव्यः, तण्डुलस्य च विभक्तिजन्योपस्थितिविषयत्वाभाव इति तत्र कार्यकारणभावव्यभिचारस्तदवस्थ एवेति मनस्यनुसंधायाऽऽह--**प्राणिको वाऽन्वय इति**। अयमर्थः-कर्मण्येव द्वितीयेत्येवं प्रत्ययनियमे सति द्वितीयादयः प्रत्यया विशिष्टेष्वर्थेषु कर्मादिषु नियता इति हेतोः साधुत्वार्थे विभक्तिरिति वचनं न युक्तं, किं तु कर्माद्यर्थिकैव, 'कटोऽपि कर्म भीष्मादयोऽपि कर्म' इति--भाष्याद्विशेषणेऽपि कर्मत्वादिसत्त्वात्। एवं च कारकाणां क्रिययैवान्वय इति नियमात्क्रिययामन्वयः। ततश्च शुभ्रेण तण्डुलेनेत्यत्र विशेषणविशेष्ययोः परस्परमन्वयाभावान्न व्यभिचारः। ननु यदि कारकाणां क्रिययैवान्वयः क्रियते तर्हि तस्या विभक्तिजन्योपस्थितिविषयत्वाभावेन निरुक्तकार्यकारणभावव्यभिचारः सुस्थ एवेति चेन्न। यदि विभक्त्यर्थस्य द्वारीकरणं विनाऽन्वयः क्रियेत तर्हि व्यभिचारः स्यात्। किंतु विभक्त्यर्थं द्वारीकृत्यैव का-

( समासशक्तिनिर्णयः )

परस्परमन्वयासंभवादावश्यिकैव समुदायस्य तादृशे विशिष्टार्थे शक्तिः। किं च

---

रकाणां क्रियान्वयस्वीकारात्। ततश्च शुभ्रेणेत्यत्र शुभ्रपदार्थाभिन्नं यत्करणं तन्निष्ठकरणतानिरूपिका क्रियेत्यर्थः। विभक्त्यर्थस्य द्वारीकरणादेव प्रातिपदिकार्थधात्वर्थयोः साक्षाद्भेदेनान्वयोऽव्युत्पन्न इति नियमविरोधो नेति बोध्यम्। न च शुभ्रेण तण्डुलेनेत्यत्र यदि विशेषणविशेष्ययोः परस्परमन्वयाभावस्तर्हि शुभ्रपदार्थतण्डुलपदार्थयोः परिच्छेदो न स्यादिति शुभ्रेण तण्डुलेन शिवं पूजयेदित्यनुशासनेऽपि श्यामलादितण्डुलेन, येन केनचिच्छुभ्रपदार्थेन च शिवपूजनं प्रसज्येतेति वाच्यम्। विशेषणविशेष्यवाचकपदद्वयेऽपि तृतीयाबोध्यकरणस्य स्वातन्त्र्येण पूजनक्रियायामन्वयेन शुभ्रेण पूजयेत्तण्डुलेन पूजयेदिति पार्थक्येन बोधोत्तरं तयोः परस्परं विशेषणविशेष्यभावेन मानसोऽन्वयः स्वीक्रियते। अयमेव पार्ष्णिकः पार्ष्ठिको वाऽन्वय इत्युच्यते। ततश्च प्रत्यासत्तिवशाद्यः शुभ्रः स तण्डुल एव, यश्च तण्डुलः स शुभ्र एवेति परस्परं परिच्छेदेन शुभ्राभिन्नतण्डुलकरणिका शिवकर्मिका पूजा विधिविषयेति बोधान्न दोष इति भावः। परिच्छेदो विशेषरूपेणार्थावधारणमित्यर्थः। अत एवारुणाधिकरणे 'अरुणया पिङ्गाक्ष्या एकहायन्या सोमं क्रीणाति' इति श्रुतौ अरुणयेत्यादिपदत्रयेऽपि तृतीयोपात्तस्य करणकारकस्य स्वातन्त्र्येण क्रयणभावनायामन्वयेन आरुण्यकरणिका पिङ्गाक्षिकरणिका एकहायनीकरणिका च या भावना तत्साध्येन क्रयेण सोमं भावयेत्। गवा ते क्रीणानीति मन्त्रलिङ्गाद्या चाऽऽरुण्यविशिष्टा गौः सैव पिङ्गलाक्षियुक्ता सैव चैकहायनाविशिष्टेत्येवमभेदबोधस्तु पार्ष्ठिकः प्रत्यासत्तिन्यायान्मीमांसकैरङ्गीकृतः संगच्छत इति ज्ञेयम्। **तथा चेति**। प्रातिपदिकार्थप्रकारकबोधं प्रति विशेष्यतया तदुत्तरविभक्तिजन्योपस्थितेर्हेतुत्वावश्यकत्वे चेत्यर्थः। **अन्वयासंभवादिति**। समासे विभक्त्यभावेन राजपुरुषादिपूर्वोत्तरपदार्थयोरन्वयासंभवादित्यर्थः। **समुदायस्येति**। राजपुरुषादिसमासरूपसमुदायस्येत्यर्थः। **शक्तिरिति**। राजादिसंबन्धविशिष्टे पुरुषाद्यवर्थे वाच्यवाचकभावरूपा शक्तिरवश्यमभ्युपगन्तव्येत्यर्थः। सर्वत्र समासे विशिष्टशक्तिस्वीकारमन्तरा लक्षणया नाभीष्टार्थबोधो निर्वहतीत्याह—**किं चेति**। राजपुरुषादितत्पुरुषसमासे प्राथम्यात्पूर्वपदे लक्षणा, सा किं संबन्धिनि संबन्धे वेति विकल्प्य प्रथमपक्षं निराकरोति—**विव-**

राजपुरुष इत्यादौ: संबन्धिनि संबन्धे वा लक्षणा । नाऽऽद्यः । राज्ञः पुरुष इति विवरणविरोधात्समाससमानार्थकवाक्यस्यैव विग्रहत्वात् । अन्यथा तस्माच्छक्तिनिर्णयो न स्यात् । नान्त्यः । राजसंबन्धरूपः पुरुष इतिबोधप्रसङ्गात् । विरुद्ध-

---

**रणविरोधादिति** । सिद्धान्ते राजपुरुष इति समासस्य स्वत्वसंसर्गेण राजसंबन्धिनि पुरुषे शक्तिरिति राजनिष्ठस्वामितानिरूपितस्वतावान् पुरुष इति स्वस्वामिभावरूपभेदसंबन्धेन बोधो जायते । तादृश एव बोधो राज्ञः पुरुषः, इति वाक्यात्प्रतीयत इति राज्ञः पुरुष इति वाक्यस्य राजपुरुष इति समासविवरणत्वात् । विवरणं च तत्समानार्थकपदान्तरेण तदर्थकथनम् । विग्रहवाक्यत्वमिति यावत् । विग्रहत्वं च समाससमानार्थकस्य, समासार्थावबोधकस्य वा वाक्यस्य विग्रहत्वात् । एवं सति राजपुरुष इत्यादौ राजपदादेः संबन्धिनि लक्षणयैव राजसंबन्धवदभिन्नः पुरुष इत्यभेदेन बोध इष्यते यदि, तर्हि अमूदृशस्य बोधस्य, राजसंबन्धप्रकारकाश्रयत्वसंसर्गवानित्येवंरूपो यो विवरणवाक्यजबोधस्तद्विरुद्धत्वान्न लक्षणा युक्ता । किं तु स्वत्वसंसर्गेण राजसंबन्धिनि पुरुषे, राजपुरुष इति समासस्य शक्तिरेवाभ्युपगन्तव्येति भावः । ननु समाससमानार्थकत्वं, न समासजन्यबोधे यादृशसंबन्धेन यद्विशेष्यकत्वे सति यत्प्रकारकत्वं तादृशसंबन्धेन तद्विशेष्यकत्वे सति तत्प्रकारकबोधजनकत्वम् । तथा सति व्याकरणमधीते, पचति, इत्यादीनां वैयाकरणः पाचक इत्यादितद्धितकृदन्तविग्रहत्वानापत्तेः । किं तु समासजन्यप्रतीतिविषयार्थप्रतीतिजनकत्वं, तच्च प्रकृतेऽक्षतमेव, समासजन्यप्रतीतिविषयराजसंबन्धविषयकप्रतीतिजनकत्वाद्राज्ञः पुरुषस्येत्यत आह—**अन्यथेति** । समासजन्यप्रतीतिविषयार्थप्रतीतिमात्रजनकत्वस्य विग्रहरूपत्वे सतीत्यर्थः । समाससमानार्थकत्वाभाव इति यावत् । **तस्मादिति** । विग्रहरूपविवरणवाक्यादित्यर्थः । विवरणादेव समासशक्तिर्निर्णीयत इत्यनुभवसिद्धम् । स चानुभवो विवरणविव्रियमाणयोः समानार्थकत्वनियमे सत्येव संगच्छते । असमानार्थकस्यापि विवरणत्वस्वीकारे तु निरुक्तसमानार्थकत्वनियमभङ्गेन विवरणादभियुक्तोक्तः शक्तिनिर्णयो न स्यात् । तथा च फलार्थककरोतिना विवरणादाख्यातस्य यत्ने शक्तिरित्यादि लुप्येतेति भावः । यद्वा राज्ञः पुरुष इति विग्रहवाक्यस्य समासगतार्थबोधकतानिर्णायकत्वमनुभवसिद्धमुच्छिद्येतेति भावः । राजपदस्य संबन्धे लक्षणेति चरमकल्पं प्रत्याचष्टे—**बोधप्रसङ्गादिति** । संबन्धे लक्षणायां राजपदलक्ष्यस्य राजसं-

( समासशक्तिनिर्णयः )

विभक्तिराहित्यप्रातिपदिकार्थयोरभेदान्वयव्युत्पत्तेरित्यादि प्रपञ्चितं वैयाकरणभूषणे ।

---

बन्धस्य नामार्थत्वेनाभेदेनैव पुरुषेणान्वयः स्यात्, न तु राजसंबन्धाश्रयः पुरुष इत्येवमाश्रयतासंबन्धेनेत्यर्थः । तथा च राजसंबन्धाभिन्नः पुरुष इत्यभेदेनैव बोधः स्यान्नतु भेदसंबन्धेनेति भावः । ननु नामार्थयोरभेदबोधे समानविभक्तिकत्वं नियामकं, तच्चात्र नास्तीति कथं राजसंबन्धरूपः पुरुष इति बोधापत्तिरुच्यत इत्यत आह—**विरुद्धविभक्तीत्यादि** । सुन्दरं दधीति दधिपदोत्तरं विभक्त्यभावेन सेचनकुद्दालीत्यत्रोभयोरप्यविभक्तिकत्वेन च व्यभिचारात्समानविभक्तिकत्वस्य नामार्थयोरभेदान्वयबोधे प्रयोजकत्वासंभवेन विरुद्धविभक्तिराहित्यस्यैवाभेदबोधे प्रयोजकत्वं स्वीक्रियत इति भावः । विरुद्धविभक्तिकधातुप्रातिपदिकार्थयोः स्तोकं पचतीत्यादावभेदान्वयावारणाय प्रातिपदिकार्थयोरित्युक्तम् । ततश्चाभेदसंसर्गेण प्रातिपदिकार्थप्रकारकशाब्दबोधे जननीये विशेष्यतासंबन्धेन विरुद्धविभक्तिराहितनामजन्योपस्थितिर्हेतुरिति तादृशहेतुत्वस्य राजपुरुषादिसमासोत्तरपदार्थे पुरुषादौ सत्त्वादभेदान्वयो दुर्निवार इति तात्पर्यम् । ननु प्रातिपदिकार्थप्रकारकाभेदान्वयबोधे विरुद्धविभक्तिरहितप्रातिपदिकजन्योपस्थितिर्हेतुरिति यः कार्यकारणभाव उक्तः सोऽपि न संभवति, चैत्रस्य सुतस्य धनमित्यत्र विशेषणविशेष्यवाचकचैत्रसुतपदयोरुत्तरं षष्ठीरूपसमानविभक्तेः सत्त्वाद्विरुद्धविभक्तिराहित्याच्चैत्रसुतयोरभेदान्वयापत्त्याऽतिप्रसङ्गादिति चेन्न । विरुद्धविभक्तिरित्यस्य विरुद्धार्थकाविभक्तिर्विभिन्नार्थकाविभक्तिरिति यावत् । तथा च विभिन्नार्थकविभक्तिराहित्यमभेदान्वयबोधे तन्त्रं नियामकमिति भावः चैत्रस्य सुतस्य धनमित्यत्र तु विभक्त्योर्न समानार्थकत्वं, किंतु विभिन्नार्थकत्वमेव, एकत्र जन्यत्वस्य परत्र स्वत्वस्य तदर्थत्वादिति न चैत्रसुतयोरभेदान्वयप्रसङ्ग इति भावः । राज्ञः पुरुषस्य धनमित्यत्र षष्ठीद्वयस्य स्वत्वार्थकत्वेऽपि तयोः स्वत्वयोर्निरूपकभेदेन भिन्नत्वान्न दोष इति बोध्यम् । यद्वा विरुद्धविभक्तीत्यस्य यथाश्रुत एवार्थः, राज्ञ पुरुषस्य धनमित्यादावभेदान्वयवारणाय विभक्त्यर्थमनन्तर्भाव्य प्रातिपदिकार्थयोरन्वयबोधे निरुक्तकार्यकारणभावः स्वीकार्यः, यथा ऋद्धस्य राज्ञः, इत्यत्र ऋद्धस्येति षष्ठ्यर्थमनन्तर्भाव्य ऋद्धराजपदार्थयोरन्वयः, यथा वा राजपुरुषादिसमासे विभक्त्यर्थमनन्तर्भाव्यैव प्रातिपदिकार्थयोरन्वयः क्रियते तत्रैव पूर्वोक्तकार्यकारणभावरूपव्युत्पत्तिः स्वीकार्येत्याशयेनाऽऽह—**प्रपञ्चितमित्यादि** । **अत एवेति** । समासे पृथगुप-

अत एव " वषट्कर्तुः प्रथमभक्षः " इत्यत्र न भक्षमुद्दिश्य प्राथम्यविधानं युक्त मेकप्रसरताभङ्गापत्तेरिति तृतीये—" ऱ्यङ्गैः स्विष्टकृतं यजति " इत्यत्राङ्गानुवा

---

स्थित्यभावप्रयोजकविशिष्टशक्तिस्वीकारादेवेत्यर्थः। विशेषणविशेष्यभावापन्नो यो राजनिष्ठप्रकारतानिरूपितविशेष्यतावान् पुरुष इत्येवंरूपो विशिष्टार्थस्तत्र शक्तिर्विशिष्टशक्तिरित्युच्यत इति भावः। **वषट्कर्तुरिति** । वषट्कर्तुः प्रथमभक्षः, इति वाक्येन वषट्कर्तारं—होतारमुद्दिश्य प्रथमत्वविशिष्टभक्षणं विधीयते । ननु ऋत्विजो हविःशेषान् भक्षयन्तीति वाक्यप्राप्तभक्षणमनद्य केवलं प्राथम्यमेव विधीयतां लाघवाद्विशिष्टविधौ गौरव दित्यत आह—**भक्षमुद्दिश्येत्यादि, न युक्तमित्यन्तम्**। अयुक्तत्वे हेतुमाह—**एकप्रसरतेत्यादि**। एकस्यां [ वृत्तौ ] प्रसरः प्रवेशो ययोरर्थयोस्तावेकप्रसरौ, तयोर्भाव एकप्रसरता, नाम एकवृत्तिप्रविष्टता, तस्या भङ्ग आपद्येतेत्यर्थः । तथा सति सामर्थ्यविघातात्प्रथमभक्ष इति समासो न स्यात् । समासघटकपदानि हि संभूय विशिष्टमेकमर्थमेकया वृत्त्या प्रतिपादयन्तीति तस्यैकस्यार्थस्य विवक्षानुरोधादुद्देश्यत्वं विधेयत्वं वा ग्राह्यं भवति, यथा धवखदिरौ सुन्दरौ, इमौ वृक्षौ धवखदिराविति । न तु तदेकदेशमात्रस्य कस्यचिदर्थस्योद्देश्यत्वं कस्यचिच्च विधेयत्वं ग्रहीतुं युक्तम् । यत्रोद्देश्यविधेययोः पदाभ्यां पृथगुपस्थितिस्तत्र तथाऽन्वयः । न च समासे एकार्थीभाववशात्पदात्पृथगुपस्थितिः, अपृथगुपस्थितौ च नोद्देश्यविधेयभावेनान्वय इति लघुमञ्जूषाकारैरुक्तत्वात् । तथा च यद्यत्र प्रथमभक्ष इति समासान्तर्गतभक्षपदार्थमात्रमुद्दिश्य प्राथम्यं विधेयं स्यात्तर्हि तद्वाचकयोर्द्वयोः पदयोरेकस्यां वृत्तौ प्रवेश एव न स्यात् । वषटकर्तुः प्रथमभक्ष इति वाक्ये तु समासः कृत एवेति तदनुरोधेन विशिष्टार्थस्यैवात्र शब्दमर्यादया विधेयत्वं विवक्षितमिति प्रतीयते इति बोध्यम् । अयमेव ह्येकप्रसरताभङ्गो नाम यद्विशिष्टैकोपस्थितिजनकत्वरूपसामर्थ्यभङ्गः । उद्देश्यविधेयभावेनान्वये पृथगुपस्थितेः प्रयोजकत्वेन तथाऽन्वये तद्भङ्गादिति मीमांसायामुक्तमित्याह—**तृतीय इति** । तृतीयाध्यायस्य पञ्चमे पादे दशमाधिकरणे ' वषट्काराच्च भक्षयेत् ' ( जै. सू. ३२ ) इति सूत्र इत्यर्थः । एकप्रसरताभङ्गभयादेव चित्रया यजेतेत्यत्र चित्रयेत्येकेन पदेन स्त्रीकारकमुद्दिश्य चित्रत्वस्य विधानं न युज्यत इत्युक्तम् । तथा हि—वृत्तिर्नाम पदपदार्थयोः संबन्धः शक्तिलक्षणान्यतररूपः । प्रकृते च चित्रात्वस्त्रीत्वरूपधर्मद्वयविशिष्टेऽर्थे चित्राश-

देन त्रित्वविधानं न युक्तम्——एकप्रसरताभङ्गापत्तेरिति दशमे च निरूपितं संग

च्छस्य शक्तिः । तादृशशक्तिरूपायामेकस्यां वृत्तौ चित्रत्वस्त्रीत्वयोः प्रवेशः । तस्यात्र भङ्गः स्याद्यदि स्त्रीकारकानुवादेन चित्रत्वमत्र विहितं स्यात् । उद्देश्यविधेययोर्हि पृथक् पृथक् शक्त्योपस्थितिरावश्यकी । अत्र चैकस्यां शक्तौ स्त्रीत्वचित्रत्वयोः प्रवेशान्न तयोरुद्देश्यविधेयभावः संभवतीति भावः । त्र्यङ्गैरिति । पशौ श्रुतम्–त्र्यङ्गैः स्विष्टकृतं यजतीति । तत्र हृदयस्याग्रेऽवद्यतीत्यादिनैकादशाङ्गानां होमस्य विधानेन प्रकृतिवद्विकृतिरिति न्यायेनैकादशभिरङ्गैर्होमे प्राप्ते—इदं वाक्यमारभ्यते । तत्राङ्गानुवादेन त्रित्वं विधीयते लाघवात्, न तु त्रित्वविशिष्टाङ्गान्तरमिति विशिष्टविधौ गौरवादिति पूर्वपक्षयित्वा, यद्यत्र त्र्यङ्गैरिति वृत्त्यन्तर्गताङ्गपदार्थमुद्दिश्य त्रित्वं विधेयं स्यात्तर्हि तद्वाचकयोर्द्वयोः पदयोरेकस्यां वृत्तौ प्रवेश एव न स्यात्, अर्थादेकप्रसरताभङ्गः स्यादित्यर्थः। त्र्यङ्गैरिति तु समासः कृत एवेति तदनुसारेणात्र त्रित्वविशिष्टाङ्गान्तरस्यैव शब्दमर्यादया विधेयत्वमवगम्यते । तत्र विशेषणविशिष्टार्थस्यान्यतोऽप्राप्तौ सत्यां विशिष्टविधावेव पर्यवसानं भवति । तदेकदेशस्य कस्यचिदन्यतः प्राप्तत्वे सति प्राप्ताप्राप्तविवेकन्यायेनाप्राप्तांशे विशिष्टविधेः पर्यवसानं भवतीत्यन्यदेतत् । यथा राजपुरुषादिसमासे आकाङ्क्षामूलकसमुदायशक्तिवशात्पदार्थबोध एव जायमानो विशेषणविशेष्यभावापन्नविशिष्टयोर्भवति तत्र विशिष्टशक्तिग्रह इत्थम्—राजपुरुषादिसमासपदं राजसंबन्धवत्पुरुषादौ शक्तमिति । तत्र सा विशिष्टशक्तिः प्राप्ताप्राप्तविवेकन्यायेन संबन्धांशे विशेषणाद्यंशे च पर्यवस्यति । राजादेः क्लृप्तावयवशक्त्यैवोपस्थितिसंभवादित्युक्तं मञ्जूषायां तद्वदिति भावः । शब्दमर्यादया तु विशिष्टविधिरेव तादृशस्थले स्वीकर्तव्यः । तथा च प्रकृते त्रित्वविशिष्टाङ्गान्तरविधिरूपविशिष्टविधिरङ्गीकृतः । अङ्गान्तराणि च कल्पसूत्रकारेण दर्शितानि—दक्षिणोंऽसः, सव्या श्रोणिः, गुदं तृतीयम्, इति सौविष्टकृतानीति । तस्मादानिज्याशेषैस्त्रिभिरङ्गैः स्विष्टकृद्धोतव्य इत्युक्तं तत्स्थलं दर्शयति—दशमे चेति । दशमाध्याये सप्तमपादे तृतीयेऽधिकरणे 'इज्याशेषात्...त्र्यङ्गैर्वा० ( जै० सू० १० । ११ ) इत्यादिसूत्रे सिद्धान्तितमित्यर्थः । एतच्च विशिष्टशक्तिपक्षे घटपदाद् घटघटत्वयोरिव विशिष्टशक्त्यैव प्राथम्यविशिष्टभक्षस्य त्रित्वविशिष्टाङ्गानां चोपस्थित्या वाक्यार्थरूपोद्देश्यविधेयभावेनान्वयासंभवात्संगच्छते । समुदायशक्तेरनङ्गीकारे तु प्रथमो भक्षः, त्रिभिर-

च्छते । संगच्छते चारुणाधिकरणारम्भः । अन्यथा "अरुणयैकहायन्या पिङ्गाक्ष्या सोमं क्रीणाति" इत्यत्रारुणपदवदितरयोरप्येकाब्दत्वादिगुणमात्रवाचकतयाऽमूर्तत्वात्क्रीणातौ करणत्वासंभवस्य तुल्यत्वादारुण्यस्यैव वाक्याद्भेदशङ्कया असं-

ङ्गैः, इत्यादिवाक्यवत्समासेऽपि उद्देश्यविधेयभावेनान्वयः स्यादिति मीमांसाधिकरणविरोधः स्पष्ट एवेति तात्पर्यार्थः। समासे विशिष्टशक्तिस्वीकारादेवारुणाधिकरणारम्भ उपपद्यत इत्याह—**संगच्छते चारुणेति अन्यथेति** । समासे विशिष्टशक्त्यनङ्गीकारे पूर्वपक्षस्यैवासंभवेनारुणाधिकरणासंभवापत्तिरिति भावः । तथा हि—ज्योतिष्टोमे क्रयसंनिधौ श्रूयते—'अरुणया पिङ्गाक्ष्यैकहायन्या सोमं क्रीणाति' इति । अत्रारुणयेति पदं क्रयेण संबन्ध्यत उत वाक्यभेदेन प्राकरणिकग्रहचमसाद्यखिलद्रव्येण संबन्ध्यत इति संशये—अरुणापदं रूपविशेषे गुणे शक्तं, रूपविशेषे च क्रयरूपक्रियाकरणत्वं बाधितं, रूपस्यामूर्तत्वात । अतो वाक्यात्पृथक्कृत्य तृतीयाश्रुत्या प्राकरणिकानि द्रव्याण्यनूद्याऽऽरुण्यगुणो विधीयते—आरुण्येन गुणेन ज्योतिष्टोमापूर्वसाधनद्रव्यं भावयेदिति पूर्वपक्षयित्वा योग्यताज्ञानस्य न शाब्दबोधे हेतुत्वं, किं त्वयोग्यतानिश्चयस्य बोधप्रतिबन्धकत्वमात्रं, योग्यता च परस्परान्वयप्रयोजकधर्मवत्त्वं, पयसा सिञ्चतीत्यत्र सेकान्वयप्रयोजकधर्मस्य जलत्वस्य पयसि, एवं पयःकरणकान्वयप्रयोजकधर्मस्य सेकत्वस्य सेकक्रियायां सत्त्वाल्लक्षणसमन्वयः । वह्निना सिञ्चतीत्यत्र तु वह्नौ सेकान्वयप्रयोजकधर्मस्य द्रवद्रव्यत्वस्यासत्त्वादयोग्यतानिश्चयान्न शाब्दबोधः । प्रकृते च कारकाणां क्रिययैवान्वय इति नियमादयोग्यतानिश्चयाभावसत्त्वेनाऽऽरुण्यस्यापि क्रयणक्रियायामन्वय उपपद्यते, पार्ष्ठिकस्तु द्रव्येणान्वय इति न वाक्यविच्छेदशङ्केत्यादि सिद्धान्तितम् । अत्र पूर्वपक्षस्य नोक्तिः संभवति । समासे विशिष्टशक्त्यस्वीकारे पिङ्गाक्ष्येकहायनीशब्दयोरपि पिङ्गत्वाक्षित्वैकत्वहायनत्वादेर्वाच्यतया तेषामप्यमूर्तत्वात्क्रयणक्रियाकरणत्वासंभवेन क्रीणातिकरणस्यैतद्वाक्यादलाभादारुण्यस्य वाक्यभेदशङ्काया एवासंभवात् । त्रिष्वपि लक्षितद्रव्यविध्युपपत्तौ वाक्यभेदशङ्काया निर्बीजत्वाच्च बहुव्रीह्योररुणशब्दस्य चेति त्रयाणामपि लाक्षणिकद्रव्याभिधायकताया अविशिष्टत्वेन बहुव्रीह्योरेव द्रव्यविधायकत्वं, नारुणपदस्येत्यत्र विनिगमकासंभवात् । वाक्यभेदेन प्रकरणे निवेशस्याप्यसंभावितत्वाच्च । तथा हि—प्रकरणेऽप्यमूर्तत्वात्क्रियाभिः, कारकत्वाच्च द्रव्यैरपि संबन्धोऽसंभवी । तस्मात्पूर्वपक्षासंभवादरुणाधिकर-

( समासशक्तिनिर्णयः )

नवादिति प्रपञ्चितं भूषणे । तस्मात्समासशक्तिपक्षो **जैमिनीयैरवश्याभ्युपेय इत्या-स्तां विस्तरः** ॥ ६ ॥ ( ३३ )

राजपुरुष इत्यादौ राजा चासौ पुरुषश्चेत्येव विग्रहः । चित्रगुरित्यादौ च चित्राणां गवामयमित्येव, समानार्थत्वानुरोधात् । यद्यपि प्रथमान्तानामेव बहुव्रीहिरिति "शेषो बहुव्रीहिः" [ पा० सू० २-२-२३ ] इति सूत्राल्लभ्यत

---

णोच्छेदापत्तेः समासे विशिष्टशक्तिरावश्यकीत्याशयेनाऽऽह—**प्रपञ्चितं भूषण इति** । वैयाकरणभूषणे विस्तरशः संगृहीतमित्यर्थः । **आस्तां विस्तर इति** । जैमिनीयानां जैमिनीयसूत्रविरोधोऽत्यन्तमनुचित इति तैः समासे विशिष्टशक्तिशब्दोऽवश्यमभ्युपेय इत्यलं विस्तरेणेत्यर्थः ॥ ३४ ॥

नन्वेवं मीमांसकादीन् प्रति समुदायशक्तिं व्यवस्थाप्य आख्यातं तद्धितकृतोरित्याद्युक्तं तत्पूर्वग्रन्थासंगतमित्याशङ्कानिरासार्थं तत्संगतिं प्रदर्शयन्नाह—राजपुरुष इत्यादिना । **राजा चासाविति** । अत्र राजपदं विग्रहवाक्यान्तर्गतमपि राजसंबन्धिपरमेव, अत एव विग्रहस्य समाससमानार्थत्वमक्षुण्णमिति भावः । **इत्येव विग्रह इति** । एवकारेण प्रसिद्धस्य राज्ञः पुरुष इति विग्रहस्य व्यावृत्तिः । अथ षष्ठ्यन्तेन विग्रहेऽपि राजपदं राजसंबन्धिनि लाक्षणिकं, षष्ठी त्वभेदार्थिकेत्यङ्गीकारे निर्वहत्येव समाससमानार्थकत्वमिति चेन्न । राजसंबन्धिनिरूपितो योऽभेद इति षष्ठ्यर्थाभेदस्य विग्रहे प्राधान्येन भानात्समासे तु तथा भानाभावात् । षष्ठ्या अभेदार्थकत्वे प्रमाणाभावाच्च । साधुत्वार्थिका षष्ठीति न समाससमानार्थत्वक्षतिरिति चेत्तदपि न । संबन्ध एव षष्ठ्या विधानेन साधुत्वार्थकतत्प्रयोगानुपपत्तेः । **गवामयमित्येवेति** । एवकारेण चित्रा गावो यस्येति प्रसिद्धस्य विग्रहस्य निरासः । चित्राणां गवामयमिति विग्रहे हेतुमाह—**समानार्थत्वेति** । चित्रगुरिति समासाच्चित्राभिन्नगोस्वामीति चित्रगोप्रकारकोऽन्यपदार्थविशेष्यको बोधो जायते, तादृशविशेषणविशेष्यक एव बोधो निरुक्तविग्रहाज्जायत इति समासेनातिसमानार्थत्वेन चित्राणां गवामयमिति विग्रहस्यैवोचितत्वात् । विग्रहविगृह्यमाणयोः समानार्थत्वनियमात् । अन्यथा विग्रहाच्छक्तिनिर्णयो न स्यादिति भावः । ननु अन्यपदार्थे वर्तमानस्यानेकप्रथमान्तस्य बहुव्रीहिसंज्ञाविधानात्तदभावपक्षे प्रथमान्तपदघटितवाक्यावस्थानस्यैवार्थायातत्वात्तादृशवाक्यस्यैव विग्रहत्वमुचितं, न षष्ठ्यन्तघटितस्येत्याशङ्क्य समाधत्ते—**यद्यपीत्यादिना** । **सूत्राल्लभ्यत**

इति प्रथमान्तं पक्षे वाक्यं चित्रा गावो यस्येत्येवं संभवत्येव, " षष्ठी " [ पा० सू० २—२—९ ] इति समासविधानाद्राज्ञः पुरुष इति पक्षे वाक्यं तथाऽपि तस्य न विग्रहत्वं भिन्नार्थत्वात् । किं तूक्तस्यैवेति मीमांसकाः । तान्प्रसङ्गान्निरस्यति—

**आख्यातं तद्धितकृतोर्यत्किंचिदुपदर्शकम् ॥**
**गुणप्रधानभावादौ तत्र दृष्टो विपर्ययः ॥ ७ ॥ ( ३४ )**

**तद्धितकृतो**र्यत्किंचिदर्थबोधकं विवरण**माख्यातं तत्र विपर्ययो दृष्टः ।** तथा हि—आक्षिकः कुम्भकार इत्यत्राक्षकरणकव्यापाराश्रयः, कुम्भानुकूलव्यापा-

---

इति । यस्य त्रिकस्य विशिष्य समासो नोक्तः स शेष इति ' त्रिकाः शेषः ' इति भाष्यस्यार्थः, तादृशं च सु—औ—जस् , इति त्रिकमेवेति भावः । प्रथमान्तं प्रथमान्तपदघटितम् । **पक्षे इति** । समासस्य वैकल्पिकत्वेन तदभावपक्ष इत्यर्थः । वाक्यं—चित्रा गावो यस्येति वाक्यमित्यर्थः । षष्ठीति समासाभावे राज्ञः पुरुष इति वाक्यं च यद्यपि दुर्निवारं तथापि तादृशवाक्यस्य विग्रहत्वं सुतरामसंभवीत्याह—**भिन्नार्थत्वादिति** । समासार्थापेक्षया तादृशवाक्यीयार्थस्य भिन्नत्वादित्यर्थः । राजपुरुष इति समासाद्राजसंबन्धिप्रकारकस्याभेदसंसर्गस्य, राज्ञः पुरुष इति वाक्याद्राजसंबन्धप्रकारकस्याऽऽश्रयत्वसंसर्गकबोधस्य, चित्रगुरिति समासाच्चित्रगोस्वामीत्याकारकस्य वर्तिपदार्थप्रकारकान्यपदार्थविशेष्यकस्य, चित्रा गावो यस्येति वाक्याद्यत्स्वामिकाश्चित्रा गाव इत्याकारकस्यान्यपदार्थप्रकारकस्य वर्तिपदार्थविशेष्यकस्य च बोधस्य निष्पादाद्वाक्यसमासयोर्मिथो भिन्नार्थत्वान्न राज्ञः पुरुष इत्यस्य, चित्रा गावो यस्येत्यस्य च विग्रहत्वमिति भावः । एवं प्राप्तोदक इत्यादावपि प्राप्तमुदकं यमित्यादेर्न विग्रहत्वम् । **किं तूक्तस्यैवेति** । राजा चासौ पुरुषश्च, चित्राणां गवामयं, प्राप्तस्योदकस्यायमित्यादेरेव विग्रहत्वं समाससमानार्थत्वादिति मीमांसकाः प्राहुस्तान् प्रसङ्गतो निराकरोति—**आख्यातं तद्धितकृतोरिति** । तेन दीव्यतीत्यादिविहितठगादेस्ताद्धितस्य, कर्मण्यणितिविहिताणादेः कृतश्च विवरणभूतमाख्यातं—तिङन्तं यत्किंचिदर्थबोधकं भवति । तद्धितान्ते कृदन्ते यादृशो गुणप्रधानभावस्तादृशस्यैव गुणप्रधानभावस्य बोधकं न भवति । किं तु कृत्तद्धितान्त—तिङन्तयोर्विशेष्य विशेषणभावस्य व्यत्यासो दृश्यत इत्यर्थः । विपर्ययमेव दर्शयति—**तथा हीत्यादिना** । **आक्षिक इति** । तेन दीव्यति॰

राश्रय इति बोधः । अक्षैर्दीव्यति कुम्भं करोतीत्यत्राक्षकरणिका देवनानुकूला भावना, कुम्भोत्पत्त्यनुकूला भावनेति बोधः । कृत्प्रत्यये कारकाणामाख्याते भावनायाः प्राधान्यं वदतो मीमांसकस्यापीति गुणप्रधानभावांशव्यत्यासो न विवरणत्वबाधक इति नात्र पाक्षिकस्य चित्रा गावो यस्येत्यादेर्विग्रहत्वे बाधकमस्तीति भावः ॥ ७ ॥ ३४ ॥

---

( पा. सू. ४ । ४ । २ ) इति सूत्रेणाक्षशब्दाद्देवनकर्तरि ठक्प्रत्ययः । **कुम्भकार इति** । कर्मण्यण् ( पा. सू. ३ । २ । १ ) कर्मण्युपपदे कृधातोः कर्तर्यण् प्रत्ययः । आक्षिक इत्यत्राक्षकरणकव्यापाराश्रय इति बोधः । तद्विग्रहभूतेऽक्षैर्दीव्यतीत्यत्राक्षकरणिका देवनानुकूला भावनेति बोधः । कुम्भकार इत्यत्र कुम्भोत्पत्त्यनुकूलव्यापाराश्रय इति बोधः । तद्विग्रहभूते कुम्भं करोतीत्यत्र कुम्भोत्पत्त्यनुकूला भावनेति च बोधः । विवरणविव्रियमाणयोर्भिन्नार्थत्वे कारणमाह— **कृत्प्रत्यय इति** । तद्वाच्यानां कारकाणां—कर्त्रादीनां, प्राधान्यं—मुख्यविशेष्यत्वं प्रकृतिप्रत्ययार्थयोरिति नियमादिति भावः । **आख्याते चेति** । तिङन्ते च भावनायाः प्राधान्यं—मुख्यविशेष्यत्वं, भावप्रधानमाख्यातमिति यास्कवचनादिति भावः । **मीमांसकस्यापीति** । अस्य विशेष्यविशेषणभावव्यत्यासः संमत इति शेषः । **न विवरणत्वबाधक इति** । तद्धितकृतोरर्थप्रदर्शकवाक्ये विशेष्यविशेषणांशस्य वैपरीत्येऽपि विवरणत्वाङ्गीकारवच्चित्रा गावो यस्येति वाक्येऽपि विवरणत्वसंभवादिति भावः । तथा च वृत्तिजन्यबोधसमानविषयकबोधजनकत्वमेव विग्रहत्वं, न तु वृत्तिजन्यबोधसमानप्रकारकबोधजनकत्वमपीति भावः । एवं च चित्रा गावो यस्येत्यादेर्विग्रहत्वे न किंचित्प्रतिबन्धकम् । किं च चित्राणां गवामयमिति विग्रहस्य, मत्वर्थे बहुव्रीहिः, कर्तृकर्मवचनेनाप्रथमायाः, अप्रथमाविभक्त्यर्थे बहुव्रीहिः, शेषो बहुव्रीहिः, त्रिकतः शेषः, इत्यादिमुनिवचनविरुद्धत्वम् । न चालौकिकवाक्ये प्रथमान्तानामेव प्रवेशान्न पूर्वोक्तमुनिवचनविरोध इति वाच्यम् । अलौकिके यद्विभक्त्यन्तानां प्रवेशस्तद्विभक्त्यन्तानामेव परिनिष्ठितानां लौकिकेऽर्थबोधनाय सति संभवे प्रवेशस्यौचित्यात्—न तु षष्ठ्यन्तानां, उपस्थितं परित्यज्यानुपस्थितपदघटितलौकिकविग्रहवाक्यकल्पनाया अन्याय्यत्वात् । वृत्त्यर्थप्रदर्शनार्थे कल्पिते चित्रा गावो यस्येत्यादावपि विशेष्यविशेषणभावव्यत्यासाच्चित्र-

( समासशक्तिनिर्णयः )

नन्वस्तूक्तरीत्या सर्वत्र समासे शक्तिरस्तु च तथा विग्रहस्तथाऽपि षष्ठीतत्पुरुषकर्मधारययोः शक्तिमत्त्वाविशेषान्निषादस्थपत्यधिकरणसिद्धान्तसिद्धिर्न स्यादित्यत आह—

**पर्यवस्यच्छाब्दबोधाविदूरप्राक्क्षणस्थितेः ॥**
**शक्तिग्रहेऽन्तरङ्गत्वबहिरङ्गत्वचिन्तनम् ॥ ८ ॥ ( ३५ )**

( इति भट्टोजिदीक्षितविरचितकारिकासु समासशक्तिनिरूपणम् ) ।

पर्यवस्यंश्चासौ शाब्दबोधश्च तस्मादविदूरश्चासौ प्राक्क्षणश्च तदानींतनलाघवमा-

---

गोसंबन्धीत्येव बोधः । व्यत्यासबोधनायैव चित्रा गावो यस्य स चित्रगुरिति प्रदर्श्यते वृद्धैः । सर्वनामसंज्ञासूत्रे भाष्येऽपि सर्व आदिर्येषां तानीति विग्रहो दर्शितः । सर्वनाम्नामुत्सर्गतः प्रधानपरामर्शित्वात्स चित्रगुरित्यनेन स्वामिप्राधान्यं प्रदर्श्यत इति कैयटः । अत एव मासजात इत्यादेर्मासो जातस्य यस्य स इति विग्रहं प्रदर्शयन्ति । चित्रा गावो यस्य स चित्रगुरिति वाक्ये चित्रगोसंबन्धी यो भवति स चित्रगुपदबोध्य इति बोधः । पचतीति पाचक इत्यादेः पाचकपदं पचतीत्येतत्समानार्थकमिति बोधः । पचति पाकं करोतीत्यतोऽपि पचतिपदमेककर्तृकपाकक्रियाबोधकमिति बोधः, एवमन्यत्रापि । एवं च वृत्तिविग्रहयोः समानार्थता स्पष्टैवेति मञ्जूषाकृतः प्राहुः ॥ ३५ ॥

निषादस्थपत्यधिकरणसिद्धान्ताविघातार्थं भूमिकामारचयति—नन्वस्त्वित्यादिना सिद्धिर्न स्यादित्यन्तेन । **शक्तिरिति** । सर्वत्र समासे विशिष्टशक्तिरित्यर्थः । **तथा विग्रह इति** । चित्रा गावो यस्येत्याकारकश्च विग्रहोऽस्त्वित्यर्थः । **शक्तिमत्त्वाविशेषादिति** । शक्तिमत्त्वस्य विशिष्टशक्तिमत्त्वस्यैकार्थीभावरूपस्याविशेषात्तुल्यत्वात्षष्ठीतत्पुरुषकर्मधारययोस्तुल्यत्वापत्तेरित्यर्थः । **अधिकरणसिद्धान्तेति** । षष्ठीतत्पुरुषापेक्षया कर्मधारयस्य लघुत्वान्निषादस्थपतिशब्दे कर्मधारय इति तत्र सिद्धान्तितं, तन्न संगच्छेतेत्यर्थः । इत्याशङ्कयाऽऽह—**पर्यवस्यच्छाब्दबोध इति** । **पर्यवस्यंश्चासौ शाब्दबोधश्चेति** । पर्यवस्यन् शब्दशक्तिमर्यादया सिध्यन् यः शाब्दबोधः, समासाद्विशिष्टशक्त्या जायमान शाब्दबोध इत्यर्थः । **तस्मादविदूरश्चासाविति** । समासादविदूरः संनिहितो यः प्राक्क्षणः, समाससंज्ञविधानादव्यवहितपूर्ववर्तिअलौकिकप्रक्रियावाक्यप्रयोगाधिकरणभूतः क्षण इत्यर्थः । तादृशक्षणाधिकरणको योऽलौकिकप्रक्रियावाक्यप्रयोगस्तत्रत्यां स्थितिमा-

( समासशक्तिनिर्णय. )

दाधाधिकरणाविरोध इत्यर्थः । अयं भावः—निषादस्थपतिपदं समासशक्तिपक्षे निषादरूपे, निषादानां च स्थपतौ, निषादस्वामिके पुरुषान्तरे चेत्येवं सर्वत्र शक्तत्वान्नानार्थकम् । तथा च " नानार्थे तात्पर्याद्विशेषावगतिः " इति न्यायेन

---

दाय सिध्यन्नन्तरङ्गबहिरङ्गभावः समासेऽपि सुवच इत्यर्थः । तथा चालौकिकप्रक्रियावाक्यार्थनिष्ठान्तरङ्गबहिरङ्गभावचिन्तनहेतुकलाघवानुरोधेन निषादस्थपत्यधिकरणविरोधो न संभवतीति भावः । एतदेव विशदयन्नाह—**अयं भाव इत्यादि । निषादस्थपतिपदमिति** । एतया निषादस्थपतिं याजयेदिति श्रुतिनेमित्यर्थः । **समासशक्तिपक्ष इति** । निषादस्थपतिरूपसमासस्यैकार्थीभावरूपे विशिष्टार्थे शक्तिरिति सिद्धान्तपक्ष इत्यर्थः । **निषादरूप इति** । निषादाभिन्ने स्थपतौ, इत्यर्थककर्मधारय इत्यर्थः । **निषादानां चेति** । निषादसंबन्धिस्थपताविति षष्ठीतत्पुरुष इत्यर्थः । **निषादस्वामिक इति** । निषादः स्थपतिः स्वामी यस्येति पुरुषान्तरान्यपदार्थके बहुव्रीहावित्यर्थः । स्थपतिशब्दः स्वामिपर्याय इति भावः । एवं च निषादस्थपतिसमासो निरुक्तेषु त्रिष्वप्यर्थेषु शक्तत्वान्नानार्थकः, सति तात्पर्ये निषादसंबन्धिनः, निषादस्वामिकस्यापि च बोधोत्पत्तेरिष्टत्वात्तत्रापि शक्तिरावश्यकीति भावः । **नानार्थे इति** । शक्त्यादिवृत्त्याऽनेकार्थोपस्थितौ सत्यामित्यर्थः । **तात्पर्यादिति** । नानार्थवाचके हर्यादौ तात्पर्याद् वक्तृतात्पर्यानुरोधाद् विशेषस्य विवक्षितार्थविशेषस्यावगतिर्निश्चय इति तदर्थः । न्यायेनेत्यस्य क्व तात्पर्यमिति संशये प्राप्ते सतीति शेषः । निषादस्थपतिशब्दे स्वघटकपदघटितवाक्यदृष्टार्थमात्रविषयकबोधजनकतत्पुरुषापेक्षया, स्वघटकपदघटितवाक्यदृष्टार्थातिरिक्तार्थविषयकबोधजनकत्वेन बहुव्रीहेर्बहिरङ्गत्वम् । एवं निषादस्थपतिरिति षष्ठीतत्पुरुषः, तद्घटके ये द्वे पदे, तादृशपदद्वयघटितं यद्वाक्यं—निषादानां स्थपतिरित्याकारकं, तत्र दृष्टो योऽर्थः—निषादसंबन्धिस्थपतिरित्येवंरूपः, तावदर्थविषयकबोधजनकत्वात्तत्पुरुषस्य बहुव्रीह्यपेक्षयाऽन्तरङ्गत्वम् । बहुव्रीहिस्तु स्वघटकपदघटितं यद्वाक्यं चित्रा गाव इति, तत्र दृष्टो योऽर्थः—चित्राभिन्ना गावः, तदपेक्षयाऽतिरिक्तः स्वामिरूपो योऽन्यपदार्थः, तावदर्थबोधजनकत्वेन बहुव्रीहेस्तत्पुरुषापेक्षया बहिरङ्गत्वम् । वृत्तिघटकीभूतपदार्थातिरिक्तपदार्थबोधजनकत्वाभावेन बहुव्रीह्यपेक्षया तत्पुरुषे लाघवम् । बहुव्रीहौ तु वृत्तिघटकीभूतपदार्थातिरिक्तपदार्थबोधजनकत्वेन तत्पुरुषापेक्षया गौरवमिति भावः । एवमेव षष्ठीतत्पु-

तत्कल्पनायां पदद्वये पूर्वोपस्थितार्थ एवोपस्थित्यादिलाघवात्तत्कल्प्यत इति। परेषामपि सति तात्पर्ये यष्टीः प्रवेशयेतिवल्लक्षणाया दुर्वारत्वात्तात्पर्यमेव कल्प्यकोटाववशिष्यत इति दिक् ॥ ८ ॥ ( ३५ )

इति कौण्डभट्टविरचिते वैयाकरणभूषणसारे समासशक्ति-
निरूपणं समाप्तम् ।

---

रुषापेक्षया कर्मधारयस्य लघुत्वं बोध्यम्। वृत्तिघटकीभूतपदार्थयोरभेदेनान्वयादेकार्थविषयकबोधजनकत्वेन तत्पुरुषापेक्षया कर्मधारये लाघवं, षष्ठीतत्पुरुषे तु वृत्तिघटकीभूतपदार्थयोर्भेदेनान्वयात्पदार्थद्वयविषयकबोधजनकत्वेन कर्मधारयापेक्षया गौरवम्, इति भावः। तत्कल्पनायामिति। निषादस्थपतिशब्दे तात्पर्यकल्पनायां प्राप्तायामिति शेषः। पूर्वोपस्थितार्थ एवेति। संभवति सामानाधिकरण्ये वैयधिकरण्यस्यान्याय्यत्वमिति न्यायेन निषादसंबन्धिस्थपत्यपेक्षया निषादरूपे स्थपतावेवोपस्थितिप्रयुक्तलाघवानुरोधेन तत्तात्पर्यं कल्प्यते निश्चीयते। अभेदान्वयेनैकार्थबोधजनकत्वरूपसामानाधिकरण्ये संभवति सति, भेदसंबन्धेनान्वयबोधजनकत्वरूपवैयधिकरण्यस्य न्यायापेतत्वं, पदद्वयेनाभेदान्वयादेकस्यैव पदार्थस्य बोधनेन कर्मधारये लाघवात्, तत्पुरुषे तु भेदेनान्वयात्पदद्वयेन पार्थक्येनार्थद्वयस्य बोधनेन गौरवादिति संकलितोऽर्थः। ननु मीमांसकमते समासे शक्त्यभावात्कथं निषादस्थपतिपदं नानार्थकमत आह- परेषामपीति। व्यपेक्षापक्षवादिनां नैयायिकादीनामपीत्यर्थः। सति तात्पर्ये इति। षष्ठीतत्पुरुषाद्यर्थे तात्पर्ये सतीत्यर्थः। यष्टीः प्रवेशयेतिवदिति। तत्र यथा यष्टिप्रवेशरूपमुख्यार्थान्वयानुपपत्त्यभावेऽपि तात्पर्यानुपपत्त्या यष्टिधरे लक्षणा क्रियते एवं प्रकृते निषादस्थपतिशब्देऽप्यन्वयानुपपत्त्यभावेऽपि तात्पर्यानुपपत्त्या षष्ठीतत्पुरुषाद्यर्थे लक्षणा दुर्वारेत्यर्थः। ततश्चानेकार्थकत्वेऽपि यादृशार्थस्योपस्थितौ लाघवं भवति तादृशलाघवानुसारेण कर्मधारयार्थ एव तात्पर्यं निश्चीयते इति तात्पर्यम् ॥ ३६ ॥

इति श्रीवैयाकरणभूषणसारव्याख्यायां शांकर्यां समासशक्तिनिर्णयः।

रङ्गभट्टतनूजेन शंकरेण विनिर्मिते ।
सारीयेऽभूद्विवरणे समासे शक्तिनिर्णयः ॥ ५ ॥

## वैयाकरणभूषणसारः ।
### ( तत्र द्वितीयो भागः )

### अथ शक्तिनिर्णयः ।

शक्तिप्रसङ्गात्तस्याः स्वरूपमाह——

इन्द्रियाणां स्वविषयेष्वनादिर्योग्यता यथा ।
अनादिरर्थैः शब्दानां संबन्धो योग्यता तथा ॥ १ ॥ (३८)

इन्द्रियाणां चक्षुरादीनां स्वविषयेषु चाक्षुषेषु घटादिषु यथाऽनादि योग्यता तदीयचाक्षुषादिकारणता तथा शब्दानामप्यर्थैः सह तद्बोधकारणतैव योग्यता सैव शक्तिरित्यर्थः । ननु न बोधकारणत्वमनादि

---

प्रसङ्गसंगत्या यावत्पदेषु शक्तिं समर्थयन् भूमिकामारचयति—शक्तिप्रसङ्गादिति । समासशक्तिनिरूपणप्रसङ्गात्स्मृतस्योपेक्षानर्हत्वादित्यर्थः । तस्या इति । शक्तेरित्यर्थः । शक्तिर्नाम पदेन सह पदार्थस्य संबन्धः । स चास्मात्पदादयमर्थो बोद्धव्य इत्यर्थविशेष्यकेश्वरेच्छारूपो वा, इदं पदममुमर्थं बोधयत्विति पदविशेष्यकेश्वरेच्छारूपो वेति तार्किकाः । अमुमेवेश्वरीयसंकेत इति व्यवहरन्ति ते । नव्यतार्किकैरीश्वरेच्छा, ज्ञानं वा कृतिर्वा शक्तिरित्युच्यते । तान्निराकर्तुमादौ तत्स्वरूपं दर्शयति—इन्द्रियाणां स्वविषय इति । अस्यार्थः—यथा चक्षुरादीनां रूपादिविषयकज्ञानजननेऽनादिः पुरुषप्रयत्नानपेक्षा योग्यता, तज्जनकतावच्छेदकधर्मवत्त्वरूपा, तथा शब्दानामर्थेऽनादिः संबन्ध एव योग्यता, तद्बोधजनकतावच्छेदको धर्म इति । प्रतिपदार्थमाह——इन्द्रियाणां——चक्षुरादीनाम् , इत्यादिना । चाक्षुषपदं रासनादिप्रत्यक्षस्याप्युपलक्षणम् । अनादिर्योग्यतेत्यत्र न आदिर्यस्याः सेत्यर्थो बोध्यः । सैव शक्तिरिति । बोधकारणतारूपैव शक्तिरित्यर्थः । परे तु अर्थासंबद्धस्य शब्दस्यार्थविषयकबोधजनकत्वान्यथानुपपत्त्या कल्प्यमानशक्तिरूपसंबन्धस्य बोधजनकत्वरूपत्वं न संभवति, आत्माश्रयापत्तेः । किं च संबन्धिभिन्नत्वे सति उभयाश्रितत्वे सति विशिष्टबुद्धिनियामकत्वं संबन्धत्वम् । यो हि घटभूतलयोः संयोगवत्तदुभयस्मिन्नपि संबन्धिनि वर्तते स एव संबन्धो भवति, इच्छाया जनकत्वस्य वा पदमात्रवृत्तित्वेनोभयवृत्तित्वाभावान्न संबन्धत्वम् । ननु अस्मात्पदादयमर्थो बोद्धव्य इतीच्छायां बोधस्येव पदतदर्थयोरपि इच्छाविषयत्वेन प्रतीतेः कथमिच्छाया उभयवृत्तित्वाभाव इति चेन्न । तत्र हि न पदं नापि पदार्थ इच्छाविषयः, किं तु बोध एव तादृश इति बोधनिष्ठविषयतैवेच्छाश्रयता-

( शक्तिनिर्णयः )

**भूतं शक्तिः, आधुनिकदेवदत्तादिपदे तदभावात् । अन्यथा पित्रादिसंकेताज्ञानेऽप्यन्वयबोधप्रसङ्गः । लाक्षणिकातिव्याप्तेश्चेति संकेतज्ञानमपि हेतुर्वाच्यम् । तथा चाऽऽवश्यकत्वात्स एव शक्तिरस्तु, स चाऽऽ-**

---

नियामिका, न तु बोधविषयपदतदर्थनिष्ठविषयता इच्छाश्रयतानियामिका । अयं शब्दः पदार्थो वा इच्छावानिति प्रतीत्यभावात् । विषयतासंबन्धेन बोधस्यैव साक्षादिच्छाश्रयत्वे संभवति सति परम्परासंबन्धेन पदतदर्थयोरिच्छाश्रयत्वाभ्युपगमे मानाभाव इत्याशयः । ननु शब्दवदर्थस्यापि शाब्दबोधे निमित्तत्वादस्त्युभयत्रापि बोधजनकत्वमिति संयोगवत्तस्य संबन्धत्वं दुर्वारमिति चेन्न । यथा दण्डचक्रयोरुभयोर्घटजनकत्वेऽपि तयोः परस्परमसंबन्धोऽनुभवसिद्धस्तद्वच्छब्दतदर्थयोरुभयोर्बोधजनकत्वेऽपि तयोः परस्परं संबन्धस्य दुरुपपादत्वात् । अपि च विशिष्टप्रतीतिनियामकस्यैव संबन्धत्वं, यथा—घटवद्भूतलमित्यत्र घटानिरूपितसंयोगाश्रयो भूतलमिति विशिष्टप्रतीतिनियामकत्वात्संयोगस्य संबन्धत्वं, तद्वदिच्छाया जनकत्वस्य च विशिष्टप्रतीतिनियामकत्वाभावान्न संबन्धत्वसंभवः । तस्मात्पदतदर्थयोः संबन्धान्तरमेव शक्तिः, वाच्यवाचकभावापरपर्यायेति प्राहुः । अनादिकारणताया व्यभिचारग्रस्तत्वात्संकेतज्ञानं विना बोधानुदयाच्च संकेत एव—शक्तिरस्त्विति नैयायिकः शङ्कते—**ननु नेति** । अनादिभूताया बोधकारणतायाः शक्तित्वं न संभवतीत्यर्थः । तस्या अशक्तित्वे हेतुमाह—**आधुनिकेति** । इदानींतनपित्रादिसंकेतिते चैत्रमैत्रादिनाम्नीत्यर्थः । **तदभावादिति** । अनादित्वविशिष्टबोधकारणताया असत्त्वादित्यर्थः । यद्यपि सांप्रतिके संकेते बोधकारणताऽनुभूयते तथापि तादृशबोधकारणतायां सादित्वेनानादित्वाभावाद्विशेषणाभावप्रयुक्तो विशिष्टाभावो बोध्यः। ततश्च सांप्रतिकसंकेताच्छाब्दबोधो न स्यादिति भावः । नन्वाधुनिकेऽनादित्वासत्त्वे मानाभाव इत्यत आह—**अन्यथेति** । उक्तवैपरीत्ये । आधुनिकेऽनादित्वसत्त्व इत्यर्थः । **पित्रादिसंकेतेति** । यद्याधुनिकेऽनादित्वविशिष्टकारणता स्यात्तर्हि पित्रादिकृतसंकेतज्ञानशून्यसमयेऽपि ततः शाब्दबोधः प्रसज्येत । सिद्धान्ते तु न भवति, संकेतज्ञानाभावादिति भावः । **लाक्षणिकेति** । लाक्षणिकस्यापि गङ्गादिपदस्य बोधजनकतया तत्रापि अनादित्वविशिष्टबोधकारणताकल्पनापत्त्या विनैव लक्षणां तीरादिबोधसंभवादतिव्याप्तिः स्यात् । अतः संकेतज्ञानमपि बोधे कारणमिति वक्तव्यम् । **आवश्यकत्वादिति** । संकेतज्ञानं विना बोधानुदयादवश्या-

( शक्तिनिर्णयः )

**धुनिके पित्रादेर्गवादौ चेश्वरस्येति चेदत्रोच्यते । संकेतो न स्वरूपेण हेतुः, अगृहीतशक्तिकादर्थबोधप्रसङ्गात् । नापि सामान्यतो ज्ञातः, प्रमेयत्वादिना तज्ज्ञानेऽपि बोधप्रसङ्गात् । नापि संकेतत्वेन तज्ज्ञानं**

---

पेक्षणीयत्व दित्यर्थः । **स एवेति** । स एव संकेत एव शक्तिरित्यङ्गी कर्तव्यमित्यर्थः । एवेनानादिबोधकारणताया निरासः । तदाह गदाधरभट्टाचार्यः शक्तिवादे—संकेतो लक्षणा चार्थे पदवृत्तिः, इति । अर्थे इति सप्तम्या निरूपितत्वमर्थः। तथा चार्थनिरूपिता पदनिष्ठा या वृत्तिः सा संकेतो लक्षणा चेति सूत्रार्थः । तत्रापि घटाद्यर्थनिरूपिता घटादिपदनिष्ठा या वृत्तिः स संकेतः, तीराद्यर्थनिरूपिता गङ्गादिपदनिष्ठा या वृत्तिः सा लक्षणेति विवेकः। शक्तिर्लक्षणा चेति वक्तव्ये शक्तिस्थाने संकेतवचनं पित्रादिकृतसंकेतसंग्रहार्थम् । शाब्दबोधानुकूलार्थोपस्थित्यनुकूलः पदपदार्थयोः संबन्धः शक्तिलक्षणान्यतरा वृत्तिरित्येवमेव नैयायिका मन्यन्ते । यद्यपि ‘ गङ्गापदात्तीरबोधो भवतु ’ इत्याकाराया अपीश्वरेच्छायास्तीरे संभवाच्छक्त्यैव तीरबोधप्रसङ्गस्तथाऽपि तीरं गङ्गापदवाच्यमिति व्यवहाराभावात्तीरार्थे गङ्गापदस्य लक्षणैव, गङ्गापदात्तीरबोधो जायतामिति विशिष्य ईश्वरेच्छाया अतत्त्वानुमानात् , जलप्रवाहरूपेऽर्थे तु शक्तिरिति संप्रदायः । **आधुनिके पित्रादेरिति** । तत्र विशिष्य चैत्रपदजन्यबोधविषयो जायतामित्येवं भगवत्संकेताभावात्पित्रादिकृतः संकेतः, गवादौ च भगवत्संकेत इति संकेतमात्रं शक्तिः, न तु ईश्वरीयत्वविशेषणविशिष्टः संकेत इत्याशयः । किमयं संकेतः—स्वरूपतः, सामान्यतः, विशेषरूपेण वा हेतुरिति विकल्प्य निराकरोति—**उच्यत इति** । **न स्वरूपेण हेतुरिति** । स्वरूपसन् संकेतत्वेन विद्यमानो हेतुर्नेत्यर्थः । तत्र कारणमाह—**अगृहीतशक्तिकादिति** । बहुव्रीहिरयं, पदमन्यपदार्थः । अगृहीतसंकेतादपि पदादित्यर्थः । **बोधप्रसङ्गादिति** । तद्धेतुभूतस्य संकेतस्य स्वरूपतस्तत्र सत्त्वादित्यर्थः । संकेतज्ञानं विना शाब्दबोधो न जायत इत्यनुभवसिद्धमिति भावः । **सामान्यतो ज्ञात इति** । येन केनचिद्रूपेण ज्ञानविषयीकृतो हेतुर्नेत्यर्थः । **प्रमेयत्वादिनेति** । घटपटादिपदार्थ इव संकेतो नाम कश्चित्प्रमेयपदार्थ इत्येवं प्रमेयत्वादिना केनचिद्धर्मेण तज्ज्ञाने—संकेतज्ञानेऽपि घटादिपदाच्छाब्दबोधापत्तेः । घटपदस्य कम्बुग्रीवादिमदर्थे संकेत इत्येवंरूपेण संकेतज्ञाने सत्येव ततः शाब्दबोध उदेतीत्यनुभवसिद्धमिति भावः । **संकेतत्वेनेति** । ईश्वरीयसं-

**हेतुः, गवादिपदेष्वीश्वरादेः संकेतत्वेन तज्ज्ञानशून्यानां लौकिकमीमांसकादीनां तत्तदर्थबोधजनकत्वग्रहवतामेव बोधेन व्यभिचारात्। न चार्थधीजनकतावच्छेदकत्वेन तज्ज्ञानं हेतुस्ततोऽपि लाघवेनार्थधीजन-**

---

केतत्वादिना विशेषरूपेणापि संकेतज्ञानं हेतुर्नेत्यर्थः । **गवादिपदेष्वपीति** । तत्रापि येषामीश्वरीयसंकेतत्वेन ज्ञानं नास्ति तेषां तत्तदर्थबोधजनकत्वशक्तिग्रहवशादेव बोधजननेन शाब्दबोधसंकेतज्ञानयोः कार्यकारणभावस्य व्यभिचरितत्वात् । व्यभिचारो नाम कार्यकारणभावभङ्गः । तत्राऽऽद्ये कारणभूतस्य संकेतस्य स्वरूपतः सत्त्वेऽपि शाब्दबोधरूपकार्याभावादन्वयव्यभिचारः, अन्त्ये संकेतज्ञानरूपकारणाभावेऽपि शाब्दबोधरूपकार्यजननाद्व्यतिरेकव्यभिचारो द्रष्टव्यः । ईश्वरीयसंकेतत्वेन संकेतज्ञानशून्यान् प्रदर्शयितुमाह—**लौकिकमीमांसकादीनामिति** । लौकिकाश्च मीमांसकादयश्चेत्यर्थः । लौकिकपदेनात्र पामरा निरीश्वरवादिनो मीमांसकाश्च ग्राह्याः । आदिपदेन बौद्धादयो, ये हीश्वरनास्तितां वदन्तीत्येतादृशा बोध्याः । ननु तेषामीश्वरीयसंकेतत्वेन तज्ज्ञानासंभवेऽपि संकेतत्वेन ज्ञानं संभवत्येवेत्यत आह—**तत्तदर्थबोधेति** । घटपदादिपदं पृथुबुध्नोदरादिमदर्थप्रत्यायकमित्येवं बोधजनकत्वज्ञानवतामेवेत्यर्थः । एवकारेण संकेतत्वप्रकारकज्ञानव्यवच्छेदः । तथा च संकेतत्वज्ञानासत्त्वेऽपि निरुक्तार्थबोधजनकत्वग्रहवशादेव शाब्दबोधोत्पत्त्या व्यभिचारात्संकेतत्वेन संकेतज्ञानमपि न हेतुः । किंत्वर्थबोधजनकत्वमेव पदस्य शक्तिरिति भावः । ननु संकेतज्ञानशून्यानां पामरादीनां घटादिपदं घटाद्यर्थबोधजनकमित्येवंबोधकारणताज्ञानमात्रादेव घटाद्यर्थबोधोदयेन संकेतज्ञानस्य शाब्दबोधहेतुत्वासंभवेऽपि बोधजनकतावच्छेदकत्वेन संकेतज्ञानस्य शाब्दबोधहेतुत्वं संभवत्येवाव्यभिचारादित्याशङ्कते—**न चार्थधीत्यादि** । अयं भावः—अर्थधीजनकत्वं—अर्थबोधजनकत्वं, तच्चार्थबोधजनकत्वयोग्यता, योग्यता च तदवच्छेदकधर्मवत्त्वं, धर्मश्च क्लृप्तत्वादीश्वरादिसंकेत एव, अक्लृप्तकल्पनायां गौरवात् । तथा च घटादिपदे याऽर्थबोधजनकता, तस्या अवच्छेदकं—संकेत इत्यवच्छेदकत्वेन संकेतज्ञानं शाब्दबोधहेतुर्भवत्येवेति । तज्ज्ञानं—संकेतज्ञानम् । तथा—शाब्दबोधहेतुः । संकेतज्ञानसहकारेणैवार्थधीजनकतायाः शाब्दबोधहेतुत्वेन संकेतज्ञानाव्यभिचार इति भावः । एतच्च योग्यमित्याह—**ततोऽपीति** । अर्थधीजनकतावच्छेदकत्वेन हेतुत्वापेक्षयाऽपीत्यर्थः । **लाघवेनेति** । अर्थधीजनकतात्वेन हेतुताया उचितत्वेन

( शक्तिनिर्णयः )

**कत्वेनैव हेतुतायामस्मत्पक्षसिद्धेः। न चाऽऽधुनिकदेवदत्तादौ सङ्केतज्ञा-**

जनकतावच्छेदककोटावर्थधीजनकतावच्छेदकत्वस्याप्रवेशाल्लाघवं भवति। अस्यायं सारः शब्द एव शाब्दबोधे कारणं, कारणता च केन रूपेणेति वीक्षायां लाघवेनार्थधीजनकत्वेनैव गृह्यते, ततश्चार्थधीजनकतावच्छेदकत्वपर्यन्तानुधावनं गुरुभूतमिति। इदं पदमर्थधीजनकतावच्छेदकवदिति ज्ञानस्य शाब्दबोधहेतुत्वे गौरवा-त्तदपेक्षया इदं पदमर्थधीजनकतावदिति ज्ञानस्य हेतुत्वकल्पने लाघवाद्बोधकारणतैव शक्तिरिति वैयाकरणाभिमतं सिध्यति। अयं भावः—इदं पदमर्थधीजनकतावच्छेदकधर्मवदित्यस्य घटाद्यर्थधीजनकतावच्छेदको यो धर्मः संकेतस्तद्वत्तदाश्रयो घटादिपदमित्यर्थः। इदं पदमिति सामान्योक्तिर्निर्विशेषं न सामान्यमिति न्यायेन घटपदं घटार्थबोधकमितिविशेषवाक्यपरिचायिका। अत्राऽऽश्रयतासंबन्धेन बोधजनकतावच्छेदकधर्मरूपः संकेतो घटादिपदे प्रकारः, अवच्छेदकता, प्रकारता चेत्युभयं तादृशधर्मरूपे संकेते वर्तत इति कृत्वा इदं पदमर्थधीजनकतावच्छेदकधर्मवदिति ज्ञानस्य घटाद्यर्थबोधजनकतावच्छेदकतावाच्छिन्नसंकेतनिष्ठप्रकारताकज्ञानत्वेन हेतुत्वे गौरवात्, इदं पदमर्थधीजनकतावदित्यस्य—घटाद्यर्थबोधजनकताश्रयो घटादिपदं, अत्राऽऽश्रयतासंबन्धेन घटाद्यर्थबोधजनकता घटादिपदे प्रकारः, प्रकारतावच्छेदकं बोधजनकतात्वं, प्रकारता च बोधजनकतात्वावच्छिन्नेति कृत्वा इदं पदमर्थधीजनकतावदिति ज्ञानस्य घटाद्यर्थबोधजनकतात्वावच्छिन्नप्रकारताकज्ञानत्वेन शाब्दबोधहेतुत्वकल्पनं समञ्जसं लाघवादिति। अत्रेदं बोध्यं—यथा अयं घट इत्याकारकं ज्ञानं विशिष्टज्ञानम्। यतोऽस्मिन्ज्ञाने घटो घटत्वं च भासेते। तत्र घटत्वं विशेषणं, घटो विशेष्य इति कृत्वा भवतीदं घटत्वप्रकारकं ज्ञानमिति तद्वदिदं पदमर्थधीजनकमिति ज्ञानमर्थधीजनकत्वप्रकारकं भवति। यथा च दण्डो घटकारणतावच्छेदकधर्मवानिति ज्ञानं विशिष्टज्ञानम्। यतोऽत्र ज्ञाने दण्डो विशेष्यतया, घटकारणतावच्छेदकधर्मश्च विशेषणतया भासत इति कृत्वा भवतीदं घटकारणतावच्छेदकधर्मप्रकारकं ज्ञानमिति। तद्वदिदं पदमर्थधीजनकतावच्छेदकधर्मवदिति ज्ञानमर्थधीजनकतावच्छेदकधर्मप्रकारकं भवतीति। अर्थधीजनकत्वप्रकारकज्ञानस्य व्यभिचारमाशङ्कते—**न चाऽऽधुनिकेति**। आधुनिकसंकेते चैत्रमैत्रादौ संकेतज्ञानात्—चैत्रादिपदस्य तत्तद्व्यक्तिविशेषे संकेत इति ज्ञानादेवार्थबोधस्य

**नादेव बोधेनास्य व्यभिचारः। तत्रापीदं पदमेनमर्थं बोधयत्वितीच्छाग्रहे पदे तदर्थबोधकत्वस्यावगाहनेन व्यभिचाराभावात्। न च स्वातन्त्र्येणार्थबोधकताज्ञानं कारणं वाच्यमन्यथा नेदं तद्धीजनकमिति**

---

जायमानत्वेन, अस्य—अर्थबोधजनकताज्ञानस्य, व्यभिचारः—कारणाभावेऽपि कार्यसत्त्वाद्व्यतिरेकव्यभिचारो भवतीति शेषः। संकेतज्ञानादेवेत्येवकारेणार्थबोधजनकत्वज्ञानस्य व्यवच्छेदः। अर्थबोधजनकत्वज्ञानं विनैव केवलसंकेतज्ञानादिति यावदित्यर्थः। व्यभिचारो नेत्याह—तत्रापीति। यत्र संकेतज्ञानमात्रादर्थबोधस्तादृशस्थलेऽपीत्यर्थः। **इदं पदमेनमर्थमिति**। एतत्पदविशेष्यकैतदर्थविषयको यो बोधस्तादृशबोधजनकताप्रकारिका येच्छा सैव संकेत इति तादृशेच्छारूपसंकेतज्ञाने जाते सति अर्थादेतत्पदे एतदर्थबोधजनकत्वप्रकारकत्वज्ञानस्य जातत्वेनार्थधीजनकत्वरूपस्य बोधकारणस्य पदे सत्त्वाद्व्यतिरेकव्यभिचारो नैव संभवतीत्यर्थः। नैयायिकमतेन प्रथमान्तमुख्यविशेष्यकशाब्दबोधस्येष्टत्वादिदं पदमेनमर्थं बोधयत्वित्यस्य गवाद्यर्थविषयकबोधजनकताश्रयो गवादिपदमित्यर्थादिदं पदमेनमर्थं बोधयत्विति ज्ञानस्यार्थबोधजनकत्वप्रकारकज्ञानत्वेन गवादिपदेऽर्थबोधजनकत्वप्रकारकत्वस्याक्षतेः कारणाभावे कार्यसत्त्वरूपो व्यतिरेकव्यभिचारो नास्तीति यावत्। **अवगाहनेनेति**। तादृशेच्छाज्ञाने पदेऽर्थबोधजनकत्वस्य विषयीकरणेनेत्यर्थः। सविषयकेच्छायामिच्छानिरूपितं यस्य प्रकारत्वं भवति तादृशेच्छाज्ञानेऽपि तस्यैव प्रकारत्वमिति नियमात्—प्रकृतस्थले एतत्पदविशेष्यकैतदर्थविषयकबोधजनकत्वमिच्छायां प्रकार इति तादृशेच्छाज्ञानेऽप्येतत्पदविशेष्यकैतदर्थविषयकबोधजनकत्वस्यैव प्रकारत्वेन पदेऽर्थबोधजनकत्वप्रकारकत्वज्ञानस्याक्षतत्वाद्व्यभिचाराभाव इति यावत्। इतरनिरूपितविशेषणतानापन्नत्वेनार्थबोधकताज्ञानस्य कारणत्वं स्वीकार्यमित्याशङ्कते—न चेति **स्वातन्त्र्येणेति**। इतरनिष्ठविशेष्यतानिरूपितविशेषणतानापन्नत्वेनेत्यर्थः। प्रकृतस्थले चेच्छायां बोधजनकत्वस्य विशेषणत्वाद्बोधजनकत्वज्ञानस्यापीच्छाविशेषणत्वान्न बोधकताज्ञानं स्वतन्त्रमिति भावः। **अन्यथेति**। विशेषणतापन्नत्वरूपपारतन्त्र्येणापि बोधकताज्ञानस्य शाब्दबोधहेतुत्व इत्यर्थः। **नेदं तद्धीजनकमिति**। अयमाशयः—कस्यचिच्चैत्रनाम्नः पुरुषस्य भ्रान्त्या घटपदात्पटव्यक्तेर्ज्ञानं जातम्। अथ द्वितीयस्याभ्रान्तस्याभ्रान्तत्वादेव च घटपदं पटव्यक्तिबोधजनकं नेत्येवं जानतोऽपि घटप-

( शक्तिनिर्णयः )

**जानतोऽस्माच्छब्दादयमर्थो बुद्धोऽनेनेति जानतस्तद्ग्रहापत्तेरिति वाच्यम् । नेदं तद्धीजनकमिति ग्रहवतो बाधेन पदे परग्रहं जानतोऽपि तद्ग्रहासंभवात् । अन्यथा भ्रान्तिज्ञस्यापि भ्रान्तत्वापत्तेरिति । इदं**

---

दस्य पटव्यक्तौ शक्तिराहित्येऽपि यस्माच्चैत्रेण घटपदात्पटरूपोऽर्थो ज्ञातस्तस्माद् घटपदस्य पटरूपेऽर्थे शक्तिरस्तीति ग्रहसंभवेन तादृशग्रहवतो मैत्रस्य घटपदात्पटरूपार्थप्रतीत्यापत्तिः स्यात् । इदं तद्धीजनकं नेत्यत्र नञर्थाभावे विशेषणतयाऽर्थबोधजनकत्वस्य सत्त्वात् । तस्माद् घटपदात्पटव्यक्तिबोधापत्तिवारणाय स्वातन्त्र्येणार्थबोधजनकताज्ञानं शाब्दबोधहेतुरित्यवश्यं वक्तव्यम् । प्रकृतस्थले नञर्थाभावे विशेषणतया बोधजनकज्ञानसत्त्वेऽपि विशेषणतानापन्नत्वेन बोधजनकताज्ञानं नास्तीति न घटपदात्पटरूपार्थबोधो जायते । तथा चाऽऽधुनिकसंकेतस्थले चैत्रादाविच्छायां विशेषणतया बोधजनकताज्ञानस्य सत्त्वेऽपि स्वातन्त्र्येण बोधजनकताज्ञानं नास्तीति विशेषणाभावप्रयुक्तविशिष्टाभावाच्छाब्दबोधहेतोर्बोधजनकताज्ञानस्याऽऽधुनिकसंकेतस्थले व्यभिचार एवेति चेन्नेत्याह—**नेदं तद्धीजनकमिति ग्रहवत इति** । घटपदं पटधीजनकं नेति ज्ञानवतोऽभ्रान्तस्येत्यर्थः । घटपदे पटधीजनकत्वाभावनिश्चयवतः पुरुषस्येति यावत् । **बाधेनेति** । घटपदे पटधीजनकत्वज्ञानस्याभावेनेत्यर्थः । **पदे परग्रहमिति** । घटपदे पटधीजनकत्वमस्तीत्याकारकं ज्ञानं मदन्यभ्रान्तपुरुषसंबन्धीत्येवं जानतोऽपीत्यर्थः । **तद्ग्रहासंभवादिति** । घटपदे पटधीजनकत्वज्ञानस्य सर्वथाऽनुदयादित्यर्थः । यस्य घटपदे पटधीजनकत्वं नास्तीति निश्चयात्मकं ज्ञानमस्ति तादृशेऽभ्रान्तपुरुषे घटपदे पटधीजनकत्वमस्तीत्येवं भ्रान्तपुरुषीयज्ञानस्य यथाकथंचिद् ( अभावप्रतियोगित्वेन ) सत्त्वेऽपि तावताऽभ्रान्तपुरुषस्य घटपदे पटधीजनकत्वमस्तीत्येवं ज्ञानं कथमिवोदियात्, नैवोदियादित्यर्थः । सर्वत्र कार्ये प्रतिबन्धकाभावस्यापि कारणत्वेनावश्याङ्गीकार्यत्वात् प्रकृतस्थले च घटपदे पटधीजनकत्वं नास्तीत्येवमात्मकस्य निश्चयात्मकज्ञानस्य प्रबलप्रतिबन्धकस्य सत्त्वादित्यर्थः । एवं चाभ्रान्तपुरुषस्य घटपदे पटधीजनकत्वज्ञानाभावान्न घटपदात्पटव्यक्तिज्ञानापत्तिरिति भावः । **अन्यथेति** । उक्तवैपरीत्ये । घटपदे पटधीजनकत्वाभावनिश्चयसत्त्वेऽपि तत्र घटपदे पटधीजनकत्वज्ञानाङ्गीकार इत्यर्थः । तदभाववति तत्प्रकारकं ज्ञानं भ्रान्तिज्ञानं मिथ्याज्ञानमिति चोच्यते । तादृशभ्रान्तिज्ञानं रजतत्वाभाववत्यां शुक्तौ इदं रजतमिति रज-

( शक्तिनिर्णयः )

चार्थधीजनकत्वं पित्रादिसंकेतज्ञानाद्गृह्यतेऽतस्तज्ज्ञानात्पूर्वं न बोधः। नापि लाक्षणिकोच्छेदापत्तिरिष्टत्वाच्छक्तिग्राहकव्यवहारस्य मुख्यलक्ष्यसाधारण्यात्। किं च प्रत्यक्षादिजन्योपस्थितेः शाब्दबोधानङ्गत्वा-

---

तत्वप्रकारकं ज्ञानं चैत्रस्य जातम्। तच्चैत्रीयभ्रान्तिज्ञानं—रजतत्वाभाववती शुक्ती रजतत्वेन रूपेणानेन गृहीतेत्येवं मैत्रेण ज्ञातम्। अतश्चैत्रनिष्ठभ्रान्तिज्ञो मैत्रः। स चाभ्रान्त एव। नेदं रजतमिति पुरोवर्तिनि वस्तुनि रजतत्वप्रकारकत्वस्य बाधनिश्चयात्। सत्येमं चैत्रीयभ्रान्तेर्ज्ञातृत्वेन यदि मैत्रस्यापि रजतत्वाभाववद्वस्तुविशेष्यकरजतत्वप्रकारकज्ञानसत्त्वेन भ्रान्त्याश्रयत्वं स्वीक्रियते, तर्हि भ्रान्तिज्ञस्यापि भ्रान्तत्वमापद्येतेति नेदं रजतमिति बाधस्थले इदं रजतमित्येवं रजतत्वप्रकारकं ज्ञानमेव नोदेतीत्यवगन्तव्यमिति भावः। अर्थधीजनकत्वरूपायाः शक्तेर्ग्राहकमाह—**इदं चेति**। शब्दे विद्यमानमनादिसिद्धमर्थधीजनकत्वरूपं सामर्थ्यं पित्रादिना कृतो यः संकेतस्तज्ज्ञानाद् गृह्यते। घटपदं कम्बुग्रीवादिमदर्थस्य वाचकमित्युपदेशः संकेतः। पित्रादीत्यादिपदेनाऽऽप्तो ग्राह्यः। तथा च संकेतज्ञानात्पूर्वं न शाब्दबोध इति व्यक्तम्। ननु गङ्गायां घोष इत्यादौ लाक्षणिकेऽपि गङ्गापदे तीररूपार्थबोधजनकतयाऽनादिबोधकारणतायाः शाब्दबोधहेतुभूतायाः सत्त्वात्तीरशक्तत्वमेव स्यादिति प्रसक्तां लक्षणोच्छेदापत्तिं परिहरति—**नापीति**। लक्षणोच्छेदापत्तिर्न दूषणं किंत्विष्टत्वाद्भूषणमेवेत्यर्थः। लक्षणोच्छेदस्येष्टत्वे हेतुमाह—**साधारण्यादिति** शक्तिग्राहकशिरोमणिर्व्यवहारो यथा शक्येऽस्ति तथा लक्ष्ये तीरेऽप्यस्तीत्यर्थः। यथा जलप्रवाहविशेषेऽर्थे गङ्गापदप्रयोगात्मको वृद्धव्यवहारस्तथा गङ्गातीररूपार्थेऽपि गङ्गापदप्रयोगस्य वृद्धव्यवहारे दर्शनेन शक्यलक्ष्ययोरुभयोरपि गङ्गापदप्रयोगस्य समानत्वाच्छक्यजलप्रवाह इव लक्ष्ये तीरेऽप्यस्तु गङ्गापदस्य शक्तिः। भवतु च लक्षणोच्छेदो, न काऽपि हानिः सर्वे सर्वार्थवाचका इति भाष्येण सर्वेषामपि शब्दानां सर्वार्थनिरूपितशक्तिमत्त्वस्य वैयाकरणसंमतत्वादिति भावः। एतेन शक्तिग्राहककोशादेरभावान्न तीरादौ गङ्गादिपदशक्तिरिति निरस्तम्। शक्तिग्राहकशिरोमणेर्व्यवहारस्य तत्र सत्त्वादिति भावः। प्रसिद्ध्यप्रसिद्धिभ्यां मुख्यलक्ष्यव्यवहार उपपाद्यः। अप्रसिद्धा शक्तिरेव लक्षणा। यथा व्यवहारादिना गङ्गादिपदानामव्यवधानेन प्रवाहादौ विशेषरूपेण शक्तिर्गृह्यते तथा तीरादावन्वयाद्यनुपपत्तिप्रतिसंधानात्पूर्वं विशेषरूपेण शक्तिर्न गृह्यत इत्यप्रसिद्ध-

( शक्तिनिर्णय. )

तु—शाब्दबोधं प्रति शक्तिजन्योपस्थितेर्लक्षणाजन्योपस्थितेश्च कारणत्वं वाच्यम्। तथा च कार्यकारणभावद्वयकल्पने गौरवं स्यात्। अस्माकं पुनः शक्तिजन्योपस्थितित्वेनैव हेतुतेति लाघवम्। अपि च

---

त्वाल्लक्षणेति व्यवहार इति भावः। ननु सर्वे सर्वार्थवाचका इति भाष्यं योगिदृष्ट्या, तेषामेव सर्वेषां शब्दानामर्थानां च विशेषरूपेण ज्ञानसंभवात्। अस्मदादीनां तु सर्वशब्दतदर्थानां विशेषरूपेण ज्ञानाभावात्सामान्यरूपेण तज्ज्ञानस्य बोधानुपयोगाच्चास्मद्दृष्ट्या गङ्गादिपदस्य तीराद्यर्थे शक्तिरिति वक्तुमनुचितमतस्तीराद्यर्थप्रतीत्यै गङ्गादिपदे शक्त्यपेक्षया पृथग्लक्षणावृत्तिः स्वीकार्यैव, तीराद्यर्थे गङ्गादिपदप्रयोगरूपवृद्धव्यवहारश्च लक्षणाग्राहकतयोपपन्नः, अत एव कूलं रोधश्च तीरं चेति कोशे तीरपर्यायमध्ये न गङ्गापदं पठ्यत इत्याशयेनाऽऽह—**किं चेति**। **प्रत्यक्षादिजन्योपस्थितेरिति**। घटपदस्य कम्बुग्रीवादिमत्यर्थे शक्तिरित्येवं घटपदशक्तिर्येन न गृहीता, तादृशस्यागृहीतशक्तिकस्य पुरुषस्य चक्षुषा घटं प्रत्यक्षीकुर्वतोऽपि घटमानयेति वाक्याच्छाब्दबोधो न जायते, गृहीतशक्तिकस्य तु जायत इति लोके दृष्टत्वादेवं सिध्यति—यच्चक्षुःसंनिकर्षादिना जायमाना अर्थोपस्थितिः शाब्दबोधाङ्गं( कारणं )न भवतीति। तदुक्तं शाब्दबोधानङ्गत्वादिति ) इन्द्रियार्थसंनिकर्षेण प्रत्यक्षं घटार्थोपस्थितिसत्त्वेऽप्यगृहीतशक्तिकस्य पुंसो घटशब्दादर्थबोधाजननात्प्रत्यक्षादिजन्यार्थोपस्थितेः शाब्दबोधानङ्गत्व ( अकारणत्व -मिति भावः। एवं च यथाकथंचिज्जन्यार्थोपस्थितिः शाब्दबोधे कारणमित्येवं कार्यकारणभावो वक्तुमशक्यः। कारणसत्त्वेऽपि कार्याजननेनान्वयव्यभिचारात्। किंतु शक्तिज्ञानजन्यार्थोपस्थितेर्लक्षणाज्ञानजन्यार्थोपस्थितेश्च शाब्दबोधं प्रति कारणत्वं स्वीकर्तव्यमित्यर्थः। **गौरवमिति**। उपर्युक्तरीत्या कार्यकारणभावद्वयकल्पनप्रयुक्तं गौरवमित्यर्थः। स्यात्—आपद्येतेति यावत्। **अस्माकमिति**। शक्तिग्राहकशिरोमणेर्व्यवहारस्य शक्यलक्ष्यसाधारण्याच्छक्ये प्रवाह इव लक्ष्ये तीरेऽपि गङ्गापदस्य शक्तिरेवेति वादिनामस्माकं वैयाकरणानामित्यर्थः। **लाघवमिति**। शक्यलक्ष्योभयत्रापि पदशक्तेः सत्त्वाच्छक्तिज्ञानजन्यार्थोपस्थितिः शाब्दबोधकारणमित्येवमेक एव कार्यकारणभावः कल्प्य इति लाघवमित्यर्थः। ननु यथा जलप्रवाहविशेषो गङ्गापदवाच्य इति सर्वजनीनो व्यवहारो, न तथा तीरं गङ्गापदवाच्यमिति सार्वत्रिको व्यवहार इति तीरे गङ्गापदशक्तिकल्पनमनुचितम्।

**लक्षणावृत्तिस्वीकारे कार्यकारणभावस्य प्रत्येकं व्यभिचारः। शक्तिजन्योपस्थितिं विनाऽपि लक्षणाजन्योपस्थितितः शाब्दबोधात्। न चाव्यवहितोत्तरत्वसंबन्धेन तत्तदुपस्थितिमत्त्वं कार्यतावच्छेदकं तत्तदु-**

---

तथा च लक्षणाख्यं वृत्त्यन्तरमवश्यमभ्युपेतव्यमिति युक्तिसिद्धस्य गौरवस्यादूषकत्वादाह—अपि चेति । प्रत्येकं व्यभिचार इति । अयं भावः—यथा घटत्वावच्छिन्नं प्रति दण्डत्वावच्छिन्नदण्डादि कारणं, तथा शाब्दबोधत्वावच्छिन्नं प्रति शक्तिजन्यार्थोपस्थितिर्लक्षणाजन्यार्थोपस्थितिश्चेति द्वयं कारणं, दण्डचक्रादिन्यायात् । तथा घटकारणता चक्रचीवरादिकारणसमुदायपर्याप्ता न तु चक्रादिप्रत्येकपर्याप्ता, दण्डादिव्यतिरेकेण केवलचक्राच्चक्रादिव्यतिरेकेण केवलदण्डाच्च घटकार्याजननस्य सर्वानुभवसिद्धत्वात् । तथा शक्यलक्ष्योभयविषयकशाब्दबोधकारणता पूर्वोक्तोपस्थितिद्वयपर्याप्ता, न तु प्रत्येकोपस्थितिपर्याप्तेति भावः । तथा च यथा घटमात्रं प्रति दण्डचक्रादि कारणत्वेनापेक्ष्यते, तथा शाब्दबोधमात्रं( मुख्यलक्ष्योभयशाब्दबोधं ) प्रति निरुक्तमुपस्थितिद्वयं कारणत्वेनापेक्ष्यते । तत्र कर्मणि कुशलः, सार्षपं तैलमित्यादौ लक्षणाजन्यार्थोपस्थितिसत्त्वेऽपि शक्तिजन्यार्थोपस्थितिर्नास्ति गङ्गायां स्नातीत्यादौ शक्तिजन्यार्थोपस्थितिसत्त्वेऽपि लक्षणाजन्यार्थोपस्थितिर्नास्तीति कारणाभावेऽपि कार्यजननादुपस्थित्योः परस्परं प्रत्येकं व्यतिरेकव्यभिचार इति । व्यभिचारमेवोपपादयति—**शक्तिजन्योपस्थितिं विनाऽपी**त्यादिना । घटमानयेत्यत्र घटस्य शक्तिज्ञानजन्योपस्थितिसत्त्वेऽपि तस्य लक्षणाज्ञानजन्योपस्थितिर्नास्ति, तथा गङ्गायां घोष इत्यत्र तीरस्य लक्षणाज्ञानजन्योपस्थितिसत्त्वेऽपि तस्य शक्तिज्ञानजन्योपस्थितिर्नास्तीति व्यभिचार इत्यर्थः । तमेतं व्यभिचारं परिहर्तुं शङ्कते—**न चाव्यवहितोत्तरत्वे**ति । अयमाशयः—तत्तदुपस्थितिः—शक्तिजन्यार्थोपस्थितिर्लक्षणाजन्यार्थोपस्थितिश्च कारणं, कार्यं च शाब्दबोधः । तत्र कार्यता वर्तते, तादृशकार्यतासंबन्धेन च स शाब्दबोधस्तत्तदुपस्थितिमान् । कार्यताया अवच्छेदकं च तत्तदुपस्थितिमत्त्वं, तच्च केन संबन्धेनेति जिज्ञासायामाह—**अव्यवहितोत्तरत्वसंबन्धेने**ति । यत्र शाब्दबोधे तत्तदुपस्थित्यव्यवहितोत्तरकालभवत्वं विद्यते, तादृशोत्तरकालभवत्वसमानाधिकरणमुपस्थितिमत्त्वं कार्यतावच्छेदकमित्यर्थः । तत्तद्वृत्तिजन्यार्थोपस्थितेरनन्तरमव्यवधानेन जायमानो यः शाब्दबोधः स एव तत्तदुपस्थितेः कार्यमिति भावः । अत्रायं बाल-

हितः सरलोऽर्थसारः—कार्यनियतपूर्ववर्तिन एव कारणत्वात्सर्वं हि कार्यं कारणापेक्षयोत्तरकालभाव्येवेति प्रकृतस्थले तत्तद्वृत्तिजन्यार्थोपस्थितिरूपकारणापेक्षया शाब्दबोधरूपं कार्यमुत्तरकालभवमेव । तत्रोत्तरकालभवमित्येतद्घटक उत्तरकालेऽव्यवहितत्वं विशेषणं दीयते । तथा च कारणापेक्षयाऽव्यवहितो य उत्तरकालस्तादृशोत्तरकालभवत्वं यादृशशाब्दबोधे वर्तते स शाब्दबोधस्तत्तद्वृत्तिजन्यार्थोपस्थितेः कार्यं भवति । तत्र शक्यार्थविषयकशाब्दबोधः शक्तिजन्यार्थोपस्थित्यनन्तरमव्यवधानेन जायते, अथ च लक्ष्यार्थविषयकशाब्दबोधो लक्षणाजन्यार्थोपस्थित्यनन्तरमव्यवधानेन जायत इति कृत्वा शक्तिजन्यार्थोपस्थितेरव्यवहितोत्तरकालभवो यः शाब्दबोधः स एव शक्तिजन्योपस्थितेः कार्यम् , एवं लक्षणाजन्यार्थोपस्थितेरव्यवहितोत्तरकालभवो य शाब्दबोधः स लक्षणाजन्योपस्थितेः कार्यम् । अर्थात् शक्यार्थविषयकशाब्दबोधं प्रति शक्तिजन्योपस्थितिः कारणं, तथा लक्ष्यार्थविषयकशाब्दबोधं प्रति लक्षणाजन्योपस्थितिः कारणमित्येवं पार्थक्येन कार्यकारणभावः फलितो भवति । कारणतावच्छेदकं च शक्यार्थविषयकशाब्दबोधस्थले शक्तिजन्योपस्थितित्वं,लक्ष्यार्थविषयकशाब्दबोधस्थले तु लक्षणाजन्योपस्थितित्वमिति । अव्यवहितोत्तरेत्यादेरयमर्थः संपन्नः—तत्पदनिष्ठशक्तिज्ञानजन्योपस्थित्यव्यवहितोत्तरकालिकशाब्दबोधं प्रति तत्पदनिष्ठशक्तिज्ञानजन्योपस्थितिः कारणं, तथा तत्पदनिष्ठलक्षणाज्ञानजन्योपस्थित्यव्यवहितोत्तरकालिकशाब्दबोधं प्रति तत्पदनिष्ठलक्षणाज्ञानजन्योपस्थितिः कारणमिति । अस्यार्थः—गङ्गापदनिष्ठा प्रवाहत्वाद्यवच्छिन्ननिरूपिता या शक्तिस्तज्ज्ञानजन्या या उपस्थितिस्तादृशोपस्थितेरव्यवहितोत्तरकालभवो यः शाब्दबोधस्तादृशशाब्दबोधे जननीये गङ्गापदनिष्ठशक्तिज्ञानजन्या योपस्थितिः सा कारणमिति, गङ्गापदनिष्ठा गङ्गापदशक्यप्रवाहसंबन्धितीरत्वावच्छिन्ननिरूपिता या लक्षणा तज्ज्ञानजन्या योपस्थितिस्तादृशोपस्थितेरव्यवहितोत्तरकालभवो यः शाब्दबोधस्तादृशशाब्दबोधे जननीये गङ्गापदनिष्ठलक्षणाज्ञानजन्या योपस्थितिः सा कारणमिति च । ततश्च लक्षणास्थले आदौ शक्तिज्ञानजन्यप्रवाहार्थोपस्थितिः, तदनन्तरं शक्यसंबन्धरूपलक्षणाज्ञानजन्यतीरार्थोपस्थितिः, ततः परं शाब्दबोध इति क्रमाच्छक्तिजन्यार्थोपस्थिति—शाब्दबोधयोर्मध्ये लक्षणाज्ञानजन्यतीरार्थोपस्थित्या व्यवधानाच्छाब्दबोधे शक्तिजन्योपस्थित्युत्तरकालभवत्वेऽपि अव्यवहितत्वाभावाल्लक्ष्यतीरार्थविषयकशाब्दबोधः शा-

(शक्तिनिर्णयः)

**पस्थितित्वं च कारणतावच्छेदकम्, अनन्तकार्यकारणभावप्रसङ्गात्। किं च पदार्थोपस्थितिं प्रत्यपि शक्तिज्ञानत्वेन लक्षणाज्ञानत्वेन च हेतुतेति व्यभिचारो गौरवं च प्राग्वदेव द्रष्टव्यम्। न चेदं पदमेतदर्थ-**

---

क्तिजन्यार्थोपस्थितेः कार्यं भवितुं नार्हति, किंतु लक्षणया तीरार्थोपस्थित्यनन्तर-मव्यवधानेन जायमानत्वाल्लक्षणाजन्यार्थोपस्थितेरेव स कार्यं भवति। अतो नात्र व्यभिचारः। गङ्गायां स्नातीत्यत्र शक्तिजन्यप्रवाहार्थोपस्थित्यनन्तरमव्यवधानेन जायमानत्वच्छक्यार्थविषयकशाब्दबोधः शक्तिजन्यार्थोपस्थितेरेव कार्यं, न लक्षणाजन्यार्थोपस्थितेः। तत्र लक्षणाया अप्रसराल्लक्ष्यार्थोपस्थितेः सर्वथाऽसंभवात्। तथा च न तत्रापि व्यभिचार इति भावः। इति चेन्नेत्याह—**अनन्तकार्यकारणेति**। शक्यार्थविषयकशाब्दबोधं प्रति शक्तिजन्योपस्थितिः कारणमित्यत्र शक्तिजन्योपस्थितिपदं न शक्तिजन्योपस्थितित्वेन रूपेण शक्तिजन्योपस्थितिसामान्यपरं, तथा सति सामान्यस्यामूर्तत्वेन शाब्दबोधे तदव्यवहितोत्तरत्वं वक्तुमशक्यं स्यात्। किं तु शक्तिजन्योपस्थितिव्यक्तिपरम्। तथा चोपस्थितीनामानन्त्येन तद्भेदेन कार्यकारणभावानन्त्यापत्तेरित्यर्थः। युक्तिसाम्यादाह—**किं चेति**। यथा शाब्दबोधद्विविधपदार्थोपस्थित्योर्मध्ये कार्यकारणभावसत्त्वादेकैकस्याः पदार्थोपस्थितेरभावेऽप्यपरया पदार्थोपस्थित्या शाब्दबोधरूपकार्यजननाद्व्यतिरेकव्यभिचारोऽभिहितस्तथा पदार्थोपस्थितिरूपकार्यं प्रति शक्तिलक्षणोभयज्ञानस्य कारणत्वं वक्तव्यमिति एकैकस्य कारणस्याभावेऽप्यपरेण कारणेनोपस्थितिरूपकार्यजननाद्व्यतिरेकव्यभिचारः। यदि तु व्यभिचारवारणाय शक्तिजन्यपदार्थोपस्थितिं प्रति शक्तिज्ञानं कारणमथ च लक्षणाजन्यपदार्थोपस्थितिं प्रति लक्षणाज्ञानं कारणमित्येवं पार्थक्येन कार्यकारणभावः कल्प्यते तदा कार्यकारणभावद्वयकल्पनप्रयुक्तं गौरवं पूर्ववद्बोध्यमित्यर्थः। ननु गङ्गादिपदस्य जलप्रवाहादाविव तीराद्यर्थेऽपि शक्तिरिति सर्वत्र शाब्दबोधं प्रति शक्तिजन्योपस्थितिः कारणमित्येकविध एव कार्यकारणभाव इति लाघवमित्युक्तं तत्राप्यनेककार्यकारणभावकल्पनप्रयुक्तं गौरवमस्त्येवेत्याशङ्क्ते—**न चेदं पदमिति**। निर्विशेषं न सामान्यमिति न्यायेन घटपदं घटरूपार्थबोधकमित्यादिविशेषवाक्यानां स्वरूपबोधकमिदं सामान्यवचनम्। घटरूपार्थबोधं प्रति घटपदं घटरूपार्थबोधकमित्येवंशक्तिज्ञानं कारणं,

**बोधकमिति शक्तिज्ञाने कार्यकारणभावकल्पनेऽपि पदतदर्थभेदेनानेककार्यकारणभावकल्पने गौरवं तवापि समानम्, परस्परव्यभिचा-**

---

इत्याकारकैककार्यकारणभावकल्पनेऽपि—**पदतदर्थभेदेनेति** । पदं च तदर्थश्च तयोर्भेदेन पदभेदेनार्थभेदेन चेत्यर्थः । अनेककार्यकारणभावकल्पने गौरवमिति । अयं भावः—घटोपस्थितिं प्रति कलशादिपदं घटरूपार्थबोधकमित्येवमर्थैक्येऽपि यथा पदभेदेनानेककार्यकारणभावकल्पनं क्रियते, तथा पदैक्येऽप्यर्थभेदेन, घटोपस्थितिं प्रति घटपदं घटरूपार्थबोधकमितिशक्तिज्ञानं कारणं, तथा पटोपस्थितिं प्रति घटपदं पटरूपार्थबोधकमितिशक्तिज्ञानं कारणमित्येवमनेककार्यकारणभावकल्पनस्याऽऽवश्यकतया सर्वत्र ( शक्यलक्ष्यार्थस्थले ) शक्त्यैव पदार्थोपस्थितिं वदतस्तव वैयाकरणस्याप्यनेककार्यकारणभावकल्पनप्रयुक्तं गौरवं तुल्यमस्तीति शेषः । **परस्परव्यभिचारेति** । पटोपस्थितिं प्रति पटपदं पटरूपार्थबोधकमिति, घटपदं पटरूपार्थबोधकमिति च शक्तिज्ञानं कारणमित्येवं पटोपस्थितौ शक्तिज्ञानद्वयरूपं कारणं क्लृप्तम् । तत्र पटपदं पटरूपार्थबोधकमित्याकारकशक्तिज्ञानं विनाऽपि घटपदं पटरूपार्थबोधकमित्याकारकशक्तिज्ञानात्, तथा घटपदं पटरूपार्थबोधकमित्याकारकशक्तिज्ञानं विनाऽपि पटपदं पटरूपार्थबोधकमित्याकारकशक्तिज्ञानाच्च पटोपस्थितिजननात्कारणाभावेऽपि कार्यजननात्परस्परं व्यतिरेकव्यभिचार इत्यर्थः । तस्यैतस्य व्यभिचारस्य निरासाय यदि, पटपदं पटार्थबोधकं घटपदं पटार्थबोधकमित्येवंकारणीभूतद्विविधशक्तिज्ञानमध्ये यादृशशक्तिज्ञानादनन्तरमव्यवधानेन याऽर्थोपस्थितिर्जायते सैवार्थोपस्थितिस्तादृशशक्तिज्ञानस्य कार्यमित्युच्यते, यथा—पटपदं पटरूपार्थबोधकमित्याकारकशक्तिज्ञानानन्तरं जायमाना पटार्थोपस्थितिरव्यवधानेन जायत इत्यव्यवधानेनैव जायमाना पटार्थोपस्थितिः पटपदं पटार्थबोधकमित्याकारकशक्तिज्ञानस्य कार्यं भवति । अयं भावः—पटार्थोपस्थितिः—कार्यं, द्विविधाकारकशक्तिज्ञानं च कारणम् । कार्यतावच्छेदकं च न केवलं पटार्थोपस्थितित्वं, किं तु अव्यवहितोत्तरत्वसंबन्धेन पटार्थोपस्थितित्वमेव तत् । अव्यवहितोत्तरत्वविशिष्टपटार्थोपस्थितित्वं कार्यतावच्छेदकं स्वीक्रियते इत्यर्थः । व्यभिचारनिरासायाव्यवहितत्वांशो निवेशित इति भावः । तथा च पटपदं पटरूपार्थबोधकमित्याकारकशक्तिज्ञानानन्तरं पटपदाज्जायमाना पटार्थोपस्थितिर

व्यवधानेन जायत इति कृत्वा प्रसिद्धशक्तिजन्यघटार्थोपस्थितिं प्रति घटपदं घटरूपार्थबोधकमित्याकारकशक्तिज्ञानं कारणमित्येवमेकः कार्यकारणभावः फलितः। अपरश्च–घटपदं पटरूपार्थबोधकमित्याकारकशक्तिज्ञानानन्तरं जायमाना पटार्थोपस्थितिर्नाव्यवधानेन जायते, किं तु व्यवधानेनैव जायत इति व्यवधाने न जायमाना पटार्थोपस्थितिर्न पटपदं पटरूपार्थबोधकमित्याकारकशक्तिज्ञानस्य कार्यं, किं तु घटपदं पटरूपार्थबोधकमित्याकारकशक्तिज्ञानस्यैव सा कार्यम्। एवं चाप्रसिद्धशक्तिजन्यपटार्थोपस्थितिं प्रति घटपदं पटरूपार्थबोधकमित्याकारकशक्तिज्ञानं कारणमिति द्वितीयः कार्यकारणभावः फलितः तत्श्च पृथक्पृथककार्यकारणभावकल्पनेन यद्यपि न परस्परव्यभिचारस्तथाऽप्यनेककार्यकारणभावकल्पनप्रयुक्तं गौरवं सुतरां–अतिशयितं भवतीति। नन्वेकस्य घटपदस्य घटपटरूपे उभयत्राप्यर्थे शक्तित्त्वाद्घटपदाद्घटोपस्थितिरव्यवधानेन, पटोपस्थितिस्तु व्यवधानेनेति वैषम्ये किं बीजमिति चेदुच्यते–तत्तदर्थे तत्तच्छब्दप्रयोगकरणरूपवृद्धव्यवहारेण तत्तच्छब्दस्य तत्तदर्थे शक्तिर्निर्णीयते। यथा–वृद्धव्यवहारे जलप्रवाहविशेषे गङ्गापदप्रयोगदर्शनेन गङ्गापदस्य प्रवाहविशेषे शक्तिरिति ज्ञायते, तथा गङ्गायां घोष इत्यादौ तीरार्थेऽपि गङ्गापदप्रयोगदर्शनेन तीरार्थेऽपि गङ्गापदस्य शक्तिरस्तीति ज्ञायते। तत्र प्राचुर्येण प्रवाहार्थे गङ्गापदप्रयोगदर्शनात्प्रवाहविशेषे या गङ्गापदस्य शक्तिः सा प्रसिद्धा शक्तिः। तीरार्थे तु गङ्गायां घोष इत्यादौ क्वचिदेव गङ्गापदप्रयोगदर्शनेन तीरे या गङ्गापदस्य शक्तिः सा अप्रसिद्धा शक्तिरित्युच्यते। अप्रसिद्धत्वादेव चामरकोशे कूलं रोधश्च तीरं चेत्यादितीरपर्यायेषु गङ्गाशब्दस्यापाठः संगच्छते। अप्रसिद्धशक्तिस्थले च यदि प्रवाहार्थकं गङ्गापदं केनापि कारणेन तीरार्थमपि बोधयत्विति विशिष्य वक्तुस्तात्पर्यं स्यात्तर्ह्येव गङ्गापदस्य तीरे शक्तिर्गृह्यते नान्यथा। प्रकृतस्थले कम्बुग्रीवादिमदर्थे घटपदस्य प्राचुर्येण प्रयोगदर्शनात् तादृशार्थे घटपदस्य शक्तिः प्रसिद्धा, पटार्थे तु क्वचिदेव घटपदप्रयोगदर्शनेन पटार्थे घटपदस्य या शक्तिः साऽप्रसिद्धा भवति। एवं च पटोपस्थितिरथ च शक्तिज्ञानमित्यनयोः कार्यकारणयोर्मध्ये वक्तृतात्पर्यज्ञानेन व्यवधानाद् घटपदं पटरूपार्थबोधकमित्याकारकशक्तिज्ञानजायमाना पटार्थोपस्थितिर्व्यवधानेनैव जायत इति सा द्वितीयशक्तिज्ञानस्यैव कार्यं, न प्रथमशक्तिज्ञानस्येति बोध्यम्। किं च गङ्गादिपदात्प्रवाहत्वाद्यवच्छिन्नविषयकशाब्दबोधे गङ्गापदनिष्ठप्रवाहत्वाव-

( शक्तिनिर्णयः )

रवारणायाव्यवहितोत्तरत्वघटितत्वे च सुतरामिति वाच्यम् । शक्तिभ्रमानुरोधेन तत्तत्पदतत्तदर्थभेदेन कार्यकारणभावानन्त्यस्य तवापि साम्यात् । लक्षणाकार्यकारणभावकल्पनागौरवं परं तवातिरिच्यते । अथ

---

च्छिन्ननिरूपितशक्तिज्ञानजन्योपस्थितिः कारणं, तीरत्वावच्छिन्नविषयकशाब्दबोधं प्रति गङ्गापदनिष्ठतीरत्वावच्छिन्ननिरूपितशक्तिज्ञानजन्योपस्थितिः कारणमित्यादिरीत्या लक्ष्यार्थस्यानेकत्वात्कार्यकारणभावानेकत्वकल्पना भवतीत्यर्थः । एवं च शाब्दबोधं प्रति शक्तिजन्योपस्थितिः कारणमित्येक एव कार्यकारणभाव इति वदन्तं वैयाकरणं प्रति लक्षणावृत्त्यङ्गीकर्त्राऽनेककार्यकारणभावकल्पनप्रयुक्तं गौरवं प्रदर्शितमिति भावः । ननु लक्षणावृत्त्यनङ्गीकर्तुर्मम मते यद्यपि गौरवं समस्ति तथाऽपि मम मते कार्यकारणभावद्वयं, लक्षणावृत्त्यङ्गीकर्तुस्तव मते तु कार्यकारणभावत्रयमित्येवंरीत्या मदपेक्षयाऽप्यधिकं गौरवं लक्षणावृत्तिस्वीकर्तुर्मतेऽस्तीति प्रदर्शयितुमाह वैयाकरणः—**शक्तिभ्रमानुरोधेनेति** । यदा च घटपदस्य पटार्थे शक्तिरस्तीति कस्यचिद्भ्रमो जातस्तदा घटपदात्पटोपस्थितेः सर्वसंमततया पटोपस्थितिकारणीभूतशक्तिज्ञाने पटपदं पटरूपार्थबोधकं, घटपदं पटरूपार्थबोधकमित्येवं बोधकघटपटादिपदस्य बोध्यपटादेरर्थस्य च निवेश आवश्यक इति घटपटादितत्तत्पदभेदेन घटपटादितत्तदर्थभेदेन चानन्तकार्यकारणभावकल्पप्रयुक्तं गौरवं ममेव लक्षणावृत्तिस्वीकर्तुस्तवाप्यस्त्येव, परं तीरार्थोपस्थितिं प्रति गङ्गापदं लक्षणया तीररूपार्थबोधकमित्येवं लक्षणाज्ञानकार्यकारणभावकल्पनप्रयुक्तं गौरवं मदपेक्षया तवातिरिक्तं भवति । मम तु लक्षणाज्ञानकार्यकारणभावकल्पनं न कर्तव्यं भवति, अप्रसिद्धशक्तिज्ञानकार्यकारणभावेनैव भ्रमस्य लक्षणायाश्च संग्रहात् । एवं च मम प्रसिद्धाप्रसिद्धशक्तिद्वयसंबन्धिकार्यकारणभावद्वयमेव, तव तु पटोपस्थितिं प्रति पटपदं पटरूपार्थबोधकमित्येवं प्रसिद्धशक्तिज्ञानकार्यकारणभावोऽस्त्येव, शक्तिभ्रमदशायां घटपदाज्जायमानपटोपस्थितिनिर्वाहार्थं पटोपस्थितिं प्रति घटपदं पटरूपार्थबोधकमित्याकारककार्यकारणभावोऽप्यावश्यकः, अथ च तीरार्थोपस्थितिं प्रति गङ्गापदं लक्षणया तीररूपार्थबोधकमित्याकारकलक्षणाज्ञानकार्यकारणभावस्तृतीयोऽधिक इति कार्यकारणभावत्रयमिति भावः । यथा लक्षणानङ्गीकर्तृवैयाकरणमते शाब्दबोधं प्रति शक्तिजन्योपस्थितिः कारणं, पदार्थोपस्थितिं प्रति च शक्तिज्ञानं कारणमित्येवमेक एव कार्यकारणभावस्तथा लक्षणाङ्गीकर्तुर्ममापि मत एक

**वृत्तिजन्योपस्थितित्वेनैव शाब्दबोधहेतुता वृत्तिज्ञानत्वेन च पदार्थोपस्थितिकारणतेत्येवं मया वाच्यमिति चेन्न । शक्तिलक्षणान्यतरत्वस्य शाब्दबोधहेतुपदार्थोपस्थित्यनुकूलपदपदार्थसंबन्धत्वस्य वा वृत्तित्वस्य कारणतावच्छेदकत्वात्—शक्तित्वमपेक्ष्य गौरवात् । शाब्दबोधहेतुताव-**

---

एव कार्यकारणभाव इत्याह—**अथ वृत्तिजन्येत्यादि** । शाब्दबोधं प्रति वृत्तिजन्यपदार्थोपस्थितिः कारणं, पदार्थोपस्थितिं प्रति च वृत्तिज्ञानं कारणमित्येवं सामान्यतः कल्पनादेक एव कार्यकारणभावो मया लक्षणाङ्गीकर्त्रा स्वीक्रियते । उपस्थितित्वेनैवेत्येवकारेण, शक्तिज्ञानजन्योपस्थितित्वेन लक्षणाज्ञानजन्योपस्थितित्वेन चेत्येवं पार्थक्येन शाब्दबोधहेतुत्वस्य व्यावृत्तिः । तथा च लक्षणावृत्तिस्वीकर्तुर्ममापि मत एक एव कार्यकारणभाव इति न गौरवमिति चेत-देतत्खण्डयितुमाह—**इति चेन्नेति** । **शक्तिलक्षणान्यतरेति** । अयं भावः—शक्तिजन्यपदार्थोपस्थितौ, लक्षणाजन्यपदार्थोपस्थितौ च शक्तिलक्षणोभयगतवृत्तित्वावच्छिन्नजन्यत्वस्य सत्त्वादेक एव कार्यकारणभाव इति हि तवाऽऽशयः । परं वृत्तिजन्यपदार्थोपस्थितिरित्यत्र शाब्दबोधहेतुपदार्थोपस्थितिकारणं या वृत्तिस्तन्निष्ठकारणताया अवच्छेदकं वृत्तित्वं वाच्यम् । परं तु वृत्तित्वं नाम किमिति तत्स्वरूपजिज्ञासायां शक्तिलक्षणान्यतरत्वं, अथवा शाब्दबोधे हेतुर्या पदार्थोपस्थितिस्तदनुकूलस्तज्जनको यः पदपदार्थयोः संबन्धस्तत्त्वं वृत्तित्वमिति वक्तव्यम् । किं तु तादृशवृत्तित्वस्य कारणतावच्छेदकत्वस्वीकारे गौरवं भवतीत्याह—**गौरवादिति** । अयमर्थः—अन्यतरत्वस्य द्विभिन्नभिन्नत्वमर्थः । यथा घटः पटो वा घटपटान्यतरो भवति । द्वाभ्यां घटपटाभ्यां भिन्नो यः पाषाणादिस्तद्भिन्नत्वं घटे वा पटे वा इति घटप्रतियोगिकः पटप्रतियोगिकश्चेत्येवं प्रतियोगिभेदभिन्नो यो भेदस्तादृशभेदद्वयावच्छिन्ना या पाषाणादिनिष्ठा प्रतियोगिता, तादृशप्रतियोगिताकभेदवान् घटः पटो वा भवति, तद्वच्छक्तिलक्षणान्यतरत्वस्य शक्तिलक्षणाभ्यां भिन्नो पाषाणादिस्तद्भिन्नत्वं शक्तौ लक्षणायां च वर्तत इति कृत्वा शक्तिलक्षणाप्रतियोगिकभेदद्वयावच्छिन्नप्रतियोगिताकभेदवत्त्वाभिन्नस्य शक्तिलक्षणान्यतरत्वरूपस्य, शाब्दबोधहेत्वित्यादिसंबन्धत्वमित्यनेनोक्तस्य वा वृत्तित्वस्य शक्तित्वापेक्षया गुरुशरीरत्वादित्यर्थः । तथा चास्मदभिप्रेतशाब्दबोधजनकतात्वरूपशक्तित्वापेक्षया निरुक्तस्य द्विविधवृत्तित्वस्य गुरुत्वान्न शाब्दबोधं प्रति वृत्तिजन्यपदा-

**च्छेदकस्य पदार्थोपस्थितिवृत्तेरज्ञाने तद्घटितकार्यकारणभावग्रहस्या-**

र्थोपस्थितिः कारणमित्येवं कार्यकारणभावो वक्तुं युक्त इति भावः । एवं पूर्वोक्तद्विविधवृत्तित्वे गौरवलक्षणं दूषणमभिधाय, शाब्दबोधहेतुपदार्थोपस्थित्यनुकूले-त्यादिना यद्द्वितीयं वृत्तित्वस्वरूपमुक्तं तत्र दूषणान्तरमभिधत्ते—**शाब्दबोधहेतुतावच्छेदकस्य पदार्थोपस्थितिवृत्तेरज्ञान इति** । शाब्दबोधं प्रति पदार्थोपस्थितिः कारणं, पदार्थोपस्थितिं प्रति च वृत्तिज्ञानं कारणमित्येवं शाब्दबोधे कार्यकारणभावमुक्त्वा शाब्दबोधकारणपदार्थोपस्थितावपि कार्यकारणभावस्योक्तत्वाच्छाब्दबोधे न केवलपदार्थोपस्थितिः कारणं, किं तु वृत्तिज्ञानजन्यपदार्थोपस्थितिः कारणमिति सिध्यति । तथा च वृत्तिज्ञानजन्यपदार्थोपस्थितौ शाब्दबोधकारणता, तादृशकारणताया अवच्छेदकं—वृत्तिज्ञानजन्यपदार्थोपस्थितित्वम् । एतदेव शाब्दबोधहेतुतावच्छेदकम् । पदार्थोपस्थितिवृत्तेरिति पदार्थोपस्थितौ वृत्तिः स्थितिर्यस्येति बहुव्रीहिणा शाब्दबोधहेतुतावच्छेदकस्य विशेषणम् । बहुव्रीहेर्भाषितपुंस्कत्वात्पुंवत्त्वम् । तथा च पदार्थोपस्थितिनिष्ठस्य शाब्दबोधहेतुतावच्छेदकस्यवृत्तिज्ञानजन्यपदार्थोपस्थितित्वरूपस्याज्ञाने—ज्ञानाभावे सतीत्यर्थः । **असंभवादिति** । अयं भावः—हेतुतावच्छेदकं—कारणतावच्छेदकम् । 'यद्धर्मविशिष्टं कारणं भवति स धर्मः कारणतावच्छेदकः' यथा घटं प्रति दण्डत्वधर्मविशिष्ट एव दण्डः कारणमतो दण्डत्वं कारणतावच्छेदकम् । इति नियमादवच्छेदकज्ञानं विनाऽवच्छेद्यज्ञानं न संभवति । प्रकृतस्थले द्वितीयवृत्तित्वलक्षणे पदार्थोपस्थित्यनुकूलस्तज्जनको यः पदपदार्थयोः संबन्धस्तत्त्वं वृत्तित्वमिति पदार्थोपस्थितिवृत्त्योः कार्यकारणभावो निर्दिष्टः । तत्र वृत्तिनिष्ठकारणताया अवच्छेदकं वृत्तित्वं वक्तव्यम् । परं तु निरुक्तवृत्तित्वस्य शक्तित्वापेक्षया गुरुत्वाद् गुरुधर्मस्य च 'संभवति लघौ गुरौ तदभावः' लघुधर्मे अवच्छेदकत्वकल्पने संभवति गुरुधर्मेऽवच्छेदकत्वं न कल्पनीयम्, अत एव प्रमेयवह्निमान् धूमादित्यत्र प्रमेयवह्नित्वस्य गुरुधर्मत्वात्तत्र साध्यतावच्छेदकत्वमनादृत्य प्रमेयवह्नित्वसमानियतस्य केवलवह्नित्वस्यैव साध्यतावच्छेदकत्वं स्वीकृतं लघुत्वात्, इति नियमेनानवच्छेदकत्वाद्वृत्तित्वरूपमवच्छेदकमप्रसिद्धमिति कारणतावच्छेदकस्याज्ञानाद् वृत्तिनिष्ठकारणत्वं दुर्ग्रहं, कारणत्वज्ञानस्य कारणतावच्छेदकज्ञानाधीनत्वात् । तथा च

कारणत्वेन वृत्तेरज्ञानादवृत्तिः कारणमिति वक्तुमशक्यं, अतः पदार्थोपस्थितिवृत्त्योः कार्यकारणभावाज्ञानम् । एतादृशवृत्तिज्ञानकार्यकारणभावाज्ञानादेव च वृत्तिज्ञानघटितस्य वृत्तिज्ञानजन्यपदार्थोपस्थितित्वरूपस्य शाब्दबोधकारणतावच्छेदकस्याज्ञानं, वाक्यार्थज्ञानं प्रति वाक्यघटकीभूतयावत्पदपदार्थज्ञानस्य कारणत्वात्, तथा च स्वघटकीभूतवृत्तिज्ञानाभावप्रयोज्यो वृत्तिज्ञानजन्यपदार्थोपस्थितित्वरूपशाब्दबोधकारणतावच्छेदकज्ञानाभावः, तादृशकारणतावच्छेदकज्ञानाभावादवच्छेदकज्ञानाधीनाया अवच्छेद्यायाः पदार्थोपस्थितिनिष्ठायाः शाब्दबोधकारणताया अप्यज्ञानाच्छाब्दबोधं प्रति पदार्थोपस्थितिः कारणमित्यस्य वक्तुमशक्यत्वेन शाब्दबोधवृत्तिज्ञानजन्यपदार्थोपस्थित्योर्मिथः कार्यकारणभावस्य सुतरां दुर्वचत्वात् । वृत्तिज्ञानजन्यपदार्थोपस्थितेः कारणत्वेन, शाब्दबोधस्य च कार्यत्वेन ज्ञानाभावादिति भावः । अत्र शाब्दबोधहेतुतावच्छेदकस्य पदार्थोपस्थितिहेतुवृत्तेरिति पाठोऽपि दृश्यते । तत्रावच्छेदकस्य हेतुवृत्तेरिति च समानाधिकरणे षष्ठ्यौ । तथा च पदार्थोपस्थितिनिष्ठा, या शाब्दबोधहेतुता—शाब्दबोधकारणता, तस्या अवच्छेदकं किमिति जिज्ञासायामाह—**पदार्थोपेति** । पदार्थोपस्थितेर्हेतुभूता या वृत्तिस्तस्या ज्ञानाभावे सतीत्यर्थः । तत्र यद्यपि शाब्दबोधकारणता, पर्याप्तिसंबन्धेन वृत्तिज्ञानजन्यपदार्थोपस्थितिनिष्ठा भवति तथाप्याश्रयतासंबन्धेन तद्घटकवृत्तिनिष्ठाऽपि भवति । यथा घटकारणतायाः पर्याप्तिसंबन्धेन दण्डचक्रचीवरादिनिमित्तसमुदाये सत्त्वेऽपि आश्रयतासंबन्धेन केवलदण्डेऽपि तत्सत्त्वाद् घटकारणता दण्डे इत्युच्यते तद्वदिति भावः । तादृशवृत्तेरज्ञानं च कारणत्वेनेत्यादि सर्वं पूर्वोक्तरीत्या बोध्यम् । वस्तुतो व्यधिकरणे षष्ठ्यौ, तथा च शाब्दबोधहेतुतावच्छेदकस्येति संबन्धार्थे षष्ठीति हेतुतावच्छेदकसंबन्धिनी नाम शाब्दबोधहेतुतावच्छेदककुक्षिप्रविष्टा या पदार्थोपस्थितिहेतुवृत्तिरित्यर्थो युक्त इति मे भाति । यद्वा नागृहीतविशेषणा बुद्धिर्विशेष्य उपजायत इति न्यायेन विशिष्टबुद्धिं प्रति विशेषणज्ञानस्य कारणत्वाद्विशेषणीभूतवृत्तित्वज्ञानं विना तद्विशिष्टाया वृत्तेर्ज्ञानासंभवादादौ वृत्तित्वज्ञानमावश्यकमिति पर्यालोच्य शाब्दबोधहेत्वित्यादिना पदपदार्थयोः संबन्धत्वमित्यन्तेन द्वितीयलक्षणेन वृत्तित्वस्वरूपं प्रदर्शितम् । तत्र पदार्थोपस्थितौ शाब्दबोधहेत्विति विशेषणदानात्पदार्थोपस्थितौ शाब्दबोधहेतुत्वज्ञानावश्यकत्वेन शाब्दबोधहेतुत्वविशिष्टा या पदार्थोपस्थितिस्तदनुकूलस्तज्जनको यः पदपदार्थयोः संबन्धस्तत्त्वं वृत्तित्वमित्यर्थः । तथा च पदपदार्थसंबन्धत्वरूपवृत्तित्वज्ञाने शाब्दबोधपदार्थोप-

( शक्तिनिर्णयः )

संभवात्। अथ ममापि शक्तिज्ञानत्वेनैव हेतुता शक्यसंबन्धरूपलक्ष-

---

स्थित्योः कार्यकारणभावज्ञानं कारणं, शाब्दबोधपदार्थोपस्थित्योः कार्यकारणभावज्ञाने च पदपदार्थसंबन्धत्वरूपवृत्तित्वज्ञानं कारणमित्यन्योन्याश्रयेण वृत्तित्वज्ञानासंभवेन तद्विशिष्टवृत्तिज्ञानस्याप्यसंभवेन शाब्दबोधं प्रति वृत्तिज्ञानजन्यपदार्थोपस्थितिः कारणमित्येवं वृत्तिज्ञानघटितः शाब्दबोधपदार्थोपस्थित्योः कार्यकारणभावो दुर्वच इत्यर्थो बोध्यः।

ननु लक्षणाङ्गीकर्तृमतेऽपि पदार्थोपस्थितिं प्रति शक्तिज्ञानं कारणमथ च लक्षणाज्ञानं कारणमित्येवं भेदेन न पदार्थोपस्थितिकारणता, किं तु पदार्थोपस्थितिं प्रति शक्तिज्ञानं कारणमित्येवमेकरूपेण शक्तिज्ञानत्वेनैव पदार्थोपस्थितिकारणतेत्याशङ्कते—**अथ ममापीति**। लक्षणानङ्गीकर्तुस्तवेव लक्षणाङ्गीकर्तुर्ममापीत्यर्थः। अत्र मत इति शेषः। **शक्तिज्ञानत्वेनैवेति**। न तु शक्तिज्ञानत्वेन, लक्षणाज्ञानत्वेन चेत्यर्थः। **हेतुतेति**। शाब्दबोधं प्रति, तदनुकूलपदार्थोपस्थितिं प्रति च हेतुतेत्यर्थः। तथा च नैयायिकादिमतेऽपि शाब्दबोधं प्रति शक्तिजन्योपस्थितिः कारणं, पदार्थोपस्थितिं प्रति च शक्तिज्ञानं कारणमित्येकैक एव कार्यकारणभाव इति भावः। ननु 'शक्यादशक्योपस्थितिर्लक्षणा' इति पक्षे लक्षणायाः शक्तिघटितत्वं नास्ति। प्रवाहादिरूपो यो वस्तुतो गङ्गादिपदशक्यार्थस्तस्मादेव तीराद्यर्थोपस्थितेः संभवात्। नास्ति च शक्तिज्ञानस्य तीराद्यर्थोपस्थितिं प्रत्युपयोग इत्याशङ्क्याऽऽह—**शक्यसंबन्धेति**। शक्यस्य—शक्त्योपस्थितार्थस्य, संबन्धः—तत्संबन्धिनि संबन्धः, अर्थान्मुख्यार्थवाचकपदस्यामुख्येऽर्थे या वृत्तिः सा लक्षणा। शब्दस्यार्थबोधनाय द्वौ व्यापारौ मुख्योऽमुख्यश्च। तत्र पदेन सह पदार्थस्य यः साक्षात्संबन्धः स मुख्यो व्यापारः, शक्तिरभिधेति च भण्यते। यत्र तु मुख्येऽर्थेऽन्वयाद्यनुपपत्तिस्तत्रामुख्यो व्यापारो गृह्यते स एव लक्षणेत्युच्यते। अर्थात् पदेन सह पदार्थस्य यः शक्यपरम्परया संबन्धः स लक्षणेत्यर्थः। यथा गङ्गायां घोषं इत्यत्र गङ्गापदस्य शक्यार्थो जलप्रवाहविशेषः, तत्र घोषपदशक्यार्थस्याऽऽभीरपल्लीरूपस्यान्वयाद्यनुपपत्तिरस्ति, न हि जलप्रवाहे घोषस्य साक्षात्संबन्धः संभवति। तथा सति तस्यापि प्रवहणापत्तेः। प्रवाहरूपस्य मुख्यार्थस्य तु साक्षात्संबन्धस्तीरे गृहीतः, तस्माद्यः प्रवाहस्य तीरे संबन्धः स एव गङ्गापदस्य तीररूपार्थबोधनाय लक्षणाव्यापार इत्यर्थः। अत्र

णायां शक्तेरपि प्रवेशादिति चेन्न । शक्तिज्ञानपदार्थोपस्थित्योः कार्यकारणभावे समानविषयत्वस्याऽऽवश्यकत्वात् । अन्यथा गङ्गातीरयोः संबन्धाग्रहवतो गङ्गापदशक्तिं जानतोऽपि गङ्गायां घोष इति वाक्यात्तीरबोधप्रसङ्गः । शक्तिज्ञानस्य हेतोः सत्त्वात् । अपि च घटमानये-

---

शक्येत्यस्य शक्तयोपस्थितेत्यर्थाद्विशेषणतया शक्तेः प्रवेशः । तथा च गङ्गापदशक्यप्रवाहसंबन्धितीरमित्याकारक एव लक्षणाज्ञाने हेतुः, न तु प्रवाहसंबन्धितीरमित्याद्याकारक इत्याशयः । एवं च स्वशक्यसंबन्धरूपलक्षणायां विशेषणतया शक्तेः प्रवेशाल्लक्षणास्थलेऽपि पदार्थोपस्थितौ परम्परया शक्तिज्ञानमेव कारणं शाब्दबोधे च शक्तिजन्यपदार्थोपस्थितिः कारणमिति शक्तित्वेनव कार्यकारणभाव इति, तदश्रद्धेयमित्याह—**इति चेन्नेति** । **शक्तिज्ञानेति** । पदार्थोपस्थितिशक्तिज्ञानयोः कार्यकारणभाव इत्यर्थः । **समानविषयत्वस्येति** । तदर्थविषयकोपस्थितिं प्रति तदर्थनिरूपिततत्पदनिष्ठशक्तिज्ञानं कारणम्, घटरूपार्थोपस्थितिं प्रति घटरूपार्थनिरूपितघटपदनिष्ठा या शक्तिस्तज्ज्ञानं कारणमिति तदर्थः । अत्र घटादिपदस्य घटत्वविशिष्टार्थे शक्तिरिति घटत्वविशिष्टविषयकशक्तिग्रहसत्त्वात्पदार्थोपस्थितिरपि घटत्वविशिष्टविषयिकैव स्वीक्रियते प्रत्यासत्तिन्यायात् । तथा च यद्विषयकः शक्तिग्रहस्तद्विषयिकैव पदार्थोपस्थितिरिति उपस्थितिशक्तिग्रहयोः समानविषयकत्वमिति नियमः सिध्यति । एतन्मूलक एवोपस्थितिशक्तिग्रहयोः समानाकारकत्वप्रवादः । एवं च घटत्वविशिष्टविषयकः शक्तिग्रहश्चेत्तर्हि घटत्वविशिष्टविषयिकैवोपस्थितिः, न तु तीरत्वविशिष्टविषयिकेति भावः । एवं घटत्वविशिष्टघटविषयिकोपस्थितिश्चेत्तर्हि शाब्दबोधोऽपि घटत्वविशिष्टघटविषयक एव, नान्यविषयक इत्यपि बोध्यम् । मूले शक्तिज्ञानपदार्थोपस्थित्योरित्यस्य शक्तिज्ञानशाब्दबोधयोरुपलक्षणत्वात् । **अन्यथेति** । उक्तवैपरीत्ये । शक्तिज्ञानपदार्थोपस्थित्योः कार्यकारणभावे समानविषयकत्वास्वीकार इत्यर्थः । **संबन्धाग्रहवत इति** । अनेन लक्षणाख्यवृत्तिज्ञानाभावः सूचितः । गङ्गातीरयोः संबन्धग्रहे तु प्रवाहो गङ्गापदशक्य इति ज्ञानात्तीरोपस्थितिरिष्टैवेत्यपि सूचितम् । येन जलप्रवाह—तीरयोः संबन्धो नैव गृहीतः, अथ च जलप्रवाहविशेषे गङ्गापदस्य शक्तिर्येन गृहीता, तादृशस्यापि पुरुषस्य गङ्गापदात्तीरबोधापत्तिः स्यात् **सत्त्वादिति** । पदार्थोपस्थितिहेतुभूतं यच्छक्तिज्ञानं तस्य सत्त्वादित्यर्थः । शक्तिज्ञानपदार्थोप-

ति वाक्यं हास्तिनं च स्मरतो घटपदादिभ्यो घटादेर्गजाद्धस्तिपकस्य

स्थित्योः समानविषयकत्वनियमाभावादिति भावः । यस्य पुरुषस्य देवदत्तश्चैत्रपितेति चैत्रेण सह विद्यमानस्य देवदत्तसंबन्धस्य ज्ञानमस्ति, परं तु मैत्रेण सह विद्यमानो यश्चैत्रसंबन्धस्तस्य ज्ञानं सुतरां नास्ति सोऽसौ पुरुषो देवदत्तदर्शनात्तत्संबन्धिनं चैत्रं स्मरेदिति युक्तं, चैत्रेण सह विद्यमानस्य देवदत्तसंबन्धस्य तेन गृहीतत्वात् , किं तु चैत्रस्मरणद्वारा तत्संबन्धिनं मैत्रं कथमपि न स्मरेत् , मैत्रेण सह विद्यमानस्य चैत्रसंबन्धस्य तेन सर्वथाऽगृहीतत्वात् । तद्वद् गङ्गापदस्य प्रवाहेण सह विद्यमानो यः संबन्धः स येन ज्ञातः, किंतु तीरेण सह वस्तुतो विद्यमानो यः प्रवाहसंबन्धः स तु नैव ज्ञातः, सोऽयं ज्ञानाज्ञानवान् पुरुषो गङ्गापदश्रवणात्तत्संबन्धिनं प्रवाहं स्मरेत् , परं प्रवाहस्मरणद्वारा तत्संबन्धि तीरं नैव स्मरेत् , तीरे विद्यमानस्य प्रवाहसंबन्धस्य तेन सर्वथाऽगृहीतत्वादित्यर्थः । परं तु समानविषयकत्वमनिवेश्य पदार्थप्रतीतिं प्रति शक्तिज्ञानं कारणमित्येतावत्येव कार्यकारणभावेऽङ्गीक्रियमाणेऽत्र शक्तिज्ञानसत्त्वाद् गङ्गापदात्प्रवाहप्रतीतेरिव तीरप्रतीतेरप्यापत्तिर्दुर्निवारा स्यादिति भावः । पदार्थप्रतीतिं प्रति समानविषयकशक्तिज्ञानं कारणमित्येवं समानविषयकत्वं निवेश्य कार्यकारणभावे स्वीकृते तु नायं दोषो भवति । गङ्गापदनिष्ठशक्तिग्रहस्य प्रवाहत्वविशिष्टार्थविषयकत्वात्पदार्थप्रतीतेरपि प्रवाहत्वविशिष्टार्थविषयकत्वस्यैव न्याय्यत्वेन गङ्गापदशक्यसंबन्धि तीरमित्याकारकलक्षणाज्ञानस्य तीरत्वविशिष्टार्थविषयकत्वेन तीरत्वविशिष्टार्थप्रतीतेर्यथाकथंचिच्छक्तिविषयकत्वेऽपि शक्तिग्रहेण समानविषयकत्वाभावान्न शक्तिज्ञानात्प्रवाहस्येव तीरार्थप्रतीतिः । शक्तिज्ञानस्य प्रवाहत्वविशिष्टार्थविषयकत्वं, पदार्थप्रतीतेस्तु तीरत्वविशिष्टार्थविषयकत्वमिति शक्तिज्ञानपदार्थोपस्थित्योर्विभिन्नविषयकत्वेन न शक्तिज्ञानेन तीरोपस्थितिनिर्वाहः संभवतीति भावः । गङ्गापदप्रवाहयोः संबन्धो गृहीतः, प्रवाहतीरयोः संबन्धस्तु न गृहीतस्तादृशस्थले प्रवाहतीरयोः संबन्धाज्ञानेन लक्षणाया अभावान्न तीरस्य बोधः, किं तु प्रवाहस्यैव बोधः । अस्माकं मते तु लक्षणाया अभाव एव । प्रवाह इव तीरेऽपि गङ्गापदस्य शक्तेः सत्त्वात्प्रवाहस्येव तीरस्यापि गङ्गापदादेव शक्त्यैवोपस्थितिरिति बोध्यम् । दूषणान्तरमाह—**अपि चेति । स्मरत इति** घटमानयेति वाक्यं गजव्यक्तिं च समूहालम्बनविधया

**च समूहालम्बनस्मरणवतो घटानयनवद्धस्तिपकस्यापि शाब्दबोधापत्तिः । समूहालम्बनरूपायां पदार्थोपस्थितौ वृत्तिजन्यत्वसत्त्वात् । तथा च विषयतया शाब्दबोधं प्रति तदंशविषयकवृत्तिजन्योपस्थिति-**

---

स्मरत इत्यर्थः । समूहालम्बनं नाम नानाप्रकारतानिरूपितं नानामुख्यविशेष्यताशालि ज्ञानम् । आलम्बनपदमत्र विषयपरं, समूहविषयकस्मरणात्मकज्ञानवत इति यावत् । वाक्यगजोभयविषयकत्वेऽपि स्मरणात्मकं ज्ञानमेकमेवात्रेति भावः । **समूहालम्बनस्मरणवत इति** । अत्र घटपदजन्यघटः, एकसंबन्धिज्ञानमिति न्यायेन गजपदजन्यहस्तिपकश्चेत्येतदुभयविषयकत्वं, घटहस्तिपकोभयविषयकत्वं स्मरणस्येति बोध्यम् । **घटादिपदेभ्य इति** । स्मृतिविषयघटमानयेति वाक्यघटकघटादिपदेभ्य इत्यर्थः । **गजादिति** । स्मृतिविषयगजव्यक्तेश्चेत्यर्थः । **घटादेरिति** । घटस्य, आनयनक्रियायाश्च पदनिष्ठशक्तिज्ञानादुपस्थितिः, हस्तिपकस्य तु नियाम्यनियामकभावसंबन्धेनोपस्थितिर्न तु शक्तिज्ञानात्, तथाऽपि समूहालम्बनात्मके पदार्थोपस्थितिरूपे एकस्मिन्ज्ञाने पदशक्तिजन्यत्वसत्त्वाद् घटानयनवद्धस्तिपकस्यापि शाब्दबोधापत्तिः स्यात् । एतद्दोषपरिहारार्थं तद्विषयकशाब्दबोधे जननीये तदंशविषयकवृत्तिजन्योपस्थितिः कारणमित्येवं कार्यकारणभावो वक्तव्यः यथा प्रकृतस्थले घटविषयकशाब्दबोधे जननीये घटस्य घटविषयकवृत्तिजन्योपस्थितिरस्ति, तथा हस्तिपकविषयकशाब्दबोधे जननीये हस्तिपकस्य हस्तिपकविषयकवृत्तिजन्योपस्थितिर्नास्ति, किं त्वेकसंबन्धिज्ञानन्यायेन स्मृतिविषयगजव्यक्तेः सकाशान्नियाम्यनियामकभावसंबन्धेन गजनिष्ठहस्तिपकस्य भानान्न प्रकृतस्थले घटानयनवद्धस्तिपकस्य शाब्दबोध इति भावः । यद्वा प्रकृतस्थले समूहालम्बनज्ञानरूपायां पदार्थोपस्थितौ वृत्तिज्ञानजन्यत्वसत्त्वाद्धस्तिपकोपस्थितौ वृत्तिज्ञानजन्यत्वसत्त्वेऽपि यथा घटोपस्थितिर्घटविषयत्वावच्छिन्ना, न तथा हस्तिपकोपस्थितिर्हस्तिपकविषयत्वावच्छिन्ना, किं तु गजनिष्ठत्वसंबन्धावच्छिन्ना । नापि वृत्तिज्ञाननिष्ठजनकतायां हस्तिपको विषयतयाऽवच्छेदकः, वृत्तिज्ञाने धर्मित्वेन घटस्येव धर्मित्वेन हस्तिपकस्य ज्ञानाभावान्नोक्तबोधापत्तिरिति बोध्यम् । **वृत्तिजन्यत्वसत्त्वादिति** । शक्तिज्ञानजन्यत्वसत्त्वादित्यर्थः । अत्र शक्तिजन्यत्वेति वक्तव्ये वृत्तिजन्यत्वेत्युक्तिस्तु वृत्तिजन्योपस्थितिर्हेतुरिति पक्षेऽपि दोषप्रदर्शनार्थेति बोध्यम् । एवं च शक्तिज्ञानपदार्थोपस्थितिशाब्दबोधाः समानविषयका

हेतुरिति वाच्यम् । एवं च लक्षणाया अपि शक्तिज्ञानत्वेन हेतुत्वमसं-

---

एवेति नियमः फलतीति भावः । एवं चेति । घटादिहस्तिपकोभयसमूहालम्बनात्मकपदार्थोपस्थितिरूपकारणाद्धस्तिपकस्य शाब्दबोधो मा भूदित्येतदर्थं तद्विषयकशाब्दबोधं प्रति तदंशविषयकवृत्तिजन्योपस्थितिर्हेतुः ( हस्तिपकांशस्यापि वृत्तिजन्यैवोपस्थितिर्हेतुः )इत्येवं कार्यकारणभावस्वीकारावश्यकत्वे चेत्यर्थः । हेतुत्वमसंभवादिति । पदार्थोपस्थितिं प्रति शक्तिज्ञानस्य कारणत्वाल्लक्षणायां च शक्तेः प्रवेशाद्गङ्गायां घोष इत्यादिलक्षणास्थले गङ्गापदाच्छक्त्या प्रवाहस्येव तीरस्यापि गङ्गापदशक्तिज्ञानादेवोपस्थिस्थितिर्भवतीति लक्ष्यार्थोपस्थितिं प्रत्यपि शक्तिज्ञानमेव कारणमिति लक्षणाया अपि शक्तिज्ञानत्वेन हेतुत्वं यत्पूर्वमुक्तं तन्न संभवतीत्यर्थः । अयं भावः—समूहालम्बनविषया घटहस्तिपकयोरुपस्थितिस्थले घटबोधवद्धस्तिपकस्यापि बोधः प्रसक्तस्तद्वारणार्थं तद्विषयकशाब्दबोधं प्रति तद्विषयकवृत्तिज्ञानजन्योपस्थितिर्हेतुरित्यवश्यं वक्तव्यम् । तदर्थस्तु घटविषयकशाब्दबोधं प्रति घटपदं घटरूपार्थे शक्तमित्येवं यद् घटविषयकवृत्तिज्ञानं तादृशवृत्तिज्ञानजन्या या घटार्थोपस्थितिः सा, घटमानयेत्यादौ घटविषयकशाब्दबोधे कारणमिति । समूहालम्बनरूपायां घटहस्तिपकरूपपदार्थोपस्थितौ घटांशे यथा घटविषयकवृत्तिज्ञानजन्योपस्थितिर्वर्तते तथा हस्तिपकांशे हस्तिपकपदं गजनियन्तरि शक्तमित्येवं यद्धस्तिपकविषयकवृत्तिज्ञानं तादृशवृत्तिज्ञानजन्योपस्थितिर्नास्ति, हस्तिपकस्य पदादनुपस्थितेः, किं तु स्मृतिविषयभूतगजव्यक्तेः सकाशात्तन्नियन्तुर्हस्तिपकस्य स्मरणं जातमित्येव, तथा च वृत्तिज्ञाने घटस्येव हस्तिपकस्य विषयतासंबन्धेन भानाभावान्न यथा घटवद्धस्तिपकस्य बोधः । तथा प्रवाहोपस्थितौ गङ्गापदं प्रवाहविशेषे शक्तमित्येवं विषयतासंबन्धेन गङ्गापदनिष्ठवृत्तिज्ञानजन्यत्वसत्त्वेऽपि तीरोपस्थितौ विषयतया गङ्गापदनिष्ठवृत्तिज्ञानजन्यत्वं नास्ति, इति कृत्वा तीरोपस्थितौ गङ्गापदशक्यप्रवाहसंबन्धीत्येवं गङ्गापदनिष्ठवृत्तिज्ञानजन्यत्वसत्त्वेऽपि गङ्गापदनिष्ठतीरविषयकवृत्तिज्ञानजन्यत्वाभावान्न शक्तिज्ञानाल्लक्ष्यार्थोपस्थितिः संभवति । अन्यथा प्रवाहविषयकं वृत्तिज्ञानं, उपस्थितिस्तु तीरस्येति अनुचितं स्यात् । यद्विषयकं वृत्तिज्ञानं तद्विषयिकाया एवोपस्थितेर्न्याय्यत्वादिति भावः । मुख्ये लक्ष्ये चेति सर्वत्रार्थे पदस्य शक्तिरेवेति शक्तिमात्रवादिनामस्माकं गङ्गापदस्य तीरेऽपि शक्तिरेव, तथा च तीरविषयकं वृत्तिज्ञानं तीरविषयक एव च

भवदुक्तिकमिति । एतेन शक्तिप्रयोज्यैवोपस्थितिर्हेतुरिति न लक्षणाज्ञाने कार्यकारणभावान्तरं ममापीति परास्तम् । प्रयोज्यत्वस्यानतिप्रसक्तस्य दुर्वचत्वाच्चेत्यादिकं विस्तरेण प्रपञ्चितं भूषणे ॥ १ ॥ (३७)

नन्वेवं भाषादितो बोधदर्शनाद्बोधकतारूपा शक्तिस्तत्रापि स्यात् ।

---

शाब्दबोध इति न दोषः । एतेनेति । शक्तिलक्षणात्मकद्विविधवृत्तिज्ञानस्यैकरूपेण हेतुत्वासंभवेनेत्यर्थः । उक्तस्थले हस्तिपकस्य शाब्दबोधापत्तिरूपदूषणेन शक्यार्थोपस्थितिं प्रति शक्तिज्ञानस्येव लक्ष्यार्थोपस्थितिं प्रत्यपि शक्तिज्ञानस्य हेतुत्वासंभवेनेति यावत् । शक्तिप्रयोज्यैवेति । प्रयोज्यत्वं साक्षात् परम्परया वोत्पन्नत्वं, जन्यत्वं तु साक्षादेवोत्पन्नत्वमिति ज्ञेयम् । तथा च गङ्गायां घोष इत्यादिलक्षणास्थले स्वशक्यसंबन्धात्मकलक्षणायाः शक्तिज्ञानजन्यत्वेन लक्षणाज्ञानजन्यतीरविषयकोपस्थितौ शक्तिज्ञानप्रयोज्यत्वस्य( परम्परया शक्तिज्ञानजन्यत्वस्य )सत्त्वान्न लक्षणावादिमते तत्र कार्यकारणभावान्तरकल्पना, किं तु शाब्दबोधं प्रति शक्तिजन्योपस्थितिः कारणं, पदार्थोपस्थितिं प्रति च शक्तिज्ञानं कारणमित्येवमेकविध एव कार्यकारणभावः, न तु शक्तिज्ञानत्वेन लक्षणाज्ञानत्वेन चेति पार्थक्येन कार्यकारणभावो लक्षणाङ्गीकर्तुर्ममापीति यदुच्यते तत्परास्तं निराकृतं वेदितव्यमित्यर्थः । निराकरणे हेतुमाह—अनतिप्रसक्तस्येत्यादि । अतिप्रसङ्गरहितस्य प्रयोज्यत्वस्य वक्तुमशक्यत्वादित्यर्थः । अयं भावः—घटादं कम्बुग्रीवादिमति शक्तमित्येवं शक्तिज्ञानवतः पुरुषस्य घटपदात्कम्बुग्रीवादिमदर्थोपस्थितौ सत्यां तेन घटेन स्वसंबद्धस्याऽऽकाशस्योपस्थितौ च तादृशाकाशस्यापि घटपदजन्यशाब्दबोधविषयत्वापत्तिः स्यात् । तादृशाकाशोपस्थितावपि घटपदनिष्ठशक्तिज्ञानप्रयोज्यतायाः ( परम्परया घटपदनिष्ठशक्तिज्ञानजन्यतायाः) सत्त्वादित्यर्थ इति । अतः शक्तिप्रयोज्यत्वस्य अतिप्रसङ्गरहितस्य दुर्वचत्वमिति तदाह-भूषण इति । वैयाकरणभूषणे विस्तरेण प्रपञ्चितमित्यर्थः ॥ ३७ ॥

बोधजनकत्वमेव शक्तिरिति निष्कृष्टस्वमतेन मूलावतरणिकामाह—नन्विति । एवमिति । बोधजनकत्वस्यैव शक्तित्वे इत्यर्थः । भाषादित इति । गावी गोणी गोतेत्याद्यपभ्रंशात्मकलौकिकशब्देभ्य इत्यर्थः । बोधदर्शनादिति । गाव्यादिशब्देभ्यः सास्नादिमद्गोव्यक्तेर्लोके बोधस्यानुभवसिद्धत्वादित्यर्थः । तत्रापीति । अपभ्रंशात्मकगाव्यादिभाषाशब्देष्वपीत्यर्थः । स्यादिति । बोधजनक-

( शक्तिनिर्णयः )

तथा च साधुताऽपि स्यात्। शक्तत्वस्यैव साधुताया व्याकरणाधिकरणे प्रतिपादनादित्याशङ्कां द्विधा समाधत्ते--

असाधुरनुमानेन वाचकः कैश्चिदिष्यते॥

वाचकत्वाविशेषे च नियमः पुण्यपापयोः॥ २॥ (३८)

असाधुर्गाव्यादिः। अनुमानेन साधुशब्दमनुमाय वाचको बोधकः

---

तद्रूपशक्तिस्वीकार आवश्यकः स्यादित्यर्थः। ईश्वरेच्छा शक्तिरिति मते तु गगरीशब्दाद् बोधोत्पत्तेर्गगरीशब्दाद्घट( घागर )बोधो जायतामितीच्छाया आवश्यकत्वेऽपि तादृशेच्छायां न गगरीशब्दसंबन्धः कल्प्यते, तादृशसंबन्धानुग्राहककोशाद्यभावादिति नापभ्रंशे शक्तिकल्पनातिप्रसङ्ग इति भावः। गगरीत्याद्यपभ्रंशात्मकभाषाशब्देषु शक्तिकल्पनाया इष्टापत्तौ त्वाह--तथा चेति। गावीत्यादिभाषाशब्दानां साधुत्वमपि स्यादित्यर्थः। भाषाशब्दानां साधुत्वमाप्तौ हेतुमाह--शक्तत्वस्यैवेति। व्याकरणाधिकरण इति। अ० १ पा. ३ अ. ९ सू. २७ 'तत्र तत्त्वमभियोगविशेषात्स्यात्' इति जैमिनीयसूत्र इत्यर्थः। तत्र 'एकः शब्दः सम्यग्ज्ञातः सुप्रयुक्तः स्वर्गे लोके कामधुग्भवति' 'तस्माद्ब्राह्मणेन न म्लेच्छितवै--नापभाषितवै, म्लेच्छो ह वा एष यदपशब्दः' इति गुणदोषप्रतिपादकवाक्याभ्यां साधूनेव प्रयुञ्जीत नापशब्दानिति नियममुक्त्वा 'गवाद्या एव साधवः, न तु गाव्यादयः' इत्युक्तम्। गवाद्याः शब्दा व्याकरणशास्त्रसंस्कृता इति संस्कृता इत्युच्यन्ते, नैवं गाव्यादय इति ते भाषाशब्दा इत्युच्यन्ते। तत्र शक्तिग्राहकशिरोमणेर्व्यवहारस्य संस्कृते भाषायां च समानत्वेऽपि संस्कृतस्य सर्वदेशे एकत्वाद्व्याकरणशास्त्रसिद्धत्वाच्च संस्कृत एव शक्तिः कल्प्यते। भाषाणां च तत्तद्देशभेदेन भिन्नत्वात्संस्कृतैः सह पर्यायतापत्तेश्च न तत्र शक्तिः कल्प्यते। न चापभ्रंशाद्बोधो न स्यादिति वाच्यम्। अस्यामेव कारिकायामपभ्रंशानां बोधकत्वप्रकारस्योपपादयिष्यमाणत्वात्। एवं च गवादीनां शक्तत्वाद् गवाद्याः साधव इत्युक्तत्वाच्छक्तत्वमेव साधुत्वमिति पर्यवस्यतीति भावः। द्विधेति। अपभ्रंशानां साधुताऽपि स्यादित्याशङ्कां प्रकारद्वयेन समाधत्ते। तत्रापभ्रंशानां साक्षाद्बोधकत्वानभ्युपगम एकः प्रकारः, तेषां वाचकत्वे इष्टापत्तिरित्यपरः, तत्राऽऽद्यः प्रकारो नैयायिकादिमतेन, द्वितीयः स्वमतेनेति ज्ञेयमित्याह--असाधुरनुमानेनेति। असाधुरिति। गावी गगरीत्यादिरपभ्रंशात्मकभाषाशब्द इत्यर्थः। अनुमानेनेति।

कैश्चिदिष्यते । तथा च लिपिवत्तेषां साधुस्मरण एवोपयोगो न तु साक्षात्तद्वाचकत्वमतो न साधुत्वमिति भावः ।

उक्तं हि वाक्यपदीये–

ते साधुष्वनुमानेन प्रत्ययोत्पत्तिहेतवः ।
तादात्म्यमुपगम्येव शब्दार्थस्य प्रकाशकाः ।
न शिष्टैरनुगम्यन्ते पर्याया इव साधवः ।
न यतः स्मृतिमात्रेण तस्मात्साक्षादवाचकाः ।

---

साधुशब्दमनुमायेत्यर्थः । वाचकः–बोधकः, कैश्चित्––नैयायिकादिभिः, इष्यत इत्यर्थः । असाधुशब्दात्साधुशब्दस्य स्मरणं, स्मृतात्साधुशब्दाच्चार्थप्रतीतिरिति परम्परयाऽसाधुशब्दोऽर्थं बोधयतीति यावत् । तथा च यथा लिपेः शब्दस्मरण एवोपयोगो, न गवाद्यर्थवाचकत्वं तद्वदसाधोः शब्दस्य साधुशब्दस्मरण एवोपयोगो, न साक्षाद्गवाद्यर्थवाचकनेति नापभ्रंशानां साधुत्वमिति भावः । **साधुस्मरण एवोपयोग इति** । अपभ्रंशानां साक्षाद्वाचकत्वं तु नास्ति, तेषां साधुत्वस्याभावादसाधुत्वज्ञानस्य प्रतिबन्धकत्वाद्वित्याशयः । ततश्च साक्षाद्वाचकत्वमेव साधुत्वमिति पर्यवस्यतीत्यर्थः । अत्रार्थे हरिसंमतिमाह–**उक्तं हीति** । **त इति** । अपभ्रष्टशब्दा इत्यर्थः । **साधुष्विति** । विषयसप्तमी । तेन साधुशब्दविषयकं यदनुमानं तद्द्वारेत्यर्थः । **प्रत्ययोत्पत्तीति** । गवाद्यर्थप्रतीतिनिदानानीत्यर्थः । प्रकारान्तरमाह–**तादात्म्यमिति** । शब्दार्थयोस्तादात्म्यं हि साधुशब्द एव । यो यदर्थवाचकस्तत्रैव तदर्थतादात्म्याङ्गीकारात् । अपभ्रंशानां वाचकत्वाभावात्तेष्वर्थतादात्म्यं यद्यपि न संभवति तथापि अर्थतादात्म्यापन्नो यः साधुशब्दः, तादृशसाधुशब्दतादात्म्यात्परम्परयाऽपभ्रंशेऽर्थतादात्म्यमित्यर्थः । **उपगम्येवेति** । गृहीत्वेवेत्यर्थः । अपभ्रंशे साधुशब्दतादात्म्यग्रहस्य भ्रमत्वसूचनाय 'इव' इत्युक्तम् । तेन च तेषां वाचकत्वाभावो ध्वनितः । अर्थवाचक एवार्थतादात्म्याभ्युपगमात् । अस्यायं भावः–गोशब्दे उच्चारणीये वागिन्द्रियापाटवेन गावीत्युच्चारितं, वस्तुतो गोशब्द एवायमिति साधुशब्दतादात्म्येन भासमाना गाव्याद्यसाधुशब्दा गवादिरूपार्थस्य प्रकाशका भवन्तीति । अपभ्रंशानां साक्षाद्वाचकत्वाभावे उपपत्तिं ब्रूते–**न शिष्टैरिति** । शिष्टैः साधवः पर्याया 'माहेयी सौरभेयी गौरुस्रा माता च

( शक्तिनिर्णयः )

अम्बा( बंबं )म्बेति यदा बालः शिक्ष्यमाणः प्रभाषते ।
अव्यक्तं तद्विदां तेन व्यक्तं भवति निर्णयः ।
" एवं साधौ प्रयोक्तव्ये योऽपभ्रंशः प्रयुज्यते ।
तेन साधुव्यवहितः कश्चिदर्थोऽभिधीयते " इति ॥

नन्वपभ्रंशानां साक्षादवाचकत्वे किं मानं शक्तिकल्पकव्यवहारादेस्तुल्यत्वादिति चेत् । सत्यम् । तत्तद्देशभेदभिन्नेषु तेषु शक्तिकल्पने

---

शृङ्गिणी ' इत्यादयो यथा निघण्टुकोशादिना संगृहीताः, तथा ते—अपभ्रंशाः शिष्टैः कोशादिना साधुपर्यायसमुदाये यतो न संगृह्यन्ते ततोऽपभ्रंशाः साक्षान्न वाचका इत्यर्थः । ते साधुष्वित्यादिनोक्तमेवार्थं विशदीकरोति—बंबंबेति यदेति । शब्दोच्चारणे शिक्ष्यमाणो बालो यदा यस्मिन्कालेऽसामर्थ्याद् बंबंबेत्यव्यक्तं प्रभाषते तदा तद्विदां—साधुशब्दं जानतां, तेन—अव्यक्तेन, व्यक्ते साधुशब्दे, स्मृते सतीति शेषः । निर्णय —अर्थनिश्चयो भवतीत्यर्थः । असाधोः साधुशब्दप्रकृतित्वात्सादृश्येन साधुशब्दस्मरणमिति भावः । अत्र बं बं बेति पाठ एव युक्तः, न तु ' अम्बाम्बा ' इति, तस्य—( अम्बाम्बेत्यस्य ) साधुत्वादित्याशयः । न शिष्टैरित्यादिद्वितीयकारिकां व्याचष्टे—एवं साधाविति । एवमिति । इत्थमित्यर्थः त साधौ गवादिशब्दे प्रयोक्तव्ये सति यदपभ्रंशः गाव्याद्यसाधुशब्दः, प्रयुज्यते न—असाधुशब्देन, साधुव्यवहितः—साधुशब्दस्मरणपूर्वकः, कश्चित्प्रसिद्धोऽर्थोऽभिधीयते प्रतिपाद्यत इत्यर्थः । द्विर्बद्धं सुबद्धं भवतीति न्यायेन पूर्वोक्तमेवार्थं द्रढयितुं शङ्कते—नन्विति । अपभ्रंशानां साक्षात्तत्तदर्थवाचकत्वाभावे प्रमाणं किमिति प्रश्नः । प्रमाणं नास्तीत्यत्र हेतुमाह—शक्तिकल्पकेत्यादि । घटमानयेत्यादौ कम्बुग्रीवादिमन्तमर्थं बोधयितुं वृद्धैर्घटपदप्रयोगकरणात्कम्बुग्रीवादिमत्यर्थ घटपदस्य शक्तिरित्यवगम्यते । तथा च कम्बुग्रीवादिमदर्थे घटपदप्रयोगकरणरूपवृद्धव्यवहार एव घटपदस्य घटत्वावच्छिन्ने शक्तिं कल्पयतीति भावः । सोऽयं शक्तिकल्पको वृद्धव्यवहारो यथा साधुशब्देषु दृश्यते तथाऽपभ्रंशेष्वपि शक्तिकल्पको वृद्धव्यवहारो दृश्यत इति साध्वसाध्वोः शक्तिकल्पकस्य वृद्धव्यवहारस्य तुल्यत्वाद्यथा साधुशब्दाः साक्षात्तत्तदर्थवाचकास्तथाऽपभ्रंशा अपि गाव्यादयोऽपि साक्षाद् गवाद्यर्थवाचका भवेयुः । तथा चापभ्रंशानां साक्षाद्वाचकत्वाभावे प्रमाणं नास्तीति भावः । तदेतदङ्गीकरोतीत्याह—सत्यमिति । सत्यत्वेनाङ्गीकार

**गौरवात् । न च पर्यायतुल्यता शङ्क्या तेषां सर्वदेशेष्वेकत्वाद्विनिग-**

सूचितः । महाराष्ट्रादिभाषास्थशब्दानां तत्तद्देशभेदेन—महाराष्ट्रोत्तरहिन्दुस्थानद्राविडादिदेशभेदेन, भिन्नत्वं दृश्यते, यथा——महाराष्ट्रियैर्घटार्थे 'घागर' शब्दः प्रयुज्यते, उत्तरहिन्दुस्थानीयैस्तु तत्रैवार्थे 'गगरी' शब्दः प्रयुज्यते । ततश्च देशभेदेन भिन्नानां तेषामनेकत्वेनाऽऽनन्त्यादनन्तेषु तेषु शक्तिकल्पने शक्त्यानन्त्यापत्तेर्बह्वेव गौरवं स्यादिति भाषास्थशब्देषु शक्तिर्न कल्प्यते । अतोऽसाधुशब्दानां साक्षाद्वाचकत्वं नास्तीति भावः । प्रमाणसिद्धं गौरवं न दोषायेत्याशङ्कते—**न च पर्यायेति** । अयं भावः-यथा 'विष्णुर्नारायणः कृष्णः' इत्यादयः सर्वेऽप्यनेकपर्याया एकस्यार्थस्य वाचकाः, एकार्थनिरूपिता वाचकता शक्तिर्विष्ण्वादिषु अनेकेषु कल्पिता, न च तत्र गौरवं मन्यन्ते, तद्वत् घटरूपैकार्थनिरूपितावाचकताशक्तिर्घागरगगरीत्याद्यनेकेषु भाषाशब्देषु आस्ताम् । न च गौरवं, विष्ण्वादिष्वपि अनेकपर्यायेषु एकार्थनिरूपितशक्तिकल्पनानापत्तेः । तस्मात् विष्ण्वादिपर्यायेष्विव भिन्नेष्वपि गगरीत्यादिभाषाशब्देषु शक्तिः कल्पयितुं युक्तेत्याशयेनोक्तं—**पर्यायतुल्यतेति** । तथा च विष्ण्वादिपर्यायशब्दा इव गगरीत्यादये भाषाशब्दा अपि साक्षाद्वाचका एवेति चेन्न । विष्ण्वाद्यनेकेषु पर्यायेषु शक्तिकल्पने यथा साधकमुपलभ्यते तथा भाषाशब्देषु अनेकेषु शक्तिकल्पने साधकं नास्तीति भाषास्थशब्देषु न शक्तिः कल्प्यते, एतदेव विशदीकर्तुं दृष्टान्तदार्ष्टान्तिकयोर्वैधर्म्यं प्रदर्शयति—तेषामित्यादि । तेषां—विष्ण्वादिसाधुपर्यायाणां, सर्वदेशेषु—हिमालयमारभ्य सेतुबन्धपर्यन्तेषु राजपुताना—बिहारोत्तरहिन्दुस्थानमालवमद्रमहाराष्ट्रकर्नाटकद्राविडादिसकलतत्तद्देशेषु, एकत्वात् –अभिन्नरूपत्वादेकजातीयत्वादिति यावत् विनिगमनाविरहेण—यथा विष्णुशब्दः सर्वदेशेषु यमर्थं प्रतिपादयति, तथा नारायणादिशब्दा अपि सर्वदेशेषु तमेवार्थं प्रतिपादयन्तीति प्रसिद्धम् । अत एव विष्ण्वादिपर्यायाणां मध्ये एकस्यैव शक्तिः कल्पनीया, नान्येषामित्यत्र निश्चायकप्रमाणाभावेन विष्ण्वादिपर्यायाणां सर्वदेशेषु समानरूपत्वात्सर्वेष्वपि विष्ण्वादिपर्यायेषु एकार्थनिरूपिता वाचकता शक्तिः कल्प्यते । यदि च भिन्नरूपता स्यात्तर्हि य एव पर्यायः सर्वदेशे सुप्रसिद्धस्तत्रैव शक्तिः सिद्ध्येन्नेतरत्रेति भावः । विष्ण्वादिपर्यायाणां सर्वदेशेष्वेकरूपत्वादेव विनिगमनाविरहः, विनिगमनाविरहाच्च सर्वपर्यायेषु प्रत्येकं शक्तिकल्पनेऽपि गौरवं दोषापादकं न भवति । शक्तिग्राहकसर्वदे-

(शक्तिनिर्णयः)

**मनाविरहेण सर्वत्र शक्तिकल्पना। न ह्यपभ्रंशे तथा। अन्यथा भाषाणां पर्यायतया गणनापत्तेश्च। एवं शक्तत्वमेवास्तु साधुत्वमिति नैयायिकमीमांसकादीनां मतेनैव द्रष्टव्यम्। इदानीं स्वमतमाह—वाचकत्वाविशेषे चेति। अयं भावः— अपभ्रंशानामशक्तत्वे ततो बोध एव**

---

शीयवृद्धव्यवहारेण विष्णवादिसर्वपर्यायेषु प्रत्येकं शक्तेः सिद्धत्वात्। एवं च विष्णवादिपर्यायाणामेकरूपत्वमेव शक्त्यानन्त्यकल्पने साधकमिति तात्पर्यम्। अपभ्रंशानां सर्वदेशेष्वेकरूपता नास्तीत्याह—**न हि अपभ्रंशे तथेति**। अपभ्रंशानां तथा—एकरूपता नेति योजना। गगर्याद्यपभ्रंशरूपभाषास्थशब्दानां देशभेदेन भिन्नत्वेनैकरूपताभावादेव यस्मिन्देशे गगरीशब्दो घटार्थं वक्ति, न तस्मिन्देशे वागरशब्दो घटार्थं वक्ति। यस्मिंश्च देशे वागरशब्दो घटरूपार्थमाचष्टे, न तस्मिन् देशे गगरीशब्दस्तमर्थं प्रतिपादयति। ततश्च भाषास्थशब्दानां देशभेदेन भिन्नत्वादेकरूपताभावेन साधुशब्देष्विव शक्तिग्राहकसर्वदेशीयवृद्धव्यवहाराभावादपभ्रंशेषु शक्त्यभावस्यैव सिद्धत्वेन तद्विरुद्धशक्तिकल्पनस्यात्यन्तायोगान्न तेषु शक्तिः कल्प्यत इति भावः। यदि चैकरूपताऽभविष्यत्तदा साधुष्विवापभ्रंशेष्वपि शक्तिरप्यभविष्यदित्यर्थः। **अन्यथेति**। उक्तवैपरीत्ये। अपभ्रंशेष्वेकरूपत्वाभावेऽपि शक्तिकल्पन इत्यर्थः। **पर्यायतयेति**। साधुष्विवापभ्रंशेष्वपि शक्तिमत्त्वसत्त्वात्साधूनां पर्यायत्वेन यथा कोशादौ परिगणनं कृतं तद्वदपभ्रंशानामपि संस्कृतपर्यायत्वेन कोशादौ परिगणनकर्तव्यताऽऽपद्येतेत्यर्थः। **एवं चेति**। अपभ्रंशानां साक्षाद्वाचकत्वाभावे चेत्यर्थः। **मतमिति**। शक्तत्वमेव साधुत्वमित्येवं यन्नैयायिकमीमांसकादीनां मतं तद् 'ते साधुष्वनुमानेन' इत्याद्युक्तवाक्यपदीयानुसारेणैवेति बोध्यम्। **इदानीमिति**। अपभ्रंशानां साक्षाद्वाचकत्वविषये मीमांसकादिमतप्रतिपादनानन्तरमित्यर्थः। **स्वमतमिति**। वैयाकरणमतमित्यर्थः। **वाचकत्वाविशेष इति**। अपभ्रंशात्मकभाषाशब्दानां बोधकत्वस्य हरिसंमत्योपपादितत्वात्तेषु शक्तिकल्पनं वैयाकरणानां दुराग्रह इत्याशङ्क्येत नैयायिकादिभिरियतस्तदुक्तरीत्याऽपभ्रंशानां बोधकत्वं दुर्वचमित्याशयेनाऽऽह——**अयं भाव इति**। **अशक्तत्व इति**। यद्यपभ्रंशेषु शक्तिर्बोधकतारूपा न कल्प्येत तर्हि तेभ्योऽर्थबोधो न स्यात्, स तु जायत इति सर्वानुभवसिद्धमित्यर्थः।

न स्यात् । न च साधुस्मरणात्ततो बोधस्तानविदुषां पामराणामपि बोधात्तेषां साधोरबोधाच्च । न च शक्तिभ्रमात्तेभ्यो बोधो बोधकत्वस्याबाधेन तद्ग्रहस्याभ्रमत्वात् । ईश्वरेच्छा शक्तिरिति मतेऽपि सन्मात्रविषयिण्यास्तस्या बाधाभावात् । शक्तेः पदपदार्थविशेषघटितायाः

---

शक्तिकल्पनं विनैवापभ्रंशानां बोधकत्वं प्रकारान्तरेण स्यादित्याशङ्कते—**न चेति**। **साधुस्मरणादिति** । अपभ्रंशानां साधुशब्दप्रकृतिकत्वेन सादृश्यादपभ्रंशेभ्यः प्रकृतिभूतः साधुशब्दः स्मृतो भवति, स्मृताच्च साधुशब्दादर्थबोधो जायत इति परम्परयाऽपभ्रंशानां बोधकत्वं, न तु साक्षात् । तेषु शक्त्यभावादिति भावः । इति चेत्तन्नेत्याह—**तानविदुषामिति** । तत्तदर्थबोधकत्वेन साधुशब्दानजानतामित्यर्थः । साधुशब्दाज्ञाने कारणमाह—**पामराणामिति** । संस्कृतानभिज्ञानामित्यर्थः । अपभ्रंशमात्रव्युत्पन्नाः पामरा इति भावः । **बोधादिति** । गगरीत्याद्यपभ्रंशेभ्यो घटाद्यर्थबोधादित्यर्थः । तेषां—पामराणां **साधोरबोधाच्चेति** । अपभ्रंशमात्रव्युत्पन्नत्वेन तत्तदर्थकत्वेन साधुशब्दज्ञानाभावात्साधुशब्देभ्यः पामराणां गवाद्यर्थबोधात्यन्तासंभवाच्चेत्यर्थः । एवं च यस्मात्साधुशब्दज्ञानाभाववतामपि गाव्याद्यपभ्रंशेभ्यो गवाद्यर्थप्रतीतिर्जायत इति लोकेऽनुभूयते, तस्मादपभ्रंशाः साक्षाद्वाचका इत्येव युक्तं, न तु साधुशब्दानुमानेन परम्परयाऽर्थबोधका इत्युक्तिरुपपद्यत इत्याशयः । गवाद्यर्थनिरूपितायाः साधुशब्दनिष्ठवाचकताशक्तेरपभ्रंशेषु भ्रान्त्या सत्त्वमादाय तेभ्यो बोधः संभवेदित्याशङ्कते—न **च शक्तिभ्रमादिति** । अपभ्रंशे किं बोधकत्वशक्तेर्भ्रान्तिरभिधेयते उतेश्वरेच्छारूपाया इति संदिह्य तत्र नाऽऽद्य इत्याह—**बोधकत्वस्येति** । अपभ्रंशे तत्तदर्थबोधजनकत्वस्येत्यर्थः । **अबाधेनेति** । नायं तदर्थबोधक इत्याकारकबाधज्ञाननिश्चयाभावादपभ्रंशेषु बोधजनकत्वशक्तेरबाधेनेत्यर्थः । **तद्ग्रहस्याभ्रमत्वादिति** । अपभ्रंशे बोधजनकत्वग्रहस्य भ्रमत्वासंभवादित्यर्थः । यथा रज्जौ सर्पज्ञानानन्तरं समीपं गत्वा सूक्ष्मेक्षिकया नायं सर्पः किंतु रज्जुरिति पश्चात्तनेन बाधज्ञानेन पूर्वजातसर्पज्ञानस्य भ्रमत्वं कल्प्यते तद्वत् गगरीशब्दाज्जायमानस्य घटरूपार्थज्ञानस्य पश्चात्तनेन किंचिद्विषयकज्ञानेन बाधाभावादपभ्रंशे बोधकत्वग्रहस्य भ्रमत्वकल्पनं न संभवतीत्यर्थः । ज्ञानस्य भ्रमत्वकल्पने तादृशज्ञानविषयवस्तुनो बाधस्यैव कारणत्वादिति भावः । द्वितीयकल्पे त्वाह—**ईश्वरेच्छेति** । **सन्मात्रविषयिण्या इति** ।

( शक्तिनिर्णयः )

**भ्रमासंभवाच्चेति ।**

---

अत्र 'मात्रं कार्त्स्न्येऽवधारणे' इति कोशान्मात्रशब्दः कृत्स्नार्थकः । घटः सन्, पटः सन् इति सामानाधिकरण्यानुरोधाच्चेतनाचेतनेषु सर्वत्र सत्त्वावगमाच्छब्देष्वपि सत्त्वं प्रतीयते । तथा चापभ्रंशानपभ्रंशात्मकसर्वशब्दविषयिकाया ईश्वरेच्छारूपशक्तेरित्यर्थः । **बाधाभावादिति ।** यथा कम्बुग्रीवादिमानर्थो घटशब्दजन्यबोधविषयो जायतामित्यनपभ्रष्टशब्दविषयिणीश्वरेच्छा वर्तते तथा घटरूपोऽर्थो गगरीशब्दजन्यबोधविषयो भवत्वित्यपभ्रष्टशब्दविषयिण्या अपि ईश्वरेच्छायाः स्वीकारावश्यकत्वेनापभ्रष्टेष्वपीश्वरेच्छारूपशक्तेर्बाधाभावात् । अन्यथेश्वरेच्छायाः सर्वशब्दविषयकत्वं नोपपद्येतेत्यर्थः । अपभ्रंशात्मकभाषाशब्दाद् गगरीगावीत्यादेस्तत्तदर्थबोधस्य शिष्टाशिष्टसर्वानुभवसिद्धत्वेनापभ्रष्टेष्वपीश्वरेच्छाया बाधाभावादीश्वरेच्छा शक्तिरिति मतेऽपि शक्तिज्ञानस्य भ्रमत्वं नोपपद्यते । ज्ञानस्य भ्रमत्वे विषयबाधस्यैव नियामकत्वात् । स च विषयबाधः प्रकृते नास्तीति भावः । स्वरूपतः शक्तेर्भ्रमत्वं सर्वथाऽसंभवीत्याशयेन शक्तेः स्वरूपमाह—**पदपदार्थविशेषेति ।** अयं भावः—इदं पदममुमर्थं बोधयतु, इत्येवमर्थनिरूपितपदशक्तिबोधकमिदं सामान्यवचनं निर्विशेषं न सामान्यमिति न्यायेन, शृङ्गग्राहिकया ( प्रतिपदोक्तस्वरूपेण ) वा घटपदं घटार्थं बोधयतु, पटपदं पटरूपमर्थं बोधयतु, इत्यादिविशेषवाक्यानां ( प्रातिस्विकवाक्यानां ) परिचायकम् । तथा च घटपदजन्यबोधविषयत्वप्रकारतानिरूपितघटरूपार्थनिष्ठविशेष्यताकेच्छा शक्तिरित्येवं पदविशेषार्थविशेषघटिता शक्तिरिति वक्तव्यमिति गगरीशब्दजन्यबोधविषयत्वप्रकारिका घटविशेष्यिकेच्छैव शक्तिः प्रकृतस्थले वाच्या, सा चेद्यद्यस्ति, न तर्हि शक्तिभ्रमः, यदि नास्ति तर्हि सुतरां न शक्तिभ्रमः सिध्यति । क्वचित्प्रसिद्धस्य स्वविरहिणि ज्ञानस्यैव भ्रमत्वात् । यथा सत्यरजते प्रसिद्धस्य रजतत्वस्य रजतत्वविरहिण्यां शुक्तौ यद्रजतत्वप्रकारकं ज्ञानं तस्यैव भ्रमशब्दव्यवहार्यत्वादिति भावः । यद्यपि इदं पदममुमर्थं बोधयत्वित्यादिसामान्यमुखप्रवृत्तशक्त्यावेदकवचनानुसारेण सामान्यरूपेण पदपदार्थघटितायाः शक्तेः पटपदं घटे शक्तं, घटपदं वा पटे शक्तमित्येवं भ्रमत्वं संभवेत् । तथाऽपि शृङ्गग्राहिकया घटपदं घटे शक्तं, पटपदं च पटे शक्तमित्येवं प्रातिस्विकरूपेण शक्त्यावेदकवचनानुसारेण पदपदार्थविशेषघटितायाः शक्तेर्भ्रमत्वं सुतरां दुर्वचमिति भावः । यच्च पूर्वमस्मिन्नेव प्रक-

उक्तं च वाक्यपदीये—

" पारम्पर्यादपभ्रंशा विगुणेष्वभिधातृषु ।
प्रसिद्धिमागता येषु तेषां साधुरवाचकः ॥
दैवी वाग्व्यवकीर्णेयमशक्तैरभिधातृभिः ।
अनित्यदर्शिनां त्वस्मिन्वादे बुद्धिविपर्ययः " इति ॥

---

रणे ' शक्तिभ्रमानुरोधेन ' इति ग्रन्थेन शक्तिभ्रम उक्तः स च ' इदं पदममुमर्थं बोधयतु ' इत्येवं सामान्यरूपेण शक्त्यावेदकवचनानुसारेण योज्यः, तदानीमेव शक्तिभ्रमसंभवात् । न तु घटपदं घटे शक्तमित्येवं विशेषरूपेण शक्त्यावेदकवचनानुसारेण, तदानीं शक्तिभ्रमसंभवस्याप्यभावादिति बोध्यम् । अपभ्रंशानां साक्षाद्वाचकत्वमिति वैयाकरणसंमतपक्षेऽपि वाक्यपदीयानुमतिमाह—**उक्तं चेति** । अपभ्रंशरूपभाषाशब्दा अपि शक्ताः—नाम साक्षाद्वाचका एव, न तु साधुस्मरणद्वारेत्युक्तमित्यर्थः । **विगुणेष्विति** । नागृहीतविशेषणा बुद्धिर्विशेष्य उपजायत इति न्यायेन पुरःस्फूर्तिमद्वक्तृनिष्ठं वैगुण्यमत्रेन्द्रियासामर्थ्यं नाम जिह्वाजाड्यादिरूपं बोध्यम् । तथा चोच्चारयितृजिह्वाजाड्यादिदोषवशादपभ्रंशा निष्पद्यन्ते इति अभिधातृषु—वक्तृषु विगुणेषु—जिह्वाजाड्यादिदोषयुक्तेषु सत्सु, पारम्पर्यात्—परम्परैव पारम्पर्यं, चतुर्वर्णादित्वात्स्वार्थे ष्यञ् , परम्परया—वृद्धव्यवहारपरम्परया येष्वर्थेषु, प्रसिद्धिं—ख्यातिमागताः—प्राप्ताः, तेषां—अपभ्रंशानां, साधुः—शब्दः, अवाचकः—अबोधक इत्यर्थः । ननु साधुरवाचक इत्ययुक्तं, यतो यस्मिन्नर्थे अपभ्रंशाः प्रयुज्यन्ते तदर्थवाचकत्वं साधूनामपीति सर्वसंमतत्वात् . इत्यत एवं व्याख्येयम्—अपभ्रंशानां प्रकृतिभूतः साधुर्व्यवहितो न तत्र बोधकः, किंतु अपभ्रंशानां साधुप्रकृतिकत्वात्किंचिद्वर्णव्यत्यासेऽपि त एव इमे इति प्रत्यभिज्ञया साधुतादात्म्यापन्नास्तत्तदानुपूर्व्यवच्छिन्ना असाधव एव साक्षाद्वाचका इति। **दैवी वागिति** । संस्कृतभाषामयी देवानां वागित्यर्थः । **अशक्तैरिति** । संस्कृतशब्दोच्चरणासमर्थैर्जिह्वाजाड्यादिदोषवशादित्यर्थः । अभिधातृभिः—वक्तृभिः, व्यवकीर्णा—उच्छिन्नानुपूर्वीका कृतेति शेषः । **अनित्यत्वदर्शिनामिति** । सर्वे शब्दा अनित्याः, स्फोटस्तु नास्त्येवेति वादिनां नैयायिकानामित्यर्थः। अस्मिन् वादे—शक्तिविचाराख्ये, बुद्धिविपर्ययः—साधव एव वाचकाः, न त्वपभ्रंशा इत्येवं विपर्ययो वैपरीत्यं संजातमित्यर्थः । अयं सारार्थः—अपभ्रंशरूपा वाक् ,

( शक्तिनिर्णयः )

**अवाचकोऽबोधकः, बुद्धिविपर्यय एत एव वाचका नान्य इति विपर्यय इत्यर्थः। किं च विनिगमनाविरहाद्भाषायामपि शक्तिः। न च तासां नानात्वं दोषः। संस्कृतवन्महाराष्ट्रभाषायाः सर्वत्रैकत्वेन**

---

वक्तॄणां वागिन्द्रियादिदोषवशादुच्छिन्नानुपूर्वीकाऽपि विशिष्टं शुद्धान्नातिरिच्यते, एकदेशविकृतमनन्यवदित्यादिन्यायानुसंधानेन किंचिद्वर्णव्यत्यासेऽपि दैवी—संस्कृतरूपैव भवति। ततश्चापभ्रंशानां संस्कृतप्रकृतिकत्वात्सेयमिति प्रत्यभिज्ञया प्रकृतिविकृत्योस्तादात्म्येनाभेदात् अपभ्रंशानामेव साक्षाद्वाचकत्वसंभवे सति संस्कृतापभ्रंशयोर्भेदं परिकल्प्य तत्र संस्कृतैव वाचिका, नापभ्रंशरूपा वागित्येवं नैयायिकानां बुद्धिभ्रम एवेति। एवं च तत्तदानुपूर्व्यवच्छिन्ना अपभ्रंशा एव साक्षाद्वाचका इत्युक्तं भवति। अथ संस्कृता एव वाचकाः, नापभ्रंशा इत्यत्र प्रमाणाभावेनापभ्रंशात्मकभाषाशब्दा अपि वाचका एवेत्याशयेनाऽऽह—**किं चेति। विनिगमनाविरहादिति।** अन्यतरकोटिनिश्चायकप्रमाणाभावादित्यर्थः। यथा संस्कृता वाक् हिमालयमारभ्य रामेश्वरपर्यन्तं सर्वदेशेषु एकरूपा भवति, यथा गौरित्ययं संस्कृतः शब्दः महाराष्ट्रदेशे प्रयुज्यते, तथा सौराष्ट्रमागधादिदेशेष्वपि तादृशानुपूर्वीक एव तादृशार्थ एव च प्रयुज्यते संस्कृताभिज्ञैः, तथाऽपभ्रंशरूपा गगरीत्यादिर्वागपि, सर्वदेशेषु समानरूपत्वाभावेऽपि तत्तद्देशे एकरूपैव—समानरूपैव भवति, यथा महाराष्ट्रसंचारयोग्यदेशेषु सर्वत्र गगरीशब्दो 'घागर' इत्यर्थे प्रयुज्यमानो दृश्यते। यद्यपि आर्यसंचारानर्हयावनादिदेशेषु गगरीशब्दो न दृश्यते तथापि यावनादिव्यतिरिक्तसर्वदेशेषु दृश्यत इति अपभ्रंशरूपा वागपि सर्वदेशे एकरूपैवाऽऽस्ते। एवं च सर्वदेशेत्यत्रत्यसर्वशब्दो विवक्षितसर्वदेशपरः, न तु साकल्येन ( अनवच्छेदेन ) सर्वदेशपरः। तथा सति यवनहूणादिमयदेशे संस्कृतवाचोऽप्यसत्त्वेन तस्या अपि अनवच्छिन्नसर्वदेशेषु एकरूपतानापत्तेः। ततश्च संस्कृतापभ्रंशरूपयोर्द्वयोरपि वाचोर्बहुषु देशेषु एकरूपत्वाविशेषात्तत्र संस्कृतैव वाचिका, नापभ्रंशरूपा वागित्यत्रैकतरपक्षानिश्चायकप्रमाणाभाव इति भावः। **भाषायामपीति।** अपभ्रंशरूपायामपीत्यर्थः। **शक्तिरिति।** संस्कृतेष्विवापभ्रंशेष्वपि वाच्यवाचकभावापरपर्याया शक्तिरवश्यमास्थेयेत्यर्थः। भाषाणां देशभेदेन भिन्नत्वेन नानारूपत्वात्तत्र शक्तिकल्पनं गौरवापादकत्वान्न युक्तमित्याशयेन शङ्कते—**न चेति।** तासां—भाषाणाम्। **दोष इति।** भाषाणां नानात्वमेव दोषः—

(शाक्तिनिर्णयः)

प्रत्येकं विनिगमनाविरहतादवस्थ्यात् । किं चानुपूर्वी पदेऽवच्छेदिका सा च पर्यायेष्विव भाषायामप्यन्याऽन्यैवेति कस्तयोर्विशेष इति विभाव्यं सूरिभिः । तथा च संस्कृतवद्भाषाशब्दाः शक्ता एव । न च

भाषासु शक्तिकल्पने प्रतिबन्धकमित्यर्थः । गौग्वाचानानारूपासु भाषासु न शक्तिः कल्प्यत इति भावः । तदेतन्न युक्तमित्याह—संस्कृतवादित्यादिना तादवस्थ्यादित्यन्तेन । संस्कृतवादिति । यथा गौरित्यादिः संस्कृता वाक्, संचारयोग्येषु महाराष्ट्रादिसर्वदेशेषु एकरूपैवास्ति । यावनादिदेशेषु संस्कृतवाचः सर्वथाऽसत्त्वात्संचारयोग्यसर्वदेशेष्विति सर्वशब्दार्थसंकोचस्याऽऽवश्यकत्वेन विवक्षितसर्वदेशेषु संस्कृता वाग्यथैकरूपा वर्तते तथाऽपभ्रंशरूपा वागपि विवक्षितोत्तरहिन्दुस्थानदेशे एकरूपैव भवति । यत उत्तरहिन्दुस्थानदेशेषु घटीयर्थे गगरीशब्द एवापभ्रंशः, न तु 'घागर' इत्यादिकः । तथा महाराष्ट्रदेशे पुंस्त्वविशिष्टघटार्थे 'घडा' इत्यपभ्रंशः, घटीत्यर्थे 'घागर' इत्यपभ्रंशः, कलशीत्यर्थे 'कळशी' इत्यपभ्रंशः, न तु तत्र गगरीत्यपभ्रंशः । ततश्च संस्कृतवाग्यथा विवक्षितसर्वदेशे एकरूपा, तथा प्रत्येकमपभ्रंशरूपा वागपि विवक्षिततत्तद्देशे एकरूपैवेत्येवं स्थितौ सत्यां संस्कृतः शब्दो वाचकः, नापभ्रंशः शब्द इत्यर्थे विनिगमनाविरहस्तदवस्थ एवेति भावः । सर्वत्रैकत्वेनेति । महाराष्ट्रसंचारयोग्येष्वेकरूपत्वेनेत्यर्थः अपभ्रंशानां वाचकत्वे साधकान्तरमाह—किं चेति । अवच्छेदिकेति । शक्तं पदं, पदे शक्तता, शक्तता नाम अर्थबोधजनकता, तस्या अवच्छेदिका, घटादिपदनिष्ठा घकारोत्तरवर्त्यकारोत्तरवर्तिटकारोत्तरवर्त्यकार इत्येवं वर्णानुपूर्वी अर्थबोधजनकतावच्छेदिकेत्यर्थः । सा च घटः कुम्भः कलश इत्यादिपर्यायेषु यथा भिन्ना भिन्ना वर्तते तथा घागरगगरीत्याद्यपभ्रंशेष्वपि शक्तताव-च्छेदिका वर्णानुपूर्वी भिन्ना भिन्ना वर्तत इति साध्वपभ्रंशयोः को विशेषः । विष्णुर्नारायणः कृष्ण इत्यादिनानापर्यायनिष्ठा नानानुपूर्व्यो यथा शक्ततावच्छेदिका अङ्गीक्रियन्ते, तथाऽपभ्रंशनिष्ठा अपि ताः शक्ततावच्छेदकत्वेन स्वीक्रियन्तामविशेषादिति भावः । एवं च यथा संस्कृतशब्दा अर्थविशेषस्य साक्षाद्वाचकास्तथाऽपभ्रंशशब्दा अपि साक्षादेव वाचकाः, न तत्र वैषम्यं कर्तुं युज्यत इति तात्पर्यम् । एतदाशयेनोपसंहरति—तथा च संस्कृतवदित्यादि । ननु यदि संस्कृतवद् भाषाशब्दा अपि शक्ताश्चेत्तर्हि आपः स्त्री भूम्नि वार्वारि सलिलं कमलं

( शक्तिनिर्णयः )

**पर्यायतया भाषाणां गणनापत्तिः साधूनामेव कोशादौ विभागाभिधानात्। नन्वेवं साधुता तेषां स्यादित्यत आह—नियम इति। पुण्यजम-**

जलमितिवद् गगरीगावीत्यादयो भाषाशब्दा अपि संस्कृतपर्यायत्वेन कोशादौ परिगणनीयाः स्युरित्याशङ्कते—**न च पर्यायतयेति**। अपभ्रंशानां कोशादाव-परिगणने कारणमाह—**साधूनामेवेति**। एवकारेणासाधूनां = अपभ्रंशानां व्यावृत्तिः। साधुत्वधर्मविशिष्टानां शब्दानां कोशादौ परिगणनं, न तु वाचकता-धर्मविशिष्टमात्रस्येत्यर्थः। **विभागाभिधानादिति**। इन्द्रो मरुत्वान् मघवा बिडौजाः पाकशासनः, इत्येवंरीत्या विभागेन प्रतिपादनादित्यर्थः। ननु यदि कोशादौ परिगणने साधुत्वं प्रयोजकं तर्ह्यपभ्रंशानां साधुताऽपि सुवचेत्याशङ्कते—**नन्विति**। **एवमिति**। अपभ्रंशानामपि शक्तत्व इत्यर्थः। तेषां अपभ्रंशानां साधुता स्यादिति। व्याकरणाधिकरणे ( जै. सू. १ ३। अधि. ९ प्रयोगो-त्पत्त्यशास्त्रत्वात्० ) शक्तत्वस्यैव साधुत्वस्योक्तत्वादिति भावः। **नियम इति**। ' समानायामर्थावगतौ शब्दैश्चापशब्दैश्च, शास्त्रेण धर्मनियमः " इति पस्पशाह्निके भाष्य उक्तं, तत्र समानत्वं शब्दान्तरस्मरणापूर्वकत्वेन बोध्यम्। यथा गवादि-संस्कृतशब्दात् शब्दान्तरस्मरणं विनैवाऽव्यवधानेनार्थबोधो जायत इत्यनुभवसिद्धं तथाऽपभ्रंशादपि शब्दान्तरस्मरणमन्तरेवाऽव्यवधानेनार्थबोधो जायत इति संस्कृता दपभ्रंशाच्च जायमानमर्थावगमनं शब्दान्तरस्मरणपूर्वकत्वाभावेन समानं भवतीति बोध्यम्। यदि चापभ्रंशानां संस्कृतवत्साक्षाद्वाचकत्वं न स्यात्, किं तु शब्दा-न्तरस्मरणपूर्वकमेवार्थबोधकत्वं स्यात्तर्हि संस्कृतापभ्रंशकरणकार्थावगतौ यत्समान-त्वविशेषणं दत्तं तदसंगतं—निर्विषयं स्यात्। तस्मादपि संस्कृतवदपभ्रंशोऽपि सा-क्षाद्वाचक एवेत्यभ्युपगन्तव्यम्। अपभ्रंशानां वाचकत्वादेव वाचकस्य व्यञ्जकत्वे ' माए घरोवअरणं अज्जहु णत्थित्ति साहिअं तुमए। ता भेण किं करणिज्जं एमे अण वासरो ठाई॥ इति। भाषोदाहरणं काव्यप्रकाशकृतामाञ्जस्येन संग-च्छते। निरुक्तप्राकृतगाथायाः संस्कृतम्—' मातर्गृहोपकरणमद्य खलु नास्तीति साधितं त्वया। तद्भण किं करणीयमेवमेव न वासरः स्थायी ' इति। अत्र गृ-हाद्बहिर्गमनेऽनुज्ञां देहीति व्यज्यते। यदि शब्दैश्चापशब्दैश्च समानायामर्थावगतौ सत्यां किं शास्त्रेण क्रियते ? इत्यत आह—**शास्त्रेण धर्मनियम इति**। अस्येयं प्रकृतिरयं प्रत्यय इत्यादिप्रकृत्यादिविभागज्ञानद्वारा गवादय एव प्रयुक्ता धर्मजनकाः

नबोधनाय साधूनां साधुभिर्भाषितव्यमिति विधिः, पापजननबोधनाय नासाधुभिरिति निषेधः तथा च पुण्यजननयोग्यत्वं साधुत्वम् । पापजननयोग्यत्वमसाधुत्वम् । तत्र जनकतावच्छेदिका च जातिस्तज्ज्ञापकं च कोशादि व्याकरणादि च । एवमेव राजसूयादेर्ब्राह्मणे फला-

नतु गगरीगाव्यादय इत्येवं नियमः शास्त्रेण क्रियत इत्यर्थः । **पुण्यजननेति** । एकः शब्दः सम्यग् ज्ञातः सुप्रयुक्तः शास्त्रान्वितः स्वर्गे लोके कामधुग्भवतीति 'एकः पूर्वपरयोः' इति सूत्रे भाष्योक्तेः पुण्यजननाय साधुभिर्भाषितव्यमिति विधिः, पुण्यजनकः साधुशब्दप्रयोग इत्यर्थः । विधिना विधेये इष्टबोधनादिति भावः । **पापजननेति** । नासाधुभिरिति निषेधः, पापजनकोऽसाधुशब्दप्रयोग इति बोधनायेत्यर्थः । निषेधेन निषेध्येऽनिष्टबोधनादिति भावः । एवं च यत्फलितं तदाह—पुण्यजननयोग्यत्वं साधुत्वं, पापजननयोग्यत्वं चासाधुत्वमित्यर्थः । योग्यत्वं च जनकतावच्छेदकधर्मवत्त्वम् । **तत्रेति** । साधुशब्देष्वित्यर्थः । **जातिरिति** । सम्यग्ज्ञातः-साधुत्वेन ज्ञातः शास्त्रान्वितः शास्त्रव्युत्पादनमार्गगामिसंहितः। सुप्रयुक्तः—शिक्षाद्युक्तमार्गेण प्रयुक्त इत्यर्थक 'एकः शब्दः'...इति श्रुतिप्रमाणसिद्धा, जातिः—जातिविशेषः । पुण्यजनकतावच्छेदक इत्यर्थः । स च जातिविशेषः, रत्नतत्त्ववच्छास्त्रपरिशीलनशालिगम्य इति बोध्यम् । साधुत्वं च व्याकरणव्यङ्ग्योऽर्थविशिष्टशब्दनिष्ठः पुण्यजनकतावच्छेदकजातिविशेष इत्युक्तं लघुमञ्जूषायाम् । कत्वादिना सांकर्यान्न तस्य जातित्वमिति चेदस्तूपाधित्वमित्यर्थः। **तज्ज्ञापकं चेति** । तस्याः पुण्यजनकतावच्छेदिकाया जातेर्ज्ञापकमनुमापकं चेत्यर्थः । **कोशादीति** । कोशादीत्यादिपदेन शिष्टप्रयुक्तत्वाप्तवाक्यादिपरिग्रहः। व्याकरणादीत्यादिपदमुपमानसंग्रहाय कोशादेः साक्षात्प्रातिपदिकशक्तिग्राहकतया प्रथमतस्तदुपादानं, प्रायः कोशादित एव शक्तिग्रहाच्च । **एवमेवेति** । अर्थविशेषविशिष्टानामेव तत्तच्छब्दानां साधुत्वलाभेनेत्यर्थः । **ब्राह्मणे फलाजनकेति** । राजा राजसूयेन यजेतेत्यत्र राजादस्य रूढ्या क्षत्रियार्थकतया ब्राह्मणस्य राजसूयानधिकाराद् ब्राह्मणेन कृते राजसूये यथा फलजनकत्वाभावस्तथा गवादिशब्दानामश्वादौ प्रयोगे न साधुत्वं, गवाद्यर्थ एव प्रयुक्तानां गवादिशब्दानां पुण्यजनकत्वरूपसाधुत्वाभ्युपगमादिति भावः । अत एव दन्त्यमध्योऽस्वशब्दो नाश्वे साधुर्नापि तालव्यमध्योऽश्वशब्दो दरिद्रे साधुरिति संगच्छते । नन्वाधुनिकपुरुषा-

( शक्तिनिर्णयः)

जनकत्ववद्गवादिशब्दानां नाश्वादौ साधुत्वमिति संगच्छते । आधुनिकदेवदत्तादिनाम्नामपि द्व्यक्षरमित्यादिभाष्येण व्युत्पादितत्वात्साधुत्वमेवं च यः शब्दो यत्रार्थे व्याकरणे व्युत्पादितः स तत्रैव साधुरिति पर्यवसितम् । गौणानां गुणे व्युत्पादनात्तत्पुरस्कारेण प्रवृत्तौ साधुत्वमेवाऽऽधुनिकलाक्षणिकानां त्वसाधुत्वमिष्टमेव । अत एव ब्राह्मणाय

---

द्यर्थकचैत्रमैत्रादिशब्दानामाधुनिकपुरुषाद्यर्थपुरस्कारेण शास्त्रेऽव्युत्पादनात्तेषामाधुनिकपुरुषाद्यर्थे साधुत्वं न स्यादत आह—**आधुनिकदेवदत्तेति** । त्रिपुरुषानूकं द्व्यक्षरं चतुरक्षरं वा नाम कृतं कुर्यादित्यादिभाष्येण व्युत्पादनादाधुनिकदेवदत्तादिनाम्नामपि साधुत्वं बोध्यमित्यर्थः । फलितमाह—**एवं चेति** । यः कोऽपि शब्दो यस्मिन्नर्थे व्याकरणेन व्युत्पादितः = प्रकृतिप्रत्ययादिविभागपूर्वकं प्रतिपादितः स तस्मिन्नर्थे साधुरिति फलितमित्यर्थः । तत्तद्देशभाषानुरोधेन क्रियमाणानां कूचीमश्वीत्यादिनाम्नां ( धोंडोपंत, कोंडोपंत ) शास्त्रेऽव्युत्पादितत्वान्न ते साधव इति भावः । गौणानां साधुत्वमाह—**गौणानामिति** । सिंहो माणवक इत्यादौ सिंहादिशब्दानां शौर्यक्रौर्यादिगुणयोगात् पुरुषे आगतानां = प्रवृत्तानामित्यर्थः । तत आगतः ( पा. सू. ४ । ३ । ७४ ) इत्यण्प्रत्ययः । गुणे—गोत्वादिधर्मे । व्युत्पादनात्—गोगतजाड्यादिगुणसंबन्धाद् गोत्वारोपेण व्युत्पादनादित्यर्थः । तत्पुरस्कारेण—तत्तद्धर्मपुरस्कारेण—शक्यतावच्छेदकधर्मारोपेणेत्यर्थः । **साधुत्वमेवेति** । सिंहादिगतशौर्यादिधर्मारोपेण माणवके प्रवृत्तानां सिंहादिशब्दानां साधुत्वमेवेत्यर्थः । आरोपे निमित्तं क्रौर्यशौर्यादिगुणयोगः । सिंहो माणवक इत्यादौ सिंहत्वादिरूपेण माणवकादिभानमिति भावः । गङ्गायां घोष इत्यादावपि शक्यतावच्छेदकगङ्गात्वरूपेण तीरादिभानमिति बोध्यम् । **आधुनिकलाक्षणिकानां त्विति** । शक्यतावच्छेदकातिरिक्तरूपेण येन केनचित्संबन्धेन प्रयुक्तानां शास्त्रतात्पर्याविषयभूतानामेतादृशलाक्षणिकानामसाधुत्वमेवेत्यर्थः । केचित्तु गुणवाचकशुक्लादिशब्दपरत्वेन प्रकृतग्रन्थं योजयन्ति । तथाहि—**गुणे व्युत्पादनादिति** । गुणे—शुक्लनीलादिरूपे स्वशक्ये, व्युत्पादनात्—गुणवचनेभ्यो मतुपो लुगिति वचनेन गुणे शुक्लादयः पुंसीत्यादिकोशेन च व्युत्पादनाद् गौणानां—गुणिपराणां शुक्लादिशब्दानां शुक्लाद्यर्थपुरस्कारेण प्रयुक्तानां साधुत्वं बोध्यमिति, तेषां सिंहो

( शक्तिनिर्णयः )

देहीत्यर्थे ब्राह्मणं देहीत्यादिकं लक्षणयाऽप्यसाध्वित्यादि विस्तरेण प्रपञ्चितं भूषणे ॥ २ ॥ ( ३८ )।

अतिरिक्तशक्तिग्रहोपायमाह–

संबन्धिशब्दे संबन्धो योग्यतां प्रति योग्यता।

---

माणवक इत्यादीनामसंग्रहापत्तिरिति ध्येयम्। अत एवेति। स्वेच्छया येन केनचित्संबन्धेन यस्मिन्कस्मिन्नपि शास्त्रतात्पर्याविषयभूतेऽर्थे प्रयुक्तानामसाधुत्वनियमादेवेत्यर्थः। ब्राह्मणाय देहीत्यर्थ इति। अत्र दानक्रियाकर्मणा संबध्यमानस्य ब्राह्मणस्य संप्रदानत्वात्ततश्चतुर्थी। ब्राह्मणसंप्रदानकं यत्किंचिद्द्रव्यकर्मकं विधिविषयो दानमित्यर्थः। अत्र चतुर्थ्यर्थः संप्रदानम्। लक्षणयाऽपीति। अयं भावः–स्वशक्यसंबन्धो हि लक्षणा। स्वं–द्वितीया, स्वशक्योऽर्थः–कर्म, तत्संबन्धः संप्रदानसंज्ञके ब्राह्मणेऽस्तीति द्वितीयाया लक्षणया संप्रदानार्थकत्वं गृहीत्वा ब्राह्मणाय देहीत्यर्थे ब्राह्मणं देहीति प्रयोगो लक्षणयाऽप्यसाधुरित्यर्थः। ईदृशलक्षणायाः शास्त्रसंमतत्वाभावादिति भावः। यदि चान्यार्थिकाया विभक्तेरन्यविभक्त्यर्थे लक्षणायाः शास्त्रसंमतत्वं स्यात्तर्हि कर्मार्थे षष्ठ्यादिविधायकानुशासनस्य वैयर्थ्यमेव स्यात्। षष्ठ्यादीनां लक्षणया कर्मार्थप्रतिपादकत्वसंभवात्। यतश्च कर्मार्थे षष्ठ्यादिविधायकमनुशासनं प्रणीयते तत एवं ज्ञायते यदीदृशलक्षणायाः शास्त्रतात्पर्यविषयत्वं नास्तीति। कर्मार्थे षष्ठ्यादिविधायकं–कर्तृकर्मणो... गत्यर्थकर्मणि...इत्यादि। एवं च शास्त्रतात्पर्यागोचराणामाधुनिकलक्षणिकानामसाधुत्वमेवेति भावः॥ ३८॥

अतिरिक्तशक्तीति। इच्छाविशेषातिरिक्ता या शक्तिरित्यर्थः। सा च बोधजनकतारूपा, पदार्थान्तररूपा वा। ग्रहोपायमिति। शक्तिज्ञानोपायं ब्रूते–संबन्धिशब्दे संबन्ध इति। अस्यायमर्थः–यथा चक्षुरादीनां रूपादिविषयकज्ञानजननेऽनादिः पुरुषप्रयत्नानपेक्षा = स्वाभाविकी योग्यता–रूपादिज्ञानजनकतावच्छेदकधर्मवत्त्वरूपा, अस्ति, तथा शब्दानामर्थेऽनादिस्तादात्म्यलक्षणसंबन्ध एव योग्यता–तत्तदर्थबोधजनकतावच्छेदको धर्मः। संबन्धिशब्दे योग्यतां प्रति बोधजनकतावच्छेदकधर्मरूपयोग्यतानिरूपकः शब्दार्थयोस्तादात्म्यलक्षणसंबन्ध एव संबन्धिशब्दे योग्यता, सा च स्वाभाविकी, सैव च शक्तिरित्यर्थः।

( नञर्थनिर्णयः )

**समयाद्योग्यता संविन्मातापित्रादियोग्यवत् ॥ ३ ॥ ( ३९ )**

( इति भट्टोजिदीक्षितविरचितकारिकासु शक्तिनिर्णयः )।

**संबन्धो विषयः। योग्यतां प्रति योग्यता। संबन्धिशब्दं प्रति योग्यता विषय इति समयाद्यवहारात्। योग्यता संविच्छक्तिग्रहः, घटपदमत्र योग्यमेतत्संबन्धीति व्यवहारात्सा ग्राह्येत्यर्थः ॥ ३ ॥ ( ३९ )**

**इति रङ्गोजिभट्टात्मजकौण्डभट्टविरचिते वैयाकरणभूषणसारे शक्तिनिर्णयः समाप्तः ॥**

---

( अथ नञर्थनिर्णयः )।

---

नन्वेवं संकेतस्य नोपयोग इत्यत आह—**समयादिति**। पारम्परिकवृद्धव्यवहारात्स्वाभाविक्येव सा योग्यता ज्ञायत इत्यर्थः। तत्र दृष्टान्तमाह—**मातापुत्रादीति**। नहीयमस्य पुत्रस्य मातेति संकेतेन निर्वृत्तो जन्यजनकभावः, वस्तुसिद्धस्यैव प्रतिपादनात्। यथा मातापुत्रयोर्जन्यजनकभावसंबन्धः सिद्ध एव आप्तोपदेशादिव्यवहारान्निश्चीयते तद्वच्छब्दार्थयोः सपवास्थित एव संबन्धो वृद्धव्यवहारान्निर्णीयते। एवं च कोशव्याकरणाद्यनभिज्ञानां तत्तदर्थे तत्तच्छब्दप्रयोगरूपवृद्धव्यवहाराच्छक्तिज्ञानं भवतीति भावः। ‘ **संबन्धो विषय इति** । अयमेतत्संबन्धीति व्यवहारे संबन्धो विषयः, ज्ञानविषयः। योग्यतां प्रतिइदमत्र योग्यमिति व्यवहारे योग्यता विषयः, ज्ञानविषय इत्यर्थः। यत एवं, अतः समयात्—निरुक्तव्यवहाराद्योग्यताया बोधकतारूपशक्तेः संवित्—ज्ञानं भवतीत्यर्थः’ इति दर्पणटीकायामुक्तम्। तदेव मया लिखितम्। संबन्धयोग्यताशब्दयोरर्थप्रदर्शनस्य प्रकृत उपयोगमाह—**घटपदमिति**। अत्र योग्यं—घटरूपार्थे योग्यं—तद्विषयकबोधजननेयोग्यमित्यर्थः। **एतत्संबन्धीति**। घटसंबन्धीत्यर्थः। सा—शक्तिः। तथा च प्राथमिकशक्तिग्रह उक्तव्यवहाराद्भवति, तत्र च संबन्धादिशब्दशक्तिग्रहोऽपेक्षितोऽतस्तदर्थः प्रदर्शित इति तात्पर्यम् ॥ ३९ ॥

इति वैयाकरणभूषणसारटीकायां शांकर्यां शक्तिस्वरूपनिरूपणम्।

रङ्गभट्टतनूजस्य शंकरस्य विनिर्मितौ।

शक्तिस्वरूपकथनं पूर्णं सारीयविवृतौ ॥ ६ ॥

( नञर्थनिर्णयः )

**नञर्थमाह—**

नञ्समासे चापरस्य प्राधान्यात्सर्वनामता ।
आरोपितत्वं नञ्द्योत्यं न ह्यसोऽप्य( सर्वो ऽ तिसर्ववत् ॥ ॥(३९)

नञ्समासेऽपरस्योत्तरपदार्थस्य प्राधान्यात्सर्वनामता सिध्यतीति शेषः । अत एवाऽऽरोपितत्वमेव नञ्द्योत्यमित्यम्युपेयमिति शेषः । अयं भावः—असर्व इत्यादावारोपितः सर्व इत्यर्थात्सर्वशब्दस्य प्राधान्याबाधात्सर्वनामता सिध्यति । अन्यथाऽतिसर्व इत्यत्रेव सा न स्यात् ।

---

नञ्समास इत्युक्त्वादनेन नञ्समासार्थं उच्यत इत्याशङ्का स्यात्तामपाकर्तुमाह—**नञर्थमिति** । आरोपितत्वं नञ्द्योत्यमित्यनेन नञर्थं एव प्रदर्श्यते नतु नञ्समासार्थं इत्याह—**नञ्समासे चापरस्येति** । **नञ्समास इति** । 'नञ्' ( २–२–६ ) इति पाणिनिसूत्रेण विहिते । अपरपदार्थमाह—**उत्तरपदार्थस्येति** । **प्राधान्यादिति** । पूर्वपदार्थनिष्ठप्रकारतानिरूपितविशेष्यत्वादुत्तरपदार्थस्येति अतस्मै, असर्वे, इत्यादौ सर्वाद्यन्तस्य सर्वनामसंज्ञा सिध्यतीत्यर्थः । अयमर्थः—घटः पटो न, घटो नास्तीत्यादौ घटतादात्म्याभाववान् पटः, घटप्रतियोगिको योऽभावस्तत्कर्तृका सत्तेत्येवमभावबोधस्य सर्वानुभवसिद्धत्वान्नञोऽगावार्थकत्वमावश्यकं, तथा चोत्तरपदार्थप्राधान्यादि व्यवस्थापागितुं शक्यम् । ननु घटः पटो न, घटो नास्तीत्यादौ घटतादात्म्याभावः पटनिष्ठः, घटकर्तृकसत्ताभाव इत्यभावविशेष्यकबोधानुभवादसः, असर्व इत्यादावपि तदभावः, सर्वाभाव इत्यादावपि अभावविशेष्यकबोधात्पूर्वपदार्थप्राधान्यापत्तेः कथमुत्तरपदार्थप्राधान्यादि सुयोजमिति चेदुत्तरपदार्थप्राधान्यादिसिद्धयर्थमेवाऽऽरोपितार्थकत्वं नञोऽङ्गीकरणीयमित्याह—**आरोपितत्वं नञ्द्योत्यमिति** । **अत एवेति** । उत्तरपदार्थप्राधान्याद्युपपत्तय एवेत्यर्थः । आरोपितत्वं = आरोपितब्राह्मणत्वादि, आरोपितं ब्राह्मणादिपदप्रवृत्तिनिमित्तमित्यब्राह्मणादिपदघटकनञा द्योत्यत इत्यर्थः । ननु नञोऽभावार्थकत्वे कथमुत्तरपदप्राधान्याद्यनुपपत्तिरत आह—**अयं भाव इति** । असर्व इत्यादावारोपितसर्वत्ववानित्यर्थे सति सर्वशब्दार्थस्य विशेष्यत्वात्सर्वनामसंज्ञा सिध्यति । **अन्यथेति** । उक्तवैपरीत्ये । नञ्समासे नञो भेदार्थकत्वे सति। पूर्वपदार्थप्राधान्येनोत्तरपदार्थप्राधान्याभावे सतीत्यर्थः । **अतिसर्व इत्यत्रेवेति** सर्वमतिक्रान्त इत्यर्थे 'अत्यादयः क्रान्ताद्यर्थे द्वितीयया' इति वार्तिकवचनेन

( नञर्थनिर्णयः )

**घटो नास्तीत्यादावभावविषयकबोधे तस्य विशेष्यताया एव दर्शनात् । अस्मद्रीत्या च स आर्थो बोधो मानसः । तथा चामर्षस्मा इत्याद्य·**

समासे कृते पूर्वपदार्थस्य विशेष्यत्वात्सर्वशब्दस्योपसर्जनत्वेन 'संज्ञोपसर्जनीभूतास्तु न सर्वादयः' इति निषेधात्सर्वादित्वाभावेन सर्वनामसंज्ञा यथा न भवति तथाऽत्रापि नञो भेदार्थकत्वेऽब्राह्मण इत्यत्र ब्राह्मणाभिन्न इतिवत्सर्वभिन्न इत्यर्थे पूर्वपदार्थस्य प्राधान्यात्सर्वशब्दस्योपसर्जनतया सर्वनामसंज्ञा न स्यात् । तथा चासर्वेऽसर्वस्मायित्यादिप्रयोगो नोपपद्येत, इतरविशेषणत्वेनोपस्थितिविषयस्योपसर्जनत्वादिति भावः । ननु असर्व इत्यादौ भेदप्रतियोगी सर्व इति बोधाभ्युपगमात्सर्वशब्दार्थस्य प्राधान्यं निर्वोढुं शक्यमित्यत आह—**घटो नास्तीति** । तस्य—अभावस्य । **विशेष्यताया एवेति** । घटाभावोऽस्तित्वाश्रयः, घटकर्तृकसत्ताभाव इति वा प्रतियोगिनिरूपितविशेष्यतयैव बोधस्यानुभवसिद्धत्वादिति भावः । नन्वेवमघट इत्यादौ घटभिन्न इति बोधस्य सर्वजनीनस्यापलापः क्रियत इत्याशङ्कयाऽऽह—**अस्मद्रीत्या चेति** । **स इति** । घटः पटो नेत्यादौ घटभिन्नः पट इत्येवं भेदविषयको बोध इत्यर्थः । **आर्थ इति** । अर्थादागत आर्थः । आर्थिक इति यावत् । घटभिन्न एव घटत्वारोपाद्घटाभिन्न इति बोधोऽर्थसिद्धो भवतीति, न तदपलापः क्रियते । **मानस इति** । मनोजन्यः, न तु शब्दजन्य इत्यर्थः । तत्र शब्दजन्यत्वप्रतीतिस्तु शब्दप्रयोज्यत्वाद्भ्रमरूपैवेति भावः । घटो नास्तीत्यादावसमस्तनञर्थाभावविशेष्यकबोधे तिङ्समभिव्याहृतधातुजन्योपस्थितिः कारणमित्येवं कार्यकारणभावनियमः क्लृप्तः । निरुक्तकार्यकारणभावनियमादेव त्वं नासि, अहं नास्मीत्यत्र त्वत्कर्तृकसत्ताभावः, मत्कर्तृकसत्ताभाव इत्यर्थाद्युष्मदस्मदोस्तिङ्वाच्यकारकवाचित्वेन सामानाधिकरण्यान्मध्यमोत्तमपुरुषव्यवस्था सिध्यति : घटौ न स्तः, घटा न सन्तीत्यत्र वचनव्यवस्था च सिद्धा । त्वत्प्रतियोगिकः, मत्प्रतियोगिकश्च योऽभावस्तत्कर्तृका सत्तेत्यर्थाभ्युपगमे तु युष्मदस्मदोस्तिङ्सामानाधिकरण्याभावात्सा न स्यात् । किंतु अभावस्य तिङ्सामानाधिकरण्यात्सर्वत्र प्रथमपुरुष एव स्यादित्यव्यवस्था स्पष्टैव । अहं नास्मीत्यत्र कर्तरि लट् , तथा च तिङ्वाच्यं यत्कारकं कर्तृरूपं तद्वाचित्वमस्मदर्थस्येति अस्मदर्थाभिन्नो यो मिबर्थः कर्ता तन्निष्ठा या सत्ता तदभाव इत्येवं तिङर्थे कर्तरि अस्मदर्थस्याभेदेनान्वयात्तिङ्सामानाधिकरण्यम् । एवमेव सर्वत्र तिङ्सामानाधिकरण्यं बोध्यम् । नन्वस-

**सिद्धिप्रसङ्गो नेति । अत्र चाऽऽरोपितत्वमारोपविषयत्वम्, आरोपमात्रमर्थो विषयत्वं तु संसर्ग इति निष्कर्षः । द्योत्यत्वोक्तिर्निपातानां**

र्वशब्दस्य सर्वनामसंज्ञाया अभावे का हानिरत आह—**तथा चेति** । सर्वप्रतियोगिको भेद इत्यर्थेऽभ्युपगते सर्वशब्दस्योपसर्जनतया सर्वादिबहिर्भावेन सर्वाद्यन्तत्वाभावादसर्वशब्दस्य सर्वनामत्वाभावे स्मायाद्यादेशो न स्यादित्यसर्वस्मायित्यादि न सिध्येदित्यर्थः । **अत्र चेति** । आरोपितत्वं नञ्द्योत्यमिति पक्षे चेत्यर्थः । **आरोपविषयत्वमिति** । तस्य च भेदसंबन्धेनोत्तरपदार्थे ब्राह्मणादावन्वयः । आरोपश्च प्रत्यासत्त्या प्रवृत्तिनिमित्तप्रकारक एव गृह्यते । तथा च 'अब्राह्मण इत्यत आरोपविषयत्ववान् ब्राह्मण इति बोध उदेति । आरोपितब्राह्मण्यवांश्च क्षत्रियादिरेवाब्राह्मणपदेन प्रतिपाद्यते नञ्समभिव्याहारे, इत्यर्थः । अथवा आरोपविषयत्वमित्यस्याऽऽरोपविषयप्रवृत्तिनिमित्तकत्वमित्यर्थः । आरोपविषयत्वस्य च राज्ञः पुरुष इत्यत्र स्वस्वामिभावरूपषष्ठ्यर्थसंबन्धस्येव प्रकारतया संसर्गतया च भानम् । अब्राह्मण इत्यादित आरोपितब्राह्मणत्ववानिति बोधः । आरोपितत्वविशिष्टब्राह्मणत्ववत्त्वं ब्राह्मणभिन्न एवेति न मुख्यब्राह्मणेऽब्राह्मणशब्दप्रयोगः । लाघवानुरोधादारोप एव नञर्थः, न त्वारोपविषयत्वं गौरवादित्याशयेनाऽऽह—**आरोपमात्रमिति** । स चाऽऽरोपो नञो द्योत्यो वाच्यो वाऽर्थः । तस्य चोत्तरपदार्थे विषयतासंबन्धेन विशेषणत्वमित्याह—**विषयत्वं संसर्ग इति** । विषयत्वस्य संसर्गमर्यादयैव लाभेनान्यलभ्यत्वादनन्यलभ्यः शब्दार्थ इतिन्यायेनाऽऽरोपमात्रं नञर्थः । यथा 'आश्रये तु तिङ स्मृताः' इत्यनेन फलाश्रये व्यापाराश्रये च तिङामुक्तत्वेऽपि फलव्यापारयोर्धातुलभ्यत्वेनाऽऽश्रयमात्रं तिङर्थ इत्युक्तं, अनन्यलभ्यः शब्दार्थ इति न्यायात्तद्वदिति भावः । आरोपस्य नञ्वाच्यत्वपक्षेऽपि विषयतासंबन्धेनोत्तरपदार्थे विशेषणत्वादारोपविषयो ब्राह्मण इत्यर्थान्नञ्तत्पुरुषे उत्तरपदार्थप्राधान्यस्य निर्वाहो ज्ञेयः । भाष्यमते तु स्वसमभिव्याहृतब्राह्मणादिपदानामारोपितप्रवृत्तिनिमित्तबोधकत्वे नञ् तात्पर्यग्राहक इति तात्पर्यग्राहकत्वरूपं द्योत्यत्वं नञर्थारोपस्येष्टम् । स्वं—नञ्, तत्समभिव्याहृतानि यानि ब्राह्मणादिपदानि अब्राह्मणः, असः, असर्व इत्यादिप्रयोगघटकानि, तेषां—आरोपितं यत्प्रवृत्तिनिमित्तं ब्राह्मणत्वादि, तद्रूपेण बोधकत्वं( आरोपविषयब्राह्मणत्वादिविशिष्टार्थबोधकत्वं ) इत्यर्थे नञ् तात्पर्यग्राहक इत्यर्थः । यद्वा बहुव्रीहिः, आरोपितं प्रवृत्ति-

( नञर्थनिर्णयः )

**द्योतकत्वमभिप्रेत्य ॥ ४० ॥**

**घटो नास्ति अब्राह्मण इत्यादावारोपबोधस्य सर्वानुभवविरुद्धत्वात्पक्षान्तरमाह—**

**अभावो वा तदर्थोऽस्तु भाष्यस्य हि तदाशयात् ।**

**विशेषणं विशेष्यो वा न्यायतस्त्ववधार्यताम् ॥२॥ (४१)**

**तदर्थो नञर्थः । अर्थपदं द्योत्यत्ववाच्यत्वपक्षयोः साधारण्येन कीर्तनाय । भाष्यस्येति । तथा च नञ्सूत्रे महाभाष्ये—निवृत्तपदार्थक**

---

निमित्तं यस्मिन्निति आरोपितप्रवृत्तिनिमित्तकत्वबोधे तात्पर्यग्राहकः नञित्यर्थो बोध्यः । आरोपस्य नञ्वाच्यत्वे तु अनारोपितब्राह्मणत्ववति मुख्ये ब्राह्मणपदार्थे आरोपान्वयो विरोधाद्दुरुपपादः स्यादेति बोध्यम् । ननु नञ आरोपार्थवाचकत्वस्वीकारेऽपि न क्षतिः, आरोपस्य विषयतासंसर्गेणोत्तरपदार्थे विशेषणत्वसंभवेन नञ्तत्पुरुषे उत्तरपदार्थप्राधान्यं निर्वोढुं शक्यमित्युक्तत्वादत आह—द्योत्यत्वोक्तिरिति । निपातमात्रस्य द्योतकत्वमिति वैयाकरणसिद्धान्तानुरोधादारोपितत्वं नञ्द्योत्यमित्युक्तं, नतु प्रकृते वाचकत्वस्वीकारे काचित्क्षतिरिति बोध्यम् । प्रादयो द्योतकाः, चादयो वाचका इति नैयायिकमतं त्वयुक्तं वैषम्ये बीजाभावादिति मूलकृदेवाग्रे निरूपयिष्यति । वस्तुतस्तु आरोपस्य नञ्द्योत्यत्वमेव युक्तं, वाच्यत्वे दोष उक्त एवेति भाष्यानुसारिण आहुः ॥ ४० ॥

पक्षान्तरमवतारयितुं भूमिकामारचयति—**घटो नास्तीति** । घटकर्तृकसत्ताभाव इति सर्वजनीनबोधान्नञ आरोपार्थकत्वं न कस्याप्यनुभवसिद्धं, तद्वदब्राह्मण इत्यादिसमासघटकनञोऽप्यारोपार्थकत्वमनुभवविरुद्धं, सर्वानुभवसिद्धाभावार्थापलापकं चेत्यत आह—**अभावो वा तदर्थोऽस्तु इति** । सर्वनाम्नां प्रधानपरामर्शित्वस्यौत्सर्गिकत्वेन ' क्रय्यस्तदर्थे ' (पा. सू. ६।१।८३)इत्यत्र विशेषणीभूतस्यापि प्रकृत्यर्थस्य क्रयणस्य तच्छब्देन परामर्शवत्प्रकृतेऽपि नञ्द्योत्यमित्यत्र विशेषणतयोपस्थितस्यापि नञस्तदर्थेत्यत्रत्यतच्छब्देन परामर्श इत्याशयेनाऽऽह—**तदर्थः—नञर्थ इति** । **अर्थपदमिति** । प्रकृतस्थलेऽर्थपदं नञ्पदजन्यबोधविषयार्थपरम् । तेन द्योत्यत्ववाच्यत्वयोर्द्वयोरपि संग्रहः सिद्धः, न त्वन्यत्रेव शब्दवाच्यार्थपरमित्याशयः । **भाष्यस्येति** । ' निवृत्तपदार्थकः ' इति भाष्यस्ये-

इति। निवृत्तं पदार्थो यस्य नपुंसके भावे क्त इति क्तोऽभावार्थक इत्यर्थः। यत्तु निवृत्तः पदार्थो यस्मिन्नित्यर्थः। सादृश्यादिनाऽध्यारोपितब्राह्मण्या क्षत्त्रियादयोऽर्था यस्येत्यर्थ इति कैयटः। तन्न; आरोपितब्राह्मण्यस्य क्षत्त्रियादेर्नञवाच्यत्वात्। अन्यथा सादृश्यादेरपि वाच्यतापत्तेः।

यत्तु—

" तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता।
अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्तिताः "

इति पठित्वाऽब्राह्मणोऽपापमनश्वोऽनुदरा कन्याऽपशवो वा अन्ये

---

त्यर्थः। तादृशभाष्यस्यार्थमाह—निवृत्तं पदार्थो यस्येति। भावे क्त इति। वृतुधातोर्नपुंसके भावे क्त इति सूत्रेण क्तप्रत्यये सति निवर्तनमित्यर्थको निवृत्तशब्दः। निवर्तनमभावः। तथा च यस्य—नञः पदार्थो निवृत्तमभाव इत्यर्थः। तदेतदाह—अभावार्थक इति। तदाशयादिति। अभावार्थको नञिति भाष्यतात्पर्यादित्यर्थः। ननु कैयटेन निवृत्तपदार्थकः ' इति भाष्यस्य यदन्यथावर्णनं कृतं तद्भाष्यतात्पर्यविरुद्धमिति कैयटोक्तिमनुवदति यत्त्वित्यादिना। निवृत्तःपदार्थो यस्मिन्निति। क्षत्त्रियादिरन्यपदार्थः। यस्मिन् क्षत्त्रियादौ ब्राह्मण्यरूपः पदार्था निवृत्तस्तत्त्वतो नास्ति। अर्थात् सादृश्यादिनाऽध्यारोपितब्राह्मण्याः क्षत्त्रियादयोऽर्था यस्य नञ इत्यर्थं कैयट आह। तथा च निवृत्तशब्दस्याऽऽरोपार्थकत्वं फलति। तन्नेत्याह—नञवाच्यत्वादिति। अध्यारोपितब्राह्मण्यकस्य क्षत्त्रियादेर्नञ्वाच्यत्वाभावादित्यर्थः। आरोपापेक्षया लाघवाल्लोकप्रसिद्धेश्चाभावस्यैव नञ्वाच्यत्वाभ्युपगमस्य न्याय्यत्वादिति भावः। अन्यथेति। उक्तवैपरीत्ये। लोकप्रसिद्ध्याद्यनादरेणाध्यारोपितब्राह्मण्यकस्य अध्यारोपितं ब्राह्मण्यं यस्मिंस्तादृशस्य क्षत्त्रियादेर्नञ्वाच्यत्वाङ्गीकार इत्यर्थः। सादृश्यदेरिति। आदिशब्देनाधस्तात्पठिष्यमाणवचनस्थाल्पत्वादयो ग्राह्याः। अब्राह्मण इत्यादौ सादृश्यादेरपि प्रतीयमानत्वान्नञ्वाच्यताऽऽपद्येतेत्यर्थः। तत्सादृश्यमभावश्चेत्यादि पठित्वा क्रमेणोदाहरन्तीत्याह—अब्राह्मणमित्यादि। ब्राह्मणसदृश इति तदर्थः। अपापमित्यस्य पापात्यन्ताभावोऽर्थः। अनश्व इत्यस्याश्वान्य इत्यर्थः। अब्राह्मण इत्यत्र सादृश्यघटकत्वेनान्यत्वबोधः, न केवलान्यत्वबोध इति विशेषः। तद्भिन्नत्वे

( नञर्थनिर्णय. )

गौअश्वेभ्योऽधर्म इत्युदाहरन्ति, तत्तु आर्थिकार्थमभिप्रेत्येति स्पष्टमन्यत्र। विशेषणमिति। प्रतियोगिनीति शेषः। तथा चासर्वपदे सर्वनामसंज्ञा, "अनेकमन्यपदार्थे" [ पा० सू० २-२-२४ ] "सेव्य-

सति तद्भिन्नभूयोधर्मवत्त्वस्य सादृश्यत्वादन्यत्वस्य सादृश्यघटकत्वं बोध्यम्। अनुदरा कन्येत्यत्राल्पोदरेति बोधः। अपशवो वा इत्यस्याप्रशस्ताः पशव इत्यर्थः। अधर्म इत्यस्माद्धर्मविरोध्यदृष्टविशेषः प्रतीयते, नतु तद्भिन्नमात्रम्। **आर्थिकार्थमिति**। सर्वत्राभाव एव नञर्थः। तथा चाभावप्रतियोगी ब्राह्मण इति बोधोत्तरं सादृश्यादेर्मानसो बोधः। अभावप्रतियोगित्वेन ब्राह्मणादिबोधनाय यद्ब्राह्मणपदं प्रयुज्यते तत्सादृश्यादिना क्षत्रियादिबोधनार्थमित्येवंरीत्या सादृश्यस्य मानसो बोधः। अनुदरा कन्येत्यत्रोदरात्यन्ताभावस्य सर्वथाऽसंभवेनाल्पार्थे पर्यवसानम्. असुर इत्यत्र सुराणां सुरपदादेव बोधसंभवेनाभावप्रतियोगित्वेन सुरबोधनार्थं यदसुरपदं प्रयुज्यते तद्विरोधित्वेन सुरद्रोहिदैत्यादिपरमित्येवंरीत्या विरोधस्य मानसो बोधः। एवमन्यत्राप्यूह्यम्। अनया रीत्या सादृश्यादेरार्थिकार्थत्वमभिप्रेत्य तत्सादृश्यमभावश्चेत्याद्यभियुक्तोक्तिर्नतु नञ्वाच्यत्वमभिप्रेत्येति भावः। ननु नञर्थाभावस्य प्रतियोगिव्यतिरिक्ते विशेषणत्वेनान्वयेऽसामर्थ्यादब्राह्मण इत्यादौ समासो न स्यादित्याशङ्कां निराचिकीर्षुराह—**प्रतियोगिनीति**। प्रतियोगिनिष्ठविशेष्यतानिरूपितविशेषणत्वं नञर्थाभावस्येति अब्राह्मण इत्यादेर्ब्राह्मणत्वाद्यवच्छिन्नप्रतियोगितासंबन्धेनाभावविशिष्टो ब्राह्मण इति बोधः। तथा चाभावप्रतियोगी ब्राह्मण इति शाब्दबोधे ब्राह्मणप्रतियोगिकोऽभाव इति बोध आर्थिकः। अघटः पट इत्यत्र पटवृत्तिभेदप्रतियोगी घट इति बोधः, नञो निपातत्वात्तदर्थे घटस्य नामार्थस्याऽऽधेयतासंबन्धेनान्वयो न विरुद्धः अघटमानयेत्युक्ते घटस्याऽऽनयनं तु न, नञ उपादानसामर्थ्यात्। शाब्दबोधोत्तरं प्रतीयमानस्य घटप्रतियोगिकाभाववत एवाऽऽनयनसंभवादिति भावः। नञ्समासस्योत्तरपदार्थप्रधानत्वे फलमाह—**तथा चेत्यादि**। सर्वनामसंज्ञा, एकवचननियमः, तत्पुरुषत्वं, पुरुषवचनादिव्यवस्था चेति चतुर्णां प्रथमान्तपदानामुपपद्यत इत्यनेनान्वयः। **सर्वनामसंज्ञेति**। असर्वे, इत्यत्र नञर्थाभावस्य प्रतियोगिनि सर्वशब्दार्थे विशेषणत्वेन प्रतियोगितयाऽभावविशिष्टाः सर्वे इति बोधात्सर्वशब्दार्थस्य प्राधान्येन सर्वादित्वात्तदन्तविधिना सर्वनामसंज्ञोपपद्यते। **अनेकमिति**। इदमेवोत्तरपदार्थ-

**तेऽनेकया संनतापाङ्ग्या " इत्यादावेकशब्दार्थप्राधान्यादेकवचननियमः। अब्राह्मण इत्यादावुत्तरपदार्थप्राधान्यात्तत्पुरुषत्वम्। अत्वं भवसि अनहं भवामीत्यादौ पुरुषवचनादिव्यवस्था चोपपद्यते। अन्यथा**

प्राधान्यस्य मुख्यं प्रयोजनम्। तथा च भाष्यम्—'इदं खल्वपि भूय उत्तरपदार्थप्राधान्ये संगृहीतम्। किम्? अनेकमिति। किमत्र संगृहीतं? एकवचनम्' इति। अभावप्रतियोगी एक इत्यर्थादुत्तरपदार्थप्राधान्येनानेकमित्यत्रैकवचनमुपपद्यते। एवमेव सेव्यतेऽनेकया इत्यत्राप्येकवचनं सिद्धम्। अन्यथैकभिन्नस्यानेकत्वाद्द्विवचनबहुवचने एव स्यातां, नत्वेकवचनमिति भावः। एवं चानेकमिति पाणिनिनिर्देश एव नञर्थाभावस्योत्तरपदार्थे विशेषणत्वे प्रमाणमित्यवगन्तव्यम्। स्वौजसिति सूत्रेण प्रातिपदिकात्सामान्यत एकवचनद्विवचनबहुवचनानि विधाय द्वयोर्द्विवचनमेवावतिष्ठते, इत्यर्थात्तत्रैकवचनबहुवचनयोर्निवृत्तिः, एवं बहुषु बहुवचनमेवावतिष्ठते, तथा च तत्रैकवचनद्विवचनयोर्निवृत्तिरित्येवंरीत्या द्व्येकयोरित्यादीनां नियामकत्वं स्वीकृत्यैकवचननियम इत्युक्तं सारकृता। अब्राह्मण इत्यत्र ब्राह्मणत्वावच्छिन्नप्रतियोगितासंबन्धेनाभावविशिष्टो ब्राह्मण इत्यर्थादुत्तरपदार्थप्राधान्यान्नञ्समासस्य तत्पुरुषत्वं सिध्यति। तदुक्तं तत्पुरुषत्वमिति। सति संभवे प्रायिकस्याप्युत्तरपदार्थप्राधान्यस्य तत्पुरुषे औचित्यमिति आशयः। **अत्वं भवसीति**। अभावप्रतियोगी युष्मदर्थ इति युष्मदर्थस्य प्राधान्याद्युष्मदर्थाभिन्नो यो लडर्थः कर्ता इत्यभेदान्वयेन युष्मदर्थस्य तिङ्सामानाधिकरण्याद्युष्मद्युपपदे०, इत्यनेन मध्यमपुरुष उपपद्यते। एवमनहं भवामीत्यत्रास्मद्युत्तम इत्युत्तमः सिध्यति। तथा अयुवां भवथः, अयूयं भवथेति द्विवचनादिव्यवस्था चोपपद्यते। उत्तरपदार्थप्रतियोगिकाभाव इत्येवं पूर्वपदार्थप्राधान्यस्वीकारे पुरुषादिव्यवस्था नोपपद्यत इत्याह—**अन्यथेति**। नञर्थाभावस्योत्तरपदार्थनिरूपितप्राधान्ये सतीत्यर्थः। **इतिवदिति**। त्वदभावो मदभावोऽस्तीत्यत्र यथा युष्मदस्मत्सामानाधिकरण्याभावान्न मध्यमोत्तमपुरुषौ भवतोऽपि तु युष्मदस्मदर्थप्रतियोगिकाभावेन तिङ्सामानाधिकरण्याच्छेषे प्रथम इति प्रथमपुरुष एव भवति, तद्वदत्वं भवसि अनहं भवामीत्यत्र युष्मदस्मदर्थस्य नञर्थाभावनिरूपितविशेषणत्वाभ्युपगमे—पूर्वपदार्थप्राधान्याभ्युपगम इति यावत्, प्रथमपुरुष एव स्यात्। एवमयुवां भवथः, अयूयं भवथेति द्विवचना-

( नञर्थनिर्णयः )

त्वदभावो मदभाव इतिवदभावांशे युष्मदस्मदोरन्वयेन युष्मत्सामानाधिकरण्यस्य तिङ्क्ष्वसत्त्वात्पुरुषव्यवस्था न स्यात्। अस्मन्मते च भेदप्रतियोगित्वदभिन्नाश्रयिका भवनक्रियेत्यन्वयात्सामानाधिकरण्यं नानुपपन्नमिति भावः। विशेष्यो वेति। प्रतियोगिनीति शेषः। अयं भावः—गौणत्वेऽपि नञ्समासे "एतत्तदोः सुलोपोऽकोरनञ्समासे हलि" [ पा० सू० ६-१-१३२ ] इति ज्ञापकात्सर्वनामसंज्ञा नानुपपन्ना। असः शिव इत्यत्र सुलोपवारणायानञ्समास इति हि विशे-

दिकमपि न स्यात् कर्तुरभावस्यैकत्वात्। अभावांश इति। युष्मदस्मदर्थप्रतियोगिकोऽभाव इत्यर्थो युष्मदस्मदर्थनिष्ठप्रकारतानिरूपितविशेष्यताऽभावांशे सतीत्यर्थः। तिङ्क्षु असत्त्वादिति। अभावस्य प्रधानस्य तिङ्वाच्यकारकत्वाभावेनाभावसामानाधिकरण्यात्तद्विशेषणयुष्मदर्थस्य तिङ्षु सामानाधिकरण्याभावादित्यर्थः। पुरुषेति। तिबादित्रिकसंकेतितमध्यमादिपुरुषेत्यर्थः। स्वमते पुरुषादिव्यवस्थामुपपादयति—अस्मन्मते चेति। चस्त्वर्थे। अत्वं भवसीत्यादेरभावप्रतियोगी यो युष्मदर्थस्तदभिन्नाश्रयिका सत्तेत्यर्थात्तिङ्षु युष्मदाद्यर्थसामानाधिकरण्यसत्त्वात्पुरुषव्यवस्था नानुपपन्ना। ननूत्तरपदार्थप्राधान्ये अघटमानयेत्यत्राभावप्रतियोगित्वस्य घटे सत्त्वात्तद्बोधानन्तरं घटानयनमपि प्राप्नोतीत्यत आह—विशेष्यो वेति। विशेष्यताया विशेषणनासाकाङ्क्षत्वादाह प्रतियोगिनीति। उत्तरपदार्थात्मके प्रतियोगिनीत्यर्थः। निरूपितत्वं सप्तम्यर्थः। उत्तरपदार्थात्मकप्रतियोगिनिष्ठविशेषणतानिरूपितविशेष्यतावान्नञर्थोऽभाव इत्यर्थः। तथा चाब्राह्मणः क्षत्रिय इत्यतो ब्राह्मणप्रतियोगिको +ऽभावस्तद्वान्क्षत्रिय इति बोधः। नन्वेवमसः, असर्वे, इत्याद्यसिद्धिरित्याशङ्क्याऽऽह—अयं भाव इति। गौणत्वेऽपीति। नञ्समासान्तर्गततत्तच्छब्दार्थस्य नञर्थाभावनिष्ठविशेष्यतानिरूपितविशेषणत्वेनोपसर्जनत्वेऽपीत्यर्थः। ज्ञापकादिति। अनञ्समासग्रहणाज्ज्ञापकादित्यर्थः। ज्ञापकतामेवोपपादयति—असः शिव इत्यादिना। एतत्तदोरित्यनेन सर्वनामसंज्ञकयोरेतत्तदोर्यः सुस्तस्य हलि लोपो विधीयते। नञ्तत्पुरुषस्य पूर्वपदार्थप्राधान्ये तद्घटकैतत्तदोरुपसर्जनत्वेन सर्वादिबहिर्भावात्सर्वनामत्वाभावेन सुलोपाप्राप्त्या व्यर्थं सद-

---

+ अभावश्च प्रत्यासत्त्योत्तरपदार्थगब्राह्मणत्वादेरिति ब्राह्मणत्वाभावश्च क्षत्रियादावेव संभवतीति अब्राह्मण इत्यस्य क्षत्रियादिरर्थः।

**षणम् । न च तत्र तच्छब्दस्य सर्वनामताऽस्ति गौणत्वात् । अकोरित्यकच्सहितव्यावृत्त्या सर्वनाम्नोरेव तत्र ग्रहणलाभात् । तथा चानञ्समास इति ज्ञापकं सुवचमनेकमन्यपदार्थं इत्या विकवचनं विशेष्यानुरोधात् । " सुवामन्त्रिते पराङ्गवत्स्वरे " [ पा० सू० २-१-२ ]**

---

नञ्समासग्रहणं नञ्समासेऽउपसर्जनीभूतस्यापि सर्वादेः सर्वनामतां ज्ञापयतीति भावः । ननूपसर्जनत्वेऽपि अनेषो ददाति असः शिव इत्यत्रैतत्तच्छब्दसत्त्वेन सुलोपः प्राप्नोतीति तद्वारणार्थमनञ्समासग्रहणमावश्यकमिति शङ्क्यम् । न चैतत्तच्छब्दार्थगतसंख्याभिधायी यः सुस्तस्य लोप इत्यर्थात्पूर्वपदार्थप्राधान्ये सति नञर्थाभावगतसंख्याभिधायित्वेन सोरेतत्तच्छब्दार्थगतसंख्याभिधायित्वाभावात्सुलोपाप्राप्त्याऽनञ्समासग्रहणं व्यर्थमिति वाच्यम् । एतत्तदोरिति षष्ठ्यास्तादृशसंबन्धार्थकत्वे मानाभावात् । गापोष्टगितिवदनन्तरपदाध्याहारेण एतत्तदोरनन्तरस्य सोर्लोप इत्यर्थस्यौचित्यात् । तथा चानञ्समासग्रहणस्य चरितार्थत्वात्कथं तस्य ज्ञापकतेत्यत आह—**अकोरिति** । अकच्सहितयोः पर्युदासेनाकच्योग्ययोः सर्वनामसंज्ञकयोरेवतत्तदोर्ग्रहणमुचितं, संयोगवद्विप्रयोगस्याप्यशङ्कवक्रो हरिरित्यादौ विशेषावगतिहेतुत्वस्य क्लृप्तत्वादिति भावः । **तथा चेति** । अकोरिति पर्युदासेन सर्वनामसंज्ञकयोरेवैतत्तदोर्ग्रहणे चेत्यर्थः । तथा चासः शिव इत्यादौ नञर्थाभावस्य विशेष्यत्वे तदादेरुपसर्जनत्वेन सर्वादिबहिर्भावेन सर्वनामत्वाभावादेव सुलोपाप्राप्त्याऽनञ्समासग्रहणं व्यर्थं सत्पूर्वोक्तार्थे ज्ञापकमिति भावः किं चैतत्तच्छब्दमात्रग्रहणेऽपि अतितदित्यादाविवोपसर्जनेऽत्वाभावेन हल्ङ्यादिलोपस्य दुर्वारतथाऽनञ्समासग्रहणस्य वैयर्थ्यमित्यपि बोध्यम् । **ज्ञापकमिति** । नञ्समासस्य पूर्वपदार्थप्राधान्येऽपि उत्तरपदार्थप्राधान्यप्रयुक्तकार्यप्रवृत्तौ ज्ञापकमित्यर्थः । तेनात्वं भवसि, अयुवां भवथः, इत्यादौ पुरुषवचनव्यवस्थाऽपि सिध्यतीति भावः । **विशेष्यानुरोधादिति** । ' सुबामन्त्रिते० ' इत्यतोऽनुवर्तमानं सुबिति विशेष्यमेकवचनान्तमेवेति तदनुरोधाद्विशेषणेऽनेकमित्यत्रैकवचनं कृतमिति भावः । नञ्समासस्य पूर्वपदार्थप्रधानत्वे सति अनेकमित्यस्य एकभिन्न इत्यर्थादेकाभिन्नस्य चानेकत्वादनेकशब्दाद्द्विवचनं बहुवचनं वा क्रियतां, तदनुरोधादनुवर्तमाने सुबिति विशेष्ये द्विवचनं बहुवचनं वाऽस्तु नन्दिग्रहिपचादिभ्य इत्यत्रानुवृत्ते धातोरिति विशेष्ये धातुभ्य इति वचनविपरिणामवदित्याशङ्क्याऽऽह—**किं चानेकश०** ।

( नञर्थनिर्णयः )

इत्यतोऽनुवर्तमानं सुब्ग्रहणं विशेष्यमेकवचनान्तमेव । किं चानेकशब्दाद्द्विवचनोपादाने बहूनां बहूवचनोपादाने द्वयोर्बहुव्रीहिर्न सिध्येदित्युभयसंग्रहायैकवचनं जात्यभिप्रायमौत्सर्गिकं वा, सेव्यतेऽनेकयेत्यत्रापि योषयेतिविशेष्यानुरोधात्प्रत्येकं सेवनान्वयबोधनाय चैकवचनं न तूत्तरपदार्थप्राधान्यप्रयुक्तम् । अत एव पतन्त्यनेके जलधेरिवोर्मयदिति ।

अनेके सुबन्ते इति द्विवचने कृते बहूनां सुबन्तानां बहुव्रीहिर्न स्यात् । अन्यपदार्थे वर्तमाने द्वे सुबन्ते समस्येते इति अनेकमन्यपदार्थे, इति सूत्रेण द्वयोरेव सुबन्तयोर्बहुव्रीहिविधानात् । अथानेकान्यन्यपदार्थे, इति बहुवचने कृते अन्यस्य पदस्यार्थे वर्तमानानि बहूनि सुबन्तानि समस्यन्त इत्यर्थाद् द्वयोः सुबन्तयोर्बहुव्रीहिर्न स्यात्, इष्यते तु द्वयोर्बहूनां वा सुबन्तानां बहुव्रीहिरित्यत उभयोः संग्रहाय जात्यैकवचनं, द्वित्वे द्विवचनं, बहुत्वे बहुवचनं विधाय 'एकवचनं' इति सूत्रेण सामान्यत एकवचनं विहितं, तादृशं संख्यानभिधाय्यौत्सर्गिकं वैकवचनमनेकमित्यत्र पाणिनिना कृतम् । एवं सेव्यतेऽनेकयेत्यत्रापि योषयेति विशेष्यानुरोधादनेकशब्दादुपस्थितासु योषासु प्रतिस्त्रियं सेवान्वयबोधनाय कविनैकवचनं कृतम् । नतूत्तरपदार्थप्राधान्यमादायैकवचनं कृतम् । नञर्थाभावस्योत्तरपदार्थनिष्ठविशेषणतानिरूपितविशेष्यत्वमिति पक्षे भाष्यसंमते उत्तरपदार्थप्राधान्यस्यासंभवादिति भावः । अत्र योषाशब्दो योषित्समुदायपर इत्येकवचनान्तः तथा च सेव्यतेऽनेकयेत्यादिप्रयोगानुरोधान्नञ्समासे उत्तरपदार्थप्राधान्यमङ्गीकार्यमिति यदुच्यते तत्परास्तम् । अनेकयेत्याद्येकवचनान्तत्वस्यान्यथोपपादितत्वादित्याशयः । अत एवेति । नञ्समासस्य पूर्वपदार्थप्राधान्यादेवेत्यर्थः । पतन्त्यनेके जलधेरिति । सूपपादमिति । सुखेनोपपादयितुं शक्यमित्यर्थे ण्यन्तात्पदेरुपपूर्वकात्कर्मणि खल् । पूर्वपदार्थप्राधान्ये सति एकभिन्नमित्यर्थादेकभिन्नस्य चानेकत्वादनेके इत्यत्र बहुवचनं सूपपादमित्यर्थः । उत्तरपदार्थप्राधान्ये त्वत्रानेकशब्दस्य बहुवचनान्तत्वं नोपपद्येत, उत्तरपदरूपैकशब्दार्थस्य प्राधान्यादेकवचनमेव स्यात्, समस्यमानप्रधानपदार्थगतसंख्याभिधायकत्वं तदुत्तरसुप इत्यस्यौचित्यादिति भावः । ननु यदि विशेष्यानुरोधादनेकमित्यादावेकवचनमुपपाद्यते तर्हि अवर्षाः-हेमन्त इत्यत्रापि हेमन्तरूपविशेष्यानुरोधादेकवचनान्तत्वं प्रसज्येतेति चेन्न । गुणवचनानामाश्रयतो लिङ्गवचनानीति भाष्य एवोक्तत्वात् । एवं च नञ्समासस्य क्वचिदनुयोगिगते

**इत्यादिकमपि सूपपादम् । अत्वं भवसीत्यादौ युष्मदस्मदोस्तद्भिन्ने लक्षणा । नञ् द्योतकः । तथा च भिन्नेन युष्मदर्थेन तिङः सामानाधिकरण्यात्पुरुषव्यवस्था । त्वद्भिन्नाभिन्नाश्रयिका भवनक्रियेति शाब्दबोधः । एवं न त्वं पचसीत्यत्र त्वदभिन्नाश्रयकपाकानुकूलभावनाभावः।**

---

लिङ्गसंख्ये क्वचिच्च प्रतियोगिगते इति स्वीकारान्न दोष इति भावः । ननु एतत्तदोरिति सूत्रेऽनञ्समासग्रहणं नञ्समासस्य पूर्वपदार्थप्राधान्येनोत्तरपदार्थस्योपसर्जनत्वेऽपि सर्वनामसंज्ञायामेव ज्ञापकमुक्तं सारकृता तथा चास इत्यादेः सिद्धावपि अत्वं भवसीत्यादौ पुरुषव्यवस्थाऽनुपपन्नेत्याशङ्क्य परिहरति—**अत्वं भवसीत्यादाविति** । युष्मदस्मद्भिन्ने लक्षणा । नञ् तु तादृशलक्षणायां तात्पर्यग्राहकः । तात्पर्यग्राहकत्वमेव द्योतकत्वम् । नञ्समभिव्याहारे युष्मच्छब्दस्य युष्मद्भिन्ने वृत्तिरिति यावत् । अत्वं भवसीत्यादिशब्देनानहं भवामीति ग्राह्यम् । **तथा चेति।** नञो द्योतकत्वे चेत्यर्थः । **भिन्नेन युष्मदर्थेनेति** । त्वद्भिन्नरूपयुष्मच्छब्दार्थेन । **तिङः सामानाधिकरण्यादिति** । युष्मच्छब्दार्थस्याभेदेन तिङर्थकर्तर्यन्वयेन तिङ्वाच्यकारकवाचित्वात्सामानाधिकरण्ये सति त्वद्भिन्नाभिन्नो यस्तिङर्थः कर्ता तन्निष्ठा भवनक्रियेति शाब्दबोधात्पुरुषव्यवस्था सिद्धा । युष्मदस्मच्छब्दार्थस्तु मुख्य एवेति नाऽऽग्रहः । त्वद्भिन्नरूपो यो युष्मदर्थस्तदभिन्नस्तिङर्थकर्तृरूप आश्रय आधारो यस्यास्तादृशी भवनक्रियेति शाब्दोऽर्थः । एवमनहं भवामीत्यत्र शाब्दबोध ऊह्यः । नञ्समासस्य पूर्वपदार्थप्राधान्येऽप्युत्तरपदार्थप्राधान्यप्रयुक्तकार्यप्रवृत्तिरित्यर्थे नञ्समासग्रहणं ज्ञापकमिति स्वीकृते तु विनाऽपि लक्षणां पुरुषव्यवस्था सिध्यतीति पूर्वमुक्तं शांकर्याम् । सारकृता तु सर्वनामसंज्ञायामेव ज्ञापकमनञ्समासग्रहणमित्याशयेन निरुक्तरीत्या प्रकारान्तरेण पुरुषव्यवस्था साधितेति ज्ञेयम् । प्रसज्यप्रतिषेधार्थकस्य नञोऽन्वयव्यवस्थामाह—**एवमित्यादिना** । **त्वदभिन्नाश्रयकेति** । युष्मच्छब्दार्थस्याभेदेन तिङर्थकर्त्रऽन्वयाद्युष्मदर्थाभिन्न आश्रयो यस्या एतादृशी या विक्लित्त्यनुकूला भावना—व्यापारस्तदभाव इत्यर्थः । व्यापारो भावना सैवोत्पादना सैव च क्रियेति भावनादयो व्यापारपर्यायाः । पर्यायत्वं च शक्यतावच्छेदकैक्ये सति विभिन्नशक्ततावच्छेदकत्वम् -

**घटो नास्तीत्यत्र घटाभिन्नाश्रयकास्तित्वाभाव इति रीत्या बोधः । असमस्तनञः क्रियायामेवान्वयबोधात् । स चाभावोऽत्यन्ताभावत्वान्योन्याभावत्वादिरूपेण शक्यस्तत्तद्रूपेण बोधादित्यन्यत्र विस्तरः ॥२॥ ( ४१ ) ॥**

इति रङ्गोजिभट्टात्मजकौण्डभट्टविरचिते वैयाकरणभूषणसारे
नञर्थनिर्णयः समाप्तः ॥

---

**घटाभिन्नाश्रयकेति** । घटाभिन्नः—घटरूप आश्रयो यस्य, एतादृशं यदस्तित्वं—अस्तिक्रिया तदभाव इत्यर्थः । **असमस्तनञ इति** । प्रसज्यप्रतिषेधविषयनञ इत्यर्थः । यथाश्रुतं तु न युक्तम् । **क्रियायामेवान्वयादिति** । अत्र प्रमाणं, ' न युक्तं ' इत्यादिकं च ' संबोधनान्तं कृत्वोर्थाः ' इति षोडशकारिकाव्याख्यावसरे पूर्वमेवोक्तं तत्तत्र द्रष्टव्यम् । अत्र क्रियाग्रहणं गुणस्याप्युपलक्षणम् । अत एव नञ्सूत्रे भाष्ये—' प्रसज्य क्रियागुणौ ततः पश्चान्निवृत्तिं करोति ' इत्युक्तम् । प्रसज्य—विधाय, तस्य प्रतिषेध इति तदर्थः । तेन गुणाभावबोधेऽपि प्रसज्यप्रतिषेध इति लभ्यते । गुणोदाहरणं तु—' न नः, एकं प्रियम् ' इति । ' नः ' इति षष्ठीबहुवचनान्तम् । अत्र ह्येकप्रियनिषेधेन बहुप्रियप्रतीतिर्भवति । अत्रैकत्वं संख्यारूपो गुणस्तत्प्रतिषेधः । नोऽस्माकमेकं प्रियं नेति प्रतिषेधसामर्थ्यादेव संख्यान्तरयुक्तवस्तुप्रतीतिर्जायते । तथा च ' प्रसज्य प्रतिषेधोऽयं क्रियया सह यत्र नञ् , इति प्रसज्यप्रतिषेधलक्षणेऽपि क्रियाग्रहणं गुणोपलक्षणं बोध्यम् । **स चेति** । नञर्थाभावश्चेत्यर्थः । अत्यन्ताभावत्व—अन्योन्याभावत्वरूपविशेषरूपेण शक्यः । आदिपदेन प्रागभावप्रध्वंसाभावौ संगृह्येते । ननु सकलाभावानुगताभावत्वात्मकसामान्यरूपेणैव नञोऽभावे शक्तिः कल्प्या लाघवात् , न त्वत्यन्ताभावत्वादिरूपविशेषरूपेण गौरवादित्याशङ्कां मनसिकृत्याऽऽह—**तत्तद्रूपेण बोधादिति** । अत्यन्ताभावत्वादितत्तद्विशेषरूपेण बोधस्यानुभवसिद्धत्वादित्यर्थः । यथा पचतीत्यतः फूत्कारत्वाधःसंतापनत्वादिविशेषरूपेणैव व्यापारः प्रतीयते, न त्वनुकूलत्वेन व्यापारत्वेन वा सामान्यरूपेण, तद्वदित्यर्थः । परमलघुमञ्जूषायां तु असमस्तस्य नञोऽत्यन्ताभावोऽन्योन्याभावश्चार्थः । तादात्म्येतरसंबन्धाभावोऽत्यन्ताभावः, तादात्म्यसंबन्धाभावोऽन्योन्याभावो भेद इत्यर्थः । समस्तस्य तु नञोऽभाव एवार्थ इत्युक्तम् ॥ ४१ ॥

## अथ निपातार्थनिर्णयः ( ८ ) ।

प्रादयो द्योतकाश्चादयो वाचका इति नैयायिकमतमयुक्तं वैषम्ये बीजाभावादिति ध्वनयन्निपातानां द्योतकत्वं समर्थयते–

द्योतकाः प्रादयो येन निपाताश्चादयस्तथा ।
उपास्येते हरिहरौ लकारो दृश्यते यथा ॥ १ ॥ ( ४१ )

येन हेतुना प्रादयो द्योतकास्तेनैव हेतुना चादयो निपातास्तथा द्योतका इत्यर्थः । अयं भावः–ईश्वरमनुभवतीत्यादावनुभवादिः प्रतीयमानो न धात्वर्थः । भवतीत्यत्राप्यापत्तेः । नोपसर्गार्थः । तथा सत्य-

---

इति वैयाकरणभूषणसारव्याख्यायां शांकर्यां नञर्थनिर्णयः ।
रङ्गभट्टतनूजेन शंकरेण विनिर्मिते ।
पूर्णः सारीयविवृते नञर्थस्य विनिर्णयः ॥ ७ ॥

अथ निपातार्थनिर्णयः ( ८ ) ।

निपातविशेषनञर्थनिरूपणप्रसङ्गेन तदितरसकलनिपातानामर्थं निरूपयन्प्रादयो द्योतकाश्चादयो वाचका इति नैयायिकमतमयुक्तमिति सूचयन् भूमिकामारचयति– **प्रादयो द्योतका इत्यादि** । द्योतकत्वरूपशक्तियुक्ताः । द्योतकत्वं च प्रायेण स्वसमभिव्याहृतपदगतशक्त्युन्नायकत्वम् । **वैषम्ये बीजाभावादिति** । उपसर्गत्वेन द्योतकत्वं, चादित्वेन च वाचकत्वमित्येवंभेदकरणे प्रमाणाभावात् । प्रादिचाद्युभयवृत्तिनिपातत्वेन हेतुना प्रादीनामिव चादीनामपि द्योतकत्वकल्पनस्यैव लाघवेन युक्तत्वाच्चेति भावः । इत्याद्याशयं मनसिकृत्य निपातानां द्योतकत्वं समर्थयन्नाह–**द्योतकाः प्रादयो येनेति** । येन हेतुना प्रादयो द्योतका इष्यन्ते तेनैव हेतुना चादयो निपाता अपि द्योतका इत्यङ्गीकार्यम् । येन हेतुना प्रादयो द्योतकास्तमेव हेतुं विशदयन्नाह–**अयं भाव इति । ईश्वरमनुभवतीत्यादाविति** । आदिपदात्प्रजयतीत्यादेः परिग्रहः । अनुभवादिरित्यादिपदेन प्रकृष्टजयादेः संग्रहः । अनुभवतीत्यादौ योऽयमनुभवादिरर्थः प्रतीयते स किं तादृशप्रयोगघटकीभूतधातोरर्थः ? नेत्याह–**आपत्तेरिति** । यदि सोऽनुभवादिर्धातोः शक्यः स्यात्तर्हि उपसर्गरहिते भवतीत्यादावपि अनुभवाद्यर्थः प्रतीयेत, नैव तु प्रतीयत इति स नैव धातोः शक्योऽर्थ इत्यर्थः । नन्वन्वयव्यतिरेकाभ्यामुपसर्गवाच्यः सोऽ-

(निपातार्थनिर्णयः)

**प्रकृत्यर्थतया तत्राऽऽख्यातार्थानन्वयापत्तेः । प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वव्युत्पत्तेः । अनुगच्छतीत्यादावनुभवादिप्रत्ययापत्तेश्च । न विशिष्टार्थो गौरवात् । तथा च धातोरेव विद्यमानत्वादिवाचक-**

---

स्त्वित्याशङ्क्य परिहरति—**नोपसर्गार्थ इति** । **तथा सतीति** । अनुभवतीत्यादौ प्रतीयमानस्यानुभवाद्यर्थस्योपसर्गवाच्यत्वे सतीत्यर्थः । **अनन्वयापत्तेरिति** । अनुभवतीत्यत्र लडर्थकर्तृको वर्तमानकालिकोऽनुभवानुकूलो व्यापार इत्यनुभवसिद्धसार्वजनिकबोधेऽनुभवार्थस्योपसर्गवाच्यत्वेन धातुवाच्यत्वाभावात्तस्य लडर्थकर्तर्यन्वयो न स्यात् । तत्र हेतुमाह—**प्रत्ययानामिति** । स्वप्रकृत्यर्थेनान्वितो यः स्वार्थस्तद्बोधकत्वं प्रत्ययानामिति नियमात् । प्रकृतेऽनुभवरूपार्थस्य धात्ववाच्यत्वेन तिङर्थकर्तृकोऽनुभवानुकूलव्यापार इत्येवमन्वयासंभवादित्यर्थः । ननु प्रत्ययानां स्वप्रकृतितरसमभिव्याहृतान्यत*रार्थान्वितस्वार्थबोधकत्वमित्येव नियमः कल्प्यतां तथा चानुभवतीत्यत्र तिङ्प्रत्ययप्रकृतिभूतभूधातुसमभिव्याहृतानुपसर्गवाच्यानुभवरूपार्थान्वितव्यापारान्वितकर्तृरूपार्थबोधकत्वात्तिङस्तिङर्थकर्तृकोऽनुभवानुकूलो व्यापार इत्यन्वयोपपत्तेः प्रकृते न दोष इत्याशयेन दोषान्तरमाह—**अनुगच्छतीत्यादाविति** । अत्रानुभवरूपार्थवाचकत्वेनाभिमतस्यानोः प्रयोगसत्त्वात्तदनुरोधेन संयोगानुकूलव्यापारविशेषवाचकस्यापि गमिधातोर्व्यापारसामान्यवाचित्वाङ्गीकारेण तिङर्थकर्तृकोऽनुभवानुकूलव्यापार इत्यनुभवार्थप्रतीत्यापत्तेरिति भावः । वस्तुतस्तु उत्तरदेशसंयोगावरुद्धे व्यापारविशेषेऽनूपसर्गवाच्यानुभवार्थस्य बाधेनान्वयासंभवान्नानुभवार्थप्रतीतिसंभव इति गमधातोर्व्यापारसामान्यवाचित्वस्वीकारस्याप्रामाणिकत्वमिति भावः । तस्मात्प्रत्ययानां प्रकृत्यर्थेत्यादिव्युत्पत्तौ तत्समभिव्याहृतेतिनिवेशस्य गौरवादप्रामाणिकत्वाच्चानुभवार्थस्यानूपसर्गवाच्यत्वेन धातुवाच्यत्वाभावात्तस्य तिङर्थकर्तर्यन्वयो न स्यादित्येव प्रागुक्तं दूषणं बोध्यम् । तथा च नामार्थधात्वर्थयोरिति व्युत्पत्तिरपि निपातेतरविषयत्वेन न संकोच्या भवतीति भावः । अनूपसर्गविशिष्टतद्धातुवाच्य इतिचेत्तदपि नेत्याह—**न विशिष्टार्थ**

---

* उपसर्गवाच्यार्थस्य धात्वर्थेऽन्वयं कृत्वा विशिष्टस्य प्रत्ययार्थेऽन्वयात्प्रत्ययार्थस्यानुभवान्वितत्वम् । नामार्थधात्वर्थयोः साक्षाद्भेदेन नान्वय इति व्युत्पत्तिस्तु निपातातिरिक्तविषयेति भावः ।

**स्यास्तु लक्षणा । उपसर्गस्तात्पर्यग्राहक इत्यस्तु । तथा तात्पर्यग्राहकत्वमेव द्योतकत्वमिति । एतच्चादिष्वपि तुल्यम् । चैत्रमिव पश्यतीत्यादौ सादृश्यविशिष्टं चैत्रपदलक्ष्यम् , इवशब्दस्तात्पर्यग्राहक इत्यस्य**

---

इति । **गौरवादिति** । विशिष्टस्योभयरूपत्वेन विशिष्टानुपूर्व्याः शक्ततावच्छेदकत्वे ( वाचकत्वकल्पने ) गौरवादित्यर्थः । ननु प्रजयतीत्यत्र जयो धातुवाच्यः, प्रकर्षः प्रोपसर्गवाच्य इति न शक्ततावच्छेदकगौरवमिति चेत्—उच्यते—प्रकर्षस्य नामार्थतया धात्वर्थजयेनान्वयो न स्यात् , नामार्थधात्वर्थयोः साक्षाद्भेदेन नान्वय इति व्युत्पत्तेः । नामार्थेत्यत्र नामानि निपातातिरिक्तेति विशेषणनिवेशे तु गौरवमप्रामाणिकत्वं चेति भावः । उपसंहरन्नाह—**तथा चेति** । निरुक्तरीत्या धातोरुपसर्गस्य चानुभवनवाचकत्वासंभवे चेत्यर्थः । स्वसिद्धान्तमाह—**धातोरेवेति** । भ्वादितत्तद्धातोरेवेत्यर्थः । एवशब्देनोपसर्गव्यावृत्तिः । ननु वृत्तिं विना कथमनुभवार्थप्रतीतिरत आह—**विद्यमानत्वादिवाचकस्यास्तु लक्षणेति** । विद्यमानत्वेत्यादिषष्ठ्यन्तं धातोर्हेतुगर्भं विशेषणम् । यतो धातुर्विद्यमानत्वादिवाचकः—घटो भवतीत्यादौ विद्यमानत्वाद्यर्थप्रतीतेः, अतो धातोरेव शक्यसंबन्धरूपा लक्षणा संभवति, केवलस्योपसर्गस्याप्रयोगात्कस्याप्यर्थस्य वाचकत्वाभावेन शक्यसंबन्धरूपा लक्षणोपसर्गस्य न संभवतीत्यर्थः । विद्यमानत्वादीत्यादिशब्देनोत्पत्तेः संग्रहः । लक्षणेत्यस्योपसर्गसमभिव्याहारे प्रतीयमानोऽयोऽर्थोऽनुभवादिस्तत्र लक्षणेत्यर्थः । उपसर्गप्रयोगस्य प्रयोजनमाह—**उपसर्गास्त्विति** । धातोस्तादृशेऽर्थे लक्षणावृत्तिस्वीकारे तात्पर्यग्राहक इत्यर्थः । तात्पर्यत्वं च धातोरनुभवादिरूपलाक्षणिकार्थप्रतीतिर्भवत्वितीच्छयोच्चारितत्वम् । नन्वेवं प्रकारेणोपसर्गाणां तात्पर्यग्राहकत्वं लभ्यते, न द्योतकत्वमिति द्योतकत्वपक्षो न संगच्छत इत्यत आह—**तथा च तात्पर्यग्राहकत्वमेवेत्यादि** । तादृशद्योतकत्वं च वाचकत्वेन त्वदभिमतेषु चादिनिपातेष्वप्यस्तीत्याह—**तच्चेति** । न केवलप्रतिज्ञया काचिदर्थसिद्धिरिति प्रतिज्ञातमर्थं चादिषु योजयित्वा दर्शयति—**चैत्रमिवेत्यादि** । इवशब्दसमभिव्याहारे चैत्रपदं लक्षणया चैत्रसदृशपरं, इवशब्दस्तु चैत्रपदस्य चैत्रसदृशे लक्षणायां तात्पर्यग्राहकः । चैत्रनिरूपितसादृश्यविशिष्टं पश्यतीत्यर्थः । तथा च यथैव युक्त्या प्रादयो द्योतकास्तथैव युक्त्या चादयोऽपि द्योतका भवेयुरिति नैया-

( निपातार्थनिर्णयः )

सुवचत्वात्, इति स्वयं युक्त्यन्तरमाह—उपास्येते इति। अत्र ह्युपासना किमुपसर्गार्थो विशिष्टस्य धातुमात्रस्य वा। नाऽऽद्यः। तथा सति स्वार्थफलव्यधिकरणव्यापारवाचकत्वरूपसकर्मकत्वस्याऽऽसधातोरुपासनारूपफलवाचकत्वाभावादनापत्तेस्ततः कर्मणि लकारो न स्यात्। न द्वितीयो गौरवात्। तृतीये त्वागतं द्योतकत्वं तात्पर्यग्राहकत्वलाभादिति भावः। दृश्यत इत्यत्र कर्मणीति शेषः॥ १॥ ( ४२ )॥

तच्चादिष्वपि तुल्यमित्याह -

---

यिकक्तं वैषम्यमयुक्तमिति सूचयन्नाह -सुवचत्वादिति। सादृश्यविशिष्टं चैत्रपदलक्ष्यं, इवशब्दस्तात्पर्यग्राहक इत्यर्थस्य सुखेन वक्तुं शक्यत्वादित्यर्थः। तत्र—द्योतकत्वे। युक्त्यन्तरमाह—उपास्येते इति। हरिहराभिन्नलडर्थकर्मनिष्ठोपासनानुकूलो व्यापार इति बोधः। अत्र हि प्रतीयमानस्योपासनरूपार्थस्योपसर्गवाच्यत्वं, उपसर्गविशिष्टधातुवाच्यत्वं, उत धातुमात्रवाच्यत्वं वेति त्रिधा विकल्प्य नाऽऽद्य इत्याह—तथा सतीति। उपासनरूपार्थस्योपसर्गवाच्यत्वे सतीत्यर्थः। स्वार्थेत्यादि। स्वं—धातुः, तदर्थः तद्वाच्यं यत्फलं तेन विभिन्नाधिकरणको यो व्यापारस्तद्वाचित्वं सकर्मकत्वमिति तदर्थः। तथा च आस् धातोरुपासनरूपफलवाचकत्वाभावेन सकर्मकत्वाभावात्ततः कर्मणि लकारो न स्यात्। न द्वितीय इत्याह—गौरवादिति। उपसर्गविशिष्टधातुवाच्यत्वे विशिष्टानुपूर्व्याः शक्ततावच्छेदकत्वकल्पने गौरवादित्यर्थः। किं च विशिष्टस्य भ्वादिगणे पाठाभावाद्धातुसंज्ञानापत्तिः। पाठः कल्प्यत इति चेत्—उपसर्गविशिष्टस्य द्विर्वचनाद्यापत्तिरिति बोध्यम्। यदि उपासनरूपार्थस्य धातुमात्रवाच्यत्वमिति तृतीयं कल्पमङ्गीकरोषि तर्हि उपोपसर्गसमभिव्याहारे प्रतीयमानो योऽर्थ उपासनरूपस्तत्र आस् धातोर्लक्षणेति समागतं द्योतकत्वं, उपोपसर्गस्य तात्पर्यग्राहकत्वकल्पनादिति भावः। ननु धातोः सकर्मकत्वाभावेऽपि उपास्यत इत्यत्र भावे लकारोऽस्त्वित्याशयेनाऽऽह—दृश्यत इत्यत्र कर्मणीति शेष इति। भावे लकारे उपास्येते हरिहरौ, इति प्रयोगो न स्यात्। तथा चैतत्प्रयोगसिद्ध्यर्थमुपोपसृष्टस्याऽऽस्धातोः सकर्मकत्वमवश्यमेष्टव्यं निरुक्तरीत्येति भावः॥ ४२॥

तत्—द्योतकत्वम्। चादिष्वपीति। नैयायिकमते वाचकत्वेनाभिमतेषु चा-

( निपातार्थनिर्णयः )

तथाऽन्यत्र निपातेऽपि लकारः कर्मवाचकः ।

विशेषणाद्ययोगोऽपि प्रादिवच्चादिके समः ॥ २ ॥ ( ४३ )

अन्यत्र साक्षात्क्रियतेऽलं क्रियत उरी क्रियते शिव इत्यादौ । अत्रापि धातोस्तत्तदर्थे कर्मणि लकारसिद्ध्यर्थं तत्तदर्थवाचकत्वं वाच्यमित्युपसर्गवदेव द्योतकत्वममीषामपीत्यर्थः । यद्यपि कृधातोः सकर्मकत्वमस्त्येव तथाऽप्येष्वर्थेषु सकर्मकता न स्यात् । अन्यथा वायुर्विकुरुते

---

दिष्वपीत्यर्थः । तुल्यं—सममित्याह—तथाऽन्यत्र निपात इति । अन्यत्रेति । प्रादिभ्योऽन्यस्मिन्निपातेऽपि कर्मणि लकारो दृश्यत इत्याह—साक्षादिति । इन्द्रियजन्यप्रतीतिविषयताशालिप्रत्यक्षानुकूलो व्यापारोऽर्थः । अलंक्रियत इति । शोभानुकूलो व्यापारविशेषः । ऊरीति । स्वीकृत्यनुकूलो व्यापारः । अत्रापीति । साक्षात्क्रियते इत्याद्युक्तेषूदाहरणेष्वपीत्यर्थः । तत्तदर्थ इति । प्रत्यक्षाद्यर्थे, इत्यर्थः । कर्मणीति । साक्षात्कारादिरूपफलाश्रय इत्यर्थः । तत्तदर्थेति। प्रत्यक्षा( साक्षात्कारा )द्यनुकूलव्यापारार्थबोधकत्वमित्यर्थः । साक्षात्प्रभृतिनिपातसमभिव्याहारे प्रतीयमानो योऽर्थस्तत्र धातोर्लक्षणयेति भावः। तत्फलमाह—लकारेति । कर्मणि लकारसिद्ध्या इत्यर्थः । तथा चोपसर्गवच्चादिनिपातानामपि द्योतकत्वं युक्तमित्याशयः । यदि तु निपातसमभिव्याहारे प्रतीयमानेऽर्थे धातोः शक्तिः, धातूनामनेकार्थत्वात् , निपातस्तु स्वसमभिव्याहृतपदगतशक्त्युन्नायकः, शक्त्युन्नायकत्वं तु शक्त्युद्बोधकत्वं, शक्त्युद्बोधकत्वमेव च द्योतकत्वमित्याश्रीयते तर्हि ‘ तत्तदर्थवाचकत्वं ’ इति यथाश्रुतमेव साध्विति मन्तव्यम् । साक्षात्काराद्यर्थे कृधातोः सकर्मकत्वकल्पनं व्यर्थमित्याक्षिपति—यद्यपीति । सकर्मकत्वमस्त्येवेति । घटः क्रियत इत्यादौ कर्मणि लकारस्य दृष्टत्वादिति भावः । एष्वर्थेष्विति । साक्षात्काराद्यर्थेषु सकर्मकता न स्यादित्यर्थः । क्वचिदर्थे कृञः सकर्मकत्वमर्थान्तरे सकर्मकत्वाश्रयणेऽकिंचित्करमित्याह—अन्यथेति । यत्किंचिदर्थे कृञः सकर्मकत्वे स्थिते तदाश्रित्यार्थान्तरेऽपि तस्य सकर्मकत्वाभ्युपगम इत्यर्थः । वायुर्विकुरुत इति । घटं करोतीत्यत्र कृधातोः सकर्मकत्वस्य दृष्टत्वाद्वायुर्विकारमापद्यत इत्यर्थप्रतीतेर्विकारस्य तदनुकूलव्यापारस्य च वायुरेक एवाऽऽश्रय इत्यकर्मकस्थलेऽपि तस्य सकर्मकतापत्तिः स्यात् । तथा च ‘ अकर्मकाच्च ’ इत्युक्तमात्मनेपदं न स्यात् । किं च वायुना विक्रियत इति भावे लकारो न

( निपातार्थनिर्णयः )

**सैन्धवा विकुर्वत इत्यत्रापि स्यादिति भावः। अथोपासनासाक्षात्कारादिर्निपातार्थोऽस्तु " साक्षात्प्रत्यक्षतुल्ययोः " इति कोशस्वरसात्। तदनुकूलो व्यापार एव धात्वर्थोऽस्तु स्वस्वयुक्तनिपातान्यतरार्थफलव्यधिकरणव्यापारवाचित्वं सकर्मकत्वमपि सुवचमिति दृष्टान्तदार्ष्टान्तिकावयुक्ताविति नेदं साधकमिति चेन्न। नामार्थधात्वर्थयोर्भेदेन**

---

स्यात्। अपि च साक्षात्कारादेर्धात्वर्थत्वाभावेन गुर्वादेः कर्मत्वमेव न स्यात्, धात्वर्थफलाश्रयस्यैव कर्मत्वादिति भावः। ततश्च सकर्मकत्वानुपपत्त्या कृञः साक्षात्काराद्यर्थे लक्षणा शक्तिर्वाऽभ्युपगन्तव्येत्याशयः। नैयायिकमतमनुवदति— **अथेत्यादिना**। **प्रत्यक्षतुल्ययोरिति**। अत्र सप्तम्या वाचकत्वेन प्रत्यक्षतुल्ययोर्वाचकः साक्षाच्छब्द इति शक्तिग्राहकः कोशः। अत एव कोशे वाचकानामेव पाठ इति प्रसिद्धिः संगच्छते। यद्यपि उपनिपातस्योपासनार्थे शक्तिग्राहकः कोशो न दृश्यते तथाऽपि ' उच्चावचेष्वर्थेषु निपतन्तीति निपाता इति 'निरुक्तोक्तेरुपनिपातस्याप्युपासनार्थवाचकत्वं कल्प्यते। **तदनुकूल इति**। उपासनासाक्षात्काराद्यनुकूलव्यापार एव धात्वर्थ इत्यर्थः। फलं तु निपातार्थ एवेति भावः। तथा च साक्षात्क्रियते गुरुरित्यादौ गुर्वभिन्नाश्रयनिष्ठो या विषयतासंबन्धेन साक्षात्कारस्तदुत्पत्त्यनुकूलो व्यापार इत्यादिर्बोधः। ननु धातोः फलावाचकत्वे स्वार्थफलव्यधिकरणेति पूर्वोक्तरीत्या सकर्मकत्वं न स्यादत आह—**स्व—स्वयुक्तनिपातेत्यादि**। स्वं—धातुः, स च तद्युक्तनिपातश्च' एतयोरन्यतरस्यार्थभूतं यत्फलं तद्व्यधिकरणव्यापारवाचकत्वं सकर्मकत्वमित्यर्थः। **अयुक्ताविति**। यथा प्रादयो द्योतका इति दृष्टान्तः, तथा चादयोऽपीति दार्ष्टान्तिकोऽर्थः। दृष्टान्ते उपास्यते गुरुः, दार्ष्टान्तिके—साक्षात्क्रियते शिवः, इत्यत्र चोपासनासाक्षात्कारयोर्निपातवाच्यत्वं, तदनुकूलव्यापारमात्रस्य च धातुवाच्यत्वं, स्वसमभिव्याहृतनिपातार्थभूतं यदुपासनासाक्षात्काररूपं फलं तद्व्यधिकरणव्यापारवाचकत्वादासधातोः कृधातोश्च सकर्मकत्वम्। एवं चोभयत्रापि निपातस्य द्योतकतां विनैव निपातार्थभूतोपासनासाक्षात्काररूपफलाश्रयत्वेन गुर्वादेः कर्मत्वनिर्वाहाद्दृष्टान्तदार्ष्टान्तिकावयुक्ताविति भावः **नेदं साधकमिति**। ततश्च उपास्यते गुरुरित्यादौ गुर्वादेर्लकारेणोपासनादिकर्मत्वेनाभिधानं, साधकं—धातोर्विशिष्टार्थवाचकत्वस्य, निपातानां द्योतकत्वस्य च साधकं नेत्यर्थः। इति चेदुच्यते तन्नेत्याह—**नामार्थधात्वर्थ-**

साक्षादन्वयासंभवान्निपातार्थधात्वर्थयोरन्वयस्यैवासंभवात् । अन्यथा तण्डुलः पचतीत्यत्रापि कर्मतया तण्डुलानां धात्वर्थेऽन्वयापत्तेरिति । किंच प्रादीनां वाचकत्वे भूयान्प्रकर्षः कीदृशो निश्चय इतिवद्भूयान्प्र कीदृशो निरित्यपि स्यात् । अस्मन्मते प्रादेरनर्थकत्वान्न तदन्वय इत्यत एव द्योतकता तेषां स्यादिति साधकान्तरमभिप्रेत्याऽऽह–विशेषणेति । शोभनः समुच्चयो द्रष्टव्य इतिवच्छोभनश्च द्रष्टव्य इत्यस्या-

---

योरिति । नामार्थश्च धात्वर्थश्च तयोः साक्षाद्भेदसंबन्धेनान्वयो नेति व्युत्पत्तेः—प्रकृतस्थले नामार्थस्योपासनादिरूपस्य फलस्य धात्वर्थे व्यापारेऽनुकूलतारूपभेदसंबन्धेनान्वय एव न स्यात् , दूरे तु गुर्वादेरुपासनादिकर्मत्वेन लकारेणाभिधानादिकं, साक्षात्प्रत्यक्षतुल्ययोरित्यादिकोशादिकं तु द्योत्यार्थमादायोपपन्नमिति भावः। अन्यथा—नामार्थधात्वर्थयोः साक्षाद्भेदेनान्वयाभ्युपगमे । तण्डुलः पचतीति । तण्डुल इत्यत्र कर्मत्वाविवक्षया प्रातिपदिकार्थमात्रविवक्षणे प्रथमा । एतादृशः प्रयोगस्तण्डुलं पचतीत्यर्थेऽशुद्ध एव । अत्र नामार्थस्य तण्डुलस्य भेदसंबन्धेन = कर्मतासंबन्धेन धात्वर्थे पाकक्रियायामन्वयः स्यात् । कर्मत्वस्य संसर्गतया भानसंभवात् । तथा च कर्मतासंबन्धबोधकाद्वितीयाया अभावेऽपि तण्डुलकर्मको विक्लित्त्यनुकूलो व्यापार इत्यनिष्टबोध आपद्येत, निरुक्तवाक्यान्निरुक्तबोधस्यानुभवविरुद्धत्वादिति भावः । नामार्थधात्वर्थयोरिति व्युत्पत्तौ नामनि निपातातिरिक्तेति विशेषणनिवेशे तु निपातार्थधात्वर्थयोरन्वयासंभवरूपापत्तिर्नेत्यत आह––किंचेति । इतिवदिति । प्रकर्षनिश्चयशब्दयोस्तत्तदर्थवाचकत्वाद्यथा तत्र भूयस्त्वादिविशेषणान्वयो भवति तद्वदित्यर्थः । इत्यपि स्यादिति । प्रादिनिपातानां प्रकर्षाद्यर्थवाचकत्वे तत्र भूयस्त्वाद्यन्वयेन भूयान् प्रेत्यादिरपि प्रयोगः, नाम प्राद्युपसर्गार्थस्य विशेष्यता स्यादित्यनिष्टापत्तिः । तादृशप्रयोगात्तादृशार्थाप्रतीतेरिति भावः । अस्मन्मत इति । निपातानां द्योतकत्वमेवेति वादिनां वैयाकरणानां मत इत्यर्थः । न तदन्वय इति । भूयस्त्वादिविशेषणान्वयो नेत्यर्थः । प्रादीनामनर्थकत्वात्—वाचकत्वाभावादिति यावत् । अतः प्रादीनां द्योतकता सिध्यतीति भावः । साधकान्तरमिति । प्रादिनिपातानां द्योतकत्वमेवेत्येतद्विषयेऽन्यत्साधकमित्यर्थः । शोभनः समुच्चय इति । समुच्चयशब्दस्य समुच्चयार्थवाचकत्वात्तत्र यथा शोभनरूपविशेषणान्वयो भवत्येवं निपातानां वाचकत्वे सति

ऽऽपत्तेस्तुल्यसमाधेयत्वादिति भावः। अपि च निपातानां वाचकत्वे प्रातिपदिकार्थयोर्विना षष्ठ्यादिकं भेदेनान्वयासंभवः। अन्यथा राजा

---

चशब्दोपस्थाप्येऽर्थे शोभनान्वय आपद्येत । ततश्च शोभनश्च इति प्रयोगः, नाम चोपस्थाप्यार्थस्य विशेष्यतया भानं स्यादित्यर्थः । **तुल्यसमाधेयत्वादिति** । सेयमापत्तिस्तुल्येन—प्रादितुल्येन निरर्थकत्वहेतुना समाधातुं शक्या । यथा प्राद्युपसर्गसमभिव्याहारे प्रतीयमानो योऽर्थस्तत्रार्थे धातोर्लक्षणा, प्राद्युपसर्गास्तु द्योतकाः, तथा चादिनिपातसमभिव्याहारे प्रतीयमानेऽर्थे धातोर्लक्षणा, चादिनिपातास्तु द्योतकाः, इत्यभ्युपगमेन चादिनिपातानामनर्थकत्वान्न तत्र शोभनादिविशेषणान्वय इत्यर्थः । एवं च शोभनः समुच्चय इत्यत्र समुच्चयशब्दवाच्यार्थस्य विशेष्यतया भानवत् शोभनश्चेत्यत्र विशेष्यतया भानापत्तिप्रदर्शनमयुक्तमेव । चादिनिपातानामनर्थकत्वेन तत्र शोभनादिविशेषणान्वय एव नेति कुतो विशेषणतानिरूपितविशेष्यतेति भावः । ततश्च भूयान् प्र, शोभनश्च, इत्यादिप्रयोगापत्तिर्नेति तात्पर्यम् । नन्वभेदसंबन्धेन नामार्थप्रकारकबोधे जननीये निपातातिरिक्तशब्दजन्योपस्थितिः कारणमित्येवं कार्यकारणभावोऽभ्युपगम्यते । अत्र नामार्थप्रकारकबोधः कार्यम् । तत्कारणं च निपातातिरिक्तशब्दजन्योपस्थितिः । भूयान् प्रकर्षः, शोभनः समुच्चय इत्यत्र निपातभिन्नशब्दजन्योपस्थितेः सत्त्वाद्भूयस्त्वविशिष्टाभिन्नः प्रकर्षः, शोभनाभिन्नः समुच्चय इत्यर्थप्रतीतेरभेदेन शोभनादिनामार्थप्रकारकः शाब्दबोधो जायत इति युक्तम् । भूयान् प्र, शोभनश्चेत्यत्र तु निपातजन्याया एवोपस्थितेः सत्त्वेन कारणाभावान्नाभेदेन नामार्थप्रकारकः शाब्दबोधः—कार्यं जायत इति निपातानां वाचकत्वेऽपि न काचित्क्षतिरित्यत आह——**अपि चेति** । **वाचकत्व इति** । निपातानां वाचकत्वाभ्युपगम इत्यर्थः । **असंभव इति** । घटश्चेत्यत्र कम्बुग्रीवादिमान् घटपदार्थः । चार्थः समुच्चयः । न ह्येतयोर्घटाभिन्नः समुच्चय इत्यभेदेनान्वयः संभवति । किं तु घटप्रतियोगिकः समुच्चय इति भेदेनान्वयो वाच्यः । स तु दुर्लभः । समानविभक्तिकनामार्थयोरभेदान्वय इति व्युत्पत्तेः । नामार्थयोर्भेदेनान्वयबोधं प्रति एकपदोत्तरविभक्तिविरुद्धविभक्तिपदजन्योपस्थितेः कारणत्वात्प्रकृते तदभावेन नामार्थयोर्भेदसंबन्धेनान्वयासंभव इत्यर्थः । ततश्च घटश्चेत्यादिवाक्यं मूकं स्यादिति भावः । **अन्यथेति** । विना षष्ठ्यादिकं नामार्थयोर्भेदेनान्वयाभ्युपगम इत्यर्थः । **राजा पुरुष इति** । समानविभक्तिका-

( निपातार्थनिर्णयः )

**पुरुष इत्यस्य राजसंबन्धी पुरुष इत्यर्थस्याप्यापत्तेरित्यभिप्रेत्याऽऽह—प्रादीति । धवखदिरयोः समुच्चय इतिवद्धवस्य च खदिरस्य चेत्येव स्यादिति भावः ॥ २ ॥ ( ४३ ।**

**ननु प्रातिपतिकार्थयोर्भेदेनान्वयबोधे विरुद्धविभक्तिजन्योपस्थितिर्हेतुरिति कार्यकारणभावो निपातातिरिक्तविषय एवेति नोक्तदोष**

---

भ्यामपि राजसंबन्धी पुरुष इति भेदेनान्वयबोध आपद्येतेत्यर्थः । वैयाकरणमते निपातानां द्योतकत्वेन निपातसमभिव्याहारे तत्तत्प्रातिपदिकस्यैव निपातार्थविशिष्टस्वार्थबोधकतया एकपदोपस्थाप्यत्वेनान्वयाभावादेव न घटश्चेत्यादौ भेदेनान्वयरूपो दोषः । घटश्चेत्यादौ घटपदमेव घटसमुच्चयरूपार्थबोधकमिति भावः । सारे ' विना षष्ठ्यादिकं ' इत्युक्तिस्तु षष्ठ्यादिसत्त्वे तदर्थद्वारा नामार्थयोरपि भेदेनान्वयो भवत्येवेति बोधनाय । अत एव राज्ञः पुरुष इत्यत्र राजनिष्ठस्वामितानिरूपितस्वतावान् पुरुष इति स्वस्वामिभावरूपभेदेनान्वयप्रतीतिः संगच्छते । षष्ठ्यादिकमित्यादिपदेन तदर्थकद्वितीयादेः संग्रहः । नन्वेवं घटस्य समुच्चय इतिवद्घटस्य चेति स्यादित्याह—आदीनि । निपातानां वाचकत्वे नामार्थयोर्विभिन्नविभक्तिकयोर्भेदेनान्वय धवखदिरयोः समुच्चय इतिवद्, धवस्य च, खदिरस्य च, इत्येव स्यात्, अन्यथाऽन्वयायोगात् । न तु धवश्च खदिरश्चेत्यर्थः । घटः पटश्चास्तीत्यत्र घटस्यास्तिक्रियायामन्वयः । अत एव तिङ्सामानाधिकरण्यात्तत्र प्रथमा । घटः, समुच्चयवान् पटोऽस्तीति बोधः । समुच्चयस्य प्रतियोग्याकाङ्क्षायां संनिहितत्वाद् घटस्य प्रतियोगित्वं, पटे तु चार्थसमुच्चयस्य भेदेनान्वयः, न तु पटस्य समुच्चय इति निपातानां वाचकत्वेऽपि कथं धवस्य च खदिरस्य चेति षष्ठ्यापादनम् । नामार्थयोरिति व्युत्पत्तिस्तु निपातातिरिक्तविषया । अतः समुच्चयस्यानुयोगितासंबन्धेन पटेऽन्वयो नानुपपन्नः, इति मञ्जूषायां निरूपितम् ॥ ४३ ॥

शङ्कते—नन्विति । भेदेनान्वयबोध इति । राजा पुरुषः, इत्यतो राजसंबन्धी पुरुष इत्येवं भेदान्वयबोधवारणाय प्रातिपदिकार्थयोर्भेदेनान्वयबोधे एकपदोत्तरविभक्तिविरुद्धविभक्तिमत्पदजन्योपस्थितिर्हेतुरिति यः कार्यकारणभावः क्लृप्तः स निपातातिरिक्तस्थल एवेत्याश्रयणेन धवखदिरयोः समुच्चय इतिवद्धवस्य च खदिरस्य चेत्येव स्यान्नतु धवश्च खदिरश्चेति यो दोष उक्तः स परिहृतो भवती-

( निपातार्थनिर्णयः )

इत्याशङ्क्याऽऽह–

पदार्थः सदृशाऽन्वेति विभागेन कदाऽपि न।
निपातेतरसंकोचे प्रमाणं किं विभावय ॥ ३ ॥ ( ४४ )।

सदृशा सदृशेन समानाधिकरणेनेति यावत्। अन्वेति, अभेदेनेति शेषः। विभागेन, असदृशेन, असमानाधिकरणेनेति यावत्। अयमर्थः–समानाधिकरणप्रातिपदिकार्थयोरभेदान्वयव्युत्पत्तिर्निपातातिरि-

---

त्याशङ्क्याऽऽह–पदार्थः सदृशाऽन्वेतीति। 'सदृशा' इति। वाचा विशेतिवदाबन्तमिति भ्रमनिरासायाऽऽह–सदृशेनेति। विभिन्नविभक्तिकस्यापि प्रातिपदिकत्वादिना येन केनचिद्धर्मेण सादृश्यात्तेनाप्यभेदान्वय आपद्येतेत्यत आह–समानाधिकरणेनेति। विभिन्नविभक्तिरहितपदजन्योपस्थितिकेनार्थेनेत्यर्थः। समानविभक्तिकपदजन्योपस्थितिविषयत्वेन सादृश्यं विवक्षितमिति भावः। अन्वेति–अभेदेनान्वेतीत्यर्थः। समानविभक्तिकनामार्थयोरभेदान्वय इति नियमादिति भावः। नामजन्यप्रतीतिविशेष्ययोरेवान्वयः। स चाभेदेनैवेति तदर्थात्। असदृशेनेति। अतुल्येनेत्यर्थः। असमानाधिकरणेति। विरुद्धविभक्तिमत्पदजन्योपस्थितिकेनेत्यर्थः। कदा चेति। कदाऽपीत्यर्थः। नेति। अभेदेन नान्वेतीत्यर्थः। समानविभक्तिकनामार्थयोरिति पूर्वोक्तनियमादेवेत्यर्थः। समानविभक्तिकत्वं च स्वप्रकृतिकविभक्तिसजातीयविभक्तिकत्वम्। साजात्यं च विभक्तिविभाजकतावच्छेदकप्रथमात्वद्वितीयात्वादिना ग्राह्यम्। स्वं–विशेषणवाचकनीलपदं, तत्प्रकृतिका या विभक्तिः–द्वितीया–अम्, तत्सजातीया या विभक्तिः, सैवाम्विभक्तिस्तादृशाम्विभक्तिमत्त्वं घटमिति द्वितीयान्ते वर्तत इति कृत्वा नीलं घटं पश्येत्यत्र नीलघटपदयोः समानविभक्तिकत्वमिति लक्षणसमन्वयः। यज्जातीयविभक्त्यन्तपदोपस्थाप्योऽर्थः, तज्जातीयविभक्त्यन्तपदोपस्थाप्येनार्थेनाभेदेनैवान्वेतीति, पदार्थः सदृशाऽन्वेतीत्यस्यार्थः। तद्भिन्नजातीयविभक्त्यन्तपदोपस्थाप्येनार्थेन कदाऽप्यभेदेन नान्वेतीति, विभागेन कदा च नेत्यस्यार्थः। ननु निपातानां वाचकत्वे प्रातिपदिकार्थयोर्भेदेनान्वयबोधे यः कार्यकारणभाव उक्तः स निपातातिरिक्तविषयत्वेन संकोच्यते। तथा च चाद्यर्थसमुच्चयादेर्निपातार्थत्वेन तेन सह पदार्थान्तरस्य भेदेनान्वयो नानुपपन्न इत्याशयेनाऽऽह–अयमर्थ इति। राज्ञः पुरुष

**क्तविषयेति कल्पने मानाभावो गौरवं च । अस्माकं निपातानां द्योतकत्वादन्वय एव नास्तीति नायं दोषः । अत एव घटो नास्तीत्यादौ घटपदं तत्प्रतियोगिके लाक्षणिकमिति नैयायिकाः ॥ ३ ॥ ( ४४ )**

---

इत्यत्राभेदेनान्वयबोधवारणाय समानाधिकरणप्रातिपदिकार्थयोरभेदान्वय इति नियमोऽवश्यमाश्रयणीयः । सामानाधिकरण्यं च एकपदोत्तरविभक्तिविरुद्धविभक्तिरहितत्वे सति एकार्थाभिधायकत्वम् । राज्ञः सुतस्य धनमित्यत्र राजसुतशब्दयोर्विरुद्धविभक्तिरहितत्वेऽपि नाभेदेनान्वयः । एकत्र षष्ठ्या जन्यत्वार्थत्वेनापरत्र स्वत्वार्थत्वेनैकार्थाभिधायकत्वाभावात् । ततश्च घटश्चेत्यत्र घटप्रातिपदिकोपस्थाप्ययोरर्थयोर्घटप्रतियोगिकः समुच्चय इत्येवं भेदसंबन्धेनान्वयो वक्तुमशक्यः । यदि तु निरुक्तव्युत्पत्तिघटकप्रातिपदिके निपातातिरिक्तेति निवेशयेत, निपातातिरिक्ते ये प्रातिपदिके तदर्थयोरभेदान्वय इत्यर्थान्निपातस्थले घटश्चेत्यादौ भेदेनान्वये बाधकाभाव इत्युच्यते चेन्निपातातिरिक्तेतिनिवेशे प्रमाणं नास्ति, गौरवं च भवेदित्याशयवानाह—**निपातेतरसंकोच इत्यादि** । ननु घटश्चेत्यत्र भेदेनान्वयानुपपत्तिरेव निपातातिरिक्तेति निवेशे प्रमाणं भवेदित्यत आह—**गौरवं चेति** । प्रमाणसिद्धं गौरवं न दोषायेति चेन्निपातानां द्योतकत्वाभ्युपगमेऽन्वय एव नास्तीत्यन्वयानुपपत्तेर्दूरापास्तत्वादित्याह—**अस्माकमिति** । निपातानां द्योतकत्ववादिनामस्माकं वैयाकरणानामित्यर्थः । **द्योतकत्वादिति** । निपातसमभिव्याहारे स्वसमभिव्याहृतघटादिप्रातिपदिकस्यैव लक्षणया प्रातिपदिकार्थविशिष्टचाद्यर्थसमुच्चयादिप्रतिपादकत्वमित्यर्थे चादिनिपातानां तात्पर्यग्राहकत्वादित्यर्थः । **अन्वय एव नास्तीति** । निपातसमभिव्याहारे समभिव्याहृतप्रातिपदिकस्यैव स्वार्थविशिष्टचाद्यर्थप्रतिपादकत्वेन चाद्यर्थसमुच्चयादेः समभिव्याहृतप्रातिपदिकेनैव लब्धत्वात्पृथगुपस्थित्यभावेनान्वय एव नास्तीत्यर्थः । पृथगुपस्थितयोरेव संसर्गस्यान्वयरूपत्वादिति भावः । **नायं दोष इति** । घटश्चेत्यत्र भेदेनान्वयानुपपत्तिरूपो दोषः, घटस्य च खदिरस्य चेत्येव स्यादित्युक्तो दोषश्च न भवतीत्यर्थः । निरुक्तव्युत्पत्तेः पृथगुपस्थित प्रातिपदिकार्थविषयत्वात् । प्रकृते घटश्चेत्यत्र, घटस्य च खदिरस्य चेत्यत्र च घटपदेनैव घटसमुच्चयस्य, खदिरपदेनैव खदिरसमुच्चयस्योपस्थानादिति भावः **अत एवेति** । प्रातिपदिकार्थयोरभेदान्वयबोधकव्युत्पत्तौ निपातातिरिक्तेत्यस्यानिवेशादेवेत्यर्थः । **तत्प्रतियोगिके लाक्षणिकमिति** । घटपदस्य कम्बुग्रीवा-

( निपातार्थनिर्णयः )

**अपि च निपातानां वाचकत्वे काव्यादावन्वयो न स्यादिति साधकान्तरमाह—**

**शरैरुस्रैरिवोदीच्यानुद्धरिष्यन्रसानिव ।**

**इत्यादावन्वयो न स्यात्सुपां च श्रवणं ततः ॥ ५ ॥ (४५)**

**अत्रोस्रसदृशैः शरै रससदृशानुदीच्यानुद्धरिष्यन्नित्यर्थः । अयं चोस्रादिशब्दानां तत्सदृशपरत्वे इवशब्दस्य च द्योतकत्वे संगच्छते ।**

---

दिमानर्थः । नास्तीति नञ्अभावोऽर्थः : घटप्रतियोगिकोऽभाव इति भेदसंबन्धेन शाब्दबोधानुभवात् घटस्य घटत्वावच्छिन्नप्रतियोगिताकत्वरूपभेदसंबन्धेन नञर्थेऽभावेऽन्वयोऽभीष्टः । स च दुर्लभः । प्रातिपदिकार्थयोरभेदेनान्वय इति व्युत्पत्तेः। अतो नैयायिकैर्घटपदस्य घटप्रतियोगिक इत्यर्थे लक्षणा क्रियते । ततश्च घटनञ्पदार्थयोरभेदान्वय उपपन्नः । यदि त्वभेदान्वयबोधकव्युत्पत्तौ निपातातिरिक्तेति विशेषणस्य प्रवेशः स्यात्तर्हि विनैव लक्षणां घटनञ्पदार्थयोः प्रातिपदिकनिपातोपस्थाप्ययोः प्रतियोगिताकत्वरूपभेदसंबन्धेनान्वये बाधकाभावाल्लक्षणानुसरणं विफलमेव स्यात् । एवं चोक्तव्युत्पत्तौ निपातातिरिक्तेति विशेषणस्याप्रवेशो नैयायिकैरप्यङ्गीकृत इति भावः ॥ ४४ ॥

चादिनिपातसमभिव्याहृतघटपटाद्यनेकशब्देषु चाद्यर्थसमुच्चयादिवाचकत्वशक्तिकल्पनापेक्षया स्वल्पतरनिपातेष्वेव चाद्यर्थसमुच्चयादिनिरूपितवाचकत्वशक्तिकल्पनोचिता लाघवादित्याशङ्क्याऽऽह—**अपि चेति** । **काव्यादाविति** । रघुवंशे स. ४ श्लो. ६६ शरैरुस्रैरित्यत्रेत्यर्थः । ततः प्रतस्थे कौबेरीं भास्वानिव रघुर्दिशमिति श्लोकपूर्वार्धम् । **अन्वयो न स्यादिति** । निपातानां वाचकत्वाभ्युपगम इत्यर्थः । अन्वयानुपपत्तिरनुपदमेवाग्रे स्फुटीभविष्यति । **साधकान्तरमिति** । निपातानां द्योतकत्व इति शेषः । **शरैरुस्रैरिवोदीच्यानिति** । उस्रसदृशैरिति शराणां विशेषणम् । रससदृशानिति, उदीच्यानां विशेषणम् । **इत्यर्थ इति** । इति शाब्दबोध इत्यर्थः । **अयं चेति** । उक्तार्थान्वयबोधश्चेत्यर्थः । **संगच्छत इति** । निपातरूपस्येवादेरुपसर्गवद्द्योतकत्वेनोस्रादिपदयोरुस्रसदृशपरतयोस्रसदृशैः शरैरिति शरविशेषणत्वेन तृतीयासंगत्या, रसपदस्य रससदृशपरतया रससदृशानुदीच्यानित्युदीच्यविशेषणतया द्वितीयासंगत्या च नि-

अन्यथा प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वव्युत्पत्तिविरोधः । तथाहि—उस्रैरिति करणे तृतीया । न चोस्रोऽत्र करणमिवार्थसदृशस्य करणत्वेऽपि तस्य करणत्वं नानेन बोधयितुं शक्यमप्रकृत्यर्थत्वात् । इवशब्दस्य चासत्त्वार्थकतया तदुत्तरं तृतीयाया असंभवात् । संभवे

रुक्तः शाब्दबोध उपपद्यत इत्यर्थः । अन्यथेति । निपातानां द्योतकत्वानङ्गीकारेण वाचकत्वाभ्युपगम इत्यर्थः । व्युत्पत्तिविरोध इति । उस्रैरित्यत्र तृतीयाप्रत्ययस्य स्वप्रकृतिभूतोस्रपदार्थान्वितकरणबोधकत्वं प्रत्ययानां प्रकृत्यर्थेत्यादिनियमान्न घटत इत्यर्थः । तदेव विशदयति—तथा हीति । न चोस्रोऽत्र करणमिति । उस्रैरिति करणे तृतीया कृता, किं तु अत्र—उदग्देशीयराजोद्धरणक्रियायां, उस्रपदार्थः करणं न भवति । उस्रपदार्थस्येवार्थे सदृशेऽन्वयेन करणीभूतशरविशेषणत्वाभावात् । अपि तु इववाच्यः सदृशोऽर्थः करणम् । तदुच्यते—इवार्थसदृशस्य करणत्वेऽपीति । उस्रसदृशस्याभेदेन शरविशेषणतया उद्धरणक्रियानिरूपितकरणत्वसंभवेऽपीत्यर्थः तस्य—सदृशस्य, करणत्वं सदृशार्थगतकरणत्वमित्यर्थः अनेन उस्रपदोत्तरवर्तितृतीयाप्रत्ययेन, बोधयितुं न शक्यमित्यन्वयः । तत्र हेतमाह—अप्रकृत्यर्थत्वादिति । इवार्थसदृशस्य तृतीयाप्रकृतिभूतोस्रपदार्थत्वाभावादित्यर्थः । तथा चेवार्थे सदृशे उस्रपदोत्तरवर्तितृतीयया करणत्वं प्रतिपादयितुं न शक्यते, प्रत्ययानां प्रकृत्यर्थेत्यादिनियमादिति भावः । इवार्थसदृशस्याभेदेन करणीभूतशरविशेषणतया करणत्वसंभवादिवशब्दात्तृतीयाऽस्त्वित्याशङ्क्याऽऽह—इवशब्दस्येति । असत्त्वार्थकतयेति । सत्त्वं द्रव्यं, तच्च लिङ्गसंख्याकारकान्वयि । तद्भिन्नमसत्त्वमद्रव्यम् । अद्रव्यं च लिङ्गसंख्याकारकानन्वयि । तथा च लिङ्गसंख्याकारकानन्वय्यर्थकतयेत्यर्थः । ‘ चादयोऽसत्त्वे ’ इत्यनेनाद्रव्यार्थकचादीनां निपातसंज्ञाया विहितत्वान्निपातानां लिङ्गसंख्याकारकानन्वयित्वरूपासत्त्वार्थकत्वमिति भावः । तृतीयाया असंभवादिति । कारकानन्वयित्वेनोपस्थिते सदृशरूपे इवार्थे कारकान्वयासंभवेनेवशब्दात्करणत्वार्थकतृतीयाया असंभवादित्यर्थः । ततश्चेवशब्दात्तृतीयाया अभावेन सदृशस्य करणत्वं न लभ्येत उस्रपदार्थस्य करणत्वाभावादुस्रपदोत्तरतृतीयाया अनर्थकत्वमसाधुत्वं च स्यादित्यर्थः । ननु अव्ययादाप्सुपः, इत्यत्र सुप इति प्रत्याहारग्रहणसामर्थ्यादव्ययात्सर्वविभक्तिप्राप्तेः सूचितत्वादिवशब्दस्य सदृशरूपार्थकत्वे सत्त्वा-

वा श्रवणप्रसङ्गात् । उस्रपदोत्तरतृतीयानन्वयप्रसङ्गाच्चेत्याह--सुपां चेति । सुपां श्रवणं चेत्यर्थः । चकारादुस्रपदोत्तरतृतीयानन्वयः समुच्चीयते । इत्यादावित्यादिपदात् "वागर्थाविव संपृक्तौ पार्वतीपरमेश्वरौ वन्दे" इत्यत्र वागर्थयोर्वन्दिकर्मत्वाभावात्तदुत्तरद्वितीयाया अन-

---

र्थकतया तत्र उत्पन्नायास्तृतीयाया लुकि सति इवार्थसदृशस्य करणत्वं बुध्येतेत्याशङ्कयाऽऽह—संभवे वेति । श्रवणप्रसङ्गादिति । इवशब्दार्थस्य सदृशस्य करणकारकत्वेनोद्धरणक्रियायामन्वये सति तादृशेवशब्दस्य कारकानन्वयित्वरूपासत्त्वार्थकताया वक्तुमशक्यत्वेनासत्त्वार्थकतामुपजीव्य विहिताया निपातसंज्ञाया अप्रवृत्तौ, निपातसंज्ञामुपजीव्य विहितायाः 'स्वरादिनिपातमव्ययम्' इत्यव्ययसंज्ञाया अप्यप्रवृत्तौ 'अव्ययादाप्सुपः' इत्यस्याप्रवृत्त्या लुगभावेनेवशब्दोत्तरवर्तितृतीयायाः श्रवणं प्रसज्येतेत्यर्थः । वाशब्दोऽनास्थायाम् । असत्त्वार्थकेवशब्दात्करणतृतीयोत्पत्त्यनुपपत्तिं सूचयति । शब्दशक्तिस्वाभाव्यादिवशब्दोपस्थाप्यस्य सदृशस्याप्यसत्त्वरूपत्वमेव धातूपस्थाप्यव्यापारस्येवेति भावः । 'अव्ययादाप्सुपः' इति लुग्विधानसामर्थ्याज्जायमानायास्तृतीयाविभक्तेरनर्थकत्वेन तया सदृशगतकरणत्वप्रदर्शनस्य दुर्वचत्वं च । दूषणान्तरमाह—अनन्वयप्रसङ्गाच्चेति । उस्रपदार्थस्योद्धरणक्रियानिरूपितकरणत्वाभावेन तत्र तृतीयार्थकरणस्यानन्वयप्रसज्यत इत्यर्थः ! सुपां च श्रवणमित्यत्र चकारो भिन्नक्रम इत्याह- सुपां श्रवणं चेति । नन्विवशब्दस्य सत्त्वार्थकत्वेऽपि स्वरादिपाठादव्ययत्वेन सुपः श्रवणप्रसङ्गो नेत्यतो मूले चशब्द उपात्तस्तत्संग्राह्यं दर्शयति—चकारादुस्रपदोत्तरेत्यादि । समुच्चीयत इति । तृतीयानन्वयः संगृह्यत इत्यर्थः । इत्यादावित्यादिपदसंग्राह्यं दर्शयति—वागर्थाविवेत्यादि । वन्दिकर्मत्वाभावादिति । वागर्थयोरिवार्थेन सहान्वयात्संपृक्तावित्यत्रान्वयाभावेन तयोर्वन्दनक्रियानिरूपितकर्मत्वाभावात्तत्र तदुत्तरकर्मद्वितीयाया अन्वयो न स्यात् । वन्दिक्रियानिरूपितकर्मणा सह वागर्थयोरभेदेनान्वयाभावेनापि कर्मत्वस्य बाधितत्वात् । इवार्थसदृशस्य पार्वतीपरमेश्वररूपकर्मणा सहाभेदान्वयेन कर्मत्वेऽपि वागर्थपदोत्तरवर्तिद्वितीयायाः-इवार्थे यः कर्मत्वान्वयस्तद्बोधकत्वस्यासंभव एव, इवार्थस्य द्वितीयाप्रकृतिभूतवागर्थपदार्थत्वाभावात् । इवार्थस्य द्वितीयाप्रकृत्यर्थत्वाभावात्प्रत्ययानां प्रकृत्यर्था-

**न्वय इव वागर्थस्य कर्मत्वबोधकासंभवश्च संगृह्यते । यदि च विशेष णविभक्तिरभेदार्थिका साधुत्वमात्रार्था वा तदाऽपीवशब्दस्य वाचक त्वेऽनन्वय एव । उस्रसदृशां शराणां समानाधिकरणपदोपस्थाप्यतया**

---

न्वितस्वार्थबोधकत्वानियमादिति यावत् । **संगृह्यत इति** । वागर्थपदार्थेन सह तदुत्तरद्वितीयाया अनन्वयः, तादृशद्वितीयायाश्चेवार्थगतकर्मत्वबोधकत्वासंभवश्च संगृह्यत इत्यर्थः । अस्मन्मते तु वागर्थपदस्यैव वागर्थसदृशपरतया इवशब्दस्य तद्द्योतकत्वेन च वागर्थसदृशयोरभेदेन पार्वतीपरमेश्वरविशेषणतया वन्दिक्रिया। निरूपितं कर्मत्वं सुसंगतम् । तथा उस्रैरित्यत्रोस्रपदस्यैवोस्रसदृशार्थकत्वादुस्रसदृशस्याभेदेन शरविशेषणतयोद्धरणक्रियानिरूपितकरणत्वान्न तृतीयानुपपत्तिः निपातानां वाचकत्वे, सदृश इवशब्दार्थः । उस्रा उपमानं, शरा उपमेयम् - उपमानस्य विशेषणतया, उपमेयस्य च विशेष्यतया प्रतीतिरिति स्थितिः । तत्रोपमेयशराणामुद्धरणक्रियायां करणत्वात्तत्र करणकारकवाचिनी तृतीया । उपमानं तु ' विभक्तिः पुनरेकैव उपमानोपमेययोः ' इति नियमादुपमेयोत्तरविभक्तिसजातीयविभक्तेरेवोचितत्वात्तृतीयैव, सा चाभेदार्थिकेत्याशयेनाऽऽह—**विशेषणविभक्तिरभेदार्थेति** । नीलं कमलं पश्येत्यादौ नीलाभिन्नकमलकर्मकं दर्शनमिति बोधान्नीलकमलयोरभेदान्वयाद्विशेषणविभक्तेरभेदोऽर्थः, न तु कर्मत्वमित्यर्थः । तथा च वागर्थावित्यत्रत्या द्वितीया, उस्रैरित्यत्रत्या तृतीया चाभेदार्थिका, न तु कर्मत्ववाचिनी करणत्ववाचिनी वा । ततश्च विशेषणविभक्तेर्द्वितीयायास्तृतीयायाश्चानन्वयो नेति भावः । **साधुत्वमात्रार्था वेति** । अपदं न प्रयुञ्जीतेति भाष्यात्पदसाधुत्वमात्रसंपादिका विशेषणविभक्तिरित्यर्थः । सा च विशेष्यवाचकपदोत्तरविभक्तिसजातीयैव कर्तुमुचिता, विभक्तिः पुनरेकैवेति नियमात् । विशेष्यस्थविभक्तिविरुद्धविभक्तौ क्रियमाणायां तूपमानोपमेययोरभेदान्वयो न स्यात् । अभेदान्वयबोधे विरुद्धविभक्तिराहित्यस्य प्रयोजकत्वात् । अत एव चन्द्र इव मुखमाह्लादकमित्यादौ उपमानभूतचन्द्राभिन्नमाह्लादकं मुखमिति चन्द्रमुखयोरुपमानोपमेययोरभेदेनान्वयबोधः संगच्छते । **अनन्वय एवेति** । यदा च विशेषणविभक्तिरभेदार्था, साधुत्वमात्रार्था वा तदाऽपि निपातेवशब्दस्य वाचकत्वे विशेषणविभक्तेरनन्वय एवेत्यर्थः । अनन्वयमेव स्पष्टयति—**उस्रसदृशशराणामित्यादिना** । उस्राश्च सदृशाश्च शराश्चेति त्रिपदद्वंद्वोऽयम् । उस्रादिपदार्थत्रितयस्येत्यर्थः । **समानाधि-**

( निपातार्थनिर्णय. )

**भेदेनान्वयायोगात्। बाधादभेदेनापि न सः। न ह्युस्राभिन्नसदृशाभिन्नः शर इत्यर्थो द्रष्टव्यः॥ ४॥ ( ४५ )**

**करणेति**। विरुद्धविभक्तिरहितपदजन्योपस्थितिकतयेत्यर्थः। ननु शरैरुस्रैरिवेत्यत्रोस्रशरपदयोः समानविभक्तिकत्वेन विरुद्धविभक्त्यनवरुद्धत्वेऽपि कथमिवशब्दस्योस्रशरपदाभ्यां समानविभक्तिकत्वमिति चेच्छ्रूयताम्—इवशब्दार्थः सदृशः। तस्य करणभूतशरैः सहाभेदेनान्वयात्करणत्वात्तृतीया। न चेवशब्दस्य सदृशवदर्थकत्वे सत्त्वार्थकतयाऽसत्त्वरूपताभङ्गादनिपातत्वेन विभक्तिलोपाप्रसक्तेस्तदुत्तरवर्तितृतीयायाः श्रवणापत्तिरित्युक्तमिति वाच्यम्। सत्त्वार्थकत्वेऽपीवादेः स्वरादौ पाठेनाव्ययत्वाद्विभक्तिलोपस्य सुवचत्वेनादोषात्। अत एव दीधितौ पृथिव्यामेव गन्ध इत्यत्र पृथिव्यां गन्धस्तदन्यत्र नेत्यर्थप्रतीतेरन्यार्थकस्यैवशब्दस्य स्वसमभिव्याहृतप्रातिपदिकसमानविभक्तिकत्वमुक्तं, तच्छ्रवणमपि लुका लुप्तत्वान्नेत्युक्तं च संगच्छते। एवं चोस्रसदृशशराणां समानविभक्तिकत्वेन विरुद्धविभक्त्यनवरुद्धत्वं निर्बाधमिति भावः। **भेदेनान्वयायोगादिति**। उस्रपदार्थस्य सदृशपदार्थैकदेशे सादृश्ये प्रतियोगितासंबन्धेनान्वयो न स्यात्। सदृशस्य च स्वनिष्ठसादृश्यानुयोगित्वसंबन्धेन शरेष्वन्वयो न स्यात्। विरुद्धविभक्तिरहितप्रातिपदिकार्थयोरभेदेनैवान्वय इति नियमादिति भावः। ननु यद्यत्र भेदेनान्वयो वक्तुमशक्यस्तर्ह्यभेदेनैवान्वयोऽस्त्वित्याशङ्क्याऽऽह- **बाधादभेदेनापि न स इति**। तत्राभेदेनाप्यन्वयो वक्तुमशक्यः, अभेदान्वयस्य बाधादसंभवादित्यर्थः। बाधमेव दर्शयति— **न ह्युस्राभिन्नेत्यादिना**। उस्रपदार्थस्य सदृश इवार्थेऽभेदेनान्वये उस्राभिन्नसदृशस्य शरपदार्थेऽभेदस्य बाधः। तदभिन्नाभिन्नस्य तदभिन्नत्वं, तत्—मृत्तिका तदभिन्नं ( मृदभिन्नं )—कपालद्वयं, तदभिन्नः ( कपालद्वयाभिन्नः )—घटः, तस्य घटस्य तदभिन्नत्वं ( मृदभिन्नत्वमितिवदत्र तत्—उस्रः, तदभिन्नः—सदृशः, तदभिन्नः—शरः, तादृशशरस्य तदभिन्नत्वं ( उस्राभिन्नत्वं ) घटस्य मृदभिन्नत्वमिव वक्तव्यं, तन्न संभवति। घटे मृदन्वयस्य प्रत्यक्षतोऽनुभूयमानत्वेन मृदभिन्नो घट इति यथा वक्तुं शक्यते, न तथा उस्राभिन्नः शर इति वक्तुं शक्यते, शरे उस्रत्वान्वयस्याननुभवात्। यः सदृश उस्राभिन्नोऽस्ति तादृशसदृशस्य शरे कथमभेदः संभवेत्, न कथमपीत्यर्थः। एवं चोस्राभिन्नसदृशस्य शरेऽभेदान्वयो बाधितः। यदि तु सदृशस्य पूर्वं शरेण सहाभेदेनान्वयं कृत्वा सदृशाभिन्नशरे, उ-

**ननु त्वन्मतेऽब्राह्मण इत्यादौ तत्पुरुषलक्षणाव्याप्त्यापत्तिः पूर्वपदस्यानर्थकत्वेनोत्तरपदार्थप्राधान्याभावात् । उपसर्गस्यार्थवत्त्वाभावेन**

---

रुस्यामेदेनान्वयः क्रियते तद्यपि उरुत्वान्वयादर्शनाच्छरे उरुाभेदो बाधित एव । तथा चाभेदेनाप्यन्वयो न संभवतीति भावः । ननु सिद्धान्ते उरुसदृशैः शरैरिति सदृशशरयोः कथमभेदान्वय इति चेत्–इवशब्दसमभिव्याहारे उरुपदस्यैवोरुसदृशार्थकतया एकपदोपस्थाप्यत्वेनोरुसदृशयोः परस्परमन्वय एव नास्तीति तदेकदेशस्य सदृशस्य विशेष्यभूतस्य शरैः सहाभेदान्वये बाधकाभावः । राजपुरुषमानयेत्यत्र राजपुरुषपदार्थैकदेशस्य प्रधानस्य पुरुषस्याऽऽनयनक्रियायामन्वयवत् तत्रान्वय आग्रहश्चेत्–उरुनिरूपितसादृश्यविशिष्ट इत्येवमुरुसदृशयोर्भेदेनान्वय इति उरुशरपदयोः समानविभक्तिकयोरभेदान्वये न किंचिद्बाधकम् । वागर्थाविवेत्यत्रापि वागर्थपदस्यैव वागर्थसदृशार्थकत्वात्तस्य च पार्वतीपरमेश्वररूपकर्मणा सहाभेदान्वयः । सादृश्यं चोपस्थितत्वात्संपृक्तत्वेन बोध्यम् । संपृक्तत्वं च नित्यसंबद्धत्वम् । यथा वागर्थौ नित्यसंबद्धौ तथा नित्यसंबद्धौ पार्वतीपरमेश्वराविस्यर्थः । एवं च नित्यसंबद्धवागर्थसदृशाभिन्नपार्वतीपरमेश्वरकर्मकं वन्दनमिति बोधः। शरैरुरुैरित्यत्रापि उद्धरणक्रियासाधनत्वेन सादृश्यम् । यथोरुाः रसोद्धरणक्रियासाधनं, तथा शरा अपि नृपोद्धरणक्रियासाधनम् । तथा चोद्धरणसाधनभूतोरुसदृशाभिन्नशरकरणकं नृपोद्धरणमिति बोधो ज्ञेयः ॥ ४५ ॥

शङ्कते–**नन्विति** । **त्वन्मत इति** । निपातानां द्योतकत्वमिति वादिनस्तव मते इत्यर्थः । वैयाकरणमत इति यावत् । **लक्षणाव्याप्त्यापत्तिरिति** । उत्तरपदार्थप्रधानस्तत्पुरुष इति तत्पुरुषलक्षणस्य लक्ष्यैकदेशे नञ्तत्पुरुषे समन्वयाभाव आपद्यत इत्यर्थः । तत्र हेतुमाह–**उत्तरपदार्थप्राधान्याभावादिति** । प्राधान्यस्य विशेषणनिरूपितत्वेन पूर्वपदस्य नञो निरर्थकत्वे प्राधान्यनिरूपकविशेषणाभावेनोत्तरपदार्थस्य प्राधान्यासंभवादित्यर्थः । **उपसर्गस्येति** । निपातमात्रस्येत्यर्थः । उपसर्गग्रहणं यावन्निपातोपलक्षणमिति भावः । उप–समीपस्थः स्वसंबन्धी लक्ष्यते ज्ञायतेऽनेनेत्युपलक्षणम् । उपसर्गशब्दः स्ववृत्तिनिपातत्वेन धर्मेण स्वस्य स्वसंबन्धिनश्चादेश्च बोधक इत्यर्थः । **अर्थवत्त्वाभावेनेति** । द्योतकत्वेनार्थवत्त्वाभावादित्यर्थः । शक्तिलक्षणान्यतरवृत्त्याऽर्थप्रतिपादकत्वरूपमर्थवत्त्वं नार्थकस्येत्यर्थः इति भावः । तथा च निरर्थकत्वेन प्रातिपदिकसंज्ञाया अभावान्निपाता

( निपातार्थनिर्णयः)

प्रातिपदिकत्वाभावाद्विभक्तिश्च ततो न स्यादित्यत आह—

नञ्समासे चापरस्य द्योत्यं प्रत्येव मुख्यता ।
द्योत्यमेवार्थमादाय जायन्ते नामतः सुपः ॥ ५ ॥ ( ४६ )

नञ्समासादौ योत्तरपदप्रधानता सा द्योत्यमर्थमादायैव । तमेवार्थमादायार्थवत्त्वात्प्रातिपदिकत्वमित्यर्थः । वस्तुतस्तु "अव्ययादाप्सुपः" [ पा० सू० २४।८२ ] इति ज्ञापकात्सुबुत्पत्तिः । "निपातस्यानर्थक-

---

त्त्वादिविभक्तिर्नोत्पद्येतेत्याशयेनाऽऽह—नञ्समासे चेति । अब्राह्मणमित्यादौ नञ्समासे, अपरस्य—उत्तरपदार्थस्य, मुख्यता—प्रधानता, विशेष्यतेति यावत् । याऽस्ति, सा द्योत्यं प्रति—नञ्द्योत्यार्थनिरूपितैव ज्ञेया । तथा द्योत्यार्थमेव गृहीत्वाऽर्थवत्त्वान्निपातस्य प्रातिपदिकत्वात्ततः सुबुत्पत्तिरित्यर्थः । द्योत्यमर्थमिति। उत्तरपदार्थप्राधान्यं नाम——पूर्वपदार्थनिष्ठविशेषणतानिरूपितविशेष्यताश्रत्वम् । पूर्वपदार्थशब्देन वाच्यलक्ष्यद्योत्यात्मकास्त्रिविधोऽप्यर्थो गृह्यत इति नोत्तरपदार्थप्राधान्यस्य हानिरिति भावः । अर्थवत्त्वादिति । शक्तिलक्षणयोरिव द्योतकताया अपि वृत्तित्वाभ्युपगमेन तया वृत्त्या द्योतकेऽपि अर्थवत्त्वस्य वक्तुं शक्यत्वान्न प्रातिपदिकसंज्ञानुपपत्तिः । एवं च शक्तिलक्षणाद्योतकतान्यतमवृत्त्याऽर्थप्रतिपादकत्वरूपमर्थवत्त्वमर्थवत्सूत्रे जिघृक्षितमिति भावः । ननु द्योतकस्य निपातस्य प्रातिपदिकसंज्ञायामपि असत्त्वार्थकतया संख्याकर्मादेरभावान्न ततः सुबुत्पत्तिः । न चेष्टापत्तिः । उद्गच्छत्युच्चैरित्यादौ जश्त्वरुत्वाधनापत्तेरत आह—वस्तुत इति। ज्ञापकात्सुबुत्पत्तिरिति । द्योतकत्ववादिमते निपातानामनर्थकत्वेन प्रातिपदिकसंज्ञाया अभावेन, स्वराद्यव्ययानां च संख्याकर्मादेरभावेन ततः सुबनुत्पत्तौ लुग्विधानमनर्थकं सदव्ययात्सुबुत्पत्तिं ज्ञापयतीति भावः । तथा चार्थवत्सूत्रे शक्तिलक्षणान्यतरवृत्त्याऽर्थबोधकत्वरूपार्थवत्त्वस्य निवेशेऽपि न काचिद्धानिः । ननु स्वरादीनामसत्त्ववचनानां संख्याकर्मादेरभावेऽपि सत्त्ववचनानां स्वस्ति वाचयति, मातर्यजते, स्वः पश्यति, स्वः पतितः, इत्यादौ कर्मादिकारकयोगदर्शनेन तत्रार्थे विहितसुपो लुगर्थमव्ययादाबिति सूत्रस्याऽऽवश्यकत्वेन ज्ञापकत्वासंभवादाह—निपातस्यानर्थकस्येति । द्योतकतावादिमते प्रकृतवार्तिकेन निपातानां प्रातिपदिकत्वान्न ततः सुबुत्पत्त्यनुपपत्तिः । वस्तुतस्तु निपातानां द्योतकतारूपवृत्त्याऽर्थबोधक-

स्य " इति वार्तिकाद्वा प्रातिपदिकत्वम् । कृत्तद्धितसमासाश्चेत्यनुक्तसमुच्चयार्थकचकारेण निपातानां संग्रह इति बोध्यम् । तस्माद्युक्तं निपातानां द्योतकत्वम् ।

उक्तं चाऽऽकृत्यधिकरणवार्तिके—

" चतुर्विधे पदे चात्र द्विविधस्यार्थनिर्णयः ।
क्रियते संशयोत्पत्तेर्नोपसर्गनिपातयोः ॥
तयोरर्थाभिधाने हि व्यापारो नैव विद्यते ।
यदर्थद्योतकौ तौ तु वाचकः स विचार्यते " इति ॥

---

त्वेनैवार्थवत्त्वात्प्रातिपदिकत्वं सिद्धम् । अत एव वार्तिकमनर्थकपदघटितं संगच्छते - यदि तु सर्वेऽपि निपाता अनर्थकाः स्युस्तर्हि अनर्थकस्येति निपातविशेषणमव्यावर्तकं स्यादिति भावः । अत एव च येषां द्योत्योऽप्यर्थो नास्ति तु हि च स्म ह वै इत्यादेः, तदर्थमिदं वचनमिति सूचनार्थमनर्थकस्येत्युक्तं कैयटे संगच्छते । एवं च निपातानां द्योत्यार्थमादायैवार्थवत्त्वात्सूत्रेणैव प्रातिपदिकसंज्ञा सिध्यतीति निपातस्येत्यादिवार्तिकं प्रत्याख्यायते तदा तु, हि, च स्मेत्यादौ कथं प्रातिपदिकत्वनिर्वाह इत्याशङ्क्याऽऽह—कृत्तद्धितसमासाश्चेत्यादि । निपातार्थवादमुपसंहरति—तस्माद्युक्तमित्यादिना । निपातानां द्योतकत्वे आकृतीति ( जै. द. अ. १ पा. ३ अ. १० सू. ३५ ) इत्यधिकरणमीमांसावार्तिककृतां संमतिमाह—उक्तं चेति । चतुर्विध इति । नामाख्यातोपसर्गनिपातात्मक इत्यर्थः । पद इति । सुबन्ततिङन्तरूप इत्यर्थः । द्विविधस्य—नामाख्यातभेदेन द्विःप्रकारकस्य । अर्थनिर्णयः क्रियते । नामाख्यातयोरेवार्थनिर्णये हेतुमाह—संशयोत्पत्तेरिति । नामार्थो जातिर्वा, व्यक्तिर्वा, जातिविशिष्टव्यक्तिर्वा ? धात्वर्थो—व्यापारमात्रं वा, फलमात्रं वा, फलानुकूलो व्यापारो वेति संदेहोत्पत्तेस्तयोर्निरूपणस्याऽऽवश्यकत्वादित्याशयः । नोपसर्गेति । उपसर्गनिपातयोरर्थनिरूपणं न क्रियत इत्यर्थः । तयोरर्थानिरूपणे हेतुमाह—तयोरिति । तयोः—उपसर्गनिपातयोः, अर्थप्रतिपादने शक्तिलक्षणान्यतररूपो व्यापारो न विद्यते उपसर्गनिपातयोः शक्तिलक्षणान्यतरवृत्त्याऽर्थबोधजनकत्वं नास्तीत्यर्थः । शक्तिलक्षणान्यतरव्यापाराभावं वदता तयोर्द्योतकत्वेनार्थबोधकत्वं सूचितमित्याशयेनाऽऽह—यदर्थद्योतकाविति । तौ—उपसर्गनिपातौ यदर्थेति । यन्नामाख्यातान्यतरविशे-

( निपातार्थनिर्णयः )

" उपसर्गेण धात्वर्थो बलादन्यत्र नीयते ।
प्रहाराहारसंहारविहारपरिहारवत् " ॥

इति वृद्धोक्तावुपसर्गपदं निपातोपलक्षणम् । धातुपदं पदान्तरस्येति बोध्यम् ॥ ५ ॥ ( ४६ )

नन्वन्वयव्यतिरेकाभ्यां निपातानां तदर्थवाचकत्वमेव युक्तं बोधक-

---

षार्थविषयकवृत्तिग्रहजनकौ, स—नामाख्यातात्मकः शब्दो वाचको विचार्यत इत्यर्थः । उपसर्गेणेति । अनेनोपसर्गाणां द्योतकत्वमेवेति सिध्यति । अन्य इति । निर्दिष्टं यद्रूपं तदतिरिक्तरूपविशिष्ट इत्यर्थः । यथा हृञ् हरण इति निर्दिष्टरूपं हरणत्वं तदतिरिक्तं यद्रूपं—आघातत्वं तद्विशिष्ट आघातार्थो हृधातोः प्रहार इत्यादावुपसर्गबलादन्यः प्रतीतो भवतीत्यर्थः । जयत्वविशिष्टजयो जिधात्वर्थः, प्रजयतीत्यत्र प्रकृष्टजयत्वविशिष्टत्वादन्यः प्रतीयते । नन्वनेन हरिवचनेनोपसर्गस्यैव द्योतकत्वमुच्यते, न निपातानामित्यत आह—निपातोपलक्षणमिति। लक्षणया निपातसंज्ञकपरमित्यर्थः । पदान्तरस्येति । उपलक्षणं बोध्यमित्यर्थः । यथोपसर्गसमभिव्याहारबलाद्धात्वर्थोऽन्यः प्रतीयते तद्वन्निपातसमभिव्याहारबलाच्चन्द्र इव मुखमित्यत्र पदान्तरस्य चन्द्रस्य चन्द्रसदृशरूपोऽन्योऽर्थः प्रतीयत इति भावः ॥ ४६ ॥

अथ निपातानां वाचकत्वं समर्थयितुमाह -नन्विति । अन्वयव्यतिरेकाभ्यामिति । चन्द्र इव मुखमित्यादौ निपातसंज्ञकेवादिशब्दसत्त्वे सादृश्याद्यर्थप्रतीतेरिवाद्यसत्त्वे सादृश्याद्यर्थाप्रतीतेश्च निपातानां घटादिपदवद्वाचकत्वमेव युज्यत इत्यर्थः । ननु निपातानां वाचकत्वे तत्र शक्तिकल्पनाप्रयुक्तं गौरवं स्यादत आह—बोधकतेति । बोधकतारूपा या शक्तिः, तस्या बाधाभावादित्यर्थः । बोधकतेत्युपादानादीश्वरेच्छादिरूपायाः शक्तेर्बाधः सूचितः । तथा च तदर्थबोधकत्वमेव तद्वाचकत्वमिति घटादिपदानामिव निपातानां वाचकत्वमेवेत्यर्थः । ननु इवादिनिपातसमभिव्याहारे समभिव्याहृतपदस्यैवादिद्योत्यार्थविशिष्टस्वार्थोपस्थापकत्वमसमभिव्याहारे तु केवलस्वार्थोपस्थापकत्वं यद् दृश्यते तदन्वयव्यतिरेकासिद्धम् । तथा हि चन्द्र इव मुखमित्यत्रेवशब्दसत्त्वे सादृश्यविशिष्टचन्द्रार्थप्रतीतिः, इवशब्दासत्त्वे चन्द्रो मुखमित्यत्र विशिष्टचन्द्राप्रतीतिरिति निपातानां द्योतकत्वसाधनेऽन्वयव्यतिरेकयोरुपयोगान्न तौ वाचकत्वसाधकौ भवत इत्यत आह—किं

तारूपशक्तेरबाधाच्च । किं चोक्तरीत्या पचतीत्यादौ धातोरेव कर्तृ-विशिष्टभावनायां लक्षणाऽस्तु तात्पर्यग्राहकत्वमात्रं तिङादेः स्यादित्य-रुचेः पक्षान्तरमाह–

निपातानां वाचकत्वमन्वयव्यतिरेकयोः ।

---

चेति । उक्तरीत्येति । प्रजयतीत्यत्र प्रतीयमानः प्रकृष्टजयो नोपसर्गवाच्यः । तथा सति तस्याप्रकृत्यर्थतयाऽऽख्यातार्थेऽनन्वयापत्तेः । प्रत्ययानां प्रकृत्यर्थान्वित-स्वार्थबोधकत्वमिति नियमात् । नापि धात्वर्थः । तथा सत्यर्थान्तरस्येवोपसर्गं विनाऽपि जयतीत्यादौ प्रकृष्टजयप्रतीत्यापत्तेः । न चाप्युपसर्गविशिष्टधातुवाच्यः । तथा सति विशिष्टस्योभयरूपत्वेनोभयत्र शक्तिकल्पनायां गौरवात् । तस्माज्जये कॢप्तशक्तेर्धातोरेव लक्षणया प्रकृष्टजयोपस्थितौ, अनन्यलभ्यः शब्दार्थ इति न्यायेन न प्रादेः प्रकर्षाद्यर्थकत्वं, तस्य धातोस्तादृशार्थलक्षणायां तात्पर्यग्राहक-त्वेनोपयोगादित्युक्तप्रकारेणेत्यर्थः । पचतीति । पचतीत्युक्ते प्रतीयमाना कर्तृ-विशिष्टभावना न धातुवाच्या । तथा सति पचनं पक्तिः पाक इत्यत्रापि भावनायां कर्तृवैशिष्ट्यप्रतीत्यापत्तेः । न तिङर्थः । तथा सति तिङभावेन पक्त्वा पक्तु-मित्यादौ भावनाबोधानापत्तेः । नापि धातुविशिष्टतिङ्वाच्या । विशिष्टे वाचक-त्वकल्पनायां गौरवात् । तस्माल्लक्षणया धातोरेव कर्तृविशिष्टभावनाया उपस्थिति-संभवे तिङादेस्तादृशलक्षणायां तात्पर्यग्राहकत्वमेव स्यात् । तिङादेरित्यादिशब्देन कृत्सनादिपरिग्रहः । इत्येवंरूपां निपातानां द्योतकत्वेऽरुचिं मनसिकृत्य निपातानां वाचकत्वमिति पक्षान्तरमाह–निपातानां वाचकत्वमिति । अन्वयव्यतिरे-कयोः–तयोः सतोः । अयं भावः–तिङादिप्रयोगसत्त्वे कर्तृकर्माद्यर्थप्रतीतिः, तिङादिप्रयोगाभावे कर्त्राद्यर्थप्रतीत्यभाव इत्यन्वयव्यतिरेकाभ्यां यदि कर्त्राद्यर्थवा-चकत्वं निश्चीयते तिङादेः, तर्ह्यन्वयव्यतिरेकाभ्यां तिङादीनां वाचकत्ववन्निपाता-नामपि तत्तदर्थवाचकत्वमस्त्विति । मीमांसकास्तु वाचका एवैते निपाताः, न द्यो-तका इति वदन्ति । इत्थं हि तैरुक्तं समुच्चयाधिकरणे–केवलवृक्षशब्दात्समुच्च-याप्रतीतेश्चकारश्रवणे तद्बोधाच्चकार एव तद्वाचको, न द्योतकः । किं च द्योत-कत्वे पदान्तराणां तत्र शक्तिः कल्प्या, चकारस्य च द्योतकताशक्तिः कल्पनीयेति गौरवं स्यादिति । अत एव मीमांसाद्वयेऽपि नञः पर्युदासे लक्षणेत्युक्तिः संग-च्छते । निपातानां वाचकत्वे नञः शक्यार्थसद्भावाच्छक्यार्थसबन्धरूपलक्षणायाः

( निपातार्थनिर्णयः )

**युक्तं वा न तु तद्युक्तं परेषां मतमेव नः ॥ ६ ॥ ( ४७ )**

**एवं च धात्वर्थप्रातिपदिकार्थयोर्भेदेनान्वयबोधो न व्युत्पन्न इति निपातातिरिक्तविषयं, समानाधिकरणप्रातिपदिकार्थयोरभेदेनान्वय इ-**

---

संभवात्पूर्वोक्तमीमांसाद्वयोक्तिः संगता भवति । द्योतकत्वे तु निपातानां शक्यार्था-भावाच्छक्यसंबन्धघटितलक्षणाया असंभवान्न सोक्तिः संगता भवेदित्यर्थः । त-दिदं मीमांसकमतमयुक्तम् । अनन्यलभ्य एव हि शब्दार्थ इति न्यायेन पदान्तरा-ल्लक्षणयैव समुच्चयाद्यर्थप्रतीतेः पुनस्तत्र शक्तिकल्पनायोगात् । अत एव लक्ष-णयैव तीरोपस्थितौ सत्यां न पुनस्तत्र गङ्गापदस्य शक्तिः कल्प्यते । अन्यथा गङ्गादिपदानामपि तीरादौ शक्तिः कल्प्या स्यात् । चादिनिपातसमभिव्याहारे वृ-क्षादिपदाद्विशिष्टार्थप्रतीतिः, तदसमभिव्याहारे पदान्तराद्विशिष्टार्थप्रतीत्यभाव इ-त्यन्वयव्यतिरेकयोश्चादीनां तात्पर्यग्राहकत्वेनोपयोगादन्यथासिद्धतया न तौ निपा-तानां वाचकत्वसाधकौ भवतः । न च वाचकत्वे पदान्तराणां निपातद्योत्यार्थे शक्तिः, चकारस्य च द्योतकताशक्तिश्चेति शक्तिद्वयकल्पनेति वाच्यम् । पदान्त-राणां लक्षणाङ्गीकारान्निपातानां तात्पर्यग्राहकत्वादित्याशयेनाऽऽह—**न त्विति** । समुच्चयाधिकरणे स्थितं परेषां—मीमांसकानां यन्मतं वाचकत्वमात्ररूपं तदेवास्माकं मतमिति न युक्तमित्यर्थः । किं तु केचिद्वाचकाः, केचिच्च द्योतकाः । तदुक्तं वाक्यपदीये—'स वाचको विशेषाणां संभवाद् द्योतकोऽपि वा' इति । **एवं चेति** । निपातानां वाचकत्वे चेत्यर्थः । **निपातातिरिक्तविषय इति** । धात्वर्थः, अथ च निपातातिरिक्तप्रातिपदिकार्थः, अनयोर्भेदसंबन्धेनान्वयो, न व्युत्पन्नः—व्युत्प-त्तिसिद्धो न भवतीत्यर्थः । अत एव ओदनः पचतीत्यत्र निपातातिरिक्तप्रातिप-दिकार्थस्यौदनस्य कर्मतासंबन्धेन धात्वर्थे पाकेऽन्वयो न भवतीति ओदनकर्मकः पाक इत्येवं न ततो बोधो जायते । निपातातिरिक्तेतिनिवेशान्निपातार्थधात्वर्थयोर्भे-देनान्वयो नाव्युत्पन्न इति प्रजयतीत्यत्र निपातरूपप्रातिपदिकार्थस्य प्रकर्षस्य आश्रयतासंबन्धेन जिधात्वर्थे जयेऽन्वयो भवतीति ततः प्रकृष्टजयप्रतीतिरुपपद्यत इति भावः । **समानाधिकरणेति** । समानविभक्तिकप्रातिपदिकार्थयोरभेदान्वय इति नियमोऽपि, तथा—निपातातिरिक्तविषय इत्यर्थः । निपातातिरिक्त—समान-विभक्तिकनामार्थयोरभेदान्वय इति यावत् । अत एव निपातातिरिक्तप्रातिपदिका-र्थयो राजपुरुषयो राज्ञः पुरुष इति वाक्ये नाभेदेनान्वयबोधः । राजपुरुषपदयोः

समानविभक्तिकत्वाभावात् । समानविभक्तिकत्वमपि समानार्थकविभक्तिकत्वं बोध्यम् । तेन राज्ञः सुतस्य धनमित्यत्र न राजसुतयोरभेदेनान्वयः । एकत्र जन्यत्वार्थत्वेनापरत्र स्वत्वार्थत्वेन षष्ठ्योर्विभिन्नार्थत्वेन समानार्थकत्वाभावात् । घटश्चेत्यादौ तु घटचेतिप्रातिपदिकयोः समानविभक्तिमत्त्वेऽपि समुच्चयस्य निपातार्थत्वेन घटसमुच्चययोर्घटप्रतियोगिकः समुच्चय इत्येवं प्रतियोगितात्मकभेदसंबन्धेनान्वयो भवत्येव । अनुभवसाक्षात्कारादेर्निपातवाच्यत्वेऽपि धातोः सकर्मकत्वसिद्ध्यर्थं 'स्व—स्वयुक्तनिपातान्यतरार्थफलव्यधिकरणव्यापारवाचित्वं सकर्मकत्वं वक्तव्यम् । स्वं—धातुः, स च तद्युक्तनिपातश्च तयोरन्यतरस्यार्थभूतं यत्फलं तद्व्यधिकरणव्यापारवाचकत्वमित्यर्थः । अनुभूयत इत्यादौ धातुयुक्तो निपातोऽन्वादिः, तदर्थभूतं यत्फलं साक्षात्कारानुभवादिकं गुरुशिवादिनिष्ठं, तद्व्यधिकरणदेवदत्तादिनिष्ठव्यापारवाचकत्वेन धातोः सकर्मकत्वाक्षतया साक्षात्क्रियत इत्यादौ कर्मणि लकारादिः सिध्यति । प्रतिष्ठते इत्यत्र प्रोपसर्गस्याऽऽदिगमनवाचकत्वे तस्य आख्यातार्थेऽन्वयसिद्ध्यर्थं प्रकृतिसमभिव्याहृतनिपातार्थप्रकृत्यर्थान्यतरान्वितस्वार्थबोधकत्वं प्रत्ययानामिति व्युत्पत्तिः पठनीया । तेन प्रतिष्ठते इत्यत्र 'ते' इति तिङर्थकर्तरि प्रकृतिसमभिव्याहृतनिपातार्थस्याऽऽदिगमनस्यान्वयेन कर्तृनिष्ठमादिगमनमिति बोधोऽनुभवसिद्धो निर्वोढुं शक्यो भवति । एवं भेदसंबन्धेन नामार्थप्रकारकशाब्दबोधं प्रति प्रत्ययनिपातान्यतरजन्योपस्थितिः कारणमिति कार्यकारणभावोऽङ्गीकार्यः । अत एव राजा पुरुषः, इत्यत्र राजनिरूपितस्वत्वासंबन्धवान् पुरुष इत्येवं राजरूपनामार्थप्रकारको भेदसंसर्गकः शाब्दबोधो न भवति । भेदसंबन्धस्य राजपदोत्तरवर्तिप्रत्ययाऽनुपस्थितेः । भवति च राज्ञः पुरुष इत्यत्र नामार्थप्रकारको भेदसंसर्गको बोधः । भेदसंसर्गस्य राजपदोत्तरवर्तिषष्ठीप्रत्ययजन्योपस्थितेः सत्त्वात् । घटश्चेत्यत्र घटस्य प्रतियोगितासंबन्धेन समुच्चयेऽन्वयाद् घटप्रतियोगिकः समुच्चय इत्येवं घटरूपनामार्थप्रकारको भेदसंसर्गकः शाब्दबोधो भवति । समुच्चयोपस्थितेर्निपातजन्यत्वात् । नामार्थप्रकारकभेदसंसर्गकशाब्दबोधं प्रति निपातजन्योपस्थितेर्हेतुत्वाङ्गीकारादित्यर्थः । न चैवं क्वचिद्व्युत्पत्तौ निपातातिरिक्तेति निवेशे, क्वचिद् व्युत्पत्तौ निपातपदनिवेशे च गौरवं स्यादिति वाच्यम् । अन्वयव्यतिरेकरूपयुक्त्या निपातानां वाचकत्वे स्थितेऽगत्या गौरवस्य स्वीकरणीयत्वात् । वाचकत्वादेव च 'न' इत्येतावन्मात्रोच्चारणादभावप्रतीतिः कस्येति जिज्ञासा च

त्यपि तथेत्यगत्या कल्पनीयमिति भावः । न त्विति । नैयायिकोक्तं प्रादिचादिवैषम्यमित्यर्थः । यत्तु सर्वेषां निपातानां वाचकत्वेऽर्थवत्सूत्रे-

---

दृश्यतेऽभावशब्द इव । द्योतकत्वे तु पदान्तरसमभिव्याहारं विना द्योतकत्वासंभवः। ननु निपातानां वाचकत्वे केवलानामपि तेषां प्रयोगापत्तिरिति चेन्न । केषांचित् 'ते प्राग्धातोः' इत्यनेन नियमनात् केषांचिन्नेत्यादीनां केवलानामपि प्रयोगस्येष्टत्वात् , अन्येषां वाचकत्वेऽपि केवलप्रकृतिप्रत्यययोरप्रयोगवत्केवलानामप्रयोगः । तदुक्तं वाक्यपदीये—प्रत्ययो वाचकत्वेऽपि केवलो न प्रयुज्यते । समुच्चयाभिधानेऽपि व्यतिरेको न विद्यते ॥ इति । यद्यपि प्रत्ययवदेषां परत्वं न स्मर्यते तथापि तैर्बोध्यप्रकर्षादेर्विना संबन्धिनमनन्वयात्केवलप्रयोगासंभवः । समुच्चिताभिधायकत्वेऽपि विशेषतस्तयोरुपस्थितिं विना प्रतीतेरपर्यवसानान्नित्यपरतन्त्रैतेवेति न प्रयोगः । एवं निपातानां वाचकत्वे यथाप्रथं दोषाभावेऽपि क्वचिद्द्योतकत्वमपि स्वीकार्यम् । अन्यथा प्रतिष्ठते इत्यत्र गमनत्वरूपेणानुभवसिद्धो बोधो न स्यात् । नामार्थधात्वर्थयोर्भेदेनान्वयो न व्युत्पन्न इति व्युत्पत्तेर्निपातेतरत्वेन संकोचेऽपि प्रोपसर्गस्याभावे शक्तौ स्वीकृतायामपि धातोर्गतिनिवृत्त्यर्थकत्वेन गतिनिवृत्तिरूपधात्वर्थस्य प्रतियोगित्वसंबन्धेन प्रोपसर्गवाच्येऽभावेऽन्वयेन गतिनिवृत्तिप्रतियोगिकाभाव इति बोधाद् गमननिवृत्त्यभावत्वरूपेणैव बोधः स्यात् । द्योतकत्वे तु तिष्ठतेर्धातोरेव लक्षणया गतिप्रतिपादकत्वाद् गमनत्वरूपेण बोधोऽनायासेन सिध्यति । नत्विति । प्रादयो द्योतकाश्चादयस्तु वाचका इत्येवं यन्नैयायिकैः प्रादिचाद्योर्वैषम्यं कृतं तदपि न युक्तमित्यर्थः । यत्तु कैश्चिदुक्तम्—निपातानां सर्वेषां वाचकत्वे 'निपातस्यानर्थकस्य' इति प्रातिपदिकसंज्ञाविधिर्व्यर्थः । अर्थवत्सूत्रेणैव प्रातिपदिकत्वस्य सिद्धत्वात् । सर्वेषां द्योतकत्वेऽपि 'निपातस्य' इत्येतावतैव प्रातिपदिकत्वे सिद्धे 'अनर्थकस्य' इत्यंशः सर्वथा व्यर्थ एव । तस्मात्केचिदेवार्थवन्त इति वक्तव्यम् । तथा चोपसर्गा एव द्योतकाश्चादयस्तु वाचका इति । तदयुक्तम्—सर्वथाऽनर्थकानां 'तु—हि—च—स्म—ह—वैपादपूरणे, इत्यमरकोशात् , कमीमिद्विति पादपूरणे, इति निरुक्तात् , अधिपरी अनर्थकौ' इति सूत्राच्चावगतानां संग्रहार्थं तद्वचनमिति कैयटादौ स्पष्टत्वात् । के वाचका इत्यत्र विनिगमनाभावाच्चादीनामेव द्योतकत्वं प्रादीनां तु वाचकत्वमिति वैपरीत्यस्यापि वक्तुं शक्यत्वाच्च । वस्तुत एतद्वार्तिकस्य भाष्यकारैः प्रत्याख्यातत्वात्तन्मूलकमेतदश्रद्धेयमे-

णैव तेषां प्रातिपदिकत्वसंभवात् " निपातस्यानर्थकस्य " इति विधिवैयर्थ्यं, सर्वेषां द्योतकत्वे चानर्थकस्येति व्यर्थम् , तथा च केचिद्द्योतकाः केचिद्वाचका इत्यभ्युपेयमिति । तन्न । एवं हि चादयो द्योतकाः प्रादयो वाचका इति वैपरीत्यावारणात् । सर्वथाऽनर्थकानां पादपूरणमात्रार्थमुपात्तानां संग्रहाय वार्तिकारम्भस्य कैयटादौ स्पष्टत्वाच्च । तस्य प्रत्याख्यातत्वाच्च । परेषामिति बहुवचनं मीमांसकसंग्रहाय । केवलवृक्षशब्दात्समुच्चयाबोधाच्चकारश्रवणे तद्बोधाच्चकार एव तद्वाचको न द्योतकः । किं च द्योतकत्वे पदान्तराणां तत्र शक्तिः कल्प्या चकारादेर्द्योतकत्वशक्तिश्च कल्प्येति गौरवं स्यादिति हि समुच्चयाधिकरणे स्थितं तदपि न युक्तमिति भावः । तथा हि–अन्वयव्यतिरेकौ तात्पर्यग्राहकत्वेनाप्युपयुक्तौ घटादिपदानामेव समुच्चिते लक्षणा तात्पर्यग्राहकः प्रकरणादिवच्चादिरिति स्वीकाराच्च

वेति भाति । **व्यर्थमिति** । द्योतकतापक्षे सर्वेषामेव निपातानां निरर्थकतया व्यावर्त्याभावादिति भावः । **प्रत्याख्यातत्वादिति** । ' अधिपरी अनर्थकौ ' इति सूत्रेणानर्थकयोरधिपर्योर्गत्युपसर्गसंज्ञाबाधनार्थं कर्मप्रवचनीयसंज्ञा विधीयते । गत्युपसर्गसंज्ञे च ' उपसर्गाः क्रियायोगे ' गतिश्च ' इति सूत्रद्वयेन क्रियायोग एव विधीयेते । तत्राधिपर्योरनर्थकयोः क्रियायोगासंभवाद् गत्युपसर्गसंज्ञयोः प्राप्तिरेव न संभवतीति तद्बाधनार्थं कर्मप्रवचनीयसंज्ञाविधानं व्यर्थम् । न च ' कर्मप्रवचनीययुक्ते द्वितीया ' इति द्वितीयार्थं कर्मप्रवचनीयसंज्ञाविधानं सार्थकं स्यादिति वाच्यम् । अनर्थकत्वेन कर्मप्रवचनीययुक्तत्वस्य निरूपयितुमशक्यत्वात् । एवं च व्यर्थीभूय कर्मप्रवचनीयसंज्ञाविधानं ज्ञापयति–यदनर्थकानामपि निपातानामर्थवत्त्वं गृहीत्वा तत्प्रयुक्तं कार्यं करणीयमिति । ततश्च क्रियायोगसंभवाद् गत्युपसर्गसंज्ञे स्यातां ते मा भूतामिति तद्बाधनार्थं कर्मप्रवचनीयसंज्ञाविधानं चरितार्थम् । तेन कुतोऽध्यागच्छतीत्यादौ 'गतिर्गतौ' इति निघातो न भवति । अनर्थकानामपि निपातानामर्थवत्त्वप्रयुक्तं कार्यं प्रातिपदिकसंज्ञा भवतीत्यन्यत्र फलम् । तथा च निपातस्यानर्थकस्येतिवचनं न कर्तव्यमिति प्रत्याख्यातत्वादित्यर्थः । **बहुवचनं मीमांसकेति** । मीमांसकानां भाष्यकारादिभेदेन नानात्वाद् बहुवचनमिति भावः। मीमांसकमतं प्रदर्शयति–**केवलेत्यादिना** । मीमांसकमतं निरस्यति–**तथा हीति**

शक्तिद्वयकल्पनाऽपि। अस्माकं लक्षणाग्रहदशायां बोधात्तत्कार्यकारणभाव आवश्यकः। एवं शक्तिग्रहस्यापीति पक्षद्वयेऽपि कल्प्यान्तराभावेन गौरवाभावादुभयमपि युक्तमित्यभिमतम्। अत एव "स वाचको विशेषाणां संभवाद्द्योतकोऽपि च" इतिवाक्यपदीयं संगच्छते। दर्शनान्तररीत्या वाचकत्वमेव, द्योतकत्वमेवेति नियमस्तु न

---

त्यादिना न शक्तिद्वयकल्पनापीत्यन्तेन। अस्माकमिति। निपातानां वाचकत्वं द्योतकत्वं चेति पक्षद्वयाङ्गीकर्तॄणामित्यर्थः। लक्षणाग्रहेति। यदा च घटादिपदानां समुच्चिताद्यर्थे लक्षणां गृहीत्वा प्रकरणादिवत्तात्पर्यग्राहकश्चादिरित्याश्रीयते तदैव घटादिपदात्समुच्चयाद्यर्थप्रतीतेः समुच्चयादिविशिष्टघटाद्यर्थविषयकशाब्दबोधं प्रति घटादिपदनिरूपितलक्षणाज्ञानं कारणमिति शाब्दबोधलक्षणाज्ञानयोः कार्यकारणभाव आवश्यकः। समभिव्याहृतपदस्य विशिष्टार्थे लक्षणायां गृहीतायां लक्ष्यार्थस्य बोधाल्लक्ष्यार्थबोधे लक्षणाज्ञानं कारणमित्येवं लक्ष्यार्थबोधलक्षणाग्रहयोः कार्यकारणभावोऽवश्यं स्वीकार्य इति यावत्। शक्तिग्रहस्यापीति। वाचकत्वपक्षे वृक्षाद्यर्थविषयकशाब्दबोधे वृक्षादिपदनिष्ठं शक्तिज्ञानं कारणं, समुच्चयाद्यर्थबोधे प्रादिनिपातनिष्ठशक्तिज्ञानं कारणमित्येवं शाब्दबोधशक्तिज्ञानयोः कार्यकारणभावोऽप्यावश्यकः। कल्प्यान्तराभावेनेति। वाचकत्वपक्षे द्योतकत्वपक्षे च क्लृप्तकार्यकारणभावद्वयापेक्षयाऽधिककल्पितव्यविरहेणेत्यर्थः। उभयमपीति। वाचकत्वं द्योतकत्वं चेत्युभयमपि गौरवाभावाद्युज्यत इत्यर्थः। अत एवेति। गौरवाभावेन पक्षद्वयस्यापि युक्तियुक्तत्वादेवेत्यर्थः। स वाचक इति। सः—उपसर्गरूपो निपातो वाचक इत्यर्थः। प्रतिष्ठत इत्यत्र 'ष्ठा गतिनिवृत्तौ' इति पाणिनिस्मृतेर्गतिनिवृत्तिवाचकस्तिष्ठतिः, प्रोपसर्गस्तु तदभावबोधकः, तथा चाभावाभावो भावस्वरूप इतिन्यायेन गतिवाचक इति पुञ्जराजेन व्याख्यातत्वात्। दर्शनान्तरेति। नैयायिकरीत्येत्यर्थः। वाचकत्वमेवेति। चादिनिपातानामित्यादिर्बोध्यः। द्योतकत्वमेवेति। अस्योपसर्गाणामित्यादिः। नियम इति। प्रादिचाद्योर्द्योतकत्ववाचकत्वनियमो न युक्त इति सूचयन्नाह—मतमेव न इति। वा—अथवा। परेषां मीमांसकानां यन्मतं सर्वेषां निपातानां वाचकत्वमेवेति तदेव नो मतमित्यर्थः। प्रतिष्ठते इत्यत्र गमनत्वरूपेण बोधस्या-

युक्त इति ध्वनयन्नाह—मतमेवेति ॥ ६ ॥ ( ४७ )

पर्यवसितमुपसंहरन्नाह—

निपातत्वं परेषां यत्तदस्माकमिति स्थितिः ।
व्यापकत्वाच्छक्ततायास्त्ववच्छेदकमिष्यते ॥ ७ ॥ (४८)

(इति भट्टोजिदीक्षितविरचितकारिकासु निपातद्योतकत्वनिर्णयः )।

परेषां यन्निपातत्वमसत्त्वार्थकत्वे सति चादिगणपठितत्वं शक्तिसंबन्धेन निपातपदवत्त्वं चोपाधिर्जातिर्वा तदेवास्माकमपि परं तु सामा-

---

भावाभावो भावस्वरूप इति न्यायेनोपपादितत्वादिति भावः ॥ ४७ ॥

**पर्यवसितमिति** । उपसर्गा द्योतका निपाता वाचका इति नैयायिकमतं न युक्तं वैषम्ये बीजाभावादिति पर्यवसाने सिद्धमित्यर्थः । उपसंहरन्—परिसमापयन्नित्यर्थः । आह—ब्रूते—**निपातत्वं परेषामिति** । ननु प्रादीनां चादीनां च वाचकत्वे उपसर्गत्वनिपाततत्वयोः शक्तावच्छेदकत्वे गौरवमत आह—**निपातत्वं परेषामिति** । ननु 'चादयोऽसत्त्वे' इत्यत्रासत्त्वे इति प्रसज्यप्रतिषेध इत्याश्रीयमाणेऽसमर्थसमासो वाक्यभेदश्चेति गौरवमतो लाघवात्पर्युदासमाश्रित्य निपातलक्षणमाह—**असत्त्वार्थकत्वे सतीति** । असत्त्वार्थकत्वसमानाधिकरणचादिगणपठितत्वं निपातत्वमित्यर्थः । गुणकर्मान्यत्वे सति सत्त्वादित्यादौ गुणकर्मान्यत्वसमानाधिकरणसत्त्वादित्यर्थप्रतीतेः सति सप्तम्याः सामानाधिकरण्यार्थकतायाः क्लृप्तत्वादिति भावः । नन्वेतल्लक्षणस्य प्रादिष्वव्याप्तिरत आह—**शक्तिसंबन्धेनेति** । वाच्यवाचकभावात्मकशक्त्याख्यसंबन्धेन निपातपदवत्त्वं—निपातपदाश्रयत्वं, ( निपातपदवाच्यत्वं ) निपातत्वमित्यर्थः । इदं च निपातत्वं प्रादिचादिसाधारणमिति तदेव वाचकतावच्छेदकं स्वीकार्यं लाघवात् । तथा च नोक्तं गौरवमिति भावः । **जातिर्वेति** । ननु निपातत्वं जातिर्भवितुं नार्हति । हत्वादिना सांकर्यात् । संकरस्य च जातिबाधकत्वाङ्गीकारात् । तथा हि—पृथिवी, आपः, तेजः, वायुः, आकाशश्चेति पञ्चसु भूतत्वं वर्तते । पृ. आ. ते. वा. मनश्चेति पञ्चसु मूर्तत्वं विद्यते । मूर्तत्वं नामापकृष्टपरिमाणवत्त्वम् । परस्परात्यन्ताभावसमानाधिकरणयोर्धर्मयोरेकत्र समावेशः संकरः । भवति हि भूतत्वं विहाय मनसि वर्तमानस्य मूर्तत्वस्य, मूर्तत्वं विहाय आकाशे वर्तमानस्य भूतत्वस्य च पृथिव्यादिचतुष्टये समावेशः । तस्माद्भूतत्वं मूर्तत्वं चेति द्वयमपि न जातिरिति नैयायिकानां सिद्धान्तः । तद्वत्—हस-

( निपातार्थनिर्णयः )

**न्यधर्मे प्रमाणानां पक्षपाताच्छक्तता द्योतकता वा तदवच्छेदेनैव कल्प्येति नैयायिकोक्तं प्रादिचाद्योर्वैषम्यमयुक्तमित्यर्थः । व्यापकत्वात्, सामान्यत्वात् । शक्ततायाः इत्युपलक्षणं द्योतकताया वेत्यपि द्रष्टव्यम्**

---

तीत्यादिघटके हशब्दे हत्वं विद्यते, निपातत्वं नास्ति । निपातचशब्दे निपातत्वं विद्यते, हत्वं नास्ति । निपातहशब्दे तु हत्वनिपातत्वयोरेकत्र समावेशान्निपातत्वं न जातिरित्याशयेनाऽऽह—**उपाधिर्वेति** । जात्यतिरिक्तधर्मे उपाधिव्यवहारः प्रायिको नैयायिकानाम् । स चापि द्विविधः सखण्डोपाधिरखण्डोपाधिश्चेति । यस्तावन्निर्वक्तुं शक्यते स सखण्डोपाधिः । यथा—शब्दसमवायिकारणत्वमाकाशत्वं प्राच्यादिव्यवहारहेतुत्वं दिक्त्वमित्येवमाकाशत्वादिकम् । यश्च धर्मो निर्वक्तुं न शक्यते सोऽसावखण्डोपाधिः । उक्तं च—अनुयोगितात्व—प्रतियोगितात्व—विषयतात्वादिरिति । तद्वन्निपातत्वस्यासत्त्वार्थकत्वे सति चादिगणपठितत्वरूपं सखण्डत्वमपि संभवति, तथाऽपि निपातत्वस्य सखण्डोपाधेः प्रादिचाद्युभयानुगतत्वाभावादखण्डोपाधित्वमेवाङ्गीकरणीयम् । एवं च परेषां मीमांसकादीनां यादृशं जातिरूपमुपाधिरूपं वा निपातत्वमभिमतं, अस्माकमपि निपातत्वं तादृशमेव जातिरूपमुपाधिरूपं वाऽभिमतमित्यर्थः । तत्र मीमांसकाश्चादीनामिव प्रादीनामपि वाचकत्वमिच्छन्ति । अन्ये वैयाकरणाः प्रादीनामिव चादीनामपि द्योतकत्वमिच्छन्ति । सत्येवमुभयमतेऽप्युपसर्गाणां वाचकत्वे द्योतकत्वे वा कल्पयितव्ये वाचकतावच्छेदकं द्योतकतावच्छेदकं वा प्रादिनिष्ठं निपातत्वमेव वाच्यं नोपसर्गत्वमित्यत्र विनिगमनाविरह इत्याशङ्कामपनुदति—**परं त्वित्यादिना** । **सामान्यधर्म इति** । व्यापकधर्म इत्यर्थः । अस्यासति बाधक इत्यादिः । तथा चासति बाधके सामान्य ( व्यापक )धर्मस्यावच्छेदकत्वकल्पने प्रमाणानां पक्षपातोऽभिनिवेशः—आग्रह इति यावत् । एवं चोपसर्गाणां वाचकतायां द्योतकतायां वाऽङ्गीकृतायां प्रादिचाद्युभयवृत्तित्वेन व्यापकधर्मस्य निपातत्वस्यैव वाचकतावच्छेदकत्वं द्योतकतावच्छेदकत्वं वा मन्तव्यं प्रमाणानां सामान्ये पक्षपात इति न्यायादिति भावः । ततश्च प्रादयो द्योतकाश्चादयो वाचका इत्येवं यत्प्रादिचाद्योर्वैलक्षण्यं नैयायिकैरुक्तं तन्न युक्तमित्यर्थः । **व्यापकत्वादिति** । जातिरूपस्योपाधिरूपस्य निपातत्वस्य प्रादिचाद्युभयवृत्तित्वेन सामान्यधर्मत्वादित्यर्थः । **शक्ततायाः इति** । वाचकताया इत्यर्थः । **शक्ततायाः इत्युपलक्षणमिति** । समीपस्थस्य स्वसंबन्धिनश्च लक्षणं

॥ ७ ॥ ( ४८ )।

इति रङ्गोजिभट्टात्मजकौण्डभट्टाविरचिते वैयाकरणभूषणसारे
निपातानां द्योतकत्वादिनिर्णयः समाप्तः।

( अथ भावप्रत्ययार्थनिर्णयः )।

भावप्रत्ययार्थमाह—

कृत्तद्धितसमासेभ्यो मतभेदनिबन्धनम्।
त्वतलोरर्थकथनं टीकायां हरिणा कृतम् ॥१॥ (४९)।

" कृत्ताद्धितसमासेभ्यः संबन्धाभिधानं भावप्रत्ययेनान्यत्र रूढ्यभि-

---

ज्ञानं यस्मादिति विग्रहः। स्वस्य स्वान्यस्य चाजहत्स्वार्थलक्षणया बोधकं पदमित्यर्थः। यथा काकेभ्यो दधिरक्ष्यतामित्यत्र काकपदं स्वस्य स्वान्यस्य श्वादेश्च बोधकं, तद्वत् शक्ततापदं स्वस्याः शक्ततायाः स्वान्यस्या द्योतकतायाश्चाजहत्स्वार्थया लक्षणया बोधकमिति भावः। एवं च वाचकताया द्योतकताया वाऽवच्छेदकमुभयविधं निपातत्वमिति तात्पर्यम् ॥ ४८ ॥

इति वैयाकरणभूषणसारटीकायां शांकर्यां निपातानां
द्योतकत्ववाचकत्वनिर्णयः।

रङ्गभट्टतनूजेन शंकरेण विनिर्मिते।
सारीयेऽभूद्विवरणे निपातार्थविनिर्णयः ॥ ८ ॥

अथ भावप्रत्ययार्थनिर्णयः। ( ९ )

नामार्थनिरूपणप्रसङ्गेन नामान्तःपातिकृत्तद्धितार्थौ निरूपयिष्यन्नादौ भावप्रत्ययार्थकथनमित्याह—भावप्रत्ययेति। त्वतलादिप्रत्ययार्थमित्यर्थः। कृत्तद्धितसमासेभ्य इति। कृदन्तात्तद्धितान्तात्समासाच्च परः क्रियमाणो भावार्थकः प्रत्ययस्त्वतलादिः संबन्धमभिदधाति। कृष्णसर्पत्वं, गौरखरत्वमित्यादौ जातिविशेषपुरस्कारेणैव बोधानुभवादाह—अन्यत्रेत्यादि। रूढेः, अभिन्नरूपात्, अव्यभिचरितसंबन्धेभ्यश्चान्यत्र—रूढ्यादिशब्दान् वर्जयित्वा संबन्ध एव भावप्रत्यय

( भावप्रत्ययार्थनिर्णयः )

भरूपाव्यभिचरितसंबन्धेभ्यः" इति वार्तिकवचनमिति मीमांसकादीनां भ्रममपाकुर्वन्नाह—टीकायामिति । भर्तृहरिणा महाभाष्यटीकायामित्यर्थः । त्वतलोरिति । भावप्रत्ययमात्रोपलक्षणम् । अयमर्थ—समासादौ शक्तिः कल्प्यमाना राजादिसंबन्धविशिष्टे कल्प्यत इत्युक्तम् । तथा च तदुत्तरभावप्रत्ययः संबन्धं वदतीत्यर्थः । एतदपि भेदः संसर्ग

---

इत्यर्थः । रूढ्यादीनां मध्ये रूढौ जातिविशेषपुरस्कारेणैव बोध इत्युक्तम् । अभिन्नरूपं यथा—शुक्ल इत्यादा तदस्यास्त्यस्मिन्निति मतुपो 'गुणवचनेभ्यो मतुपो लुगिष्टः' इति वचनेन लुप्तत्वात्तद्धितान्तत्वेऽपि घटः शुक्लः—घटाभिन्नः शुक्लरूपवान्, इति प्रतीत्या गुणगुणिनोर्भेदसंबन्धस्य न्यग्भावात् शुक्लत्वमित्यादौ गुणस्यैव प्रकारत्वं न संबन्धस्येति । अत्र गुणवाचकस्य गुणिवाचकस्य च शुक्लशब्दस्य रूपमभिन्नम् । अव्यभिचरितसंबन्धं यथा—सतो भावः सत्ता, अत्र जातावेव भावप्रत्ययः । सत्सत्तयोः संबन्धः कदापि न व्यभिचरति, सत उत्पत्तिप्रभृति—आ विनाशात् संबन्धस्य विद्यमानत्वादव्यभिचरितसंबन्धमिति भावः । इत्येवं कृत्तद्धितसमासेति वचनस्यार्थः । इदं च वचनं वार्तिककारीयमित्येवं मीमांसकानां भ्रमं निराकुर्वन्नाह—**टीकायामिति** । तदर्थमाह—**भर्तृहरिणेत्यादि** । एवं च हरिवचने वार्तिकत्वभ्रमो मीमांसकानामिति भावः । **भावप्रत्ययमात्रेति** । मात्रशब्दः कृत्स्नार्थकः । भावविहितयावत्तद्धितप्रत्ययेत्यर्थः । तेन ष्यञ्वुञादेः प्रत्ययस्यापि संबन्धरूपभावबोधकत्वात्तत्संग्रहः सिध्यति । हरिवाक्यार्थमाह—**अयमर्थ इत्यादिना** । **अयमिति** । वक्ष्यमाण इत्यर्थः । **अर्थ इति** । तात्पर्यार्थ इत्यर्थः । राजपुरुषः, औपगवः, पाचकः, इत्यादौ यद्यपि केवलः संबन्धो नाभिधेयस्तथापि समासादौ शक्तिः कल्प्यमाना विग्रहवाक्यप्रविष्टषष्ठ्याद्यर्थान्तर्भावेणैव कल्प्यते । अत एव वृत्तिविग्रहयोः समानार्थत्वप्रवादः संगच्छते । **राजादिसंबन्धेति** । राजादिनिरूपितसंबन्धवति पुरुषादौ राजपुरुषादिसमासस्य शक्तिरित्यर्थः । **इत्युक्तमिति** । समासे खलु भिन्नैव शक्तिरिति समासशक्तिनिरूपणावसर इत्यर्थः । **तथा चेति** । राजादिसंबन्धविशिष्टे समासशक्तिकल्पनप्रकारेण चेत्यर्थः । **तदुत्तरभावप्रत्यय इति** । राजपुरुषत्वं, औपगवत्वं, पक्तृत्वं' इत्यादौ स्वस्वामिभावः, अपत्यापत्यवत्संबन्धः ( जन्यजनकभावः ) क्रियाकारकसंबन्ध इति बोधादेतेभ्यः परो भावप्रत्ययस्त्वादिः संबन्धं वदति बोधयती-

उभयं वेत्युक्तेषु पक्षेषु भेदपक्षे न संभवतीत्यत आह—मतभेदेति । पक्षभेदेनेत्यर्थः । एवं च राजपुरुषत्वमौपगवत्वं पक्तृत्वमित्यादौ स्वस्वामिभावः, अपत्यापत्यवत्संबन्धः क्रियाकारकभावसंबन्ध इत्यन्वयबोधः । औपगवादावव्यभिचरितसंबन्धे त्वर्थान्तरवृत्तिस्तद्धित उदाहार्यः । दा-

---

त्यर्थः । उत्तरपदार्थे पूर्वपदार्थसंबन्धस्यैव प्रकारत्वेन भानादिति भावः । एतदपीति । भावप्रत्ययस्य त्वादेः संबन्धबोधकत्वमपीत्यर्थः । 'भेदः संसर्ग उभयं चेति वाच्यव्यवस्थितेः' ( कारिका ३० ) इत्युक्तभेदपक्षे न संभवतीति । तत्पक्षे राजपुरुषादिसमासजन्यबोधे संबन्धस्य प्रकारतयाऽभानाद् राजपुरुषत्वमित्यत्र त्वप्रत्ययस्य भेद एवार्थः । भेदपक्षे राजपुरुष इत्यत्राराजकीयभिन्नः पुरुष इति बोधादुत्तरपदार्थे पुरुषे भेदस्य प्रकारतया भासमानत्वादिति भावः । एवं चेति । पक्षभेदेन समासादिवृत्तौ संसर्गस्य वाच्यत्वे चेत्यर्थः । स्वस्वामिभावसंबन्ध इति । संसर्गपक्षे राजपुरुष इत्यादौ राजादिनिष्ठस्वामितानिरूपितस्वतावान् पुरुष इति बोधादिति भावः । उपगवपत्यसंबन्ध इति । उपगुतदपत्ययोर्जन्यजनकभावात्मकः संबन्ध इत्यर्थः । इत्यन्वयबोध इति । इति शाब्दबोध इत्यर्थः। समास इव कृत्तद्धितान्तेऽपि विशिष्टशक्त्यङ्गीकारेण पृथगुपस्थित्यभावेन पृथगुपस्थितिविषययोरर्थयोः संसर्गस्यैवान्वयत्वेन वृत्तौ अन्वयाभावात् 'इत्यन्वय बोधः' इत्युक्तेः सुतरामसंभवादिति भावः । तथा च संसर्गपक्षे यथा राजपुरुषेति समुदायो राजनिरूपितसंबन्धवत्पुरुषे शक्त इत्येवं समासादिवृत्तौ विशिष्टशक्तिरङ्गीक्रियते तद्वद् राजपुरुषत्वमित्यस्यापि वृत्तित्वाद्राजपुरुषत्वमिति समुदायो राजपुरुषस्य भावः-नाम—स्वस्वामिभावसंबन्ध इत्यर्थे शक्त इत्येवं विशिष्टशक्त्यङ्गीकाराद् राजपुरुषत्वरूपवृत्तिनिष्ठशक्त्यैव राजपुरुषत्वमिति वृत्तिघटकत्वप्रत्ययस्य स्वस्वामिभावसंबन्धबोधकत्वं सिद्धमिति कृत्वा कृत्तद्धितसमासेभ्य इति वचनं वार्तिककारीयमपूर्वमिति न भ्रमितव्यमिति तात्पर्यम् । अव्यभिचरितसंबन्धे त्विति अपत्यापत्यवत्संबन्धस्याव्यभिचरितसंबन्धत्वे त्वित्यर्थः । औपगवस्य भाव औपगवत्वम् । अत्र औपगवशब्दात् 'तस्य भावस्त्वतलौ' इति भावे त्वप्रत्ययः । भावश्च प्रकृतिजन्यबोधे प्रकारो भाव इति कौमुद्यामुक्तं भट्टोजिदीक्षितैः । प्रत्यासत्त्या त्वतलादेः प्रत्ययस्य या प्रकृतिः—त्वादिप्रत्ययविधानावधिभूतः शब्दः, तादृशशब्दजन्यो यो बोधस्तत्र प्रकारतया—विशेषणतया प्रतीयमानोऽर्थो भाव इति

( भावप्रत्ययार्थनिर्णयः )

**मोदरत्वं कृष्णसर्पत्वमित्यादौ जातिविशेषबोधादाह—अन्यत्रेति। रूढे-रभिन्नरूपाद्व्यभिचरितसंबन्धेभ्यश्चान्यत्रेत्यर्थः। रूढिरुक्ता। द्वितीयं यथा शुक्लत्वम्। अत्र "तदस्यास्त्यस्मिन्" इति मतुपो "गुणवच-नेभ्यो मतुपो लुगिष्टः" इति लुप्तत्वात्तद्धितान्तत्वेऽपि घटः शुक्ल इत्य-**

---

तदर्थः। तत्र औपगव इत्यत्रोपगुशब्दादपत्येऽर्थे 'तस्यापत्यम्' इति अण्प्रत्ययः। उपगोरपत्यस्य च जन्यजनकभावः संबन्धः। उपगुर्जनकः, अपत्यं च जन्यम्। जन्ये जन्यता, जनके जनकता चेत्ययमेव जन्यजनकभावः। जन्यजनकयोर्भाव इति व्युत्पत्तेः। अयं जन्यजनकभाव एवापत्यापत्यवत्संबन्ध इत्युच्यते। अपत्यापत्यवतोः संबन्धोऽपत्यता, अपत्यवत्ता चेत्यर्थः। तत्र जन्यतास्थानीयाऽपत्यता, जनकतास्थानीयाऽपत्यवत्ता। तथा चौपगव इत्यत्रोपगुनिष्ठापत्यवत्तानिरूपितापत्यतावानिति बोधादपत्यापत्यवत्संबन्धस्य विशेषणतया तत्र भानादपत्यापत्यवत्संबन्ध एवौपगवत्वमित्यत्र त्वप्रत्ययार्थ इति भावः। अपत्यापत्यवत्संबन्धस्य—अव्यभिचरितसंबन्धत्वं, यथा सत्सत्तयोः संबन्धः कदापि न व्यभिचरितो भवति तथाऽपत्यापत्यवतोरपि संबन्धः कदापि न व्यभिचरति। सत उत्पत्तिप्रभृति—आ विनाशात् संबन्धस्य विद्यमानत्वादपत्यस्योत्पत्तिप्रभृति—आविनाशादपत्यत्वसंबन्धस्यापि विद्यमानत्वादव्यभिचरितसंबन्धत्वमिति भावः। गोत्रं च चरणैः सहेति वचनेनापत्यत्वस्य जातित्वबोधनाज्जातिजातिमतोर्भेदसंबन्धस्य तिरोधानाज्जातिरेव तत्र प्रकार इति सैव त्वादिप्रत्ययार्थ इति तात्पर्यम्। **अर्थान्तरवृत्तिरिति।** अन्योऽर्थोऽर्थान्तरम्। अर्थान्तरे वृत्तिः—शक्तिर्यस्येत्यर्थः। अपत्यार्थादन्यस्मिन्नर्थे दीव्यतीत्यादौ शक्तस्तद्धित उदाहर्तव्य इत्यर्थः। यथा—अक्षशब्दाद्दीव्यतीत्यर्थे ठकि इकादेशेचाऽऽक्षिक इत्यत्राक्षकरणकदेवनक्रियावानिति बोधाद्देवनक्रियायाः क्रियाकारकभावसंबन्धस्य ठगर्थे कर्तरि प्रकारतया भासमानत्वादाक्षिकत्वमित्यत्र सैव देवनक्रिया त्वप्रत्ययार्थः। गौरखरः कृष्णसर्प इत्यादौ समासत्वादिसत्त्वात्तदुत्तरभावप्रत्ययेन संबन्धाभिधानं प्रसक्तं तन्निराकुर्वन्नाह—अन्यत्रेत्यादि। **रूढिरुक्तेति।** दामोदरत्वमित्यादौ जातिविशेषपुरस्कारेण बोधानुभवादित्यर्थकग्रन्थेनेत्यर्थः। द्वितीयमित्यस्याभिन्नरूपोदाहरणमित्यर्थः। तद्धितान्तत्वेऽपीत्यपिशब्देन तदुत्तरभावप्रत्ययेन संबन्धाभिधानं प्रसक्तमिति ध्वनितम्। अभे-

भेदप्रत्ययाद्गुणस्यैव प्रकारत्वेन भानं जायते, तृतीये सतो भावः सत्तेति, अत्र जातावेव प्रत्यय इति दिक् ॥ १ ॥ ४९ )

दण्डीत्यादौ प्रकृत्यर्थविशिष्टद्रव्यमात्रवाचकता तद्धितस्येति वदन्तं मीमांसकंमन्यं प्रत्याह—

---

द्प्रत्ययादीति । सोऽयमिति लोकनिरूढेनाभेदप्रत्ययेन षष्ठयर्थविहितमतुप्प्रत्ययोक्तस्य गुणगुणिनोर्भेदसंबन्धस्य तिरोधानान्न शुक्लत्वमित्यादौ संबन्धे भावप्रत्ययः, किं तु गुण एव । मतुपो लुग्विधानं तु घटस्य शुक्ल इति गुणगुणिनोर्भेदव्यवहारस्यापि विद्यमानत्वाद् घटः शुक्लवानित्यनिष्टप्रयोगनिवृत्यर्थं बोध्यम् । एवं सत्तेत्यादिजातावपि ज्ञेयम् । सतो भाव इति । अस्धातोः शतृप्रत्ययेन निष्पन्नात्सत्शब्दात् सत्तावानिति बोधानुभवाच्छतृप्रत्ययार्थकर्तरि सत्तायाः प्रकारतया भासमानत्वात्तदुत्तरभावप्रत्ययेनापि सैवाभिधीयते । जाताविति । अयं ब्राह्मण इत्यादौ अयंपदवाच्यदेहपिण्डस्य ब्राह्मणपदवाच्यस्य जातिविशेषस्य चाभेदेनैव बोधानुभवाज्जातिजातिमतोर्भेदसंबन्धस्य तिरोधानाद् ब्राह्मणत्वमित्यादौ न संबन्धे भावप्रत्ययः, किं तु जातिविशेष एवेत्यर्थः। घटस्य शुक्ल इति गुणगुणिनोर्भेदव्यवहारवज्जात्यभिप्रायेण अस्य ब्राह्मणः ( एतद्देहसंबन्धी जातिविशेषः ) इति प्रयोगाभावान्न कदापि जातिजातिमतोर्भेदव्यवहार इति अभेदेनैव बोधाद् ब्राह्मणव्यक्तौ प्रकारतया भासमानाया जातेरेव तदुत्तरभावप्रत्ययार्थत्वमिति भावः ॥ ४९ ॥

त्वतलादिभावप्रत्ययार्थविषयकं मीमांसकमतं चिखण्डयिषयाऽऽदावनुवदति— दण्डीत्यादावित्यादिना । प्रकृत्यर्थविशिष्टेति । संयोगादिसंबन्धेन वस्तुतो दण्डादिविशिष्टं यद्द्रव्यं तन्मात्रवाचकतया तद्धितस्य—इन्यादेरित्यर्थः । इन्यादेस्तद्धितस्य दण्डादिविशिष्टद्रव्यमात्रवाचकतयेति पदयोजनेति भावः । अत्र मात्रपदेन संयोगादिसंबन्धस्य व्यावृत्तिः । इन्यादेस्तद्धितस्य द्रव्यवाचकत्वमेव, न संयोगादिसंबन्धवाचकत्वमित्यर्थः । अयं भावः-दण्डीत्यादौ संयोगादिः संसर्गमर्यादया भासत इति न तत्र शक्तिः, किंतु प्रकृतेर्दण्डे, आश्रये चेन्यादेः प्रत्ययस्य शक्तिरिति । संयोगादिसंबन्धस्य वाच्यत्वाभावादेव पाचक इत्यादावपि न क्रियाकारकभावात्मकः संबन्धो वाच्यः । तदुक्तं भट्टैः—पाकं तु पचिरेवाऽऽह कर्तारं प्रत्ययोऽप्यकः । पाकयुक्तः पुनः कर्ता वाच्यो नैकस्य कस्यचित् ॥ इति । एवं च दण्डीत्यादौ प्रकृतिजन्यबोधे दण्डादेः प्रकारतया प्रतीयमानत्वात्तदुत्तरभावप्रत्ययस्य स

( भावप्रत्ययार्थनिर्णयः )

अत्रार्धजरतीयं स्याद्दर्शनान्तरगामिना( णा )मू।
सिद्धान्ते तु स्थितं पक्षद्वयं त्वादिषु तच्छृणु ॥२॥ (५०)

अत्र, भावप्रत्ययविषये । तथा हि—दामोदरत्वं घटत्वमित्यादौ भावप्रत्ययस्य संबन्धानभिधायकत्वेन मीमांसकानां दण्डित्वमित्यादिष्वपि तदभिधानं न स्यात् , प्रकृतिजन्यबोधे प्रकारः प्रकृत्यर्थसमवेतो

---

दण्डादिरेवार्थो, न संबन्ध इति वदन्तं मीमांसकं प्रत्यवतिष्ठमान आह—**अत्रार्धजरतीयमिति**। कारिकास्थात्रपदस्यार्थमाह—**भावप्रत्ययेति**। त्वतलादिभावप्रत्ययविषय इत्यर्थः। ननु त्वतलादिभावप्रत्ययविषये किं स्यादित्यत आह—**अर्धजरतीयमिति**। अर्धजरतीयं नाम दोषः स्यादित्यर्थः। जरत्या अर्धमर्धजरती, 'अर्धं नपुंसकं' इति समासः। तत्सदृशमर्धजरतीयम्। 'समासाच्च तद्विषयात्, इति च्छप्रत्ययः। यथा जरत्या अर्धं कामयतेऽर्धं नेत्ययुक्तं तद्वद्द्वयोर्दामोदरदण्डिशब्दयोः संबन्धावाचकत्वस्य तुल्यत्वेऽपि तदुत्तरभावप्रत्ययेनैकत्र—दामोदरत्वमित्यत्र जातेरभिधानं, नाम संबन्धाभिधानं न, परत्र दण्डित्वमित्यत्र तु संबन्धाभिधानमिति स्वीकरणमत्यन्तायुक्तमिति भावः। अर्धजरतीयत्वमेवोपपादयितुमाह—**संबन्धानभिधायकत्वेनेति**। दामोदर—घटादिशब्दरूपत्वादिप्रत्ययप्रकृतिजन्यबोधे संबन्धस्य प्रकारतया प्रतीयमानत्वाभावेन संबन्धाभिधायकत्वाभावादित्यर्थः। मीमांसकानामित्यस्य 'मते' इति शेषः। **तदभिधानं न स्यादिति**। संबन्धाभिधानं न स्यात्किंतु दण्डादेरेवाभिधानं स्याच्च च तदिष्टमित्यर्थः। यथा दामोदरघटादिप्रकृतिजन्यबोधे संबन्धस्य प्रकारतया भासमानत्वाभावेन घटघटत्वयोः संबन्धस्य संसर्गमर्यादया भानात्तत्र घटघटत्वयोरिव घटपदस्य शक्तिकल्पनाभावेन घटत्वविशिष्टघटमात्रवाचकत्वात् तदुत्तरभावप्रत्ययस्य संबन्धाभिधायकत्वं न भवति तद्वद् दण्डिपाचकेत्यादिप्रकृतिजन्यबोधेऽपि संबन्धस्य प्रकारतया प्रतीयमानत्वाभावेन तदुत्तरभावप्रत्ययस्यापि संबन्धाभिधायकत्वं न स्यादिति भावः। ननु दामोदरस्य भावो दामोदरत्वमित्यादौ भावशब्देन दामोदरादिनिष्ठो धर्मविशेषो गृह्यते इति संबन्धानभिधानं युक्तं, दण्डिनो भावो दण्डित्वमित्यादौ तु भावः संयोगादिरेवेति तत्र त्वप्रत्ययेन संबन्धाभिधाने किं बाधकमित्याशङ्कानिरासाय भावपदार्थं निर्वक्ति—**प्रकृतीति**। चिकीर्षितत्वतलादिप्रत्ययप्रकृतिजन्यबोधीयप्रका-

हि तदुत्तरभावप्रत्ययेनाभिधीयते । अन्यथा घटत्वमित्यत्र द्रव्यत्वादेरं-

रतावत्त्वे सति प्रकृत्यर्थसमवेतपदार्थत्वं भावत्वमित्यर्थः । विशेषणविशेष्यांशयो-र्व्यावर्त्यं प्रदर्शयितुमाह—अन्यथेति । भावपदार्थपरिष्कारे विशेषणविशेष्योभय-दलनिवेशाभाव इत्यर्थः । एकतरस्यैव निवेशे इति यावत् । यद्वा तद्वृत्तिधर्म-मात्रस्य भावपदार्थत्व इत्यर्थः । द्रव्यत्वादेरिति । यदि सत्यन्तं विशेषणांशं विहाय प्रकृत्यर्थसमवेतत्वं भावत्वमित्येवोच्येत तर्हि घटे द्रव्यत्वस्य समवायसंबन्धेन वृत्तित्वाद् घटत्वमित्यत्रत्यत्वप्रत्ययेन द्रव्यत्वस्यैवाभिधानमापद्येतेत्यर्थः । प्रकृतिज-न्यबोधे प्रकारत्वे सतीति विशेषणोपादाने तु द्रव्यत्वस्य प्रकृत्यर्थे घटे समवायेन वृत्तित्वेऽपि प्रकृतिभूतघटपदजन्यबोधे प्रकारत्वाभावेन तस्य भावत्वाभावान्न घटप-दोत्तरत्वप्रत्ययेन द्रव्यत्वमभिधीयते, किंतु तादृशं घटत्वमेवेति तदेव तदुत्तरत्वप्रत्य-येनाभिधीयत इति भावः । अत्र सर्वत्र समवेतत्वं न समवायसंबन्धेन वर्तमानत्वं घटत्वत्वमभावत्वमित्यादौ घटत्वत्वादेरसमवेतत्वेन त्वादिप्रत्ययवाच्यत्वानुपपत्तेः, किंतु येन केनचित्संबन्धेन तत्र वर्तमानत्वमिति बोध्यम् । ननु घटे घटत्वस्येव द्रव्यत्व-स्यापि समवेतत्वाद् घटपदाद घटत्वप्रकारकबोधस्येव द्रव्यत्वप्रकारकबोधस्यापि संभव इति चेन्न । अगृहीतवृत्तिकपुरुषस्यागृहीतवृत्तिकपदादर्थबोधादर्शनात् ' त-द्धर्मावच्छिन्नविषयकशाब्दबोधं प्रति तद्धर्मावच्छिन्ननिरूपितशक्तिज्ञानं कारणमि-त्येवं कार्यकारणभावोऽवश्यं वाच्यः । यथा पटत्वधर्मावच्छिन्नपटविषयकशाब्द-बोधं प्रति पटत्वधर्मावच्छिन्नपटनिरूपिता या पटपदनिष्ठा शक्तिः, तस्या ज्ञानं कारणं, कार्यं तु पटत्वधर्मावच्छिन्नपटाविषयकः शाब्दबोधः । येन पुरुषेण, पट-पदस्य पटत्वावच्छिन्ने शक्तिरिति पटपदनिष्ठा शक्तिर्ज्ञाता, तस्यैव पुरुषस्य पटप-दात्पटत्वावच्छिन्नविषयकबोधो जायते । अर्थाद् यस्य पदस्य यद्धर्मावच्छिन्ने शक्तिः, तत्पदात्तद्धर्मप्रकारको बोध इति पट इत्युक्ते पटपदात् पटत्वधर्मप्रकारको बोधो जायत इति यावत् । ननु यथा पटे पटत्वस्य विद्यमानत्वात्पटपदात्पटत्वप्र-कारको बोधो जायते, एवं पटे, पटो द्रव्यमिति अभेदेन व्यवहाराद् द्रव्यत्वस्यापि सत्त्वेन पटपदाद् द्रव्यत्वनिष्ठप्रकारतानिरूपिताविशेष्यताबान् पट इत्येवं द्रव्यत्वप्र-कारकोऽपि बोधः स्यादिति चेन्न । तद्धर्मप्रकारक इत्यस्य शक्यतावच्छेदकप्र-कारक इत्यर्थात् । शक्यतावच्छेदकं चात्र पटत्वमेव, न द्रव्यत्वम् । अन्यूनान-तिरिक्तवृत्तिधर्मस्यैव शक्यतावच्छेदकत्वात् । पटत्वं च पटपदवाच्येषु सर्वेषु पटेषु

विद्यत इति न न्यूनवृत्ति, नापि पटापेक्षयाऽतिरिक्तघटादिवृत्तीति तदेवात्र शक्यतावच्छेदकं, द्रव्यत्वं तु अतिरिक्तघटादिवृत्तित्वान्न शक्यतावच्छेदकं भवितुमर्हति । येन धर्मेणावच्छिन्ने शक्तिः स धर्मः शक्यतावच्छेदकः । पटत्वधर्मेणावच्छिन्ने पटे पटपदस्य शक्तिरिति पटत्वं शक्यतावच्छेदकम् । स च धर्मश्चतुष्टयी शब्दानां प्रवृत्तिरिति भाष्योक्तपक्षे क्वचिज्जातिः, गुणः, क्रिया, यदृच्छा( संज्ञा )शब्दश्चेति बोध्यम् । ननु पटवृत्तिद्रव्यत्वधर्मेणावच्छिन्ने पटे पटपदस्य शक्तिः कल्पिता चेद्द्रव्यत्वमपि पटपदशक्यतावच्छेदकं भवितुमर्हतीति चेन्न । अन्यूनानतिरिक्तवृत्तिनैव धर्मेणावच्छिन्ने तत्तत्पदशक्तेः कल्पनीयत्वात् । नन्वत्रैव किं प्रमाणमितिचेत् समर्थसूत्रस्थं भाष्यमेव प्रमाणमिति गृहाण । इत्थं हि तद्भाष्यम्—' न हि गुड इत्युक्ते मधुरत्वं प्रकारतया गम्यते ' इति । हि—यतः, गुड इत्युक्ते मधुरत्वं प्रकारतया न गम्यते इति तदर्थः । गुडेऽव्यभिचरिततया मधुरत्वस्य विद्यमानत्वेऽपि तस्य प्रकारतयाऽभानाद् गुडपदशक्यतावच्छेदकत्वं नास्तीति सूचितम् । मधुरत्वस्य गुडतदतिरिक्तमध्वादिवृत्तित्वादिति भावः । ननु किं तर्हि गुडपदशक्यतावच्छेदकमिति चेद्—गुडत्वमिति ब्रूमः । यश्च धर्मस्तदेकदेशमात्रवृत्तिर्भवति न स शक्यतावच्छेदको भवति । यथा पीतगोत्वम् । पीतगोत्वं हि पीतगव्यामेव न नीलादिसर्वगवीष्विति न तच्छक्यतावच्छेदकं भवति । न्यूनवृत्तित्वात् । योऽपि धर्मस्तद्वृत्तिः संस्तदतिरिक्तवृत्तिरपि भवति सोऽपि न शक्यतावच्छेदको भवितुमर्हति । यथा शृङ्गित्वम् । शृङ्गित्वं हि सर्वगवीषु विद्यमानं सदपि तदतिरिक्तमहिष्यादावपि वर्तत इति न तच्छक्यतावच्छेदकं भवति । अतिरिक्तवृत्तित्वात् । यो हि धर्मो न न्यूनवृत्तिर्नापि तदतिरिक्तवृत्तिः स एव शक्यतावच्छेदको भवितुमर्हति । यथा सास्नावत्त्वे सति शृङ्गित्वम् । गुडत्वं हि सर्वेष्वेव गुडेष्वेव विद्यत इति कृत्वा न तन्न्यूनवृत्ति, नापि तदतिरिक्तवृत्तीति तदेव गुडपदशक्यतावच्छेदकं भवति । अन्यूनानतिरिक्तवृत्तित्वादित्यर्थः । गुडातिरिक्तवृत्तिमधुरत्वस्य शक्यतावच्छेदकत्वं प्रतिषेधता भगवताऽन्यूनातिरिक्तवृत्तिगुडत्वस्यैव गुडपदशक्यतावच्छेदकत्वमित्यपि सूचितमिति भावः । एवं घटपटादिषु सर्वत्र बोध्यम् । अत एव गुडशब्देन गुडत्वजात्यवच्छिन्नो गुडपदवाच्य इत्येव बोधो जातिप्रकारकः, । शक्यतावच्छेदकत्वं च शक्यनिष्ठा या विशेष्यता, तन्निरूपितप्रकारताश्रयतया भासमानत्वम् । घटादिपदशक्तिग्रहे च घटत्वादेरेव शक्यतावच्छेदकत्वं, न द्रव्यत्वादेः । तथा च

ण्डित्वमित्यादौ दण्डादेश्च तदुत्तरभावप्रत्ययवाच्यतापत्तेः। न च तन्मते दण्डीत्यादिबोधे संबन्धः प्रकारः।

यत्तु—

"यदा स्वसमवेतोऽत्र वाच्यो नास्ति गुणोऽपर ।
तदा गत्यन्तराभावात्संबन्धो वाच्य आश्रितः"

---

घटो द्रव्यमित्यादौ सामानाधिकरण्येनान्वयबोधेऽपि न घटादिपदेभ्यो द्रव्यत्वादिप्रकारको बोधः, नापि द्रव्यादिपदाच्च घटत्वादिप्रकारको बोध इत्याद्युक्तं लघुमञ्जूषायां संगच्छते। एवं च घटादिपदे प्रकृत्यर्थवृत्तित्वे सति प्रकृतिजन्यबोधे प्रकारतया भासमानत्वेन घटत्वादेरेव तस्य भाव इति भावशब्दार्थत्वाद् घटत्वादिरवे तदुत्तरत्वप्रत्ययेनाभिधीयते, न द्रव्यत्वादीत्यवधेयमिति भावः। अथ यदि प्रकृत्यर्थसमवेतत्वमिति विशेष्यांशं विहाय प्रकृतिजन्यबोधे प्रकारत्वमित्येवोच्येत तर्हि दण्डित्वमित्यादावनिष्टापत्तिमाह—दण्डादेश्चेति। दण्डनिष्ठप्रकारतानिरूपितविशेष्यतावानिति शाब्दबोधाद् दण्डिपदजन्यशाब्दबोधे दण्डस्य प्रकारत्वेन दण्डित्वमित्यादौ त्वप्रत्ययेन दण्डादेरभिधानमापद्येतेत्यर्थः। ननु दण्डिपदजन्यशाब्दबोधे दण्डदण्डिनोरिव तयोः संबन्धस्यापि भानात्तस्य च प्रकारत्वात्त्वप्रत्ययेन संबन्धाभिधानमनायासतः सिध्यतीत्यत आह—न च तन्मत इति। मीमांसकमते दण्डदण्डिनोः संबन्धस्य संसर्गमर्यादयैव भानान्न संबन्धांशे शक्तिः कल्प्यते, किंतु प्रकृतेर्दण्डे शक्तिः, आश्रये च त्वप्रयस्य शक्तिरिति दण्डाश्रयः पुरुष इति बोधाद् दण्डः प्रकारः पुरुषश्च विशेष्य इति दण्डिपदजन्यबोधे संबन्धस्य भानमेव नास्तीति दूरे तस्य प्रकारता। तथा च दण्डित्वमित्यादौ त्वप्रत्ययेन संबन्धाभिधानं सुतरां दुर्लभमित्याशयवानाह—संबन्धः प्रकार इति। न चेत्यस्य संबन्धात्संबन्धः प्रकारो नैव संभवति, येन तस्य त्वतलादिप्रत्ययवाच्यत्वं स्यादित्यर्थः। इदानीं दण्डित्वमित्यादौ त्वतलादिप्रत्ययस्य संबन्धाभिधायकत्वे मीमांसकोक्तां युक्तिमनुवदति—यत्त्विति। यदेति। अत्र—दण्डित्वमित्यादौ। स्वसमवेतः—प्रकृतिजन्यबोधविशेष्यसमवेतः। वाच्यः—प्रकृतिजन्यबोधप्रकार इति यावत्। नास्ति गुणोऽपरः—शुक्लत्वमित्यादौ शुक्लादिगुणवन्न संभवति। तदेति। गत्यन्तराभावात्—दण्डादेः प्रकृतिजन्यबोधे प्रकारत्वेऽपि घटे घटत्वस्येव प्रकृत्यर्थासमवेतत्वेन तस्य भावपदार्थत्वासंभवात्। संबन्धो वाच्य इति। प्रकृतिजन्यबो-

( भावप्रत्ययार्थनिर्णयः )

इति, तन्न। इनादेः संबन्धिवाचकत्वेनोपपत्तावगत्यभावात्। प्रा-

धाप्रकारोऽपि स्वसमवेतः संबन्धस्त्वादिप्रत्ययवाच्य आश्रित इत्यर्थः। यत्र तत्रे-त्यर्थे यदातदाशब्दयोः पर्यवसानं बोध्यम्। यत्र प्रकृतिजन्यबोधविशेष्यनिष्ठः प्रकृतिजन्यबोधप्रकारश्च गुणो न संभवति, तत्र प्रकृतिजन्यबोधाप्रकारोऽपि प्रकृति-जन्यबोधविशेष्यनिष्ठः संबन्धस्त्वादिप्रत्ययवाच्यत्वेनाऽऽश्रयणीय इति मीमांसकोक्त वचनस्य तात्पर्यम्। तथा च दण्डित्वमित्यादौ त्वतलादिप्रत्ययेन संबन्धस्यैवाभि-धानं, न दण्डादेरिति मीमांसकोक्तं न युक्तमिति दूषयति—तन्नेति। **संबन्धिवाचकत्वेनेति**। यद्यपि दण्डोऽस्त्यस्य, गावः सन्त्यस्येति दण्ड्यादिशब्दविग्रहेऽपि अस्येत्यादौ प्रत्ययार्थसंबन्धप्राधान्येन विवरणदर्शनात्संसर्गः प्रधानमिति सबन्धे एव तदस्यास्त्यस्मिन्निति मतुबादयो विधीयन्ते। उक्तं चारुणाधिकरणवार्तिके—'अस्यात्रेति च संबन्धे मत्वर्थीयः प्रवर्तते' इति। तथापि दण्डी पुरुषः, गोमांश्चैत्र इत्येवं सामानाधिकरण्यस्य अनुपपत्तिप्रतिसंधानं विनैव शब्दादेव प्रतीतेस्तदनुसारेण द्रव्यवाचित्वं मतुबादीनामास्थेयम्। उक्तं च मीमांसकैः—सर्वत्र यौगिकैः शब्दैर्द्रव्यमेवाभिधीयते। नहि संबन्धवाच्यत्वं संभवत्यतिगौरवात्॥ इति। **यौगिकैरिति**। योगाय प्रभवति यौगिकः। योगाधच्च( पा. सू. ५।१।१०२ ) इति ठञ्प्रत्ययः। प्रकृतिप्रत्यययोगलभ्यार्थवाचकः शब्दः। प्रकृतिप्रत्ययेत्युपलक्षणं यौगिकशब्दघटकार्थवाचकपूर्वोत्तरभागयोः। तेन समासस्यापि यौगिकशब्दत्वं सिद्धम्। अत एव—योगलभ्यार्थमात्रस्य बोधकं नाम यौगिकम्। समासस्ताद्धितान्तं च कृदन्तं चेति तत्त्रिधा॥ इत्यभियुक्तोक्तिः संगच्छते। यौगिकैः शब्दैः सर्वत्र प्राधान्येन द्रव्यमेवाभिधीयत इति पूर्वार्धार्थः। उत्तरार्धार्थमाह—**नहीत्यादिना**। अयं भावः—यदि गावः सन्ति यस्येत्यादौ विग्रहे यस्येत्यादौ प्रत्ययार्थसंबन्धस्य प्राधान्यदर्शनात्तदनुसारेण मतुबादीनां संबन्धवाचित्वमेव स्यान्न द्रव्यवाचित्वं तर्हि अनुयोगिप्रतियोगिरूपसंबन्धिद्वयाश्रितसंबन्धस्यान्यतरासत्त्वे उपपादयितुमशक्यत्वाद् गोमानित्यादावेकस्य गोरूपसंबन्धिनः प्रातिपदिकादुक्तत्वेऽपि संबन्धस्योभयनिरूप्यत्वाद् द्वितीयोऽपि संबन्ध्यभिधातव्यः संबन्धश्चाप्यभिधातव्य इति शक्तिद्वयकल्पनापत्त्याऽतिगौरवं स्यादिति। नन्वेवं यदि मतुबादेः संबन्ध्यभिधायकत्वं स्वीक्रियते तर्हि गोमानित्यादौ संबन्धप्रतीतिर्न स्यात्। गोपदेन प्रतियोगिरूपः संबन्ध्युक्तो मतुपा चानुयोगिरूपः संबन्ध्यभिहितः, संबन्धस्तु न केनाप्य-

श्चितं चैतदादावेव वैयाकरणभूषणे । ननु तवापीदं वैषम्यं कथमित्यत

र्भिहितः । यदि च मतुपा संबन्धोऽभिधीयते तर्ह्येव गोमत्प्रातिपदिकादुत्पन्नस्त्वतलादिर्भावप्रत्ययः संबन्धमभिधातुमर्हति नान्यथा । प्रतीयते च सर्वत्र संबन्धः पाचकत्वं पाठकत्वमित्यादिष्विति चेन्न । अवश्याभिधातव्यसंबन्धिनैवाऽऽक्षेपात्संबन्धबोधस्योपपन्नत्वात् । उक्तं च–संबन्धिनैव संबन्धः प्रत्येतुं यदि शक्यते । पुनस्तस्याभिधाशक्तिं कः श्रुतेः परिकल्पयेत् । इति । संबन्धमन्तरा संबन्धीति व्यवहारानुपपत्त्या पीनत्वान्यथानुपपत्त्या रात्रिभोजनमिव संबन्धः कल्प्यत इति मतुपः संबन्धिनीव संबन्धेऽपि शक्तिर्न कल्पनीया गौरवभीतेरिति भावः । किंच यौगिकैः शब्दैः सर्वत्र प्राधान्येन द्रव्याभिधानादेवारुणाधिकरणप्रवृत्तिरुपपद्यते । अन्यथा पिङ्गाक्ष्यैकहायनीशब्दाभ्यामपि प्राधान्येन संबन्धस्यैवाभिधाने आरुण्यगुणवत्पिङ्गत्वाक्षित्वैकत्वहायनत्वस्यापि अमूर्तत्वात्क्रीणातौ करणत्वासंभवेन क्रीणातिकरणत्वस्यैवैतद्वाक्यादलाभादारुण्यस्य वाक्यभेदशङ्कया एवासंभवेन पूर्वपक्षानुत्थानेन तादृशाधिकरणप्रवृत्त्यनुपपत्तिरेव स्यादिति बोध्यम् । एवं चेनादेर्भावप्रत्ययस्य संबन्धिवाचकत्वात्संबन्धिनैव संबन्धः प्रत्येतुं यदि शक्यते, इत्युक्तयुक्त्यनुसारेण संबन्धप्रतीतेरुपपत्तौ सत्यां गत्यन्तराभावादित्युक्तहेतोरेवाभावादिति भावः । प्रपञ्चितमिति । अयं भावः–दण्डीत्यादौ संबन्धस्यावाच्यत्वे दण्डित्वमित्यत्रापि संबन्धस्य वाच्यत्वं न स्यात् । न चानुभवानुरोधेन त्वादेः संबन्धे शक्तिः कल्प्यत इति वाच्यम् । शक्त्यन्तरकल्पनापेक्षया इन्नादीनां क्लृप्तशक्तौ धर्मिवत्संबन्धविषयकत्वं कल्पनीयं–नाम यथा वैयाकरणैः–दण्डनिरूपितसंबन्धवान् पुरुष इति बोधानुभवात्संबन्धवद्द्रव्यवाचित्वमिन्यादीनामाश्रितं तथा मीमांसकैरपि संबन्धवद्द्रव्यवाचित्वमिन्यादीनामाश्रयणीयं, न केवलद्रव्यवाचित्वम् । तथा च दण्डीतिप्रकृतिजन्यबोधे संबन्धस्य प्रकारत्वात्स एव तदुत्तरभावप्रत्ययेनाभिधीयेतेत्येवंकल्पनया दण्डित्वमित्यादौ त्वादेः संबन्धाभिधायकत्वोपपत्तौ सत्यां संबन्धे त्वादेः पृथक्शक्त्यन्तरकल्पनं गुरुभूतम् । अन्ये तु इन्यादेः संबन्धावाचकत्वेऽपि दण्डयादिशब्दस्य दण्डसंबन्धज्ञानादेव प्रवृत्तिरिति संबन्धस्यैव शब्दप्रवृत्तिनिमित्ततया त्वादेः संबन्धाभिधायकत्वं संभवति । तस्य भाव इति सूत्रे शब्दप्रवृत्तिनिमित्तस्यैव भावपदार्थत्वमिति वदन्तीत्यादि विस्तरेण निरूपितं वैयाकरणभूषण इति भावः । शङ्कते–नन्विति । तवापीति । वैयाकरणस्यापि तवेत्यर्थः । इदं वै-

( भावप्रत्ययार्थनिर्णयः )

आह- सिद्धान्ते त्विति । ( जायन्त इति वक्ष्यमाणशेषेणान्वितं, सिद्धान्ते प्रकृतिजन्यबोधप्रकारे त्वादयो जायन्त इत्यर्थं । स प्रकृतिजन्यबोधप्रकारः क इत्यत्र पक्षद्वयं स्थितमिति योजना ) ॥ २ ॥ ( ५० )

तौ पक्षावाह—

प्रयोगोपाधिमाश्रित्य प्रकृत्यर्थप्रकारताम् ।
धर्ममात्रं बाच्यमिति यद्वा शब्दपरा धर्मी ॥
जायन्ते तज्जन्यबोधप्रकारे भावसंज्ञिते ॥ ३ ॥ ( ५१ )

( इति भट्टोजिदीक्षितविरचितकारिकासु भावप्रत्ययार्थनिर्णयः ) ।

प्रयोगे—उपाधिं निमित्तं प्रकृत्यर्थप्रकारतया भासमानं धर्मं वाच्यतयाऽऽश्रित्य त्वादयो जायन्ते । प्रकृतिजन्यबोधे प्रकारस्त्वाद्यर्थ इति

---

धर्म्यामिति । दामोदरत्वं घटत्वमित्यादौ संबन्धो न वाच्यः, दण्डित्वमित्यादौ तु वाच्य इत्येवं वैषम्यमित्यर्थः । कथमिति । केन प्रकारेणोपपादयितुं शक्यमत आह—सिद्धान्ते त्विति । तस्य भाव इति सूत्रेण भावे त्वतलादयो विधीयन्ते । भावपदार्थश्च प्रकृतिजन्यबोधे यः प्रकारः सः । कश्च प्रकृतिजन्यबोधे प्रकार इति जिज्ञासायां तत्र पक्षद्वयमुक्तं तदनुसारेण भावपदार्थं निश्चित्य तत्र तत्र त्वतलादयो विधातव्या इति भावः ॥ ५० ॥

यदुक्तं प्रकृतिजन्यबोधे प्रकार इत्यत्र पक्षद्वयमिति तद्दर्शयितुमाह—तौ पक्षाविति । प्रयोगोपाधिमाश्रित्येति । प्रयोगे—उपाधिमिति । घटपटादिशब्दस्य प्रयोग कर्तव्ये य उपाधि —यन्निमित्तं प्रवृत्तिनिमित्तमित्यर्थः । स चोपाधिः कीदृश इत्याह—प्रकृत्यर्थ इति । त्वादिप्रत्ययप्रकृत्यर्थे—त्वादिप्रत्ययप्रकृतिजन्यबोधे, प्रकारतामित्यस्य प्रकारतामापन्नमिति शेषः । आश्रित्येति । प्रकारतया भासमानं शब्दप्रवृत्तिनिमित्तरूपं धर्मं त्वादिप्रत्ययशक्यतयाऽऽश्रित्येत्यर्थः । जायन्त इति । त्वादिप्रत्ययप्रकृतिजन्यबोधे प्रकारतया भासमाने शब्दप्रवृत्तिनिमित्तरूपे धर्मे त्वतलादयो विधीयन्त इति यावत् । ननु प्रकृतिजन्यबोधे प्रकारतामापन्नमित्युक्त्यैवोपाधेः संग्रहे सिद्धे पार्थक्येन तदुपादानं किमर्थमत आह—प्रकृतिजन्यबोधे प्रकार इति । स च प्रकारः प्रकृत्यर्थवृत्तिरसाधारणो धर्मः । तस्मिन्नसाधारण्यं च स्वेतरावृत्तित्वे सति निखिलस्ववृत्तित्वेन गृह्यते स्व-

पदेन च घटपटादिव्यक्तिर्ग्राह्या, तथा च घटेतरावृत्तित्वे सति सकलघटवृत्तित्वाद् घटत्वं घटनिष्ठोऽसाधारणधर्मः। सत्यन्तविशेषणोपादानाच्च द्रव्यत्वादेर्घटवृत्त्यसाधारणधर्मत्वं, पृथिव्यादावपि द्रव्यत्वस्य सत्त्वात्। विशेष्योपादानाच्च तद्व्यक्तित्वादेर्न घटासाधारणधर्मत्वं, तद्व्यक्तित्वस्य तत्तद्व्यक्तिमात्रवृत्तित्वेन सकलघटवृत्तित्वाभावात्। तेनासाधारणरूपेण धर्मस्त्वादिभावप्रत्ययवाच्य इत्यर्थः। यद्धर्मस्य ज्ञानाद्यस्मिन्नर्थे यः शब्दः प्रयुज्यते स धर्मस्तच्छब्दप्रवृत्तौ निमित्तम्। शब्दप्रवृत्तिनिमित्तरूपो धर्मश्च क्वचिज्जातिः, क्वचिद्गुणः, क्वचित्क्रियेति। तत्र घटत्वदामोदरत्वादौ जातिस्त्वाद्यर्थः। शुक्लादयः शब्दा गुणे गुणिनि च शक्ताः। तत्र गुणपरेषु शुक्लादिशब्देषु तद्गता जातिः प्रवृत्तिनिमित्तमिति तादृशशुक्लत्वमित्यादौ गुणगता जातिस्त्वाद्यर्थः। गुणिपरेषु शुक्लादिशब्देषु गुणः प्रवृत्तिनिमित्तमिति तादृशशुक्लत्वमित्यादौ गुणस्त्वाद्यर्थः। पाचक इत्यादेः पाकक्रियासंबन्धवत्कर्तरि शक्तिः। क्रिया पचेः शक्या, अकस्य कर्ता शक्यः। संबन्धो विशिष्टशक्यः। संबन्धश्च क्रियाकारकभावः। स एव च तत्र प्रवृत्तिनिमित्तमिति पाचकत्वमित्यादौ संबन्धस्त्वाद्यर्थः। तथा च क्रियाप्रवृत्तिनिमित्तकः शब्दः क्रियाशब्द इत्यस्य क्रियासंबन्धप्रवृत्तिनिमित्तकः शब्द इत्यर्थो बोध्यः। नन्वेवं जातिप्रवृत्तिनिमित्तकशब्देषु जातिसंबन्धवतीषु व्यक्तिषु शक्तिः, कल्प्यतां, एवं गुणप्रवृत्तिनिमित्तकशब्देष्वपि गुणसंबन्धवद्घटादौ शक्तिः कल्प्यताम्। ततश्च जातिशब्देषु गुणशब्देषु च संबन्धस्यैव प्रवृत्तिनिमित्तत्वाद् घटत्वं शुक्लत्वमित्यादावपि संबन्ध एव त्वाद्यर्थोऽस्त्विति चेन्न। प्रवृत्तिनिमित्तं च यज्ज्ञानाच्छब्दप्रवृत्तिस्तत्। तस्य भाव इति सूत्रे भावशब्देन शब्दप्रवृत्तिनिमित्तमेव गृह्यते, शब्दप्रवृत्तिश्च क्वचिद्धर्मस्वरूपज्ञानात्क्वचित्संबन्धज्ञानादिति स्पष्टं कैयटे, इति लघुमञ्जूषायामुक्तम्। तत्र अयं ब्राह्मणः, घटः शुक्ल इत्यादौ लोकनिरूढेन सोऽयमित्यभेदप्रत्ययेन जातिजातिमतोर्गुणगुणिनोर्वा भेदसंबन्धस्य तिरोधानान्न तत्र संबन्धः प्रवृत्तिनिमित्तं संभवितुमर्हतीति ततस्त्वादिना न संबन्धस्याभिधानम्। किंतु शब्दप्रवृत्तिनिमित्तभूते धर्मे जातौ गुणे च तत्र भावप्रत्ययः। क्रियया तु कृदन्ते भेदस्यैव नियमेन प्रतीतेस्तत्संबन्धज्ञानादेव शब्दप्रवृत्तिरिति तत्रैव भावप्रत्ययः। क्रियाकारकयोर्भेदाभेदाविति मते तिङन्ते तु युष्मद्युपपदे समानाधिकरणे, इत्युक्तेर्भेदतिरोधानम्। अत्र च शब्दशक्तिस्वभाव एव बीजम्। अत एव कृत्तद्धितसमासेभ्यः संबन्धाभिधानं भावप्रत्ययेनेत्युक्त्वा पाचकत्वमित्युदाहृतं हरिणा। क्रियाप्रवृत्तिनिमित्त इत्यस्य क्रिया-

संबन्धप्रवृत्तिनिमित्तक इत्यर्थ इत्युक्तं प्राक् । जातिगुणक्रियायदृच्छेति चतुष्टयी शब्दानां प्रवृत्तिरित्यत्र क्रियापदं संबन्धप्रवृत्तिनिमित्तकशब्दोपलक्षणमिति न न्यूनता । यदृच्छाशब्दा डित्थादयः क्वादयो भादयश्च । तत्र डित्थादिषु एकद्रव्योपनिवेशसंज्ञाभूतेषु व्यक्तिरेव वाच्या । आनन्त्यव्यभिचारयोरभावात् । प्रातिपदिकमात्रादर्थबोधाभावेन सुबन्ताच्च संख्यादेरेव प्रकारतया भानेन न ततो निर्विकल्पकम् । न च डित्थत्वमित्यादौ प्रकृतिजन्यबोधे प्रकाराभावात्प्रत्ययार्थाभावेन त्वाद्यनुपपत्तिरिति वाच्यम् । व्यक्तेरेव प्रकारताविशेष्यतारूपविषयताद्वयेन भानेन प्रकारत्वावच्छिन्नाया व्यक्तेरेव त्वाद्यर्थत्वात् । यद्वा तत्र प्रकृतिः शब्दपरा विशेष्यभूतोऽर्थ एव त्वाद्यर्थः । डित्थशब्दवाच्य इति डित्थत्वमित्यस्यार्थः । तथा च डित्थडित्थत्वपदयोः पर्यायता भवति । यत्तु बालयुवाद्यवस्थाभेदेन शरीरभेदात्तद्वृत्तिर्डित्थत्वादिजातिः, सैव त्वाद्यर्थ इति । तन्न । लोके तत्र भेदव्यवहाराभावेन तादृशोपाधिभेदेन भेदे प्रमाणाभावात् । आकाशे तु पटाकाशमठाकाशादीति लोके भेदव्यवहारेण तत्रौपाधिकभेदसिद्धिः । एतच्च तस्य भाव इति सूत्रे भाष्ये स्पष्टम् । क्वादिपदानां कादीनामेकत्वमते पञ्चवर्णव्यक्तिषु, तेषामनेकत्वमते पञ्चजातीयवर्णव्यक्तिषु वा शक्तिः । अन्त्ये जातय उपलक्षणम् । तत्राप्यानन्त्याद्यभावेन पञ्चवृत्त्येकशक्यतावच्छेदकानुपयोग एव । तत्रापि डित्थत्वमित्यादौ पूर्वोक्तरीत्यैव भावप्रत्यय इति कुत्वकुशब्दयोः पर्यायतैव । भादिपदानां तु यूष्णः, राज्ञ इत्यादौ यूषन्राजन्नित्यादिशक्यव्यक्त्यानन्त्येन शक्यतावच्छेदकापेक्षणाद् भादिपदमेव शक्यतावच्छेदकं, तदेव च तदुत्तरत्वाद्यर्थः । एतदभिप्रायेणैव वृद्धिरादैच् सूत्रे भाष्य उक्तं—कुत्वं कस्मान्न भवति चोः कुः पदस्येति । भत्वात् । कथं भसंज्ञेति । अनेन कुत्वकुपदयोर्भत्वभसंज्ञापदयोः पर्यायता स्पष्टमेवोक्ता । एवं च 'तवापीदं कथं वैषम्यं' इत्येतादृशो य आक्षेपो वैयाकरणोपरि मीमांसकैरुक्तस्तस्येदमुत्तरम्—तस्य भाव इति सूत्रे भावपदेन प्रकृतिजन्यबोधे प्रकारतया भासमानः शब्दप्रवृत्तिनिमित्तरूपो धर्मो गृह्यते । शब्दप्रवृत्तिश्च क्वचिद्धर्मस्वरूपज्ञानात्क्वचित्संबन्धज्ञानादिति घटत्वदामोदरत्वादौ संबन्धानवगमेन शब्दप्रवृत्तिनिमित्तात्मके धर्मे जातौ त्वादिभावप्रत्ययः, पाचकत्वदाण्डित्वादौ तु संबन्धावगमात्संबन्धे भावप्रत्यय इति भावः । ननु भावपदेन त्वादिप्रत्ययप्रकृतिजन्यबोधे प्रकारतया

**यावत् । ननु घटत्वमित्यत्र प्रकारत्वात्तदुत्तरभावप्रत्ययेन घटत्वत्वस्यापि वाच्यता स्यादित्यत्रेष्टापत्तिमाह—धर्ममात्रमिति । न त्वत्र लघुगुरुवि-**

---

भासमानः शब्दप्रवृत्तिनिमित्तरूपो धर्मो गृह्यते चेद् घटत्वत्वमित्यादौ घटत्वस्यापि प्रकारतया भासमानत्वाद् घटत्वपदोत्तरस्यापि त्वप्रत्ययस्य घटत्वमेव वाच्यं स्यादि-त्याशयेन शङ्कते—**नन्वित्यादिना । प्रकारत्वादिति** । यद्यपि घटत्वावच्छिन्ने घटे घटपदस्य शक्तिरिति घटपदेनैव शक्यतावच्छेदकं घटत्वमुक्तं भवति, तथापि घटपदेन तद्विशेषणतयोच्यते, घटपदाद् घटत्वप्रकारकघटविशेष्यकबोधानुभवात् । विशेष्यतया बोधार्थं त्वादिभावप्रत्ययेन तदेव शक्यतावच्छेदकमभिधीयते । प्रकृ-तिप्रत्ययार्थयोः प्रत्ययार्थस्य प्राधान्यमिति न्यायेन घटत्वमित्यादौ त्वप्रत्ययेन प्रा-धान्येन तदुच्यत इति युक्तं शक्यतावच्छेदके त्वादिभावप्रत्ययविधानम् । घटत्व शब्दात्त्वादिभावप्रत्ययचिकीर्षायां शक्यतावच्छेदकं घटत्वत्वं वाच्यं, यद्यपि तद् घटत्वपदेनैवोक्तं तथापि विशेषणतया तेन तस्योक्तत्वात्प्राधान्येन बोधार्थं पुनस्त्व-प्रत्ययेन तदेवाभिधातव्यमिति प्रकृतिजन्यबोधे प्रकारतया भासमानः शक्यताव-च्छेदको धर्मो घटत्वत्वमेवेति मन्तव्यम् । परं तु तस्य ( घटत्वत्वस्य ) शक्यता-वच्छेदकत्वं न स्वीक्रियते । संभवति लघौ गुरौ तदभावात् । लघुधर्मेऽवच्छेदक-त्वकल्पने संभवति सति गुरुधर्मेऽवच्छेदकत्वकल्पनं न करणीयं गौरवादिति तदर्थः। अत एव प्रमेयवह्न्यभाववानित्यत्र प्रमेयवह्नित्वस्याभावप्रतियोगितावच्छेदकत्वं परि-त्यज्य प्रमेयवह्नित्वस्य समनियतो वह्नित्वरूपो धर्म एवाभावप्रतियोगितावच्छेदक-त्वेनाङ्गीकृतो लघुत्वान्नैयायिकैः । सत्येवं यदि गुरुधर्मे शक्यतावच्छेदकत्वं स्वीक्रियते चेन्न्यायविरुद्धत्वादयुक्तं तदिति घटत्वत्वस्य शक्यतावच्छेदकत्वाभावेन घटत्वपदोत्तरत्वप्रत्ययवाच्यता तस्य न संभवतीति 'वाच्यता स्यात्, इत्यनेन वाच्यतापत्तिः स्यात्, सा चानिष्टेति सूचितम् । घटत्वत्वस्य शक्यतावच्छेदकत्व कल्पनायां यद्यपि गौरवं भवति तथापि तदिष्टापत्तिग्रस्तमेवेत्याह **धर्ममात्रमि तीति** । गोत्वगोत्वत्वादि धर्ममात्रं धर्मत्वेन रूपेण त्वादिभावप्रत्ययवाच्यं न तु त त्तद्रूपेण शक्त्यानन्त्यापत्तेः । अन्ये तु गोत्वादिजातिरपि गवादिद्रव्यनिष्ठो धर्मः, नीलादिगुणोऽपि घटादिद्रव्यनिष्ठो धर्मः, तथा पाकादिक्रियाऽपि चैत्रादिद्रव्यनिष्ठो धर्म इति जातिगुणक्रियासु द्रव्यनिष्ठधर्मत्वसाधारण्येनैकशक्तौ संभवन्त्यां जात्या-दितिसृषु पृथक्शक्तिकल्पने गौरवादस्य जात्यादीनां धर्मत्वेन रूपेण त्वादिभावप्रत्य-

चार इत्यभिप्रायः। तत्तद्व्यक्तिविशिष्टब्रह्मसत्ताया एव घटत्वत्वादिरूपत्वात्।

"संबन्धिभेदात्सत्तैव भिद्यमाना गवादिषु।
जातिरित्युच्यते तस्यां सर्वे शब्दा व्यवस्थिताः॥
तां प्रातिपदिकार्थं च धात्वर्थं च प्रचक्षते।
सा नित्या सा महानात्मा तामाहुस्त्वतलादयः"॥

इति वाक्यपदीयात्। उक्तं च "तस्य भावस्त्वतलौ" [पा०

---

यवाच्यता। तथा च न शक्यतानन्त्यम्। स च द्रव्यनिष्ठो जात्यादिर्धर्मो योग्यद्रव्येतरावृत्तित्वे सति सकलयोग्यद्रव्यवृत्तित्वादसाधारण इत्युच्यते। एवं गोत्वत्वादिधर्मोऽपि परम्परया द्रव्यवृत्तित्वादसाधारण इति घटत्वं घटत्वत्वमित्यादौ घटादिवृत्तिरसाधारणो धर्म इति बोध इति वदन्ति। त्वादिप्रत्ययप्रकृत्यर्थे प्रकारतामापन्नं धर्ममात्रं त्वादिभावप्रत्ययवाच्यमितीष्यत इत्यर्थः। कृत्स्नार्थकमात्रशब्देनोभयविधस्यापि शक्यतावच्छेदकधर्मस्य संग्रहः। स च शक्यतावच्छेदको धर्मो गुरुर्लघुर्वा कीदृशोऽप्यस्तु न तत्र वैमर्थं कर्तुं शक्यं भावग्रहणसामर्थ्यात्, कम्बुग्रीवादिमान्नास्तीति प्रतीत्या कम्बुग्रीवादिमत्त्वस्याभावप्रतियोगितावच्छेदकत्वस्वीकारेण गुरुधर्मस्याप्यवच्छेदकत्वस्वीकारे बाधकाभावाच्चेति भावः। तदेतदाह—न त्वत्र लघुगुरुविचार इति। वस्तुतस्तु गुरुधर्मेऽवच्छेदकत्वकल्पने गौरवमेव नास्तीत्याह—तत्तद्व्यक्तीति। रज्जौ सर्पवत्सर्वस्यापि जगतो ब्रह्मण्यारोपेण ब्रह्मसत्तैव सर्वत्रावभासते। सा च ब्रह्मसत्ता गोघटादितत्तद्व्यक्तिविशेषैः परिच्छिन्ना सती गोत्व-घटत्व, गोत्वत्व-घटत्वत्वादिरूपेण व्यवहारविषया जायते। तदुक्तं वाक्यपदीये—संबन्धिभेदादिति। गोत्वादिधर्माश्रयाणां गवादिव्यक्तीनां भेदाद् भिद्यमाना—गवेतरावृत्तित्वे सति सकलगोवृत्तित्वेन भिन्नेव प्रतीयमाना गवादिषु विद्यमाना या ब्रह्मसत्ता सैव जातिरित्युच्यते। तस्यां जातिशब्दवाच्यायां सत्तायां सर्वे शब्दा वाचकत्वेन व्यवस्थिता इति तदर्थः। जातिः पदार्थ इति वादिनां मतेऽनुकूलमिदम्। सकलशब्दवाच्या ब्रह्मसत्तैवेत्येतद्विशदयति—तामिति। तत्तद्व्यक्तिविशेषोपरक्तां ब्रह्मसत्तामित्यर्थः। प्रातिपदिकार्थं धात्वर्थं च—क्रियां च प्रचक्षते- कथयन्ति, आकृत्यधिकरणन्यायेनेत्यर्थः। नित्या—उत्पत्तिविनाशादिविकाररहिता, अत एव सैव सत्ता महानात्मेत्युच्यते, त्वतलादयश्च भावप्रत्ययास्ता-

**सू० ५-१-११९ ] इति सूत्रे वार्तिककारैः-" यस्य गुणस्य भावाद्-द्रव्ये शब्दनिवेशस्तदभिधाने त्वतलौ " इति। यस्य गुणस्य विशेषण-तया भासमानस्य भावादाश्रयत्वात्, द्रव्ये विशेष्ये, शब्दनिवेशः शब्दप्रवृत्तिस्तस्मिन्वाच्ये त्वतलावित्यर्थः। तथा च रूपादिशब्देभ्यो जातौ, शुक्लाणुदीर्घमहदादिभ्यो गुणे, पाचकादिशब्देभ्यः क्रियायाम्, घटादिशब्देभ्यो जातौ प्रत्ययः, रूपादिशब्दानां जातिप्रकारकबोधज-**

---

माहुरिति योजना। एवं च सर्वेषां धर्माणां ब्रह्मसत्तारूपत्वाद् ब्रह्मसत्तायाश्च नि-त्यत्वान्न तत्र गुरुलघुविचारावसर इति भावः। शब्दप्रवृत्तिनिमित्तरूपधर्मस्य त्वतलादिभावप्रत्ययवाच्यत्वे वार्तिककारसंमतिमाह-**उक्तं चेत्यादिना**। तस्य भावस्त्वतलाविति सूत्रे वार्तिककारैर्यदुक्तं तदनुवदति-**यस्य गुणस्येत्यादिना त्वतलावितीत्यन्तेन**। **यस्य गुणस्येति**। अत्र गुणपदं न रूपरसादिगुण-परं, किंतूपकारकपरमित्याशयेनाऽऽह-**विशेषणतया भासमानमिति**। उक्तं च कैयटेन-' गुणशब्देन यावान् कश्चित्पराश्रयो भेदको जात्यादिः सर्व इह गृह्यते ' इति। एवं च प्रकृतस्थले गुणशब्द उपसर्जनभूतार्थवाचक इति यावत्। भावादित्यस्यार्थं व्याचष्टे-**आश्रयत्वादिति**। द्रव्य इत्यस्यार्थमाह-**विशेष्य इति**। शब्दनिवेश इति व्याचष्टे-**शब्दप्रवृत्तिरिति**। यं जात्यादि-मुपसर्जनभूतमर्थं पुरस्कृत्य शब्दोऽर्थमभिधातुं प्रवर्तत इत्यर्थः। **तस्मिन् वाच्य इति**। तादृशे विशेषणीभूते जात्यादावर्थे वाच्ये सतीत्यर्थः। **त्वतलाविति**। त्वतलादयो भावप्रत्यया भवन्तीति शेषः। ततश्च जात्यादिशब्दानां मध्ये की-दृशः शब्दात्कीदृशेऽर्थे त्वादिर्भावप्रत्ययः पर्यवसितस्तद्दर्शयति-**तथा चेति**। **रूपादीति**। आदिना रसगन्धादेर्गुणपरशुक्लादेश्च ग्रहणम्। **जाताविति**। रूपत्वशुक्लत्वादिजातावित्यर्थः। त्वादिर्भावप्रत्ययो भवतीति शेषः। **गुण इति**। गुणिपरशुक्लादिभ्यो गुण इत्यर्थः। गुणपरेभ्यस्तु तेभ्यो जाताविति ज्ञेयम्। अ-ण्वादिशब्दा नित्यं गुणिपरा एवेति तेभ्यः परिमाणरूपे गुण एव त्वादिर्भावप्रत्य-यः। परिमाणं चतुर्विधं-अणु महद्दीर्घं ह्रस्वं चेत्यस्याण्वादिवस्तुवाचि अणुत्वादि परिमाणं चतुर्विधमित्यर्थो बोध्यः। **पाचकादीति**। क्रियाशब्देभ्यः क्रियायां, घटादिजातिशब्देभ्यस्तु जातौ त्वादिर्भावप्रत्ययो भवतीति बोध्यम्। **रूपादिश-ब्दानामिति**। यतो रूपादिशब्दानां जातिप्रकारकबोधजनकत्वमतस्तेभ्यो जातौ

नकत्वात् । पाचकादिशब्दानां क्रियाप्रकारकबोधजनकत्वे तस्यां प्रत्ययः। संसर्गप्रकारकबोधजनकत्वमिति मते च संसर्ग इति व्यवस्था सूपपादेति भावः। तत्र जातिवाचकानां व्यक्तय एव शक्यता-

---

भावप्रत्यय इति भावः। **पाचकादीति** । पाकक्रियाश्रयश्चैत्र इत्येवं क्रियाप्रकारकबोधजनकत्वे क्रियाशब्देभ्यः क्रियायां भावप्रत्ययः। **संसर्गप्रकारकेति** । कृदन्ते हि क्रियया नियमेन भेदप्रतीतेः पाचक इत्यादौ पाकक्रियासंबन्धवान् देवदत्त इत्येवं संबन्धप्रकारकबोधानुभवात्क्रियाकारकसंबन्धज्ञानादेव पाचकादिशब्दप्रवृत्तिरिति क्रियाशब्देभ्यः संबन्ध एव भावप्रत्यय इति संसर्गप्रकारकबोधजनकतावादिनां मतमिति भावः। **सूपपादेति** । त्वादिर्भावप्रत्ययो जातावेवेत्यादिनियमाभावादित्याशयः। तत्र—जात्यादिवाचकभावप्रत्ययान्तानां मध्ये । घटत्वत्वादिशब्देषु व्यक्तय एव त्वादिभावप्रत्ययवाच्या इति पक्षान्तरमाह—**जातिवाचकानामिति** । घटत्वादिशब्दानामित्यर्थः। प्राधान्येन जातिवाचकानामिति यावत् । यद्यपि घटादिशब्दा अपि जातिवाचका एव तथापि न ते प्राधान्येन जातिमाहुः, किंतु प्रकारतयेति भावः। एवं च जातिवाचकानामित्यस्य प्राधान्येन जातिवाचकानां त्वादिभावप्रत्ययानामित्यर्थः पर्यवस्यति। **व्यक्तय एवेति** । त्वादिभावप्रत्ययाः शक्ताः । तादृशभावप्रत्ययानां शक्या जातिः। तादृशजातेः शक्यतावच्छेदकं घटत्वत्वादिकं न, किंतूपस्थितत्वात्त्वादिप्रत्ययप्रकृतिवाच्या घटादिव्यक्तय एव शक्यतावच्छेदिका भवन्ति । ब्रह्मसत्तारूपा या घटत्वजातिः सा घटत्वशब्दस्य शक्या, तस्यां शक्यताऽस्ति । तादृशशक्यतावच्छेदकं तु घटव्यक्तिरेव । ब्रह्मसत्ताया व्यक्तिरूपोपाधिभिरेव भेद इति सिद्धान्ताच्चेति भावः। ननु शक्यनिष्ठस्यैव शक्यतावच्छेदकत्वं सर्वत्र दृश्यते। यथा शक्या गोव्यक्तिः, तन्निष्ठगोत्वस्य शक्यतावच्छेदकत्वम्। स्वेतरावृत्तित्वे सति सकलस्ववृत्तित्वात्। स्वपदेन गोव्यक्तिग्रहणेन लक्षणसमन्वयः। व्यक्तिनिष्ठा हि जातिः, न तु जातिनिष्ठा व्यक्तय इति कथं जातेरवच्छेदिका व्यक्तय इति चेन्न । शक्यनिष्ठस्यैव शक्यतावच्छेदकत्वे प्रमाणाभावेन शक्याधिकरणस्यापि शक्यतावच्छेदकत्वे बाधकाभावात्। तथा च स्वेतरावृत्तित्वे सति सकलस्ववृत्तित्वरूपाधेयतासंबन्धेन व्यक्तीनां जात्यवच्छेदकत्वं सुवचमिति भावः। अत्र स्वपदेन व्यक्तिर्ग्राह्या। यत्पूर्वं प्राधान्येन जातिवाचिनां घटत्वादिशब्दानां घटत्वत्वादिकं शक्यतावच्छेद-

**वच्छेदिकाः, तथा च घटत्वमित्यत्र घटवृत्तिरसाधारणो धर्म इति बोध इत्यादि द्रष्टव्यम् । पक्षान्तरमाह–यद्वेति । " यद्वा सर्वे भावाः स्वेनार्थेन भवन्ति स तेषां भावः " इति वार्तिकोक्तेः, यद्वाशब्दस्तत्सूचन-**

---

कत्वमुक्तं तदपेक्षयेदं पक्षान्तरमुक्तमिति ध्येयम् । एवं जातिगुणादिचतुर्विधेषु शब्देषु तत्र तत्र त्वाद्यर्थमुक्त्वा शाब्दबोधमाह–**तथा चेति** । घटत्वमित्यत्र प्रकृत्यर्थस्य घटत्वधर्मस्य स्वेतरासमवेतत्वविशिष्टनिखिलस्वसमवेतत्वसंबन्धेन प्रकारत्वादसाधारणधर्मलाभ इत्याशयेनाऽऽह–**घटवृत्तिरसाधारणो धर्म इति बोध इति** । असाधारणधर्मत्वेन बोधो, न तु जात्यादिनेति भावः । प्रकारतया जातिवाचकघटशब्दाद् घटत्वावच्छिन्नो घट इति बोधात्तत्र घटत्वस्य प्रकारतया भानात्तनैव त्वादिर्भावप्रत्ययः, किंतु घटत्वस्य घटत्वात्मकविशेषरूपेण जात्यात्मकसामान्यरूपेण वा न बोधोऽपितु असाधारणधर्मरूपेण बोध इष्यत इत्याशयेनाऽऽह-**घटवृत्तिरसाधारणो धर्म इति बोध इति** । बोध इत्यस्य घटत्वशब्दादिति शेषो बोध्यः । घटत्वशब्दाद् द्वितीयत्वादिभावप्रत्ययचिकीर्षायां प्राधान्येन त्वादिभावप्रत्ययवाच्यघटत्वजातेरवच्छेदकं–घटव्यक्तिरिति तत्रैव द्वितीयभावप्रत्ययः । तथा च घटत्वत्वमित्यस्य घटव्यक्तिरित्यर्थात्प्राधान्येन घटव्यक्तिर्बुध्यत इति ज्ञेयम् । यदुक्तं 'सिद्धान्ते तु स्थितं पक्षद्वयं त्वादिषु तच्छृणु' इति तत्र द्वितीयं पक्षं वक्तीत्याशयेनाऽऽह–**पक्षान्तरमिति** । प्रकृतिजन्यबोधे जातिगुणादिवच्छब्दस्यापि प्रकारतया भासमानत्वात्तच्छब्द एव त्वादिभावप्रत्ययवाच्य इति पक्षान्तरमित्यर्थः । यद्वेति–कारिकास्थयद्वाशब्दो यद्वाशब्दघटितवार्तिकसूचनायेत्याह–**तत्सूचनप्रयोजनकोऽपीति** तस्य–यद्वाशब्दघटितवार्तिकस्य, सूचनं प्रयोजनं यस्य स तथार्थक इत्यर्थः । अपिशब्दो घटादिवृत्तिरसाधारणो धर्मस्त्वादिवाच्य इति पूर्वोक्तपक्षसंग्राहकः । यद्वाशब्दघटितं वार्तिकमनुवदति–**यद्वा सर्वे भावा इति** । वार्तिकोक्तेरित्युक्त्याऽयं पक्षो वार्तिककारसंमत इति नात्राप्रामाण्यशङ्काऽपि कार्येति सूचितम् । बृहद्भूषणोक्तं वार्तिकव्याख्यानमाह– **वन्तीति** । **वाचकत्वेनेति** । वाचकतासंबन्धेनेत्यर्थः । प्रवर्तन्त इत्यस्यार्थेऽविवति शेषः । धातूनामनेकार्थत्वाद्भूधातुरत्र प्रवृत्त्यर्थकः । प्रवृत्तिश्चात्र प्रयोगरूपा । तथाचार्थेषु वाचकत्वेन प्रयुज्यन्ते ते भावा इत्यर्थाद्भावशब्दोऽत्र शब्दार्थक इत्याह–**भावा शब्दा इति** । **स्वेनार्थेनेति** । स्वस्यार्थे, इत्यर्थः । भवन्तीत्य-

**प्रयोजनकोऽपि । भवन्ति वाचकत्वेन प्रवर्तन्त इति भावाः शब्दाः स्वेन स्वरूपेणार्थेन भवन्ति प्रवर्तन्तेऽतः स तेषां भावः प्रवृत्तिनिमित्तमित्यर्थः । अयं भावः—अर्थवच्छब्दोऽपि द्रव्ये प्रकारः, हरिहरनले-**

---

स्यार्थमाह—**प्रवर्तन्त इति** । एवं च सर्वे शब्दाः, स्वस्य वाच्यो योऽर्थस्तेन भवन्ति तत्र वाचकत्वेन प्रवर्तन्त इति वाच्योऽर्थः । अर्थप्रत्यायनायैव हि शब्दप्रयोगाच्छब्दप्रवृत्तावर्थस्य करणत्वविवक्षया स्वेनार्थेनेति तृतीयेति भावः । शब्दप्रवृत्तौ निमित्तभूतो योऽर्थः स च द्विविधः वाच्यः प्रवृत्तिनिमित्तं च । वाच्यं च द्रव्यं शब्दो वा । प्रवृत्तिनिमित्तं च घटपटादिजातिशब्देषु घटत्वादिजातिः, पाचकादिशब्देषु क्रिया, राजपुरुषादिशब्देषु संबन्धः, डित्थादिषु संज्ञेत्यादिसर्वमनुभवानुरोधादवसेयम् । **अत इति** । यतः शब्दप्रवृत्तौ द्रव्य—शब्द—जात्यादिरूपोऽर्थो निमित्तमस्तीत्यतो हेतोरित्यर्थः । **स इति** । द्रव्य—शब्द—जात्यादिरूपोऽर्थ इत्यर्थः । **तेषामिति** । सर्वशब्दानामित्यर्थः । **भाव इति** । प्रवृत्तिनिमित्तमित्यर्थ इति समुदितोऽर्थः । एवं च जात्यादिवच्छब्दस्यापि शब्दप्रवृत्तौ निमित्तत्वाच्छब्दोऽपि शब्दप्रवृत्तिनिमित्तं भवति । सारे तु स्वेनार्थेनेत्यत्र स्वशब्द आत्मवाची न त्वात्मीयवाचीत्याशयेन स्वेन रूपेणेत्युक्तम् । शब्दस्य स्वं रूपं शब्द एव, न त्वर्थः, तस्याऽऽत्मीयत्वात् । तथा च शब्दाः स्वरूपे—शब्दस्वरूपेऽर्थे वाचकत्वेन प्रवर्तन्ते इति व्याख्यातम् । एतदनुरोधेन 'स तेषां भावः' इत्यत्र सः—शब्दस्वरूपात्मकोऽर्थः, तेषां—शब्दानाम्, भावः—प्रवृत्तिनिमित्तमित्यर्थं इत्युक्तम् । एतेन सर्वेषां शब्दानां शब्द एव प्रवृत्तिनिमित्तमिति स्पष्टमेवोक्तमिति भावः । ननु शब्दस्य प्रवृत्तिनिमित्तत्वं कथम् ? शक्ये प्रकारस्यैव—शक्यार्थनिरूपितविशेषणस्यैव प्रवृत्तिनिमित्तत्वात् । यथा घटपदशक्योऽर्थः कम्बुग्रीवादिमान पदार्थः, तन्निष्ठविशेष्यतानिरूपितप्रकारता घटत्वे वर्तत इति कृत्वा घटत्वस्यैव घटपदप्रवृत्तिनिमित्तत्वादित्याशङ्कां दूरीकर्तुमाह— **अयं भाव इत्यादि** । घटः, पटः शुक्लः, पाचकः, इत्यादौ जातिगुणक्रियाणां घटादिद्रव्यनिरूपितप्रकारतायाः सर्वानुभवसिद्धत्वात्तत्तुल्यन्यायेन शब्दस्यापि द्रव्यनिरूपितप्रकारतां साधयितुमाह—**अर्थवदिति** । जात्याद्यर्थवदित्यर्थः । यथा जात्यादिरर्थो द्रव्यनिरूपितविशेषणमिति प्रसिद्धमुदाहरणेषु तथा शब्दोऽपि द्रव्यनिरूपितविशेषणमित्यस्य प्रसिद्धमुदाहरणमाह—**हरिहरनलेति** । **शब्देभ्य इति** । हर्यादिविशेषा-

क्ष्वाकुयुधिष्ठिरवसिष्ठादिशब्देभ्यस्तत्तद्वाच्यः कश्चिदासीदिति शब्दप्रकारकबोधस्य सर्वसिद्धत्वात्। अन्यथा वनौषधिवर्गादेर्नागरिकान्प्रत्यबोधकत्वापत्तेश्च । एवमेवाप्रसिद्धार्थकपदेष्वनुभवः सर्वसिद्धः, न तु घटादिपदेष्विव तत्तज्जात्यादिरूपेण । तथा चोभयमवच्छेदकम् । ( एवमेव प्रसिद्धपदार्थेषु ) यस्य यथा शक्तिग्रहस्तस्य जात्यादिरूपे-

न्तशब्देभ्य इत्यर्थः । तत्तद्वाच्यः कश्चिदासीदिति । हर्यादीनामिन्द्रियागोचरतयेन्द्रियार्थसंनिकर्षाभावेन हरित्वादिविशेषरूपेणानुपस्थितया हरित्वादिविशेषधर्मावच्छिन्ने शक्तिग्रहाभावेन हरित्वादिधर्मप्रकारकशाब्दबोधासंभवात्सामान्यरूपेणैव बोधोऽभ्युपेयः । इदं हरिहरनलादिपदं क्वचिच्छक्तं साधुपदत्वादिति सामान्यतोऽनुमित्यात्मकशक्तिग्रहसत्त्वात् । तत्र सामान्यत उपस्थितेऽर्थे विशेषणाकाङ्क्षायामन्यस्य हरित्वादेरसंभवादुपस्थितशब्दस्यैव विशेषणत्वमङ्गीकृत्य हर्यादिशब्दवाच्यः कश्चिदर्थ आसीदिति शब्दप्रकारकः सामान्यार्थविशेष्यकः शाब्दबोधोऽभ्युपगमनीय इति भावः । अन्यथेति । अर्थे शब्दस्य विशेषणत्वानङ्गीकार इत्यर्थः । ग्रामीणानामिन्द्रियगोचरतया संनिकर्षसत्त्वाद्वनौषधिषु शक्यतावच्छेदकजातिप्रकारकशक्तिग्रहसंभवान्नागरिकानित्युक्तम् । नागरिकाणां प्रायोऽसंनिकर्षेण जातिप्रकारकशक्तिग्रहासंभवाद्विशेषरूपेण वनौषधीनां ज्ञानासंभव इति भावः। नागरिकेत्युक्तिरपि विशेषरूपेणानभिज्ञपरा । तेन कस्यचिन्नागरिकस्य विशेषरूपेण बोधेऽपि न क्षतिः । अबोधकत्वापत्तेरिति । विशेषरूपेण शक्तिग्रहाभावात्काकजङ्घा-अश्वगन्धा-अश्वकर्णीत्यादीनामोषधिविशेषे रूढानां शब्दानां बोधजनकत्वं न स्यादित्यर्थः । अर्थे शब्दस्य प्रकारत्वाभ्युपगमे तु अश्वकर्णीत्यादिशब्दवाच्यः कश्चिदोषधिविशेष इत्येवं सामान्यतोऽर्थबोधजनकत्वं भवत्येवेति भावः । एवमेवेति । एतत्पदवाच्य इत्याकारक एव, पदप्रकारक एवेति यावत् । न तु-तत्तज्जात्यादिरूपेणेति । घटपटत्वादिविशेषरूपेणेत्यर्थः । शब्दप्रकारकबोधाभ्युपगमे यत्फलितं तदाह-तथा चोभयमिति । जात्यादि, शब्दश्चेत्युभयं शक्यमवच्छेदकमित्यर्थः । तत्र शब्दस्य शक्तिसंबन्धेन शक्यतावच्छेदकत्वं, जात्यादेस्तु यथायथं समवायादिसंबन्धेनेति बोध्यम् । यस्य-पुरुषस्य । तथा शक्तिग्रह इति । घटपटत्वादिजात्यादिविशेषरूपेण शक्तिग्रहो जातोऽस्तीत्यर्थः । तस्य-पुरुषस्य । जात्यादीति । जात्यादिविशेषरूपेणैवार्थोपस्थितिर्जायत

**णैवोपस्थितिः । पदप्रकारकः शक्तिग्रहस्तु विशिष्य नापेक्षितः किं तु इदं पदं क्वाचिच्छक्तं साधुपदत्वादित्यादिरूप एवापेक्ष्यत इति विशिष्यागृहीतशक्तिकेभ्यस्तथैव बोधस्तथा च शब्दोऽपि त्वप्रत्ययार्थं**

---

इति बोधोऽपि विशेषरूपेणैव भवतीत्यर्थः । **पदप्रकारक इति । विशिष्य नापेक्षित इति ।** घटपटत्वादिविशेषरूपेण नापेक्षित इत्यर्थः । यद्यपि स्वेनार्थेनेत्यत्र स्वशब्दो नाऽऽत्मीयवाची, किंत्वात्मवाचीत्यङ्गीकृत्य सर्वे भावाः सर्वे शब्दाः स्वेन रूपेण = शब्दस्वरूपेणार्थेन प्रवर्तन्त इति सारीयव्याख्यानानुसारेण शब्दस्यैव सर्वशब्दप्रवृत्तिनिमित्तत्वं लभ्यते तथापि घटत्वादिविशेषरूपेण गृहीतशक्तिकपुंसो घटादिपदात् घटत्वादिप्रकारकबोधस्यानुभवसिद्धस्य सर्वजनीनत्वात्तदपलापस्य कर्तुमशक्यत्वात्प्रसिद्धार्थकशब्दस्थले प्रायः शब्दप्रकारकबोधस्याननुभवाच्च सारीयव्याख्यानानुसरणपक्षेऽपि जात्यादीनां शब्दप्रवृत्तिनिमित्तकत्वमङ्गीकरणीयम् । अप्रसिद्धार्थकशब्दस्थल एव प्रायः शब्दप्रकारकबोधदर्शनादिति भावः । ननु शब्दप्रकारकः शक्तिग्रहो यदि विशेषरूपेण नापेक्षितस्तर्हि केन रूपेणापेक्षितस्तदाह—**किंत्विति । इत्यादिरूप एवेति ।** एतत्पदवाच्यः कश्चिदर्थ इत्येवंरूपः, एतत्पदवाच्यत्वरूपसामान्यरूपेणापेक्षित इत्यर्थः । **विशिष्यागृहीतेति ।** नलत्वादिविशेषरूपेणागृहीता शक्तिर्येषां ते तथा, तेभ्यो नलादिशब्देभ्य इत्यर्थः । **तथैवेति ।** पदप्रकारक एवेत्यर्थः । नलादिपदवाच्यः कश्चिदर्थ इति सामान्यतो नलादिपदवाच्यत्वेन नलादिपदानां शक्तिग्रहाच्छक्तिग्रहवैलक्षण्याद्बोधवैलक्षण्यमिति भावः । **तथा चेति ।** शब्दस्य प्रकृतिजन्यबोधे प्रकारत्वे चेत्यर्थः । **शब्दोऽपीति ।** अपिशब्दो जात्यादिसमुच्चायकः । **त्वप्रत्ययार्थ इति ।** शब्दो जात्यादि च त्वतलादिभावप्रत्ययवाच्योऽर्थ इत्यर्थः । अन्ये तु येषां मते शब्दः प्रवृत्तिनिमित्तं, तेषां मते शब्दस्त्वादिभावप्रत्ययार्थः । येषां मते जात्यादिरूपोऽर्थः प्रवृत्तिनिमित्तं, तेषां मते जात्यादिस्त्वाद्यर्थ इत्याहुः । परे तु 'यद्वा सर्वे भावाः स्वेनार्थेन भवन्तीत्यादिवार्तिकवचनस्यायमर्थः—अत्र स्वशब्द आत्मीयपरः, न त्वात्मपरः । शब्दस्य द्विविधोऽर्थो वाच्यः—घटादिः प्रवृत्तिनिमित्तरूपश्च । तदन्यतराभिधाने त्वादिर्भावप्रत्ययः । तत्रान्त्यो घटत्वमित्यादौ । तत्र प्रकृतिरर्थपरैव । अर्थस्य घटादेः प्रत्ययार्थे जात्यादिरूपेऽन्वयसंभवात् । कुत्वं

इति प्रपञ्चितं भूषणे ॥ ३ ॥ ( ५१ ) ॥

इति रङ्गोजिभट्टात्मजकौण्डभट्टविरचिते वैयाकरणभूषणसारे भावप्रत्ययार्थनिर्णयः ।

---

( अथ देवताप्रत्ययार्थनिर्णयः ) ।

---

सास्य देवतेत्यत्र देवताविशिष्टं देयं प्रत्ययार्थः । ऐन्द्रं वैश्वदेवी-

---

डित्थत्वमित्यादावाद्यः । तत्र प्रत्ययार्थानुपपत्त्या शब्दपरैव प्रकृतिः, शब्दपरात् क्वादिपदाद् व्यक्तिरूपेऽर्थे त्वादिर्भावप्रत्ययः । एवं च डित्थत्वडित्थशब्दयोः, कुत्वकुशब्दयोः पर्यायता । प्रकृत्यर्थप्रत्ययार्थयोः संबन्धस्त्वाद्यन्तसमुदायशक्य इत्यूचिरे । प्रपञ्चितमिति । बृहद्भूषणे विस्तरेण निरूपितम् ॥ ५१ ॥

इति वैयाकरणभूषणसारव्याख्यायां शांकर्यां त्वादिभावप्रत्ययार्थनिर्णयः ।

रङ्गभट्टतनूजेन शंकरेण विनिर्मिते ।
सारीयेऽस्मिन्विवरणे पूर्णस्त्वाद्यर्थनिर्णयः ॥ ९ ॥

---

## अथ देवतादितद्धितप्रत्ययार्थनिर्णयः ।(१०)

त्वतलादितद्धितभावप्रत्ययार्थनिर्णयप्रसङ्गेन स्मृतानामन्येषामपि देवताद्यर्थकतद्धितप्रत्ययानामर्थान्निरूपयति—सास्य देवतेति । ननु प्रथमोपात्तमपत्यप्रत्यार्थकतद्धितमुपेक्ष्य देवतार्थकतद्धितार्थनिर्णयादरे किं बीजमिति चेदुच्यते । तस्यापत्यमित्यत्र प्रत्ययार्थस्यापत्यरूपस्यैकत्वात्, अपत्यरूपप्रत्ययार्थे च प्रकृत्यर्थस्य जन्यजनकभावसंबन्धादिरूपभेदसंबन्धेन प्रकारतायाः सुगमत्वाच्च तत्र संदेहाभावेन न निर्णयापेक्षा । देवतार्थकतद्धिते तु नानापक्षसंभवात्प्रत्ययार्थप्राधान्यस्य प्रकृत्यर्थप्रकारतायाश्च दुरूहत्वेन तदर्थनिर्णय आदृत इति बोध्यम् । देवताविशिष्टं देयमिति । स्वस्वामिभावसंबन्धेन स्वोद्देश्यकत्यागकर्मत्वसंबन्धेन वा देवताविशिष्टं देयं देवताप्रत्ययार्थ इत्यर्थः । तत्र देयं च संबन्धित्वेनैव प्रत्ययार्थः । अस्येत्यत्र विशेष्यविशेषणभावव्यत्यासेन षष्ठ्यर्थसंबन्धोपसर्जनकेदमर्थस्य प्रधानतयाऽस्येति सर्वनाम्नः संबन्ध्यर्थकत्वादिति भावः । देयमिति मन्त्रस्याप्युपलक्षणम् । आमिक्षादिपदैश्च संबन्धित्वेन बुद्धस्यैव देयस्य विशेषसमर्पणं क्रियते । ततश्चेन्द्रा-

(देवताप्रत्ययार्थनिर्णयः)

त्यादाविन्द्रादेर्देवतात्वोपस्थापकान्तराभावात्तेन रूपेणोपस्थितये शक्तिकल्पनावश्यकत्वात्।

अत एव—

---

भिन्नदेवतानिष्ठस्वामितानिरूपितस्वतासंबन्धवद्देयमिति वा, इन्द्राभिन्नदेवतोद्देश्यकत्यागनिरूपितकर्मत्वसंबन्धवद्देयमिति वाऽर्थः। इन्द्राभिन्नदेवतासंबन्धीतिरीत्या सामान्यतो बोधः। देवतात्वं च दिवेरैश्वर्यकर्मणो देवतेति देवात्तल् इति सूत्रभाष्यान्मन्त्रकरणको यो हविस्त्यागस्तज्जन्यस्वर्गातिरिक्तफलाश्रयत्वेन तदुद्देश्यत्वं मन्त्रस्तुत्यत्वं च अनुक्रमणिकायामप्युक्तं—यस्य वाक्यं स ऋषिर्याऽनेनोच्यते सा देवतेति। अत एव ऐन्द्रो मन्त्र ऐन्द्रं हविरिति द्विविधप्रयोगसिद्धिः। देवतानिष्ठफलं चास्येदं फलं भवत्वितीच्छात्मकप्रीतिरेवेति बोध्यम्। ननु ऐन्द्रं वैश्वदेवीत्यादाविन्द्रादीनां देवतात्वाव्यभिचारादिन्द्रादिपदादेव देवतार्थलाभेन देवतार्थमन्तर्भाव्य तद्धितशक्तिवर्णनं किमर्थमित्यत आह——देवतात्वोपस्थापकान्तरेति। इन्द्रादौ देवतात्वाव्यभिचारेऽपि केवलेन्द्रादिपदादिन्द्रत्वादिरूपेणैवेन्द्रादीनामुपस्थितिर्जायते, न देवतात्वरूपेण। देवतार्थे तद्धितशक्तिकल्पने तु देवतार्थ इन्द्रादीनामभेदेनान्वयादिन्द्राद्यभिन्ना देवतेति बोधादिन्द्रादीनामिन्द्रत्वसमानाधिकरणदेवतात्वरूपेणोपस्थितिर्भवति। यथा पृथिव्यादौ द्रव्यत्वाव्यभिचारेऽपि केवलपृथिव्यादिपदात्पृथिवीत्वादिरूपेणैव पृथिव्यादय उपतिष्ठन्ते, न द्रव्यत्वरूपेण। पृथिव्यादि द्रव्यमित्युक्तौ तु पृथिव्यादीनां द्रव्येणाभेदान्वयात्पृथिव्याद्यभिन्नं द्रव्यमिति बोधात्पृथिव्यादीनां द्रव्यत्वरूपेणोपस्थितिर्भवति तद्वदित्यर्थः तथा चेन्द्रत्वेन रूपेण देवतोपस्थितावपि देवतात्वेन रूपेणेन्द्राद्युपस्थापकान्तराभावाद्देवतात्वेनेन्द्रादीनामुपस्थित्यर्थं देवतामन्तर्भाव्य तद्धितशक्तिकल्पनमावश्यकमिति भावः। देवतान्तर्भावेण तद्धितशक्तिकल्पने मीमांसकसंमतिमाह—अत एवेति। देवतातद्धितस्य देवतासंबन्धि देयमित्यर्थकत्वादेवेत्यर्थः। आमिक्षां देवतायुक्तामिति तन्त्रवार्तिककारोक्तिरियम्। वैश्वदेव्यामिक्षेत्यत्र विश्वदेवा देवता अस्येति सर्वनामार्थे 'साऽस्य देवता' इति पाणिनिसूत्रेणाण्प्रत्यये टिड्ढाणञिति सूत्रेण ङीपि वैश्वदेवीशब्दः सिद्धः। तत्र सर्वनाम्नामुत्सर्गत उपस्थितविशेषवाचित्वात्तदर्थे विहितस्य तद्धितस्यापि विशेषवाचित्वम्। तथा च एवः—वैश्वदेवीत्यत्रत्यस्तद्धितप्रत्ययो देवतायुक्तामिक्षारूपं विशेषमप्यर्थं प्रतिपादयत्येवेत्यर्थः। वदत्येवेति क्रियासंगतैवकारेणा-

( देवताप्रत्ययार्थनिर्णयः )

" आमिक्षां देवतायुक्तां वदत्यैवैष तद्धितः ।
आमिक्षापदसांनिध्यात्तस्यैव विषयार्पणम् " इति,
" केवलाद्देवतावाची तद्धितोऽग्नेः समुच्चरन् ।
नान्ययुक्ताग्निदेवत्यं प्रतिपादयितुं क्षमः "

इति च मीमांसकैरप्युक्तमित्याशयेनाऽऽह—

प्रत्ययार्थस्यैकदेशे प्रकृत्यर्थो विशेषणम् ।
अभेदश्चात्र संसर्ग आग्नेयादाविर्यं स्थितिः ॥

---

त्यन्तायोगव्यच्छेदात्कदाचिदपि विशेषार्थं न प्रतिपादयतीति न, इत्यर्थः।तत्प्रकृतार्थ-दार्ढ्यरूपो विशेषो लभ्यते । यद्यपि सा देवताऽस्येति विशिष्टः प्रत्ययार्थस्तथापि तत्र देवताया अस्येति सर्वनामार्थे विशेषणत्वेन प्रतीतेस्तद्धितार्थे प्राधान्यं सर्वनामार्थस्यैव । यद्वा इति प्रथमासमर्थादस्येत्यर्थेऽणादयः स्युः, यत्प्रथमासमर्थं सा चेद्देवता स्यादिति संबन्धे प्रकृतिनिर्देशार्थो देवताशब्दः । प्रत्ययार्थस्तत्रस्येत्येवेति प्राचीनमतानुसारेणेदम् । **आमिक्षापदेति** । तस्यैव—तद्धितप्रत्ययस्यैव । **विषयार्पणमिति** । आमिक्षारूपो विषयविशेषः समर्प्यत इत्यर्थः । वैश्वदेवीशब्दोपात्तः कोऽसौ विशेष इति जिज्ञासायामामिक्षापदसांनिध्यादामिक्षारूपो विशेष इत्यवगम्यत इति भावः । परं स विशेषोऽमुक इति न नियतः । नियतविशेषार्थप्रतिपत्तिस्तु तस्मात्तद्धितप्रत्ययादेव जायते । तत्राऽऽमिक्षापदसंनिधानं सहकारितयोपयुज्यते । तथा च, तद्धितात्सामान्यार्थस्यैव प्रतीतिः, विशेषप्रतीतिस्तु केवलमामिक्षापदादेवेत्येवं न भ्रमितव्यम् । आमिक्षापदं हि स्वयं विशेषमर्थं ब्रुवदपि तद्धितार्थेऽनियतविशेषरूपे नियतत्वं संपादयतीति तात्पर्यम् । **केवलादिति** । सोमादिपदसंनिधानरहितादग्निशब्दात्परतः समुच्चरन्—प्रादुर्भवन् देवतावाची तद्धितप्रत्ययः, अन्ययुक्ताग्नीति-सोमादियुक्ताग्निदेवतोद्देश्यकं देयं प्रतिपादयितुं न क्षमते । सोमादिसापेक्षस्य देवतात्वे, सापेक्षमसमर्थवदिति वचनादसामर्थ्येन ' आग्नेयोऽष्टाकपालः ' इत्यादौ तद्धितवृत्तिरेव न स्यादिति भावः । नान्ययुक्ताग्निदेवत्यमित्यादिना केवलाग्निदेवत्यं प्रतिपादयितुं क्षम इति सूचितम् । ततश्च देवताविशिष्टदेयं देवतातद्धितार्थ इति तन्त्रवार्तिककारादिमीमांसकानामपि संमतमित्याशयं मनसिकृत्याऽऽह—**प्रत्ययार्थस्यैकदेशेति** । **अभेदश्चात्र संसर्ग इति** । **प्रकृत्यर्थेति** । देवताविशिष्टदेयरूपस्य तद्धितप्रत्ययार्थस्यैकदेशे देवतारूपे, प्रकृत्यर्थ

( देवताप्रत्ययार्थनिर्णयः )

**देवतायां प्रदेये च खण्डशः शक्तिरस्तु वा ॥१॥ (५२)**

**एकदेशे देवतारूपे । तच्च विशेषणमभेदेनेत्याह--अभेदश्चेति । ननु देवतायाः प्रत्ययार्थैकदेशत्वान्न प्रकृत्यर्थस्य तत्राभेदेनाप्यन्वय इत्याशयेनाऽऽह--देवतायामिति । तथा च पदार्थैकदेशत्वैव नास्तीति भावः ॥ १ ॥ ( ५२ )**

**नन्वग्न्यादिदेवस्य प्रकृत्यैव लाभान्न तत्र शक्तिः कल्प्या । न च देवतात्वेन रूपेणोपस्थितये सा कल्प्यते प्रकृतेर्लक्षणयैव तथोपस्थितिसंभवात् । उपसर्गाणां द्योतकत्वनये प्रजयतीत्यत्र प्रकृष्टजयप्रत्ययवदि-**

---

इन्द्रादिप्रकृत्यर्थः सहस्राक्षादिरूपो विशेषणमित्यर्थः । देवतापदार्थनिष्ठविशेष्यतानिरूपितविशेषणतावानिन्द्रादिप्रकृत्यर्थ इति विशेषणमिन्द्रादिः, विशेष्यश्च देवतापदार्थ इति भावः। तच्च विशेषणं केन संबन्धनेत्याह—**अभेदश्चात्रेति** । प्रकृत्यर्थो देवतायामभेदसंबन्धेन विशेषणमित्यर्थः । **आग्नेयादाविति** । तथा चाग्न्यभिन्ना देवताऽस्येत्याग्नेयोऽष्टाकपाल इत्यर्थः । नन्वग्न्यादेः प्रकृत्यर्थस्य प्रत्ययार्थदेवतायां नाभेदेन नापि भेदेनान्वयः संभवति, पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेनेति न्यायादित्याशङ्क्ते—**ननु देवताया इति** । **अभेदेनाप्यन्वय इति** । भेदेनान्वयो न संभवति, तस्य बाधितत्वादिति सूचनायापिशब्द उपात्तः। तथा चाग्न्यादेर्देवतायां कथमप्यन्वय एव नास्तीत्यत आह—**देवतायां प्रदेये चेति** । **खण्डश इति** । पृथक्शक्तिरित्यर्थः । शक्तिद्वयमिति यावत् । ततश्च देवतायाः पदार्थैकदेशत्वैव नास्तीत्यर्थः । एवं चाग्न्यादेः प्रत्ययार्थदेवतायामभेदेनान्वये न किंचिदपि बाधकमिति भावः ॥ ५२ ॥

ननु अग्न्यादेर्देवस्याग्न्यादिशब्दादेव लाभान्न देवतायां तद्धितस्य शक्तिः कल्पनीया गौरवादित्याशङ्क्ते **नन्वग्न्यादिदेवस्येति** । **प्रकृत्यैव लाभादिति**। प्रकृतिभूताग्न्यादिपदेनैवाग्न्यादिदेवस्योपस्थितेः । अग्न्यादेर्देवताव्यभिचारादिति भावः। ननु प्रकृतिभूताग्न्यादिपदादग्नित्वादिनाऽग्न्यादेरुपस्थितावपि देवतात्वेनाग्न्यादेरुपस्थितये देवतायां तद्धितस्य शक्तिः कल्प्यत इत्यत आह—**प्रकृतेर्लक्षणयैवेति** । प्रकृतिभूताग्न्यादिशब्दोऽग्न्यादिदेवतायां लाक्षणिक इत्यर्थः । अजहल्लक्षणयाऽग्नित्वादिसमानाधिकरणदेवतात्वविशिष्टाग्न्यादिदेवताबोधक इति यावत् । **द्योतकत्वनय इति** । वाचकत्ववादिमते प्रकर्षस्योपसर्गार्थत्वेन तद्विशिष्टे धातो-

त्यभिप्रेत्याऽऽह-

प्रदेय एव वा शक्तिः प्रकृतेर्वाऽस्तु लक्षणा ।
देवतायां निरूढेति सर्वे पक्षा अमी स्थिताः ॥२॥ (५३)

न चैन्द्रं दधीत्यादौ द्रव्यस्य पदान्तराल्लाभात्कुतः पुनः प्रत्ययस्य तत्र शक्तिः कल्प्यत इति वाच्यम् । पदान्तराश्रवणेऽपि तत्प्रतीतेरैन्द्रं

---

लक्षणाया अनङ्गीकारेण दृष्टान्तासंभव इत्युक्तं द्योतकत्वेति । प्रकृष्टजयप्रत्ययवदिति । अयं भावः-प्रजयतीत्यत्र प्रकृष्टजयोऽनुभूयते । स च न धात्वर्थः । तथा सति जयतीत्यत्रापि प्रकृष्टजयप्रतीत्यापत्तेः । नाप्युपसर्गार्थः । तथा सति प्रहरतीत्यत्रापि प्रकृष्टजयप्रत्ययापत्तेः । नापि च विशिष्टार्थः । तथा सति विशिष्टस्योभयरूपत्वेनोभयत्र शक्तिकल्पनायां गौरवापत्तेः । तस्माज्जये कृष्टशक्तेर्धातोरेव लक्षणया प्रकृष्टजयबोधकत्वम् । उपसर्गस्तु तात्पर्यग्राहकः । एतावतैव चोपसर्गाणां द्योतकत्वमिति व्यवहारः । एवं च यथा लक्षणया जिधातोः प्रकृष्टजयप्रतीतिर्भवति तद्वत्प्रकृतस्थलेऽपि लक्षणया प्रकृतिभूताग्न्यादिशब्देभ्य एवाग्न्यादिदेवतोपस्थितिः संभवेदित्याशयवानाह-प्रदेय एव वा शक्तिरिति । प्रदेये द्रव्य एव तद्धितस्य शक्तिः, प्रकृतेस्तु देवतायां निरूढा लक्षणाऽस्तु, अथवा देवताशब्दः प्रकृतिनिर्देशार्थः, सेति प्रथमासमर्थादस्येत्यर्थेऽणादयः स्युः, यत्प्रथमासमर्थं सा चेद्देवता स्यादित्यर्थात् । अमी सर्वे पक्षा मीमांसकादिग्रन्थेषु स्थिता इति योजना । प्रदेय एवेत्येवकारेण देवतायां तद्धितशक्तिर्व्यावर्त्यते । स्ववृत्तिदेवतात्वनिरूपकत्वसंबन्धेन प्रकृत्यर्थस्य प्रत्ययार्थे देयेऽन्वयो भवितव्यतीत्यर्थः । निरूढेत्यनेनानादितात्पर्यवती लक्षणेत्युक्तं भवति । ननु समभिव्याहृतदध्यादिपदादेव देयद्रव्यस्य लाभे सिद्धे पुनस्तत्र तद्धितशक्तिकल्पनमनन्यलभ्यः शब्दार्थ इति न्यायविरुद्धमित्याक्षिपति-न चैन्द्रं दधीत्यादाविति । लाभादिति । समभिव्याहृतदध्यादिपदान्तराल्लाभादित्यर्थः । तत्र शक्तिरिति । तत्र-देये द्रव्ये शक्तिः कुतः कल्प्यते, देयद्रव्ये शक्तिर्न कल्पनीया, द्रव्यस्यान्यलभ्यत्वात् । किंतु देवतायामेव तद्धितशक्तिः कल्पनीया, न तु देवताविशिष्टे देयद्रव्य इत्याक्षेपकाभिप्रायः । द्रव्ये शक्तिकल्पनाभावेऽपि दध्यादिपदलभ्ये द्रव्ये तद्धितप्रत्ययलभ्यदेवतायाः स्वनिष्ठदेवतात्वनिरूपकत्वादिसंबन्धेनान्वयादिन्द्रादिदेवतानिष्ठदेवतात्वनिरूपकं दध्यादीत्यर्थाद्देवताविशिष्टं देयमित्यर्थलाभः संभवति । अत्र पक्षे प्रकृत्यर्थस्य

( देवताप्रत्ययार्थनिर्णयः )

**दधीति सामानाधिकरण्याच्च । अन्यथाऽऽख्यातस्यापि कर्तृकर्मवाचित्वं न स्यात् । मीमांसकानां पुनः प्रत्ययस्य देवतात्वमेवार्थोऽस्तु ।**

---

प्रत्ययार्थैकदेशान्वयरूपो दोषोऽपि नास्तीत्यपरमिदमनुकूलमिति चेत्तन्न युक्तमित्याह—**पदान्तराश्रवणेऽपीति** । यत्र दध्यादिपदान्तरं न श्रूयते तत्रापि देवतातद्धितान्तात्तत्प्रतीतेः—द्रव्यप्रतीतेरनुभवसिद्धत्वादित्यर्थः । तथा च दध्यादिपदान्तराश्रवणस्थले जायमानद्रव्यप्रतीतेरन्यथानुपपत्त्या तद्धितस्य देयद्रव्ये शक्तिकल्पनमावश्यकमिति भावः । देयद्रव्ये तद्धितशक्तिकल्पने साधकान्तरमाह—**सामानाधिकरण्याच्चेति** । तद्धितस्य देवतामात्रार्थकत्वे, 'इन्द्राभिन्नदेवता' इत्यर्थकस्यैन्द्रपदस्य दध्यादिपदेन सामानाधिकरण्यं न स्यात् । यत ऐन्द्रदध्नोः सामानाधिकरण्येन- अभेदेनान्वयो भवति ततस्तदनुरोधेन तद्धितस्य द्रव्ये शक्तिरावश्यकीति बोध्यम् । किंच देवतादध्नोर्नामार्थयोर्निरूपकत्वादिभेदसंबन्धेनान्वयस्तु सुतरां दुर्वचः । नामार्थयोरभेदान्वय इति व्युत्पत्तिविरोधात् । ततश्च देयद्रव्ये तद्धितशक्तिकल्पनात्मकः पाशस्तवापि गले पततीति भावः । ननु देवताविशिष्टद्रव्ये प्रकृतेर्निरूढा लक्षणैवास्तु, किं प्रदेये तद्धितशक्तिकल्पनेनेति चेन्न । तथा सति प्रदेयस्य प्रकृत्यर्थत्वं तद्धितस्य तु तद्द्योतकत्वमर्थात्पर्यवसन्नमिति कृत्वा प्रदेयस्य प्रकृत्यर्थनिरूपितविशेष्यत्वानापत्तेः । द्योत्यार्थस्य प्रकारतया भाननियमात् । अत एव 'स्त्रियाम्' (पा० सू० ४ । १ । ३) इति सूत्रे भाष्येऽजा खट्वेत्यादौ टाबादिबोध्यस्त्रीत्वस्य प्रत्ययार्थत्वेन प्राधान्यादसत्त्वरूपत्वेन च तस्य तत्र वचनानुपपत्तिमाशङ्क्य स्त्रीत्वस्य द्योत्यतया स्त्रीत्वविशिष्टा अजेत्येवं स्त्रीत्वस्य प्रकारतया भानान्न तद्गतसंख्याबोधकं वचनं, किंतु विशेष्यभूताजाव्यक्तिगतसंख्याबोधकं वचनमिति नानुपपत्तिरिति समाहितम् । यदि च द्योत्यत्वेऽपि विशेष्यतया भानं स्यात्तर्हि समाधानासंगतिः स्पष्टैवेत्यनुसंधायाऽऽह— **अन्यथेति** । सामानाधिकरण्यानुरोधात्प्रदेये तद्धितस्य शक्त्यनङ्गीकारे, इत्यर्थः । **न स्यादिति** । अस्य वैयाकरणमत इत्यादिः । वैयाकरणा हि पचति देवदत्तः, पच्यते तण्डुल इत्यत्राऽऽख्यातस्य कर्तृकर्मवाचकत्वे स्वीकृते सति आख्यातवाच्ययोः कर्तृकर्मणोर्देवदत्ततण्डुलाभ्यां सह सामानाधिकरण्येनान्वयो भवतीति तदनुरोधेनाऽऽख्यातप्रत्ययस्य कर्तृकर्मवाचकत्वमङ्गीकुर्वते । सामानाधिकरण्यं च प्रकारद्वयविशिष्टैकवस्तुबोधकत्वम् । आख्यातस्य कर्तृकर्मवाचित्वे सति तादृशाख्यातप्रत्ययात्कर्तृत्वेन

**द्रव्यं पदान्तराल्लभ्यत एवेति आख्यातस्य कर्तृवद्वाच्यत्वं माऽस्त्विति**

कर्मत्वेन वा यस्या व्यक्तेर्बोधो भवति तस्या एव व्यक्तेर्देवदत्तपदाद् देवदत्तत्वेन, तण्डुलपदाच्च तण्डुलत्वेन बोधो भवति, उभयत्र विशेष्यभूता व्यक्तिरेकैवेति । एवं चाऽऽख्यातस्य कर्तृकर्मार्थे शक्तिस्वीकारे सामानाधिकरण्योपपत्तिर्बीजमिति भावः । यदि तु सामानाधिकरण्यानुरोधेन तद्धितस्य प्रदेये शक्तिर्न स्वीक्रियते तर्हि एतत्तुल्यन्यायादाख्यातस्यापि कर्तृकर्मणोः शक्तिर्न सिध्येत् । ततश्च पचति देवदत्त इत्यादावनुभूयमानं सामानाधिकरण्यं दुर्वचं स्यात्, तथा ऐन्द्रं दधीत्यादावपि सर्वानुभवसिद्धं सामानाधिकरण्यं न घटतेत्याशयः । भावनाया अन्तराऽऽश्रयमवस्थानासंभवादन्यथानुपपत्त्याऽऽक्षेपादिना लब्धमाश्रयमादाय, तथा 'साऽस्य देवता' इत्यत्रास्येति षष्ठ्यन्तपदघटकप्रकृत्यर्थं वर्जयित्वा षष्ठ्यर्थसंबन्धे देवतायां चेति मिलित्वा देवतासंबन्धे तद्धितशक्तिकल्पनेन, संबन्धेन चान्यथानुपपत्त्या स्वाश्रयसंबन्धिरूपधर्मिण आक्षेपादाक्षिप्तं धर्मिणमादाय तस्य देवदत्त—दध्यादिभिरभेदेनान्वयान्मीमांसकोक्तसामानाधिकरण्योपपत्तिस्तु सुतरां दुर्वचा । आक्षेपादिना लब्धार्थस्य विशेष्यतया भानाभावाच्छाब्दान्वये मानाभावाच्च । अन्यथा घटमानयेति वाक्यात्समवायसंबन्धेनोपस्थिताकाशस्यापि शाब्दान्वयेनाऽऽकाशमानयेति बोधापत्तेरिति विभावनीयम् । एवं वैयाकरणान् प्रति आख्यातस्य कर्तृकर्मवाचकत्वसिद्ध्यभावापत्तिकामापत्तिमुक्त्वा मीमांसकान् प्रत्याह—**मीमांसकानां पुनरिति** । प्रत्ययस्य -साऽस्य देवतेत्यर्थे विहितस्य तद्धितप्रत्ययस्य । **देवतात्वमेवेति** । देवतात्वविशिष्टदेवतायां तद्धितशक्तिकल्पनापेक्षया लाघवाद् देवतात्व एव तद्धितशक्तिकल्पनमुचितम् । एवकारेण देवताया व्यावृत्तिः । द्रव्यं तु पदान्तराल्लभ्यत एवेत्युक्तत्वात् । देवतात्वस्य स्वनिरूपकत्वसंबन्धेन द्रव्येऽन्वयो भविष्यतीत्यभिप्रायः । तथा चेन्द्रवृत्तिदेवतात्वनिरूपकं हविरिति बोधः । **कर्तृवद्वाच्यत्वं माऽस्त्विति** । यथा मीमांसकमते आख्यातस्य कर्ता न वाच्योऽपि तु भावनैव वाच्या लाघवात् । आश्रयस्य देवदत्तादिपदान्तरालाभसंभवात् । पदान्तरलभ्याश्रये भावनात्मककर्तृत्वस्यान्वयेनैव कर्तृत्वविशिष्टत्वमाश्रये बुध्येतेति भावः । तद्वत्प्रकृतस्थले प्रदेये समभिव्याहृतपदान्तरलभ्ये तद्धितार्थदेवतात्वस्यान्वयेनैव देवतात्वविशिष्टत्वस्य प्रदेये लाभसंभवात्तद्धितप्रत्ययस्य प्रदेये शक्तिर्न सिध्येदिति भावः । ननु तद्धितस्य प्रदेये शक्त्यभाव इष्ट एवेति चेन्न । 'जामिक्षां देवतायुक्तां

( देवताप्रत्ययार्थनिर्णय. )

कुतो न शक्यते वक्तुमिति दिक्। देवतायां देवतात्वरूपेण । निरूढेति । अनुपपत्तिज्ञानापूर्वकत्वमनादिप्रयोगावच्छिन्नत्वं वा तत्त्वमिति भाव ॥ २ ॥ ( ५३ )

अनयैव रीत्याऽन्यत्राप्यवधेयमित्याह—

क्रीडायां णस्तदस्यास्तीत्यादावेषैव दिक् स्मृता ।
वस्तुतो वृत्तिरेवेति नात्रातीव प्रयत्यते ॥ ३ ॥ ( ५४ )

( इति भट्टोजिदीक्षितविरचितकारिकासु देवताप्रत्ययार्थनिर्णयः ) ।

“ तदस्यां प्रहरणमिति क्रीडायां णः ” [ पा० सू० ४–२-५७] इत्यत्र प्रहरणविशिष्टा क्रीडा प्रहरणक्रीडे क्रीडामात्रं वेत्यर्थः । आ-

---

वदत्येवष तद्धितः ’ इति वचनेन मीमांसकैः प्रदेये तद्धितशक्त्यङ्गीकारस्य स्पष्टमेवोक्तत्वात् । ततश्चात्र चेत्सामानाधिकरण्यानुरोधेन प्रदेये तद्धितस्य शक्तिः कल्प्यते तर्हि आख्यातेऽपि कर्तृवाचकत्वं स्याद्देवदत्तः पचतीत्यत्र कर्तृदेवदत्तयोरनुभूयमानसामानाधिकरण्यानुरोधादिति द्रष्टव्यम् । नन्वग्न्यादिपदेन शक्त्यैवाग्न्यादिदेवताया लाभे सिद्धे किं लक्षणयेत्यत आह—देवतात्वेनेति । अग्न्यादीनां देवतात्वरूपेणोपस्थित्यर्थं लक्षणाश्रयणमित्यर्थः । गङ्गायास्तीरसंबन्धाव्यभिचारेऽपि लक्षणां विना तीरपदार्थानुपस्थितिवदग्न्यादीनां देवतात्वाव्यभिचारेऽपि विना लक्षणामग्न्यादिपदाद्देवतापदार्थोपस्थितिर्न स्यादित्यावश्यकी लक्षणेति भावः । सा च लक्षणा न प्रयोजनवतीत्याह—निरूढेति निरूढायाः स्वरूपं निर्वक्ति—अनुपपत्तीति । अन्वयाद्यनुपपत्तिज्ञानशून्यत्वं, अनादितात्पर्यवत्त्वं वा, तत्त्वं—निरूढात्वमित्यर्थः ॥ ५३ ॥

देवतातद्धितार्थनिरूपणप्रसङ्गेन स्मृतान्यतद्धितार्थविषयेऽप्युक्तरीतिरेवानुसर्तव्येत्याह—क्रीडायां णस्तदस्यास्तीति । इत्यत्रेति । तदस्यां प्रहरणमिति निरुक्तसूत्रविहितणप्रत्ययान्तदाण्डादिशब्द इत्यर्थः । प्रहरणविशिष्टा क्रीडेति, क्रीडायां प्रहरणवैशिष्ट्यं चाऽऽश्रयाश्रयिभावसंबन्धेन, क्रीडा—आश्रयः, प्रहरणं चाऽऽश्रयीति भावः । अस्य ‘ अर्थः ’ इत्यत्रान्वयः । अर्थ इति । प्रहरणविशिष्टा क्रीडा दाण्डेत्यत्रत्यणप्रत्ययार्थ इत्यर्थः । तत्र प्रकृत्यर्थस्य दण्डस्य प्रहरणविशिष्टक्रीडात्मकणप्रत्ययार्थैकदेशे प्रहरणेऽभेदेनान्वयः । दण्डाभिन्नप्रहरणा-

दिना " सोऽस्य निवासः " [ पा० सू० ४-३-८९ ] " साऽस्मि-

श्रयः क्रीडेत्यर्थः। पदार्थः पदार्थेनान्वेति नतु पदार्थैकदेशेनेति न्यायविरोधादेक-देशान्वयमसहमान आह—प्रहरणक्रीडे इति । प्रहरणे क्रीडायां च खण्डशः शक्तिर्णप्रत्ययस्येत्यर्थः। ततश्च नैकदेशान्वयदोषप्रसक्तिरिति भावः। अत्र पक्षेऽ-भेदेन दण्डान्वितप्रहरणस्य क्रीडायामाश्रयत्वसंबन्धेनान्वयः। उभयत्र पृथक्शक्ति-कल्पने गौरवं मत्वा लाघवानुरोधेनाऽऽह—क्रीडामात्रमिति। मात्रपदेन प्रहरण-स्य णप्रत्ययार्थत्वं नास्तीत्युक्तम्। दण्डादिपदेन शक्त्यैव दण्डादिप्रहरणस्य ला-भसंभवादिति भावः। प्रहरणं प्रहारसाधनम्। प्रह्रियतेऽनेनेति करणघञा प्रहर-णशब्दस्य निष्पन्नत्वात्। ननु दण्डत्वेन प्रहरणलाभेऽपि प्रहरणत्वेन तल्लाभार्थं प्रहरणे णप्रत्ययशक्तिरस्त्विति चेत्—दण्डादिपदस्य दण्डादिप्रहरणे निरूढा लक्षणा स्वीक्रियताम्। अस्मिन् पक्षे प्रकृत्यर्थस्य दण्डादिप्रहरणस्य स्वनिष्ठप्रहरणत्वनिरू-पकत्वादिसंबन्धेन क्रीडायामन्वयाद्दण्डादिप्रहरणाविशिष्टा क्रीडेत्यर्थात्क्रीडायां प्रह-रणवैशिष्टचलाभः। अत्रेदं बोध्यम्—यदा प्रहरणे क्रीडायां च णप्रत्ययस्य पृथक्-शक्तिकल्पनं तदा यद्यपि हरिपदादुपस्थितयोरश्वसूर्ययोः परस्परमाधाराधेयभावेना न्वयवारणाय तत्पदजन्य—तद्धर्मावच्छिन्नविषयकान्वयबोधं प्रति अपरपदजन्यप-दार्थोपस्थितिः कारणमित्येवं कार्यकारणभाव आवश्यकः। तेनैकपदोपस्थाप्ययो-रर्थयोः परस्परमन्वयबोधोऽव्युत्पन्न इति णप्रत्ययोपस्थाप्ययोः प्रहरणक्रीडयोरर्थ-योः परस्परमन्वयो ( प्रहरणाविशिष्टक्रीडेत्येवं ) दुर्वचस्तथापि व्युत्पत्तिवैचित्र्यादे-कपदोपस्थाप्ययोरप्यर्थयोः परस्परमन्वयो भवति। यथा प्राचीनमते फलव्यापार-योर्धातोः पृथक्शक्तावपि फलस्यानुकूलतासंबन्धेन व्यापारेऽन्वयो व्यापारस्य च जन्यत्वसंबन्धेन फलेऽन्वयो भवति व्युत्पत्तिवैचित्र्यात्तद्वत्प्रकृतेऽपि ज्ञेयमिति। का-रिकायां—एषैव दिगित्यस्य देवतातद्धितार्थे या रीतिः प्रोक्ता सैव रीतिर्णप्रत्ययार्थ-विषयेऽनुसर्तव्येत्यर्थः। आदिपदसंग्राह्यं प्रदर्शयति—सोऽस्य निवास इत्यादि। अत्र निवसत्यस्मिन्निति वसधातोर्घञा निष्पन्नो निवासशब्दोऽधिकरणसाधनो बोध्यः। अस्येत्यत्र यद्यपि प्रकृतिभूतेदम्शब्दोपात्तार्थोपसर्जनकः षष्ठ्यर्थः संब-न्धो विशेष्यतया प्रतीयत इति तस्यैव प्रत्ययार्थत्वं प्राप्नोति तथापि ' आमिक्षा देवतायुक्ता वदत्येवैष तद्धितः ' इति न्यायेन षष्ठ्यर्थसंबन्धोपसर्जनकः प्रकृत्यर्थः प्रधानतयाऽऽश्रीयते। तथा च संबन्धवान् प्रकृत्यर्थ इति रीत्याऽस्येति षष्ठ्यन्तस्य

( देवताप्रत्ययार्थनिर्णयः )

न्पौर्णमासीति संज्ञायाम् " [ पा० सू० ४-२-२१ ] " तदस्यास्त्य-

संबन्धीत्यर्थः पर्यवस्यति। अत एव साऽस्येत्यत्रेदम्शब्दोपात्तं देयद्रव्यं देवताप्रत्ययार्थ इत्युक्तं पुरस्तात्। एवं च निवासः संबन्धी च, सोऽस्येत्यादिसूत्रविहितनिवासप्रत्ययार्थः। अत्रापि ( १ ) निवासविशिष्टः संबन्धी प्रत्ययार्थः। संबन्धिनि निवासाधिकरणवैशिष्टयं चाऽऽधाराधेयभावादिसंबन्धेन बोध्यम्। ( २ ) निवासः संबन्धी च पृथक्प्रत्ययार्थः, ( ३ )—केवलः संबन्धी वा प्रत्ययार्थ इति पूर्ववत्पक्षत्रयं बोध्यम्। स्त्रुघ्नो निवासाधिकरणभूतोऽस्येति स्रौघ्नो देवदत्तः। अत्र प्रथमे पक्षे स्रुघ्नस्य प्रकृत्यर्थस्य निवासाधिकरणविशिष्टसंबधिरूपप्रत्ययार्थैकदेशे निवासाधिकरणेऽभेदेनान्वयः, निवासाधिकरणस्य चाऽऽधेयतासंबन्धेन संबन्धिन्यन्वयः। एवं च स्रुघ्नाभिन्ननिवासाधिकरणनिरूपिताधेयतावत्संबन्धप्रभिन्नो देवदत्त इति बोधः। द्वितीयपक्षेऽभेदेन स्रुघ्नान्वितस्य निवासाधिकरणस्य संबन्धिनि पूर्ववदेवान्वयः। तृतीयपक्षे स्रुघ्नपदस्य स्रुघ्ननिवासाधिकरणे लक्षणा बोध्या। अन्यत्सर्वं पूर्ववदेवावगन्तव्यम्। स्रुघ्नाभिन्ननिवासाधिकरणसंबन्धीति पक्षत्रयसाधारणः शाब्दबोधः। निवासश्च प्रत्यासत्त्योपस्थितप्रत्ययार्थसंबन्धिकर्तृक एव ग्राह्यः। **साऽस्मिन्पौर्णमासीतीति**। सेति प्रथमान्तात्पौर्णमासी अस्मिन्नित्यर्थेऽणादिः प्रत्ययो भवति, प्रकृतिप्रत्ययसमुदायश्चेत्संज्ञा—रूढो भवतीत्यर्थः। पुष्येण युक्ता पौषी, पौषी पौर्णमासी अस्मिन्निति पौषो मास इत्युदाहरणम्। पौर्णमासी, रूढः संबन्धी च प्रत्ययार्थः। पौर्णमासीविशिष्टः संबन्धी प्रत्ययार्थः, पौर्णमासी, संबन्धी च पृथगर्थः, केवलं संबन्धी च प्रत्ययार्थ इति पक्षत्रयमूह्यम्। अत्र पौष्यादिशब्दो ' नक्षत्रेण युक्तः कालः ' इति सूत्रविहिताणन्तप्रकृतिकङीबन्तः। तत्र पुष्यादिशब्दः स्वार्थतत्तन्नक्षत्रयुक्तचन्द्रपरः। अन्यथा सर्वेषां नक्षत्राणां सर्वदा सत्त्वेन सर्वदैवाद्य चैत्रमहरित्यादिप्रयोगापत्तेः। अत्र युक्त एव प्रत्ययार्थः, नतु कालोऽपि लाघवेन वस्तुसत एव तस्य प्रत्ययोत्पत्तिनिमित्तत्वौचित्यात्। अहरादिपदेन तल्लाभसंभवाच्च। तथा च पुष्ययुक्तचन्द्रयुक्तेति पौषीशब्दजन्यबोधः। पौष्यादिशब्दोत्तरतद्धितप्रत्ययस्य तादृशपौर्णमास्यधिकरणादिरर्थः। तत्तत्पौर्णमास्यां पुष्यादियोगानियमेऽपि पौषी पौर्णमासीत्यादौ तत्तन्नक्षत्रयोगयोग्यतैव विवक्षिता। तत्तन्नक्षत्रयोगाभावेऽपि चैत्री पौर्णमासी, चैत्रो वैशाख इत्यादिप्रयोगाच्च। योग्यता च स्वस्वसमीपनक्षत्रान्यतरयुक्तत्वरूपा। चैत्रादिश्रावणा-

स्मिन्निति मतुप् " [ पा० सू० ५-२-९४ ] इत्यादिकं संगृह्यते ।

न्तानां मासानां चित्रादिद्वंद्वमध्ये कस्यचिद्योगस्तथाविधव्यवहारे प्रयोजकः, भाद्रपदाश्वयुजोस्तु शतभिषग्रेवत्यादित्रिकान्यतमयोगः, कार्तिकादिमाघान्तानां कृत्तिकादिद्वंद्वान्यतरयोगः, फाल्गुनस्य तु पूर्वाफल्गुन्यादित्रयान्यतमयोग इति विवेकः । तदुक्तम्—अन्त्योपान्त्यौ त्रिभौ ज्ञेयौ फाल्गुनश्च त्रिभो मतः । शेषा मासा द्विभा ज्ञेयाः कृत्तिकादिव्यवस्थया ॥ इति । अन्त्योपान्त्यौ—भाद्रपदाश्वयुजौ । भं नक्षत्रम् । चैत्रादिपदस्य शुक्लप्रतिपदादिदर्शान्तसमुदाये रूढिः । कृष्णप्रतिपदादिपौर्णमास्यन्तसमुदाये तु न रूढिः, तत्र प्रचुरप्रसिद्ध्यभावात् । पौर्णमासीघटितमासस्य चान्द्रत्वेन तस्य च ' चान्द्रः शुक्लादिदर्शान्तः ' इत्यादिस्मृतिभिः शिष्टाचारबाहुल्याच्च शुक्लादिदर्शान्तस्यैव ग्रहीतुमुचितत्वात् । कृष्णप्रतिपदादिपूर्णिमान्ते तु लाक्षणिको व्यवहार इति ज्ञेयम् । **तदस्यास्त्यस्मिन्निति** । तदस्यास्तीति तदस्मिन्नस्तीति वा विग्रहेऽस्तिसमानाधिकरणात्प्रथमान्तादस्येति षष्ठ्यर्थे संबन्धिनि, अस्मिन्नित्यधिकरणे चार्थे मतुब्भवतीति तदर्थः । यद्यप्यस्येत्युक्तेः षष्ठ्यर्थसंबन्ध एव मतुब्विधानमिति प्रतीयते तथाऽपि गोमांश्चैत्र इति सामानाधिकरण्यानुरोधात्संबन्धिन्येव मतुब्विधिर्युक्तः । तथा च गोमानित्यादौ गोनिरूपितस्वामित्वसंबन्धवानित्यन्वयबोधः । अत्र संबन्धी प्रत्ययार्थः, संबन्ध आश्रयश्चेत्युभयं वा प्रत्ययार्थः । अत्रास्तीति वर्तमानकालो विवक्षितः । अन्यथा गवामतीतत्वे भावित्वे वा मतुबन्तस्य साधुत्वापत्तेः । वर्तमानसत्तावत्स्वार्थपरो गवादिशब्दः । एवंच वर्तमानसत्तावद्गोसंबन्धीति बोधः । गोमानासीदित्यादौ तु गोमत्पदस्य तत्पदव्यवहारविषये लक्षणेति नानुपपत्तिरिति कैयटादौ स्थितम् । भूमनिन्दाप्रशंसासु...इति श्लोकवार्तिके संबन्धसमकक्षतया भूमाद्यर्थानामुपादानात्तेषामपि मतुब्वाच्यत्वं यद्यपि प्रतीयते तथाऽपि सूत्राद्वाच्यवृत्त्या भूमाद्यर्थानां मतुबर्थत्वानुपालम्भात्तेषामस्त्यर्थवत्प्रयोगोपाधित्वमेव युक्तम् । प्रयोगोपाधित्वं नाम—वाच्यत्वाभावेऽपि आर्थिकसत्तामात्रेण शब्दप्रयोगे—निमित्तभूतत्वम् । मतुब्द्योत्या इति यावत् । तथा च मतुप्प्रकृतिभूतगवादिशब्दानां भूमाद्यर्थविशिष्टे लक्षणेति भावः ।

**इत्यादिकमिति** । आदिपदात्तस्य पूरणे० ईषदसमाप्तौ० प्रकारवचने थाल्, तस्यापत्यमित्यादि ग्राह्यम् । पञ्चानां पूरणः पञ्चमः । अत्र तस्य पूरणे, इति विहितस्य डटः—नान्तादसंख्यादेरिति मडागमः । तस्येति संख्येयार्थकसंख्यावाचिनः

( देवताप्रत्ययार्थनिर्णयः)

षष्ठ्यन्तात्प्रकृत्यर्थसंख्यायाः पूरणे वाच्ये डट् स्यादित्यर्थः। पूर्यतेऽनेनेति पूरणोऽवयवः स प्रत्ययार्थः। प्रकृत्यर्थस्य स्वनिष्ठपञ्चत्वसंख्यापूरकत्वसंबन्धेन प्रत्ययार्थेऽन्वयः। प्रकृत्यर्थनिष्ठपञ्चत्वसंख्यापूरण इति बोधः। यथा हरिस्तथा हर इत्यत्र प्रकारवचने थालिति थाल्प्रत्ययः प्रकारवदर्थकः। सामानाधिकरण्यानुरोधात्। प्रकारश्च प्रकृते सामान्यस्य भेदको विशेषः। एवं च यद्विशेषधर्मवान् हरिस्तद्विशेषधर्मवान् हर इति बोधः। यत्तद्भ्यां धर्मयोरैक्यावगतौ हरिसादृश्यं हरे पर्यवस्यति। ननु सादृश्यमेव थाल्प्रत्ययार्थोऽस्तु। तथा च यत्सदृशो हरिस्तत्सदृशो हर इत्यनुभवसिद्धः सादृश्यप्रकारकः शाब्दबोध उपपद्यत इति चेन्न। सर्वथाऽन्यथेतरथेत्यादौ सादृश्याप्रतीतेः। गुडकल्पा द्राक्षा, बहुगुडो द्राक्षा, इत्यत्र ईषदसमाप्तौ कल्पब्देश्यदेशीयरः, विभाषा सुपो बहुच पुरस्तात्तु, इति सूत्राभ्यामीषदसमाप्तिविशिष्टेऽर्थे वर्तमानात्सुबन्तात्स्वार्थे कल्पब्बहुचौ प्रत्ययौ भवतः। अत्र गुडपदं गुडसदृशपरम्। प्रत्ययस्तु द्योतकः। प्रत्ययस्य द्योतकत्वादेव गुडकल्पा द्राक्षा, बहुगुडो द्राक्षेत्यत्र क्रमेण स्त्रीलिङ्गं पुंलिङ्गं च निर्वहति। स्वार्थिकानां प्रकृतिलिङ्गवचनातिक्रमानतिक्रमयोः स्वभावसिद्धत्वात्। सादृश्यस्य प्रत्ययार्थत्वे तु बहुगुडो द्राक्षेत्यत्र विशेष्यगतस्त्रीलिङ्गापत्तिः स्यात्। अत्रेषदसमाप्तत्वं—सादृश्यप्रयोजकं माधुर्यादि प्रतीयते, तेनेषत्सादृश्ये प्रत्ययो नोत्पद्यते। गुडसदृशी द्राक्षेति बोधः, उपमा गम्यते। पाचकक इत्यादौ कुत्सिते, इति सूत्रेण कुत्साविशिष्टार्थप्रतिपादकात्पाचकशब्दात्कन्। कुत्सितपाचकत्ववानिति बोधः। प्रवृत्तिनिमित्तकुत्साया असंभवे तु स्वार्थे पूर्णस्यैव कुत्सनादियोगात्सुबन्तादेव कनिति सुबन्तेन प्रतिपादितास्वार्थद्रव्यलिङ्गादिगता कुत्सा कन् प्रत्ययेन प्रत्याय्यते। शुक्लकं रूपमित्यत्र द्रव्यकुत्सा, पश्य गाण्डीवधन्वानं विद्धि कौरवकान् स्त्रियः, इत्यत्र लिङ्गकुत्सा, पुत्रकशतमित्यत्रैकत्वसंख्याकुत्सा, शतभरणे यद्दुःखं तदेकस्यैव भरणे, इति प्रतीतेरिति। उपगोरपत्यमौपगव इत्यादौ तस्यापत्यमित्येवंजातीयकैः सूत्रैर्विहितप्रत्ययानामपत्यादिरर्थः। षष्ठ्याद्यर्थः समुदायगम्यः। विशिष्टविषयैकशक्त्यैकोपस्थितिजनकत्वरूपैकार्थीभावगम्य इति यावत्। उपगुसंबन्ध्यपत्यमिति रीत्या बोधः। चूर्णैः संसृष्टाश्चूर्णिनोऽपूपा इत्यादौ 'संसृष्टे'—'चूर्णादिनिः' इति सूत्रविहिततद्धितेन्यर्थैकदेशे संसर्गे चूर्णादेः प्रकृत्यर्थस्य करणत्वेनान्वयः। चूर्णकरणकसंसर्गविशिष्टा अपूपा इति बोधः। तथा च प्रकृत्यर्थ-

वृत्तिमात्रेऽतिरिक्तशक्तेः "समर्थः पदविधिः" [पा० सू० २-१-१]

स्य क्वचित्तद्धितार्थैकदेशे, क्वचित्तद्धितार्थे एवान्वय इति गौरवात्तं परित्यज्य लाघवाज्जहत्स्वार्थवृत्त्याश्रयेणाऽऽह–वृत्तिमात्रेऽतिरिक्तशक्तेरिति । कृदन्ताः, तद्धिताः, समासाः, एकशेषाः, सनाद्यन्तधातुरूपाश्चेति पञ्चधा वृत्तयः । तत्र परार्थाभिधानं वृत्तिः, इति वृत्तिसामान्यलक्षणमिति 'समर्थः पदविधिः' इति सूत्रे भाष्ये स्पष्टम् । अस्यार्थः–अभिधानशब्दे करणे ल्युट् । सामान्ये नपुंसकम् । परेण प्रधानशब्देन शब्दान्तरार्थस्याभिधानं विशेषणत्वेन ग्रहणं तत्करणम् । यत्रत्यप्रधानपदेनेतरविशेषणकस्वार्थस्यैवोपस्थितिर्यया सा वृत्तिरिति । सा चेतरार्थसंवलितस्वार्थोपस्थितिरवयवशक्तिसहकृतसमुदायशक्तिसाध्या । अवयवशक्तिर्लोकसिद्धा शास्त्रकल्पिता च । अन्यथा तद्धितादिप्रत्यये । समुदायस्य वृत्त्याश्रयत्वेनैषा-मौपचारिको वृत्तिव्यवहारः प्राचीनानाम । समुदायशक्तिश्च समर्थः पदविधिरिति परिभाषाबललभ्या । तदर्थश्च–विधीयत इति विधिः कार्यम् । कर्मणि किप्रत्ययः । पदस्य विधिः पदविधिरिति शेषषष्ठ्या समासः । पदसंबन्धी यो विधिः स समर्थाश्रितो बोध्यः । सामर्थ्यं चात्रैकार्थीभावः । पृथगर्थानामेकार्थीभावः सामर्थ्यं, राज्ञः पुरुष इति वाक्ये पृथगर्थानि, राजपुरुष इति समासे एकार्थानीति भाष्यात् । एवं च प्रक्रियादशायां पृथगुपस्थितिविषयार्थकत्वेन लोके दृष्टानां पदानां समुदायशक्त्या विशिष्टैकार्थप्रतिपादकत्वमेकार्थीभाव इति फलितम् । संगतार्थः समर्थः, संसृष्टार्थः समर्थ इति व्युत्पत्तेः । संगतिः संसर्गश्चैकीभाव एव । यथा संगतं घृतं तैलेनेति, एकीभूतमिति गम्यते । यथा वा संसृष्टोऽग्निरिति, एकीभूत इति गम्यत इति भाष्याच्च । सोऽयमेकार्थीभावः सनामादिवृत्तावेवेति वृत्तिरिति जहत्स्वार्था वृत्तिरिति च व्यवह्रियते । समासे एकार्थानीति भाष्ये समासग्रहणं वृत्तिमात्रोपलक्षणमिति भावः । तत्र समासतद्धितयोः पदोद्देश्यकविधित्वस्य स्पष्टत्वेन बहूनां वृत्तिधर्माणां वचनैः साधने महागौरवात्तदपेक्षया लाघवादेकार्थीभावस्यावश्यस्वीकर्तव्यत्वेन च परिभाषाप्रवृत्तिः स्पष्टैव । कृतामपि केषांचित् 'कर्मण्यण्' इत्युपपदनिमित्तकानां पदविधित्वं स्पष्टमेव । तत्साहचर्याच्चान्यत्रापि पाचकादौ पदविधित्वम् । कृत्–कृदन्तः । तद्धितशब्दस्तद्घटितसमुदायपरोऽत एव बहुकचोर्न दोषः । एकशेषेऽपि द्वंद्व इत्यनुवृत्तेर्द्वंद्वविषये एकशेषविधानादेकार्थीभावोऽस्त्येव । सनादिषु क्यजादेः पदविधित्वं स्पष्टमेव । सनि स्वभावत एव वृत्त्यवृत्त्योः

इति सूत्राल्लाभादुक्तो विचारः शास्त्रान्तरीयैः सह तद्रीत्यैवोक्तः । आरोपितप्रकृतिप्रत्ययार्थमादाय वा । वस्तुतो विशिष्टशक्त्यैवार्थोपस्थितेरित्याह-वस्तुत इति ॥ ६ ॥ ( ५४ )

इति रङ्गोजिभट्टात्मजकौण्डभट्टविरचिते वैयाकरणभूषणसारे देवताप्रत्ययार्थनिर्णयः ॥

---

( अथाभेदैकत्वसंख्याया वृत्तौ भाननिर्णयः )

वृत्तिप्रसङ्गात्तत्राभेदैकत्वसंख्या प्रतीयत इति सिद्धान्तं दृष्टान्तेन

---

सिद्धत्वाद्वावचनं न कार्यमिति तत्तत्प्रत्याख्यानपरभाष्यप्रामाण्यात्सः । इत्येवंरीत्या समर्थः पदविधिरिति सूत्राद् वृत्तिमात्रेऽवयवशक्त्यतिरिक्ता शक्तिस्तत्तत्प्रकृत्यर्थविशिष्टे समुदायशक्तेर्लाभान्निरुक्तस्तद्धितार्थविचारः शास्त्रान्तरीयैः मीमांसकादिभिः सह शास्त्रान्तरीयरीत्यैवोक्त इत्यर्थः । वैयाकरणमते समासादिवृत्तौ पदानामानर्थक्यात्तदर्थविचारोऽनुचित इति भावः । अथवा प्रकृतिप्रत्ययेषु तत्तदर्थमारोप्य प्रत्ययार्थविचार उपपादनीय इत्याह-आरोपितेत्यादि । तत्त्वतस्तु विशिष्टशक्त्यैव-तत्तत्प्रकृत्यर्थतत्संबन्धविशिष्टे समुदायशक्त्यैव । अर्थोपस्थितिरिति । विशिष्टार्थोपस्थितिः । जायत इति शेषः । इत्यनुसंधायाऽऽह-वस्तुतो वृत्तिरेवेति नात्रातीव प्रयत्यत इति । वृत्तावेकार्थीभावसत्त्वात्प्रकृतिप्रत्ययार्थयोः परस्परमन्वय एव नास्तीति एकदेशान्वयो वा भेदेनाभेदेनान्वयो वेत्येतद्विषये प्रयत्नातिशयो न क्रियते इत्यर्थः । अधिकं समासशक्तिविचारे प्रागुक्तमनुसंधेयम् ॥ ५४ ॥

इति वैयाकरणभूषणसारव्याख्यायां शांकर्यां देवतादितद्धितार्थनिर्णयः ।

रङ्गभट्टतनूजस्य शंकरस्य विनिर्मितौ ।
देवतादिप्रत्ययार्थो निर्णीतः सारविवृतौ ॥ १० ॥

---

अथाभेदैकत्वसंख्यानिर्णयः ( १ ) ।

---

समासादिवृत्तावुपसर्जनपदोत्तरं विभक्त्यभावेनैकत्वादिसंख्याविशेषाणामेकत्वत्वादितत्तद्विशेषरूपेणाप्रतीतेः संख्यात्वेन सामान्यरूपेण सर्वसंख्यानां भानमभेदैकत्व-

प्रतिपादयति--

अभेदैकत्वसंख्याया वृत्तौ भानमिति स्थितिः ।
कपिञ्जलालम्भवाक्ये त्रित्वं न्यायाद्यथोच्यते ॥ १ ॥ ( ५५ )

( इति भट्टोजिदीक्षितविरचितकारिकास्वभेदैकत्वसंख्याया वृत्तौ भाननिर्णयः ) ।

संख्याविशेषाणामविभागेन सत्त्वमभेदैकत्वसंख्या ।

उक्तं च वाक्यपदीये-

" यथौषधिरसाः सर्वे मधुन्याहितशक्तयः ।
अविभागेन वर्तन्ते तां संख्यां तादृशीं विदुः " इति ॥

---

संख्येत्युच्यत इति । अत्रार्थे भर्तृहरिं प्रमाणत्वेनोदाहरति—उक्तं चेति संख्याविशेषाणां—एकत्वत्वादिविशिष्टानामेकत्वादिसंख्यानाम् । अविभागेन—अभेदेन, सत्त्वमवस्थानमित्यर्थः । अयं भावः—वाक्ये उपसर्जनपदानि विभक्त्यन्तान्येवेति विभक्त्यर्थसंख्याविशेषयुक्तं स्वार्थं प्रतिपादयन्ति । वृत्तौ तु विशेषणीभूतस्वार्थकं प्रधानार्थमभिदधतीति तत्रोपसर्जनपदे विभक्त्यभावेन संख्याविशेषाणामेकत्वत्वादितत्तद्रूपेणाप्रतीतेस्तेषामविभागेनावस्थानं गमयन्तीत्यनुसंधाय वृत्तौ विशेषणेऽभेदैकत्वसंख्यानिर्णयार्थमवतरणिकामारचयति—वृत्तिप्रसङ्गादिति । तथा च वृत्तिनिरूपणप्रसङ्गेन स्मृतस्य तद्धर्मस्याभेदैकत्वसंख्याया निरूपणं नासंगतमिति भावः । तत्रेति । वृत्तिघटकोपसर्जनपद इत्यर्थः । सिद्धान्तमिति । अभेदैकत्वसंख्याप्रतीतिरूपं सिद्धान्तमित्यर्थः । दृष्टान्तेनेति । कपिञ्जलवाक्यदृष्टान्तेनेत्यर्थः । उपपादयति—युक्त्या समर्थयति—अभेदैकत्वसंख्याया इति । मतभेदेन भिन्नमभेदैकत्वसंख्याशब्दार्थं निर्वक्ति—संख्याविशेषाणामित्यादि । यथौषधिरसा इति । मधुनि—माक्षिके । आहितशक्तय इति । आहिताः—स्थापिताः, शक्तयः—वातपित्तादितत्तद्दोषोपशमरूपकार्यभेदाभिन्ना यैस्त इत्यर्थः । त्यक्तभेदा इति यावत् । अविभागेन—अभिन्नरूपेण । अभेदेनेति यावत् । तां संख्यां—अभेदैकत्वसंख्याम् । तादृशीं—माक्षिकनिष्ठाविभक्तसर्वरसावस्थितिसदृशीम् । विदुरित्यन्वययोजना । यथा सर्वे औषधिरसा मधुन्येकस्मिन् सर्वशक्तीरवस्थाप्य सर्वानुवृत्तरसत्वरूपैकधर्माश्रितत्वेनाविभागमैक्यमापन्ना इव वर्तन्ते तद्वत्समासादिवृत्तावुपसर्जनपदे सर्वसंख्याः सर्वानुवृत्तसंख्यात्वरूपैकधर्माश्रितत्वेनाभेदमैक्यमिवाऽऽपन्नाः प्रतीयन्त इत्यर्थः । मधुनि सर्वरसानां रसत्वेन भानवदुपसर्जनपदे सर्वसं-

( अभेदैकत्वसंख्यानिर्णयः )

**परित्यक्तविशेषं वा संख्यासामान्यं तत्। उक्तं च–**

**" भेदानां वा परित्यागात्संख्यात्मा स तथाविधः।**
**व्यापाराज्जातिभागस्य भेदापोहेन वर्तते ॥**

ख्यानां संख्यात्वेन भानमिति यावत्। इत्येकमभेदकत्वसंख्याशब्दार्थमुक्त्वाऽपरमाह-**परित्यक्तविशेषं वेति**। वाशब्दः पक्षान्तरद्योतकः। सर्वरसावस्थितिजन्यस्य तत्तद्रोगादिनिवृत्तिरूपस्य फलस्यानुभवानुरोधेन मधुनि सर्वरससमवास्थितिकल्पनेऽप्यत्र सर्वसंख्याविशेषसत्त्वकल्पने मानाभाव इत्याशयेन वक्ति–**परित्यक्तेति**। द्विविधा हि संख्या, विशेषरूपा सामान्यरूपा च। तत्रैकत्वद्वित्वादिका विशेषरूपा। तत्तन्मात्रवृत्त्येकत्वत्वद्वित्वत्वादिविशेषधर्मयुक्तत्वात्। संख्यात्वरूपधर्मयुक्ता संख्या सामान्यरूपा। एकत्वादिषु सर्वत्रानुगतसंख्यात्वरूपसामान्यधर्मावच्छिन्नत्वात्। यद्यपि 'निर्विशेषं न सामान्यमिति न्यायेन विशेषरहितं सामान्यं( प्लक्षत्वादिविशेषरहितं केवलवृक्षत्वं) नास्तीत्यर्थकेन सामान्यरूपा संख्या पृथग्दर्शयितुमशक्या, तथापि केनाचित्कारणेनैकत्वादिविशेषाणां परित्यागेन यदा केवलसंख्यात्वसामान्यधर्मावच्छिन्ना संख्योर्वरिता भवति तदाऽसौ सामान्यरूपा पृथग्ज्ञातुं शक्या। सामान्यरूपैव च संख्या संख्यासामान्यमिति व्यवह्रियते। यथा संबन्धसामान्ये षष्ठीत्यादौ कर्तृत्वकर्मत्वादिसंबन्धविशेषाणामविवक्षया परित्यागेनोर्वरितो यः संबन्धत्वसामान्यधर्मावच्छिन्नः संबन्धः सोऽसौ संबन्धसामान्यमित्युच्यते तद्वदिति भावः। एवं च परित्यक्ताः—केनापि कारणेनाज्ञाताः, विशेषा एकत्वत्वादिविशेषधर्मा यस्यैतादृशं यत्संख्यासामान्यं = सामान्यरूपा संख्या सैव च तत् -अभेदैकत्वसंख्याशब्दवाच्यामित्यर्थः। अस्मिन्नप्यर्थे वाक्यपदीयं प्रमाणयति–**भेदानां वेति**। **भेदानामिति**। एकत्वत्वद्वित्वत्वादिविशेषधर्माणामित्यर्थः। **परित्यागादिति**। अग्रहणादित्यर्थः। अभानादिति यावत्। सः—एकत्वादिः। संख्यात्मा—संख्यात्वरूपसामान्यधर्मावच्छिन्नत्वात्संख्यासामान्यस्वरूपः। तथाविधः-अभेदैकत्वसंख्यापदव्यवहार्यः। भवतीति शेषः। अभेदैकत्वसंख्यापदव्यवहार्यत्वे संख्यात्मेति हेतुरुक्तः। यतः परित्यक्तैकत्वत्वादिविशेषधर्मकः स एकत्वादिः संख्यात्वसामान्यधर्मावच्छिन्नत्वात्संख्यासामान्यमित्येव प्रतीयतेऽतस्तादृशपदेन व्यवह्रियते इति भावः। ननु निर्विशेषसामान्याभावात्कथमिदमित्यत आह-**व्या-**

अगृहीतविशेषेण यथा रूपेण रूपवान् ।
प्रख्यायते न शुक्लादिर्भेदापोहस्तु गम्यते " इति ॥

अस्या वृत्तौ समासादौ भानं न्यायसिद्धमिति शेषः । इति मत-

---

पाराज्जातिभागस्येति । वृत्तावुपसर्जनपदे संख्यात्वरूपजातेरेव व्यापारात्—संख्यात्वेनैव रूपेण संख्याभानरूपव्यापारादित्यर्थः । भेदापोहेनेति । भेदस्यैकत्वत्वादिविशेषधर्मस्यापोहो व्यावृत्तिस्तेन वर्तते नाम विशेषरहितसामान्यरूपेण वर्तत इत्यर्थः । अयं भावः—वृत्तावुपसर्जनपदार्थानामपि सत्त्वभूतत्वात्संख्यायोगावश्यकत्वेन विशेषसंख्याभावेन च सामान्यसंख्यारूपस्य समस्तसंख्याविशेषानुगतभेदापोहरूपस्याभेदैकत्वस्य भानाद् राजपुरुष इत्यादौ मतद्वयेऽपि संख्यावान् राजपदार्थ इत्येतावत्प्रतीयते, न त्वव्ययार्थवदसंख्यो नापि घटादिवद्विशेषसंख्यावच्छिन्न इति । संख्यात्वेनैव एकत्वादिसंख्याप्रतीतेर्विशेषाणां तत्तद्रूपेणाप्रतीतेश्च भेदापोहोऽत्र बोध्य इति भावः । पूर्वं सर्वौषधिरसविशेषाणामेकत्र मधुनि संसर्गमिवोपसर्जनपदे सर्वसंख्याविशेषाणां संसर्गेणावस्थानरूपमभेदैकत्वमुक्तम् । अस्मिन् पक्षे संख्यात्वेन संख्याविशेषाणां भानं, मधुनि रसत्वेन रसविशेषाणां भानामिव । इदानीं तु सर्वसंख्याविशेषानुगतं भेदापोहरूपमभेदैकत्वमुक्तमिति पूर्वस्माद्विशेषः । अस्मिन् पक्षे संख्यात्वेन रूपेण संख्यासामान्यस्यैव भानं नतु विशेषस्येति बोध्यम् । संख्यासामान्यस्यैव भानं न विशेषस्येत्येतदेव समर्थयति—**अगृहीतविशेषेणेत्यादिना** । अगृहीतो विशेषः शुक्लत्वादिरूपो यस्य यन्निष्ठस्तादृशेन रूपेण । शुक्लत्वादिविशेषाज्ञानसमानकालिकरूपत्वावाच्छिन्नप्रतीतिगोचरेण सामान्यरूपेणेत्यर्थः । पटादी रूपवानित्युच्यते । शुक्लादिरिति । शुक्लत्वादिर्भेदरूपो योऽपोहोऽतदव्यावृत्तधर्मस्वरूपः स तु न गम्यते न प्रतीयत इत्यर्थः । यथा दूराद्रूपत्वेन रूपं प्रतीयते, न शुक्लकृष्णादिर्विशेषस्तथा राजपुरुष इत्यादिवृत्तावुपसर्जनपदे संख्यात्वेन सामान्यसंख्यैव प्रतीयते, न त्वेकत्वद्वित्वादिर्विशेष इति भावः । एवमभेदैकत्वसंख्याशब्दार्थं निर्वर्ण्य तद्घटितकारिकार्थं प्रतिपादयति—**अस्या इति** । अभेदैकत्वसंख्याया इत्यर्थः । विगलितभेदायाः संख्याया अभेदैकत्वसंख्याशब्देन व्यवहार इति भावः । वृत्तौ—समासादिवृत्तौ भानं प्रतीतिर्युक्तिसिद्धेत्यर्थः । **मतस्थितिरिति** । दर्शनान्तर एतादृशसंख्याया अनङ्गीकाराद् वैयाकरणानामिति पूरितम् । अभेदैकत्वसंख्याया वृत्तौ भाने प्रमाणं युक्तिमाह—**अयं**

( अभेदैकत्वसंख्यानिर्णय. )

**स्थितिर्वैयाकरणानाम् । अयं भावः—राजपुरुष इत्यादौ राज्ञो राज्ञो राज्ञां वाऽयं पुरुष इति जिज्ञासा जायते । विशेषजिज्ञासा च सामान्यज्ञानपूर्विकेति सामान्यरूपेण तत्प्रतीतिः शब्दादावश्यकी । अतस्तस्यां शक्तिरिति । तस्या एकत्वेन प्रतीतौ न्यायमाह—कपिञ्जलेति ।**

---

**भाव इत्यादिना ।** राजपुरुष इत्युक्ते राज्ञा राज्ञो राज्ञां वेति विशेषजिज्ञासाया अनुभवसिद्धत्वाद्विशेषजिज्ञासायाश्च सामान्यज्ञानपूर्वकत्वनियमाच्छब्दात्संख्यासामान्यप्रतीतेरावश्यकत्वमित्यर्थः । **सामान्यज्ञानपूर्विकेति** । सामान्यज्ञानकारणिकेत्यर्थः । **तत्प्रतीतिरिति** । सामान्यरूपेण—संख्यात्वरूपेण, तत्प्रतीतिः—संख्याप्रतीतिरित्यर्थः । **आवश्यकीति** । कारणीभूतसामान्यज्ञानमन्तरा विशेषजिज्ञासोदयासंभवादिति भावः । एवं च पीनत्वान्यथानुपपत्त्या रात्रिभोजनमिव विशेषजिज्ञासान्यथानुपपत्त्या वृत्तावुपसर्जनपदात्संख्यात्वेन संख्याप्रतीतिः कल्प्यत इति तात्पर्यम् । बुध्यते च क्वचित्संख्याविशेषोऽपि । यथा द्विपुत्रस्त्रिपुत्र इत्यादौ । विशेषसंख्याबोधकाभावे चाभेदैकत्वं प्रतीयते । अयं भावः—संख्यात्वेन प्रतीयमाना संख्यैव संख्यासामान्यम् । एतदेव चाभेदैकत्वसंख्या । एकत्वादिषु सर्वत्र संख्यात्वेनैकरूपेणानुस्यूतत्वादेकस्वभावत्वेनाभेदमिवाऽऽपन्नं संख्यासामान्यमभेदैकत्वसंख्याशब्देन व्यवह्रियत इति । अभेदैकत्वसंख्याशब्दव्युत्पत्त्याऽपि संख्यासामान्यमेवाभेदैकत्वमिति प्रतिपादयति—भेदः—द्वित्वत्रित्वादिसंख्याविशेषः, अभेदस्तदभावः, तद्विशिष्टमेकत्वमभेदैकत्वमिति व्युत्पत्तेः। यद्द्वित्वादिसंख्याविशेषाभानसमानकालिकैकत्वभानं तदेवाभेदैकत्वमित्यर्थादुपसर्जनपदार्थे संख्यात्वेन निरुक्तैकत्वमेव बुध्यते। विगलितभेदायाः सामान्यसंख्याया वृत्तावेकत्वेन प्रतीतौ दृष्टान्तमाह—**कपिञ्जलेति** । अश्वमेधे ' वसन्ताय कपिञ्जलानालभते ' इति वाक्येन वसन्तदेवतामुद्दिश्य बहुत्वावच्छिन्नकपिञ्जलालम्भनं विधीयते । बहुत्वं च त्रित्वचतुष्ट्वादिपरार्धपर्यन्तसंख्याव्यापको धर्मविशेषो, न तु त्रित्वचतुष्ट्वाद्यन्यतमत्वम् । ततश्च तावतां प्राप्तौ समुच्चयेनानुष्ठानासंभवात्तद्व्याप्यसंख्यास्ववतरदालम्भनं त्रित्वचतुष्ट्वादिषु विश्राम्यतीति स्वेच्छया त्रयश्चत्वारः पञ्च वेत्यनियता आलब्धव्या इति संशय्य, यो हि चतुष्ट्वादिसंख्यामुपादत्ते, न तेन तदन्तर्भूतं त्रित्वं वर्जयितुं शक्यम् । त्रित्वमुपाददानेन त्वनन्तर्भूतं चतुष्ट्वादिकं वर्जयितुं शक्यम् । अतोऽवश्यंभावित्वाद् बहुत्वगणनायां प्रथमोपस्थितत्वाल्लाघवाच्च त्रय एवाऽऽलब्धव्या इति नि-

**बहुत्वगणनायां त्रित्वस्यैव प्रथमोपस्थितत्वात्तद्रूपेणैव भानवदेकत्वस्य सर्वतः प्रथमोपस्थितत्वमस्तीति भावः । वस्तुतस्तु जिज्ञासैव नानुभवसिद्धा । तथात्वे वा ज्ञानेच्छयोः समानप्रकारकत्वेन हेतुहेतुमद्भावा-**

र्णीय बहुत्वेन त्रित्वमेव बहुवचनार्थ इति सिद्धान्तितं मीमांसायामेकादशाध्याये प्रथमपादेऽष्टमाधिकरणे । तद्रूपेणव भानवदिति । बहुत्वगणनायां त्रित्वस्य प्रथमोपस्थितत्वेन बहुवचनेन त्रित्वमेव यथा भासते तथा प्रकृतेऽपि विशेषसंख्याबोधकाभावस्थले एकत्वस्य सर्वतः प्रथमोपस्थितत्वात्तत्त्यागे मानाभावाच्च संख्यात्वेनैकत्वमेव प्रतीयते । विगलितविशेषधर्मकस्यैकत्वस्यैवाभेदैकत्वपदार्थत्वादित्यर्थः । एवं निरुक्तरीत्या वृत्तावभेदैकत्वसंख्याया भानमिति यदुक्तं तन्मतं दूषयितुमाह— **वस्तुतस्त्विति** । वृत्तावुपसर्जनपदे संख्यात्वेन सर्वसंख्यानां भानमिति मतं प्रमाणाभावात्पूर्वमेव दूषितम् । इदानीं विशेषजिज्ञासान्यथानुपपत्त्या वृत्तावुपसर्जनपदात्संख्यात्वेन संख्यासामान्यप्रतीतिरावश्यिकेति मतं दूषयति । वृत्तौ संख्यासामान्यरूपाभेदैकत्वसंख्याप्रतीतौ साधकत्वेन या विशेषजिज्ञासोक्ता सैवाऽऽदौ नानुभवपथमारोहति । येन तदनुरोधेन वृत्तौ निरुक्ताभेदैकत्वसंख्याभानं परिकल्प्येत । लिङ्गसंख्यान्वितं द्रव्यमित्युक्तेर्द्रव्यस्याव्यभिचारेण संख्यासहचरितत्वाद् यत्र यत्र द्रव्यत्वं तत्र तत्र संख्यावत्त्वमित्यानुमानिकसंख्यासामान्यज्ञानान्निरुक्तजिज्ञासायाः संभवात् तत्र च विशेषजिज्ञासायाः स्वरसतः सिद्धत्वाभावेन स्ववासनाकल्पितत्वाद्विशेषजिज्ञासायां वृत्तिजन्यसामान्यज्ञानपूर्वकत्वनियमाभावाच्च न तादृशजिज्ञासाऽभेदैकत्वसंख्याया वृत्तिवाच्यत्वं कल्पयितुं प्रभवति । विशेषजिज्ञासाया अनुभवसिद्धत्वाग्रहे तु वृद्धिमिच्छतो मूलमपि नष्टमिति न्यायापातः स्यादित्याह— **तथात्वे वेति** । राजपुरुष इत्यादिवृत्तौ संख्याविशेषजिज्ञासाया अनुभवसिद्धत्वाभ्युपगमे वेत्यर्थः । **ज्ञानेच्छयोः समानप्रकारकत्वेनेति** । अयं भावः:— पूर्वं जानाति, तत इच्छतीत्यनुभवादिच्छां प्रति ज्ञानं कारणं, तज्ज्ञानं विना तदिच्छाया असंभवात् । तत्रापि जायमानं ज्ञानं यद्धर्मप्रकारकं यद्विशेष्यकं च भवति तद्धर्मप्रकारिकां तद्विशेष्यिकामेवेच्छां जनयति । एवं यद्धर्मप्रकारिका यद्विशेष्यिका चेच्छा भवति तद्धर्मप्रकारकं तद्विशेष्यकमेव ज्ञानं तादृशेच्छाकारणं भवति । यथा सुखत्वप्रकारिकायाः सुखविशेष्यिकाया इच्छायाः सुखत्वप्रकारकं सुखविशेष्यकं ज्ञानं कारणमित्येवं ज्ञानेच्छयोः समानप्रकारकत्वेन हेतुहेतुमद्भा-

( अभेदैकत्वसंख्यानिर्णयः )

तत्तद्रूपेणैव वाच्यता स्यादिति ध्येयम् ॥ १ ॥ ( ५५ )

इति रङ्गोजिभट्टात्मजकौण्डभट्टविरचिते वैयाकरणभूषणसारेऽभेदैकत्वसंख्याया वृत्तौ भाननिर्णयः समाप्तः ॥

---

वस्य( कार्यकारणभावस्य ) दृष्टत्वेन प्रकृतस्थले एकत्वत्वादिविशेषधर्मप्रकारकजिज्ञासायाः ( ज्ञानेच्छायाः ) कारणीभूतज्ञानेऽपि एकत्वत्वादिविशेषधर्मप्रकारकत्वस्यावश्याङ्गीकर्तव्यतया वृत्तावुपसर्जनपदादेव एकत्वत्वादिविशेषधर्मावगतौ सत्यां तादृशजिज्ञासोदयात्यन्तासंभवाद्विशेषजिज्ञासामूलभूतस्य सामान्यज्ञानस्य नष्टत्वात्तदवलम्बिनी विशेषजिज्ञासाऽपि विनष्टेति वृद्धिमिच्छतो मूलमपि ते नष्टमिति न्यायानुकारि वृत्तावुपसर्जनपदात्संख्यात्वेन संख्याप्रतीतिकल्पनमित्यर्थः। तत्तद्रूपेणैवेति ज्ञानेच्छयोः समानप्रकारकत्वेन कार्यकारणभावनियमानुभवाद् वृत्तावेकत्वत्वादितत्तद्विशेषरूपेणैव संख्याया वाच्यत्वस्य वक्तव्यत्वाद् वृत्तावुपसर्जनपदात्संख्यात्वेन सामान्यसंख्याप्रतीतिः ( संख्यात्वप्रकारकसंख्याविशेष्यकप्रतीतिः )सुतरां दुर्वचेति भावः। एतत्सर्वमनुसंधायैवोक्तं लघुमञ्जूषायां भट्टनागेशैः—एकार्थीभावबलादेव वृत्तावुपसर्जनपदार्थे संख्याबोधकप्रातिपदिकाभावे एकत्वादिरूपसंख्याविशेषानवगतिः। द्विपुत्र इत्यादौ दोषनिरासाय संख्याबोधकेत्यादिनिवेशः। संख्याविशेषप्रतीतौ पृथगुपस्थापकपदज्ञानस्य कारणत्वात्समासादिवृत्तौ च वाक्यवत्प्रातिपदिकापेक्षया पृथक्संख्योपस्थापकविभक्तिश्रवणरूपतत्कारणाभावाच्च संख्याविशेषावगतिरित्यर्थः। तदुक्तं—वाचिका द्योतिका वाऽपि संख्यानां या विभक्तयः। तल्लुक्यवयवे वृत्तौ संख्याभेदो निवर्तत इति। संख्याविशेषानवगतिरेवाभेदैकत्वसंख्या। अभेदैकत्वसंख्येत्यस्य भेदसहचरितैकत्वादिसंख्याविशेषस्याभानमित्यर्थः। न त्वभेदैकत्वसंख्याशब्दवाच्यमन्यत्किंचित्संख्यासामान्यमस्ति। एतेन वृत्तावुपसर्जनपदात्संख्यासामान्यप्रतीतिरपि नास्तीति स्पष्टमेव बुध्यते। ननु कथं तर्हि वृत्तावेकानेकव्यक्तिभानमिति चेत्—यथा घटा इत्यादितो बहुत्वेनैव कदाचित्त्रयाणां चतुर्णां वा भानं तात्पर्यवशात्, न तु कदाचिदपि त्रित्वचतुष्ट्वादिना। तथा वृत्तौ राजपुरुष इत्यादौ राजत्वादिनैवैकानेकव्यक्तिभानं तात्पर्यवशान्न तु कदाचिदप्येकत्वादिनेति ज्ञेयम्। अत एव भाष्ये संख्याविशेषानवगतिरेवोक्ता, न त्वेकानेकार्थानवगतिः। अत एव च प्रगृह्यसंज्ञासूत्रे भाष्ये कुमार्यगारमित्यादौ विग्रहे द्विव-

( अथोद्देश्यविधेययोः संख्याविवक्षानिर्णयः )

संख्याप्रसङ्गादुद्देश्यविधेययोः संख्याविवक्षाविवक्षे निरूपयति—

लक्ष्यानुरोधात्संख्यायास्तन्त्रातन्त्रे मते यतः ।
पश्वेकत्वादिहेतूनामाश्रयणमनाकरम् ॥ १ ॥ ( ५६ )

ग्रहं संमार्ष्टीत्यत्रोद्देश्यग्रहगतमेकत्वमविवक्षितमितिवन्नास्माकमु-

---

चनान्तत्वेऽपि एकार्थीभावबलाद् वृत्तौ द्वित्वाबोधः किंतु कुमारत्वेन कुमारीद्वय-बोध इत्युक्तं संगच्छत इति तात्पर्यम् ॥ ५५ ॥

इति वैयाकरणभूषणसारव्याख्यायां शांकर्यामभेदैकत्वसंख्यानिर्णयः ।

रङ्गभट्टतनूजेन शंकरेण विनिर्मिते ।
अभेदैकत्वसंख्याया ग्रन्थेऽस्मिन्निर्णयः कृतः ॥ ११ ॥

---

अथ संख्याविवक्षानिर्णयः । ( १२ )

स्मृतस्योपेक्षानर्हत्वमिति न्यायेन प्रसङ्गसंगत्या स्मृतयोः संख्याविवक्षाविवक्ष-योर्निरूपणार्थं भूमिकामारचयति—संख्याप्रसङ्गादिति । अभेदैकत्वसंख्यानिर्ण-यप्रक्रमादित्यर्थः । दृष्टान्ते कपिञ्जलानित्यत्र बहुवचनेन त्रित्वसंख्याविवक्षादर्शन-प्रसङ्गादिति यावत् । ननु यत्रैकवचनादिकं श्रूयते तत्र तादृशसंख्याया विवक्षैव । तत्तत्संख्याविवक्षायामेवैकवचनादेर्विधानात् । अर्थात्तत्र तदितरसंख्याया अविवक्षा सिद्धैवेति क्व संख्याविवक्षाविवक्षयोर्निर्णयप्रसक्तिरत आह—उद्देश्यविधेययो-रिति । उद्देश्यगतसंख्याया विवक्षाऽविवक्षा वा, तथा विधेयगतसंख्याया विव-क्षाऽविवक्षा वेति वचनोपात्तसंख्यायामेव विवक्षाविवक्षयोर्दर्शनेन संशयात्तन्निर्णय-प्रसक्तिरित्यर्थः । लक्ष्यानुरोधात्संख्याया इति । उद्देश्यविशेषणसंख्याया अविवक्षां दर्शयति—ग्रहं संमार्ष्टीति । ज्योतिष्टोमे श्रूयते—दशापवित्रेण ग्रहं सं-मार्ष्टीति । दशापवित्रं—पटखण्डः । ग्रहः—सोमपात्रम् । संमार्जनं—संशोधनम् । तथा च सोमावसिक्तं पात्रं पटखण्डेन शोधयेदित्यर्थोऽनेन विधीयत इति केचित् । अन्ये तु ग्रहणकाले पात्रस्य बहिर्लग्नानां विप्रुषां प्रोञ्छनं कुर्यादित्यर्थमाहुः । प्रोञ्छनं नाम महाराष्ट्रभाषायां( पुसणें )इति शब्दाभिलप्यमाना क्रिया । तत्र ग्रहमिति द्वितीयैकवचनेन ग्रहगतैकत्वसंख्या प्रतीयते । ग्रहाश्चैन्द्रवायवादयो दश । सत्येवमेकत्वसंख्याया उपादानादुपात्तसंख्यायाः परित्यागे कारणाभावाच्च तेषां

( संख्याविवक्षानिर्णयः )

द्देश्यविशेषणाविवक्षानियमः । धातोरित्येकत्वस्य विवक्षितत्वात् ।

" उत्पद्येत समस्तेभ्यो धातुभ्यः प्रत्ययो यदि ।
तदा सर्वैर्विशिष्येत द्वंद्वोत्पन्नसुबर्थवत् " ॥

इति शब्दान्तराधिकरणे भट्टपादैरभिधानाच्च । " आर्धधातुक-

मध्ये कोऽप्येक एव ग्रहः संमार्जनीय इति पूर्वपक्षयित्वा ग्रहमिति द्वितीयया ग्रहस्येप्सिततमत्वेनोद्देश्यत्वं, यदीप्सिततमं तदुद्देश्यं भवति । तथा ग्रहैर्जुहोतीति तृतीयया करणत्वप्रतीतेर्ग्रहाणां होमस्वरूपसाधकतया फलवत्त्वरूपप्रयोजनवत्त्वं च भवति । यदुद्देश्यं यच्चापि फलवत्तस्य लोके मुख्यत्वं दृश्यत इति ग्रहस्योद्देश्यत्वात्फलवत्त्वाच्च प्राधान्यमवगम्यते । तेन संमार्जनं ग्रहापेक्षया गुणभूतं भवति । तथा च ग्रहं संमार्ष्टीत्यत्र ग्रहः प्रधानं संमार्गश्च गुण इति स्थिते ' प्रतिप्रधानं गुणावृत्तिः ' इतिन्यायेन यावन्तो ग्रहाः सन्ति तावन्तस्ते संमार्जनीया इत्येवं निश्चये सति कति ग्रहाः संमार्जनीया इति बुभुत्साया अभावादुद्देश्यगतमेकत्वं श्रूयमाणमप्यविवक्षितमिति सिद्धान्तितं जैमिनीये तृतीयाध्याये प्रथमपादे सप्तमेऽधिकरणे । तथा चोद्देश्यग्रहगतैकत्वस्याविवक्षेति यथा मीमांसकनियमस्तथा वैयाकरणानामुद्देश्यविशेषणस्याविवक्षेति न नियम इत्याह—**नास्माकमिति** । वैयाकरणानामस्माकमित्यर्थः । उद्देश्यविशेषणस्याविवक्षानियमाभावे हेतुमाह—**धातोरित्येकत्वस्येति** । प्रत्ययविधावुद्देश्यभूतधातोरितिसूत्रस्थधातुपदार्थविशेषणस्यैकत्वस्य व्याकरणशास्त्रे विवक्षितत्वेन तादृशनियमस्य व्यभिचारादित्यर्थः । यदि तत्रैकत्वस्याविवक्षा क्रियेत चेद्धातुसमुदायादपि प्रत्ययोत्पत्त्यापत्तिः स्यादिति भावः । धातोरित्यत्रैकत्वविवक्षा मीमांसकानामपि संमतेत्याह—**उत्पद्येतेति** । तन्त्रवार्तिकस्थमिदं पद्यम् । **द्वंद्वोत्पन्नेति** । द्वंद्वसमासात्क्रियमाणसुबर्थसंख्यादिना यथा द्वंद्वघटकाः सर्वे पदार्था विशेष्यन्ते—सुबर्थसंख्यानिष्ठविशेषणतानिरूपितविशेष्यतावन्तः क्रियन्ते, एवं धातुसमुदायाद्यदि प्रत्यय उत्पद्येत तदा तावन्तो धात्वर्थाः प्रत्ययार्थेन संबध्येरन्नित्यर्थः । **शब्दान्तराधिकरण इति** । शब्दान्तरे कर्मभेदः कृतानुबन्धित्वात् ( जै. अ, २ पा. २ अधि. १ सू. १ ) इत्यत्रेत्यर्थः । **भट्टपादैरिति** । कुमारिलभट्टैरित्यर्थः । यजति, ददाति, जुहोति, इत्यादौ भिन्नभिन्नधातूत्तरमुत्पन्नस्य भावनावाचिन आख्यातस्यैकत्वेन यागदानहोमभावनानामेकत्वं युक्तमिति प्राप्ते—उत्तरमाह—शब्दान्तर इत्यादि । शब्दान्तरे—धातु-

स्येड्वलादेः ” [ पा० सू० ७–२–३५ ] इत्यत्रानुवाद्यार्धधातुकविशेषणस्य वलादित्वस्य विवक्षितत्वाच्च । एवं पशुना यजेतेतिवद्विधेयविशेषणं विवक्षितमित्यपि न । “ रदाभ्यां निष्ठातो नः पूर्वस्य च दः” [ पा० सू० ८–२–४२ ] इत्यत्र नकारद्वयविधानानापत्तेः । तथा च

भेदे सति, कर्मभेदः–यागादिकर्मभावनाया भेदः । भवतीति शेषः । भावनाभेदे हेतुमाह–**कृतानुबन्धित्वादिति** । कृतः, अनुबन्धः–भावनान्यवच्छेदोऽनेनेति कृतानुबन्धित्वं तस्मात् । एकधात्वर्थस्यैकभावनायामन्वये सति तदितरभावनाव्यवच्छेदाद्यागदानहोमभावनाः परस्परं भिद्यन्त इति तदर्थः । धातुसमुदायात्प्रत्ययोत्पत्तौ समुदायस्याङ्गसंज्ञायामड्द्विर्वचनादिकमपि समुदायस्यैव स्यादित्यपि बोध्यम्। ननु भ्वादिगणपठितत्वसमानाधिकरणक्रियावाचकत्वरूपधातुत्वस्य प्रत्येकपर्याप्तत्वेन स्वाङ्गसमुदाये स्वाङ्गत्वाभाववद्धातुसमुदाये धातुत्वाभावादेव समुदायात्प्रत्ययोत्पत्तेः सुतरां वक्तुमशक्यत्वेन नोक्तयुक्तिरुद्देश्यविशेषणैकत्वविवक्षायाः साधिका, नाप्येकत्वविवक्षायास्तत्रोपयोग इत्यत आह–**आर्धधातुकस्येडिति** । **अनुवाद्येति** । इड्विधावुद्देश्यत्वेन गृहीतस्याऽऽर्धधातुकस्य यद्विशेषणं वलादेरिति तस्य विवक्षितत्वादित्यर्थः । उद्देश्यविशेषणस्याविवक्षितत्वनियमे त्वार्धधातुकविशेषणस्य वलादेरित्यस्य वैयर्थ्यापत्तिः स्यादिति भावः । एवं चोद्देश्यविशेषणस्याविवक्षैवेति नियमो व्याकरणशास्त्रे नाङ्गीकर्तुं शक्य इति तात्पर्यम् । **एवमिति** । उद्देश्यविशेषणस्याविवक्षैवेति नियमानङ्गीकारवदित्यर्थः । **पशुनेति** । यथा ग्रहं संमार्ष्टीत्यत्रोद्देश्यग्रहगतमेकत्वमविवक्षितं तद्वत्पशुनेति नाप्रत्ययोपात्तं पशुगतमेकत्वमविवक्षणीयमिति पूर्वपक्षयित्वा पशुना यजेतेत्यत्राग्नीषोमीयवाक्यप्राप्तं यागं यजेतेति यजिनाऽनूद्य तदङ्गत्वेन पशुर्विधीयते, पशुना यागं भावयेदितीति उद्देश्यत्वेन प्रधानं यागं प्रति विधीयमानः पशुर्गुणभूतः । तत्र प्रतिप्रधानं गुणावृत्तिरितिवत्प्रतिगुणं प्रधानावृत्तिरिति नहि कश्चिन्न्यायोऽस्तीति यागस्योद्देश्यत्वेन प्राधान्यात्कियद्भिः पशुभिर्यागः कर्तव्य इति बुभुत्सितत्वादेकवचनेनैकत्वसंख्याया उपादानादुपात्तसंख्यापरित्यागे कारणाभावाच्चैकवचनेन प्रतीयमानं विधेयगतमेकत्वं विवक्षितमेवेति राद्धान्तितम् । तथा च नानेकपशुभिर्यागानुष्ठानेऽदृष्टसिद्धिरित्येवं विधेयविशेषणं विवक्षितमेवेति यो मीमांसकनियमः सोऽपि नास्माभिर्व्याकरणशास्त्र आश्रयितुं शक्यः । कुत इत्यत आह–**रदाभ्यां निष्ठात इति** । **नकारद्वय-**

( संख्याविवक्षानिर्णयः )

भिन्न इत्यत्र नकारद्वयलाभो न स्यात् । "आदगुणः" [ पा० सू० ६-१-८७ ] इत्यादावेकत्वविवक्षयैवोपपत्तौ "एकः पूर्वपरयोः" [ पा० सू० ६-१-८४ ] इत्यत्रैकग्रहणवैयर्थ्यापत्तेश्चेति भावः । शब्दार्थस्तु-संख्याया लक्ष्यानुरोधात्तन्त्रातन्त्रे यतो मते अतः पश्वेकत्वा-

---

विधानानापत्तेरिति । रेफदकाराभ्यां परस्य निष्ठातकारस्य नकारविधानान्न इत्येकवचनेन प्रतीयमानस्यैकत्वस्य विधेयविशेषणतया तद्विवक्षायां क्रियमाणाया-मेकस्य नकारस्य विहितत्वान्नकारद्वयस्य विधानं न स्यादित्यर्थः । ननु मा भवतु नकारद्वयविधिः, का क्षतिरित्यत आह–तथा चेति । भिन्नमित्यादौ नकारद्वयं न लभ्येतेति विधेयविशेषणस्य विवक्षायां दोष इत्यर्थः । ननु रेफदकारनिरूपित परत्ववन्निष्ठातकारतत्पूर्ववर्तिदकारयोर्नकारो भवतीत्येकवाक्यतया विधाने नकार-द्वयालाभेऽपि निष्ठातकारस्य नकारो भवति, अथ तत्पूर्ववर्तिदकारस्य च नकारो भवतीत्येवं वाक्यभेदेन विधाने नकारद्वयलाभः सुवचः, 'पूर्वस्य च दः' इति चशब्दोपादानाद्वाक्यभेद एव च पाणिनेः संमत इति विधेयविशेषणस्य विवक्षित-त्वमेवेति नियमाङ्गीकारेऽपि दोषाभावेन व्याकरणशास्त्रे तादृशनियमानाश्रयणे किं बीजमित्यत आह– आदगुण इति । उपेन्द्र इत्याद्युदाहरणे पूर्वपरयोः स्थाने एक एव गुणादेशो जायतां नतु स्थानिभेदाद् द्वावित्येतदर्थमेकः पूर्वपरयोरिति सूत्र एकग्रहणं कृतम् । यदि च विधेयविशेषणं विवक्षितमेवेति मीमांसकनियमो व्याकरणशास्त्रे परिपाल्येत तदा आद्गुण इत्यत्र गुणस्य विधेयत्वात्तनैकवचनेन प्रतीयमानस्यैकत्वस्य तद्विशेषणत्वाद्विधेयविशेषणस्य च विवक्षावश्यंभावनियमादु-पेन्द्र इत्यादौ पूर्वपरयोः स्थाने एक एव गुणादेशः स्यादिति पुनः क्रियमाणमेक-ग्रहणं व्यर्थं स्यात् । तस्मात्तदेवेत्थमवगमयति यद्विधेयविशेषणं विवक्षितमेवेति नियमः पाणिनेर्नाभिमत इत्यर्थः । नन्वेवं व्याकरणशास्त्रे उद्देश्यविशेषणं विव-क्षितमेव विधेयविशेषणं चाविवक्षितमेवेति मीमांसकवैपरीत्येन नियमोऽस्त्विति चे-त्तदपि न । उपेयिवाननाश्वाननूचानश्चेत्यत्रोद्देश्यविशेषणस्योपेत्यस्याविवक्षितत्वदर्श-नादिको यणित्यत्र विधेयविशेषणस्यैकत्वस्य विवक्षितत्वदर्शनाच्च । अन्यथा ईयिवान् समीयिवानिति सिद्धयनापत्तेः सुध्युपास्य इत्यादाविकारस्य स्थानेऽनन्त-यकारापत्तेश्चेति ज्ञेयम् । एतत्सर्वं मनसिकृत्याऽऽह–शब्दार्थस्त्विति । संख्या-

विवक्षाविवक्षाशब्दार्थ इत्यर्थः। **संख्याया इत्यादि**। उद्देश्यविशेषणसंख्याया विधेयविशेषणसंख्यायाश्च तन्त्रातन्त्रे—विवक्षाविवक्षे( तन्त्रं-विवक्षा, अतन्त्रं—अविवक्षा। विवक्षा—प्रतिपादनेच्छा, तदभावः—अविवक्षा लक्ष्यानुरोधात् उदाहरणानुसारात् , मते दस्माद्धेतोर्मते अभिमते अभीष्टे। व्याकरणशास्त्रप्रवर्तकाचार्याणामिति शेषः। धातोरित्यत्रोद्देश्यविशेषणमेकत्वं विवक्षितं, उपेयिवाननिश्वानूचानश्चेत्यत्र(?) नित्यत्रोपेति चाविवक्षितं, तथा इको यणिरत्यत्र विधेयविशेषणमेकत्वं विवक्षितं, ज्वरत्वरेत्यत्र विधेयविशेषणमेकत्वमविवक्षितं, अत एव 'उपधाया वकारस्य च प्रत्येकमूठ्' इति द्वावूठावित्युक्तं भाष्ये। लक्ष्यानुरोधाद्विवक्षाविवक्षयोरिति भावः। अतो हेतोरित्यर्थः। **पश्वेकत्वाधिकरणेति**। तत्र हि पशुनेति करणतृतीयाविभक्त्येकवचनोपादानात्करणकारकमेकत्वं पुंस्त्वं चेति त्रितयमेकस्मादेव 'ना' इति प्रत्ययात्प्रतीयते। तत्रैकत्वं पुंस्त्वं चाङ्गम्। करणकारकमाङ्गि—प्रधानम्। येन 'ना' इति प्रत्ययेन करणकारकमभिहितं तेनैव प्रत्ययेनैकत्वपुंस्त्वयोरभिधानामिति समानप्रत्ययोपात्तत्वप्रत्यासत्त्या विभक्त्यर्थलिङ्गसंख्ययोर्विभक्त्यर्थकरणकारक एवान्वयः। परंतु अरुणाधिकरणोक्तरीत्या विभक्त्यर्थस्यैकत्वस्य, पुंस्त्वस्य, पशोश्च प्रथमतो यागभावनायां पृथगन्वयः। तथा च पशुना, एकत्वेन, पुंस्त्वेन च यागं भावयेदिति पश्वादित्रितयकरणिका यागभावनेति बोधः। पश्चात्प्रकृत्यर्थेन पशुना पुंस्त्वैकत्वयोरन्वयो भवति। स यथा—लिङ्गसंख्ययोर्निराश्रितयोरवस्थित्यदर्शनेन किंनिष्ठमेकत्वं पुंस्त्वं चेत्येकत्वपुंस्त्वयोराश्रयाकाङ्क्षायां प्रत्यासत्त्या पशुरेव तदाश्रयत्वेन बुध्यते। यागसाधनीभूतो यः पशुः स एकः पुमांश्चेति पार्ष्ठिको मानसो बोध इत्युक्तम्। यथा अरुणया पिङ्गाक्ष्यैकहायन्या गवा सोमं क्रीणातीत्यत्र कारकाणां क्रिययैवान्वयनियमादारुण्यपिङ्गाक्षित्वादीनां चतुर्णां परस्परमनन्वितानामेव पार्थक्येन क्रयभावनायामन्वयः। आरुण्यकरणिका, पिङ्गाक्षीकरणिका, एकहायनीकरणिका, गोकरणिका च क्रयभावनेति बोधः। ततः किंनिष्ठमारुण्यादिकमिति वीक्षायां क्रयसाधनीभूता या गौः सैवाऽऽरुण्यगुणविशिष्टा सैव च पिङ्गाक्षी एकहायनी चेति प्रत्यासत्त्या पार्ष्ठिको मानसो बोधो जायते, न शाब्दस्तद्वदिति भावः। आदिना ग्रहैकत्वसंग्रहः। ग्रहं संमार्ष्टीत्यत्र प्राजापत्या नव ग्रहाः, इत्यादिवाक्यविहितनवत्वसंख्यावरुद्धग्रहोद्देशेन संमार्गो विधीयते। तत्र वाक्यान्तरगतनवत्वसंख्यया विरोधादेतद्वाक्यगतमेकत्वं नोद्देश्यकोटौ निवेश-

धिकरणोक्तहेतूनामाश्रयणं नास्मत्सिद्धान्तसिद्धमिति । आदिना ग्रहैकत्वसंग्रहः ॥ १ ॥ ( ५६ )

ननु विधेयविशेषणाविवक्षाऽऽवश्यकी, अन्यथा सुद्ध्युपास्य इत्यादावनन्तयकाराद्यापत्तेर्भिन्नमित्यत्र नकारद्वयवदन्येषामप्यापत्तेः । एकः पूर्वपरयोरित्यत्रैकग्रहणं च स्थानिभेदादादेशभेदवारणायेत्याभिप्रेत्याऽऽह -

विधेये भेदकं तन्त्रमन्यतो नियमो न हि ।
ग्रहैकत्वादिहेतूनामाश्रयणमनाकरम् ॥ २ ॥ ( ५७ )

---

यितुं शक्यं, किंतु तदपि विधेयं स्यात् । तथाच ग्रहं संमृज्यादिति चैकमिति वचनव्यक्तौ वाक्यभेदः स्पष्ट एवेति ग्रहैकत्वमविवक्षितमित्युच्यते । तदुक्तं वाक्यपदीये — ग्रहास्त्वन्यत्र विहिता भिन्नसंख्याः पृथक् पृथक् । प्राजापत्या नवेत्येवमादिभेदसमन्विताः ॥ अङ्गत्वेन प्रतीतानां संमार्गे त्वङ्गिनां पुनः । निर्देशं प्रति या संख्या सा कथं स्याद्विवक्षिता ॥ इति । इत्युक्तानां हेतूनामाश्रयणमित्यर्थः । नास्मत्सिद्धान्तेति । महाभाष्यप्रतिपादितसिद्धान्तासिद्धं न भवतीत्यर्थः ॥५६॥

अथ विधेये भेदकं तन्त्रमितिकारिकामवतारयितुं भूमिकामारचयति—नन्वित्यादि । विधेयविशेषणेति । विधेयविशेषणस्यैकत्वस्येत्यर्थः । तादृशैकत्वस्य विवक्षावश्यकत्वमेव दर्शयितुमाह—अन्यथेति । विधेयविशेषणस्यैकत्वस्य विवक्षितत्वाभावे इत्यर्थः । सुध्युपास्य इति । इको यणिति विधेययणिविशेषणस्यैकत्वस्याविवक्षितत्वे सतीकः स्थाने यण् भवतीत्येवं संख्याविशिष्टत्वेन विधानाभावादिकारस्य स्थाने एकयकारस्येव यकारद्वयस्य यकारत्रयस्य चाप्यापत्तेरित्यर्थः । अन्येषामिति । भिन्नमित्यादौ तकारदकारयोर्यथा द्वौ नकारौ भवतस्तद्वदिकारस्य स्थाने एकयकारादन्येषां द्वित्र्यादियकाराणामप्यापत्तेरित्यर्थः । यदि विधेयविशेषणमेकत्वं विवक्ष्यते तर्हि 'एकः पूर्वपरयोः' इत्यत्रत्यैकग्रहणस्य वैयर्थ्यं स्यादित्याशङ्कां निरस्यति - एकग्रहणं चेति । स्थानिभेदादिति । पूर्वपरयोरित्यत्र लाघवानुसारेण पूर्वपरस्येति समाहारद्वंद्वेन निर्देशे कर्तव्ये गौरवेण पूर्वपरयोरितीतरेतरयोगद्वंद्वेन निर्देशकरणात्पूर्वपरयोः प्रत्येकं स्थानित्वबोधनेन स्थानिभेदात्तदनुरोधेन विधेयविशेषणस्याविवक्षया गुणस्यापि भेदेन द्वयोः स्थाने द्वौ गुणादेशौ मा भूतामित्येकग्रहणं कृतमित्याद्यनुसंधाय ब्रूते—विधेये भेदकं तन्त्रमिति । विधेये भेदकमिति । विधेयनिरूपितं भेदकं—विशेषणम् । विशेषणता-

भेदकं विशेषणं तन्त्रं विवक्षितं विधेयविशेषणं विवक्षितमित्यस्तु। तथाऽप्यन्यतः, अनुवाद्यस्य नियमो न हि । क्वचित्तन्त्रं क्वचिन्नेत्यर्थः। ग्रहैकत्वादौ यो हेतुर्वाक्यभेदादिस्तस्यात्राऽऽश्रयणमनाकरम् । एकत्वविशिष्टं धातुं वलादित्वविशिष्टमार्धधातुकं चोद्दिश्य प्रत्ययेडाग

---

वत्तन्त्रं विवक्षितमित्यन्वयेनाऽऽह—**विधेयविशेषणमिति** । विधेयनिष्ठविशेष्यता निरूपितप्रकारतावद्विवक्षितमस्त्वित्यर्थ इति यावत् । अन्यत इत्यादिद्वितीयचरणस्यार्थमाह—**तथाऽपीत्यादिना । अनुवाद्यस्येति ।** उद्देश्यविशेषणस्येत्यर्थः। उद्देश्यनिष्ठविशेष्यतानिरूपितविशेषणतावत इति यावत् । **नियमो नेति ।** उद्देश्यविशेषणमविवक्षितमेवेति यो नियमः स व्याकरणशास्त्रे नास्तीत्यर्थः। नियमाभावस्य तात्पर्यमाह—**क्वचित्तन्त्रमिति** । भाष्याद्यनुगृहीतलक्ष्यानुरोधात्क्वाचिदुद्देश्यविशेषणं विवक्ष्यते क्वचित्तु न विवक्ष्यत इति भावः । **वाक्यभेदादिरिति ।** वाक्यभेदस्त्वधुनैव पुरस्ताद्वर्णितः। आदिपदेन ग्रहमिति द्वितीयया ग्रहस्येप्सिततमत्वेनोद्देश्यत्वात्प्राधान्यं प्रतीयते । ततश्च प्रतिप्रधानं गुणावृत्तिरितिन्यायेन यावन्तो ग्रहास्ते सर्वे संमार्जनीया इत्यर्थात्सकलग्रहसंमार्गसिद्ध्या तत्र श्रुतमप्येकत्वमविवाक्षितामिति विवक्षाफलाभावरूपहेतोः परिग्रहः सोऽयमपि वाक्यभेदादपि पुरस्ताद्वर्णितो विस्तरेणेति तत्रैव द्रष्टव्यः । **तस्येति ।** उद्देश्यविशेषणस्याविवक्षितत्वविषये निरुक्तस्य हेतोरित्यर्थः। **अनाकरमिति ।** व्याकरणशास्त्रेऽङ्गीकरणं भाष्याद्याकरग्रन्थासिद्धं तद्विरुद्धं वेत्यर्थः ननु ग्रहैकत्वमिव धातोरित्यनैकत्वस्य, आर्धधातुकस्येडित्यत्र वलादित्वस्य चाविवक्षा स्यादित्याशङ्कायामाह—**एकत्वविशिष्टं धातुमित्यादि** । एकत्वविशिष्टं ग्रहमुद्दिश्य संमार्गविधाने यथा वाक्यभेदादिकं बाधकं समस्ति तथाऽत्र न किंचिद्बाधकमिति एकत्वाविशिष्टधातुं वलादित्वविशिष्टार्धधातुकं चोद्दिश्य प्रत्ययेडोर्विधिः संभवतीति न वाक्यभेदो, नाप्येकत्वादिविशिष्टानुवादसामर्थ्यादेकत्वादेरविवक्षा संभवतीति भावः। पशुनेत्यादौ प्रत्ययेनैकत्वसंख्याया उपादानादुपात्तसंख्यापरित्यागे कारणाभावात्समानपदोपात्तत्वप्रत्यासत्त्या तदेकत्वस्य प्रकृत्यर्थेनैवान्वयादेकत्वविशिष्टपशुना यागं भावयेदित्येवं विशिष्टविधानादेकत्वं विवक्षितम् । विशिष्टविधानादेव च न वाक्यभेदप्रसक्तिः । विशिष्टस्य श्रुत्याऽङ्गत्वबोधनात्पशुत्वादिविशेषणवैकल्य इवैकत्ववैकल्येऽपि विशिष्टाननुष्ठानाद्यागवैकल्यमपि सिद्धम् । एतद्व्याकरणशास्त्रे इको

मा विधिसंभवादिति भावः ॥ २ ॥ ( ५७ )

नन्वेवं भिन्न इत्यत्र नकारद्वयलाभो न स्यादित्यत आह—

रदाभ्यां वाक्यभेदेन नकारद्वयलाभतः ।
क्षतिर्नैवास्ति तन्त्रत्वे विधेये भेदकस्य तु ॥ ३ ॥ (५८)

( इति भट्टोजिदीक्षितविरचितकारिकासूद्देश्यविधेययोः संख्याविवक्षानिर्णयः ) ।

चकारसूचितं निष्ठातस्य नः पूर्वस्य दकारस्य च न इति वाक्यभेदमादाय नकारद्वयलाभ इत्यर्थः ॥ ३ ॥ ( ५ )

इति रङ्गोजिभट्टात्मजकौण्डभट्टविरचिते वैयाकरणभूषणसार उद्देश्यविधेययोः संख्याविवक्षानिर्णयः ।

---

यणित्यादावेकत्वविशिष्टयणादेर्विधानान्नानेकयकाराद्यापत्तिर्नापि वाक्यभेदापत्तिरिति विधेयविशेषणं विवक्षितमेवेति नियमाश्रयणे न किंचिद्बाधकं वैयाकरणानामित्याशयः ॥ ५७ ॥

ननु विधेयविशेषणं विवक्षितमेवेति नियमाश्रयणे क्वचिद्दोषः स्यादित्याशङ्कते—नन्वेवमिति । नकारद्वयलाभो नेति । निष्ठातो न इत्येकवचनोपात्तं विधेयनकारविशेषणमेकत्वं विवक्ष्यते चेदेकत्वविशिष्टो नकारादेशस्तकारदकारयोः स्थाने भवतीत्यर्थाद्भिन्नमित्यादौ द्वौ नकारौ न लभ्येयातां, किंतु गुणादिवदेक एव नकार उभयोः स्थाने स्यादित्याशङ्कां निरसितुमाह—रदाभ्यां वाक्यभेदेनेति । वाक्याभेदलाघवाच्च शब्दाकरणरूपलाघवातिशयाच्च रेफदकारावधिकपरत्ववन्निष्ठातकारतत्पूर्ववर्तिदकारयोर्नकारो भवतीत्येकवाक्यतया विधानपक्षे विधेयनकारगतैकत्वविवक्षणेन भिन्नमित्यादौ यद्यपि नकारद्वयं न लभ्यते तथाऽपि रेफदकारावधिकपरस्य निष्ठातकारस्य नकारो भवत्यथ निष्ठापेक्षया पूर्वस्य दकारस्य च नकारो भवतीत्येवं वाक्यभेदेन विधाने नकारद्वयं लभ्यत एव, चकारघटितसूत्रपाठकरणेन च वाक्यभेद एवेष्टः पाणिनेरिति विधेयविशेषणस्य विवक्षितत्वमेवेति नियमाङ्गीकारे न किंचिद्बाधकमिति भावः ॥ ५८ ॥

इति वैयाकरणभूषणसारव्याख्यायां शांकर्यां संख्याविवक्षाविवक्षयोर्निर्णयः ।

रङ्गभट्टतनूजेन शंकरेण विनिर्मिते ।

( अथ क्त्वाद्यर्थनिर्णयः )।

क्त्वाप्रत्ययादेरर्थं निरूपयति-

अव्ययकृत इत्युक्तेः प्रकृत्यर्थे तुमादयः।

---

संख्याविवक्षयोरस्मिन्व्याख्याने निर्णयः कृतः॥ १२॥

## अथ क्त्वाद्यर्थनिर्णयः ( १३ )।

सिंहावलोकनन्यायेन प्रातिपदिकान्तःपातिप्रत्ययार्थनिरूपणस्मरणप्रसङ्गादाह-**क्त्वाप्रत्ययादेरिति**। निरूपयति-प्रतिपादयति-**अव्ययकृत इत्युक्तेरिति**। **तुमुन्नादय इति**। अवतरणिकायां प्रतिपदोक्तत्वेन क्त्वाप्रत्ययोपादानं तु तद्विषये वक्तव्यबाहुल्याद् ब्राह्मणवसिष्ठन्यायेन प्राधान्यद्योतनायेति बोध्यम्। ननु तुमुनादीनां धातोर्विधानाद्धात्वर्थफलेऽपि प्रकृत्यर्थत्वाविशेषात्तत्राप्यर्थे तुमुनादयः स्युरत आह-**भाव इति**। धात्वर्थप्रधाने व्यापार इत्यर्थः। आदिपदं क्त्वादिसंग्रहार्थम्। तुमुनादीनां व्यापारार्थकत्वे प्रमाणं वक्ति-**अव्ययकृत इति**। **वार्तिकादिति**। अव्ययसंज्ञाप्रयोजकाः कृत्प्रत्यया भाव भवन्तीति वार्तिकार्थः। भाष्यकारा अपि तुमुनादीन् भाव एवाभ्युपगच्छन्ति। परंतु तुमुनादेरसत्त्वभूत एव भावोऽर्थः। पाक इत्यादाविव तुमुनाद्यर्थे लिङ्गसंख्यान्वयाननुभवात्। तथा च धात्वर्थानुवादक एव तुमुनादिरिति पर्यवस्यति। तुमुन्ण्वुलौ क्रियायां क्रियार्थायामिति तुमुन्विधायकं सूत्रम्। अस्यार्थः-क्रिया-अर्थः प्रयोजनं यस्याः सा क्रियार्था। तादृश्यां क्रियायामुपपदे सति क्रियाफलकक्रियावाचक उपपदे सति धातोः-अर्थात्फलभूतक्रियावाचकाद्धातोर्भविष्यत्यर्थे तुमुन्ण्वुलौ भवत इति। अत्र क्रियार्थायां क्रियायामित्युक्तेरुद्देश्यत्वरूपतादर्थ्यमपि तुमुन्द्योत्यम्। तच्च संसर्गः। प्रकृत्युपपदार्थयोस्तादर्थ्यवत्समानकर्तृत्वमपीहाभिधानबललभ्यः संसर्गः। क्रियान्तराकाङ्क्षानुत्थापकतावच्छेदकरूपवैजात्येन तु न भानम्। तुमुनर्थे क्रियान्तराका-

---

१ संख्याशब्दस्यैकदा विवक्षाशब्देनैकदा चाविवक्षाशब्देन षष्ठीसमासं कृत्वा सरूपैकशेषेण द्विवचने सति संख्याया विवक्षानिर्णयः, संख्याया अविवक्षानिर्णयश्च कृत इत्यर्थो बोध्यः।

( क्त्वाद्यर्थनिर्णयः )

**समानकर्तृकत्वादि द्योत्यमेषामिति स्थितिः ॥३॥॥ (१९)**

( इति भट्टोजिदीक्षितविरचितकारिकासु क्त्वाद्यर्थनिर्णयः ) ।

**तुमादयस्तुमुनादयः । प्रकृत्यर्थे भावे । आदिना क्त्वादेः संग्रहः । भाव इत्यत्र मानमाह---अव्यय कृत इति । " अव्ययकृतो भावे "**

इत्यक्षादर्शनात् । कारकान्वययोग्यतावच्छेदकवैजात्येन तु भानमस्त्येव । एतद्विहितो ण्वुल् कर्तर्येव । कृष्णं द्रष्टुं याति, कृष्णं दर्शको यातीत्यादौ कृष्णकर्मकं भविष्यद्दर्शनोद्देश्यकं दर्शनकर्तृकर्तृकं यानम्, कृष्णकर्मकभविष्यद्दर्शनकर्तृकर्तृकं तद्दर्शनोद्देश्यकं यानमिति रीत्या बोधः । घञादिवाच्यो भावः सिद्धावस्थापन्न एव । पाक इत्यादौ सर्वसंख्यादियोगदर्शनात् । सिद्धत्वं च क्रियान्तराकाङ्क्षोत्थापकतावच्छेदकं यद्वैजात्यं तद्रूपवत्त्वमित्युक्तं प्राक् । तत्रापि प्रकृत्या साध्यावस्थापन्नस्यैवोपस्थितिः । अत एवौदनस्य पाक इत्यत्र ओदनस्येत्यस्य कारकषष्ठीत्वं, भोक्तुं पाक इत्यादौ तुमुनः सिद्धिश्च संगच्छते । ननु पाक इत्यादिघञन्तोपस्थितसाध्यावस्थापन्नविक्लित्त्यनुकूलव्यापारस्यैकदेशत्वेन कथं तत्रौदनस्येत्यादिकारकाणामन्वयः, पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेनेतिन्यायादिति चेन्न । तन्न्यायस्य क्रियातिरिक्तविषय एव स्वीकारात् । अत एव भोक्तुं गतः, देवदत्तेन ग्रामो गतः, कृतपूर्वी कटमित्यादौ कारकाणां गुणभूतक्रियायामन्वयोऽनुभूयमानः संगच्छते । वस्तुतो भोक्तुं पाक इत्याद्यसाध्वेव । क्रियार्थायां क्रियायामित्युक्त्वाऽप्रत्यासत्त्या निमित्तनिमित्तिक्रिययोरेकमात्रीयत्वलाभेन यथा तुमुन्प्रत्ययप्रकृतिभूतधातूपस्थाप्या निमित्तिक्रिया स्वप्रकृतिकतुमुनर्थं प्रत्यगुणीभूता साध्यावस्थापन्ना गृह्यते तथा उपपदभूताया निमित्तक्रियाया अपि स्वप्रकृतिकप्रत्ययार्थं प्रत्यगुणीभूतायाः साध्यावस्थापन्नाया एव ग्रहणात् । एतदनुसंधायैव शब्देन्दुशेखरे तुमुन्ण्वुलाविति सूत्रे भट्टनागेशेनोक्तं निमित्तभूतोपपदक्रिया चात्र तिङन्तोपस्थाप्यैवेति । भोक्तुं गत इत्यादौ चोपपदभूता निमित्तक्रिया गमिधातूपस्थाप्या, सा च स्वप्रकृतिकक्तप्रत्ययार्थकर्तारं प्रति गुणभूतेति न तादृशक्रियोपपदे सति तुमुनः साधुत्वमिति भावः । एवं च तुमुन् धात्वर्थानुवादक एव । अत एव घञादिवाच्यो भावो बाह्यः प्रकृत्यर्थात्, तुमुनादिवाच्यस्त्वाभ्यन्तर इत्युक्तं तुमर्थ इति सूत्रे भाष्ये । एवं क्त्वाणमुलादीनामप्यसत्त्वभूतो भाव एवार्थः । ननु क्त्वाप्रत्ययस्यासत्त्वभूतभावमात्रार्थकत्वस्वीकारे समानकर्तृकयोः पूर्वकाल इत्यादीनां वैयर्थ्यापत्तिरित्याशङ्कते—नन्वि-

इति वार्तिकादित्यर्थः। ननु "समानकर्तृकयोः पूर्वकाले" [ पा० सू० -४-२ ] इत्यादिसूत्राणां का गतिस्तत्राऽऽह—समानकर्तृकत्वादीति। अयं भावः—भोक्तुं पचति भुक्त्वा व्रजतीत्यादावेकवाक्यता सर्वसिद्धा भोजनपाकक्रिययोर्विशेषणविशेष्यभावमन्तरेणानुपपन्ना। अन्यथा भुङ्क्ते व्रजतीत्यादावप्येकवाक्यतापत्ते। तथा च तयोर्विशे-

---

त्यादि। का गतिरिति। पूर्वकाल इत्यादीनामुपादानात्पूर्वकालादीनां क्त्वाप्रत्ययवाच्यता प्रतीयते। भावमात्रार्थकत्वे तु तदसंगतिः। अतः कर्तृत्वादेः क्त्वाप्रत्ययवाच्यत्वं स्वीकार्यम्। क्त्वाप्रत्ययस्य कर्तृरूपार्थवाचकत्वादेव रोटिकाः पक्त्वाऽहं भोक्ष्य इत्यत्रास्मच्छब्दात्तृतीया न। क्त्वाप्रत्ययेन पाककर्तुरभिधानात्। पाककर्तुर्भोजने स्वनिष्ठकर्तृत्वनिरूपकतासंबन्धेनान्वयात्समानकर्तृकत्वमपि लभ्यत इत्याशयेनाऽऽह—समानकर्तृकत्वादीति। क्त्वाविधायकं तु 'समानकर्तृकयोः पूर्वकाले' इति सूत्रम्। तदर्थस्तु—समानकर्तृकयोरिति निर्धारणे षष्ठी। पूर्वकाल इति कर्मधारयः। समान एकः कर्ता ययोस्तौ, तयोः समानकर्तृकयोः क्रियारूपार्थयोर्मध्ये पूर्वकालविशिष्टक्रियारूपार्थवृत्तेर्धातोः क्त्वाप्रत्ययो भवतीति। तथा च पूर्वकालः क्त्वाप्रकृत्यर्थे प्रकारः। पूर्वकाल इत्यस्य स्थाने भूत इति तु नोक्तं, लाघवानादरात्। भूतत्वेन बोधाननुभवाच्च। तुमुन्वत्क्त्वाप्रकृत्यर्थक्रिया क्रियान्तरे विशेषणं धातुसंबन्धाधिकारात्। विशेष्यविशेषणभावश्च संबन्धमन्तराऽनुपपन्न इति क्त्वाप्रकृत्यर्थस्याऽऽनन्तर्यसंबन्धेन धात्वन्तरार्थेऽन्वयः। एवं च षष्ठ्याः संबन्धवाचकत्ववत्क्त्वादीनामपि समानकर्तृकत्वादिरूपसंबन्धवाचकत्वं वक्तुं शक्यमिति नवीनाः। प्राचीनास्तु समानकर्तृकयोः क्रियारूपार्थयोर्मध्ये पूर्वकालसंबन्ध्यर्थवाचकाद्धातोः क्त्वेत्यर्थः। पूर्वकाल इति च बहुव्रीहिरित्याशयः। ततश्च वाक्यशक्योक्तसंबन्धतात्पर्यग्राहकाः क्त्वादय इत्यभिप्रेत्याऽऽह—अयं भाव इति। एकवाक्यतेति। भविष्यद्भोजनफलिका वर्तमानकालिकी पाकक्रिया, भोजनोत्तरकालिकं वर्तमानं व्रजनमित्येवंरीत्या एकक्रियामुख्यविशेष्यकबोधजनकत्वादेकवाक्यतेत्यर्थः। सर्वसिद्धा—सर्वानुभवसिद्धा। ननु भुङ्क्ते पचति चेतिवदेककर्तृकं भोजनं, एककर्तृकं च पचनमित्येवं क्रियाद्वयमुख्यविशेष्यका भिन्नवाक्यतेति भावः। सा चैकवाक्यता भोजनपाकक्रिययोर्विशेषणविशेष्यभावमन्तरा नोपपद्यत इत्याह—अन्यथेति। विशेषणविशेष्यभावं विनाऽप्येकवाक्यत्वाङ्गीकार

**षणविशेष्यभावानिरूपकः संसर्गो जन्यत्वं सामानाधिकरण्यं पूर्वोत्तरभावो व्याप्यत्वं चेत्यादिरनेकविधः। तथा च भोक्तुं पचति भुक्त्वा तृप्त इत्यादौ भोजनजनिका पाकक्रिया भोजनजन्या तृप्तिरिति बोधः। अत एव जलपानानन्तर्यस्य तृप्तौ सत्त्वेऽपि पीत्वा तृप्त इति न प्रयो-**

---

इत्यर्थः । **एकवाक्यतापत्तेरिति** । एककर्तृका वर्तमानकालिकी भुजिक्रिया, एककर्तृका वर्तमानकालिकी व्रजिक्रियेति क्रियाद्वयमुख्यविशेष्यताशाली बोधोऽनुभवसिद्धः, नतु तत्रैकमुख्यविशेष्यताशालिरूपैकवाक्यताऽनुभवसिद्धेत्यर्थः । एवं च विशेषणविशेष्यभावोपपादकः संबन्धोऽवश्यं वक्तव्य इत्याह—**तथा चेति** । **तयोरिति** । भुजिपचिक्रिययोरित्यर्थः । विशेषणविशेष्यभावनिरूपकः संबन्धः समानकर्तृकत्वपूर्वोत्तरकालिकत्ववदन्योऽपि बहुविधः संभवतीति सोऽपि क्त्वाद्योत्य इत्याशयवानाह—**जन्यत्वमित्यादि** । **सामानाधिकरण्यमिति** । एकाश्रयवृत्तित्वमित्यर्थः । एककर्तृकत्वमिति यावत् । **पूर्वोत्तरभाव इति** । पूर्वकालवृत्तित्वोत्तरकालवृत्तित्वसमुदाय इत्यर्थः । **व्याप्यत्वमिति** । अविनाभाव इत्यर्थः । विना—व्यापकमृते, न भावः—स्थितिरिति अविनाभावो व्याप्तिरिति यावत् । तुमुनाद्यन्तस्थले शाब्दबोधप्रकारं दर्शयति **तथाचेति** । **भोजनजनिकेति** । भोक्तुं पचतीत्यत्र भोजनपचनक्रिययोर्जन्यजनकभावः संबन्धः, स च तुमुन्द्योत्यः । तुमुन्ण्वुलाविन्यत्र क्रियार्थायामित्युक्तेः । क्रियार्थत्वं च जन्यजनकभावरूपमिति भावः परे तूद्देश्यत्वनिरूपकत्वरूपं तादर्थ्यं तुमुनादिद्योत्यं संसर्गतया भासते, तच्च—तदिच्छाधीनेच्छाविषयत्वम् । भोजनेच्छाधीनेच्छाविषयत्वात्पाकस्य भोजननिष्ठोद्देश्यत्वानिरूपकत्वम् । भविष्यत्त्वमपि तुमुन्द्योत्यम् । तुमुन्ण्वुलावित्यत्र भविष्यतीत्यनुवृत्तेः । तथा च भविष्यद्भोजनोद्देश्यको भोजनकर्तृकर्तृकः पाक इति बोधः । **भोजनजन्येति** । भुक्त्वा तृप्त इत्यत्र भोजनतृप्त्योर्जन्यजनकभावसंसर्गाद्भोजनजन्या या तृप्तिस्तदाश्रय इत्यर्थः । गत्यर्थाकर्मकेति कर्तरि क्तप्रत्ययविधानात् । ननु भुक्त्वा तृप्त इत्यत्र तत्कर्तृकभोजनानन्तर्यवती या तृप्तिस्तदाश्रय इत्येवमानन्तर्यसमानकर्तृकत्वयोरेव संसर्गतया भानमस्तु किं गुरुशरीरस्य जन्यत्वस्य संसर्गतया भानस्वीकारेणेत्यत आह—**अत एवेति** । जन्यत्वस्य संसर्गतया भानस्वीकारादेवेत्यर्थः । **न प्रयोग इति** । भोजनजन्यतृप्तौ जलपानानन्तर्यसत्त्वे-

गः। सामानाधिकरण्यस्यापि संसर्गत्वेनार्थात्समानकर्तृकत्वमपि लब्धम्। भुक्त्वा व्रजतीत्यादौ पूर्वोत्तरभावः सामानाधिकरण्यं च संसर्ग इति भोजनसमानाधिकरणा तदुत्तरकालिकी व्रजनक्रियेति बोधः। अधीत्य तिष्ठति मुख व्यादाय स्वपितीत्यदौ चाध्ययनव्या-

---

ऽपि पीत्वा तृप्त इति न प्रयोगो भवति। निरुक्ततृप्तौ जलपानजन्यत्व भावादित्यर्थः। य एव भोजनाश्रयः स एव तृप्त्याश्रय इति भोजनतृप्त्योरेकाश्रयवृत्तिरूपसामानाधिकरण्यस्य संसर्गतया प्रतीतेः समानकर्तृकत्वमपि लब्धमिति बोध्यम्। **सामानाधिकरण्यं च संसर्ग इति**। तथा च भुक्त्वा व्रजतीत्यत्र तत्कर्तृकपूर्वकालवृत्तिभोजनोत्तरकालवृत्ति तत्कर्तृकं व्रजनमिति बोधः। पूर्वोत्तरकालवृत्तित्वं सामानाधिकरण्यं चेति द्वयस्य संसर्गत्वेन भानाद्यादृशो बोधाकारः संपद्यते तमाह—**भोजनसमानेति**। भोजनेन समानमधिकरणमाश्रयो यस्या व्रजनक्रियायाः सेत्यर्थः। य एव भोजनक्रियाया आश्रयः स एव व्रजनक्रियाया आश्रय इति भावः। **तदुत्तरकालिकीति**। पूर्वकालवृत्तिभोजनोत्तरकालिकी व्रजनक्रियेत्यर्थः। मत्प्रसूतिमनाराध्य प्रजेति त्वां शशाप सा ( रघु वं. स. १ श्लो. ७७) अस्य, अवजानासि मां यस्मादतस्ते न भविष्यतीति पूर्वार्धम्। अत्र स्थितस्येत्यध्याहारः। मत्प्रसूतिमनाराध्य स्थितस्य ते प्रजा न भविष्यतीति सुरभिकर्तृको राजकर्मकः शाप इत्यर्थः। तथा च स्थितिक्रियामादाय समानकर्तृकत्वादेर्निर्वाहान्न क्त्वाप्रत्ययानुपपत्तिः। तथा च मत्प्रसूतिकर्मकाराधनाभावसमानाधिकरणा या स्थितिस्तादृशस्थित्याश्रयाभिन्नत्वत्संबन्धी भविष्यत्प्रजाकर्तृकभवनाभाव इति बोधः। पूर्वोत्तरकालवृत्तित्वेऽव्यवधानांशोऽपि निवेशनीयः। तेन पूर्ववर्षोत्पन्नं श्वशुरगृहे भोजनं सांप्रतिकवर्षाधिकरणकं च व्रजनमादाय श्वशुरगृहे भुक्त्वा व्रजतीति न प्रयोगः। तादृशभोजनव्रजनयोर्दीर्घकालकृतव्यवधानसत्त्वादित्यर्थः। अव्यवधानं च तात्पर्यवशात्क्वचिद्दण्डेन क्वचिन्मुहूर्तेन क्वचित्प्रहराहरादिना यथायथं ग्राह्यम्। तेनाद्य भुक्त्वा श्वो गन्तेति न प्रयोगानुपपत्तिः। नन्वेवं पूर्वोत्तरकालत्वादेः संसर्गत्वाङ्गीकारे मुखं व्यादाय स्वपितीति प्रयोगो न स्यात्। स्वापकाल एव मुखव्यादानमिति व्यादानस्य स्वापपूर्वकालत्वाभावात्। तथाऽधीत्य तिष्ठतीति प्रयोगस्याप्यनुपपत्तिः। अध्ययनस्थित्योः सहभावेनावस्थानादध्ययनानन्तर्यस्य स्थितावसत्त्वादित्याशयवानाह—**अधीत्य तिष्ठतीत्यादि**। अत्राध्यय-

( क्त्वाद्यर्थनिर्णयः )

**दानयोरभावकालेऽप्रयोगाद्यदा यदाऽस्य स्थितिः स्वापश्च तदा तदाऽध्ययनं मुखव्यादानं चेति कालविशेषावच्छिन्नव्याप्यत्वबोधाद्व्याप्यत्वं**

नसहितस्तिष्ठतीति बोधः। न त्वादावध्ययनं कृत्वा तदुत्तरकाले तिष्ठतीत्यर्थः। यदा हि तत्कर्तृकाध्ययनोत्तरकालिकत्वे तत्कर्तृकस्थितेर्बोधनीयत्वेन विवक्ष्यते तदाऽधीत्य तिष्ठतीति प्रयोगो भवत्येव । अत्रत्यप्रयोगस्तु यदा यदा तिष्ठति तदा तदाऽध्ययनसहभावेनैव तिष्ठतीत्यर्थबोधनविवक्षयेति भावः । एवं मुखं व्यादाय स्वपितीत्यत्रापि यदा यदा हि स्वपिति तदा तदा तु मुखव्यादानसाहित्येनैव स्वपितीत्यर्थविवक्षेति बोध्यम् । तथा च 'अभावकालेऽप्रयोगात्' पूर्वकालिकाध्ययनस्वापोत्तरकालिकौ स्थितिस्वापक्रिये इत्यर्थबोधनेच्छया निरुक्तप्रयोगयोरकरणादित्यर्थः। न तु तादृशेऽर्थे तादृशप्रयोगौ न भवत इति भावः। अत्र यदा यदेति वीप्सया स्थितिस्वापयोर्व्याप्यत्वं, तदा तदेत्यनेन चाध्ययनव्यादानयोर्व्यापकत्वं च सूचितम्। एवं च व्यापकमध्ययनं विना कदापि न तिष्ठति, किंतु निरन्तराध्ययनशालीत्यर्थः। तथा मुखव्यादानं व्यापकं विना कदापि न स्वपिति, किंतु निरन्तरमुखव्यादानवत्स्वापशालीत्यर्थ इति भावः। **कालविशेषावच्छिन्नेति**। तत्तत्कालविशेषावच्छिन्नं यत्तत्कर्तृकमध्ययनं मुखव्यादानं च, तन्निष्ठव्यापकतानिरूपितव्याप्यता तत्कर्तृकस्थितिस्वापयोर्बुध्यत इति तत्र व्याप्यत्वं सामानाधिकरण्यं च संसर्ग इति भावः । एवं च स्वसमानाधिकरणात्यन्ताभावाप्रतियोगित्वादध्ययनं व्यादानं च व्यापकम्। स्वं—तत्कालविशेषावच्छिन्नौ स्थितिस्वापौ, तदधिकरणं—तादृग्देवदत्तः, तन्निष्ठो योऽत्यन्ताभावः—अध्ययनमुखव्यादानयोरत्यन्ताभावो नाऽऽयाति, देवदत्ते तयोः सत्त्वात्। अपितु घटात्यन्ताभावः, प्रतियोगी घटः, अप्रतियोगि अध्ययनं मुखव्यादानं च, अप्रतियोगित्वं च तयोरिति कृत्वा स्थितिस्वापनिरूपितव्यापकत्वमध्ययनमुखव्यादानयोर्निर्बाधम्। तथा स्वाभाववदवृत्तित्वं व्याप्यत्वम्। स्वं—अध्ययनमुखव्यादाने, स्वाभावः—अध्ययनव्यादानयोरभावः, स्वाभाववान्—तादृग्देवदत्तः, तदवृत्तिगमनवचनादि, तदवृत्ति— स्थितिस्वापौ, तदवृत्तित्वं स्थितिस्वापयोरिति कृत्वा अध्ययनव्यादाननिरूपितं व्याप्यत्वं स्थितिस्वापयोर्बोध्यम् । ततश्च कालविशेषावच्छिन्नेत्यादिग्रन्थस्यायमर्थः—तत्कालावच्छिन्नस्वाधिकरणनिष्ठात्यन्ताभावप्रतियोगितानवच्छेदकाध्ययनमुखव्यादानत्ववत्सामानाधिकरण्यरूपं व्याप्यत्वं स्थितिस्वापनिष्ठं तद्बोधाद्वा

सामानाधिकरण्यं च संसर्गः। एवं चान्यलभ्यत्वान्न सूत्रात्तेषां वाच्यतालाभ इति युक्तमव्ययकृतो भाव इति। एवं च प्रकृत्यर्थक्रिययोः संसर्गे तात्पर्यग्राहकत्वरूपं द्योतकत्वं क्त्वादीनाम्। अत एव " समानकर्तृकयोः " [ पा० सू० -४-२१ ] इति सूत्रे स्वशब्देनोपात्तत्वान्नेति भाष्यप्रतीकमादाय पौर्वापर्यकाले द्योत्ये क्त्वादिर्विधीयते न तु

---

एवं चेति। जन्यत्वादीनां संसर्गतया भाने चेत्यर्थः। अन्यलभ्यत्वादिति। वाक्यशक्तिलभ्यत्वान्न तेषां क्त्वाप्रत्ययवाच्यत्वमिति परममूले यदुक्तं 'अव्ययकृतो भावे' भवन्तीति तत्सम्यगेवेति भावः। इदमत्र बोध्यम्—समानकर्तृकेतिसूत्रविहितक्त्वान्तप्रयोगस्थले समानकर्तृकत्वपूर्वोत्तरभावयोः संसर्गतया भानं सार्वत्रिकम्। जन्यत्वादीनां तु तात्पर्यवशात्क्वचिदेव तथा भानमिति। एतावता वाक्यार्थवर्णनेन यत्फलितं तदाह—एवं चेति। समानकर्तृकत्वादीनां क्त्वादिप्रत्ययवाच्यत्वाभावे चेत्यर्थः। प्रकृत्यर्थक्रिययोरिति। प्रकृत्यर्थश्च क्रिया चेति द्वंद्वः। अथवा क्त्वाप्रत्ययस्य समभिव्याहृतक्रियावाचकघटकप्रत्ययस्य च प्रकृतिर्ग्राह्या। तथा च प्रकृत्योरर्थौ ये क्रिये तयोरित्यर्थ इति नासंगतिः। संसर्गे—समानकर्तृकत्वादिरूपे वाक्यशक्त्योक्तसंबन्धे। तात्पर्यग्राहकत्वेन द्योतकाः क्त्वाप्रत्ययादय इत्यर्थः। निरुक्तसंबन्धद्योतकत्वमेव क्त्वादीनां नतु वाचकत्वमिति भावः। अत एवेति। क्त्वादीनां समानकर्तृकत्वादिसंबन्धद्योतकत्वादेवेत्यर्थः। भाष्यप्रतीकमिति। समानकर्तृकयोरिति सूत्रे—'इह कस्मान्न भवति पूर्वं भुङ्क्ते पश्चाद् व्रजति' इत्यत्र भोजनव्रजनयोः समानकर्तृकत्वेन पूर्वोत्तरकालिकत्वेन च क्त्वामापाद्य तत्समाधानार्थं स्वशब्देनोक्तत्वान्न ' इत्युत्तरितम्। तदर्थस्त्वयम्—स्वं—क्त्वाप्रत्ययबोध्यार्थः पूर्वोत्तरकालः, तद्वाचकः शब्दः—पूर्वं पश्चादिति च, तेन पूर्वोत्तरकालस्योक्तत्वादुक्तार्थानामप्रयोग इति न्यायात्क्त्वाप्रत्ययो न भवतीति। पौर्वापर्यकाले द्योत्य इति। नतु विषय इति। प्रयोगघटकशब्दबोध्ये पौर्वापर्ये क्त्वादिर्न विधीयते, किंतु द्योत्ये विधीयत इति कैयटश्च। अत्र पूर्वपश्चाच्छब्दाभ्यां पौर्वापर्यस्योक्तत्वान्न क्त्वा इत्यर्थः। अनेन भाष्यकैयटग्रन्थेन पूर्वोत्तरकालत्वादेर्द्योतकत्वमेव क्त्वादीनां, नतु वाचकत्वमिति स्पष्टमेव सूचितमिति संसर्गतयैव भानं भाष्यकैयटसंमतमिति भावः। क्त्वाप्रत्ययार्थविषये यन्मतान्तरं तद्दूषयितुमनुवदति—यत्त्विति। समानकर्तृकयोरिति बहुव्री-

( क्त्वाद्यर्थनिर्णयः )

विषय इति भाव इति कैयटः । यत्तु समानकर्तृकयोरिति सूत्रात्समानकर्तृकत्वं क्त्वावाच्यमन्यथौदनं पक्त्वाऽहं भोक्ष्य इत्यत्र मयेति तृतीयाप्रसङ्गश्च । न चाऽऽख्यातेन कर्तुरभिधानान्न सेति वाच्यम् । भोजनक्रियाकर्तुरभिधानेऽपि पाकक्रियाकर्तुस्तदभावात् । अनभिहिते भवतीति पर्युदासाश्रयणात् । अत एव प्रासाद आस्त इत्यत्र प्रसादनक्रियाधिकरणस्याभिधानेऽप्यस्तिक्रियाधिकरणस्यानभिधानात्सप्तमीति भाष्ये स्पष्टम् । तस्मात्क्त्वाप्रत्ययस्य कर्तृवाचित्वमावश्यकमि-

---

हिः । क्रियारूपार्थोऽन्यपदार्थः । पूर्वकाल इति च पूर्वः कालो यस्येति षष्ठ्यर्थे बहुव्रीहिः । तथा च समानकर्तृकयोः क्रियारूपार्थयोर्मध्ये पूर्वकालसंबन्धिक्रियारूपार्थवाचकाद्धातोः क्त्वेत्यर्थात्क्रियाया धातुनैव लाभात्तत्क्रियाकर्तृकर्तृकत्वरूपं समानकर्तृकत्वं क्त्वाप्रत्ययवाच्यमित्यङ्गीकर्तव्यम् । समानकर्तृकेत्युपादानात्समानकर्तृकत्वस्य क्त्वावाच्यत्वप्रतीतेरिति भावः । कर्तृकर्तृकत्वस्य वाच्यत्वमनादृत्य द्योतकत्वाभ्युपगमे बाधकमाह—अन्यथेति । समानकर्तृकत्वस्य क्त्वावाच्यत्वानभ्युपगम इत्यर्थः । तृतीयाप्रसङ्ग इति । ओदनं पक्त्वेति क्त्वाप्रत्ययेन कर्तुरनभिधानादहमित्यस्मच्छब्दात्कर्तरि तृतीयायाः प्रसङ्गः स्यादित्यर्थः । ननु अनभिहित इत्यत्राभिहिते नेति प्रसज्यप्रतिषेधाश्रयणे भोक्ष्य इति तिङा कर्तुरुक्तत्वान्न मयेति तृतीयापत्तिरित्याह—न चाऽऽख्यातेनेति । अनभिहित इत्यत्राभिहिते नेत्येवं प्रसज्यप्रतिषेध आश्रयितुमशक्यः, वाक्यभेदादिदोषग्रस्तत्वात् । तथा च भोक्ष्य इति भुजधातूत्तरतिङा भुजिक्रियाकर्तुरुक्तत्वेऽपि पचिक्रियाकर्तुरनभिधानेनाभिहितभिन्नत्वान्मयेति तृतीया दुर्वारा । कर्तुरेकत्वेऽपि कर्तृत्वनिरूपकक्रियाभेदात्कर्तृभेदेन पचिक्रियाकर्तुरनभिहितत्वमित्यर्थः । तदाह—अनभिहिते भवतीति । अत एवेति । अनभिहित इत्यत्र लाघवेन पर्युदासाश्रयणादेवेत्यर्थः । अनभिहित इत्यत्र पर्युदासाश्रयणे न केवलं लाघवं किंतु फलमप्यस्तीत्याह—प्रासादे आस्त इति । प्रसीदत्यस्मिन्निति प्रपूर्वकात्सदधातोरधिकरणे हलश्चेति घञ् । उपसर्गस्य घञीति पूर्वपदस्य दीर्घः । अत्र प्रकृत्यर्थसदिक्रियानिरूपिताधिकरणत्वस्य घञोक्तत्वेऽपि आसिक्रियानिरूपिताधिकरणत्वस्यानुक्तत्वात्प्रासादे इति सप्तमीति अनभिहित इत्यत्र भाष्ये स्पष्टमित्यर्थः । उपसंहरति—तस्मादिति । क्त्वकर्तृवाचित्वं निरस्यति—तन्नेति । क्त्वः कर्तृवाचकत्वं सूत्रान्न लभ्यते इत्येतत्स्प-

**ति, तन्न, सूत्रात्तस्य वाच्यत्वालाभात् । समानकर्तृकयोः क्रिययोः पूर्वकाले क्त्वेत्येव तदर्थात् । अन्यथा समानकर्तरीत्येव सूत्रन्यासः स्यात् । तृतीयापादनं त्वाख्यातार्थक्रियायाः प्रधानभूतायाः कर्तुरभिधानात्प्रधानानुरोधेन गुणे कार्यप्रवृत्तेर्न संभवति ।**

---

दूषयितुं सूत्रार्थमाह—**समानकर्तृकयोः क्रिययोरित्यादि** । क्रियारूपान्यपदार्थे समानकर्तृकयोः पूर्वकाल इति च बहुव्रीहिः । तथा च समानः कर्ता ययोस्तादृशक्रिययोर्मध्ये पूर्वकालसंबन्धिक्रियारूपार्थवाचकाद्धातोः क्त्वेत्यर्थात्समानकर्तृकत्वस्य पूर्वकालत्वस्य च क्रियारूपधात्वर्थविशेषणतैवावगम्यते, न तु विधेयकर्तृविशेषणतेति भावः । यथा चित्रगुर्गोप इत्यत्र चित्रगवीणां गोपरूपान्यपदार्थविशेषणत्वमेव नतु गोपस्येव तन्निष्ठसत्ताविशेषणत्वं तद्वदित्याशयः । एवं च कर्तुः क्त्वावाच्यत्वं कथमपि न लभ्यत इति तात्पर्यम् । ननु यदि कर्तृवाचित्वं क्त्वो न विवक्ष्यते तदा समानकर्तृकत्वादेर्जन्यत्वादिवदाकाङ्क्षादिवशात्संसर्गतयैव प्रतीतेः सिद्धत्वात्तदुपादानं सूत्रे व्यर्थमेव स्यादिति पूर्वोक्तरीत्या समानकर्तृकत्वस्य क्त्वावाच्यत्वमास्थेयमित्याशङ्क्याऽऽह—**अन्यथेति** । पूर्वोक्तरीत्या कर्तुः क्त्वावाच्यत्वे विवक्षित इत्यर्थः । **समानकर्तरीति** । समानकर्तृकयोरित्यपनीय तत्स्थाने समानकर्तरीति वदेत्कर्तरि कृदितिवदित्यर्थः । समानकर्तरीत्यस्यैककर्तरीत्यर्थः । अस्य क्त्वा भवतीति शेषः । क्त्वार्थकर्तुः केन कर्त्रा ऐक्यमित्यपेक्षायां प्रत्यासत्त्या समभिव्याहृततिङन्तोपस्थाप्यविशेष्यभूतक्रियाकर्त्रैक्यं गृह्यते । तथा च पूर्वकालिकभोजनक्रियाकर्त्रभिन्नकर्तृनिष्ठं तदुत्तरकालिकं व्रजनमिति भुक्त्वा व्रजतीत्यत्र शाब्दबोधः । यतश्च तथा सूत्रन्यासो न कृतस्ततः कर्तुः क्त्वावाच्यत्वं पाणिनेर्नेष्टमित्यवगम्यत इति भावः । ननु यदि कर्तुः क्त्वावाच्यत्वं नेष्यते तर्हि ओदनं पक्त्वाऽहं भोक्ष्य इत्यत्राम्मच्छब्दात्तृतीयापत्तिस्तदवस्थैव स्यादित्याशङ्क्य तां निराकर्तुमाह—**तृतीयापादनं त्विति** । **आख्यातार्थक्रियाया इति** । भावप्रधानमाख्यातमिति यास्कोक्तेस्तिङन्तोपस्थाप्यक्रिया विशेष्यभूता, सा चात्र भोक्ष्य इति भुजिक्रियेत्यर्थः । **कर्तुरभिधानादिति** । तादृशप्रधानभूतक्रियानिरूपितकर्तुस्तिङोक्तत्वात्तादृशप्रधानक्रियाविशेषणभूतायाः क्त्वाप्रत्ययप्रकृतिभूतधातूपस्थाप्यायाः पचिक्रियायाः कर्तुरप्युक्तत्वेन तत्र तृतीयापादनं न संभवतीत्यर्थः । कर्तृत्वनिरूपकपाकभोजनक्रिययोर्भेदेन तन्निरूपितकर्तृत्वयोर्भेदेऽपि प्रधानभोजन-

( क्त्वाद्यर्थनिर्णयः )

उक्तं च वाक्यपदीये—

"प्रधानेतरयोर्यत्र द्रव्यस्य क्रिययोः पृथक् ।
शक्तिर्गुणाश्रया तत्र प्रधानमनुरुध्यते ॥
प्रधानविषया शक्तिः प्रत्ययेनाभिधीयते ।
यदा गुणे तदा तद्वदनुक्ताऽपि प्रतीयते" इति ॥

किं चान्यथा कर्मणोऽपि क्त्वार्थतापत्तिः पक्त्वौदनो मया भु-

---

क्रियानिरूपितकर्तृत्वविशिष्टकर्तुरभिधाने सति तद्विशेषणीभूतपचिक्रियानिरूपित-कर्तृत्वविशिष्टकर्तुरप्यभिधानस्य भाष्यादिसंमतत्वेन प्रकृतोदाहरणे तृतीयापादनं सुतरां दुर्वचमिति भावः । अत्रार्थे हरिकारिके प्रमाणयति—उक्तं चेति । प्रधा-नेतरयोरिति । अस्य क्रिययोरित्यत्रान्वयः । क्रिययोश्च निरूपितत्वसंबन्धेन कारकशक्तावन्वयः । कारकशक्तेश्चाऽऽश्रयतासंबन्धेन द्रव्येऽन्वयः । तथा च वि-शेष्यविशेषणभूतक्रियाद्वयनिरूपितकारकशक्तिद्वयं पृथग्यत्रैकद्रव्याश्रितं भवतीति शेषः । शक्तिर्गुणाश्रयेति । तत्र विशेषणभूतक्रियानिरूपिता कारकशक्तिः, विशेष्यभूतक्रियानिरूपितां कारकशक्तिमनुरुध्यतेऽनुसरतीत्यर्थः । तदनुरोधमेव वि-शदयति—प्रधानविषयेति । प्रधानक्रियानिरूपिता कारकशक्तिर्यदा प्रत्ययेन—तिङाऽभिधीयते तदा गुणक्रियानिरूपिता कारकशक्तिस्तदुत्तरप्रत्ययेनानभिहिताऽपि तद्वदभिहितवत्प्रतीयत इत्यर्थः । एतत्तुल्यन्यायात्प्रधानक्रियानिरूपितकारकशक्ते-स्तिङाऽनुक्तत्वे सति गुणक्रियानिरूपितकारकशक्तिः स्ववाचकप्रत्ययेनोक्ताऽ-प्यनुक्तवद्बोध्या । स्वशब्देन गुणक्रिया ग्राह्या । अत एव प्रासादे इत्यत्र घञ्प्र-त्ययेन गुणभूतसदिक्रियानिरूपिताधिकरणशक्तेरुक्तत्वेऽपि आस्त इति तिङन्तोप-स्थितप्रधानासिक्रियानिरूपिताधिकरणशक्तेस्तिङाऽनुक्तत्वेन सदिक्रियानिरूपिताधि-करणशक्तेरप्यनुक्तवत्प्रतीयमानत्वेन प्रासादे आस्त इत्यत्र सप्तमीति भाष्य उक्तम् । अवश्यं चैतद्गुणक्रियानिरूपितकारकशक्तेः प्रधानक्रियानिरूपितकारकशक्त्यनु-रोधित्वमङ्गीकर्तव्यम् । अन्यथौदनं पक्त्वाऽहं भोक्ष्य इत्यत्र क्त्वः कर्तृवाचक-त्वस्वीकारेण तृतीयापादनस्य निरसनेऽपि पक्त्वौदनो मया भुज्यत इत्यत्रौदनपदो-त्तरं द्वितीयापादनं दुर्निवारं स्यादित्याशयवानाह—किं चेति । अन्यथेति । गुणक्रियानिरूपितकारकशक्तेः प्रधानक्रियानिरूपितकारकशक्त्यनुरोधित्वानभ्युपगम इत्यर्थः । क्त्वार्थतापत्तिरिति । पक्त्वौदनो भुज्यत इत्यत्रौदने भुजिक्रियानि-

ज्यत इत्यत्र द्वितीयायाः प्रकारान्तरेणावारणात्, इत्यास्तां विस्तरः ॥ ॥ १ ॥ ( ५९ ) ॥

---

रूपितं तथा पचिक्रियानिरूपितं चेति क्रियाद्वयनिरूपितं कर्मत्वद्वयं प्रतीयते । तत्र भुजधातूत्तरतिङ्प्रत्ययेन भुजिक्रियानिरूपितकर्मत्वस्योक्तत्वेऽपि पचिक्रियानिरूपितकर्मत्वस्य पचिधातूत्तरक्त्वाप्रत्ययेनानभिधानादोदनपदोत्तरं द्वितीया प्रसज्यते । तद्वारणार्थं क्त्वः कर्मवाचकत्वमप्यङ्गीकर्तव्यं भवतीति कर्मणः क्त्वावाच्यतापत्तिरित्यर्थः । **प्रकारान्तरेणेति** । क्त्वः कर्तरि शक्त्यङ्गीकारेण द्वितीयावारणं न संभवतीत्यर्थः । पचिक्रियानिरूपितकर्मत्वस्यौदनगतस्य क्त्वाप्रत्ययेनानभिधानादिति भावः । कर्तृवाचकत्ववत्क्त्वः कर्मवाचकत्वेऽपीष्टापत्तिरेवेति तु वक्तुमशक्यम् । तादृशकल्पनायां प्रमाणाभावाद्गौरवाच्च । गुणक्रियानिरूपितकारकशक्तेः प्रधानक्रियानिरूपितकारकशक्त्यनुरोधित्वानुसरणे तु तिङन्तोपात्तप्रधानभुजिक्रियानिरूपितकर्मत्वशक्तेस्तिङाऽभिधानाद् गुणभूतपचिक्रियानिरूपितायास्तस्याः शक्तेः क्त्वयाऽनभिधानेऽप्यभिहितवत्प्रतीयमानत्वान्न द्वितीयापत्तिरिति संपिण्डितोऽर्थः । अपि च वाचकत्वपक्षे क्त्वादीनां जन्यत्वव्याप्यत्वादिनाऽनेकार्थत्वापत्तिः । जन्यत्वादीनां वाच्यत्वे प्रत्ययार्थत्वात्प्रकृतिप्रत्ययार्थयोः प्रत्ययार्थस्य प्राधान्यमिति न्यायेन तेषां विशेष्यत्वापत्त्या भुक्त्वा भुक्त्वा व्रजतीत्यत्र आभीक्ष्ण्ये द्वे वाच्ये ' इति द्वित्वानापत्तिः । क्रियाप्राधान्याभावात् । नच सिद्धान्तेऽपि क्त्वान्तोपस्थितक्रियाणां तिङन्तोपात्तक्रियायां विशेषणत्वात्क्रियाप्राधान्यविरहेण भुक्त्वा भुक्त्वेति द्वित्वानापत्तिस्तदवस्थैवेति वाच्यम् । भावप्रधानमाख्यातमित्यस्य प्रत्ययार्थस्य प्राधान्यमिति न्यायापवादकत्वे प्रत्ययार्थापेक्षया तत्प्रकृतिभूतधात्वर्थस्य प्राधान्यमित्यर्थस्यैव विवक्षितत्वेन क्रियान्तरं प्रति विशेषणत्वेऽपि क्त्वान्तोपात्तक्रियाणां न क्रियाप्राधान्यस्य हानिः । जन्यत्वादीनां क्त्वावाच्यत्वे तु तेषां प्रत्ययार्थत्वेन विशेष्यत्वात्क्रियाप्राधान्यं भज्येतेति भावः । अत्रेदं बोध्यम्—औत्सर्गिकप्रत्ययार्थप्राधान्यापवादकेन भावप्रधानमाख्यातमितिवचनेन तिङन्तोपात्तक्रियायाः प्राधान्यबोधनात्स्नात्वा भुक्त्वा पीत्वा व्रजतीत्यादौ व्रजनक्रिया( निरूपित )वधिकपूर्वकालत्वमादायैव सर्वत्र क्त्वा, नतु भोजनादिक्रियावधिकपूर्वकालत्वमादाय । तथा सति तस्यापत्यमित्यादावेकत्वादेरिव प्रकृते समानकर्तृकयोरिति द्विवचनोपात्तस्य द्वित्वस्याविवक्षायामप्यमीषां ब्राह्मणानां पूर्वमानीयतामित्युक्ते सर्वेभ्यः पूर्व एवाऽऽ-

( स्फोटनिर्णय. )

इति रङ्गोजिभट्टात्मजकौण्डभट्टविरचिते वैयाकरणभूषणसारे क्त्वाद्यर्थनिर्णयः समाप्तः ।

---

( अथ स्फोटवादः ) ।

---

सिद्धान्तनिष्कर्षमाह—

वाक्यस्फोटोऽतिनिष्कर्षे तिष्ठतीति मतास्थितिः ।

साधुशब्देऽन्तर्गता हि बोधका न नु तत्स्मृताः ॥१॥ ( ६० )

यद्यपि वर्णस्फोटः पदस्फोटो वाक्यस्फोटोऽखण्डपदवाक्यस्फोटौ

---

नीयते, नतु यस्मात्कस्माच्चित् पूर्वो मध्यमस्तथाऽत्रापि स्नातेरेव क्त्वाप्रत्ययः स्यान्नतु भुज्यादेः । एवं स्नानादिपानान्ताक्रियाणां व्रजनक्रियायामेवान्वयः । नतु स्नानक्रियाया भोजनादौ । गुणानां च परार्थत्वादिति न्यायेन स्नानादिपानान्ताक्रियाणां परस्परमसंबन्धादित्यर्थः । अत एव तत्र भुक्त्वा पीत्वा स्नात्वा व्रजतीति विपरीतप्रयोगोऽप्युपपद्यते । आवाह्य षोडशोपचारैः पूजयेदित्यत्राऽऽवाहनविशिष्टे पूजने षोडशोपचारैरित्यस्य करणत्वम् । पूजने आवाहनवैशिष्ट्यं चाऽऽनन्तर्यसंबन्धेन । तथाच आवाहनोत्तरकालिकं षोडशोपचारकरणकं पूजनमित्यर्थबोधादावाहनस्य षोडशोपचारान्तर्गतत्वेऽपि न दोष इति बोध्यमित्यलम् ॥ ५९ ॥

इति वैयाकरणभूषणसारव्याख्यायां शांकर्यां क्त्वाद्यर्थनिर्णयः ।

रङ्गभट्टतनूजेन शंकरेण विनिर्मिते ।

सारीयेऽभूद्विवरणे तुमुन्क्त्वाद्यर्थनिर्णयः ॥ १३ ॥

---

## अथ स्फोटनिरूपणम् । ( १४ )

---

पूर्वोक्तप्रकृतिप्रत्ययाद्यर्थविचारस्यावास्तविकत्वं ध्वनयितुमाह—सिद्धान्तेति । स्फोटस्यैव वाचकत्वमिति सिद्धान्तनिश्चयमित्यर्थः । आह—ब्रूते—वाक्यस्फो-

वर्णपदवाक्यभेदेन त्रयो जातिस्फोटा इत्यष्टौ पक्षाः सिद्धान्तसिद्धा इति वाक्यग्रहणमनर्थकं दुरर्थकं च तथाऽपि वाक्यस्फोटातिरिक्तानामन्येषामवास्तवत्वबोधनाय तदुपादानम् । एतदेव ध्वनयन्नाह—अतिनिष्कर्ष इति । मतास्थितिर्वैयाकरणानां महाभाष्यकारादीनाम् । तत्र क्रमेण सर्वांस्तान्निरूपयन्वर्णस्फोटं प्रथममाह साधुशब्देऽन्तरिति । साधुशब्दान्तर्गता वाचका न वेति विप्रतिपत्तिः । विधिकोटिरन्येषां

---

टोऽस्तीति । अष्टौ पक्षा इति । तानेवाष्ट पक्षान्क्रमेण नामतो निर्दिशति—वर्णस्फोट इत्यादिना । अखण्डपदवाक्येति । अखण्डपदस्फोटोऽखण्डवाक्यस्फोटश्चेति द्वयमित्यर्थः । जातिस्फोटा इति । वर्णजातिस्फोटः, पदजातिस्फोटो, वाक्यजातिस्फोट इति त्रय इत्यर्थः । पदस्य वाक्यस्य चाखण्डत्वेऽपि तत्र जातिर्नास्तीति न मन्तव्यम् । अत एव चरमं पक्षद्वयमुद्भूतमिति ज्ञेयम् । स्फुटति प्रकाशतेऽर्थोऽस्मादिति व्युत्पत्त्याऽर्थबोधकः शब्दः स्फोट इति पर्यवस्यति । उच्चारिताव्यञ्जकाच्छब्दात्तत्सदृशस्फोटाख्यशब्दस्य ज्ञानं तस्माच्चार्थज्ञानमिति क्रमः । शब्दनित्यत्वविचारे स्फोटाख्यशब्द एव नित्यः स एवत्ताथवानित्यष्टानां पक्षाणां भाष्याद्याकरसंमततया व्यावर्त्याभावाद्वाक्यग्रहणं व्यर्थमित्याह—अनर्थकमिति । दुरर्थकं चेति । भाष्यसिद्धान्तसिद्धवर्णादीतरस्फोटानां व्यावृत्तिबोधकत्वादित्यर्थः । ननु किमर्थं तर्हि वाक्यग्रहणमत आह—वाक्यस्फोटातिरिक्तानामिति । अवास्तवत्वमिति । अष्टानां स्फोटानां मध्ये वाक्यस्फोट एव मुख्यः । शक्तिग्राहकशिरोमणिना वृद्धव्यवहारेण प्रथमतो वाक्य एव शक्तिग्रहेण लोके वाक्यस्फोटस्यैवार्थबोधकत्वात् । वर्णस्फोटादीनां तु केवलं शास्त्रप्रक्रियानिर्वाहाय स्वीकार इत्यर्थः । एतदाशयेनैवाऽऽह—अतिनिष्कर्ष इति । इति मतास्थितिरिति । वैयाकरणानां महाभाष्यकारादीनामित्यर्थः । स्फोटशब्दस्य पङ्कजादिशब्दवद्योगरूढत्वेन वाक्यस्फोट इत्यस्य वाक्यवाचकमित्यर्थः । एवं वर्णस्फोटादीनां वर्णादयो वाचका इत्यर्थः । तत्र क्रमेण सर्वांस्तान्निरूपयन् प्रथमं तावद्वर्णस्फोटमाह—साधुशब्देऽन्तरिति । विप्रतिपत्तिर्विवादः । अत्र नैयायिका एवमाहुः—साधुशब्दघटकतिब्विसर्गादिभिः स्मारितलादयः स्वादयश्च स्थानिभूता एव वाचकाः । लः कर्मणि च० स्वौजसमित्यादिभिस्तेषामेव वाचकत्वस्य प्रतिपादितत्वात् । तिब्विसर्गादीनां त्वादेशिलकारादि-

**नेति वैयाकरणानाम्। साधुशब्दे पचति राम इति प्रयुज्यमानेऽन्तर्गता-स्तिब्विसर्गादय एव बोधका वाचकास्तेषामेव शक्तत्वस्य प्राग्व्यव-स्थापितत्वान्न तु तैः स्मृता लादयः स्वादयश्चेत्यर्थः ॥ १ ॥ ( ६० )**

**ये तु प्रयोगान्तर्गतास्तिबादयो न वाचकास्तेषां बहुत्वेन शक्त्यान-**

---

स्मृतिद्वारा बोधकत्वं लिपिवदिति । तथा च लकारादयो वाचका इति विधि-कोटिरन्येषां नैयायिकानामित्यर्थः । लादयो वाचका नेति निषेधकोटिरस्माकं वैयाकरणानामित्यर्थः । एवं चाऽऽदेशद्वारा साधुशब्दान्तर्गताः स्थानिभूता लादयः स्वादयश्च वाचका न वेति विप्रतिपत्तिशरीरमिति फलति । यदि तु साधुशब्दान्त-र्गतास्तिब्विसर्गादयो वाचका न वेति विप्रतिपत्तिशरीरमभ्युपगम्येत तर्हि विधिको-टिरन्येषां, निषेधकोटिर्वैयाकरणानामित्युत्तरग्रन्थः प्रोच्यमानोऽत्यन्तं विसंगतः स्यात् । नैयायिकैस्तिबादीनां वाचकत्वस्यानभ्युपगमात् । वैयाकरणैस्तिबादीनामेव वाचकत्वस्य सिद्धान्तितत्वाच्च । तस्मात् 'साधुशब्देऽनन्तर्गता वाचका नवेति वि-प्रतिपत्तिशरीरम्' इत्यमुमर्थं गुरुभिः पाठ्यन्ते छात्राः । तत्र साधुशब्देऽनन्तर्गता इत्यस्य श्रूयमाणतिब्विसर्गादीनां स्थानित्वेन कल्पिताः, अत एव साध्वनन्तर्गता लादयः स्वादयश्चेत्येवार्थो बोध्यः । एवं च लादीनामेव वाचकत्वं, न तु प्रयोगघ-टकानां तिब्विसर्गादीनामिति मन्यमानान्नैयायिकान् प्रत्याह—**साधुशब्देऽन्तर्गता हि वाचका नतु तत्स्मृता इति ।** प्रतिपदं तदर्थं वर्णयति—साधुशब्दे—पचति, रामः, इत्यादिप्रयुज्यमाने, अन्तर्गता घटकास्तिब्विसर्गादय एव बोधकाः—वाचका इत्यर्थः । बोधकपदाद्वाचकत्वलाभः कथमत आह—**तेषामेवेति ।** साध्वन्तर्गतश्रू-यमाणतिब्विसर्गादीनामेवेत्यर्थः । शक्तत्वस्य—वाचकत्वस्येत्यर्थः । बोधजनकत्वमेव शक्तिरिति, **प्रागिति ।** इन्द्रियाणां स्वविषये, इत्यादिसप्तत्रिंशत् ( ३७ ) का-रिकायामिति भावः । **व्यवस्थापितत्वादिति ।** साधकबाधकविचारेण निश्चित-त्वादित्यर्थः । 'शक्तिः पदार्थान्तरम्' इति मतेऽपि बोधकत्वान्यथानुपपत्त्या कल्प्यमाना शक्तिर्बोधकत्वसमनियतेति साधुशब्दानन्तर्गतेषु बोधकत्वाभावे सिद्धे शक्त्यभावोऽप्यर्थात्सिध्यतीति बोध्यम् । **न त्विति ।** साध्वन्तर्गतश्रूयमाणति-ब्विसर्गादिभिः स्मारिता लादयः स्वादयश्च वाचका नैवेत्यर्थः ॥ ६० ॥

दर्शनान्तराभिनिवेशिनां नैयायिकानां मतं दूषयितुमुपन्यस्यति—**ये त्विति ।** प्रयोगसमवायिनां तिब्विसर्गादीनां वाचकत्वाभावे कारणमाह—**तेषामित्यादि ।**

न्त्यापत्तेः। एधांचक्रे ब्रह्मेत्यादावादेशभूतलुगादेरभावरूपस्य बोधकत्वासंभवाच्च। किंतु तैः स्मृता लकाराः स्वादयश्च वाचकाः, लत्वस्य

---

प्रयोगघटकानां तिब्विसर्गादीनामित्यर्थः। बहुत्वेनेति। स्वस्थानिभूतलादिस्वाद्यपेक्षया बहुत्वेनेत्यर्थः। शक्त्यानन्त्येति। बहुषु तेषु प्रत्येकं शक्तिकल्पनया शक्तीनामप्यनन्तत्वमापद्येतेत्यर्थः। बहुत्वस्यापरिच्छिन्नतयाऽनन्तत्वेन शक्त्यानन्त्यमिति भावः। शक्त्यानन्त्यमित्युपलक्षणम्। तेन शक्ततावच्छेदकत्वमपि बह्वीष्वादेशनिष्ठानुपूर्वीषु कल्पनीयं स्यादिति गौरवमप्यत्र पक्षे दूषणान्तरं बोध्यम्। किं च यत्र लाद्यादेशानां लुगादिनाऽभावस्वरूपता तत्राभावस्य क्वापि बोधजनकत्वादर्शनेनाऽऽदेशानां बोधकत्वं सुतरामसंभवीत्यत आह—एधांचक्र इति। अत्र 'आमः' इति लिटो लुक्। लुगादेरभावरूपस्येति। अभावरूपस्येति हेतुगर्भं विशेषणम्। यतो लुगादिरूपस्याऽऽदेशस्याभावरूपत्वमतस्तस्य बोधकत्वासंभवः। बोधकत्वरूपशक्तेर्भावनिष्ठत्वादभावेन क्वचिदपि बोधाजननादिति भावः। एधांचक्र इत्यत्रानुप्रयुज्यमानधातूत्तरश्रूयमाणतिङादेशेनैव कालकारकाद्यवगम इति स्पष्टं निबन्धेषु। यद्यपि तदर्थकालकारकादीनामनुप्रयुज्यमानकृञाद्यर्थ एवान्वयस्तथाऽपि अभेदेन तदर्थान्वयेधत्याद्यर्थेऽपि तस्याऽऽर्थिकं भानं संभवत्येव अत एव 'कृञ् चानुप्रयुज्यते' इति सूत्रे कौमुद्यामुक्तम्—तेषां क्रियासामान्यवाचित्वादाम्प्रकृतीनां विशेषवाचित्वात्तदर्थयोरभेदान्वय इति। अभेदान्वयश्चेत्थम्—एधादयस्तावत्तत्तत्फलानुकूलव्यापारार्थकाः, कृञ—उत्पत्त्यनुकूलव्यापारार्थकः. भ्वस्ती चापि सत्तानुकूलव्यापाराभिधायकौ। उत्पत्त्यादिकमाम्प्रकृत्यर्थफलनिष्ठमेव. प्रत्यासत्तेः। तथा चैधांचक्र इत्यत एककर्तृको वृद्ध्यनुकूलव्यापाराभिन्नः परोक्षानद्यतनभूतोत्पत्त्यनुकूलो व्यापार इति बोधो बोध्यः। एवं चाऽऽदेशानां वाचकत्वमिति पक्षेऽपि नात्र कश्चिद्दोष इत्यतो ब्रह्मेत्युक्तम्। आदिपदं वारि. पच, या, अपाचि, इत्यादिसंग्रहार्थम्। लुगादेरित्यादिना लुग्लोपयोः संग्रहः। अत्र सर्वत्र लुगादेरादेशस्याभावरूपत्वेनाभावस्य च बोधजनकत्वाभावात्संख्याकर्मादिबोधो न स्यादित्यादेशानां वाचकत्वपक्षे दोषस्तदवस्थ इति भावः। नन्वत्रापि, यः शिष्यते स लुप्यमानार्थाभिधायीतिन्यायेन प्रकृतिरेव लुप्तप्रत्ययार्थबोधजनिकेति चेन्न। प्रकृतेस्तत्तत्प्रत्ययार्थे शक्तिकल्पनापेक्षयाऽन्यत्र पौषमहः, रामेषु, पयसा, पयसे, लिहो, दुहावित्यादौ वाचकत्वेन क्लृप्तस्य प्रत्ययस्य स्मरणकल्पनैव लघी-

( स्फोटनिर्णयः )

जातिरूपतया शक्ततावच्छेदकत्वौचित्यात्। अव्यभिचाराच्च। आदेशानां भिन्नतया परस्परव्यभिचारित्वात्। "लः कर्मणि" [ पा०

---

यसीत्याह—किं तु तैरिति। तिब्विसर्गात्मकादेशैरित्यर्थः। स्मृता लादयः स्वादयश्च स्थानिभूता एव वाचका इत्यर्थः। स्थानिनो वाचकत्वे शक्ततावच्छेदकलाघवमप्यस्तीत्याह—लत्वस्येति। यथा अनेकासु घटव्यक्तिषु अयं घटोऽयं घट इत्येवं याऽनुगतप्रतीतिः—एकधर्मप्रकारकबुद्धिर्जायते तादृशबुद्ध्युपपत्तये घटत्वजातिः कल्प्यते तथा लडादिषु सर्वत्रायं लोऽयं ल इत्येवं जायमानानुगतप्रतीतिसिद्ध्यर्थं कल्प्यमानस्य लत्वस्य जातित्वं सिध्यति। अनुगतप्रतीतिरेव जातिकल्पिकेति भावः। तथा च घटत्वस्येव लत्वस्यैव शक्ततावच्छेदकत्वकल्पनमुचितं, तच्च शक्यतावच्छेदकं जातिरूपत्वेनैकमेवेति शक्ततावच्छेदकलाघवं भवतीत्यर्थः। आदेशानां वाचकत्वे तेषां नानाकारत्वात्सर्वत्रानुगतैकधर्मस्य कल्पयितुमशक्यत्वाच्छक्यतावच्छेदकस्यापि नानात्वं स्यादिति शक्यतावच्छेदकगौरवं स्यादिति भावः। लादीनां वाचकत्वे युक्त्यन्तरमप्याह—अव्यभिचाराच्चेति। व्यभिचारः—कार्यकारणभावनियमभङ्गः, तदभावोऽव्यभिचारस्तस्मादपि स्थानिनो लकारस्यैव वाचकत्वं युक्तमित्यर्थः। घटपदार्थविषयकज्ञानं प्रति तदर्थकघटपदज्ञानं कारणम्। अत एव येन घटपदं न ज्ञायते, तज्ज्ञानेऽपि तदर्थो वा न ज्ञायते तस्य घटपदार्थज्ञानं न जायत इति लोके दृष्टत्वादन्वयव्यतिरेकाभ्यां पदार्थपदज्ञानयोः कार्यकारणभावः सिद्धः। तत्र तदर्थकपदज्ञानं कारणं तदर्थज्ञानं च कार्यम्। एवं कर्त्राद्यर्थज्ञानं प्रति तदर्थकलडादिलकारज्ञानस्य कारणत्वाद्यत्र कर्त्राद्यर्थज्ञानं तत्र तादृशार्थज्ञानात्प्राङ् नियमेन तादृशार्थकलकारज्ञानसत्त्वाद्यत्सत्त्वे यत्सत्त्वं यदभावे यदभाव इत्यन्वयव्यतिरेकासिद्धपदार्थपदज्ञानयोः कार्यकारणभावस्य न व्यतिरेकव्यभिचार इति एतस्मात्कारणादपि स्थानिन एव लादेर्वाचकत्वं युक्तमिति भावः। आदेशानां वाचकत्वमिति मते व्यतिरेकव्यभिचारदोषोऽस्तीत्याह—आदेशानामिति। पचति, रामः, इत्यादिपरिनिष्ठितप्रयोगे श्रूयमाणानां तिब्विसर्गाद्यादेशानां वाचकत्वे सति तेषां तिप्तसाद्यादेशानां भिन्नतया—तिबादेशापेक्षया तसादेशो भिन्नस्तसादेशापेक्षया च तिबादेशो भिन्न इति तिप्प्रतियोगिकभेदवांस्तस्, तस्प्रतियोगिकभेदवांश्च तिबित्येवं परस्परप्रतियोगिकभेदादनेकतया कर्त्राद्यर्थज्ञानं प्रति तदर्थकतिबादेशज्ञानं तथा तदर्थकतसादेशज्ञानं च कारणमिति वक्तव्यम्। तत्र भवति, भवतः

सू० ३-४-६१ ] इत्याद्यनुशासनानुगुण्याच्च । न ह्यादेशेष्वर्थबोधकमनुशासनमुपलभामहे इत्याहुस्तान्स्वसाधकयुक्तिभिर्निराचष्टे—

व्यवस्थितेर्व्यवहृतेस्तद्धेतुन्यायतस्तथा ।
किं चाऽऽख्यातेन शब्दार्थैर्लडेव स्मार्यते यदि ॥
कथं कर्तुरवाच्यत्ववाच्यत्वे तद्विभावय ॥२॥ ( ६१ )

व्यवस्थानुरोधात्प्रयोगान्तर्गता एव वाचकाः, न तु तत्स्मृता इत्यर्थः।

---

इत्युभयत्रापि कर्त्राद्यर्थज्ञानसत्त्वेऽपि भवतीत्यत्र कर्त्रर्थज्ञानकारणीभूततसादेशज्ञानं नास्ति भवत इत्यत्र च तादृशज्ञानकारणीभूततिबादेशज्ञानं नास्तीति कार्यसत्त्वेऽपि कारणाभावाद्व्यतिरेकव्यभिचारः स्पष्ट एवेति भावः । **आनुगुण्याच्चेति** । लः कर्मणि च भावे चेत्यादिसूत्रार्थानुसारादपि लकाराणामेव वाचकत्वमिति स्पष्टमेवावगम्यते । यथा च लकाराणां वाचकत्वे व्याकरणशास्त्रप्रवर्तकपाणिन्यादेरनुशासनमुपलभ्यते, न तथा तिब्विसर्गाद्यादेशानां वाचकत्वेऽनुशासनमुपलभ्यते । **इत्याहुरिति** । एवं चाऽऽदेशिनां लकाराणामेव वाचकत्वं प्रामाणिकमिति तदाशयः । न चैवं भू-ल इत्यतोऽपि बोधापत्तिरिति वाच्यम् । तादृशबोधे भवतीत्यादिसमभिव्याहारविशेषस्य कारणत्वेनाभ्युपगमात् । अन्यथा तवापि मते भू-अति इत्यादेरपि बोधापत्तिः प्रसज्येत । स्थानिभूतलकारज्ञानविधुराणां बोधस्तु आदेशेषु शक्तिभ्रमादुपपद्यते । अपभ्रंशेषु शक्तिभ्रमाद्बोधकत्वकल्पनादिति भावः । एवं च श्रूयमाणमात्रवर्णनिष्ठवाचकताविरहाद्वर्जस्फोटो न युक्त इति भावः । तान्—नैयायिकादीनित्यर्थः । **स्वसाधकेति** । तिब्विसर्गाद्यादेशानां वाचकत्वमिति यत्स्वमतं तत्परिपोषकयुक्तिभिरित्यर्थः । निराचष्टे—निरस्यति—**व्यवस्थितेर्व्यवहृतेरिति** । कथं कर्तुरवा००० । **व्यवस्थानुरोधादिति** । प्रमाणैरर्थनिर्धारणं व्यवस्था, तदनुसारादित्यर्थः । **वाचका इति** । साधुशब्दप्रयोगघटकाः श्रूयमाणतिब्विसर्गादय एव वाचकाः, तैः स्मृता लादयो वाचका नेत्यर्थः । एवं च व्यवस्थितेरित्यस्य पञ्चम्यन्तस्य पूर्वकारिकोक्ते ‘ बोधकाः ’ इत्यत्रान्वयः । एवं व्यवहृतेरित्यादिद्वयस्यापि तत्रैवान्वयो बोध्यः । अत्र संप्रदायविद एवमाहुः—आदेशानां वाचकत्वे राम इत्यत्र विसर्ग एकत्वस्य वाचक इति व्यवस्था सिध्यति । स्मृतानां वाचकत्वेऽव्यवस्था स्यात् । तथा हि—राम इत्यत्र विसर्गेण किं सुः ? किंवा रुः ? किंवा सिः स्मर्तव्यः । पाणिनीयैः सुः, अन्यै रुः, का-

( स्फोटनिर्णयः )

**तथा हि—पचतीत्यादौ लकारमविदुषो बोधान्न तस्य वाचकत्वम्। न च तेषां तिङ्क्षु शक्तिभ्रमाद्बोधः। तस्य भ्रमत्वे मानाभावात्। ( प्रयोगांशानाम् ) आदेशिनामपि तत्तद्वैयाकरणैः स्वेच्छया भिन्ना-**

---

लापतन्त्राभिज्ञैः सिः, विहितः। यस्तु सकलतन्त्राभिज्ञस्तस्य विनिगमनाविरहेण प्रतिबन्धात्कस्यापि स्मरणं न स्यात्, इति। तन्तु न समीचीनम्। अनेकलिपिज्ञानसत्त्वेऽपि यथा नम्शब्दे एककाले न शब्दोपस्थितिप्रतिबन्धस्तथा सकलव्याकरणाभिज्ञस्य नाऽऽदेशिस्मृतिप्रतिबन्धः। किंतु सर्वेषां स्मृतिः, तथा चार्थोपस्थितिः, सा चाविलक्षणा, विलक्षणा—विभिन्ना, तथा न। किं त्वेकरूपैवेत्यर्थः। अत एव घटकलशाद्यनेकपर्यायेभ्योऽप्यविलक्षणबोध उपपद्यते। अतोऽन्यथा व्याचष्टे—**तथाहीत्यादिना**। **बोधादिति**। पचतीत्यादौ येषां लकारादिज्ञानं नास्ति तादृशानामपि लौकिकानां कर्त्राद्यर्थबोधदर्शनान्न लकाराणां वाचकत्वं कल्पयितुं युज्यते। एवं च कार्यसत्त्वे कारणाभावाद्व्यतिरेकव्यभिचारात्सुतरां लकारस्य वाचकत्वासंभवः। तथा च बोधानापत्तिरेवात्राव्यवस्थापदार्थ इति भावः। यदुक्तं लकारवाचकत्ववादिभिः पचतीत्यादौ स्थानिभूतलकारज्ञानविधुराणां बोधस्तु अपभ्रंशेष्विव तिङ्क्षु शक्तिभ्रमादुपपद्यत इति तन्निराकुर्वन्नाह—**न चेति**। **तेषामिति**। पचतीत्यादौ लकारज्ञानशून्यानां लौकिकानामित्यर्थः। **शक्तिभ्रमादिति**। यथा चाकचक्यादिदर्शनाच्छुक्तौ रजतत्वभ्रमस्तद्वत्सर्वत्र पचतीत्यादिप्रयोगे तिङ एव दर्शनाल्लकारस्य च सिद्धप्रयोगे क्वाप्यदर्शनेन तिङ्क्ष्वेव वाचकत्वशक्तिरिति तेषां भ्रम इत्यर्थः। **तस्येति**। पचतीत्यादौ श्रूयमाणतिङादेशाज्जायमानकर्त्राद्यर्थबोधहेतोर्वाचकत्वस्येत्यर्थः। **मानाभावादिति**। भ्रमत्वे प्रमाणाभावादित्यर्थः। यत्र विषयस्य बाधस्तत्रैव भ्रमत्वमिति नियमः। यथा शुक्तौ रजतत्वस्य बाधात्तज्ज्ञानस्य भ्रमत्वं, तथा प्रकृते वाचकत्वस्याबाधात्तज्ज्ञानस्य भ्रमत्वं वक्तुमशक्यम्। पचतीत्यादिघटकतिङादेशात्कर्त्राद्यर्थबोधोदयेन तत्र वाचकत्वशक्तेरबाधितत्वेन भ्रमत्वस्य सुतरां वक्तुमशक्यत्वेन भ्रमत्वे मानाभाव इति भावः। ननु तिबाद्यादेशानामनेकत्वात्तत्र वाचकत्वशक्तिस्वीकारे तदेवानेकत्वं प्रतिबन्धकं स्यादित्यत आह—**आदेशिनामपीति**। तिब्विसर्गाद्यादेशस्थानिनामित्यर्थः। **तत्तद्वैयाकरणैरिति**। पाणिनिकालापशाकटायनापिशलिप्रभृतिशाब्दिकैरित्यर्थः। **भिन्नानामिति**। सुः, सिः, रुः, लट्, कट्, अन्यैश्चान्यः

**नामभ्युपगमात्कः शक्तः को नेति व्यवस्थानापत्तेश्च । सर्वेषां शक्तत्वे गौरवं व्यभिचारश्चास्त्येवाऽऽदेशानां प्रयोगान्तर्गततया नियतत्वाद्युक्तं तेषां शक्तत्वम् । तथा चाऽऽदेशिस्मरणकल्पना नेति लाघवम् । सा-**

---

कश्चनेत्यादिप्रकारेण भिन्नानां स्वस्वेच्छयोक्तत्वात् । शास्त्रप्रवर्तकाचार्याणां स्वतन्त्रेच्छत्वादिति भावः । तत्र कः स्थानी शक्तः—वाचकः, कश्च नेति निर्धारयितुमशक्यत्वेनायमेव स्थानी वाचक इत्येवं व्यवस्थाया अनुपपत्तेरित्यर्थः । ननु विनिगमनाविरहात्सर्वेषामपि स्थानिनां वाचकत्वमस्त्वित्याशङ्क्याऽऽह-**सर्वेषामिति**। स्वतन्त्रेच्छानां वैयाकरणानां भेदाद्भिन्नानां स्थानिनां सर्वेषामित्यर्थः । शक्तत्वे—वाचकत्वशक्तिमत्त्वे अभ्युपगते, इति शेषः । **गौरवमिति** । अनेकेषां स्थानिनां प्रत्येकं शक्तिकल्पनावश्यंभावेन शक्त्यनेकत्वाद्गौरवमित्यर्थः । नन्वेवमपि आदेशापेक्षया तत्स्थानिनामल्पसंख्यत्वेन तत्प्रयुक्तलाघवानुरोधात्स्थानिनामेव वाचकत्वमायातीत्यत आह—**व्यभिचारश्चेति** । राम इत्यादावेकत्वाद्यर्थज्ञानं सर्वानुभवसिद्धम् । तादृशानुभवनिर्वाहायैकत्वाद्यर्थविषयकज्ञानं प्रति सर्वस्थानिज्ञानं कारणमित्येवं कार्यकारणभावो वाच्यः । तत्र राम इत्यत्र पाणिनिमते स्थानिभूतसुप्प्रत्ययज्ञानसत्त्वेऽपि सिप्रत्ययज्ञानं नास्ति, तथा कालापमते सिप्रत्ययज्ञानसत्त्वेऽपि सुप्रत्ययज्ञानं नास्ति । एकत्वाद्यर्थज्ञानं तूभयमतेऽप्यस्त्येवेति एकैकाभावे सत्यपरेणैकत्वाद्यर्थबोधजननात्कारणाभावेऽपि कार्यसत्त्वाद्व्यतिरेकव्यभिचारश्चास्तीत्यर्थः। ततश्च यद्भयादादेशानां वाचकत्वमिति पक्षस्य परित्यागस्तौ दोषौ स्थानिनां वाचकत्वमिति पक्षेऽपि दुर्निवारावेवेति भावः । एकत्वाद्यर्थज्ञानात्प्राङ्नियमेनाऽऽदेशज्ञानसत्त्वेन कार्यकारणभावस्य व्यभिचाराभावात्प्रयोगान्तर्गतानामादेशानामेव वाचकत्वं युक्तमित्याह—**आदेशानां प्रयोगान्तरिति** । एवं च पक्षद्वयेऽपि गौरवव्यभिचारदोषयोः साम्येऽपि स्थानिनो वाचकत्वमिति पक्षे स्थानिस्मरणकल्पनाकरणप्रयुक्तं गौरवमधिकं, आदेशानां वाचकत्वमिति पक्षे तन्नेति लाघवं भवतीत्याह- **तथा चेत्यादि लाघवमित्यन्तम्** । ननु पदतदर्थयोर्वाच्यवाचकभावात्मको यः संबन्धः सा शक्तिरिति मञ्जूषायां भट्टनागेशैरुक्तत्वाद्यत्र शास्त्रेण वाच्यवाचकभावः प्रतिपादितस्तत्रैव सा शक्तिरङ्गीकर्तुमुचिता । वाच्यवाचकभावश्च लः कर्मणीत्यादिशास्त्रेण लादिष्वेवोक्तस्तस्माल्लादीनामेव वाचकत्वं युक्तम् । आदेशिस्मरणकल्पनागौरवं तु प्रामाणिकत्वान्न दोषावहमित्यरुचिं मनसिकृत्य

धकान्तरमाह—व्यवहृतेरिति । व्यवहारस्तावच्छक्तिग्राहकेषु मुख्यः । स च श्रूयमाणतिङादिष्वेवेति त एव वाचका इत्यर्थः । किं च–तद्धेतुन्यायत इति । लकारस्य बोधकत्वे भू ल इत्यतोऽपि बोधः स्यात् ।

प्रयोगे श्रूयमाणानां तिबाद्यादेशानां वाचकत्वाभ्युपगमे युक्त्यन्तरं निरूपयति—व्यवहृतेरिति । मुख्य इति । शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद्व्यवहारतश्च । वाक्यस्य शेषाद्विवृत्तेर्वदन्ति सांनिध्यतः सिद्धपदस्य वृद्धाः ॥ इत्यभियुक्तपठितशक्तिग्राहकशिरोमणिर्व्यवहारो मुख्यः प्रधानमित्यर्थः । मुख्यत्वं च तस्य शक्तिग्रहे जननीये शक्तिग्राहकान्तरनिरपेक्षत्वरूपम् । व्याकरणादीनां तु न तादृशं मुख्यत्वम् । तस्यापत्यमित्यादिनाऽणादिप्रत्ययस्य शक्तिग्रहे जननीयेऽपत्यादिशब्दशक्तिग्रहोऽपेक्षितः, स चेच्छब्दान्तरेण, तस्यापि शब्दान्तरेणैव शक्तिग्रह इत्यभ्युपगमेऽनवस्थाप्रसङ्गः स्यात् । अतो व्यवहारस्यापत्यादिशब्दशक्तिग्रहसंपादनद्वाराऽपेक्षितत्वान्न व्याकरणादीनां शक्तिग्राहकेषु मुख्यत्वं, किंतु व्यवहारस्यैव तादृशं तत्त्वमिति भावः । व्यवहारश्चाऽऽप्तानां गुर्वादीनां तत्तदर्थं बोधयितुं तत्तच्छब्दप्रयोगकरणरूपः। यथा कम्बुग्रीवादिमन्तमर्थं बोधयितुं घटमानयेति वाक्ये घटपदं प्रयुज्यते वृद्धैः। आप्तो नामानुभवेन पदपदार्थतत्त्वस्य कार्त्स्न्येन निश्चयवान् । अथवा अर्थतत्त्वज्ञानवान् । अर्थतत्त्वज्ञानमाप्तिः, तया प्रतीत आप्त इति व्युत्पत्तेः । स चेति । वृद्धव्यवहारजन्यशक्तिग्रहश्चेत्यर्थः । त एवेति । प्रकृते साधुशब्दप्रयोगघटकश्रूयमाणतिब्विसर्गाद्यादेशेष्वेव निरुक्तशक्तिग्रहसत्त्वात्तिङाद्यादेशा एव कर्तृकर्माद्यर्थवाचका इत्याशयः । एवकारेणाऽऽदेशस्थानिभूतलकारादीनां व्यावृत्तिः । ननु शक्तिग्राहकशिरोमणिना वृद्धव्यवहारेण तिङ्क्षु गृह्यमाणाऽपि शक्तिर्लाघवादादेशिनि व्यवस्थाप्यते, न तु तिङ्क्षु गौरवात् । यथा व्यवहाराद्वाक्ये गृहीताऽपि शक्तिर्लाघवात्तत्तत्पदे कल्प्यते तद्वत् । यद्वा नयनानयनादिव्यवहारस्य लोडादिविधिप्रत्ययान्तप्रयोगं विनाऽनुपपत्तेस्तेन प्रयोगेण विधिप्रत्ययान्तप्रयोगान्तःपातिवर्णानां वाचकत्वसिद्धावपि विधिप्रत्ययरहितप्रयोगघटकवर्णानां वाचकत्वं लः कर्मणि चेत्यादिशास्त्रविहितमेवाङ्गीकर्तव्यम् । शास्त्रेण चाऽऽदेशिनि लादावेव शक्तिरुक्तेति विधिप्रत्ययान्तान्तर्गतवर्णानां वाचकतायाः सिद्धावन्यत्रापि आदेशिषु सा कल्पनीयेत्यरुचेः साधकान्तरमाह—किं चेति । तद्धेतुन्यायत इति । तद्धे-

**तादृशे बोधे पचतीति समभिव्याहारोऽपि कारणमिति चेत्तर्ह्यावश्यकत्वादस्तु तादृशसमभिव्याहारस्यैव वाचकत्वशक्तिः । अन्यथा लकारस्य वाचकत्वं समभिव्याहारस्य कारणत्वं चेत्युभयं कल्प्यमिति**

---

तोरेव तदस्तु ।किं तेनेति न्यायस्वरूपम् । तस्य हेतुस्तद्धेतुस्तस्य तद्धेतोरिति विग्रहः । तस्य—कपालादेः, हेतोः—मृदादेरेव, तत्—घटादिकारणत्वं, अस्तु किं तेनान्तर्गडुना कपालादिरूपकार्येणेत्यर्थः । लाघवमूलकश्चायं न्यायः । कपालादिकारणस्य मृदादेरेव घटादिकारणत्वकल्पनेनैकस्मिन्नेव कारणत्वमिति लाघवं, सत्येवं पुनः कपालादेरपि घटादिकारणत्वकल्पने तूभयत्र कारणत्वकल्पनया गौरवादिति भावः । तद्धेतोरेवेत्याद्याकारको न्यायस्तद्धेतुन्यायः । तद्धेतुन्यायपदयोः संभावनापूर्वपदकः कर्मधारय इति तात्पर्यम् । तमिमं न्यायं प्रकृते संगमयति—**लकारस्येति** । आदेशिन इत्यर्थः । बोधकत्वे—वाचकताशक्तिमत्त्वे, अभ्युपगते सतीति शेषः । **'भू–ल' इत्यतोऽपीति** । अलौकिकप्रक्रियावाक्यतोऽपीत्यर्थः । **बोधापत्तिरिति** । सत्ताकर्तृकबोधप्रतीत्यापत्तिरित्यर्थः । तादृशवाक्यात्तादृगर्थबोधो लोकानां नैव जायत इत्यनुभवविरुद्धं स्थानिनो वाचकत्वमिति भावः । **तादृशबोध इति** । एककर्तृकवर्तमानकालिकसत्तानुकूलो व्यापार इत्याकारके आपादिते बोध इत्यर्थः । **भव्–अतीति समभिव्याहारोऽपीति** । अव्यवहितोत्तरत्वसंबन्धेन भूधातुविशिष्टातिघटितं भवतीति शब्दरूपं सहोच्चारणमपि कारणत्वेनाभ्युपेयत इति चेदित्यर्थः । तथा च समभिव्याहृतातिबाद्यादेशादुपस्थितो यः स्थानी लकारः स एव वाचकः, नतु साक्षादुच्चारित इति भावः । **आवश्यकत्वादिति** । पीनत्वान्यथानुपपत्त्या रात्रिभोजनस्येव भू–ल, इत्यस्य बोधजनकत्वान्यथानुपपत्त्या भवतीत्यादिसमभिव्याहारस्याऽऽवश्यकत्वादत्यन्तापेक्षितत्वात्तादृशसमभिव्याहारस्यैव वाचकत्वरूपा शक्तिः स्वीक्रियतां लाघवादित्यर्थः स्थानिनो वाचकत्वाभ्युपगन्तुर्गौरवं भवतीत्याह—**अन्यथेति** । स्थानिनो वाचकत्वस्वीकार इत्यर्थः । गौरवमेव प्रदर्शयति—**लकारस्येति** । उपलक्षणत्वाल्लकारादेरित्यर्थः । वाचकत्वं—वाचकत्वरूपा शक्तिः, समभिव्याहारस्य च कारणतेत्येवमुभयं कल्पनीयमिति गौरवमित्यर्थः । तथा च कर्त्राद्यर्थबोधहेतोर्लकारज्ञानस्य हेतोः समभिव्याहारस्यैव वाचकत्वमास्तां एकत्रैव वाचकत्वकल्पनेन लाघवात् , किं तेनान्वगडुना लकारवाचकत्वकल्पनेन गुरुभूतेनेति भावः । नन्वेतावता यौक्तिकविवेचनेन

( वर्णस्फोटनिर्णयः )

**गौरवं स्यात् । तथा च ताद्दशसमभिव्याहारः समभिव्याहृता वर्णा वेत्यत्र विनिगमकाभावात्प्रयोगान्तर्गता वर्णा वाचका इति सिध्यतीति भावः । अपि च लकारस्यैव वाचकत्वे कृत्तिङोः कर्तृभावनावाचकव्यवस्था त्वत्सिद्धान्तसिद्धा न स्यादित्याशयेनाऽऽह–किं चेति । आदेशानां वाचकत्वे तिङ्त्वेन भावनायां शानजादिना कर्तरि शक्तिरि-**

---

समभिव्याहारस्य वाचकत्वे सिद्धेऽपि न साधुशब्दघटकधातुप्रत्ययान्तर्गतवर्णानां तत्सिद्धमत आह–तथा चेति । समभिव्याहारस्य वाचकत्वे चेत्यर्थः । **विनिगमनाविरहादिति** भवतीत्यादिसमभिव्याहारस्य वाचकत्वमुत ताद्दशसमभिव्याहारघटकवर्णानां वाचकत्वमित्येवमन्यतरकोटिनिश्चायकप्रमाणाभावात्समभिव्याहृतवर्णानामपि वाचकत्वं सिध्यतीत्यर्थः । केचित्तु समभिव्याहारस्य वाचकत्वे सति तद्घटकानेकवर्णानां वाचकतावच्छेदकत्वं कल्पनीयमिति गौरवं भवति । वर्णानां वाचकत्वे तु निरुक्तानुपूर्व्या एकस्या एव वाचकतावच्छेदकत्वमिति लाघवं भवतीति लाघवमेव वर्णानां वाचकत्वेऽनुगमकम् । अन्ये तु आदेशेनाऽऽदेशी स्मार्यते तेन चार्थो बोध्यत इति मते येऽस्मन्मते वाचकतावच्छेदकास्ते तन्मते स्मारकतावच्छेदका वाच्यास्तथा च तद्धेतुन्यायेन स्मारकतावच्छेदकानामेव वाचकतावच्छेदकत्वमास्तां लाघवात्, किं तेन पुनर्लकारादिषु वाचकतावच्छेदकत्वपरिकल्पनेनान्तर्गडुना गौरवादित्याहुः । समभिव्याहृततावद्वर्णवृत्तिर्वाचकतेत्यङ्गीकारान्न तद्घटकैकैकादिवर्णात्तत्तदर्थबोधापत्तिरिति ध्येयम् । लकारस्य वाचकत्वे त्वदुक्तसिद्धान्तभङ्गापत्तिरिति तत एवाऽऽदेशानामेव वाचकत्वं सिध्यतीत्याह —किं चेतीति । अयं भावः–पक्तेत्यादौ कृत्प्रत्ययस्य कर्तृवाचकत्वं, पचतीत्यादौ तिङन्ते च तिङो भावनावाचकत्वमिति मीमांसकप्राचीननैयायिकैः सिद्धान्तितम् । लकारस्यैव वाचकत्वे तूभयत्र स्थानिनो लकारस्यैकत्वाच्छत्रादिरूपे कृति कर्तृवाचकत्वासंभवाल्लकारस्य भावनामात्रवाचकत्वान्निरुक्तसिद्धान्तो दुरुपपाद इति तद्भङ्गः स्यात् । तथा च लकारवाचकत्ववादिनस्तव स्वोक्तिविरोध इति भावः । नव्यनैयायिकमते नायं विरोधः । तैः सिद्धप्रयोगघटकश्रूयमाणतिबादीनामेव वाचकत्वाङ्गीकारादिति ज्ञेयम् । नन्वादेशानां वाचकत्वे कथमसौ कृत्तिङोः कर्तृभावनावाचकत्वविभागो व्यवतिष्ठत इत्यपेक्षायामाह–**आदेशानां वाचकत्वे चेति** । आदेशानां बहुत्वात्तन्निष्ठवाचकतावच्छेदकत्वस्यापि बहुत्वेन तिङ्त्वेन भावनावाचकत्वं शानजादि-

त्युपपद्यते विभाग इति भावः। न च शानजादौ कृतिर्लकारार्थं आश्रयः शानजर्थं इत्यस्तु "कर्तरि कृत्" [ पा० सू० —४—६७ ] इत्यनुशासनादिति शङ्क्यम्। स्थान्यर्थेन निराकाङ्क्षतया शानजादौ क-

त्वेन च कर्तृवाचकत्वमित्यभ्युपगमादुपपद्यतेऽसौ विभागव्यवस्थेति भावः। अथ लकारवाचकत्ववादी शानजादेः कर्तृवाचकत्वं साधयितुं शङ्कते—न चेति। कृतिर्लकारार्थं इति। प्राचीननैयायिकैर्लकाराणां कृतौ शक्तिर्लाघवात्, न तु कर्तरि, कृतिमतः कर्तृत्वेन तत्र शक्तौ गौरवादित्युच्यते। तस्यायमाशयः—कृत्याश्रयत्वं कर्तृत्वमिति हि तन्मतम्। तथा सति लकारस्य कर्तृवाचकत्वे वाचकतावच्छेदिकाः कृतयो वक्तव्याः। ताश्चानन्ता इत्यनन्तासु कृतिषु वाचकतावच्छेदकत्वकल्पनात्मकं गौरवं भवति। कृतिवाचकत्वे तु लकारस्य कृतीनामनन्तत्वेऽपि कृतित्वजातेरेकत्वेनैकस्यामेव वाचकतावच्छेदकत्वकल्पनामिति लाघवं स्पष्टमेवेति। कृतिरित्युपलक्षणं भावनायाः। मीमांसकैर्हि भावनावतः कर्तृत्वेन तत्र शक्तौ निरुक्तरीत्या गौरवेण तत्परित्यज्य लाघवानुरोधाल्लकारस्य भावनामात्रवाचकत्वाङ्गीकारादिति भावः। तथा च पचमान इत्यादिशानजाद्यन्तस्थले कृत्यादिर्लकारार्थः, जञ्जभ्यमानाविकरणन्यायेनाऽऽश्रयस्तु ( कर्ता तु ) शानजाद्यर्थः कर्तरि कृदित्यनुशासनादिति शङ्काशयः। तथा चानुशासनद्वयेनोभयत्र शक्तिग्रहणान्नाच्छानजादेर्भिन्नया शक्त्या कर्तृवाचकत्वं लभ्यत इति भावः। तदेतन्न युक्तं शानजादौ कर्तरि कृदित्यस्याप्रवृत्तेरित्याह—स्थान्यर्थेनेति। अयमर्थः—लः कर्मणि चेत्यादिना सकर्मकेभ्यः कर्मणि कर्तरि चाकर्मकेभ्यो भावे कर्तरि च लकारा विहिताः। लटः शतृशानचावित्यादिना लटः स्थाने शतृशानचावादेशौ विहितौ। तत्र यथा लकारविधायके कर्मणि चेत्याद्यर्थनिर्देशः कृतोऽस्ति तद्वन्नात्र शत्रादिविधायके तदर्थनिर्देशो दृश्यते, किंतु लटः स्थाने तावादेशतयोक्तौ। तथा च शत्रादेः कोऽर्थः, कमर्थं शत्रादिः प्रतिपादयतीत्यर्थांशे आकाङ्क्षायां सत्यां स्थान्यर्थाभिधानसमर्थस्यैवाऽऽदेशतेति भाष्यसिद्धान्तात्स्थानी यमर्थं ब्रूते तमेवार्थमादेशोऽभिधत्त इति लभ्यते। ततश्च स्थानिनो लटो योऽर्थः कर्त्रादिस्तेनैवार्थेनार्थवांस्तदादेशः शत्रादिरिति शानजादेः कर्त्राद्यर्थकत्वेनार्थांशे निराकाङ्क्षतया शानजादौ कर्तरि कृदित्यस्यार्थविधायकस्य सुतरामप्रवृत्तिः। अत एव तैः शय्यमाने, आस्यमाने चार्थं गत इति भावे, क्रियमाण इति कर्मणि च शानचो न

( वर्णस्फोटनिर्णयः )

**र्तरीत्यस्याप्रवृत्तेरन्यथा घञादावपि प्रवर्तेत ॥ २ ॥ ( ६१ )**

कर्तृबोधकत्वम् । अन्यथा त्वत्रापि शानचः कर्तृबोधकत्वमापद्येत । इदं च लः कर्मणीत्यादिव्याकरणानुशासनानुसारेण लकाराणां कर्त्राद्यर्थकत्वं गृहीत्वोक्तम् । नैयायिका मीमांसकाश्च लकाराणां क्रमेण कृतिमात्रवाचकत्वं भावनामात्रवाचकत्वं च मन्यन्ते । तन्मते स्थानिनो लटो योऽर्थः कृतिर्भावना च तेनैवार्थेन = कृत्या भावनया वार्थवांस्तदादेशः शत्रादेरिति शानजादेः कृत्याद्यर्थकतयाऽर्थांशे निराकाङ्क्षत्वेन शानजादौ कर्तरि कृदित्यस्यार्थविधायकस्याप्रवृत्तिः। आकाङ्क्षितविधानस्यैवोचितत्वादिति योजनीयम् । यत्र कृत्प्रत्ययो विधीयते तदर्थस्तु नैव निर्दिश्यते, किं त्वर्थांशे साकाङ्क्षः कृत्प्रत्ययो भवति तादृश एव कृति कर्तरि कृत्, इत्यर्थविधायकमनुशासनं प्रवर्तते तादृशाकाङ्क्षापूरकत्वात्, आकाङ्क्षितविधानस्यैवोचितत्वादिति भावः । यथा पक्ता पाचक इति । प्रकृतस्थले शानजादेः स्थान्यर्थेनार्थवत्त्वान्निराकाङ्क्षतया शानजादौ कर्तरि कृदिति शास्त्रमर्थविधायकं नैव प्रवर्तितुमर्हतीति तात्पर्यार्थः । अथार्थांशे निराकाङ्क्षेऽपि कृति कर्तरि कृदित्यस्य प्रवृत्तिरस्तु का हानिरित्याशङ्क्याऽऽह—अन्यथेति । उक्तवैपरीत्ये ? अर्थांशे निराकाङ्क्षेऽपि कृति कर्तरि कृदितिशास्त्रप्रवृत्त्यभ्युपगमे इत्यर्थः । घञादाविति । अर्थनिर्देशरहिते ण्वुल्तृचाविति विहिते तृजादौ स्वार्थसाकाङ्क्षतया यथा कर्तरि कृदिति प्रवर्तते, एवं ' भावे ' इत्यर्थनिर्देशपुरस्कारेण विहितत्वादर्थांशे निराकाङ्क्षे घञादावपि कर्तरि कृदित्यस्य प्रवृत्त्या तृजादेरिव घञादेरपि कर्त्रर्थबोधकत्वमापद्येत । आदिपदग्राह्ये नपुंसके भावे क्तः, ल्युट् च, स्त्रियां क्तिन्, इत्यादावपीयमापत्तिर्बोध्या । इष्टापत्तिस्तु कर्तुमशक्या । घञ्ल्युडादेस्तादृशार्थप्रतीत्यननुभवात् पक्ता देवदत्त इत्यत्रेव पाकदेवदत्तयोः सामानाधिकरण्येनान्वयबोधापत्तेश्चेति भावः । एवं च आख्यातेन तिङा, शतृशानजादिभिश्च यदि लडेव स्मार्यते, एवकारेण तिङ्शत्रादीनां स्मारकत्वमेव, नतु वाचकत्वमिति सूचितम्, तर्हि पचतीत्यादिस्थले कर्तुर्वाच्यत्वाभावः ( भावनाया वाच्यत्वमित्यर्थः ) पचमान इत्यादौ शानजाद्यन्ते तु कर्तुर्वाच्यत्वमित्येवं त्वन्मतसिद्धो वाच्यत्वावाच्यत्वविभागः कथं सिध्येत् ! उभयत्रापि लटः स्थानित्वेनैक्यात्तस्य च कृत्याद्यर्थवाचकत्वादुभयत्रापि कृत्याद्यर्थवाचकत्वमेव स्यादिति त्वत्संमतो वाच्यत्वावाच्यत्वविभागो नैव सिध्येदित्यर्थः । तदेतद्विचारयेति किंचेत्यादिद्वयोः

देवदत्तः पचमान इत्यादिसामानाधिकरण्यानुरोधाच्छानचः कर्ता वाच्यः स्यादित्याशङ्क्याऽऽह—

तरबाद्यन्ततिङ्क्ष्वस्ति नामता कृत्स्विव स्फुटा।
नामार्थयोरभेदोऽपि तस्मात्तुल्योऽवधार्यताम् ॥३॥ ६२)

---

कारिकार्धयोस्तात्पर्यभूतोऽर्थो बोध्यः ॥ ६१ ॥ ( २ )

अथ चैत्रः पचमान इत्यादावभेदेनान्वयबोधानुभवानुरोधाच्छानजादेः कर्ता वाच्यः स्यादित्याशङ्कते—**देवदत्तः पचमान इति सामानाधिकरण्यानुरोधादिति** । अधीयानश्चैत्र इत्यादिस्थले अध्ययनानुकूलक्रियाश्रयाभिन्नश्चैत्र इत्येवमभेदान्वयानुरोधादित्यर्थः । विभिन्नविभक्तिराहित्ये सत्यभेदेनैकार्थबोधजनकत्वस्य सामानाधिकरण्यशब्दार्थत्वादिति भावः । यदि कर्ता शानजर्थो न स्यात्तदाऽधीयानश्चैत्र इत्यादिस्थलेऽनन्वय एव स्यात्, अभेदस्य बाधितत्वात् । आधाराधेयभावसंबन्धेनान्वयस्याध्ययनानुकूलाक्रियाश्रयश्चैत्र इत्येवंरूपस्य नामार्थयोरभेदान्वयव्युत्पत्तिविरोधेनासंभवादिति ध्येयम् । **कर्ता वाच्य इति** । पीनत्वान्यथानुपपत्त्या रात्रिभोजनमिव सर्वानुभवसिद्धाभेदान्वयबोधान्यथानुपपत्त्या शानचः कर्ता वाच्यः कल्प्यत इत्याक्षिप्य प्रतिबन्द्या समाधत्ते—**तरबाद्यन्ततिङ्क्ष्वस्ति नामार्थयोरभेदोऽपि** । नामार्थयोरभेदान्वयः, नामार्थश्च नामार्थश्च नामार्थौ तयोः, नामजन्यप्रतीतिविशेष्ययोरेवान्वयः, स चाभेदेनैवेति तदर्थः । नामपदेन च प्रातिपदिकप्रकृतिकसुबन्तं, अपदं न प्रयुञ्जीतेति भाष्यात् । तच्च नामाव्ययातिरिक्तमेव गृह्यते, नामाख्यातोपसर्गनिपाताश्चत्वारि पदजातानीति भाष्ये नामापेक्षयोपसर्गादेः पृथग्ग्रहणात् । यदि च नामपदेनाव्ययस्यापि ग्रहणमिष्येत तर्हि नामपदेनैव तत्संग्रहस्य सिद्धत्वात्पृथगुपसर्गादिग्रहणं न कुर्यात् । यस्माच्चोपसर्गादेः पृथग्ग्रहणं करोति तस्मादेवमवगम्यते यन्नामपदेनाव्ययग्रहणं नेष्यत इति । नामपदेनाव्ययस्याग्रहणादेव घटं पटं च पश्येत्यत्र घटं समुच्चयवन्तं पटं पश्येति बोधस्यानुभवसिद्धत्वात्समुच्चयस्यानुयोगित्वरूपभेदसंबन्धेन पटेऽन्वयो नानुपपन्नः । नामपदेनाव्ययग्रहणे तु समुच्चयस्य नामार्थस्य नामार्थे पटे भेदसंबन्धेनान्वयो नोपपद्येत, नामार्थयोरित्यादिव्युत्पत्तिविरोधादिति भावः । तथा च यथा कृत्सु—पचमान इत्यादिकृदन्तेषु नामताऽस्ति तथा तरबाद्यन्ततिङ्क्ष्वपि—पचतितरां मैत्रः पचतिकल्पं मैत्र इत्यादिष्वपि नामता स्फुटा स्पष्टाऽस्ति । तथा तयोरभेदेनान्वयो-

**पचतितरां मैत्रः पचतिकल्पं चैत्र इत्यादिषु नामार्थत्वाभेदान्वययोः संभव एवेति कर्तृवाचकता स्यादिति भावः । न च पचतिकल्पमित्यत्र सामानाधिकरण्यानुरोधात्कर्तरि लक्षणा पचमान इत्यत्राप्यापत्तेरिति '**

---

ऽपि पचमानश्चैत्र इत्यादिना तुल्य एवास्तीति शानजादिवदेव लस्यापि कर्तृवाचकत्वमापद्येत । तच्च त्वन्मतेऽनिष्टमिति भावः । **तरबाद्यन्तेति** । तरबादिरन्ते परसमीपे येषां तेषु तिङ्क्षु तिङन्तेष्वित्यर्थः । तादृशतिङन्तस्थलानि दर्शयति—**पचतितरामित्यादिना** । अत्र तिङश्चेत्यनुवर्तमाने 'द्विवचनविभज्योपपदे०' इति सूत्रेण द्वयोर्मध्य एकस्यातिशये द्योत्ये प्रवर्तमानात्तिङन्तात्तरप् । तरबन्तात्किमेत्तिङव्ययघादिति आमुः । वस्तुतस्त्वत्रातिशायन इति प्रकृत्यर्थविशेषणम् । तथा च द्वयोर्मध्य एकस्यातिशयविशिष्टार्थवृत्तेस्तिङन्तादित्यर्थः । आदिशब्दसंग्राह्यमाह—**पचतिकल्पमिति** । ईषदसमाप्तावित्यादिना कल्पप्प्रत्ययः । ईषदसमाप्ताविति प्रकृत्यर्थविशेषणम् । तथा चेषदसमाप्तिविशिष्टेऽर्थे वर्तमानात्तिङन्तात्कल्पबित्यर्थः । एवं चात्र तरबादिरयं स्वार्थे फलति । तिङन्तेषु च भावप्रधानमाख्यातमिति यास्कवचनानुसारेण धात्वर्थस्य प्राधान्यमिति भाष्यादौ सिद्धान्तितत्वेनातिशयादिकं धात्वर्थगतमेव प्रतीयते । ततश्चात्रातिशयितविक्लित्त्यनुकूला भावना, ईषदसमाप्तविक्लित्त्यनुकूला च भावना पचतितरामित्यादेरर्थः । तादृशभावनायाश्चात्र नामार्थत्वं स्पष्टमेवेति मैत्रेण नामार्थेन समं तस्या अभेदेनान्वयस्यात्यन्तासंभवादनुभूयमानसामानाधिकरण्यान्यथानुपपत्त्या शानजादेरिवाऽऽख्यातस्य—तिङोऽपि कर्ता वाच्य इत्येवं कल्पनीयं स्यात् । तच्च मीमांसकादीनामत्यन्तानिष्टम् । तैर्हि लकाराणां भावनादिवाचकत्वं सिद्धान्तयित्वा तिङोऽपि भावनादिवाचकत्वस्यैवाऽऽदृतत्वादिति भावः । पचतिकल्पमित्यादौ तिङः कर्त्रर्थबोधकत्वं प्रकारान्तरेण साधयितुं नैयायिकादिरीत्या शङ्कते—**न चेति । सामानाधिकरण्यानुरोधादिति** । पचतिकल्पं मैत्र इत्यादौ सर्वानुभूयमानाभेदान्वयबोधोपपत्त्यर्थं लकारस्य कर्तरि लक्षणाऽऽश्रीयते । लकारशक्यभावनाद्यर्थसंबन्धस्य कर्तरि गृहीतत्वात्स्वशक्यसंबन्धरूपलक्षणया कर्तृरूपोऽर्थो गृह्यत इति चेन्न तद्युक्तमित्याह—**पचमान इत्यत्राप्यापत्तेरिति** । पचमानश्चैत्र इत्यादावपि सर्वानुभवसिद्धाभेदान्वयबोधनिर्वाहार्थं लटः कर्तरि लक्षणापत्तेरित्यर्थः । न च सा मीमांसकादेस्तवेष्टा । लटो भावनादिवाचकत्वमपरित्यज्य केवलं तदादेशशत्रादेरेव कर्तृकर्मादि-

**लः कर्मणीत्यनुशासनं च लाघवात् कल्पिते लकारे कर्त्रादिवा-**

वाचकत्वाङ्गीकारादिति भावः। ननु नामार्थयोरिति व्युत्पत्तौ नामपदेन सत्त्वप्रधानानि नामानीति निरुक्तवचनाल्लिङ्गसंख्यान्वितद्रव्यमुख्यविशेष्यकबोधजनकं गृह्यते, तिङन्तप्रकृतिकतरबाद्यन्तस्य त्वसत्त्वभूतभावनामुख्यविशेष्यकबोधजनकत्वेन नामत्वाभावान्नामार्थयोरित्यस्याप्रवृत्त्या नाभेदेनान्वयः, किं त्वतिशयितविक्लित्त्यनुकूलभावनाश्रयश्चैत्र इत्यादिरीत्या भेदेनैवान्वय इति न तिङः कर्तृवाचकत्वापत्तिर्दोषः। किंच तिङः कर्तृवाचकत्वमिति वैयाकरणस्य तव मतेऽपि पचतितरां मैत्र इत्यादौ कथं मैत्रस्य क्रियाविशेषणीभूतेन तिङर्थकर्त्रा सहाभेदान्वयः। नामजन्यप्रतीतिविशेष्ययोरेवान्वयः स चाभेदेनैवेति व्युत्पत्तिशरीरस्योक्तत्वात्। इति चेन्न। नामपदेन प्रातिपदिकमात्रस्य सुबन्तमात्रस्य वा ग्रहणम्। क्रियाप्रधानमाख्यातं द्रव्यप्रधानं नाम। यतः क्रियां पृष्टस्तिङाऽऽचष्टे किं देवदत्तः करोति? पचतीति। द्रव्यं पृष्टः कृताऽऽचष्टे कतरो देवदत्तः? यः पाचक इतीति प्रशंसायां रूपबिति सूत्रे भाष्योक्तेः। प्रकृतिः प्रत्ययो विभक्तिरित्येतन्नाम। सत्ता द्रव्यं लिङ्गं संख्येति नामार्थः। तेषु द्रव्यं प्रधानमिति निरुक्तभाष्योक्तेश्च नामपदेन सुबन्तमेवोच्यत इति मञ्जूषायां नागोजिभट्टाः। नामजन्यप्रतीतिविशेष्ययोरेवेत्यादिनियमे मानाभावश्चेत्याशयात्। न च नामजन्यप्रतीतिविशेष्ययोरेवेत्यादिनियमानभ्युपगमे 'घटो नित्यः' इति वाक्यस्य घटत्वे नित्यपदार्थान्वयसंभवात्प्रामाण्यापत्तिरिति वाच्यम्। घटत्वस्य पदार्थैकदेशतया पदार्थः पदार्थेनेत्यादिव्युत्पत्तिविरोधेन घटत्वे नित्यपदार्थान्वयासंभवेन पूर्वोक्तवाक्यस्य प्रामाण्यापत्तेरभावात्। पचतिकल्पं देवदत्त इत्यादौ कर्तुः पदार्थैकदेशत्वाभावेन तत्र देवदत्तस्यान्वये न किंचिद्बाधकम्। तस्मात्समभिव्याहृतवर्णानामेव वाचकत्वमिति वर्णस्फोटो निष्प्रत्यूहः। ननु तिबाद्यादेशानां वाचकत्वे लः कर्मणीत्याद्यनुशासनविरोधः। तेन स्थानिनामेव वाचकत्वस्य प्रतिपादनादित्याशङ्क्याऽऽह—लः **कर्मणीत्याद्यनुशासनं चेत्यादि**। अयं भावः—वैयाकरणसिद्धान्तेषु वाक्यस्फोटो मुख्यः। शक्तिग्राहकशिरोमणिना वृद्धव्यवहारेण लोकानां प्रथमतो वाक्य एव शक्तिग्रहान्निराकाङ्क्षस्य वाक्यार्थस्य वाक्यादेव ज्ञानेन तेनैव वाक्यार्थस्य पूर्णत्वाच्च। तत्र देशकालकर्तृभेदेन वाक्यानामानन्त्यात्प्रतिवाक्यं शक्तिग्रहस्यासंभवान्निखिलवाक्यानामन्वाख्यानस्यान्यलघूपायेनाशक्यत्वाद्वाक्ये पदानि परिकल्प्य तावताऽप्यनिर्वाह-

( वर्णस्फोटनिर्णयः )

रचितत्वं कल्पितमादायेत्युक्तम् ॥ ३ ॥ ( ६२ )

इति रङ्गोजिभट्टात्मजकौण्डभट्टविरचिते वैयाकरणभूषण-
सारे स्फोटवादे वर्णस्फोटनिरूपणं समाप्तम् ।

---

त्पदे च प्रकृतिप्रत्ययविभागं परिकल्प्य शास्त्रद्वारा कल्पिताभ्यामन्वयव्यतिरेकाभ्यां प्रकृतिप्रत्ययार्थान् शास्त्रमात्रव्यवहारोपयुक्तान् परिकल्पयन्ति स्म पाणिन्याद्याचार्याः । अत्रौपगव इत्यादावणप्रत्ययसत्त्वेऽपत्यार्थबोधसत्त्वमित्यन्वयसंभवेऽप्यण्प्रत्ययाभावेऽपत्यार्थबोधाभावरूपव्यतिरेको यद्यपि न संभवति, अण्प्रत्ययाभावेऽपि फिञादिनाऽपत्यार्थबोधात्, तथाऽपि वह्निं प्रति तृणारणिमणीनां कारणत्व इवात्र व्यतिरेको बोध्यः । तथा चाणादिप्रत्ययान्यतमप्रयोगेऽपत्यार्थप्रतीतिः, अणाद्यन्यतमप्रयोगाभावेऽपत्यरूपार्थप्रतीत्यभाव इत्येवमन्वयव्यतिरेकानुक्तौ । तथोपसर्गनिपातधात्वादिविभागः, स्थानिनो लादयः, आदेशास्तिबादयश्च कल्पिता एव । तत्र पाणिन्यादिमुनिभिः स्थानिनां कल्पिता अर्थाः कण्ठरवेणैवोक्ताः । आदेशानां तु स्थान्यर्थाभिधानसमर्थस्यैवाऽऽदेशता, यथा—पद्दन्नोमास्० तृज्वत्क्रोष्टुः, इत्यादिभाष्यात्तेऽर्थाः । ततश्च लः कर्मणीत्यादिना लकारस्यैव वाचकत्वकथनात्तिङो वाचकत्वस्य केनाप्यबोधनाच्च लकार एव वाचको, न तिङ् । तिङां लादेशत्वेनैव कर्त्राद्यर्थकत्वस्य पर्यवसन्नत्वादिति चेन्नैतद्युक्तम् । उच्चारित एव शब्दोऽर्थं प्रत्यायको नानुच्चारित इति भाष्यात्—लोके ह्यादेशा एव श्रूयन्त इति तेभ्य एवार्थबोधदर्शनाद्यत्किंचिदर्थविषयकार्थशाब्दबोधे जननीये उच्चारितशब्दनिष्ठवृत्तिज्ञानजन्योपस्थितिः कारणमिति कार्यकारणभावस्य पर्यवसानात्, अन्वयव्यतिरेकाभ्यां कार्यकारणभावस्य निर्णेयत्वेन लोके तथैवानुभवाच्च प्रकृष्टप्रयोगसमवायिनः श्रूयमाणा विसर्गतिबादय आदेशा एव वाचकाः । न तु तत्स्थानित्वेन कल्पिताः सकारलकारादयः । तेषामनियतत्वात् । तथा हि—विसर्गेण रोः स्मरणं तेन च सोः । एवं णला तिपः स्मरणं तेन च लकारस्य । एवं च गौरवं स्पष्टमेव । किं च स्थान्यादेशभावज्ञानरहितस्यावैयाकरणस्य ततो बोधानापत्तेः, वाचकाज्ञानात्, सिद्धप्रयोगे क्वचिदप्यश्रूयमाणत्वेन तेषां वाचकत्वकल्पनस्यात्यन्तानुचितत्वाच्च । तस्माद्व्यवहारदशायां श्रूयमाणतिबाद्यादेशेभ्य एवार्थबोधदर्शनाच-

( अथ पदादिस्फोटनिरूपणम् ) ।

अथाऽऽदेशा वाचकाश्चेत्पदस्फोटस्ततः स्फुटः ॥ ४ ॥ (६३)

**एवमादेशानां वाचकत्वे सिद्धे पदस्फोटोऽपि सिद्ध एवेत्याह—अथेत्यादि । आदेशास्तिब्विसर्गादयः । अयं भावः—समभिव्याहृतवर्णानां वाचकत्वे सिद्धे तादृशवर्णसमभिव्याहाररूपपदस्य वाचकता सिध्यति । प्रतिवर्णमर्थस्मरणस्यानुभवाविरुद्धत्वात्प्रत्येकं वर्णानामर्थव-**

---

न्निष्ठामिव बोधजनकतारूपां शक्तिं लाघवेन प्रक्रियानिर्वाहार्थं तिबादिस्थानित्वेन कल्पिते लकारे प्रकल्प्य लकाराः कर्मणि कर्तरि च विहिताः, रामान् रामैरित्यादौ नकारविसर्गादिनिष्ठां कर्मकरणादिबोधजनकताशक्तिमादाय शसादिविधानवदिति बोध्यम् ॥ ६२ ॥ ( ३ ) [ इति वर्णस्फोटनिरूपणम् ]

एतावता प्रबन्धेन सुप्तिङन्तमिति एकतिङन्तार्थमुख्यविशेष्यकं वाक्यमिति पदवाक्यलक्षणानाक्रान्तवर्णसमूहस्य प्रकृतिप्रत्ययरूपस्य व्याकरणेन गृहीतशक्तिकस्य पच् तिप् इत्यादिकस्य वाचकत्वे सिद्धे पदस्फोटोऽपि सिद्ध एवेत्याह—अथाऽऽदेशा इति । ननु प्रयोगान्तर्गततावद्वर्णानां वाचकत्वे सिद्धे कथं पदस्फोटः सिध्यतीत्यतस्तदाशयमाह—**अयं भाव इति । समभिव्याहृतवर्णानामिति** । तत्तत्पदघटकतावतां समभिव्याहृतवर्णानामित्यर्थः । **वाचकत्वे सिद्ध इति** । तावतां वर्णानां वाचकत्वं विना वक्ष्यमाणस्वरूपस्य पदस्य वाचकत्वं नोपपद्यते । अतः पदस्य वाचकत्वसिद्धिरानुपूर्वीविशिष्टतावतां वर्णानां वाचकत्वसिद्ध्यधीनेति भावः । एवं च पूर्वग्रन्थेन सहास्य ग्रन्थस्योपजीव्योपजीवकभावः सूचितः । पदस्वरूपमाह—**समभिव्याहाररूपपदस्येति** । तत्तत्पदघटकानुपूर्वीविशिष्टतावद्वर्णसमभिव्याहाररूपपदस्येत्यर्थः । ननु समुदायस्य समुदायघटकप्रत्येकातिरिक्तत्वाभावेन वाचकता प्रतिवर्णं विश्राम्यतु नाम तथापि पदस्फोटः—पदं वाचकमित्यभिमतसिद्धिः कथमित्याशङ्क्य प्रतिवर्णं वाचकताया अनुभवविरुद्धत्वेन तां प्रत्याचष्टे—**प्रतिवर्णमिति** । घटपटेतितत्तच्छब्दादेवार्थप्रतीतेः सर्वानुभवसिद्धत्वेन प्रत्येकवर्णादर्थस्मरणस्य बुद्ध्यनारूढत्वेनानुभवविरुद्धत्वादित्यर्थः । किंच प्रत्येकं वर्णस्य वाचकत्वेऽभ्युपगते बाधकान्तरमस्तीत्याह—**प्रत्येकं वर्णानामिति** । अर्थबोधानुकूला शक्तिर्वर्णसमूह एव, न तु प्रत्येकम् । तथा सति प्रत्येकवर्णस्यार्थव-

( पदादिस्फोटनिर्णयः )

**त्त्वेन प्रातिपदिकत्वापत्तौ "नलोपः प्रातिपदिकान्तस्य" [ पा० सू० ८-२-७ ] इत्यादिभिर्धनं वनमित्यादौ नलोपाद्यापत्तेश्च। एतच्च चरमवर्ण एव वाचकत्वशक्तिः शक्तेर्व्यासज्यवृत्तित्वे मानाभावात्पूर्वपूर्वव-**

---

त्त्वेन प्रातिपदिकसंज्ञायां सत्यां धनं वनमित्यादौ नकारस्य तदन्तादत्वान्नलोपः प्रातिपदिकान्तस्येति नलोपापत्तेः। **नलोपाद्यापत्तेरिति**। आदिपदाद्धनमित्यत्र धकारस्य झलां जशोऽन्त इति जश्त्वापत्तिर्बोध्या। न च प्रत्येकं सुबुत्पत्तौ तच्छ्रवणापत्तिरिति वाच्यम्। धनमित्यादिसमुदायात्मकप्रातिपदिकावयवत्वेन सुपो धात्विति लुक्प्रवृत्तिसंभवात्। न च समासग्रहणकृतनियमेन गामानयेत्यादाविव समुदाये प्रातिपदिकसंज्ञाया अप्रवृत्तिरिति वाच्यम्। भेदे सति यदर्थयोः परस्परं संसर्गस्तद्द्वारकार्थवत्समुदायस्य चेद्भवति प्रातिपदिकसंज्ञा तर्हि समासस्यैवेति नियमात्, यथा गामित्यस्य भिन्नोऽर्थः, आनयेत्यस्यापि भिन्नोऽर्थः, इत्येवमर्थभेदे सति तदर्थयोर्गोकर्मकमानयनमिति परस्परमन्वयोऽस्तीति तादृशान्वयद्वारा गामानयेति पदसमुदायोऽप्यर्थवानिति अर्थवत्समर्थत्वाश्च यः समुदायस्तस्य चेद्भवति संज्ञा तर्हि समासस्यैवेति नियमाकारस्य फलितत्वात्प्रकृते धनं वनमित्यादौ येनैवार्थेन धनेत्यादिसमुदायोऽर्थवांस्तेनैवार्थेन धकारादयोऽप्यर्थवन्त इत्यर्थभेदाभावेन घटो घट इत्यादाविव धकाराद्यवयवार्थतत्समुदायार्थयोः परस्परं संसर्गात्मकान्वयाभावेन संसर्गद्वारकार्थवत्त्वाभावात्समुदाये धनेत्यादिरूपे प्रातिपदिकसंज्ञाया निष्प्रत्यूहत्वात्। किंच प्रत्येकं वर्णानां शक्तिमत्त्वे प्रत्येकं वर्णादर्थबोधापत्तिर्घटकलशपदाभ्यामिव। सर्वेषां वाचकशक्तिमत्त्वाविशेषात्। तथा प्रथमादेवार्थबोधोपपत्तौ द्वितीयादिवर्णोच्चारणनैरर्थक्यमपि स्यात्। तस्मात्प्रकृतिप्रत्ययादौ तत्तत्समूहे शक्तिर्व्यासज्यवृत्तिर्न प्रत्येकपर्याप्तत्यभ्युपगन्तव्यम्। नन्वेतत्समभिव्याहृतप्रत्येकं वर्णे वाचकत्वं निरस्य तावद्वर्णसमुदायात्मकसमभिव्याहारवाचकत्वं किमर्थं निर्णीतमित्याशङ्क्याऽऽह—**एतच्चेति**। समभिव्याहारवाचकत्वसमर्थनं चेत्यर्थः। **चरमवर्ण एवेति**। प्रकृत्यादिघटकश्रूयमाणचरमवर्ण एवेत्यर्थः। एवकारेण प्रथमादिवर्णे न शक्तिः, तन्मात्रोच्चारणादर्थबोधानुदयादिति सूचितम्। **शक्तेर्व्यासज्यवृत्तित्वे इति**। अर्थबोधजनकतारूपायाः शक्तेरनेकवर्णसमुदायपर्याप्तत्व इत्यर्थः। **मानाभावादिति**। चरमवर्णोच्चारणानन्तरमेवार्थबोधोदयात्तत्रैव वाचकताशक्तेर्विश्रान्तिः पर्यवस्यतीति भावः। नन्वेवं चरमवर्णमात्रोच्चारणाद-

र्णानुभवजन्यसंस्काराश्चरमेणार्थधीजनने सहकारिण इति न तन्मात्रोच्चारणादर्थधीरिति वर्णस्फोटवादिनां मतान्तरदूषणायोक्तम् । रामोऽस्तीति वक्तव्ये रामित्यनन्तरं घटिकोत्तरमोकारोच्चारणेऽर्थबोधापत्त्या तादृशानुपूर्व्या एव शक्ततावच्छेदकत्वौचित्यादिति दिक् ॥ ४ ॥ (६३)

---

प्यर्थबोधापत्तिः स्यादत आह—पूर्वपूर्वेति । चरमवर्णापेक्षया यः पूर्वः पूर्वो वर्णः—घ्, अ, ट्, इत्यादिस्तदुच्चारणानुभवजन्या ये संस्कारास्ते चरमवर्णेनार्थबोधजनने सहकारिणो भवन्ति, तद्भिन्नत्वे सति तत्कार्यकारित्वं सहकारित्वम् । मृत्तिकाभिन्नत्वे सति मृत्कार्यं यो घटस्तत्कारित्वाद् घटं प्रति दण्डः सहकारी । तद्वत् । चरमवर्णभिन्नत्वेऽर्थबोधरूपचरमवर्णकार्यकारित्वात् संस्काराः सहकारिण इति भावः । पूर्वपूर्ववर्णानुभवजन्यसंस्कारसाचिव्येनैव चरमवर्णस्यार्थबोधजनकतेत्यर्थः । अत एव न चरमवर्णमात्रोच्चारणादर्थबोधो न वा प्रथमादिवर्णोच्चारणनैरर्थक्यं नापि प्रत्येकस्मादर्थबोधापत्तिरिति भावः । मतान्तरस्य दूषणायेति । समभिव्याहृततावद्वर्णानां वाचकत्वं विना पदस्य वाचकत्वं न सिध्यतीत्यतः पदस्य वाचकत्वसिद्धिस्तावतां वर्णानां वाचकत्वसिद्ध्यधीनेति वर्णस्फोटवादिनां यन्मतान्तरमुक्तं तद्दूषणायापीत्यर्थः । अपिना प्रतिवर्णवाचकत्वाद्दूषणसंग्रहः । ननु तत्तत्पदघटकपूर्वपूर्ववर्णानुभवजन्यसंस्कारसाचिव्येनैव चरमवर्णस्यार्थबोधजनकत्वदर्शनात्तत्रैव शक्तिविश्रान्त्यङ्गीकारेण सिद्धौ किमर्थं वाचकताशक्तेस्तावद्वर्णसमुदायपर्याप्तत्वमुक्तमत आह—रामोऽस्तीति । घटिकोत्तरमोकारोच्चारण इति । रामोऽस्तीति नैरन्तर्येणोक्ते तस्माद्रामकर्तृका सत्ता इत्यर्थबोधो जायत इत्यनुभवसिद्धं तत्र राम् इति मान्तमुच्चार्य तदनन्तरं घटिकादिकालं यापयित्वा ओकारे उच्चार्यमाणे सति व्यवहितोच्चारणादप्यर्थबोधो भाव्यः, तत्र पूर्वोक्तस्य राम् इत्युच्चारणानुभवजन्यसंस्कारस्य विद्यमानत्वात् । परं तु तादृशव्यवहितोच्चारणाल्लोकानामर्थबोधो नैव जायते इति हेतोरित्यर्थः । तादृशानुपूर्व्या एवेति। रेफोत्तरवर्त्याकारोत्तरवर्तिमकारोत्तरवर्त्योकारत्वमित्येवंरूपाया एवाऽऽनुपूर्व्याः, नतु चरमवर्णमात्रवृत्तितशक्तित्वादेरित्यर्थः । शक्ततावच्छेदकत्वेति । वाचकतावच्छेदकत्वेत्यर्थः । येन रूपेण वाचकता तस्यैव वाचकतावच्छेदकत्वम् । यथा फक्कधातुवाच्यफूत्कारादिव्यापाराणां फूत्कारत्वादिरूपेणैव वाच्यतेति वाच्यतावच्छेदकं फूत्कारत्वादिकं तद्वदित्यर्थः । औचित्यादिति । तादृशानुपूर्वीश्रव-

( पदादिस्फोटनिर्णयः )

सुप्तिङन्तं पदमिति परिभाषितपदस्य वाचकत्वस्वीकर्तृणां मतमाह

घटेनेत्यादिषु न हि प्रकृत्यादिभिदा स्थिता ॥
वस्त्रसादाविवेहापि संप्रमोहो हि दृश्यते ॥ ५ ॥ ( ६४ )

---

णोत्तरमेव लोकानामर्थबोधादिति भावः । ननु घट इत्यादौ घोत्तरावर्णोत्तरटकारोत्तरावर्णत्वादिरूपानुपूर्व्याश्चरमवर्ण एव वृत्तेर्न तावद्वर्णसमुदायवृत्तित्वमिति कथं पदस्य वाचकत्वमिति भवदभिमतं सिध्यतीति चेन्न । समुदायस्य समुदायिभ्योऽतिरिक्तत्वमिति मते—तद्दोषशङ्काया अप्यनुदयात् समुदायस्य समुदायिभ्योऽनतिरिक्तत्वमिति मतेऽपि अव्यवहितोत्तरत्वसंबन्धेन पूर्वपूर्ववर्णसंश्लिष्टोत्तरोत्तरवर्णसमुदायत्वस्याऽऽनुपूर्वीरूपत्वेनादोषात् । ननु तादृशानुपूर्व्याः सहकारित्वाङ्गीकरणेनैवोक्तातिप्रसङ्गवारणात्पर्याप्त्याः शक्ततावच्छेदकत्वकल्पनेत्याशङ्क्याऽऽह—दिगिति । प्रतिवर्णं वाचकताया अनुभवविरुद्धत्वमित्यादिका दूषणदिक् प्रदर्शिता । दिक्शब्देन प्रतिवर्णवाचकतायां पूर्वोक्तादन्यदपि किंचिद्दूषणमस्तीति सूचितम् । तदाशयस्त्वेवम्—यदि समुदायस्य वाचकता नाङ्गीक्रियते तर्हि तस्यार्थवत्त्वाभावेन प्रातिपदिकसंज्ञानापत्तिः । न चार्थबोधजनने सहकारित्वेन समुदायस्याप्यर्थवत्त्वेन प्रातिपदिकसंज्ञा सुलभेति वाच्यम् । तथा सति चरमवर्णमात्रस्यार्थवत्त्वेन प्रातिपदिकत्वात्ततोऽपि प्रत्ययोत्पत्त्यापत्तेः । एवं च चरमवर्णस्यैव वाचकत्वे तदर्थे विभक्त्यर्थैकत्वाद्यन्वयो न स्यात् । चरमवर्णस्य प्रकृतित्वाभावात् । समुदायस्य प्रकृतित्वेऽपि समुदायार्थस्य समुदायनिष्ठवृत्तिजन्योपस्थित्यभावेन समुदायार्थत्वाभावात् । समुदायाद्विहितविभक्त्यर्थस्य चरमवर्णनिष्ठवृत्त्युपस्थितार्थेऽन्वयः कर्तुमशक्यः । चरमवर्णस्य तत्प्रकृतित्वाभावात् समुदायस्य तत्प्रकृतित्वेऽपि समुदायार्थस्य समुदायनिष्ठवृत्त्युपस्थितत्वाभावेन प्रकृत्यर्थत्वाभावान्नत्रापि समुदायाद्विहितविभक्त्यर्थान्वयः कर्तुं शक्यः । प्रत्ययानां स्वप्रकृत्यर्थान्वितस्वार्थबोधजनकत्वमिति व्युत्पत्तेरिति भावः ॥ ६३ ॥ ( ४ )

एतावता प्रघट्टकेन शक्तिलक्षणाद्योतकतान्यतमसंबन्धेनार्थप्रतिपादकत्वं पदत्वमित्यङ्गीकृत्योक्तमिदानीं सुप्तिङन्तं पदमिति स्वशास्त्रपरिभाषितपदस्य वाचकत्वमिति मन्तॄणां मतेन पदस्फोटसिद्ध्युपायमाह—घटेनेत्यादिषु इति । परिभाषितेति । शास्त्रकारैः पाणिन्यादिभिः संकेतितेत्यर्थः । सर्वं वाक्यमसति बाधके

घटेनेत्यादौ "घटे" इति प्रकृतिर्नेति प्रत्ययः । घट् इति प्रकृतिरेनेति प्रत्यय इति विभागस्य "सर्वे सर्वपदादेशाः" इति स्वीकारे विशिष्य प्रकृतिप्रत्यययोर्ज्ञानासंभवान्न वाचकत्वमित्यर्थः । वैयाकरणैर्विभागः सुज्ञेय इत्यतो दृष्टान्तव्याजेनाऽऽह—वस्नसावाविति । "बहुवचनस्य वस्नसौ" [ पा०, सू ८-१-२१ ] इति समुदायस्याऽऽदेशविधानान्नात्र तद्विभागः संभवतीत्यर्थः ॥ ५ ॥ ( ६४ )

---

सावधारणमिति न्यायेन परिभाषि स्यैव पदस्येत्यर्थो बोध्यः । तेन प्रकृतिघटकवर्णसमुदायस्य प्रत्ययघटकवर्णसमुदायस्य वा वाचकत्वव्युदासः । तादृशवर्णसमुदायस्य पारिभाषिकपदत्वाभावात् । लोके सुबन्तादेरेव प्रयोगदर्शनेन सुबन्तादावेव लोकानां शक्तिग्रहात्पारिभाषिकपदस्यैव वाचकतेति सुबन्तादेरेव पदस्फोटतेत्यर्थः । सुबादिरहितवर्णसमुदायस्य यत्पूर्वं पदस्फोटत्वमुक्तं तदर्थवत्त्वं पदत्वमित्यङ्गीकर्तॄणां मतेनोक्तमिति भावः । प्रकृत्यादिभिदा—प्रकृतिप्रत्यययोर्भेदः स्फुटो नैव वर्तीस्यतो न प्रत्येकं तामर्थावगमोत्तरं विशिष्टबोधस्तथा चाऽऽवश्यिकैव समूहशाक्तिरिति शेषः । प्रकृतिप्रत्यययोर्भेदावगमाभावमेव स्पष्टयति—घटेनेत्यादावित्यादिना । घटेनेत्यत्र घट् इति प्रकृतिः, एन इति प्रत्यय इति वा । घटे इति प्रकृतिः, न इति च प्रत्यय इति वेत्यत्र विनिगमनाविरहात्प्रकृतिप्रत्यययोर्विभागस्य, विशिष्य निर्णयासंभवादित्यर्थः । वर्णयोरादेश इति पक्षे—एकारस्य आदेशः पूर्वावयवो वा परावयवो वेत्यादिसंशयात्प्रकृतिप्रत्ययविभागसंशयः संभवति । सर्वे सर्वपदादेशा इति शब्दनित्यताप्रतिपादकभाष्योक्तपक्षे तु वस्नसादाविव संप्रमोहाद्विभागज्ञानमेव न संभवतीति भावः । ननु कश्चिदत्र प्रकृतिभागः कश्चिच्च प्रत्ययभाग इत्येवं सामान्यतो ज्ञानं संभवत्येवेत्यतो विशिष्येत्युक्तम् । एतावानयं प्रकृतिभाग एतावांश्चायं प्रत्ययभाग इत्येवं विशेषरूपेण ज्ञानासंभवादित्यर्थः । न वाचकत्वमिति । न प्रत्येकं तयोर्वाचकत्वं संभवति । प्रकृतिप्रत्यययोर्विभागनिर्णयासंभवादिति भावः । नन्ववैयाकरणानां प्रकृतिप्रत्यययोर्विभागस्य विशेषरूपेण ज्ञानासंभवेऽपि वैयाकरणानां स सुज्ञेयः व्याकरणशास्त्रस्य तत्तत्पदघटकप्रकृतिप्रत्ययादिविभागप्रक्रिया प्रतिपादकत्वादित्याशयवानाह—वस्नसादावितीति । न तद्विभाग इति । सुबन्तसमुदायस्यैव वस्नसाद्यादेशविधानदर्शनान्न सर्वत्र प्रकृतिप्रत्ययादिविभागज्ञापकत्वं व्याकरणशास्त्रस्य । तथा च यथा वैयाकरणानामपि

सुप्तिङन्तचयरूपवाक्यस्यापि तदाह—

हरेऽवेत्यादि दृष्ट्वा च वाक्यस्फोटं विनिश्चिनु ॥
अर्थे विशिष्य संबन्धाग्रहणं चेत्समं पदे ।
लक्षणादधुना चेत्तत्पदेऽर्थेऽप्यस्तु तत्तथा ॥ ६ ॥ (६५)

हरेऽव विष्णोऽवेत्यादौ पदयोः "एङः पदान्तादति" [ पा० सू० ६·१—१०९ ] इत्येकादेशे सति न तद्विभागः सुज्ञानस्तथ च प्रत्ये·

वस्नसादौ प्रकृतिप्रत्ययविभागनिर्णयः सुतरां न संभवति तथा सर्वे सर्वपदादेशा इति पक्षे घटेनेत्यादावपीति भावः । एवं च रामेणेत्यादितो रामाभिन्नः कर्तेत्याद्यनुभूयमानबोधान्यथानुपपत्त्या सुबन्ताद्यात्मकपदे बोधजनकताशक्तिरास्थेयेत्याशयः । केचित्तु यत्र प्रकृत्यादिविभागकल्पना शास्त्रसाहाय्येनापि नैव कर्तुं शक्या तादृशस्यैव पदस्य वाचकत्वं, यत्र तु तथा कल्पना संभवति तत्र प्रकृतिप्रत्ययोरेव वाचकत्वमिति वदन्ति, भाष्यतत्त्वविदस्तु यत्र प्रकृत्यादिविभागः कल्पयितुं सुतरामशक्यस्तादृशस्थले पदस्य वाचकत्वेऽवश्यं कल्पयितव्ये सति तदनुरोधेन सर्वत्रैव पदस्य वाचकत्वं कल्पयितुं युक्तम् । अन्यथा क्वचित्पदस्य वाचकत्वं क्वचिच्च प्रकृतिप्रत्यययोरित्येवमर्धजरतीयत्वापत्तेः । शक्तिग्राहकशिरोमणेर्वृद्धव्यवहारात्सुबन्ताद्यात्मकपद एव शक्तिग्रहाच्चेति प्राहुः । एवं वाक्यस्फोटेऽपि पक्षद्वयं बोध्यम् ॥ ६४ ॥ ( ५ )

अथ वाक्यस्फोटं निरूपयंस्तदवतरणिकां ब्रूते—**सुप्तिङन्तचयेति** । सुबन्तचय—तिङन्तचय—सुप्तिङन्तचयात्मकवाक्यस्यापीत्यर्थः । अपिना सुबन्ताद्यात्मकपदसंग्रहः । तेन च यया युक्त्या पदस्य वाचकत्वं सिद्धं तयैव युक्त्या वाक्यस्यापि तत्—वाचकत्वं सिध्यतीति सूचयन्नाह—**हरेऽवेत्यादीति** । **लक्षणादधुना चेत्तत्पदे०** । अत्राऽऽदिपदेन विष्णोऽव गङ्गेवेत्यादेः संग्रहः । **पदयोरिति** वर्णयोरादेश इति पक्षे पदावयववर्णयोरित्यर्थः । सर्वे सर्वपदादेशा इति पक्षे तु यथाश्रुतमेव साधु । एङः पदान्तादित्यनेनैकादेशे जाते सति हर इत्येकं पदं, एवेत्यपरं, अथवा हरे इत्येकं पदमपरं च वेत्येवेत्यत्र विनिगमकाभावात्—न तद्विभागः—पदयोर्विभागः सुस्पष्टं ज्ञेयो न भवतीत्यर्थः । ननु मा ज्ञायि पदयोर्विभागस्ततः किं तदाह—**तथाचेति** । **प्रत्येकं पदाज्ञानेऽपीति** । प्रत्येकं पदयोः स्पष्टं ज्ञानाभावेऽपीत्यर्थः । न ह्यत्र प्रत्येकं पदयोर्विशिष्यज्ञानं संभवति, येन ताभ्यां प्रत्ये-

( पदादिस्फोटनिर्णयः )

कपदाज्ञानेऽपि समुदायशक्तिज्ञानाच्छाब्दबोधात्समुदायेऽप्यावश्यका शक्तिः। एवं प्रकृतिप्रत्ययेषु विशिष्याज्ञायमानेष्वपि समुदायव्युत्पन्नत्वबोधात्तत्राप्यावश्यकैव शक्तिरिति भावः। वस्तुतः पदैः पदार्थबो-

---

कमर्थावगमोत्तरं विशिष्टबोधः स्यादिति भावः। कियान् भाग एकं पदं कियांश्च भागोऽपरं पदमित्येवं सामान्यतो ज्ञानसत्त्वेऽपि पदार्थज्ञाने पदज्ञानस्य कारणत्वात्प्रत्येकं पदयोर्यादृशज्ञानादर्थावगमोत्तरं विशिष्टबोधः स्यात्तादृशस्पष्टं पदयोर्ज्ञानं नास्तीत्यर्थः। विशिष्य पदज्ञानमेव पदार्थज्ञानोपयोगि, न सामान्यतो ज्ञानं शक्तावच्छेदकानुपूर्व्यज्ञानादिति भावः। अत्रापिशब्देन प्रत्येकं पदयोः स्पष्टज्ञानाभावेऽपि नार्थबोधानुपपत्तिरिति सूचितं तदुपपादयति—समुदायशक्तीति सुबन्ताद्यात्मकपदसमुदायरूपवाक्ये बोधजनकतारूपशक्तिज्ञानसत्त्वेन तस्मादर्थबोध उपपद्यते। तथा च प्रत्येकं पदयोः स्पष्टज्ञानाभावेऽपि यतो लोकानां समुदायाद्धरिनिष्ठं यत्संबोधनं तद्विषयो, विधिविषयीभूतमवनं—रक्षणमित्याद्यर्थबोधो जायतेऽतः पदसमुदायरूपवाक्ये बोधजनकता शक्तिरवश्यं कल्पनीयेति भावः। यथा प्रत्येकं पदयोर्विशिष्य ज्ञानासंभवेऽपि तत्रानुभूयमानवाक्यार्थबोधान्यथानुपपत्त्या पदसमुदायात्मके वाक्ये शक्तिः परिकल्पिता तथा यत्र प्रकृतिप्रत्यययोर्विभागस्य विशिष्यज्ञानं न संभवति तत्रापि अनुभूयमानविशिष्टबोधान्यथाऽनुपपत्त्या प्रकृत्यादिसमुदायात्मकपदे शक्तिरभ्युपेयेत्यभिप्रायेणाह—एवमिति। विशिष्याज्ञायमानेष्विति। एतच्च पञ्चषष्टितमकारिकायां 'घटनेत्यादिषु न हि' इत्यत्र विस्तरेण निरूपितमिति तत्रैव द्रष्टव्यम्। समुदायव्युत्पत्त्येति। प्रकृतिप्रत्ययसमुदायात्मकपदे शक्तिग्रहेणेत्यर्थः। ननु वाक्यार्थज्ञाने वाक्यघटकीभूतयावत्पदपदार्थज्ञानस्य कारणत्वाद्यया युक्त्या पदस्फोटः साधनीयस्तयैव युक्त्या वाक्यस्फोटोऽपि सिध्येदित्याशयेन पदस्फोटानन्तरं वाक्यस्फोट उक्तः। तथा च वाक्यस्फोटे साधनीये तत्र पदस्फोटो दृष्टान्तत्वेनोदाहर्तुं युक्तः। सत्येवं कथमत्र तद्वैपरीत्येन पदस्फोटे साधनीये वाक्यस्फोटस्य दृष्टान्तत्वमुक्तम्। किंच यत्र प्रत्येकं पदयोर्विभागज्ञानं स्पष्टं न संभवति तत्र वाक्यस्फोटस्य सिद्धावपि न सर्वत्र तत्र वाक्यस्फोटः सिध्यतीत्यत आह—वस्तुत इति। पदैः पदार्थबोधवदिति, यथा घटपटादिप्रातिपदिकैः, तत्प्रकृतिकसुबन्तैर्वा घटादिरूपोऽर्थो बोध्यते तथा घटोऽस्तीत्यादिवाक्यैर्घटकर्तृका वर्तमानकालिकी सत्तेत्याद्यर्थः प्रत्याय्यते। पदा-

( वाक्यस्फोटनिर्णयः )

**धवद्वाक्येन वाक्यार्थबोध इति पदार्थशक्तिः पदेष्विव वाक्यार्थशक्तिर्वाक्येऽभ्युपेयेति पदस्फोटवाक्यस्फोटौ व्यवस्थितौ। अन्यथा घटः कर्मत्वमानयनं कृतिरित्यादौ तादृशव्युत्पत्तिरहितस्यापि बोधप्रसङ्गः। घट-**

---

**र्थशक्तिरिति**। तत्र यथा घटाद्यर्थनिरूपिता बोधजनकतारूपा शक्तिर्घटादिप्रातिपदिकेषु तत्प्रकृतिकसुबन्तेषु वा पदेषु कल्पिता तद्वद्वाक्यार्थनिरूपिता बोधजनकत्वशक्तिर्घटोऽस्तीत्यादिवाक्येष्वभ्युपगन्तव्येत्यर्थः। तत्रेयान् विशेषः—वाक्ये कल्प्यमाना शक्तिः प्राप्ताप्राप्तविवेकन्यायेन संसर्गांशे विशेष्यविशेषणभावांशे च पर्यवस्यति, घटाद्यर्थस्य क्लृप्तावयवशक्त्यैवोपस्थानस्य सिद्धत्वादिति। **पदस्फोटवाक्यस्फोटाविति**। पदं वाचकं, वाक्यं वाचकमित्यर्थकावित्यर्थः। **व्यवस्थिताविति**। युक्त्यादिप्रमाणेन निर्धारितावित्यर्थः। प्रमाणेनार्थनिर्धारणं व्यवस्थेति भावः। एतेन पदस्फोटं दृष्टान्तीकृत्य वाक्यस्फोटसाधनाज्ज्ञाताज्ञातप्रकृत्यादिविभागेषु सकलपदेष्विव ज्ञाताज्ञातपदविभागेष्वपि सकलवाक्येषु शक्तिरास्थेयेति सूचितम्। अर्धजरतीयत्वादिदोषापसङ्गायेति भावः। तदेवं पक्षद्वयस्य व्यवस्थितत्वेऽपि भाष्यादावुपवर्णितत्वेऽपि च वाक्यस्फोटस्य मुख्यत्वात्तत्कल्पनमेवाऽऽश्यकं न पदस्फोटकल्पनमित्याह—**अन्यथेति**। वाक्ये बोधजनकत्वशक्त्यनङ्गीकारे इत्यर्थः। **घटः कर्मत्वमानयनं कृतिरित्यादाविति**। घटमानयेति वाक्ये ये पदार्थाः प्रतीयन्ते तेऽत्र विशकलिततया शब्दान्तरेण निर्दिष्टाः, एतादृशस्थल इत्यर्थः। **तादृशव्युत्पत्तीति**। घटः कर्मत्वमित्यादिवाक्यं घटकर्मकानयनरूपार्थबोधजनकमित्येतादृशवाक्यशक्तिज्ञानरहितस्यापीत्यर्थः। अत्रापिशब्दो दृष्टान्तार्थः—यथा घटः कर्मत्वमित्यादिवाक्यशक्तिज्ञानवतः पुंसो घटः कर्मत्वमित्यादिवाक्याद्घटकर्मकानयनमिति बोधो निष्टङ्कं जायते तथा वाक्यशक्तिग्रहशून्यस्य तादृशवाक्यात्तथा बोध आपद्येतेत्याशयात्। अत्र तादृशवाक्यशक्तिज्ञानरहितस्येत्युक्त्या घटः कर्मत्वमित्यादिवाक्यं घटकर्मकानयनबोधजनकमित्येवंशक्तिग्रहवतस्तादृशवाक्यात्तथा बोधो भवत्येवेति सूचितम्। **बोधप्रसङ्ग इति**। घटकर्मकानयनानुकूलकृतिरित्यर्थबोधापत्तिरित्यर्थः। घटादिपदशक्तिग्रहवतः पुंस इति शेषः। घटमानयेतिवाक्यात्प्रतीयमानपदार्थानामत्रोपस्थितिसत्त्वादिति भावः। तथा च घटमानयेत्यत्रेवात्रापि वृत्तिज्ञानजन्यपदार्थोपस्थित्यादिसामग्रीसत्त्वाद्घट-

मानयेत्यत्रेव पदार्थानामुपस्थितौ सत्यपि तात्पर्यज्ञाने बोधाभावाच्च ।

कर्मकानयनमिति बोधप्रसक्तिरित्याशयः। अत्र लकाराणां कृतौ शक्तिरिति नैयायिकमतानुसारेण घटः कर्मत्वमित्यादिवाक्ये कृतिरित्युक्तम् । ननु वाक्यार्थज्ञाने तात्पर्यज्ञानस्य कारणत्वात्प्रकृतस्थले घटः कर्मत्वमित्यादिवाक्यं घटकर्मकानयनमित्यर्थं बोधयत्वितीच्छयोच्चरितत्वरूपतात्पर्यज्ञानाभावेन तात्पर्यज्ञानरूपकारणाभावादेव न पूर्वोक्तवाक्यात्तादृशार्थबोधापत्तिरित्यत आह—**घटमानयेत्यत्रेवेति** । अयं भावः—तदर्थप्रतीतीच्छा वक्तुस्तात्पर्यम् । सैन्धवमानयेत्यादौ सैन्धवपदमश्वरूपार्थप्रतीतीच्छया वक्त्रोच्चरितमित्येवं तात्पर्यज्ञाने सत्येव तस्माद्वाक्यादश्वमानयेति बोधो दृश्यते । यदि तात्पर्यज्ञानं न स्यात्तर्हि सैन्धवपदस्य नानार्थकत्वेनाश्वो वा लवणं वाऽऽनेयमिति संशयात्संशयस्य च प्रवृत्तिप्रतिबन्धकत्वदर्शनात्तादृशवाक्यादर्थबोध एव नोदियादतस्तात्पर्यज्ञानं वाक्यार्थबोधे कारणमित्यवश्यं वक्तव्यम्। तादृशतात्पर्यग्राहकं च लोके गमनप्रकरणादि । घटमानयेत्यादौ च घटकर्मकानयनमित्यर्थप्रतीतिर्निरुक्तवाक्याद्भवत्विति वक्तुरिच्छैव तात्पर्यम् तादृशतात्पर्यग्राहकं च द्वितीयाप्रत्ययान्तघटमितिप्रयोगानन्तरमानयेति तिङन्तोच्चारणम् । ततश्च तात्पर्यज्ञानसत्त्वाद्घटमानयेति वाक्याद्घटकर्मकानयनमित्याकारकः शाब्दबोधो जायत इति युक्तमेव । घटः कर्मत्वमित्यादिवाक्यं घटकर्मकानयनमित्यर्थप्रतीतीच्छया वक्त्रोच्चरितमित्यर्थे तात्पर्यग्राहकाभावेन तात्पर्यज्ञानरूपकारणाभावादेव न घटः कर्मत्वमित्यादिवाक्याद्घटकर्मकानयनमिति बोधः प्रसज्जते । तथा च कथं वाक्यशक्तिज्ञानरहितस्येयं बोधापत्तिश्चोद्यत इति शङ्काशयः । समाधानुस्तु—घटमानयेत्यत्र यावन्तो य च पदार्थाः पदनिष्ठवृत्तिज्ञानजन्योपस्थितिविषयाः सन्ति तावन्तस्ते च पदार्था घटः कर्मत्वमित्यादिवाक्यात्पदनिष्ठवृत्तिज्ञानजन्योपस्थितिविषयाः सन्तीति कृत्वा तात्पर्यज्ञानं वर्तते । वृत्तिज्ञानजन्यपदार्थोपस्थितिरपि तात्पर्यग्राहिका, नतु घटमानयेत्याद्यानुपूर्व्येवेत्यर्थः । तथा च तात्पर्यज्ञानसत्त्वेऽपि यतस्तादृशवाक्याद्वाक्यशक्तिज्ञानरहितस्य घटकर्मकानयनमिति बोधो न जायत इत्यनुभवसिद्धं ततो वाक्यशक्तिरावश्यकेति भावः । तदेतत्सर्वमनुसंधायाऽऽह सारे—**घटमानयेत्यत्रेवेत्यादि** । घटमानयेति वाक्ये यथा पदार्थोपस्थितिस्तद्वद्घटः कर्मत्वमित्यादिवाक्ये पदार्थोपस्थितौ सत्यामित्यर्थः । अत्र घटः कर्मत्वमितिवाक्यजन्यपदार्थोपस्थितौ घटमानयेतिवाक्यजन्यपदार्थोपस्थितेर्दृष्टान्तत्वेनोपादानाद्वृत्तिज-

( वाक्यस्फोटनिर्णयः )

**तत्रैव घटकर्मकमानयनमिति बोधे घटार्थकप्रातिपदिकोत्तरं कर्मत्ववाचकविभक्तेस्ततो धातोस्तत आख्यातस्य समभिव्याहारः कारणमिति कार्यकारणभावज्ञानवतो बोधात्तज्ज्ञानमपि हेतुरिति चेत्तर्हि सिद्धो**

---

न्यपदार्थोपस्थितिस्तात्पर्यग्राहिका, नतु घटमानयेत्येतादृशानुपूर्व्येवेति सूचितम्। तथा पदार्थानामुपस्थिताविति सप्तम्या सिद्धसाध्यसमभिव्याहारन्यायेन तादृशपदार्थोपस्थितेस्तात्पर्यज्ञानकारणत्वं च सूचितम्। तदाह—सत्यपि तात्पर्यज्ञान इति। वृत्तिज्ञानजन्यपदार्थोपस्थितिनिमित्तके तात्पर्यज्ञाने सत्यपीत्यर्थः। **बोधाभावाच्चेति**। अत्रापि तादृशव्युत्पत्तिरहितस्येत्यनुषञ्जनीयम्। तथा च घटः कर्मत्वमिति वाक्यं घटकर्मकानयनं बोधयत्वितीच्छया वक्त्रोच्चारितमित्येवमात्मके तात्पर्यज्ञाने सत्यपि, घटः कर्मत्वमित्यादिवाक्यं घटकर्मकानयनबोधजनकमित्येवंवाक्यशक्तिज्ञानशून्यस्य पुरुषस्य यतो निरुक्तवाक्यात्तथा बोधो नैव जायत इत्यनुभूयते ततो वाक्यशक्तिरवश्यमभ्युपगन्तव्याऽनिच्छताऽपि। वाक्यशक्तिज्ञानेतरसकलकारणकलापसत्त्वेऽपि तथा बोधाभावेऽभियुक्तानुभवस्य प्रसिद्धत्वाद्वाक्यशक्त्यङ्गीकार इति भावः। घटः कर्मत्वमिति वाक्यशक्तिज्ञानसत्त्वेऽपि ततस्तथा बोधो नैव जायते आकाङ्क्षाविरहादित्याह—**तत्रैवेति**। घटमानयेत्यत्रैवेत्यर्थः। **घटकर्मकानयनमिति बोध इति**। एतादृशाकारकबोधे जननीये सतीत्यर्थः। **घटार्थप्रातिपदिकेति**। अत्र घटार्थेत्युक्त्या तादृशार्थककलशादिप्रातिपदिकसंग्रहः सूचितः। **कर्मत्ववाचकविभक्तेरिति**। अम्—औट्—शस्, इत्येवंरूपाया विभक्तेरित्यर्थः। **धातोरिति**। आ—नीत्यादेरित्यर्थः। **आख्यातस्येति**। तिङ्पत्याहारान्तर्गतसिबादितिङ इत्यर्थः। अत्र यद्यपि धातोरनन्तरं विकरणस्येति वक्तुमुचितम्। धातोरनन्तरं शबादिविकरणानां विहितत्वात्। तथापि विकरणस्य सर्वत्रादर्शनाद्धातोरनन्तरं न तन्निवेशः। पपाचेत्यादौ विकरणस्यासत्त्वादित्यर्थः। आनयेत्यादौ यद्यप्याख्यातं न श्रूयते तथापि आख्यातस्यार्थोपस्थित्यर्थमनुसंधानमावश्यकमिति धातोरनन्तरमाख्यातस्येत्युक्तम्। विकरणस्य त्वनर्थकत्वान्न तदनुसंधानमावश्यकमिति न तन्निवेशः कृत इत्याशयः। **समभिव्याहार इति**। सहोच्चारणमित्यर्थः। **कारणमिति**। हेतुरित्यर्थः। घटकर्मकानयनबोधः कार्यम्। **कार्यकारणेति**। तथा च घटकर्मकमानयनमित्याकारकबोधं प्रति घटार्थप्रातिपदिकोत्तरममादिविभक्त्युत्तरमानीत्यादिधातूत्तरतिङुच्चारणमिति

**वाक्यस्फोटः।** घटादिपदार्थबोधे बोधकतारूपपदशक्तिज्ञानकार्यकारणभावस्येव विशिष्टवाक्यार्थबोधे पदसमभिव्याहाररूपवाक्यनिष्ठबोधकतारूपवाक्यशक्तिज्ञानस्यापि हेतुत्वकल्पनात्। अर्थोपस्थापकज्ञानविषयशब्दवृत्तिज्ञानकारणत्वस्यैव शक्तित्वात्। युक्तं चैतद्विषयतासं-

---

कार्यकारणभावः फलितः। एतादृशकार्यकारणभावविषयकज्ञानवतो निरुक्तबोधस्य जायमानत्वान्निरुक्तकार्यकारणभावज्ञानमपि तथा बोधे हेतुरित्याश्रीयते। तदिदं कार्यकारणभावज्ञानं घटः कर्मत्वमित्यादिवाक्यस्थले नास्तीति कृत्वा न ततो तथा बोधः। सोऽयं निरुक्तकार्यकारणभाव एवाऽऽकाङ्क्षेत्यर्थः। आकाङ्क्षैव च वाक्यशक्तिः। आकाङ्क्षा, शक्तिरिति नाममात्रे भेदः। तदर्थस्त्वेक एवेति भावः। एवं चाऽऽकाङ्क्षारूपशक्त्यभावादेव न घटः कर्मत्वमिति वाक्यात्तथा बोधः। तथा च तादृशवाक्ये शक्तिकल्पने प्रमाणाभाव इति भावः। एवं निरुक्तरीत्या कार्यकारणभावज्ञानस्य हेतुत्वाङ्गीकारेण किं सिद्धं तदाह—**सिद्धो वाक्यस्फोट इति।** पदसमूहात्मकवाक्यस्य वाचकत्वं सिद्धमित्यर्थः। ननु यदि पदसमूहात्मकवाक्ये बोधजनकतारूपा शक्तिः सिध्येत्तदैव वाक्यस्फोटो—वाक्यस्य वाचकता सिद्धा स्यात्किंतु सैव शक्तिर्वाक्ये कथं सिध्यतीति दृष्टान्तेन स्पष्टयन्नाह—**घटादिपदार्थेति।** घटपटादिपदार्थबोधं प्रति घटादिपदं कम्बुग्रीवादिमदाद्यर्थं शक्तमित्येवं घटादिपदनिष्ठशक्तिज्ञानं कारणमित्येवं पदनिष्ठशक्तिज्ञानकार्यकारणभावस्य हेतुत्वमवश्यं वक्तव्यम्। अगृहीतवृत्तिकस्य पुंसोऽगृहीतवृत्तिकपदादर्थबोधादर्शनात्। **विशिष्टवाक्यार्थबोध इति।** तद्वद्घटकर्मकमानयमित्याद्याकारकवाक्यार्थविशेषबोध इत्यर्थः। **पदसमभिव्याहारेत्यादि।** घटकर्मकमानयनमित्येवं वाक्यार्थविशेषबोधं प्रति घटमानयेति वाक्यं घटकर्मकानयनार्थे शक्तमित्येवं पदसमूहात्मकघटमानयेति वाक्यनिष्ठशक्तिज्ञानं कारणमित्येवं घटमानयेतिवाक्यनिष्ठशक्तिज्ञानकार्यकारणभावस्य हेतुत्वकल्पनाद्वाक्यस्य वाचकत्वं सिद्धमिति भावः। नन्वेवं पदार्थवाक्यार्थरूपविषयभेदेन कार्यकारणभावभेदस्याऽऽवश्यकत्वे हेतुत्वाभ्युपगमेऽपि तावता वाक्ये शक्तिः कथं सिद्धेत्यत आह—**अर्थोपस्थापकेति।** अर्थोपस्थापकं यज्ज्ञानं तादृशज्ञानविषयो यः शब्दस्तन्निष्ठं यज्ज्ञाननिरूपितं कारणत्वं तादृशकारणत्वस्यैव शक्तित्वादित्यर्थः। शब्दनिष्ठबोधकारणत्वमेव शक्तित्वमिति संक्षिप्तोऽर्थ इति यावत्। तथा च पदेष्विव वाक्येष्वपि

**बन्धेन शाब्दबोधमात्रे वृत्तिज्ञानस्य लाघवेन हेतुत्वमिद्धेः । विवेचितं चैतद्भूषणे । ननु वाक्यार्थस्यापूर्वत्वात्कथं तत्र शक्तिग्रह इत्याश-**

शक्तिः सिद्धेति भावः । एतदेव विशदयितुमाह—**युक्तं चैतदिति** । एतद्—वाक्यनिष्ठबोधकारणत्वस्य शक्तित्वं युक्तं युक्तिमदित्यर्थः । तामेव युक्तिमाह—**विषयतासंबन्धेनेति** । सामान्यविषयतारूपसंबन्धनिवेशाद्विषयभेदेऽपि न तद्भेदेन कार्यकारणभावबाहुल्यमिति भावः । अत एवोक्तं लाघवाद्धेतुत्वसिद्धेरिति । **शाब्दबोधमात्र इति** । घटादिविषयमनिवेश्य सामान्यतः शाब्दबोध इत्यर्थः । **वृत्तिज्ञानस्येति** । वृत्तिज्ञानजन्योपस्थितेरित्यर्थः । **हेतुत्वमिति** । कारणत्वमित्यर्थः । वृत्तिज्ञानेत्यत्र विषयतासंबन्धेनेत्यनुषञ्जनीयम् । तथा च शाब्दबोधत्वावच्छिन्नं प्रति विषयतासंबन्धेन वृत्तिज्ञानजन्योपस्थितिः कारणमित्यर्थः । अत्र बोधः कार्यं, उपस्थितिः कारणम् । कार्यकारणयोश्च विषयताख्यः संबन्धः । बोधनिरूपिता विषयता चोपस्थितौ वर्तत इति कृत्वा विषयतासंबन्धेनोपस्थितिः कारणमित्युक्तम् । एतादृशकार्यकारणभावकल्पने गौरवं न भवतीत्याह—**लाघवादिति** । यदा तु तत्पदीयशक्तिज्ञानरहिततत्पदज्ञानवतः पुंसस्तत्पदघटितवाक्याद्बोधापत्तिनिरासार्थं तदर्थबोधे तदर्थकपदनिष्ठवृत्तिज्ञानजन्योपस्थितिः कारणमित्युच्यते, तदा तु गौरवं स्यत् । अत्र लक्षणसमन्वयः—तत्पदं—गोपदं, तन्निष्ठशक्तिलक्षणान्यतरज्ञानरहितत्वे सति केवलगोपदज्ञानवतो देवदत्तस्य, तत्पद—गोपदघटितगामानयेति वाक्यात्प्रसक्ता या बोधापत्तिस्तद्वारणाय, तदर्थबोधे—सास्नादिमद्गोपदार्थबोधे, तादृशसास्नादिमदर्थकगोपदनिष्ठशक्तिज्ञानजन्योपस्थितिः कारणमित्येवं कार्यकारणभावे स्वीकृते सति घटपटाद्यर्थभेदेन कार्यकारणभावानन्त्यमापद्येतेति गौरवं स्पष्टम् । विषयमनिवेश्य सामान्यतः शक्तिज्ञानकार्यकारणभावकल्पने तु शक्तेरैक्यान्न कार्यकारणभावानन्त्यप्रसक्तिरिति लाघवमिति भावः । वाक्यशक्तिविषये शङ्कते—**नन्विति** । शङ्कामेवाऽऽह—**वाक्यार्थस्यापूर्वत्वादिति** । सर्वत्र शाब्दबोधात्प्रागनुपस्थितत्वादित्यर्थः । अयं भावः—यथा घटपटादयः पदार्थाः पूर्वसिद्धाः, न त्वपूर्वाः, अतस्तेषु घटादिपदानां शक्तिग्रहो युक्तः । किंतु वाक्यार्थो न तथा पूर्वसिद्धोऽपि त्वपूर्वः । तथाहि—वाक्यार्थो नाम पदार्थसंसर्गः । पदार्थत्वं च पदजन्यप्रतीतिविषयत्वम् । विषयता च प्रकारताविशेष्यतान्यतररूपा । सा च न संबन्धेऽस्तीति संबन्धस्य पदादनुपस्थितत्वाद्घटादिपदार्थवत्पूर्वसिद्धत्वा-

**ङ्क्याऽऽह-अर्थे इति । वाक्यस्येति शेषः । वाक्यस्य वाक्यार्थे विशिष्य शक्त्यग्रहणं चेत्तर्हि पदेऽपि समम् । पद एवान्वयांशे शक्तिरिति**

---

भावान्न तत्र वाक्यार्थबोधात्प्राक्शक्तिग्रहः संभवतीति भावः । एवमाशङ्कायां प्रतिबन्द्या समाधत्ते मूले—**अर्थे विशिष्येति । वाक्यस्येति** शेष इति । तथा च वाक्यस्य वाक्यार्थे पदार्थसंसर्गात्मके । **शक्त्यग्रहणं चेदिति** । वाक्यार्थबोधात्प्राक् पदार्थसंसर्गस्याविद्यमानत्वेन तत्र वाक्यशक्तिग्रहो न संभवतीति चेदित्यर्थः । एवमभिहितान्वयवादिमते संसर्गात्मके वाक्यार्थे वाक्यशक्तिग्रहानुपपत्तिमभिधायान्विताभिधानवादिमतेऽपि पदे वाक्यशक्तिग्रहानुपपत्तिः समैवेत्याह—**पदेऽपि सममिति** । ननु शाब्दबोधात्पूर्वं पदे चक्षुरादीन्द्रियोपस्थितपदार्थनिरूपितशक्तिग्रहसंभवोऽस्तीति कथं शाब्दबोधात्पूर्वं पदे शक्तिग्रहानुपपत्तिरित्यतस्तदाशयं स्पष्टयति—**पद एवान्वयांश इति** । घटादिपदानामितरान्वितघटादिपदार्थे शक्तिरित्यन्विताभिधानवादिमत इत्यर्थः । इत्थं हि तेषामाशयः-यदा भोश्छात्र त्वं गामानयेति वाक्यं प्रयोजको गुर्वादिरुच्चारयति तदा तच्छ्रुत्वा प्रयोज्यः शिष्यादिर्गामानयति । पार्श्वस्थोऽज्ञातगवादिपदशक्तिको बालस्तु प्रयोज्यकर्तृकं गवानयनं वीक्ष्य ःदिदं गवानयनं गामानयेतिशब्दप्रयोज्यमिति निश्चिनोति । ततश्च गां नयाश्वमानयेत्यादावावापोद्वापाभ्यां—गोपदसत्त्वे सास्नादिमत्पदार्थबोधः । आनयपदव्यतिरेकेण सास्नादिमत्पदार्थबोधाभावः । इत्याकारकान्वयव्यतिरेकाभ्यां गवादिपदानामितरान्वितसास्नादिमदादिपदार्थेषु शक्तिं गृह्णाति । इत्थं च गामानयेतिप्राथमिकव्यवहारेण विशिष्ट एव शक्तिग्रहादानयनाद्यन्वितः सास्नादिमदादिपदार्थ एव गवादिशब्दार्थः । किंचान्वयस्याशक्यत्वे शाब्दबोधविषयता न स्यात् । शाब्दबोधविषयतायां शक्तिग्रहस्य नियामकत्वात् । अशक्यस्यानुभवविषयत्वेऽतिप्रसङ्गात् । तथा च सकलभेदानुगुणसामान्यरूपो विशेषान्तरसंनिधानाद्विशेषविश्रान्तः पदार्थ एव वाक्यार्थः आक्षिप्तपदान्तराणि पदान्येव च वाक्यम् । यथा घटशरावादिसर्वभेदानुकूलसामान्यरूपं मृत्तिकात्वं तद्वद्घटत्वपटत्वादिसर्वभेदानुकूलं सायान्यरूपं शब्दत्वादि तद्रूप इत्यर्थः । एवं च पदार्थत्वेनैव रूपेण विशेषागामन्वये पदानां शक्तिरिति तेषामाशयः । अन्वयरूपे वाक्यार्थेऽपि पदानां शक्तिरिति यावत् । तथा च वाक्यार्थे वाक्यशक्तिर्न कल्पनीया गौरवादिति भावः ।

पक्षेऽपि तद्ग्रहासंभवस्तुल्य इत्यर्थः । यदि च पदशक्तिः पदार्थांशे ज्ञाताऽन्वयांशे चाज्ञातोपयुज्यत इति कुब्जशक्तिवादस्तदा ममापि वाक्यशक्तिरज्ञातैवोपयुज्यत इति वादाभ्युपगमस्तुल्य इति भावः। ननु वृद्धव्यवहारं पश्यतो मनसा पदार्थवद्वाक्यार्थेऽपि तद्ग्रह इति चेत्तु-

---

तद्ग्रहासंभव इति । अन्विताभिधानवादिमतेऽपि अन्वये पदशक्तिग्रहासंभवस्तुल्य इत्यर्थः । अन्वयरूपवाक्यार्थस्य शाब्दबोधात्पूर्वमनुपस्थितत्वादिति भावः। कुब्जशक्तिवादानुसारेणाऽऽह—यदि चेत्यादि । कुब्जशक्तिवाद इति । अयं हि तदाशयो जातिविशिष्टा व्यक्तिरेव शक्या । परं तु जातिशक्तिभाने सत्येव पदार्थस्मृत्यनन्तरं वाक्यार्थबोधो जायते नान्यथा । इत्थं च व्यक्तौ शक्तिज्ञानस्य नोपयोगः । तासामानन्त्यात् । एवं च व्यक्तिः स्वरूपसत्येव पदार्थस्मृतिहेतुर्नतु तज्ज्ञानमपेक्षितम् । शक्तिग्रहकार्यकारणभावे च जातिविशिष्टव्यक्तिबोधं प्रति जातिप्रकारकशक्तिग्रहः कारणमित्येवं जातिप्रकारकत्वस्यैव निवेशो, नतु व्यक्तिविशेष्यकत्वस्य । अत एव व्यक्त्यंशे कुब्जा शक्तिः । व्यक्त्यंशे शक्ति ज्ञानानपेक्षणात् । क्वचिदंशे ज्ञाता शक्तिः कारणं क्वचिदंशे तु अज्ञाता कारणमित्येवं यो वादः स एव कुब्जशक्तिवाद इति भावः । तथा च कुब्जशक्तिवादानुसारेण पदार्थांशे—व्यक्त्यंशे, पदशक्तिर्ज्ञाता पदार्थानां पूर्वं सिद्धत्वाच्छाब्दबोधात्प्रागुपस्थितत्वात्तत्र शक्तिग्रहसंभवाज्ज्ञाता उपयुज्यते । अन्वयांशे तु वाक्यार्थरूपान्वयांशस्य शाब्दबोधात्प्रागनुपस्थितत्वादज्ञातैवोपयुज्यत इत्युच्यते चेद्वाक्यशक्तिवादिनो ममापि वाक्यस्य शक्तिरज्ञातैव संसर्गरूपे वाक्यार्थे उपयुज्यत इति समः कुब्जशक्तिवादाङ्गीकार इति न वाक्यार्थे वाक्यशक्तिग्रहानुपपत्तिश्चोदनीयेति भावः । नन्वज्ञाता शक्तिः, सा चोपयुज्यत इति वचनमयुक्तं, अज्ञातस्य क्वाप्युपयोगकरणासंभवादित्यस्मिन्मते शैथिल्यं मनसि निधाय प्रकारान्तरमवतारयति—नन्वित्यादिना । पश्यत इति । गामानयेति गुर्वादिनोक्ते शिष्यादिनाऽऽनीतां गां पश्यतोऽज्ञातपदशक्तिकस्य बालस्येत्यर्थः । पदार्थवदिति । अयं भावः—अभिहितान्वयवादिमते लाघवात्पदानां पदार्थमात्रे शक्तिर्नत्वन्वयांशेऽपि गौरवात् । आकाङ्क्षादिलभ्यत्वेनान्यलभ्यत्वाच्च । एवं च पदेभ्यः प्रथमं पदार्थमात्रोपस्थितिः । पश्चात्पदार्थविशेषाणामन्वयरूपस्य वाक्यार्थस्योपस्थितिः। इत्याशयेनाऽऽह—पदार्थवदिति । अत्र 'तत्र तस्येव' इति सप्तम्यन्ताद्वतिः, उपमेये वाक्यार्थे सप्तमीदर्शनात् । तथा च बालस्य यथा मनसा पदार्थे—

ल्यमित्याह—**लक्षणादिति**। लक्ष्यते तर्क्यतेऽनेनेति लक्षणं मनस्तस्मात्। अपिः पदपदोत्तरं बोध्यः, पदेऽपि लक्षणात्तद्ग्रहश्चेत्तर्ह्यस्तु वाक्येऽपीति शेषः। वस्तुतस्तु समुदितार्थे विशिष्टवाक्यस्यैव प्रथमं तद्ग्रहः। आवापोद्वापाभ्यां परं प्रत्येकं तद्ग्रह इति बोध्यम् ॥ ६ ॥ ( ६५ )

---

सास्नादिमत्यर्थे पदशक्तिग्रहो भवति तथा वाक्यार्थेऽपि—अन्वयरूपे वाक्यार्थेऽपि-तद्ग्रहः—पदशक्तिग्रहः स्यादिति चेत्तुल्यमित्याह—**लक्षणादितीति**। लक्षणशब्द, स्यानेकार्थत्वात्प्रकृतेऽपेक्षितमर्थं ब्रूते—**लक्ष्यत इत्यादिना**। लक्षधातोः करणे ल्युट्। **मन इति**। ज्ञानसाधनमिन्द्रियमित्यर्थः। परममूले—'पदेऽर्थेऽप्यस्तु' इत्यत्र वाक्यार्थप्रतिपादकोऽर्थशब्दः। तादृशार्थकार्थपदोत्तरवर्तिनाऽपिशब्देन पदार्थसमुच्चये सत्यसंगत्यापत्तिः, पदार्थे शक्तिग्रहस्याप्रतिक्षेपादत आह—**अपिरिति**। **पदपदोत्तरमिति**। भिन्नक्रमेण पदेऽपीत्येवं पदशब्दोत्तरमपिशब्दो योज्य इत्यर्थः। तदर्थमाह—**पदेऽपीत्यादिना**। लक्षणान्मनसा पदेऽप्यर्थनिरूपितशक्तिग्रहश्चेदिष्यते तर्हि मनसैव वाक्येऽपि वाक्यार्थनिरूपितशक्तिग्रहोऽस्त्वित्यर्थः। अयं भावः—घटमानयेति वाक्याद्वृद्धव्यवहाररूपात्पदैः पदार्थनिरूपितप्राथमिकशक्तिनिर्णयो यथा मनसा जायते तथा तद्वाक्यश्रवणे तद्घटकपदैः पदार्थानामुपस्थितौ सत्यां मनसा तत्संसर्गोपस्थितिरपि नानुपपन्ना। तथा च संसर्गरूपे वाक्यार्थेऽपि वाक्यशक्तिर्नानुपपन्नेति भावः। एतावता प्रबन्धेन पूर्वं पदार्थे शक्तिग्रहस्ततस्तत्प्रयुक्तपदार्थोपस्थितौ सत्यां पश्चान्मनसोपस्थिते संसर्गे शक्तिग्रह इत्युक्तम्। अधुना तु व्यवहारदर्शनसहकृतमनसा वाक्यार्थे एवाऽऽदौ शक्तिग्रहः पश्चादेवाऽऽवापोद्वापाभ्यां तत्तत्पदस्य तत्तदर्थे शक्तिग्रह इत्याह—**वस्तुतस्त्विति**। अत्रापि 'वृद्धव्यवहारं पश्यतः' इत्यनुषञ्जनीयम्। तेन वाक्यशक्तिग्रहात्पूर्वं कोशादिना पदशक्तिग्रहेऽपि न क्षतिः। तथा च शक्तिग्राहकशिरोमणिना वृद्धव्यवहारेण प्रथमतो वाक्य एव वाक्यार्थनिरूपितशक्तिग्रहो जायते। क्वचिदुपदेशेनापि पूर्वं वाक्यशक्तिग्रहो जायते। **तद्ग्रह इति**। विशिष्टवाक्यार्थनिरूपितशक्तिग्रह इत्यर्थः। नन्वेवं वाक्यस्फोटसिद्धावपि पदस्फोटो न सिध्यतीत्याह—**आवापोद्वापाभ्यामिति**। आनयनापसारणाभ्यामित्यर्थः। **प्रत्येकं तद्ग्रह इति**। प्रत्येकस्मिन् पदे प्रत्येकपदार्थनिरूपितशक्तिग्रहो भवतीति

( वाक्यस्फोटनिर्णयः )

**इयमेव मीमांसकानां वेदान्तैकदेशिनां च गतिरित्याह—**

**सर्वत्रैव हि वाक्यार्थो लक्ष्य एवेति ये विदुः ।**

**भाट्टास्तेऽप्यत्थमेवाऽऽहुर्लक्षणाया ग्रहे गतिम् ॥७॥ (६ )**

**भाट्टा इति तदनुयायिनां वाचस्पतिकल्पतरुप्रभृतीनामुपलक्षणम् । स्पष्टमेतत् ।**

**ननूक्तपक्षद्वयमनुपपन्नमुत्पत्तेरभिव्यक्तेर्वैकदाऽसंभवेन वर्णसमूहरूप-**

---

भावः । एवं च प्रत्येकपदशक्तिसहकृताकाङ्क्षादिवशात्पदाद्वाक्यार्थशाब्दबोधो यदा तदा पदस्फोटः, यदा तु प्रत्येकपदशक्तिनिरपेक्षतयैव वाक्यशक्तिर्विशिष्ट-बोधं जनयति तदा वाक्यस्फोट इति पक्षद्वयं फलतीति तात्पर्यं बोध्यम् ॥६५॥

**इयमेवेति ।** समुदितार्थे विशिष्टवाक्यस्यैव शक्तिरितीयमेवेत्यर्थः । **मीमांसकानामिति** । सर्वत्र वाक्ये लक्षणां स्वीकुर्वतां भाट्टादीनामित्यर्थः । **वेदान्तैकदेशिनामिति** । मीमांसकानुयायिनां वाचस्पतिकल्पतरुप्रभृतीनामित्यर्थः । त एते सर्वे पदलक्षणावद्वाक्यलक्षणा वदन्ति । नच पदशक्तिवद्वाक्य-शक्तिं विना वाक्यलक्षणा घटते । स्वशक्यसंबन्धो लक्षणेति लक्षणालक्षणस्य सर्वसंमतत्वादत आह—**सर्वत्रैवेति** । सर्वत्र वाक्यार्थो लक्ष्य एव लक्षणावृत्तिजन्य एवेति ये भाट्टादयो मीमांसका वदन्ति तेऽपि लक्षणाया ग्रहे समुदितार्थे वाक्य-शक्तिं गतिमुपायमाहुः । वाक्यशक्तिं विना वाक्यलक्षणा दुर्वचा, शक्यसंबन्धो लक्षणेति सर्वसंमतसिद्धान्तादिति भावः । न्यायवैशेषिकादिमते वाक्ये लक्षणा नास्ति । स्वशक्यसंबन्धो लक्षणेति चोच्यते । पदसमुदायरूपवाक्यस्य कस्मिंश्चि-दप्यर्थे शक्तिर्नास्ति । अतः कथं तत्र वाक्यशक्यसंबन्धो लक्षणा घटेतेत्यन्यत् । **उक्तपक्षद्वयमिति ।** पदवाक्यभेदेन व्यवस्थितं पदं वाचकं वाक्यं वाचकमित्ये-वंरूपं पक्षद्वयमित्यर्थः । अनुपपत्तिमेव स्पष्टयति—**उत्पत्तेरिति** । वर्णानां जन्य-त्वमिति मते—उत्पत्तेरिति । वर्णानां नित्यत्वमिति मते तु अभिव्यक्तेरिति । वैया-करणमते शब्दानामुत्पत्तिः स्फोटस्य त्वभिव्यक्तिरिति विभागः । **एकदा असंभ-वेनेति** । पदघटकानां सर्ववर्णानां युगपदुत्पत्तिरभिव्यक्तिर्वा न संभवति । अभि-व्यञ्जकतत्तत्स्थानानुयोगिकवायुसंयोगादेः क्रमिकत्वादुत्पत्तेरपि क्रमिकत्वेनाऽऽशुत-रविनाशिनां क्रमिकाणां वर्णानां युगपन्मेलनासंभवेनोत्पन्नानामभिव्यक्तानां वा

**पदज्ञानासंभवात् । तथा च सुतरां तत्समूहरूपवाक्यज्ञानासंभव इति चेन्न । उत्तरवर्णप्रत्यक्षसमयेऽव्यवहितोत्तरत्वसंबन्धेनोपस्थितपूर्ववर्णवत्त्वं तथा तदुत्तरप्रत्यक्षकाल उपस्थितविशिष्टतद्वर्णवत्त्वं तस्मिन्सुग्रहमिति तादृशानुपूर्वीघटितपदत्वस्येव वाक्यत्वस्यापि सुग्रहत्वात् ॥ ७ ॥ ( ६६ )**

---

तावद्वर्णसमूहरूपपदज्ञानात्यन्तासंभवादित्यर्थः । **तथा चेति** । तावद्वर्णसमूहरूपपदज्ञानासंभवे चेत्यर्थः । **तत्समूहेति** । तादृशपदसमूहरूपवाक्यज्ञानस्यापि सुतरामसंभव इति भावः । ततश्च पदस्फोटवाक्यस्फोटयोः सर्वथाऽनुपपत्तिरिति चेन्नेत्याह—**उत्तरवर्णप्रत्यक्षेत्यादिना** । अयं भावः—घटेत्यत्र पूर्वं घकारोच्चारणं पश्चादकारोच्चारणं ततष्टकारोच्चारणं ततः पश्चाच्चाकारोच्चारणमिति क्रमः । तत्र घकारोत्तरवर्णो योऽकारस्तज्ज्ञानवेलायामुत्तरवर्णेऽकारेऽव्यवहितोत्तरवर्तित्वसंबन्धेनोपस्थितः स्मृतो यः पूर्ववर्णो घकारस्तादृशघकारवत्त्वं, तथा तदुत्तरटकारप्रत्यक्षज्ञानकाले तस्मिंष्टकारेऽव्यवहितोत्तरवर्तित्वसंबन्धेनोपस्थितो यः प्रथमवर्णविशिष्टो द्वितीयो वर्णो 'घ' इत्याकारकस्तादृशघशब्दवत्त्वमित्यर्थः । अस्य सुग्रहमित्यत्रान्वयः । घकारवैशिष्ट्यं तदुत्तरस्मिन्नकारे, तदुत्तरस्मिंष्टकारे च घकारविशिष्टाकारवैशिष्ट्यं सुग्रहं सुखेनानायासेन ज्ञातुं शक्यमित्यर्थः । एवं चतुर्थादिवर्णे स्मृतप्रथमवर्णविशिष्टद्वितीयवर्णविशिष्टतृतीयवर्णवैशिष्ट्यं सुग्रहमिति रीत्या चरमवर्णप्रत्यक्षं पदवाक्यघटकयावद्वर्णविषयकं संपद्यत इति न पदार्थबोधवाक्यार्थबोधयोरनुपपत्तिरिति तात्पर्यार्थः । पदपदार्थो निर्दिश्यते—**उत्तरवर्णेत्यादि** । घटादिशब्दघटकपूर्वपूर्वस्माद्वर्णादुत्तरोत्तरवर्णोच्चारणकाले । तस्मिन्—उत्तरवर्णे । **उपस्थितेति** । स्मृतेत्यर्थः । **अव्यवहितेति** । पूर्ववर्णोत्तरवर्णयोः पूर्ववर्णाव्यवहितोत्तरत्वं संबन्ध इत्यर्थः । **पूर्ववर्णवत्त्वमिति** । पूर्ववर्णवैशिष्ट्यमित्यर्थः । अस्य सुग्रहमित्यत्रान्वयः । **उपस्थितविशिष्टेति** । उपस्थितः स्मृतो यः प्रथमवर्णविशिष्टो द्वितीयो वर्ण इत्यर्थः। यथा वर्णसमुदायात्मकपदत्वस्य सुज्ञेयत्वं तद्वत्पदसमुदायात्मकवाक्यत्वस्यापि सुज्ञेयत्वमित्याह—**तादृशानुपूर्वीघटितपदत्वस्येवेति** । पूर्वपूर्ववर्णवैशिष्ट्यस्योत्तरोत्तरवर्णे सत्त्वाद्यथा पदत्वं सुग्रहं तथा वाक्येऽपि पूर्वपदविशिष्टत्वमुत्तरपदे, पूर्वपदविशिष्टोत्तरपदवैशिष्ट्यं तृतीयपद इत्येवंरीत्या वाक्यान्तिमपदे पूर्वपूर्वपदवैशिष्ट्यमुत्तरोत्तरपदे बोद्धुं शक्यमिति वाक्य-

( वाक्यस्फोटनिर्णयः )

इदानीमखण्डपक्षमाह–

पदे न वर्णा विद्यन्ते वर्णेष्ववयवा न च ।
वाक्यात्पदानामत्यन्तं प्रविवेको न कश्चन ॥ ८ ॥ (६७)

पदे पचतीत्यादौ न वर्णाः, नातो वर्णसमूहः पदमिति शेषः । दृष्टान्तव्याजेनाऽऽह वर्णेष्विति । एकारौकारऌकारऋकारादिवर्णेष्ववयवाः प्रतीयमाना अपि यथा नेत्यर्थः । क्वचिदित्येव पाठः । एवं वाक्येऽप्याह–वाक्यादिति । पदानामपि वाक्याद्विवेको भेदो नास्तीत्यर्थं । अयं भावः–वाक्यं पदं वाऽखण्डमेव न तु वर्णसमूहः । अन-

---

त्वस्यापि सुमहत्वात्पदस्फोटवाक्यस्फोटौ निराबाधाविति भावः ॥ ६६ ॥ इति पदवाक्यस्फोटः ।

अथाखण्डस्फोटप्रतिपादनावसर इत्याह–इदानीमिति । सखण्डस्फोटकथनानन्तरमित्यर्थः । अखण्डपक्षमिति । अखण्डपदाखण्डवाक्यस्फोटपक्षमित्यर्थः । अवयवकल्पनारहितत्वमखण्डत्वमिति भावः । आह–निरूपयति–पदे न वर्णा इति । कारिकास्थपद इतिसप्तम्यन्तशब्दस्यार्थमाह–पचतीत्यादाविति । ननु वर्णेष्ववयवा न चेति प्रकृतानुपयुक्तमितित्याशङ्कां परिहरन्नाह–दृष्टान्तव्याजेनेति । दृष्टान्तमिषेणेत्यर्थः । क्वचिद्वर्णेष्ववया इवेति पाठो दृश्यते स चात्यन्तमनुगुण एव । यथा ककारादिवर्णेषु अवयवकल्पना नेत्याबालं सुप्रसिद्धं तद्वत्पदेऽपि वर्णात्मका अवयवा न सन्तीति ज्ञेयम् । तथा च दृष्टान्तेति यदुक्तं तद्युक्तमेवेति भावः । ननु वर्णेष्वपि क्वचिदवयवा दृश्यन्त एवेत्यत आह–प्रतीयमाना इति । एकारर्कारादिषु इकाररेफाद्यवयवा यद्यपि प्रतीयन्ते तथापि स्पष्टमनपलम्भात्तत्तद्वर्णसमानाकारध्वनिविशेषोपरागरूपोपाधिकृता सा भ्रान्तिरेवेति वर्णेष्ववयवा नैव वास्तवाः सन्तीत्यर्थः । एकारादिष्ववयवकल्पने दृढतरप्रमाणाभावेन गौरवापत्तेरिति भावः। पदे वर्णाभाववद्वाक्येऽपि पदानवयवकत्वं वक्तुमाह–वाक्यादिति । कारिकास्थप्रविवेकपदार्थं व्याचष्टे–भेद इति । 'विचिर पृथग्भावे' इति धात्वर्थानुसारात्प्रविवेकपदं भेदार्थकमित्यर्थः । ननु पदादिप्रतीतौ तदवयवानां वर्णानामुपलम्भात्कथं वर्णाभावः पदाभावश्चेत्यत आह–अयं भाव इति । अखण्डमेवेति । वर्णरूपावयवाघटितमेवेत्यर्थः । अखण्डमेवेत्येवकारव्यावर्त्यं प्रदर्शयति । नतु वर्णसमूह इति । वाक्ये पदे चावयवपरिकल्पनं न कार्यमिति भावः । अन-

न्तवर्णकल्पने मानाभावात् । तत्तद्वर्णोत्पादकत्वेनाभिमतवायुसंयोगनिष्ठं तत्तद्वर्णजनकताया व्यञ्जकताया वाऽवच्छेदकं वैजात्यमादायैव ककारो गकार इत्यादिप्रतीतिवैलक्षण्यसंभवात् । स्पष्टं हि भामत्याम्—"तारत्वादि वायुनिष्ठं वर्णेष्वारोप्यते" इत्युक्तं देवताधिकरणे । न चैवं वायुसंयोग एव वाचकोऽपि किं न स्यादिति वाच्यम्। प्रत्यक्षोपलभ्य-

न्तवर्णकल्पने प्रमाणाभावादप्रामाणिकगौरवापत्तेश्चेति भावः । ककारं श्रुत्वा खकारं शृणोमीति विलक्षणप्रतीत्यन्यथानुपपत्तिरेव तत्रानन्तवर्णपरिकल्पने मानमित्याशङ्क्य तन्निराकरोति—तत्त . र्णोत्पादकत्वेनेत्यादिना । ककारखकारादितत्तद्वर्णोत्पादकत्वेनाभिमतो यो वायुसंयोगस्तन्निष्ठमित्यर्थः । निष्ठमित्यस्यावच्छेदकेऽन्वयः । तत्तद्वर्णजनकताया इति । ककारादितत्तद्वर्णनिष्ठा या जनकता तस्या इत्यर्थः । एतच्च नैयायिकमते, वर्णानामनित्यत्वेनोत्पादविनाशशालित्वादित्यर्थः । व्यञ्जकताया इति । वैयाकरणमते वर्णानां नित्यत्वेन तदभिव्यक्तिरेव वाच्येत्यर्थः । अवच्छेदकमिति । जनकतानिरूपितं व्यञ्जकतानिरूपितं वा यदवच्छेदकत्वं तद्वदित्यर्थः । वैजात्यमिति । परिकल्पितो धर्मविशेष इत्यर्थः । प्रतीतिवैलक्षण्येति । वायुसंयोगगतं यत्कत्वखत्वादि तेन रूपेण स्फोटो विभासत इति ककारः खकार इत्यादिविलक्षणप्रतीतिर्निर्वोढुं शक्यसंभवेति भावः ।

एतदेव स्पष्टमभिहितं वाचस्पतिग्रन्थ इत्याह—भामत्यामिति । ब्रह्मसूत्रगतशांकरभाष्यव्याख्यायां वाचस्पतिप्रणीतायां भामत्याख्यायामित्यर्थः । आरोप्यत इति। वायुनिष्ठं तारत्वादि वर्णेष्वारोप्यत इति स्पष्टमुक्तं देवताधिकरणे( ब्र. सू. अ. १ पा. ३ सू. २६ ) इत्यत्रेत्यर्थः । अत एव तारो मन्द इत्येकवर्णविषयकप्रतीतिव्यवहारयोरुपपत्तिः । अन्यथा विरुद्धधर्मद्वयस्यैकत्रानुपपत्त्या तारो मन्द इत्येवं तत्तद्वर्णभेदापत्तेः । एकस्मिन्नपि वर्णे किंचिदपेक्षयाऽयं तारः, किंचिदपेक्षयाऽयं मन्द इति व्यवहारस्तु सकलजनानुभवसिद्ध एव । आरोपाभ्युपगमे तु नायं दोषः । अनारोपितस्यैव विरुद्धधर्मद्वयसंबन्धस्याऽऽश्रयीभूतवर्णभेदप्रयोजकत्वनियमात् । कण्ठताल्वाद्यभिघातजन्यवायुसंयोग एव वाचकोऽस्त्वित्याशङ्कते—नन्वेवमिति । वाचकोऽपीति । तथा च वायुसंयोगस्यैव ककारखकाराद्यात्मकत्वमस्त्वित्यर्थः । वायुसंयोगस्य ककारादिवर्णात्मकत्वं निराकर्तुमाह—प्रत्यक्षोपलभ्यमानेति । प्रत्यक्षेणोपलभ्यमानो यः ककारत्वादिप्रकारकप्रत्यक्षविषयः ककारादिस्तस्यैव

मानककारादेरेव वाचकत्वस्यानुभवसिद्धत्वात् । तथा च वाचकत्वान्यथानुपपत्त्या तदेवेदं पदं तदेवेदं वाक्यं सोऽयं गकार इति प्रतीत्या च स्फोटोऽखण्डः सिध्यति । एतेन गौरित्यादौ गकारौकारविसर्गादिव्यतिरेकेण स्फोटाननुभवाच्छ्रूयमाणवर्णानामेव वाचकत्वमस्त्वित्यपास्तम् । तेषां स्फोटातिरिक्तत्वाभावात् । यत्तु वर्णानां प्रत्येकं वाचकत्वे प्रत्यकादर्थबोधापत्तिः । समुदायस्य तु क्रमवतामाशुतरोत्पन्नानां

---

वाचकत्वस्यानुभवसिद्धत्वादित्यर्थः । शब्दस्य श्रवणेन्द्रियग्राह्यत्वेन प्रत्यक्षविषयत्वम् । वायुसंयोगस्य त्विन्द्रियग्राह्यत्वाभावेन प्रत्यक्षविषयत्वाभावान्न वाचकत्वं युक्तमिति भावः । अथोपसंहरन्निष्कर्षं वक्ति—तथा चेति । वायुसंयोगस्य वाचकत्वाभावे चेत्यर्थः । **वाचकत्वान्यथानुपपत्त्येति** । पदस्य वाक्यस्य च वर्णसमूहानतिरिक्तत्वे क्रमिकाणामाशुतरविनाशिनां वर्णानां युगपन्मेलनासंभवात्तेषां वाचकत्वस्य वक्तुमशक्यत्वेनान्यथानुपपत्त्या पदस्य वाक्यस्य च वर्णसमूहातिरिक्तत्वस्याऽऽवश्यकत्वेन पदवाक्ययोर्वाचकत्वं सिध्यतीत्यर्थः । सोऽयमिति प्रत्यभिज्ञा चास्मिञ्शब्दनित्यत्ववादिमते सम्यगुपपद्यत इत्याह- तदेवेदमिति । तदेवेदमित्यादित्रयस्य ' प्रतीत्या ' इत्यत्रान्वयः । प्रत्यभिज्ञायां व्यक्त्यैक्यमनुभूयत इति स्फोटोऽखण्डः सिध्यतीत्यर्थः । सोऽयं गकार इति प्रतीत्या वर्णानां नित्यत्वमुक्तम् । वर्णानामनित्यत्वे तु अनित्यवर्णघटितपदवाक्ययोरप्यनित्यत्वेन प्रत्यभिज्ञा नोपपद्येतेति स्फोटस्याखण्डत्वं न सिध्येदिति भावः । नच व्यक्तिभेदेऽपि तदेवेदमौषधमित्यादाविव साजात्यावलम्बनेनोक्तप्रतीतिर्निर्वहतीति वाच्यम् । तज्जातीयमिदं पदमिति व्यवहारस्याप्यापत्तेः । नच तादृशव्यवहार इष्ट एवेति वाच्यम् । तदेवेदं पदमिति व्यक्त्यैक्यविषयकव्यवहारस्यैवानुभवसिद्धत्वात् । एतेनेति । प्रत्यभिज्ञामूलकाखण्डस्फोटस्य वाचकत्वसाधनेनेत्यर्थः। **श्रूयमाणवर्णानामिति** । गौरित्यत्र गकारौकारविसर्गातिरिक्तस्य स्फोटस्यानुभवाभावाद्वर्णानामेव वाचकत्वमिति वदन्तः प्रत्युक्ताः । तेषामिति । गकारादिवर्णानामित्यर्थः । **स्फोटातिरिक्तत्वाभावादिति** । व्यञ्जकवायुसंयोगगतगत्वादिना स्फोटस्यैव भानादिति भावः । खण्डनीयमंशमनुवदति—यत्त्वित्यादिना । वर्णानां प्रत्येकं वाचकत्वं समुदायस्य वा ? इति विकल्प्य नाऽऽद्य इत्याह—**वर्णानां प्रत्येकमिति** । **अर्थबोधापत्तिरिति** । अर्थबोधावृत्त्यापत्तिरित्यर्थः । नान्त्य इत्याह—**समु-**

तथैवाभिव्यक्तानां वा ज्ञानमसंभाव्यमेव । पूर्वपूर्ववर्णानुभवसंस्कारसहकारेणैकदा समूहालम्बनरूपसकलज्ञानसंभवस्तु सरो रसो जराराजनदीदीनादिसाधारण इत्यतिप्रसङ्ग इति स्फोट एवाखण्डो नादाभिव्यङ्ग्यो वाचक इति कैयटः । तत्तुच्छम् । पदज्ञानसंभवस्योपपादित-

---

दायस्य त्विति । आशुतरोत्पन्नानामिति । आशुतरविनाशिनामित्यस्याप्युपलक्षणमिदम् । तथा च पौर्वापर्यक्रमेणोच्चारितानामुच्चारणानुपदमेव विनष्टानां वर्णानां तथैव = पौर्वापर्यक्रमेणैवाभिव्यक्तानां वा युगपन्मेलनाननुभवाद् ज्ञानं नैव संभवतीत्यर्थः । वर्णानां जन्यत्वपक्षे तत्समुदायस्यैवासंभवात्तज्ज्ञानासंभवः । नित्यत्वपक्षे तु समुदायसंभवेऽपि तज्ज्ञानासंभव इति भावः । ननु घटेत्यत्र घकारोत्तरवर्णेऽकारे वर्णोच्चारणानुभवजन्यसंस्कारवशात्स्मृतो यः पूर्ववर्णस्तादृशपूर्ववर्णवत्त्वमव्यवहितोत्तरत्वसंबन्धेन वर्तते, तथा तृतीयवर्णोच्चारणसमये तत्र तृतीयवर्णे, स्मृतो यः प्रथमवर्णविशिष्टो द्वितीयवर्णस्तद्वैशिष्ट्यमव्यवहितोत्तरवर्तित्वसंबन्धेन वर्तते । एवं चरमवर्णपर्यन्तं पूर्वपूर्ववर्णवैशिष्ट्यस्य वक्तुं शक्यत्वात्समूहालम्बनरूपसकलवर्णज्ञानं यद्यपि संभवति तथापि सरो रसो नदी दीनेत्यादौ वैपरीत्येन नदीशब्दघटकनकाराकारदकारेकारानुभवजन्यसंस्कारे दीनत्वप्रकारकार्थबोधापत्त्याऽतिप्रसक्तमिति कृत्वा ध्वन्यन्तर्गतवर्णाभिव्यङ्ग्योऽखण्डो वर्णाघटितः स्फोट एव वाचक इति कैयटेनोक्तं तन्न समीचीनमित्याह—तत्तुच्छमिति । सकलज्ञानमिति । संपूर्णपदज्ञानमित्यर्थः । नदीदीनादिसाधारणमिति । वर्णेषु क्रमसत्त्वेऽपि तेषां यत्समूहालम्बनात्मकज्ञानं जायते तत्र तद्घटकसकलपदार्थानां निरुक्तक्रमविशिष्टानामेव वा ज्ञानं जायत इत्यत्र नियमो नास्ति । किंचिदंशरहितानामपि अक्रमेणापिवा समूहालम्बने पदार्थज्ञानस्यानुभवसिद्धत्वात् । तथा च नदीशब्दघटकवर्णानां तावतां पौर्वापर्यविपर्ययेण ज्ञाने जाते सति दीनार्थस्य नदीशब्दात्प्रतीतिः स्यात् । एवं दीनशब्दाच्च नदीशब्दार्थप्रतीत्यापत्तिः स्यादिति भावः । नानाप्रकारतानिरूपितं नानामुख्यविशेष्यताशालि ज्ञानं समूहालम्बनमित्युच्यते । यथा—अयं घटः, अयं स्तम्भः, अयं कुम्भश्चेत्येकं ज्ञानमिति । इतिकैयट इति । तथा चैतन्मते वायुसंयोगेभ्यः कत्वखत्वादिधर्मवन्तो वर्णा उत्पद्यन्ते तेभ्यश्चाखण्डस्फोटाभिव्यक्तिः, अभिव्यक्ताच्चाखण्डस्फोटादर्थबोध इति बोध्यम् । तत्तुच्छमिति । पूर्वपूर्ववर्णानुभवजन्यसंस्कारसहकृतचरमवर्णानुभवाज्जायमानं

त्वाद्वर्णानां प्रत्येकं व्यञ्जकत्वं समुदितानां वेत्यादिविकल्पग्रासाच्च। ननु त्वन्मतेऽप्येष दोषः। तत्तद्वर्णोत्पादकत्वेनाभिमतवायुसंयोगानां प्रत्येकं व्यञ्जकत्वं समुदितानां वेति विकल्पस्य सद्भावादिति चेत्।

---

सकलपदज्ञानं नदीदीनसाधारणं, येन क्रमेणानुभवे विषयभानं तेनैव क्रमेण स्मरणमिति नियमाभावात्कदाचिद्वैपरीत्येनापि नदीत्यक्षरद्वयस्य स्मरणे सति तथा दीनेत्यक्षरद्वयस्यापि वैपरीत्येन स्मरणे सति च नदीदीनशब्दसाधारणं भवति तादृशस्मरणज्ञानमिति यत्कैयटेनोक्तं तत्तुच्छमित्यर्थः। तत्र हेतुमाह—**पदज्ञानस्येति**। पौर्वापर्यक्रमविशिष्टवर्णघटितपदज्ञानस्येत्यर्थः। उपपादितत्वादिति। पूर्वपूर्ववर्णसंस्कारसहकृतचरमवर्णानुभवजन्यपदज्ञाने तावद्वर्णानां पौर्वापर्यक्रमवैशिष्टयेनैव भानस्य सखण्डस्फोटकथनसमये सप्तषष्टिकारिकाव्याख्याने समुपपादितत्वात्सरो रसो नदी दीनेत्यादौ न काचित्क्षतिरिति भावः वर्णातिरिक्तस्फोटस्य वाचकत्वाङ्गीकारे दोषं प्रदर्शयति—**वर्णानामिति**। **विकल्पग्रासाच्चेति**। यदि प्रत्येकं व्यञ्जकत्वं तर्हि प्रथमवर्णेनैव व्यञ्जनसंभवे तदितरवर्णवैयर्थ्यम्। समुदितानां व्यञ्जकत्वं त्वसंभवि। चरमवर्णाभिव्यक्तिकाले क्रमिकाणां पूर्वपूर्ववर्णाभिव्यक्तीनामवस्थानासंभवेनैकदा मेलनासंभवात्समुदायस्यैवासंभवात्। चरमवर्णस्य व्यञ्जकत्वेऽपि तदितरवर्णवैयर्थ्यम्। पूर्वपूर्ववर्णानुभवजन्यसंस्कारसहितचरववर्णानुभवस्य व्यञ्जकत्वे तस्यैवार्थबोधकत्वमस्त्वित्यलमतिरिक्तस्फोटाङ्गीकारेणेति भावः। नैयायिकः शङ्कते—**नन्विति**। **त्वन्मतेऽपीति**। वर्णातिरिक्तस्फोटवादिमतेऽपीत्यर्थः। वैयाकरणमत इति यावत्। **एष दोष इति**। विकल्पात्मको दोष इत्यर्थः। तमेव दोषं विशदयति—**तत्तद्वर्णेति**। वर्णोत्पत्तिवादिनैयायिकमतानुसारेणोत्पादकत्वेनाभिमतेति। वायुसंयोगानां प्रत्येकं व्यञ्जकत्वं समुदितानां वेति विकल्प्य, यदि प्रत्येकं वायुसंयोगस्य व्यञ्जकत्वे प्रथमवायुसंयोगेनैवाभिव्यञ्जने सिद्धे तदितरवायुसंयोगोपादानस्य वैयर्थ्यम्। नाभिप्रदेशादुद्गतवायोस्तत्तत्स्थाने क्रमेणैव संयोगोत्पत्त्या क्रमवतां तेषां युगपत्सहावस्थानासंभवेन मेलनायोगात्तत्समुदायस्यैव वक्तुमशक्यत्वात्समुदितानां तेषां व्यञ्जकत्वं सुतरां दूरापेतमेवेति बोध्यम्। प्रत्येकमभिव्यञ्जकत्वेऽपि कश्चन गकारत्वेन कश्चनौकारत्वेन कश्चन विसर्गत्वेन च रूपेण स्फोटमभिव्यनक्ति। तथा च तावद्रूपवैशिष्टयेनाभिव्यक्तस्यैव तस्यार्थबोधकत्वमिति न

उच्यते । प्रत्येकमेव संयोगा अभिव्यञ्जकाः परं तु केचिद्गत्वेन केचिद्दौत्वेन केचिद्विसर्गत्वेनेत्यनेकैः प्रकारैरत एव वर्णानां तदतिरेकास्वीकारोऽप्युपपद्यते । एवं चाव्यवहितोत्तरत्वसंबन्धेन घवत्वं टकारे गृह्यते । एतादृशपदज्ञानकारणताया अविवादात् । परं त्वव्यवहितोत्तरत्वं स्वज्ञानाधिकरणक्षणोत्पत्तिकज्ञानविषयत्वं वाच्यमत एव घज्ञानानन्तरटज्ञानविषयत्वरूपानुपूर्वीत्यादिर्नैयायिकवृद्धानां व्यवहारः । एवं च न कश्चिद्दोषः । एतेन पर्यायस्थलेष्वेक एव स्फोटः, नाना वा ।

---

कस्यापि वायुसंयोगस्य वैयर्थ्यमित्याशयवान् समाधत्ते—प्रत्येकमेवेति । अत एवेति । वायुसंयोगानां स्ववृत्तिगत्वादिना स्फोटाभिव्यञ्जकत्वादेवेत्यर्थः । तदतिरेकास्वीकारोऽपीति । स्फोटातिरिक्तवर्णानङ्गीकारोऽपीत्यर्थः । वायुसंयोगस्य गत्वादिना स्फोटव्यञ्जकत्वानभ्युपगमे तु तथाऽभिव्यक्तये स्फोटातिरिक्तवर्णस्वीकार आवश्यको भवेदित्याशयः । नन्वेवमतिरिक्तवर्णास्वीकारे पदाभावेन पदज्ञानस्यार्थबोधकारणत्वमसंभवदुक्तिकमेव स्यादित्याशङ्क्य निराकर्तुमाह—एवं चेति । वायुसंयोगगतगत्वादितत्तद्रूपेण स्फोटाभिव्यञ्जने चेत्यर्थः । गृह्यते, इत्यस्य यत्रेति शेषः । तथा च यत्र ज्ञाने घवत्वं टशब्दे भासते तादृशं यत्पदज्ञानं तत्कारणताया इत्यर्थः । अविवादादिति । सर्वसंमतत्वादित्यर्थः । एवं चोपाधिकृतभेदं गृहीत्वा तस्मिन्नेव टशब्दात्मके घत्वप्रकारकप्रतीतिविषयाव्यवहितग्रहाविषये घटपदव्यवहाराच्चादृशं पदज्ञानमर्थबोधकारणमिति सर्वसंमतमिति भावः । नन्वेकस्मिन्नेव टशब्दात्मके घवत्वमुपाधिभेदाद् भवतु नाम परंतु तत्र स्वाव्यवहितोत्तरत्वं केन प्रकारेणेत्यत आह—अव्यवहितोत्तरत्वमिति । स्वज्ञानाधिकरणेति । स्वं-घत्वादिना भासमानः स्फोटः, तज्ज्ञानाधिकरणीभूतो यः क्षणस्तत्क्षणोत्पत्तिकं यज्ज्ञानं तद्विषयत्वमेवाव्यवहितोत्तरत्वं, नतु स्वोत्पत्त्यधिकरणीभूतक्षणध्वंसानन्तरभाविक्षणोत्पत्तिकत्वमित्यर्थः । तथा चाव्यवहितोत्तरत्वं ज्ञान एव, न तूत्पत्तौ । सर्वत्राव्यवहितोत्तरत्वस्य ज्ञान एव प्रतीतेरिति भावः । एतादृशमव्यवहितोत्तरत्वं क्वाप्यन्यत्र न दृष्टचरमित्याशङ्क्याऽऽह—अत एवेति । निरुक्ताव्यवहितोत्तरत्वस्याऽऽनुपूर्वीव्यवहारप्रयोजकत्वादेवेत्यर्थः । घशब्दज्ञानानन्तरं यट्टशब्दज्ञानं तद्रूपायाऽऽनुपूर्वीत्यादिव्यवहारो वृद्धनैयायिकानां संगच्छत इति भावः । न कश्चिद्दोष इति । वर्णानां नित्यत्वेऽपि तदभिव्यक्तेरनित्यत्वेनैकवर्णाभिव्यक्त्यव्यवहि-

( अखण्डस्फोटनिर्णयः )

**नाऽऽद्यः । घटपद एव गृहीतशक्तिकस्य कलशपदादर्थबोधप्रसङ्गात् । न च तत्पर्यायाभिव्यक्ते शक्तिग्रहस्तत्पर्यायश्रवणेऽर्थधीहेतुरिति वा-**

तोत्तरत्वस्य वर्णान्तराभिव्यक्तौ सत्त्वाद् घटादिपदप्रत्ययोपपत्तेः पदज्ञानस्यार्थबोधकारणतायाः सुवचत्वान्न कोऽपि दोष इत्यर्थः । परिमलकारोक्तं स्फोटखण्डनं निरस्यति **एतेनेति** । पौर्वापर्यरूपानुपूर्वीविशिष्टस्फोटस्य वाचकत्वसाधनेनेत्यर्थः । घटकलशादिपर्यायेष्वेक एव स्फोटो नाना वेति विकल्प्य न प्रथम इत्याह—**नाऽऽद्य इति** । नैकः स्फोट इत्यर्थः । एक एव स्फोट इति स्वीकारे दोषमाह—**घटपद एवेति** । घट इत्यानुपूर्वीविशिष्टपदाभिव्यक्ते स्फोट एवेत्यर्थः । **कलशपदादिति** । अगृहीतशक्तिकात्कलश, इत्यानुपूर्वीविशिष्टपदाभिव्यक्तस्फोटादित्यर्थः । अयमर्थः—घटकलशादिपर्यायशब्दानां यदि एक एव स्फोटः स्यात्तर्हि घटशब्दाभिव्यक्तस्फोटे गृहीतशक्तिकस्य पुंसोऽप्रसिद्धकलशादिपर्यायश्रवणेऽपि प्रागगृहीतशक्तिकस्यैव स्फोटस्याप्रसिद्धकलशादिपर्यायेणाभिव्यक्तयाऽर्थप्रतीत्यापत्तेरिति । **अर्थबोधप्रसङ्गादिति** स्फोटस्यैक्येन घटपदाभिव्यक्ते स्फोटे शक्तिग्रहस्य जातत्वात्कलशपदाभिव्यक्तादपि अगृहीतशक्तिकात्स्फोटादर्थबोधप्रसङ्ग इत्यर्थः । वर्णसमुदायरूपपदस्य वाचकत्वमते तु नायं दोषः । तेन शब्देन बोधे जननीये तच्छक्तिग्रहस्य हेतुत्वात् । कलशशक्तिग्रहरूपहेतोरसत्त्वान्न कलशपदादर्थबोधप्रसक्तिरिति भावः । घटशब्दाभिव्यक्तस्फोटे गृहीतशक्तिकस्य पुरुषस्य स्फोटैक्येऽपि अगृहीतशक्तिकात्कलशपदाभिव्यक्तस्फोटादर्थबोधापत्तिनिरासाय शङ्कते-**नचेति** । **अर्थधीहेतुरिति** : अर्थबोधकारणमित्यर्थः कीदृशः कार्यकारणभावस्तदाह—**तत्पर्यायाभिव्यक्त इति** । यादृशपर्यायाभिव्यक्तस्फोटे शक्तिग्रहः संजातः, तादृशपर्यायश्रवणे सति अभिव्यक्तस्फोटादर्थप्रतीतिर्भवतीत्यर्थः । यथा घटरूपपर्यायाभिव्यक्तस्फोटेऽयं स्फोटः कम्बुग्रीवादिमद्वस्तुनो वाचक इत्येवं शक्तिग्रहः संवृत्तः, अतो घटमानयेति वाक्ये घटरूपपर्यायश्रवणसत्त्वादभिव्यक्तस्फोटात्कम्बुग्रीवादिमद्वस्तुबोधो जायत इति युक्तमेव । वाक्ये यादृशपर्यायश्रवणमस्ति तादृशपर्यायाभिव्यक्तस्फोटे शक्तिग्रहसत्त्वात् । यदि तु घटमानयेत्यस्य स्थाने कलशमानयेति वाक्यं प्रयुज्येत तर्हि वाक्ये यादृशपर्यायश्रवणमस्ति तादृशपर्यायाभिव्यक्तस्फोटेऽयं कम्बुग्रीवादिमद्वस्तुनो वाचक इत्येवं

च्यम् । एवं सति प्रतिपर्यायं शक्तिग्रहावश्यंभावेन तत्तत्पर्यायगतशक्ति-ग्रहहेतुतायां उचितत्वात् । तथा सति शक्तिग्रहत्वेनैव हेतुत्वे लाघवाच्च । अन्यथा तत्पर्यायाभिव्यक्तगतशक्तिग्रहत्वेन तत्त्वे गौरवात् । न द्विती-यः । अनन्तपदानां तेषां शक्तिं चापेक्ष्य क्लृप्तवर्णेष्वेव शक्तिकल्प-नस्य लघुत्वादिति परिमलोक्तमपास्तम् । पर्यायेष्वनेकशक्तिस्वीका-

---

शक्तेरगृहीतत्वेन शक्तिग्रहरूपकारणाभावान्न तस्मादर्थबोधप्रसङ्ग इत्यर्थः । एव-मिति । वाक्ये यादृशपर्यायश्रवणमस्ति तादृशपर्यायाभिव्यक्तस्फोटे शक्तिग्रह-स्यार्थबोधकारणत्वाङ्गीकार इत्यर्थः । अत्र स्फुट्यते वर्णैर्व्यज्यते इति व्युत्पत्त्या स्फोटशब्दः शब्दपरो बोध्यः । शक्तिग्रहावश्यंभावेनेति । अन्वयव्यतिरेका-भ्यां निरुक्तकार्यकारणभावस्य सिद्धत्वादित्यर्थः । तत्तत्पर्यायगतेति । घटा-त्मकपर्यायाभिव्यक्तस्फोटः कम्बुग्रीवादिमद्वस्तुनो वाचकः, तथा कलशात्मकपर्या-याभिव्यक्तस्फोटोऽपि कम्बुग्रीवादिमद्वस्तुनो वाचकः, इत्येवं तत्तत्पर्यायगता या शक्तिस्तद्ग्रहस्य कारणतोचितेत्यर्थः । तत्तत्पर्यायगतशक्तिग्रहस्यार्थबोधकारण-ताया उचितत्वे हेतुमाह—तथा सतीति । शक्तिग्रहत्वेनैवेति । तत्तत्पर्यायगत-शक्तिग्रहत्वेनैवेत्यर्थः । लाघवाच्चेति । चो हेतौ । यतः कारणतावच्छेदकला-घवं भवतीत्यतो निरुक्तरूपेणैव कारणता वक्तुमुचितेति भावः । अन्यथेति । उक्तवैपरीत्ये इत्यर्थः। वैपरीत्यमेव प्रदर्शयति-तत्तत्पर्यायाभिव्यक्तेति । तत्तत्पर्या-येणाभिव्यक्तो यः स्फोटस्तन्निष्ठशक्तिग्रहस्यार्थबोधहेतुत्वे कारणतावच्छेदकगौरवं भवति, पूर्वोक्तकारणतावच्छेदकापेक्षया एतत्कारणतावच्छेदकस्य गुरुभूतत्वादि-त्यर्थः । न द्वितीय इति । पर्यायस्थले नाना स्फोटा इत्येवं द्वितीयः पक्षोऽपि न युक्त इत्यर्थः । अयुक्तत्वे हेतुमाह—अनन्तेति । एकैकस्यानन्ताः पर्याया इति यावन्तः पर्यायास्तावन्ति पदानि कल्पनीयानीति पदानन्त्यं, तथाऽनन्तानां पदानां तत्तदर्थे शक्तिः कल्पनीयेति शक्त्यानन्त्यं च कल्पनीयमित्यतीव गौरवं भवतीति तदपेक्षया श्रवणेन्द्रियग्राह्याः क्लृप्ता ये वर्णास्तेष्वेव शक्तिः कल्पनीयेति लाघवं भवतीत्यर्थः । तस्म द्वर्णातिरिक्तस्फोटवादोऽयुक्त इति, परिमलोक्तमिति । परि-मलकाराद्युक्तमित्यर्थः । आदिपदोपसंग्राह्यो न्यायरक्षामणिग्रन्थः । अपास्तमिति । वर्णातिरिक्तस्फोटवादखण्डनं परिमलादिग्रन्थोक्तं निरस्तमित्यर्थः । घटेत्याद्यानु-पूर्वीविशिष्टवर्णात्मकस्फोटस्य वाचकत्वाङ्गीकारादिति भावः । ननु पर्यायस्थले

( अखण्डस्फोटनिर्णयः )

**रस्य सर्वसिद्धत्वात्तदवच्छेदकानुपूर्व्याः प्रागुपपादनादिति दिक्। शब्दकौस्तुभे तु वर्णमालायां पदमिति प्रतीतेर्वर्णातिरिक्त एव स्फोटः, अन्यथा कपालातिरिक्तघटासिद्धिप्रसङ्गश्चेति प्रतिपादितम् ॥ ८ ॥ ( ६७ )**

नानास्फोटपक्षेऽनेकशक्तिकल्पनं गौरवावहमित्याशङ्क्य समाधत्ते—**सर्वसिद्धत्वादिति**। अतिरिक्तस्फोटानङ्गीकर्तृनैयायिकादिमतेऽपि पर्यायभेदेन शक्तिभेदस्य सिद्धत्वादित्यर्थः। तथा च नैयायिकादिसर्वेषां शक्त्यानन्त्यस्य संमतत्वेनातिरिक्तस्फोटवादिनामस्माकमुपरि शक्त्यानन्त्यं दोषत्वेन नोद्भावनीयमिति भावः। समानप्रवृत्तिनिमित्तकत्वे सति विभिन्नानुपूर्वीकत्वं, अथवा शक्यतावच्छेदकैक्ये सति विभिन्नशक्तावच्छेदकत्वं पर्यायत्वम्। यथा घटः कलश इति पर्यायः। ननु पर्यायस्थले स्फोटस्य नानात्वे गौरवं, एकत्वे तु कथं शक्तिभेद इत्याशङ्क्याऽऽह—**तदवच्छेदकेति**। शक्तावच्छेदकेत्यर्थः। तथा च स्फोटस्यैक्येऽपि शक्तावच्छेदकानुपूर्वीभेदाच्छक्तिभेदो ज्ञेयः, शक्यतावच्छेदकभेदेन शक्यभेदवदिति भावः। **प्रागुपपादनादिति**। 'पूर्वं त्वव्यवहितोत्तरत्वं स्वज्ञानाधिकरणक्षणोत्पत्तिकज्ञानविषयत्वम्' इत्यादिसारीयग्रन्थेनोपपादितत्वादित्यर्थः। अतिरिक्तस्फोटसाधिकां कौस्तुभोक्तयुक्तिं प्रदर्शयन्नाह—**कौस्तुभे त्विति**। भट्टोजीदीक्षितोक्तेति शब्दकौस्तुभ इत्यर्थः। ननु स्मृतिकौस्तुभे संस्कारकौस्तुभे वेत्यादि बोध्यम्। **वर्णमालायामिति**। वर्णसमूह इत्यर्थः। **पदमिति प्रतीतेरिति** इदमुपलक्षणं वाक्यमिति प्रतीतेरित्यस्य। **अतिरिक्त एवेति**। वर्णातिरिक्त एवेत्यर्थः। समुदायस्य समुदायिव्यतिरिक्तत्वात्। अन्यथा पदमित्यादिप्रतीत्यनुपपत्तेः। वर्णानां प्रत्येकं पदरूपत्वाभावात्। उक्तरीत्या एकं पदमिति प्रतीत्यनुपपत्तेश्च। **अन्यथेति**। वर्णातिरिक्तस्फोटानङ्गीकारे इत्यर्थः। **कपालातिरिक्तेति**। पदमितिप्रतीतिर्बुद्धिस्था ये तावद्वर्णास्तानुद्दिश्य निर्वोढुं शक्येति न तादृशप्रतीतिर्वर्णातिरिक्तस्फोटं कल्पयितुं प्रभवति प्रतीतेरन्यथासिद्धत्वादिति चेद्ब्रूषे तर्हि 'घटः' इतिप्रतीतिरपि घटसमवायिकारणत्वेनाभिमततावत्कपालैरेव निर्वोढुं शक्यसंभवेति कपालाद्यतिरिक्तघटादेर्नैयायिकाद्यभिमतस्यासिद्धिः प्रसज्येतेत्यर्थः। तस्मादिदं वाक्यं चेति प्रतीतेरन्यथानुपपत्त्या कपालाद्यतिरिक्तघटादिवद् वर्णातिरिक्तः स्फोटः स्वीकार्य इति भावः ॥ ६७ ॥

( अखण्डस्फोटनिर्णयः )

नन्वेवं शास्त्राप्रामाण्यप्रसङ्गः पदस्याखण्डत्वात् । शास्त्रस्य च प्रकृतिप्रत्ययाभ्यां पदव्युत्पादनमात्रार्थत्वादित्याशङ्कां समाधत्ते—

पञ्चकोशादिवत्तस्मात्कल्पनैषा समाश्रिता ।
उपेयप्रतिपत्त्यर्था उपाया अव्यवस्थिताः ॥ ९ ॥ ( ६८ )

उपेयप्रतिपत्त्यर्था इत्यन्तेनान्वयः । अयं भावः—( यथा भृगुवल्ल्यां "भृगुर्वै वारुणिर्वरुणं ब्रह्म पृष्टवान् । स उवाचान्नम्" इति तस्योत्पत्त्यादिकं बुद्ध्वा पृष्टे प्राणमनोविज्ञानानन्दात्मकपञ्चकोशोपदेशोत्तरं

---

अथ व्याकरणशास्त्रस्य वैयर्थ्यमाशङ्क्य तत्साफल्यं प्रतिपादयन् भूमिकामारचयति—**नन्वेवमिति** । पदवाक्ययोरखण्डस्फोटयोरेव वाचकत्वाङ्गीकार इत्यर्थः । **शास्त्राप्रामाण्येति** । व्याकरणशास्त्रस्य पाणिन्यादिमुनित्रयप्रवर्तितस्याप्रामाण्यप्रसङ्गो नैष्फल्यं प्रसज्येतेत्यर्थः । पदस्य सुप्तिङन्तात्मकस्याखण्डत्वादिति भावः । **शास्त्रस्येति** । व्याकरणशास्त्रस्येत्यर्थः । **प्रकृतिप्रत्ययाभ्यामिति** । प्रकृतिर्भूधात्वादिः । प्रत्ययस्तिबादिः । तयोर्विधानेन पदसाधनैकफलकत्वादित्यर्थः। तथा च प्रकृतिप्रत्ययविभागेन पदपदार्थवाचकत्वप्रतिपादकस्यास्य शास्त्रस्याप्रामाण्यं स्यात्पदस्याखण्डत्वाङ्गीकार इति भावः । इत्याशङ्कां मनसि निधाय तामपाकर्तुमाह—**पञ्चकोशादिवदिति** । **उपेयप्रतिपत्त्यर्था इत्यन्तेनेति** । **एषा कल्पनेति** । प्रकृतिप्रत्ययादिकल्पनेत्यर्थः । उपेयप्रतिपत्त्यर्था इत्यत्र वचनविपरिणामो लिङ्गविपरिणामश्च बोध्यः । कल्पनेत्यनेन सामानाधिकरण्यात् । एत्येतद्रूपो योऽन्तस्तेनेत्यर्थः । उत्तरत्र यत इत्यध्याहार्यम् । यतो हेतोरुपेयप्रतिपत्त्यर्था उपाया अनवस्थिता अनियता भवन्तीत्यन्वयः । उपेयस्य—प्राप्यस्य, प्रतिपत्तिः प्राप्तिर्ज्ञानं वाऽर्थः । पञ्चकोशादिदृष्टान्तमुपपादयति—**अयं भाव इत्यादिना** । **यथेति** । भृगुवल्ल्यां भृगुर्वै वारुणिर्वरुणं स्वपितरं ब्रह्म पृष्टवान् । स वरुणोऽन्नमित्याचचक्षे । अन्नस्योत्पत्त्यादिकं समीक्ष्य पुनः पप्रच्छ । तत उत्तरयांबभूव—**प्राणो ब्रह्मेति** । तस्यातथात्वावधारणानन्तरं पुनः प्रश्ने पुनराह—'**मन इति** तस्यापि 'अशितमन्नं त्रेधा भवति, यत्स्थूलं तत्पुरीषं, यन्मध्यमं तन्मांसं, यदणीयस्तन्मनः' इति श्रुतावुत्पत्तिश्रवणात्पुनः प्रश्ने आह—**विज्ञानमय इति** । तस्यापि वृत्त्युपहितत्वेनातथात्वं बुद्ध्वा पुनः पृष्टवान् । ततः '**आनन्दो ब्रह्म**' इत्युत्तरिते कोशपञ्चकानन्तरं '**ब्रह्मपुच्छं प्रतिष्ठा**' इति ज्ञेयं ब्रह्म प्रतिपादितम् ।

( अखण्डस्फोटनिर्णय. )

"ब्रह्म पुच्छं प्रतिष्ठा" इति ज्ञेयं ब्रह्म प्रतिपादितम् । तच्च कोशपञ्चकव्युत्पादनं शब्दब्रह्मबोधनाय । यथावाऽऽनन्दवल्ल्यामन्नप्राणमनोविज्ञानानन्दमयात्मककोशपञ्चकव्युत्पादनं वास्तवपुच्छब्रह्मबोधनाय । एवं प्रकृतिप्रत्ययादिव्युत्पादनं वास्तवस्फोटव्युत्पादनार्थमेवेति । ननु प्रत्यक्षस्य स्फोटस्य श्रवणादितोऽपि बोधसंभवान्न शास्त्रं तदुपाय इत्यत आह–उपाया इति । उपायस्योपायान्तराद्दूषकत्वात् । तथा च व्या-

तत्र पञ्चकोशव्युत्पादनं शुद्धब्रह्मावगमयितुमित्यर्थः यथाऽऽनन्दवल्ल्यामन्नप्राणेति आनन्दशब्दान्तो द्वंद्वः । ततः प्राचुर्यार्थे मयट् । तस्य प्रत्येकं संबन्धः । द्वंद्वान्ते श्रूयमाणं प्रत्येकं संबध्यते, इति न्यायात् । तथा चान्नमयप्राणमयमनोमय, विज्ञानमयानन्दमयात्मका ये पञ्च कोशाः शुद्धब्रह्मज्ञानोपायभूतास्तेषां व्युत्पादनं प्रतिपादनमित्यर्थः । अत्राऽऽनन्दमयपदं न मुख्यब्रह्मपरमपि तु जीवपरम् । 'ब्रह्मपुच्छं प्रतिष्ठा' इत्यत्र श्रूयमाणं ब्रह्मपदमेव तु मुख्यब्रह्मसमर्पकम् । अत एव जगदाधारत्वार्थकपुच्छशब्दोपपत्तिः । लाङ्गूलात्मकमुख्यार्थस्य तत्र बाधात् । एतदाशयेनाऽऽह–वास्तवमिति । कालत्रयाबाधितं यत्पुच्छं जगदाधारभूतं यद्ब्रह्म तद्बोधनायेत्यर्थः । एतस्य जगदाधारभूतमुख्यब्रह्मणो वास्तवत्वोक्त्या पञ्चकोशानामवास्तवत्वमावेदितं, तच्च शारीरकभाष्यादौ स्पष्टमेव । एतद्दृष्टान्तेन सिद्धं प्रकृतोपयुक्तमर्थमाह–एवमिति । अत्रापि स्फोटस्य वास्तवत्वकथनेन प्रकृतिप्रत्ययादिविभागकल्पनाया अवास्तवत्वं सूचितम् । ननु स्फोटज्ञाने व्याकरणशास्त्रं नानन्यथासिद्ध उपायः, तदन्तरेणापि तज्ज्ञानसंभवादित्याशङ्क्य नन्वित्यादि । प्रत्यक्षस्येति । शब्दस्य श्रवणेन्द्रियग्राह्यत्वात्प्रत्यक्षत्वमित्यर्थः । श्रवणादित इति । आदिशब्देन मननग्रहणम् । बोधसंभवादिति । तथा च व्याकरणशास्त्रं विना प्रकारान्तरेणापि बोधसंभवान्न व्याकरणशास्त्रं तज्ज्ञानोपाय इत्यत आह–उपायाः शिक्षमाणानामिति । उपायस्योपायान्तरादूषकत्वे युक्तिं सदृष्टान्तां प्रदर्शयन्नाह तथा च व्याकरणेति । अत्र वदन्ति–नैतद्व्याकरणशास्त्रं स्फोटज्ञानार्थं पञ्चकोशवदुपायः, शास्त्रज्ञानं विनाऽपि गामानयेति वाक्यमात्रव्युत्पन्नस्य पामरादेरपि शाब्दबोधानुभवात् । ततश्च तस्य स्फोटज्ञानं विना बोधोपपत्तेस्तज्ज्ञानं च शास्त्रमन्तरेणेति व्याकरणशास्त्र–स्फोटज्ञानयोः कार्यकारण-

करणाभ्यासजन्यज्ञाने वैजात्यं कल्प्यते मन्त्रजन्यामिवार्थस्मरणे वेदान्तजन्यमिव ब्रह्मज्ञाने, तस्य च ज्ञानस्य यज्ञादीनामन्तःकरणशुद्धाविव शरीरादिशुद्धावुपयोगः साक्षात्परम्परया वा स्वर्गमोक्षादिहेतुत्वं च ।

तदुक्तं वाक्यपदीये—

" तद्द्वारमपवर्गस्य वाङ्मलानां चिकित्सितम् ।
पवित्रं सर्वविद्यानामधिविद्यं प्रकाशते ॥

---

भावव्यभिचार इत्याशङ्क्याऽऽह—वैजात्यं कल्प्यत इति । व्याकरणाभ्यासजन्यतावच्छेदकतया सिद्धजातिविशेषरूपं कल्प्यत इत्यर्थः । तथा च कार्यतावच्छेदकभेदान्न दोषः । तत्र दृष्टान्तमाह—मन्त्रजन्यामिवेति । यथा प्रयोगसमवाय्यर्थस्मरणस्य नानोपायसाध्यत्वाद्यदा मन्त्रं परित्यज्य प्रकारान्तरेणार्थं सिस्मूर्षति तदा मन्त्रेणैवार्थः स्मरणीय इति नियमः मन्त्रजन्यार्थस्मृतौ मन्त्रजन्यतावच्छेदकतया सिद्धजातिविशेषरूपं वैजात्यं मीमांसकैः परिकल्पितं तद्वदत्रापीति भावः । वेदान्तेति । अथवा भाषाग्रन्थश्रवणेनापि ब्रह्मज्ञानस्योत्पत्तेः संभवात्तत्र व्यभिचारवारणाय वेदान्तश्रवणजन्यतावच्छेदकतया सिद्धजातिविशेषरूपं वैजात्यं यथा वेदान्तिभिः कल्पितं तद्वदिति भावः । तादृशज्ञानस्योपयोगमाह—तस्य च ज्ञानस्येति । व्याकरणशास्त्राभ्यासजन्यस्फोटज्ञानस्येत्यर्थः । शरीरशुद्धाविति । यथा ज्योतिष्टोमादियागानामन्तःकरणशुद्धावुपयोगस्तथा स्फोटज्ञानस्य शरीरादिशुद्धावुपयोग इत्यर्थः । शरीरादीत्यादिपदेन वाङ्मनसयोः संग्रहः । एवं च शास्त्रस्य न वैयर्थ्यमिति भावः । साक्षादिति । साक्षात्स्वर्गहेतुत्वं परम्परया तु मोक्षहेतुत्वं चेत्यर्थः । अयं भावः—भाषासंस्कृतसाधारणः स्फोट एव वाचकः, तज्ज्ञानं च श्रोत्रप्रत्यक्षादिरूपमपीति सत्यम् । किंतु वर्णवत्प्रकृतिप्रत्ययप्रपञ्चोऽपि स एव । एवं च प्रकृतिप्रत्ययादिभिर्व्युत्पादनपूर्वकं तज्ज्ञानं तत्पूर्वकप्रयोगद्वारा शारीरशुद्धिहेतुर्यज्ञादिरिवान्तःकरणस्येति । उक्तेऽर्थे वाक्यपदीयं प्रमाणयति—तदुक्तमिति । तद्द्वारमिति । तत्—स्फोटाभिधायकं व्याकरणशास्त्रम् । अपवर्गस्येति । मोक्षस्य मोक्षोऽपवर्गोऽथेत्यमरात् । द्वारमिति । तद्धेतुर्द्वारमिव द्वारमित्यर्थः । हेतुरूपं विशेषणं—वाङ्मलानां चिकित्सितमिति । चिकित्सा संजाता यत्रेत्यर्थः । 'कितेर्व्याधिप्रतीकारे' इति सन्नन्तात्क्तप्रत्यये वाङ्मलानामपनयनकारीति पर्यवसितोऽर्थः । अधिविद्यमिति । विभक्त्यर्थेऽव्ययीभावः । सर्व-

( अखण्डस्फोटनिर्णयः )

इदमाद्यं पदस्थानं सिद्धिसोपानपर्वणाम् ।
इयं सा मोक्षमाणानामजिह्मा राजपद्धतिः ॥
अत्रातीतविपर्यासः केवलामनुपश्यति " इति ॥

न चालीकया प्रकृतिप्रत्ययकल्पनया कथं वास्तवस्फोटबोधः । तस्यालीकत्वासिद्धेर्वक्ष्यमाणत्वात् । एवं रेखागवयन्याय आदिना गृह्यते ॥ ९ ॥ ( ८ )

ननु स्फोटस्य वर्णजातीयानां च नित्यतया ककार उत्पन्न इति न स्यात् । वायुसंयोगनिष्ठजातेः स्फोटे भाने कादिप्रतीतीनां भ्रमत्वापत्तिश्चेत्यत आह—

कल्पितानामुपाधित्वं स्वीकृतं हि परैरपि ।
स्वरदैर्घ्याद्यपि ह्यन्ये वर्णेभ्योऽन्यस्य मन्वते ॥ १० ॥ ( ६९ )

---

विद्यानां मध्येऽतिपवित्रत्वात्प्रकर्षेण प्रकाशत इत्यर्थः । इदमिति । पाणिन्यादिमहर्षिप्रवर्तितत्वादति पवित्रं व्याकरणशास्त्रमित्यर्थः । सिद्धिसोपानेति । सिद्धेर्मोक्षस्य यानि सोपानपर्वाणि तेषां मध्ये प्रथमं पदस्थापनस्थानमित्यर्थः । इयमिति । मोक्षेच्छूनां जनानां सरला राजपद्धती राजमार्ग इति यावत् । अत्रेति । स्फोटात्मक इत्यर्थः । अतीतेति । अतीतो विपर्यासो भ्रमो यस्येत्यर्थः । भ्रान्तिशून्य इति यावत् । केवलामिति । पराख्यां वाचमित्यर्थः । अनुपश्यति—योगजन्यशक्त्या साक्षात्करोति । ननु प्रकृतिप्रत्ययविभागस्य काल्पनिकतया शशविषाणायमानत्वेन नैव तेन स्फोटात्मकवस्तुज्ञानसंभव इत्याशङ्क्ते—न चालीकयेति । कथं वास्तवेति । अलीकमृगजलस्य वास्तवपिपासानिवृत्तिजननादर्शनादलीकप्रकृत्यादिकल्पनया वास्तवस्फोटप्रतीतिर्न संभवतीति भावः । तस्याः—प्रकृत्यादिकल्पनायाः । अलीकत्वासिद्धेरिति । पञ्चकोशादिवन्मायिकत्वेऽपि नात्यन्तासच्छशविषाणवत्तुच्छत्वमिति भावः । वक्ष्यमाणत्वादिति । 'अनेकव्यक्त्यभिव्यङ्ग्या' इत्यादिकारिकया सदसद्वैलक्षण्यस्य पञ्चकोशानामिव सूचयिष्यमाणत्वादित्यर्थः । पञ्चकोशादीत्यादिपदेन रेखागवयन्यायः संगृह्यते । यथा भित्त्यादौ तिर्यगादिरेखाभिश्चित्रितेन गवयाकारेण व्यावहारिकसत्यगवयस्य ज्ञानं जायत इति लोके प्रसिद्धं तद्वदलीकया प्रकृत्यादिकल्पनयाऽपि वस्तुसतः स्फोटस्य यथावज्ज्ञानं न कथमप्यसंभवीति सर्वमनवद्यमिति भावः ॥ ६८ ॥

स्वीकारस्थलमाह—स्वरदैर्घ्याद्यपीति । आदिनोत्पत्तिविनाशादिसंग्रहः । उदात्तत्वादि न वर्णनिष्ठं तस्यैकत्वान्नित्यत्वाच्च । तच्च स एवायमिति प्रत्यभिज्ञानात् । न च गत्वावच्छिन्नप्रतियोगिताकभेदाभावस्तद्विषयो न्यक्त्यंशाभेदस्यापि भासमानस्य विना बाधकं त्यागायोगात्। न चोत्पत्तिप्रतीतिर्बाधिका । प्रागसत्त्वे सति सत्त्वरूपाया उत्पत्तेर्वर्णेष्वनुभवविरुद्धत्वात् । अत एव वर्णमुच्चारयतीति प्रत्ययो न तूत्पादयतीति प्रत्ययो व्यवहारश्च । उच्चारितत्वं च ताल्वोष्ठसंयोगादिजन्याभिव्यक्तिविशिष्टत्वम् । किं च—व्यञ्जकध्वनिनिष्ठोत्पत्त्यादेः परम्परया वर्णनिष्ठत्वविषयत्वेनाप्युपपत्तेर्न साऽतिरिक्तवर्णसाधिका । परम्परया वर्णनिष्ठत्वाभ्युपगमे च न भ्रमत्वम् । साक्षात्संबन्धांशे भ्रम इत्यवशिष्यते । तदपि सोऽयमित्यत्र व्यक्त्यभेदांशे तव भ्रमत्ववत्तुल्यम् । परं तु ममातिरिक्तवर्णतत्प्रागभावध्वंसकल्पना नेति लाघवमतिरिच्यते । न च वर्णस्थले ध्वनिसत्त्वे मानाभावः । तदुत्पादकशङ्खाद्यभावेन तदसंभवश्चेति वाच्यम् । ककाराद्युच्चारणस्थले तत्तत्स्थानस्य जिह्वाया ईषदन्तरपाते वर्णानुत्पत्तेर्ध्वन्युत्पत्तेश्च दर्शनाज्जिह्वाभिघातजवायुकण्ठसंयोगादेर्ध्वनिजनकत्वकल्पनात् । तस्य च वर्णोत्पत्तिस्थलेऽपि सत्त्वात्तत्रैव प्रतिबन्ध्यप्रतिबन्धकभावकल्पना निष्प्रमाणिकी( का ) स्यादिति विपरीतं गौरवमेवं परस्परविरोधादुदात्तत्वानुदात्तत्वह्रस्वत्वदीर्घत्वादिकमपि न वर्णनिष्ठं युक्तमिति तेषामभिप्रायः । एवं चोत्पत्त्यादिप्रतीतीनां तत्प्रमात्वस्य च निर्वाहः परेषामपि समान इति प्रतिबन्द्यैवोत्तरमिति भावः ॥ १० ॥ ( ६९ )

इत्थं पञ्चधा व्यक्तिस्फोटाः । जातिस्फोटमाह—

शक्यत्व इव शक्तत्वे जातेर्लाघवमीक्ष्यताम् ।
औपाधिको वा भेदोऽस्तु वर्णानां तारमन्दवत् ॥११॥ (७०)

अयं भावः- वर्णास्तावदावश्यकाः, उक्तरीत्या च सोऽयं गकार इतिवद्योऽयं गकार इति श्रुतः सोऽयं हकार इत्यपि स्यात् । स्फोटस्यैकत्वात् । गकारोऽयं न हकार इत्यनापत्तेश्च । किं च स्फोटे गत्वाद्य-

( अखण्डस्फोटनिर्णयः )

भ्युपेयं न वा । आद्ये स एव गकारोऽस्तु वर्णनित्यतावादिभिरतिरिक्त-गत्वानङ्गीकारात् । तथा चातिरिक्तस्फोटकल्पन एव गौरवम् , अन्त्ये गकारादिप्रतीतिविरोधः । वायुसंयोगवृत्ति ध्वनिवृत्ति वा वैजात्यमारोप्य तथा प्रत्यय इति चेन्न । न प्रतीतिर्विना बाधकं भ्रमत्वासंभवात् । अस्तु वा वायुसंयोग एव गकारोऽपि तस्यातीन्द्रियत्वं दोष इति चेद्ध मेवमुपपत्तेरिति कृतं स्फोटेन । तस्मात्सन्त्येव वर्णाः परं तु न वाचका गौरवात् । आकृत्यधिकरणन्यायेन जातेरत्र वाच्यत्ववद्वाचकत्वस्यापि युक्तत्वाच्च । इदं हरिपदमित्यनुगतप्रतीत्या हर्युपस्थितित्वावच्छेदेन हरिपदज्ञानत्वेन हेतुत्वात्तदवच्छेदकतया च जातिविशेषस्यावश्यकल्प्यत्वात् । न च वर्णानुपूर्व्येव प्रतीत्यवच्छेदकत्वयोर्निर्वाहः, घटघटत्वादेरपि संयोगविशेषविशिष्टमृदाऽऽकारादिभिश्चान्यथासिद्ध्यापत्तेः तस्मात्सा जातिरेव वाचिका तादात्म्येन तदवच्छेदिका चेति । ननु सरो रस इत्यादौ तयोर्जात्योः सत्त्वादर्थभेदबोधो न स्यादित्यत आह-औपाधिको वेति । वा त्वर्थे । उपाधिरानुपूर्वी सैव जातिविशेषाभिव्यञ्जिकेति भेदः कारणीभूतज्ञानस्येति नातिप्रसङ्ग इति भावः । उपाधिप्रयुक्तज्ञानवैलक्षण्ये दृष्टान्तमाह–वर्णानामिति ॥ ११ ॥ ( ७० )

ननु जाते प्रत्येकं वर्णेष्वपि सत्त्वात्प्रत्येकादर्थबोधः स्यादित्यत आह–

अनेकव्यक्त्यभिव्यङ्ग्या जातिः स्फोट इति स्मृता ।
कैश्चिद्व्यक्तय एवास्या ध्वनित्वेन प्रकल्पिताः ॥१२॥ (७१)

अनेकाभिर्वर्णव्यक्तिभिरभिव्यक्तैव जातिः स्फोट इति स्मृता । योगार्थतया बोधिकेति यावत् । एतेन स्फोटस्य नित्यत्वात्सर्वदाऽर्थबोधापत्तिरित्यपास्तम् । अयं भावः–यद्यपि वर्णस्फोटपक्षे कथितदोषोऽस्ति तथाऽपि पदवाक्यपक्षयोर्न, तत्र तस्या व्यासज्यवृत्तित्वस्य धर्मिग्राहकमानासिद्धत्वादिति कैश्चिद्व्यक्तयो ध्वनय एव ध्वनिवर्णयोर्भेदाभावादित्यभ्युपेयन्त इति शेषार्थः । उक्तं हि काव्यप्रकाशे–– " बुधैर्वैयाकरणैः प्रधानीभूतस्फोटव्यञ्जकस्य शब्दस्य ध्वनिरिति व्यवहारः कृतः " इति ॥ १२ ॥ ( ७१ )

ननु का सा जातिस्तत्राऽऽह—

सत्यासत्यौ तु यौ भागौ प्रतिभावं व्यवस्थितौ ।
सत्यं यत्तत्र सा जातिरसत्या व्यक्तयो मताः ॥ १३ ॥ (७२)

प्रतिभावं प्रतिपदार्थं सत्यांशो जातिरसत्या व्यक्तयः । तत्तद्व्यक्तिविशिष्टं ब्रह्मैव जातिरिति भावः । उक्तं च कैयटेन—"असत्योपाध्यवच्छिन्नं ब्रह्मतत्त्वं द्रव्यशब्दवाच्यमित्यर्थः" इति । "ब्रह्मतत्त्वमेव शब्दस्वरूपतया भाति" इति च । कथं तर्हि ब्रह्मदर्शने च गोत्वादिजातेरप्यसत्त्वादनित्यत्वम्, आत्मैवेदं सर्वमिति श्रुतिवचनादिति कैयटः संगच्छताम् । अविद्याऽऽविद्यको धर्मविशेषो वेति पक्षान्तरमादायेति द्रष्टव्यम् ॥ १३ ॥ ( ७२ )

तमेव सत्यांशं स्पष्टयति—

इत्थं निष्कृष्यमाणं यच्छब्दतत्त्वं निरञ्जनम् ।
ब्रह्मैवेत्यक्षरं प्राहुस्तस्मै पूर्णात्मने नमः ॥ १४ ॥ ( ७३ )

( इति भट्टोजिदीक्षितविरचितकारिकासु पदादिस्फोटनिरूपणम् )

समाप्तः स्फोटवादः ।

इति भट्टोजिदीक्षितविरचितवैयाकरणसिद्धान्तकारिकाः समाप्ताः ।

अयं भावः—"नामरूपे व्याकरवाणि" इतिश्रुतिसिद्धा द्वयी सृष्टिस्तत्र रूपस्येव नाम्नोऽपि तदेव तत्त्वम् । प्रक्रियांशस्त्वविद्याविजृम्भणमात्रम् ।

उक्तं च वाक्यपदीये—

"शास्त्रेषु प्रक्रियाभेदैरविद्यैवोपवर्ण्यते ।
समारम्भस्तु भावानामनादि ब्रह्म शाश्वतम्" इति ॥

ब्रह्मैवेत्यनेन "अत्रायं पुरुषः स्वयंज्योतिः" "तमेव भान्तमनु भाति सर्वम्" "तस्य भासा सर्वमिदं विभाति" इतिश्रुतिसिद्धं स्वपरप्रकाशत्वं सूचयन्स्फुटत्यर्थोऽस्मादिति स्फोट इति यौगिकं स्फोटशब्दाभिधेयत्वं सूचयति । निर्विघ्नप्रचयान्ते मङ्गलं स्तुतिनतिरूपमाह—पूर्णात्मन इत्यादिना ॥ ७३ ॥

( अखण्डस्फोटनिर्णयः )

अशेषफलदातारमपि सर्वेश्वरं गुरुम् ।
श्रीमद्भूषणसारेण भूषये शेषभूषणम् ॥ १५ ॥ (७४)

इति रङ्गोजिभट्टात्मजकौण्डभट्टविरचिते वैयाकरणभूषणसारे स्फोटवादे पदादिस्फोटनिरूपणं समाप्तम् ॥

समाप्तश्च स्फोटवादः ।

इति श्रीमत्पदवाक्यप्रमाणपारावारीणधुरीणरङ्गोजिभट्टात्मजकौण्डभट्टविरचितो वैयाकरणभूषणसारः समाप्तः ॥

---

इति वैयाकरणभूषणसारव्याख्यायां शांकर्यामष्टस्फोटनिरूपणम् ।
रङ्गभट्टतनूजेन शंकरेण विनिर्मिते ।
सारीयेऽस्मिन् विवरणे पूर्णः स्फोटविनिर्णयः ॥ १७ ॥

---

न शांकर्या व्याख्या विबुधजनसंतोषकरणी
नवाऽऽस्ते सद्बोधा ललितललिता वाक्यरचना ।
न चार्थो गम्भीरः सुविशदतयाऽस्यां विवरित-
स्तथाऽप्येषा नूत्नेति हि खलु विलोक्या पठितृभिः ॥ १ ॥
टीका मदीया यदि चेदशुद्धा तथापि मूलं सुविशुद्धमेव ।
समागमात्पापिजनस्य गङ्गा भवत्यपूता किमु लोक उच्यते ॥ २ ॥
ग्राह्यं हि किंचिद्यदि चेदिह स्यात्तन्मे गुरोः, न गुणो ममेति ।
अग्राह्यमेवं यदि चेदिह स्यान्ममैव दोषो, न गुरोर्ममेति ॥ ३ ॥
संप्रार्थ्य चैवं कृतहस्तसंपुटः समर्पये श्रीशिवपादपद्मयोः ।
अब्जादिनानाविधपुष्पगुम्फितां मालां यथैवं भूषणसारटीकाम् ॥ ४ ॥
रङ्गभट्टतनूजेन शंकरेण विनिर्मिता ।
टीका भूषणसारस्य छात्राणामुपकारिणी ॥ ५ ॥
अभिसप्ताष्टभूशाके ( १८७३ )वत्सरे मासि माधवे ।
सच्चिदानन्दरूपेऽसौ संस्थाध्यक्षे शिवेऽर्पिता ॥ ६ ॥
श्रीसच्चिदानन्दार्पणमस्तु ।

अथात्र प्रसङ्गात्केवलस्फोटप्रकरणोपरिगता भैरवमिश्रकृता परीक्षा नाम टीका-कथंचिदुपलब्धा सा वाचकानां महते उपकाराय प्रभवेदित्यालोच्य यावत्युपलब्धा तावत्येव संगृह्यते—सिद्धान्तेति० । वाक्यस्फोटोऽतिनिष्कर्षे......॥ ६० ॥

नैयायिकमीमांसकमतं खण्डयितुमुपक्रमते- सिद्धान्तेति । वैयाकरणसिद्धान्ते-त्यर्थः । नैयायिका ह्येवमाहुः—शक्तं पदम् । पदसमुदायो वाक्यमिति । एवं च प्र-कृतिप्रत्यययोः स्वस्वार्थाभिधानसमर्थयोः समभिव्याहारात्प्रकृत्यर्थविषयतानिरूपि-तप्रत्ययार्थविषयताशालिबोधो जन्यते । तत्र प्रकृतिप्रत्यययोराकाङ्क्षाऽपि सहका-रिणी । अन्यथा घटः कर्मत्वं—आनयनं कृतिः, इति शब्दसमुदायादेयतासंबन्धाव-च्छिन्नघटनिष्ठप्रकारतानिरूपितकर्मत्वनिष्ठविशेष्यताको निरूपकत्वसंबन्धावच्छि-न्नकर्मप्रकारतानिरूपितानयननिष्ठविशेष्यताकोऽनुकूलत्वसंबन्धावच्छिन्नानयनानिष्ठ-प्रकारतानिरूपितकृतिनिष्ठविशेष्यताकशाब्दबोधः स्यात् । यत्पदे यत्पदसमभिव्या-हारप्रयुक्तं यत्संसर्गकयत्प्रकारकयद्विशेष्यकबोधजनकत्वम् , तयोः पदयोः सम-भिव्याहारे ह्याकाङ्क्षा । अस्ति च सा 'घटमानयति' इत्यत्र । घटकर्मत्वमि-त्यादिप्रयोगे तु सा नास्तीत्यतो न घटीया कर्मतेति तद्रीत्या बोधः । एवं धात्वा-ख्यातयोरपि बोध्यम् । सैवाऽऽकाङ्क्षा व्याकरणेन प्रतिपाद्यते । सा च आका-ङ्क्षा ज्ञाता सती शाब्दबोधहेतुर्नतु स्वरूपसती । यत्र घटकर्मत्वमिति केनाचित्प्र-युक्तम् , तत्र घट इोत्तरवर्त्तिकर्मत्वशब्दे अमूपदत्वस्य भ्रमो यदा, तदा तस्माद् घटीया कर्मतेत्वन्वयबोधो जायते, तस्यानुत्पत्तिप्रसङ्गात् । न च आकाङ्क्षाज्ञा-नाद् घटमितिशब्दाद् घटीया कर्मतेति बोधे जातेऽपि तस्य कारणीभूतज्ञानस्य सत्त्वात्पुनस्तथाऽन्वयबोधः स्यादिति वाच्यम् । तात्पर्यविषयान्वयबोधानुपहितत्वस्य स्वरूपतः शब्दनिष्ठस्य नियामकत्वात् । एकस्य बोधस्य तात्पर्यविषयत्वे तच्छा-ब्दबोधानुपहितत्वस्य तत्र सत्त्वाद्भवति बोधः । द्वितीयस्तु न भवति, एकज्ञाने जाते तदुपहितत्वविशिष्टस्य तस्य शब्दस्य सत्त्वात् । यत्र शाब्दबोधद्वयं जायता-मितीच्छा तत्र बोधद्वयस्य तात्पर्यविषयतया बोधद्वयानुपहितत्वस्य प्रथमशाब्दबोधे जातेऽपि तत्त्वाद्भवत्येव द्वितीयो बोधः । एतन्मूलक एव 'सकृदुच्चरितः शब्दः सकृदर्थं गमयति' इति सांप्रदायिकानामुद्घोषः । न चावान्तरवाक्यार्थज्ञाने जनिते तेन महावाक्यार्थबोधो न स्यात् , तस्मिन् प्रकृतान्वयबोधानुपहितत्वाभा-वादिति वाच्यम् । तात्पर्यविषयान्वयबोधे स्वविषयत्वान्यूनानतिरिक्तविषयताकबो-

धानुपहितत्वस्यावान्तरबोधे जातेऽपि सत्त्वाद्भवत्येव महावाक्यार्थबोधः । एवं च साकाङ्क्षत्वाच्छब्दसमुदायादेव शाब्दबोधस्योपपत्तिसंभवान्न वाक्यस्य पदसमूहस्य पृथग्वाक्यार्थे शक्तिरिति । पदार्थतासंसर्गस्त्वनुपस्थित एव । आकाङ्क्षा तात्पर्य-वशाद्भासते । न तु शक्तिस्तस्मिन्नर्थे कल्प्यनीयेति । मीमांसकादयस्तु—संसर्गो वाक्यस्य लक्ष्योऽर्थ इत्येवमाहुरिति, तदप्यसंगतमिति ध्वननाय सिद्धान्तपदोपादानम्। किंच व्याकरणप्रक्रियया प्रकृतिप्रत्यययोस्तत्तदर्थबोधकत्वेन क्लृप्तयोः सत्त्वाच्छाब्दबोधोपपत्तौ न पदेष्वित्यादेः सुबन्तस्य प्रकृतिप्रत्ययसमुदायस्य बोधकत्वमिति यन्मतं तदप्ययुक्तम् । शब्दानामाशुविनाशितया समुदाये तादृशस्याभावादतः स्फोटस्य वाचकत्वमभ्युपेयम् । ते च स्फोटा नानाविधा यद्यपि संभवन्ति तथाऽपि निष्कर्षे सति वाक्यस्फोट एव स्वीकर्तुमुचित इत्याशयेन सिद्धान्तेन पूर्वोक्तरीत्या स्फोटस्य वाचकत्वव्यवस्था । तेन परमतस्य निराकरणं भवति । एवं सप्ताष्टानामेकस्यापि वाचकत्वकथनेन परो निरस्तो भवतीत्यादौ वाक्यस्फोटस्यैव कथने किं बीजमित्याशङ्कानिराकरणव्याजेन निष्कृष्टार्थं सूचयति—यद्यपीत्यादिना । स्फुटति प्रकाशते ज्ञातो भवत्यर्थोऽस्मादसौ स्फोट इति व्युत्पत्त्या अर्थविषयकं यज्ज्ञानं, तज्जनकतावच्छेदकशक्तिमत्त्वं तत्त्वम् । तच्च प्रकृतिनिष्ठं प्रत्ययनिष्ठं च संभवतीत्याशयेनाऽऽह—**वाक्यग्रहणमिति** । अनर्थकं—प्रयोजनरहितम् । प्रत्युत तस्योपादानेऽन्येषामसंग्रहापत्तिरूपो दोषोऽपीत्याह —**अनर्थकमिति** । अन्येषां—वर्णादिस्फोटानाम् । अत्र वर्णपदं प्रकृतिप्रत्ययपरम् । अर्थस्मृतिजनकज्ञानविषयतावच्छेदकशक्तिमत्त्वं प्रकृतिप्रत्यययोरेवेति वर्णस्फोटः । पदस्यैव तादृशशक्तिमत्त्वमिति पदस्फोट इति व्यवहारः । **अवास्तवत्वमिति** । प्रकृतिमात्रस्य प्रत्ययमात्रस्य वा निराकाङ्क्षप्रतिपत्तिमात्रकरत्वं नेति तस्यावास्तवत्वमित्यर्थः । शास्त्रीयप्रक्रियानिर्वाहाय तस्य स्वीकार इति भावः । तत्र—अष्टसु । तान्—स्फोटान् । **विप्रतिपत्तिरिति** । संशयजनककोट्युपस्थापकं वाक्यमित्यर्थः । साधारणासाधारणधर्मवत्ताज्ञानजन्यकोट्युपस्थितेर्यथा संशयजनकत्वं, तथा विप्रतिपत्तिवाक्यजन्यकोट्युपस्थितिसत्त्वेऽपि संशयो भवति । साधारणो धर्मः—कोटिद्वयसमानाधिकरणो धर्मः । स्थाणुत्वस्थाणुत्वाभावसमानाधिकरणधर्मवानयम्, वह्निमद्वृत्तिवह्न्यभाववद्वृत्तिपर्वतत्ववानयमिति वा ज्ञानं यत्र ततः स्थाणुत्वतदभावयोर्वह्नित्वतदभावयोर्वोपस्थितावयं स्थाणुर्न वाऽयं वह्निर्न वेति संशयो

भवति । तथा चैत्रेण शब्दो नित्यो वाऽनित्यो वेत्युच्चारिते मैत्रस्य ततः कोटिद्वयोपस्थितौ शब्दत्वावच्छिन्नैकविशेषतानिरूपितोभयकोटिप्रकारताकः संशयो भवति । असाधुशब्दान्तर्गतवर्णानां वाचकत्वमप्रस्तुतम् । अतः साधुशब्द इत्युक्तिर्मूले तादृशविप्रतिपत्तिवाक्येन साधुशब्दान्तर्गतवर्णत्वसामानाधिकरण्येन वाचकत्वं साध्यते, तदवच्छेदेन वा ? आद्ये—नैयायिकैरपि केषांचित्तादृशानामिञादिप्रत्ययानां दाक्षिरित्यादौ वाचकत्वस्वीकारात्सिद्धसाधनतापत्तेः । द्वितीये—नैयायिकानां परेषां च बाधः । विकरणानामनर्थकत्वादित्यत आह—ननु ते स्मृता इति । नन्वेतावताऽपि न विप्रतिपत्तिशरीरनिष्पत्तिः साधुशब्दान्तर्गतवर्णत्वसामानाधिकरण्येन वाचकत्वस्य नैयायिकसंमतस्य तदन्तर्गते तत्स्मृते वाचकत्वाभावस्यैव साधने धर्मिभेदादेकधर्मिकविरुद्धनानाधर्मप्रकारकज्ञानस्यैव संशयत्वादत आह—साधुशब्दान्तर्गता इत्यादि । तथा च साध्वन्तर्गतस्मृतानां प्रक्रियानिर्वाहकानां लादीनां वाचकत्वसाधने तात्पर्यमिति भावः । लः कर्मणि स्वौजसमौट्, इत्यादिषु विहितानामेव वाचकत्वं, प्रयोगे श्रूयमाणादेशानां तु तत्स्मारकतयोपयोग इति परेषां मतम् । एवं च ' साधुशब्दान्तर्गतवर्णस्मृतवर्णतावच्छेदेन कोटिद्वयसाधनमभिप्रेतमिति नोक्तदोष इत्याशयः । वाचकत्वमिति कोटिरन्येषाम् । नेति वैयाकरणानाम् । परेषां म ' खण्डयितुमुपक्रमते—साधुशब्द इति । तेषामेव बोधजनकानामेव ॥ ६० ॥

परमतमाह—ये त्विति । तदन्तर्गतानां वाचकत्वाभावे साधकान्तरमाह—तेषामिति । बहुवचनेत्युपलक्षणम् । शक्ततावच्छेदकधर्माननुगमादित्यपि बोध्यम् । किंच तिङ्त्वादीनां शक्ततावच्छेदकत्वे तद्धर्मप्रकारकज्ञानस्यार्थोपस्थितौ कारणता वाच्या सा न संभवति तिङ्त्वानुपस्थितावपि लत्वेनैवोपस्थितौ वृत्त्या कृत्याद्यर्थस्योपस्थितिदर्शनेन व्यभिचारात् । ननु आनन्त्यं भवतामपि स्मृतानां लडत्वलिडत्वादिरूपेण शक्तत्वस्य भवत्संमतत्वादत आह—एषामिति । असंभवाच्चेति । श्रूयमाणा आदेशा एव वाचका इति भवत्संमतम्—तथा च प्रकृते आदेशानामश्रवणेनार्थबोधो न स्यादिति भावः । यद्यप्येधांचक्र इत्यादावप्रयुज्यमानानामादेशानां संभवति तथाऽपि ब्रह्मेत्यादावसंभव एवेत्याशयेन द्वितीयोपादानम् । आदिना ' अतो हेः ', इति लुग्विषये भवेदित्यादेरजर्घा इत्यादेश्चोपग्रहः । लुगादेरित्यादिना लोपस्य संग्रहः । तैः—आदेशैः । ननु लकारस्य वाचकत्वेऽप्युक्तरीत्याऽनु-

पपत्तिरेवात आह—**लत्वस्येति** । **जातिरूपतयेति** । लत्वेऽनुगतप्रतीत्या तस्य सिद्धिरित्याशयः । **अव्यभिचारादिति** । लिट्त्वादीनां शक्यतावच्छेदकत्वे स्वावच्छिन्नज्ञानाद्यत्रार्थोपस्थितिस्तत्रार्थोपस्थितेः । प्रकृतित्वावच्छिन्नज्ञानाभावाद्व्यभिचारः । एवमन्यत्रापि बोध्यम् । लत्वस्य शक्यतावच्छेदकत्वं पाणिनेः संमतमपीत्याह—**लः कर्मणीति** । न च लत्वस्य लवणादिघटकलकारेऽपि सत्त्वेनातिप्रसक्तत्वमिति वाच्यम् । लट्त्वाद्यन्यतमत्वरूपानानुपूर्वीकरणविशिष्टत्वं शक्यतावच्छेदकमिति अभिधानात् । **स्वसाधकेति** । स्वमतनिर्दुष्टसाधकेत्यर्थः । **व्यवस्थितेरिति** । यश्चाप्यन्तं, तत्र यस्य हेतुसूचकस्य पु[illegible]नातिशयसाध्यसाधकत्वं तत्रैवान्वयो बोध्यः । एतद्विवरणेन दर्शयति—व्यवस्थानुरोधादित्यादिना । प्रमाणेन वस्तुतत्त्वस्य निर्धारणं व्यवस्था, तस्याः साधकयुक्तिमित्यर्थः । **अदिदुष इति** । अवैयाकरणस्येति शेषः । तस्य—लत्वावच्छिन्नस्य । तेषां—अवैयाकरणानाम् । **शक्तिभ्रमादिति** । बोधकत्वरूपशक्तेरारोपादित्यर्थः । **भानाभावादिति** । बोधकत्वरूपायाः शक्तेर्बाधाभावादिति भावः । लकारस्यैव कर्मत्वादौ विधानं यदि सर्वव्याकरणे प्रसिद्धं तदा भवदुक्तेः संभवः स्यात्, तदेव तु न । लट्लिडितिवत् कट्किडित्यादिरीत्या विधानेऽपि प्रयोगोपपत्तेरित्याशयेनाऽऽह—**आदेशिनामपीति** । वैयाकरणैः—शाकटायनादिभिः । **व्यवस्थानापत्तेश्चेति** । इदमेव वाचकमिति निर्णयानुपपत्तेरित्यर्थः । अनुशासनानुरोधो हि भवतां बलं, तत्त्वनुशासनं संभवतीति भावः । नन्वस्तु विनिगमनाविरहात्सर्वेषां वाचकत्वमत आह—**सर्वेषामिति** । नन्वादेशापेक्षया आदेशिनामल्पत्वमेवेत्याशङ्कायामाह—**व्यभिचार इति** । लत्वावच्छिन्नज्ञानाद्यत्रार्थोपस्थितिस्तत्र तिप्त्वावच्छिन्नज्ञानस्य ततः पूर्ववर्तित्वाभावेन व्यभिचार इत्यर्थः । स्वमतस्योपपत्तिमाह—**आदेशानामिति** । यद्यप्यादेशिनामादेशापेक्षया आधिक्याद् गौरवम् । एवं प्रत्येकज्ञानस्य कारणतायां व्यभिचारश्च । अस्मन्मतेऽपि तथादेशिस्मरणकल्पना नेति लाघवसहकृतप्रयोगनियतत्वमस्माकं विनिगमकम् । व्यभिचारवारणं तु अव्यवहितोत्तरत्वसंबन्धेन कारणवैशिष्ट्यस्य कार्यतावच्छेदके निवेशेन कार्यमिति भावः । साधकान्तरं पूर्वसाध्यस्य हेत्वन्तरम् । एतेन बोधकत्वं यदि शक्तिः, तदा भवदुक्तिसंगतिः । तत्रैव तु विवादः । शक्तेः संकेतरूपायाः परसंमतत्वात् । तस्याश्च शक्तेरनुशासनेनाऽऽदेशिष्वेव सिद्धिः । स्मरणप्रयुक्तकल्पना-

गौरवं तु फलमुखत्वान्न दोषावहमिति परास्तम् । आद्यशक्तिग्रहोपायव्यवहारस्याऽऽदेशविषय एव संभवेन तत्रैव शक्तेर्न्याय्यत्वादिति तिङादिष्वेवेतिव्यवहारेणाऽऽदौ यद्यपि वाक्ये शक्तिग्रहः तथाप्यावापोद्वापाभ्यामुत्तरकालं तद्घटकतिङादिष्वेव तन्निश्चयेन भवत्सिद्धान्तविलोपापत्तिः । अतो व्यवहारेण यथा प्रथमं वाक्ये शक्तिग्रहेऽपि पश्चात्त्यागः, तथाऽऽदेशेषु जातशक्तिग्रहेऽपि अप्रामाण्यकल्पनाऽस्तु, किं त्वनुशासनसहायेन यत्र शक्तिनिश्चयः, तेषामेव वाचकत्वमस्तु इत्यादेशिनां वाचकत्वासिद्धिरत आह——**किं चेति । न्यायत इति** । तद्धेतोरेव तत्स्यात् किं तेनेति भावादित्यर्थः । लाघवमूलकमिमं न्यायं संगमयति—लकारस्येत्यादिना । बोधापत्तिः—कर्त्राद्यर्थबोधापत्तिः । केवललकारस्य प्रयोगानर्हत्वात्, भूशब्दसाहित्येनैव प्रयोगदर्शनम् । तादृशबोधे—भवनादिविशिष्टकर्त्रादिविषयकबोधे । **भवतीति** । अस्याऽऽदेरिति शेषः । समभिव्याहारः । पूर्वापरीभावापन्नपरिनिष्ठितसमुदायघटकयावद्वर्णोच्चारणम् । न च भूल्इत्यादिभ्यो न बोधापत्तिरसाधुत्वज्ञानस्य प्रतिबन्धकत्वादिति, अपभ्रंशादपि बोधस्य दर्शनेन तस्याप्रतिबन्धकत्वात् । **आवश्यकत्वादिति** । तादृशसमभिव्याहारज्ञानं विना केवललकारेण बोधादर्शनेन समभिव्याहारज्ञानस्य कारणताया आवश्यकत्वादित्यर्थः । **समभिव्याहारस्येति** एवकारेण लकारस्य व्यवच्छेदः । वाचकत्वशक्ति -अर्थबोधजनकत्वरूपशक्तिः । सिध्यतीति शेषः । अन्यथा—उभयोरप्यर्थबोधजनने सहायत्वे । **प्रयोगान्तर्गतवर्णा इति** । न चाऽऽदौ वाक्यस्फोटस्य वाचकत्वमुक्तमिदानीं प्रयोगान्तर्गतवर्णानां तत्साध्यते, इत्यप्रकृतमिति वाच्यम् । वक्ष्यमाणवर्णस्फोटोपयोगित्वात् । अत्र प्रत्येकावृत्तिधर्मस्य समुदायावृत्तित्वम्, इति नियमोऽपि साधको द्रष्टव्यः । न च प्रत्येकापर्याप्तस्य द्वित्वस्य समुदायपर्याप्तत्वदर्शनेनोक्तनियमो व्यभिचरित इति वाच्यम् । तस्यापि समवायेन प्रत्येकवृत्तित्वाभ्युपगमात् । अत एव—स्वाश्रयनिष्ठभेदप्रतियोगितावच्छेदकत्वरूपव्यासज्यवृत्तित्वरूपस्य सिद्धिः। न च प्रयोगान्तर्गतवर्णानां वाचकत्वे तेषां बहुत्वाद्गौरवमिति वाच्यम् । आनुपूर्व्यास्तदनुगमकत्वादिति । न च तद्धेतुन्यायत इत्यनुपपन्नम् । समुदायस्य शाब्दबोधजनकत्वे सहायत्वेऽपि पदार्थस्मारकत्वरूपबोधजनकत्वग्रहे सहकारित्वादित्यत आह—**अपि चेति । कृत्तिङोरिति** । अस्य यथासंख्यमन्वयो न स्यात् स्थानिनो लकारस्यैकत्वेन भेदासिद्धेरिति शेषः । इदं प्रयोगान्तर्गतवर्णानां वाचकत्व-

व्यवस्थापनं प्राचीननैयायिकान् प्रति, नव्यैस्तु तिबादिष्वेव वाचकत्वस्य स्वीकारात् । यत्र धातोः प्रत्ययस्य वा लोपः, तत्रार्थबोधजननोपायस्तूभाभ्यामपि समान इत्यवधेयम् । इत्यस्त्विति । कृत्याश्रयस्यैव कर्तृपदार्थत्वादिति भावः । अन्यथा—अर्थाकाङ्क्षाभावेऽपि शास्त्रप्रवृत्तौ । प्रवर्ततेति । तथा च यत्रार्थाकाङ्क्षा तत्रार्थव्यवस्थापकशास्त्रप्रवृत्तिर्भवताऽपि वाच्येति भावः ॥ ६१ ॥

ननु मन्मते साधकान्तरमस्तीत्याह—देवदत्त इत्यादिना । न चैवं शतृशानचोर्लादेशत्वकल्पनमनर्थकम् । तृजादिवत्प्रत्ययान्तरत्वस्यैव स्वीकर्तुमुचितत्वादिति वाच्यम् । धात्वर्थे वर्तमानत्वस्यान्वयबोधजननस्य तत्फलत्वात् । तरबाद्यन्तेति । कृतिश्चेत् तरबाद्यन्ततिङन्ते नाम्ना स्फुटाऽस्तीत्यन्वयः । तिङन्तप्रकृतिकतरबन्तेषु पचतितरामित्यादिषु नामत्वमस्तीति पचतितरां देवदत्तः इत्यादिषु सामानाधिकरण्यानुरोधात् कर्तुस्तिङ्वाच्यत्वमस्तु, कृत्प्रत्ययस्थले नामार्थयोरभेदान्वय इति नियमानुरोधो भवतां कर्तुर्वाच्यत्वमिति चेत् पचतितरां देवदत्त इत्यादावपि तस्यानुरोधस्तुल्य इत्यर्थः । इदं सुबन्तं नामेति मतेन । यदि तु 'सत्त्वप्रधानं नाम' इति 'चत्वारि पदजातानि' 'नामाख्यातोपसर्गनिपाताः' इति उक्तवाक्ये उपसर्गनिपातयोः पृथगुपादानेनार्थीयते तदा नायं दोष इत्यवधेयम् । अथवा तरबाद्यन्तेत्यादिना कर्तुरादेशवाच्यत्वसाधिका भवदुक्तिः सा न युक्ता । लकारस्य कर्तरि लक्षणयाऽपि सामानाधिकरण्यस्योपपत्तेरिति कस्यचिच्छङ्कां निरस्यति—न चेति । नन्वादेशानामेव वाचकत्वे 'लः कर्मणि' इति सूत्रविरोध इत्यत आह—लः कर्मणीति । उक्तमिति । आदेशशक्तिनिरूपणावसर इति शेषः । एवं च प्रयोगे श्रूयमाणेषु प्रकृतिप्रत्ययेषु वर्णसमुदायरूपेषु शक्तिर्व्यासज्यवृत्तिरिति वर्णस्फोटपक्षः सिद्ध ॥ ६२ ॥ इति वर्णस्फोटविवरणम् ।

## अथ पदवाक्यस्फोटनिरूपणम् ।

वर्णस्फोटनिरूपणपदस्फोटनिरूपणयोरुपजीव्योपजीवकभावसंगतिरितिसचयन्नाह—एवमिति । पूर्वोक्तरीत्या वर्णस्फोटसाधनाय प्रवृत्त्या वराटिकान्वेषणाय प्रवृत्तश्चिन्तामणिं लब्धवानिति वा शिष्टोक्ताभाणकन्यायेन पदस्फोटस्य सिद्धिरिति भावः । प्रयोगानन्तानामादेशानां निरासायाऽऽह तिबित्यादि । तादृशवर्णेति । आनुपूर्वीविशिष्टवर्णेत्यर्थः । ननु समुदायस्य वाचकत्वे तस्यावयवानतिरिक्तत्वा-

त्प्रत्येकं वर्णानां वाचकत्वमस्त्वित्यत आह—**प्रतिवर्णमिति**। **अनुभवविरुद्धत्वादिति**। कलशशब्दादमुमेवार्थं प्रत्येमीत्येवानुभवोऽस्तीति भावः। प्रत्येकं वाचकत्वे दोषान्तरमप्याह—**प्रत्येकमिति**। अर्थवत्त्वे-अर्थवत्त्वस्याऽऽपत्त्या। तथा च समुदितानामेव वाचकत्वमुपेयमिति भावः। न चैवं प्रत्येकं वर्णानां वाचकत्वं गौरवादेव निरस्तं भवति, किमर्थं भवतोक्तमुनरत्र समुदायस्य वाचकत्वं साध्यते इत्यत आह—**एतच्चेति**। समभिव्याहृतवर्णानां वाचकत्वोपन्यसनत्वमित्यर्थः। चरमवर्णे पदचरमावयववर्णे। एतच्छ्रवणं विनाऽर्थबोधाभावेनान्वयव्यतिरेकाभ्यां तत्र शक्तिः कल्प्यत इति भावः। नन तर्हि तन्मात्रश्रवणाद्बोधापत्तिरत आह—**पूर्वपूर्वेति**। पूर्वस्मिन्नते दूषणान्तरमाह—**राम इत्यादिना**। एतच्च दूषणं यत्रोद्बोधकसमवधानात्तावतां स्मरणं जायते तत्रेति बोध्यम्। ननु वर्णानां समभिव्याहारो न समूहरूपः। वर्णानामाशुविनाशितया तस्यासंभवात्। अव्यवहितोत्तरत्वसंबन्धेनैकवर्णविशिष्टापरवर्णत्वमप्यत एव न संभवतीति समुदायपर्याप्त वाचकत्वमित्यसंगतमत आह—**दिगिति**। दिगर्थस्तु स्वसामानाधिकरण्य—स्वाव्यवहितोत्तरक्षणोत्पत्तिकत्व—एतदुभयसंबन्धेनैकवर्णविषयकज्ञानाविशिष्टज्ञानाविषयकत्वमपरवर्णे इत्येवंरीत्या जानुपूर्वीकल्पनीया तस्या नानुपपत्तिरिति ॥ ६३ ॥

ननु शक्तं पदमिति वदतां परेषामपि पदस्य वाचकत्वं सिद्धमेवेत्यत आह—**सुप्तिङन्तमिति**। पूर्वोक्तरीत्या प्रकृतिप्रत्ययसमुदायस्य वाचकत्वसिद्धावपि यत्र प्रकृतिप्रत्ययविभागः सुज्ञानः, तस्यैव वाचकत्वमिति शङ्कानिवारणायायं प्रयत्न इत्यवधेयम्। **स्वीकार इति**। शब्दानां नित्यत्वसमर्थनाय भाष्यकृतेति शेषः। **न वाचकत्वमिति**। पार्थक्येनेति शेषः। किंतु समुदायस्यैव तत्त्वमुपेयमिति भावः। **दृष्टान्तव्याजेनेति**। अयमत्र प्रयोगः—घटेनेत्यादिसमुदायाः घटाद्यभिन्नकरणादिशक्ताः, घटाद्यभिन्नकरणादिप्रतीत्यन्वयव्यतिरेकानुविधायिज्ञानविषयत्वात्। **वस्नसदिवदिति**। न च वसनसादीनामपि पक्षान्तर्गतत्वाद् दृष्टान्तत्वेनोपादानासंगतिरिति वाच्यम्। निश्चितसाध्यकस्य दृष्टान्तत्वं भवति। तच्च वस्नसादावप्यस्तीति आशयात्। तत एव व्याजपदम्। समुदायस्य—प्रकृतिप्रत्ययसमुदायस्य। **तद्विभाग इति**। प्रकृतिप्रत्ययोः पार्थक्येन निश्चय इत्यर्थः। अत्र प्रक्रियाज्ञानवतां वैयाकरणानामपि न विभागज्ञानम्। 'टाङसि' इतिसूत्रेण नादेशस्य भाष्यकारोक्तरीत्या विधानेन प्रकृतिप्रत्ययविभागज्ञानसंभवात् घटेनेत्यादा-

वित्यादिपदमुपात्तम् । तेन घट इत्यादिपरिग्रहः । वस्तसादौ प्रकृत्यादिकल्पनं त्वाग्रहमात्रम् ॥ ६४ ॥

'दस्फोटं निरूप्य युक्तिसाम्याद्वाक्यस्फोटं निरूपयति—**समिङन्तचयेति** । तद्वाचकत्वे युक्तिसाम्यं दर्शयति—**हरेऽवेत्यादिना** । तद्विभागः—पदद्वयविभागः । **समुदायशक्तिज्ञानादिति** । समुदाये- हरेऽवेत्यादिसमुदायस्य शक्तिः स्वीकार्या । **एवमिति** । वाक्यशक्तिवदित्यर्थः । विशिष्य—तत्तत्सूत्रप्रवृत्तिक्रमेण । यदि तत्तत्सूत्रप्रवृत्तिज्ञानं स्यात् तदा प्रकृतिप्रत्यययोर्बोधकतारूपशक्तिज्ञानसंभवः स्यात् तथा नास्तीति ध्वननाय ज्ञायमानेत्युक्तम् । समुदायव्युत्पत्त्या—' पङ्क्तिविंशति ' इत्यादिसूत्रनिपातितसमुदायस्य सहस्रादिशब्दानां च व्युत्पत्त्या । शक्तिग्रहण **एकैवेति** । एवकारेण प्रकृतिप्रत्यययोः पृथक् शक्तिव्यवच्छेदः । ननु ' घटेन ' इत्यादिमूलेन समानयुक्त्या पदस्फोटवाक्यस्फोटयोर्व्यवस्थापनप्रसंगतंपदस्फोटासिद्धौ पदार्थसंसर्गरूपवाक्यार्थाप्रसिद्धेस्तादृशार्थबोधकत्वं वाक्ये न सिध्यतीति कथं वाक्यस्फोटस्य व्यवस्थापनमित्यभिप्रायेण मूलस्य ' घटेन ' इत्यादौ पदस्फोटसाधकत्वं पदस्फोटसिद्धौ तद्दृष्टान्तेन वाक्यस्फोटस्यापि सिद्धिरित्यत्र तात्पर्यमित्याशयेनाऽऽह—**वस्तुत इति** । **व्यवस्थिताविति** । यत्र हरेऽवेत्यादौ पदविभागसंमोहः, तत्रैव वाक्यस्य शक्तिरिति न, किं त्वसंमोहस्थलेऽपीति व्यवस्था । **अन्यथेति** । एवमनङ्गीकारेऽसंमोहस्थले पदशक्त्यैव वाक्यार्थबोधस्वीकारे इत्यर्थः । तादृशव्युत्पत्तिरहितस्य—वाक्यार्थबोधकत्वरूपवाक्यशक्तिज्ञानरहितस्य । एतेनैतादृशसमुदायस्य बोधकत्वज्ञानं यस्य भ्रान्तस्य तस्य बोधो भवत्येवेति सूचितम् । प्रामाणिकानां त्वेतादृशस्थले समुदायशक्तिज्ञानाभावान्न घटकर्मकानयनमिति बोधः । समुदायशक्त्यस्वीकारेऽत्रापि पदार्थोपस्थितिसत्त्वात्तादृशबोधापत्तिरिति भावः । ननु तात्पर्यज्ञानरूपसहकारिकारणान्तराभावान्नाऽऽपत्तिरितिरत आह—**घटमानयेत्यादि** । ननु तात्पर्यज्ञानसत्त्वेऽपि विलक्षणं किंचित्कारणं कल्प्यते, तदभावात्तादृशबोधाभाव इत्याशयेन कारणं दर्शयति—**न चैवेत्यादिना** । **घटादिपदार्थबोधे इति** । अस्य त्वयेत्यादिः । **कल्पनादिति** । तादृशसमभिव्याहार एवाऽऽकाङ्क्षेति तादृशाकाङ्क्षाज्ञानस्य हेतुत्वासिद्धौ वाक्यस्फोटस्य स्फुटं सिद्धिरिति भावः । **शब्दवृत्तीति** । अत्र शब्दपदं पदबोधात्मकशब्दमात्रपरम् । शब्दनिष्ठं यज्ज्ञानकारणत्वं तस्यैवेत्यर्थः । **युक्तमिति** ।

वाक्यनिष्ठबोधकतायाः शक्तित्वकल्पनं युक्तमिति अर्थः । **शाब्दबोधमात्र इति** । अत्र मात्रपदं कात्स्न्र्ये पदजन्ये वाक्यजन्ये चेत्यर्थः । रामठपदे च्छिन्ना पदे च शक्तिज्ञानवतो रामठनीयं प्रोक्तं छिन्ना पुष्टिकरी स्मृता ' इति वाक्याद्बोधात्तच्छून्यस्य चाबोधादन्वयव्यतिरेकाभ्यां तत्तत्पदवृत्तिज्ञानस्य कारणत्वमवश्यं वाच्यमिति कार्यकारणभावानन्त्यमिति शाब्दबोधमात्रे वृत्तिज्ञानत्वेन कारणतेत्येकविधयैव कार्यकारणभावः कल्प्यः । विषयतासंबन्धेनेत्यनेन पदार्थवाक्यार्थनिष्ठो बोधनिष्ठकार्यताया अवच्छेदकसंबन्धः प्रदर्शितः । **वृत्तिज्ञानस्येति** । अस्य स्वविषयवृत्तिनिरूपकत्वं कारणतावच्छेदकसंबन्धत्वम् । वृत्तिजन्योपस्थितेस्तु विषयतैव कारणतावच्छेदकः संबन्धः । न चैवमपि यत्किंचित्पदशक्तिं जानतो घटादिवृत्तिमविदुषो घटपदाद्घटत्वविशिष्टविषयकबोधापत्तिरिति विशेषतो घटत्वादिविशिष्टविषयकशाब्दबोधे घटादिपदवृत्तिज्ञानजन्यघटाद्युपस्थितित्वेन कारणतेत्येवंविधः कार्यकारणभावोऽप्यावश्यकः, इति विशेषकार्यकारणभावेनैवोपपत्तौ सामान्यकार्यकारणभावे मानाभाव इति वाच्यम् । कार्याभावे कारणाभावस्य प्रयोजकतायाः क्लृप्तत्वाद्विषयतासंबन्धावच्छिन्नशाब्दबुद्धित्वावच्छिन्नाभावे विशेषाभावकूटस्य कारणत्वकल्पने गौरवमिति सामान्याभावस्यैव प्रयोजकत्वं वाच्यमित्याशयेन सामान्यकार्यकारणभावस्य प्रदर्शनादित्याशयेनाऽऽह- **विवेचितमिति** । अपूर्वत्वात्–शाब्दबोधात्प्रागनुपस्थितत्वात् । **इति पक्ष इति** । पदानामन्वितपदार्थे शक्तिः अन्वयश्च सामान्यरूपेणैव भासते । अत एव घटादिपदादन्वितो घट इत्याद्यनुपस्थितौ किमन्वितोऽयमिति विशेषाकाङ्क्षा दृश्यत इति तन्मतम् । वस्तुतस्तन्न युक्तम् । घटमानयेत्यादिवाक्याद् घटकर्मकमानयनमित्याद्याकारको बोध एवानुभवसिद्धः । न तु घटाद्यंशे इतरान्वितत्वस्य भानमिति संप्रदायात् । परं तु परस्य मतमाश्रित्य दृष्टान्ततयोपन्यास इति । **ज्ञातेति** । पदार्थानां प्रागुपस्थितत्वदंशे पदशक्तिज्ञानस्य संभवादिति भावः । **कुब्जशक्तिवाद इति** यथा ' हरिद्रायां नद्यां घोषः ' इति वाक्यश्रवणोत्तरं नदीपदसमभिव्याहाराद् हरिद्रापदस्य नदीविशेषपरत्वनिर्णये तत्संबन्धित्वेन पूर्वज्ञाततीरविशेषप्रत्ययः, तथा संसर्गांशे वाक्यस्य शक्तिरज्ञातैव तज्ज्ञानोपयोगिनीति भावः । **वाक्यस्य शक्तिरिति** । वाक्यनिष्ठा संसर्गनिरूपिता शक्तिरित्यर्थः । संसर्गाद्यंशे वृत्त्यभ्युपगमस्तु शाब्दबोधविषयत्वान्यथानुपपत्त्यैव प्रयोज्यप्रयोजकव्यवहारं पश्यतो बालस्य प्राथमिकशक्ति-

निर्णयो यथा मानसो भवति तथा पदैः पदार्थोपस्थितौ मनसा वाक्यार्थबोधो भविष्यति, न तु शब्दाच्छाब्दबोध इति । तदनुरोधेन तत्र शक्तिकल्पनं व्यर्थमित्याशयेन शङ्कते—**नन्विति** । **पदार्थवदिति** । अत्रोपमेये सप्तमीदर्शनात् सप्तम्यन्ताद्वतिः । वाक्यार्थः संसर्गः । तद्ग्रहः-शक्तिग्रह । मानस इति शेषः । लक्षणशब्दस्य लोके लाञ्छनपरत्वेऽपि प्रतियोगार्थमाह—लक्ष्यत इत्यादिना । मूले—**अर्थ इति** । सप्तम्यर्थो निरूपितत्वम् । पदपदोत्तरसप्तम्यर्थान्वयित्वमेव । **तत्तथेति** । अत्र तत्पदार्थः शक्तिज्ञानपरः । तुल्ययुक्त्या वाक्यार्थनिरूपितवाक्यविशेष्यकमानसशक्तिनिर्णयवत्पदेऽपि तथाऽस्त्विति व्याकरणस्य शक्तिग्राहकसिद्धान्तभङ्गः । इष्टापत्तिस्तु न । मानसस्यैव तस्य स्वीकारे मानसं ज्ञानाश्रयो संशयात्मकं भवतीति संशयापत्तेः । यदि पदशक्तिनिर्णयो व्याकरणादिजन्यस्तथा शक्तिनिर्णायकस्य शाब्दबोधाङ्गत्वं प्रागवधारितम् , तस्य च शाब्दबोधात्प्रागुक्तरीत्या संभव इति वाच्यशक्तेः शाब्दबोधाङ्गत्वं दुर्घटमेवेत्यत आह—**वस्तुतस्त्विति** । तद्ग्रहः—वाक्यार्थे विशिष्टे शक्तिग्रहः । अयं भावः—शक्तिविशिष्टनिश्चयस्य शाब्दबोधहेतुत्वमिति पूर्वं ज्ञाता या शक्तिस्तस्याः स्वाश्रयशब्दविषयकत्व—स्वाश्रयशब्दविषयकोद्बुद्धसंस्कारसामानाधिकरण्योभयसंबन्धेन । इदानीं तद्वाच्यताज्ञानेऽपि सत्त्वान्न वृत्तिज्ञानस्य शाब्दबोधहेतुतायां व्यभिचार इति । नन्वेवं पदस्फोटपक्षो निरालम्बन एव स्यादत आह—**आवापोद्वापाभ्यामिति** । संग्रहत्यागाभ्यामित्यर्थः । तद्ग्रहः—प्रत्येकपदे प्रत्येकपदार्थशक्तिग्रहः । एवं च प्रत्येकपदशक्तिज्ञानजन्यप्रत्यकपदार्थोपस्थित्यनन्तरं तत्सहकृताकाङ्क्षाज्ञानादिना शाब्दबोधस्तदा पदस्फोट इति व्यवहारो, यदा तु तन्निरपेक्षवाक्यज्ञानमात्रेण वाक्यार्थबोधस्तदा वाक्यस्फोट इति व्यवहारः । यत्त्वर्थाध्याहारवादिन आहुः—शब्दज्ञानं न शाब्दबोधहेतुरर्थोपस्थितिमात्रेण यत्र शाब्दबोधस्तत्र व्यभिचारात् । अत एव—पश्यतः श्वेतमारूपं हेषां शब्दं च शृण्वतः । खुरविक्षेपशब्दं च श्वेतोऽश्वो धावतीति धीः ॥ इति वृद्धाः । एवं च पदस्फोटविचार आपातरमणीय एवेति । तत्तुच्छम् शब्दं विना जायमानज्ञानस्य शाब्दबोधपदव्यवहार्यत्वे चाक्षुषज्ञानस्यापि शाब्दत्वापत्तेः । तत्र पश्यामीत्येवानुव्यवसायो, न तु शाब्दयामीतितस्य न शाब्दत्वमिति चेत्तदा प्रकृतेऽपि यत्र मनसा पदार्थोपस्थितिमात्रं तत्र जानामी-

त्येवानुव्यवसायात् न शाब्दबोध इति । उक्तस्थले श्वेतोऽश्वो धावतीति बुद्धिरत्वनुमितिरूपैवेति बोध्यम् ॥ ६५ ॥

सर्वत्रै व हि वाक्यार्थो० ॥ ६६ ॥

इयमेव—स्फोटस्वीकाररूपैव । अयं भावः—तन्मते स्वबोध्यसंबन्धो लक्षणा । देविकायां नद्यां घोषः ' इत्यादिवाक्यं यत्र प्रयुज्यते तत्र देविकाभिन्ननदीतीरवृत्तिर्घोष इति बोधो भवति । तस्य प्रत्येकपदशक्त्या शक्यसंबन्धरूपलक्षणया वोपपत्तिर्न संभवति । शब्दस्याऽऽशुविनाशितया पदज्ञानस्यैवासंभवादिति स्फोटस्य स्वीकार आवश्यक इति । ये—भाट्टाः । अस्य विदुरित्यत्रान्वयः । **लक्षणाया इति** । वाक्यार्थे वाक्यस्य समुदायात्मकस्य शक्त्यभावात्तद्विषयकबोधोपपत्तये या लक्षणाऽङ्गीक्रियते तस्या इत्यर्थः । पक्षद्वयं—पदवाक्यभेदेन स्फोटद्वयम् । **उत्पत्तेरिति** । वर्णानामनित्यत्ववादिमतेनेदम् । तन्मते योग्यविभुविशेषगुणानां यौगपद्याभावात्स्वोत्तरोत्पन्नगुणनाश्यत्वाच्चैकदावस्थानासंभवः । वर्णनित्यतावादिमताभिप्रायेणाऽऽह—**अभिव्यक्तेरिति** । तन्मते वर्णा नित्याः, तेषामभिव्यक्तिस्त्वनित्या । सा च वर्णोत्पादकत्वेन पराभिमता या कण्ठाद्यवच्छिन्नवायुसंयोगादिघटितसामग्री तया ज्ञायते । एवं चाभिव्यक्तेरपि योग्यविभुविशेषगुणात्मकतयोक्तरीत्याऽसंभव इति । **अभिव्यक्तवर्णसमूहरूपपदज्ञानासंभवादिति** । वर्णा नित्या एवाभिव्यक्तिस्तु तेषामनित्येति पक्षावलम्बेन समाधत्ते—**उत्तरवर्णेत्यादिना** । एतन्मते वर्णानां नित्यत्वात्सर्वेषामेव वर्णानां स्वाधिकरणक्षणोत्तरक्षणवृत्तितानुपूर्व्यसंभव इत्यभिव्यक्तिगतपौर्वापर्यमादायाभिव्यङ्ग्येष्वारोपितः क्रमः । अत एवाभिव्यक्ता वर्णा बोधका इति व्यवहारः । उपस्थितीनामव्यवहितोत्तरत्वं चाव्यवहिते सत्युत्तरत्वम् । अव्यवहितत्वं च स्वध्वंसानधिकरणक्षणवृत्तित्वम् । उत्तरत्वं च—स्वाधिकरणक्षणध्वंसाधिकरणसमयोत्पत्तिमत्त्वम् । एवं चोत्तरवर्णे पूर्ववर्णवैशिष्ट्यमुक्त्वा व्यवहितोत्तरत्वसंबन्धेन स्वाभिव्यक्तिविशिष्टाभिव्यक्तिविषयत्वसंबन्धेन । एवं प्रथमवर्णविशिष्टद्वितीयवर्णवैशिष्ट्यं तृतीयवर्ण इति क्रमेण चरमवर्णप्रत्यक्षम् । तदनन्तरं चरमवर्णांशे लौकिकमन्यवर्णांशे त्वलौकिकमिति पदवाक्यप्रत्यक्षस्य संभव इति ॥ ६६ ॥ इति सखण्डपदवाक्यस्फोटविवरणम् ।

पदे न वर्णा विद्यन्ते......। ६७ ॥

अवसरस्य संगतिं सूचयन्नाह—**इदानीमिति** । अखण्डत्वं च अवयवाघटि-

तत्त्वम् । वर्णानामप्यवयवशून्यत्वं साधयितुमिष्टमित्याशयेन व्याजपदम् । ननु घटपटादिपदप्रत्यक्षे घटपटादीनामनुभूयमानत्वात्कथं वर्णानामसत्त्वं प्रतिपाद्यसीत्यतस्तदुपपादयति—**अयं भाव इत्यादिना** । **अनन्तेति** । अनेकेत्यर्थः । ननु करोति गच्छतीत्यादौ ककारो गकार इति विलक्षणप्रतीतिसत्त्वात्कथमसत्त्वमत आह—**तत्त्वर्णत्वामिति** । **अवच्छेदकमिति** । एतेन वैजात्ये प्रमाणं दर्शितम् । एवंप्रकारेण सिद्धं यद्वैजात्यं तस्य समवायसंबन्धेन स्फोटे आरोपात्कक रादिविषयकविलक्षणप्रतीतिनिर्वाहः । न चोत्पन्नः क इत्यादिप्रतीतिविरोधानिरासत्वम् । सोऽयं ककार इत्यभेदावगाहिप्रत्यभिज्ञया विरोधेन तस्याः प्रतीतेर्भ्रमत्वात् । अभिव्यञ्जकगतोत्पत्तिविनाशाद्यारोपेण तस्या उपपत्तेश्च । एवं च व्यञ्जकधर्माः स्फोटे आरोप्यन्ते । व्यञ्जकनिष्ठं वैजात्यमेव परम्परासंबन्धेन कत्वादिकमिति सिद्धम् । **भामत्यामिति** । भामतीनामके वाचस्पतिनिर्मिते ग्रन्थे । **वायुसंयोग इति** । कण्ठताल्वाद्यभिघातजनकवायुसंयोग इत्यर्थः । अनारोपितधर्मस्य वाचकतावच्छेदकत्वकल्पनापेक्षया आरोपितस्य वाचकतावच्छेदकत्वगौरवमिति भावः । वाचकविषयं श्रावणप्रत्यक्षमनुभवसिद्धम् । यदि वायुसंयोग एव वाचकः स्यात्तदा तस्यातीन्द्रियतया प्रत्यक्षं न स्यात् । स्फोटस्तु पदं वाक्यं वा शृणोमीत्यनुभवात् प्रत्यक्ष एव । भवन्मते कथं कत्वादिप्रत्यक्षं तस्याभिव्यञ्जकधर्मत्वस्य भवतोक्तत्वादिति वाच्यं । सुरभि चन्दनमितिप्रत्यक्षे चक्षुरयोग्यस्यापि सौरभस्य भानवच्छ्रवणायोग्यस्याभिव्यञ्जकधर्मस्य श्रावणप्रत्यक्षे आरोपात्मके भानसंभवात्तस्य प्रतीतेः । समवायसंबन्धावच्छिन्नकत्वादिप्रकारकत्वे भ्रमत्वम् । यदि स्वाश्रयाभिव्यञ्ज्यत्वरूपपरम्परासंबन्धस्य ' लोहितः स्फटिकः ' इति प्रतीतेर्जपाकुसुमसंनिधाने जायमानाया अनुभवसिद्धत्वेन प्रकारतावच्छेदकत्वमस्तीत्याशयेन दूषयति—**प्रत्यक्षमित्यादिना** । तथा च—वर्णानामनङ्गीकारे वायुसंयोगानां वाचकत्वे च । **अखण्ड इति** । अस्मिन् पक्षे वर्णानामनावश्यकत्वेनाखण्ड इत्यर्थः । स तेन प्रत्यभिज्ञानरूपया नित्यत्वेन सिद्धस्यातिरिक्तस्य स्फोटस्य वाचकत्वव्यवस्थापनेनानन्यभवादिति । एतेन स्फोट एव प्रमाणाभावेन तस्य वाचकत्वं दूरत एव निरस्तमिति ध्वनितम् । तेषां ककारादिवर्णानाम् । कत्वादिप्रकारकप्रतीतिविषयकादिस्फोटस्यैवास्माभिर्वाचकत्वस्वीकारादिति भावः । कैयटसंमतं स्फोटसाधनप्रकारं दूषयितुं तन्मतमुपन्यस्यति—**यत्त्विति** । वर्णानां प्रत्येकं वाचकत्वं समुदायमप्राप्तानां

वेति विकल्प्याऽऽद्यं दूषयति—**वर्णानामिति**। द्वितीये आह—**समुदायस्येति**। क्रमवत्त्वेऽपि स्थिरत्वे ज्ञानसंभवः स्यादत आह—**आशुतरोत्पन्नानामिति**। आसुतरोत्पन्नानाम्—तृतीयक्षणवृत्तिध्वंसप्रतियोगिनां तादृशानामप्येकक्षणोत्पन्नानां मुरजमृदङ्गवीणादिशब्दानां प्रत्यक्षमित्यनुभवसिद्धत्वादुक्तं क्रमवतामिति। **ज्ञानम संभाव्यमेवेति**। विषयतासंबन्धेन प्रत्यक्षं प्रति तादात्म्यसंबन्धेन विषयस्य कारणतया विषयस्यैवासत्त्वे प्रत्यक्षासंभवादिति भावः। परोक्तं दूषयति—**पूर्वपूर्वेति**। ननु प्रत्यक्षे विषयस्य कार्यसद्भावेन कारणत्वम्। किंच विशिष्टबुद्धिं प्रति विशेषणज्ञानस्य कारणत्वम्। तथा च वर्णोत्पत्तिक्षणे वर्णनाशकत्वादिप्रकारकप्रत्यक्षासंभवः। द्वितीयक्षणे च कत्वादिनिर्विकल्पकस्य संभवः, तृतीयक्षणे वर्णस्यैव नाश इति कथं कत्वादिप्रकारकप्रत्यक्षजन्यसंस्कारसंभव इतिचेत्? न—तृतीयक्षणे वर्णनाशकता च स्वोत्तरोत्पन्नविशेषगुणस्य प्रतियोगितासंबन्धेन योग्यविभुविशेषगुणत्वेनैवेंरीत्या कार्यकारणभावेन वाच्या। सा न संभवति। चरमशब्दनाशासंभवात्। किंतु नाशतावच्छेदकं वैजात्यं चरमशब्दवृत्तिं कल्पयित्वैव कार्यकारणभावो वाच्यः। एवं च तस्य वैजात्यस्य चरमशब्दवृत्तित्वमपि कल्प्यते, तावतैवैतस्य निर्विकल्पकोत्तरोत्पन्नसविकल्पकविषयत्वसंभवस्तस्यापि शब्दस्य चतुर्थक्षणे नाश इति तादृशप्रत्यक्षान्न संस्कारानुपपत्तिरित्याशयात्। **अतिप्रसङ्ग इति**। सरःशब्दविघटकवर्णविषयकसंस्काराद् रस इति पदोच्चारणम, तदापि सरः रसः प्रतीत्यापत्तिरिति रीत्याऽतिप्रसङ्ग इत्यर्थः। **नादाभिव्यङ्ग्य इति**। नादो ध्वनिस्तदारोपविषयवर्णाभिव्यङ्ग्य इत्यर्थः। **उपपादितत्वादिति**। प्रथमवर्णविशिष्टद्वितीयवर्णवत्त्वं तृतीयवर्ग इति रीत्या चरमवर्णविषयकं लौकिकप्रत्यक्षं वर्णविषयकमलौकिकं पदज्ञानमित्यस्योपपादितत्वादित्यर्थः। यदुक्तं प्राक् नादधर्मारोपविषयवर्णाभिव्यङ्ग्य इति, तद्विकल्प्य दूषयति—**वर्णानामिति**। **विकल्पग्रासादिति**। एवं च प्रत्येकं व्यञ्जकत्वे प्रथमवर्णमात्रश्रवणेऽप्यभिव्यक्त्यापत्तिः। समुदितानां व्यञ्जकत्वं तु न संभवति, समुदायस्यैवासंभवादिति भावः। अपि नु पूर्वपूर्ववर्णसत्त्वक्षणे यदि द्वितीयादिवर्णोत्पत्तिः स्यात्तदा स्यादपि यथाकथंचित् दवाक्यप्रत्यक्षम्, तत्तु न संभवति—पूर्ववर्णनाशानन्तरमेव द्वितीयवर्णोत्पत्तेः। तदुक्तं 'परः संनिकर्षः संहिता' इतिसूत्रभाष्ये—यावद्गकारे वाग्वर्तते न तावदौकारे, 'येनैव यत्नेनैको वर्ण उच्चार्यते तेनैव विच्छिन्ने तस्मिन् वर्णे उपसंहृत्य

तं यत्नमन्ययत्नमुपादाय द्वितीयः प्रवर्तते ' इति । किंच वर्णानामुच्चरितप्रध्वंसित्वादपि प्रत्यक्षासंभवः । किंच पूर्वोक्तवर्णयोरव्यवधानमपि दुर्घटम् । संबन्धिनो-राशुविनाशितयाऽव्यवधानरूपसंबन्धासंभवात् । अत एव तत्तत्कालघटिता या पूर्वोत्तरवर्णघटितानुपूर्वी तस्या असंभवेन शक्ततावच्छेदकत्वासंभव एवेति स्फोट-स्तावदखण्डः स्वीकार्यः । तत्तद्वर्णोपाध्यवच्छिन्ने तस्मिन्नारोपित एव पौर्वापर्यादि-सद्भावः । नित्ये ब्रह्मणि अन्तःकरणोपाधिभेदेन तत्तज्जीवव्यवहारवद्–व्यव-हारः, तस्य च स्फोटस्य चरमवर्णाभिव्यक्तस्यैवार्थबोधकत्वं कल्प्यते । कार्यका-रणभावस्य फलबलकल्प्यत्वादिति कैयटाशयमाहुः । ननु वायुसंयोगस्य प्रत्येकं व्यञ्जकत्वे गौरित्यत्र गकाराभिव्यक्तिकाले वत्वेन टत्वेन कुतो नाभिव्यञ्जकत्वेत्यत आह–परं तु केचिदिति । तथा च वैलक्षण्यविशिष्टानामेव कण्ठात्स्फोटाभि-व्यञ्जकत्वं कल्प्यते । अत एव–विलक्षणवायुसंयोगस्य तत्तद्रूपेण स्फोटाभिव्य-ञ्जकत्वादेव । तदतिरेकास्वीकार इति । तत्तद्वायुसंयोगादेव कत्वादिप्रका-रकककारादिविशेष्यकप्रतीतिनिर्वाहात्स्फोटातिरिक्तककारादिकल्पनाभावोऽप्युपपद्यत इत्यर्थः । नन्वेवं सरो रस इत्यत्रोक्तातिप्रसङ्गादवस्थैव । सत्वेन रत्वेन चा-भिव्यञ्जकवायुसंयोगानां तौल्यात् । अतस्तद्दोषं परिहर्तुं व्यवस्थामाह–एवं चेति । उपाधिभेदात् घकारटकारयोर्भेदः स्फोटभेदकल्पकस्तत्र घत्वं टकारे यथा कल्प्यते तथा सर इत्यत्रापि तथैव कल्पनया सत्वं रेफे ततः सावशिष्टरत्वं विसर्गे गृह्यते, रस इत्यत्र तु वैपरीत्येन ग्रह इति तदर्थविशेषप्रतिपत्त्युपपत्तिरिति भावः । ननु भवन्मते स्फोट एव चेद् घकारटकाररूपः, तदाऽऽद्यध्वंसाधिकरणक्षणानुत्पत्तिकत्वे सति घकाराधिकरणक्षणध्वंसाधिकरणक्षणोत्पत्तिकत्वरूपं घकाराव्यवहितोत्तरत्वं टकारे न संभवतीति कथं घवत्त्वं णकार इत्यत आह–परमिति । एवं च–– ज्ञानघटितस्याव्यवहितोत्तरत्वस्य निर्वचने च अभिव्यक्तिनिरूपिताव्यवहितोत्तरत्व-मेवानुपूर्वीसंपादकं तथाद्यैव शक्ततावच्छेदकस्य तत्तत्स्थले कल्पना कार्या । एतेन–उक्तप्रकारसिद्धानुपूर्व्यवच्छिन्नस्फोटस्य वाचकत्वव्यवस्थापनेन । स्फोट इति । वाचकत्वाभिमतोऽखण्डः पदार्थ इत्यर्थः । बोधप्रसङ्गादिति । प्राग्गृ-हीतशक्तिकस्यैव स्फोटस्य तेनाभिव्यक्त्याऽर्थप्रतीतिप्रसङ्गादिति भावः । सामग्री-विशेषस्य कार्यविशेषनियामकत्वकल्पनेनोक्तातिप्रसङ्गवारणं भविष्यतीत्याशयिका-

मुक्तिं निरस्यति—**न चेत्यादिना** । **अवश्यंभावेनेति** । तत्तत्पर्यायाभिव्यक्त-गतशक्तिग्रहत्वेन कारणत्वावश्यंभावे तत्तत्पर्यायगतशक्तिग्रहत्वेनैव कारणत्वमुचितमिति भावः । **लाघवाच्चेति** । चो हेतौ । **न द्वितीय इति** । पर्यायस्थले स्फोटस्य नानात्वमिति पक्षो नेत्यर्थः । पदार्थानां तेषाम् । प्रतिपर्यायभिन्नानां स्फोटानाम् । **शक्तिं चेति** । स्फोटभेदेन भिन्नानन्तशक्तिकल्पनामित्यर्थः । **लघुत्वादिति** । एवंच वर्णातिरिक्तस्फोटकल्पना मुधैवेति भावः । **पर्यायेष्विति** । एकधर्मावच्छिन्नवाचकनानापदेष्वित्यर्थः । शक्ततावच्छेदकभेदेन शक्तिभेदस्य न्याय्यत्वादिति भावः । **अनेकेति** । पर्यायभेदभिन्नेत्यर्थः । **सर्वसिद्धत्वादिति** । वरममपूर्वकल्पनाप्रयुक्तं दूषणम् । अयमत्राभिसंधिः—यदि वर्णाः स्फोटस्याभिव्यञ्जका इति पक्ष एवास्मन्मते स्यात्तदा पर्यायभेदेन स्फोटस्य भेदो वा पर्यायभेदेऽप्येकत्वं वेति विकल्पेन भवदुक्तदूषणावसरः स्यात्, तथा तु न मम मतं, किंतु स्फोटानतिरिक्तावर्णा इत्येव प्रागुक्तम् । एवंच स्फोटस्यैकत्वात्तत्र पृथक्-शक्तिकल्पना नेति न भवदुक्तगौरवसंभावना । न चैवं घटपद एव गृहीतशक्तिक-स्येत्यादिनोक्ताद्यपक्षदूषणमेवेति वाच्यम् । स्फोटभेदेऽपि तदभिन्नत्वे कल्पितानां घटकलशादिशब्दानां तत्तद्वर्णभेदेन कल्पितभेदवान् घटादं घटे शक्तमित्याद्याकारकग्रहे विशेष्यत्वेन तादृशज्ञानानां भेदादव्यवहितोत्तरत्वसंबन्धेन तज्ज्ञानवैशिष्ट्यस्य कार्यतावच्छेदकशरीरे निवेशेनोक्तदोषपरिहारात् । तत्तत्कारणवैशिष्ट्यनिवेशप्रयुक्तगौरवं तु स्फोटानङ्गीकर्तृमतेऽपीति न तदुद्भावनार्हमिति । ननु स्फोटस्य नित्यत्वेन तदभिन्नवर्णानामपि नित्यत्वादुत्पत्तिध्वंसघटिताव्यवहितोत्तरत्वघटितानुपूर्व्यापि वक्तुमशक्यमिति शक्ततावच्छेदकालाभेऽत आह—**तदवच्छेदकेति** । **प्रागुपपादनादिति** । अभिव्यक्तिघटिताया आनुपूर्व्याः प्रागुपपादनादित्यर्थः । ननु यदि वर्णा नित्यास्तदा भवदुक्तरीत्याऽभिव्यक्तिघटिताया आनुपूर्व्याः प्रागुपपादनादित्यर्थः । ननु यदि वर्णा नित्यास्तदा भवदुक्तरीत्याऽभिव्यक्तिघटितानां तेषामानुपूर्वी कल्पनीया । तस्याश्च शक्ततावच्छेदकत्वं कल्प्यम् । तद्विशिष्टानामेव तेषां वर्णानां पदत्वं वाक्यत्वं चाऽस्तु, नित्यत्वादेव तेषां प्रत्यक्षमपि भविष्यति । तत एव च तदेवेदं पदं तदेवेदं वाक्यमिति प्रत्यभिज्ञाऽप्युपपत्स्यते, कृतं-स्फोटेनेत्यत आह—**दिगिति** । तदर्थस्तु—यदि स्वतन्त्रा नित्या वर्णाः स्युः, तदा भवदुक्तान्यथासिद्धिसंभावनाया अवसरः स्यात् । तथा तु नास्ति, किंतु कत्वादिना

ज्ञायमानस्फोट एव ककार इत्यभ्युपेयते । अत एव नानावर्णकल्पनाप्रयुक्तगौरव-स्यापि न मम मतेऽवकाश इति । दीक्षितेनोक्तमनुवदति—शब्दकौस्तुभे त्विति । वर्णमालायां—वर्णपरम्परायाम् । इति प्रतीतेरिति । आधाराधेयभावावगाहिप्र-तीतेरित्यर्थः । अतिरिक्तस्फोटानङ्गीकारे वर्णपरम्परारूपमेव पदमित्यभेदे आधा-राधेयभावावगाहिप्रतीत्यनुपपत्तिः स्यात् । अन्यथा प्रतीतेर्विभिन्नपदार्थसाधकत्वे 'कपाले घटः' इति प्रतीत्या कपालातिरिक्तस्य घटस्य सिद्धिर्भवति । यदि प्रतीतिः साधिका न भवेत्तदा कपालघटयोर्भेदो न सिध्येत्, कपालसंयोगरूप-कारणस्य कपालसमूहसाधकत्वस्यैवोक्तिरिति भावः । अत्र गुनाग्रुचिर्ध्वनिता । तथाहि—वर्णपरम्परातिरिक्तस्फोटानङ्गीकारेऽप्युक्तप्रतीत्युपपत्तिर्भवत्येव । आनुपू-र्व्यवच्छिन्नानां वर्णानां मालारूपत्वं, आनुपूर्वीरूपपदस्य च तद्भिन्नत्वमित्युक्त-स्याऽऽधाराधेयभावस्योपपादयितुं शक्यत्वात्, प्रतीतेर्भेदसाधकत्वे कपालघटयो-र्भेदो न सिध्येदिति त्ववशिष्यते । तदपि नाकपालस्याल्पपरिमाणवदवयवजन्यत्वं, घटस्य तु तदधिकपरिमाणवदवयवजन्यत्वमिति कारणवैजात्याद्विलक्षण्येन तयोर्भे-दस्य सिद्धेरिति । ननु कोऽसौ नित्यः स्फोटः, यमाश्रित्योक्तव्यवस्थामुपपादय-तीति चेत् ? प्रणवरूपं ब्रह्मतत्त्वमेव स्फोट इति गृहाण । तथाहि—ईश्वरस्य सिसृक्षात्मिका या माया चिद्रूपापरपर्याया व्यक्तरूपा तत्प्रभवः शब्दब्रह्मापरनामा चेतनेनाधिष्ठितः अनभिव्यक्तवर्णविशेषो खपरादिशब्दे व्यवह्रियमाणे नाद एव स्फोट इत्यभिधीयते । स च यद्यपि सर्वगतः तथापि पुरुषस्य ज्ञातार्थविवक्षया जायमानप्रयत्नविशेषेण मूलाधारस्थपवनेनाभिव्यक्तः परा इति व्यवह्रियते । ना-भिपर्यन्तमागच्छता तेन पवनेनाभिव्यक्तः पश्यन्तीत्युच्यते । हृदयपर्यन्तमागच्छता तेनैवाभिव्यक्तः तत्तदर्थाकारज्ञानाविषयः परपुरुषश्रोत्रेन्द्रियग्राह्यत्वात्सूक्ष्म इत्यनेन शब्देनाभिधीयमानो मध्यमा वागिति कथ्यते स एव च वक्त्रा कर्णपिधाने सूक्ष्म-तरवाय्वभिघातेनोपांशुशब्दप्रयोगे च श्रूयते । तत आस्यपर्यन्तमागच्छता तेन पव-नेन कण्ठदेशं गत्वा मूर्धानमाहत्य परावृत्य तत्तत्स्थानेष्वभिव्यक्तः परपुरुषेणापि ग्राह्यो वैखरी वागित्यभिधीयते । तत्र भाष्योक्ता श्रुतिः प्रमाणम्—चत्वारि वाक् परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः । गुहा त्रीणि निहिता नेङ्ग-यन्ति तुरीयं वाचो मनुष्या वदन्ति ॥ इति । तथा पुराणेऽपि—बिन्दोस्तस्माद्-भिद्यमाना द्रवो व्यक्तात्मकोऽभवत् । स एव श्रुतिसंपन्नैः शब्दब्रह्मेति गीयते ॥

इति । शिक्षायामप्युक्तं-आत्मा बुद्धया समेत्यार्थान्मनो युङ्क्ते विवक्षया । मनः कायाग्निमाहन्ति स प्रेरयति मारुतम् । सोदीर्णो मूर्ध्न्यभिहतो वक्त्रमापद्य मारुतः। वर्णाञ्जनयते... । इति । एवं च हृदयावच्छिन्नमध्यमायां यो नादांश आन्तरः प्रणवरूपः स एव वाचकः । ओंकार एव सर्वा वागेषा स्पर्शोष्मभिर्व्यज्यमाना नानारूपा भवति, इति श्रुतेः । सर्वप्राणिहृदयदेशस्थत्वाच्च ब्रह्मपदव्यवहार्योऽपीति ध्येयम् ॥ ६७ ॥

**पञ्चकोशादिवत्तस्मात्...**॥ ६८ ॥

अवतरणस्थं प्रतीकम्-**एवमिति** । अखण्डस्फोटस्यैव वाचकत्वे इत्यर्थः **शास्त्रस्य**-व्याकरणशास्त्रस्य । प्रकृतिप्रत्ययाभ्यां व्युत्पादनस्य तत्तदर्थप्रतिपादनतात्पर्यकत्वादिति भावः । **तस्मात्** । अखण्डस्फोटस्यैव वाचकत्वात् । उपेयप्रतिपत्त्यर्था इति लिङ्गवचनविपरिणामेन समाश्रितेत्यनेनाप्यन्वेतीत्याशयेनाह-**उपेयेति** । पञ्चकोशादिवदितिदृष्टान्तं स्फुटयति-अयं भाव इति । अत्र क्वचिद्भृगुवल्लीप्रघट्टकमप्युदाहृतम् । तत्र हि भृगुर्वै वारुणिर्वरुणं ब्रह्म पृष्टवान् । स उवाचान्नं ब्रह्मेति । तथोत्पत्त्यादिकं बुद्ध्वा पुनस्तेन पृष्टः प्राणो ब्रह्मेति । तस्यापि तथात्वं ज्ञात्वा पुनः पृष्टो मनो ब्रह्मेति । तस्याप्यशितमन्नं त्रेधा भवति । यत्स्थूलं तस्यापि वृद्ध्युपहितत्वं ज्ञात्वा पुनः पृष्टे आनन्दो ब्रह्मेति व्यजानात् ' ततो वस्तुतत्त्वं प्राप्य स्थित इति । इयं भृगुवल्ली न पञ्चकोशोदाहरणमत उदाहरणान्तरमाह-**यथा वेति** । उपदिष्टपदं चाऽऽनन्दकोशस्यापि वैषयिकतयाऽनित्यत्वेनाब्रह्मत्वान्मुख्यब्रह्मप्रतिपादनाय ब्रह्म पुच्छं प्रतिष्ठा ' इत्युक्तम् । अत्र ब्रह्मपदं मुख्यब्रह्मपरं, पुच्छशब्दोपादानात् । अयं हि पुच्छशब्दः आधारपरो न तु लाङ्गूलपरस्तस्य बाधात् । एवं च यथा पञ्च कोशाः सर्वाधारब्रह्मप्रतिपादनायोपादेयतयोपात्ताः नतु तेषां वास्तवब्रह्मत्वं, तथेहाप्यवास्तवप्रकृतिप्रत्यययोर्वाचकत्वव्युत्पादनं वास्तवस्फोटनिष्ठवाचकत्वबा( बो )धनायेति समुदायार्थः । **श्रवणादित इति** । आदिनामनननिदिध्यासनयोः परिग्रहः । **न शास्त्रं तदुपाय इति** । यत्र श्रवणादिना तज्ज्ञानं, तत्र व्यभिचारादिति भावः । **कल्प्यत इति** । एतेन व्याकरणाध्ययनस्य स्फोटज्ञानत्वमात्रं न कार्यतावच्छेदकम् । किंतु तज्ज्ञाननिष्ठवैजात्यमेव । तदवच्छिन्नं च नोपायान्तरादिति न व्यभिचार इति भावः । जन्यतावच्छेदकवैजात्यकल्पनायां दृष्टान्तमाह-**मन्त्रजन्यामिव** । मन्त्र-

जन्यतावच्छेदकमिव। एवं वेदान्तजन्येत्यस्याप्यर्थः। तथा च लघुनोपायेन शब्दानां प्रतिपत्तौ शास्त्रस्योपयोग इति फलितम्। नन्वेवमपि शास्त्रजन्यस्य स्फोटज्ञानस्य पुरुषार्थासाधनतया तत्संपादनस्य वैयर्थ्यमेवेत्यत आह—तस्य चेति। यज्ञादीनामिति। एतेन यज्ञादीनां यथा—'तं वेदानुवचनेन ब्राह्मणा विविदिषन्ति, यज्ञेन दानेन तपसाऽनाशकेन' इति श्रुत्या परम्परया मोक्षसाधनत्वं तथा शास्त्रजन्यस्यास्य ज्ञानस्यापि परम्परया मोक्षसाधनत्वमिति ध्वनितम्। तत्र हरिसंमतिमाह—तदुक्तमिति। तद्द्वारमिति। तत्—व्याकरणम्। द्वारं—मोक्षस्य। शारीररोगाणामायुर्वेद इव व्याकरणमपि वाङ्मलानामपनुत्। व्याकरणतो हि प्रत्यवायहेतुभूतानपशब्दान्न प्रयुङ्क्ते। ज्ञानं हि तस्य शरणं भवति। पवित्रमिति। तथा चाप्रमत्तगीतश्लोकः—आपः पवित्रं परमं पृथिव्यामपां पवित्रं परमं च मन्त्राः। तेषां च सामर्ग्यजुषां पवित्रं महर्षयो व्याकरणानि प्राहुः॥ इति। अधिविद्यमिति। विभक्त्यर्थेऽव्ययीभावः। सर्वो हि विद्वान् स्वस्यां विद्यायां कारणमनुगच्छति। इदमाद्यमित्यादि। इदं व्याकरणं नाम शास्त्रं मोक्षसिद्धिसोपानपर्वणां मध्ये प्रथमं पादस्थापनस्थलमित्यर्थः। इयमिति। इयं व्याकरणशास्त्ररूपा। मोक्षमाणानाम्—मुमुक्षूणाम्। अवक्रा राजपद्धतिः—ऋजुराजमार्गः। अत्र—स्फोटे व्याकरणज्ञेये राजमार्गे। अतीतविपर्यासः—अतीतः—अपास्तः—विपर्यासो भ्रमो यस्य सः। भ्रमशून्य इति यावत्। केवलां पराख्यां वाचम्-अनुपश्यति—योगजधर्मसहायेन जानातीत्यर्थः। एवं च योगित्वसिद्धौ तत्त्वज्ञाने न कोऽपि प्रतिबन्ध इति भावः। एतदेव भागवते द्वादशस्कन्धे उक्तम्—यदुपासनया ब्रह्मयोगिनो मलमात्मनः। द्रव्यक्रियाकारकाख्यो धूत्वा यान्त्यपुनर्भवम्॥ इति। एतन्निरूपणानन्तरमुक्तमिति यच्छब्दवाच्योऽत्र नाद एव। अलीकत्वासिद्धेः। पञ्चकोशादिवत् प्रकृतिप्रत्ययविभागस्यापि मायिकत्वे। नास्तच्छशशृङ्गतुल्यत्वमिति वक्ष्यमाणत्वादित्यर्थः। न च मायिकत्वेनावास्तवत्वमेवेति वाच्यम्-अवास्तवेनापि दर्पणस्य सूर्यप्रतिबिम्बेनान्धकारस्थघटादिप्रकाशकत्वदर्शनात्, पद्मरागमणिप्रभाप्रतिबिम्बेन वास्तवमणिप्राप्तिवच्च मायिका न तेन परमात्मप्रकाशस्य विरोधः, वान्। आदिना—पञ्चकोशादिवदित्यत्रोपात्तेनाऽऽदिना॥ ६८॥

ननूत्पन्नः को विनष्टः क इत्यादिप्रतीत्या कादिवर्णानामनित्यत्वं परसंमतम्। स्फोटोऽपि सादृश्यवर्णाभिन्न इति भवदभिमतान्यथाप्रसत्यास्याप्यनित्यत्वमेव स्या-

दिति शंकानिराकरणपरतया मूलमवतारयति- नन्वित्यादिना । वर्णजातीनां वर्णगतकत्वादिजातीनाम् । न स्यादिति । यदि ककारो नित्यस्फोटाभिन्नस्तदा तादृशप्रतीतिर्न स्यादित्यर्थः । एवं च तादृशप्रतीतेर्निर्विचिकित्सत्वेनानित्यवर्णाभिन्नस्फोटस्याप्यनित्यत्वमेवोचितमिति तात्पर्यार्थः । ननु सा प्रतीतिर्वायुसंयोगनिष्ठजातिप्रकारिका स्फोटविशेष्यका भ्रमरूपैवेत्यत आह—वायुसंयोगेति । भ्रमत्वापत्तिरिति । तस्यापि वायुसंयोगनिष्ठकत्वादिप्रकारकत्वादिति शेषः । इदमभिधानं तस्याः प्रतीतेः समवायसंबन्धावच्छिन्नवायुसंयोगिनिष्ठजातिप्रकारकत्वमिति मतेन । कल्पितानामिति । समवायेन तादृशजातीनां स्फोटावृत्तित्वेऽपि स्वाभिव्यञ्जकसमवायस्य तत्र सत्वेन तस्य स्वाश्रयाभिव्यङ्ग्यत्वसंबन्धित्वेनोपाधित्वं संभवतीति । एवं चैतादृशसंबन्धस्य वायुसंयोगसत्वकाल एव सत्वमित्युत्पत्त्यादिप्रतीतीनां नानुपपत्तिः । कत्वादेर्वायुसंयोगगतधर्मस्य श्रोत्रग्राह्यत्वमपि स्वसमवेताभिव्यञ्जकसमवेतत्वसंबन्धेन बोध्यम् । कल्पितानागुणानित्वमित्यत्र परसंमतं दृष्टान्तमाह—स्वरेति । वर्णेभ्योऽन्यस्येति । तन्मते वर्णा नित्या एकत्ववन्तश्च । उदात्तत्वानुदात्तत्वे च विरुद्धधर्मौ तावेकत्र संभवत इति । व्यञ्जकध्वनिधर्मवत्ताभ्यां कल्पिताभ्यां वर्णस्याप्युदात्तत्वादिव्यवहार इति हि तन्मतम् । तदेतदाह—उदात्तत्वादिति । तच्च—हीत्यव्ययं च । त्यागायोगादिति । तत्प्रतीत्यविषयत्वकथनायोगादित्यर्थः । बाधिका—व्यक्त्यभेदप्रतीतेर्भ्रमत्वसाधिका । प्रागभावे सतीति । स्वाधिकरणसमयध्वंसादिकरणत्वसंबन्धावच्छिन्नप्रतियोगिताकस्वाभाववत्समयवृत्तित्वरूपाया इत्यर्थः । अत एव—अनुभवविरुद्धत्वादेव । प्रत्ययो—ज्ञानम् । व्यवहारः—परंप्रति शब्देन बोधनम् । ननूच्चरितत्वमपि प्रयत्नविशेषजन्यत्वमेवेति कथं नित्यत्वमत आह—उच्चरितत्वं च । ननु वर्णानित्यत्ववादिनामुत्पत्त्यादिसत्त्वमिष्टमेवेति, नतु भवद्विरोधी अत आह-किंचेति । सा—उत्पन्नककारादिप्रतीतिः । अतिरिक्तेति । वर्णानित्यत्वसाधिकेत्यर्थो, नतु स्फोटाभावात् परम्परया स्वाश्रयध्वनिव्यङ्ग्यत्वसंबन्धेन । ननु तादृशप्रतीतेर्नियमेन परम्परासंबन्धविषयकत्वे गौरवमत आह—परं त्वियति । वर्णपार्थक्येन ध्वनेरननुभवान्न ध्वनिसत्त्वमित्याशङ्कां निराचष्टे—नचेति । वर्णानुत्पत्तेः—वर्णानभिव्यक्तेः । जिह्वाभिघातजेति । संयोगजसंयोगाभिप्रायेणेयमुक्तिः । वर्णोत्पत्तिस्थले—वर्णाभिव्यक्तिस्थले । तत्रैव—ध्वन्युत्पत्तौ । प्रतिबध्यप्रतिबन्धकभावेति । अत-

च्छेदकतासंबन्धेन ध्वनिं प्रति समवायेन कर्णवायुसंयोगः प्रतिबन्धक इत्येवंरूप इत्यर्थः । एवं—उत्पत्तिविनाशयोरिव । परेषां—वर्णनित्यतावादिनां मीमांसकानाम् । **समान इति ।** एवं चाखण्डस्फोटस्वीकारे बाधकाभावः । नन्वेवं सति समानाधिकरणपदार्थयोरभेदान्वयः पूर्वपदार्थप्रधानोऽव्ययीभावः इत्यादिव्यवहाराणां का गतिः पदानां तत्रासत्त्वादिति चेन्न । यथा पदेषु कल्पितप्रकृतिप्रत्ययविभागमादाय प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वमिति व्यवहारस्तथा वाक्येष्वखण्डेषु वस्तुतः पदानामसत्त्वेऽपि आवापोद्वापाभ्यां कल्पितपदान्यादायोक्तव्यवहारस्याभ्युपपत्तेः । बलाबलाद्यधिकरणेषु श्रुतिलिङ्गादीनां प्रबलदुर्बलभावविचारो जैमिनीयानामेवोपपद्यः । यद्यप्यृषयः सर्वेऽपि तत्त्ववेत्तारस्तथापि व्यवहारकालेऽनिर्धारिततत्त्वसदृशैस्तैः पदपदार्थे वाक्यार्थविचारः क्रियत इति स्वीकारेण तेषां वचनावलम्बेनैव तदीयानां विचारप्रवृत्तिरिति सर्वमनवद्यम् । नैयायिकास्तु—वर्णानामुत्पत्त्यादिप्रतीतिवशादनित्यत्वमेव । भेरीदण्डसंयोगादीनां ध्वनिजनकतावत्कण्ठवायुसंयोगादीनामपि वर्णोत्पादकत्वमेव । एवं वर्णानां तृतीयक्षणवृत्तिध्वंसप्रतियोगित्वमेव । तदेवौषधमितिवत्स एवाङ्कुर इत्यादिवत्प्रत्यभिज्ञापि साजात्यावगाहिन्येव । पदानि वाक्यानि वा नातिरिक्तानि । किं त्वपेक्षाबुद्धिविशेषविषयताविशिष्टवर्णघटितान्येव वर्णानां द्विक्षणावस्थायित्वेन तेषामानुपूर्व्यपि वक्तुं शक्या । सत्कार्यवादीयसिद्धान्तरीत्या वर्णानामभिव्यक्तिरिति तु न युक्तम् । कण्ठाद्यभिघातात् प्राग्वर्णाभिव्यक्तिसत्त्वे पदप्रसङ्गापत्तेः । अभिव्यक्तेः सामग्रीसाध्यत्वे सत्कार्यतादवस्थ्यायुक्तत्वमेव । अनन्तवर्णप्रागभावध्वंसकल्पनाप्रयुक्तगौरवं तु प्रामाणिकत्वान्न दोषावहमिति वदन्ति ॥ ६९ ॥ इति व्यक्तिस्फोटविवरणम् ।

शक्यत्व इव शक्तत्वे०...॥ ७० ॥

**इत्थमिति ।** पूर्वोक्तैः प्रकारैः । जातिस्फोटवादिनां मतमुत्थापयति—**जातीति ।** जातेः—अर्थशब्दगतजातेः । **लाघवमिति ।** व्यक्तीनां बाहुल्याद्वाच्यत्ववाचकत्वकल्पनापेक्षया जातेस्तथात्वे तासामेकत्वाल्लाघवमित्यर्थः । ननूक्तरीत्या स्फोटातिरिक्तवर्णानामसत्त्वात्तद्गतो जातेर्वाचकत्वविचारो गगनकुसुमायमान इत्याशङ्कामपनेतुं स्फोट एव व्यक्तिरूपस्तावच्चाङ्गीकार्य इति प्रतिपादयति—**अयं भाव इति । इत्यपि स्यादिति ।** तदभिन्नाभिन्नस्य तदभिन्नत्वमिति न्यायात्स्यादित्यर्थः । ननु स्फोटस्यैकत्वेऽपि कत्वगत्वादिविरुद्धधर्माध्यासमूलकभेदानुभवेन

नोक्तापत्तिरत आह—**किंचेति**। आद्ये- गत्वाभ्युपगमपक्षे। तदेव—गत्वमेव। ननु गत्वादेर्वर्णधर्मत्वेन कथं तस्याऽऽश्रयभेदं वदसीत्यत आह—**वर्णेति**। वर्णानां नित्यत्वे तेषामेकत्वादनेकसमवेतत्वासंभवेन नातिरिक्ता गत्वादिजातिरिति भावः। **अतिरिक्तेति**। कत्वगत्वाद्यपेक्षयेत्यादिः। **अन्त्ये**—स्फोटे गत्वाद्यनभ्युपगमपक्षे। **विरोध इति**। गत्वाद्यन्यधर्मस्य स्फोटावृत्तित्वेन तत्तद्धर्मप्रकारकप्रतीतीनामनुपपत्तिरिति भावः। परोक्तमनूद्य दूषयति **वाय्विति**। **असंभवादिति**। अतिरिक्तगकारादिविशेष्यकः समवायसंबन्धावच्छिन्नगत्वादिप्रकारकत्वेन प्रमात्वस्य न्यायादिति भावः। ननु अतिरिक्तानन्तगकारादिकल्पनापेक्षया तादृशप्रतीतीनां भ्रमत्वमेवास्त्वित्यत आह—**अस्तु वेति**। एतावतैव गादिविषयकप्रमात्मकप्रतीत्युपपत्तेरलं स्फोटेनेति भावः। तस्य—वायुसंयोगस्य। दोषः—बाधकम्। **धर्मवदिति**। यथा भवता तादृशधर्मस्यातीन्द्रियमात्रवृत्तित्वेऽपि साक्षात्कारविषयकत्वं कल्प्यते। तथाऽतीन्द्रियस्यापि तस्य संयोगस्य साक्षात्कारविषयत्वं मन्मतेऽप्यस्तु इति प्रतिबन्दी बोत्तरम्। यदि अतीन्द्रियस्य सेन्द्रियकत्वं विरुद्धं, तदा तेषां गत्वादीन स्फोटधर्मत्वमपि प्रत्यक्षानुपपत्त्या कल्पयितुमशक्यमिति भावः। तस्मात्—उक्तहेतोः सन्त्येव—त्वदभिमतस्फोटातिरिक्ताः सन्त्येव। परन्तु—किंतु। गौरवात्—बहूनां वाचकत्वे गौरवात्। ननु पदत्वजात्याऽनुगमान्न गौरवावकाश इत्यत आह—**आकृत्यधिकरणेति**। तादृशजातिसद्भावे प्रमाणमाह—**इदमित्यादि**। अनुगमप्रतीतिमात्रेण जातिसिद्धौ विभुर्विभुरिति प्रतीत्या विभुत्वजातिसिद्ध्यापत्तिरतः साधकान्तरमाह—**हर्युक्तेति**। **अवश्येति**। अन्यथा तत्तदुपरि पदनिष्ठतत्तद्व्यक्तित्वस्य कारणतावच्छेदकतावच्छेदकत्वे आनन्त्यव्यभिचारयोरापत्तिः स्यात्। तादृशजात्यभिव्यञ्जकतावच्छेदकतया क्लृप्तानुपूर्व्यैव भवदुक्तव्यवस्था ह्यतिरिक्ता इति जातिर्नास्त्विति शङ्कां निराचष्टे। **न चेति**। **घटत्वादेरिति**। आदिना पटत्वादिपरिग्रहः। आकारादिभिः—अवयवसंयोगविशेषैः। परम्परासंबन्धस्यावच्छेदकतावच्छेदकत्वप्रयुक्तगौरवं तूभयोः समानमिति भावः। ननु तत्तज्जातेः शक्यतानिष्ठं तदितरावृत्तित्वविशिष्टसकलतदाश्रयवृत्तित्वमवच्छेदकं वाच्यमिति गौरवमत आह—**तादात्म्येनेति**। **जात्योरिति**। भाक्तयोः पदयोः सकाररेफाकारविसर्गघटितत्वाविशेषेण। सरत्वोपस्थापकतावच्छेदकजातेः सरस्त्वोपस्थापकतावच्छेदकताऽपि स्यादेकस्या एकत्रैव सत्त्वमित्यत्र विनिगमकाभावादिति भावः। वाशब्दस्य पक्षा-

न्तरसूचकत्वमिति भ्रमनिरासायाऽऽह—वा त्वर्थ इति। एवं चैवकारार्थो वाशब्द इति फलितम्। आनुपूर्वीति। एवं च स्वाव्यवहितोत्तरत्वसंबन्धेन रविशिष्टसत्वघटितायाश्च सरस्त्वोपस्थापकतावच्छेदकजातिव्यञ्जकतावच्छेदिका च सर इत्यत्र नास्तीति न सरःशब्दाद्रसत्वोपस्थितिःयापत्तिरिति भावः। मूले—तारमन्दशब्दौ—तारत्वमन्दत्वपरौ। तथा च मीमांसकमते यद्यपि वर्णानां नित्यैकत्वं, तथापि विजातीयकर्णवायुसंयोगरूपाभिव्यञ्जकतारतम्येन तथा तारत्वमन्दत्वादिविभिन्नधर्मप्रतीतिसद्भावादित्यर्थः॥ ७०॥

ननु जातेर्वर्णसमुदायवृत्तित्वात्प्रत्येकवर्णादर्थबोधापत्तिरित्याशयेन शङ्कते—नन्विति। प्रत्येकवर्णेषु—पदान्तर्गततत्तद्वर्णेषु। वर्णव्यक्तिभिरिति। आनुपूर्वीविशेषावच्छिन्नवर्णव्यक्तिभिरित्यर्थः। योगार्थतया—स्फुटत्यर्थोऽस्मादिति योगार्थतया। एतेन—तत्तत्पदघटकयावद्वर्णाभिव्यङ्ग्यत्वविशिष्टजातेर्बोधकत्वस्वीकारेण। स्फोटस्य—जातिरूपस्य। वर्णस्फोटपक्ष इति। तस्मिन् पक्षे वर्णगतजातेर्बोधकत्वं वक्तव्यम्। तथा चान्त्यवर्णगतजातेरन्त्यवर्णविषयकप्रतीत्यविषयत्वाच्चत्तद्वर्ण एव तत्तज्जातिव्यञ्जकस्तथा चोक्तदोष इति भावः। तत्र—पदवाक्ययोः। तस्याः—जातेः, व्यासज्यवृत्तित्वस्य पर्याप्तिसंबन्धेन सत्त्वं प्रसिद्धम्। व्यासज्यवृत्तित्वं तु जातेर्नास्ति। तस्या व्यासज्यवृत्तिस्वभावत्वात्। धर्मिग्राहकमानेति। धर्मो जातिरूपः पदार्थः, तद्ग्राहकं तत्साधकं यन्मानं पदवाक्ययोर्बोधकत्वान्यथानुपपत्तिरूप तत्सिद्धत्वादित्यर्थः। एतेन जातेः समवायसंबन्धेनैव सत्त्वं न तु पर्याप्त्याख्यसंबन्धेनेति शङ्काया नावकाशः। यदि सा प्रत्येकं विश्रान्ता स्यात्तदा वाचकत्वानुपपत्तेरपरिहारात्तत्सिद्धिरेव न स्यादिति भावः। नन्वनेकाभिर्वर्णव्यक्तिभिर्व्यङ्ग्या जातिरित्यनुपपन्नं वर्णव्यक्तीनां जातिव्यञ्जकताया अप्रसिद्धत्वादित्याशङ्कामपनेतुं तत्र प्रामाणिकसंमतिमाह—कैश्चिद्व्यक्तय इति। अस्या जातेः। आश्रयत्वं षष्ठ्यर्थः। व्यज्यतेऽनया सा व्यक्तिरिति व्युत्पत्त्या व्यक्तिपदवाच्यो वर्ण एवेत्याशयेनाऽऽह—ध्वनिवर्णयोरिति। शेषार्थः—प्रकृतकारिकाया उत्तरार्धार्थः। उक्तेऽर्थे काव्यप्रकाशकारसंमतिमाह—उक्तं हीति। काव्यप्रकाशे। इदमुत्तममतिशयिनि व्यङ्ग्ये वाच्याद्ध्वनिर्बुधैः कथितः ' इति पद्यव्याख्यावसर

इति शेषः। स्फोटव्यङ्ग्यव्यञ्जकस्य । स्फोटरूपं यद्व्यङ्ग्यं तद्व्यञ्जकस्य ॥ ७१ ॥

ननुजातेर्वाचकत्वमुक्तं तदनुपपन्नं, तादृशजातेरप्रसिद्धत्वादतो जातिं प्रकटयति—सत्यासत्याविति। सत्यं—कालत्रयाबाध्यम्। तद्विपरीतमसत्यम्। ननु जीवे ब्रह्मात्मकत्वे तस्यैकत्वात्पटेऽपि घटत्वव्यवहारापत्तिरतः पर्यवसितार्थमाह—तत्त्वद्यक्तीति। विशिष्टं—उपलक्षितम्। जगत्कर्तृत्वादिकमपि उपलक्षित एव। जातिः—जातिपदव्यवहार्यः। व्यक्तीनामुपाधित्वं च यथाजपाकुसुमसंनिधाने लोहितः स्फटिक इति व्यवहाराज्जपाकुसुमे उप—स्वसमीपवर्तिनि स्वनिष्ठं धर्ममादधातीत्युपाधिरिति व्युत्पत्त्या स्वसमीपवर्तिविशेष्यकस्वनिष्ठधर्मप्रकारकप्रतीतिजनके उपाधिव्यवहारस्तथा व्यक्तीनां नानात्वात्तदुपश्लेषेण वस्तुत एकस्यापि ब्रह्मणो नानात्वप्रकारकप्रतिभासजनकत्वेन द्रव्यशब्देति—द्रव्यप्रतिपादकघटपटादिशब्देत्यर्थः। यद्वा-द्रव्यात्मको यः शब्दस्तद्वाच्यमिति यावत्। तेन गुणादिगतजातेरपि संग्रहः। मीमांसकमते—शब्दस्य द्रव्यरूपत्वात्। शब्दरूपतया—वाचकशब्दरूपतया वेदात्मकशब्दरूपतया च। अयं भावः—द्वयोरपि वाच्यवाचकयोरुपाध्युपलक्षितब्रह्माभिन्नतया शास्त्रस्य चास्य वाच्यवाचकज्ञानाय प्रवृत्तेः, नेह नानाऽस्ति, इति वाक्यसहायेन वस्तुगत्योपाधिव्यवच्छेदे सिद्धेऽस्माच्छास्त्राद् ब्रह्मज्ञानं भवतीति। कथं तर्हीति। संगच्छतामित्यनेनान्वितम्। पूर्वापरविरोधादिति शेषः। ननु अविद्या मिथ्याज्ञानरूपा तज्जन्यसंस्काररूपा वा तस्माज्जातित्वं न संभवति तस्याः, अतो वर्णधर्मत्वेन घटादिधर्मत्वासंभवादत आह—आविद्यक इति। अविद्याकल्पित इत्यर्थः। धर्मविशेष इत्युपादानेनावृत्तित्वशङ्कया घटपटादिसाधारण्यस्य च निरासः॥ ७२ ॥

यद्यपि पूर्वत्राखण्डवाक्यस्फोटस्य प्रदर्शनसमये शास्त्रस्य पुरुषार्थसाधनत्वं दर्शितमेव तथाऽपि तस्मिन् पक्षे परम्परया शास्त्रस्य तत्त्वम्। जातिस्फोटपक्षे तु साक्षादेव तथेत्यावेदितुं मूलमवतारयति—तमेवेति। अयमात्मा, तत्सत्यम, इत्यादिश्रुतिप्रतिपादितमित्यर्थः। इत्थं—पूर्वोक्तिभिः। निष्कृष्यमाणं—वाचकत्वेनाध्यस्तेभ्यः पृथक्क्रियमाणम्। निरञ्जनं—उपाधिविनिर्मुक्तम्। अत एवाक्षरं—अविनाशि। एतादृशं यत्तद् ब्रह्म। सर्वेषु भूतेषु नश्यत्सु न नश्यति। इति स्मृतेः। शब्दतत्त्वमिति। अत्र शब्दपदं रूपस्याप्युपलक्षणम्। द्वयी—नामरूपात्मिका।

तदेव—ब्रह्मैवेति । तत्त्वम्—उपादानम् । तदुक्तं श्रुतौ—'अनेन जीवेनानुप्रविश्य नामरूपे व्याकरवाणि' इति । सृष्टेर्द्वयीरूपत्वं व्ययवकसमुदायरूपतया । सृष्टेर्ब्रह्मण एव संभवश्च । तस्माद्वा एतस्मादात्मन आकाशः संभूतः, आकाशाद्वायुः, इति श्रुतावपि प्रसिद्धम् । ननु ब्रह्मण एव नामरूपसृष्ट्युपादानत्वं चेदुपादानोपादेययोस्तादात्म्याद् ब्रह्मणोऽपि नानात्वमेव सिद्धं, तथा च कथं सत्यत्वमत आह—प्रक्रियांशास्त्विति । प्रकृतिप्रत्ययादिकथनं पञ्चकोशादिव्युत्पादनमाकाशादिसृष्ट्युपादानत्वस्य च प्रतिपादनांशस्तित्वत्यर्थः । अविद्याविजृम्भणं—मलिनसत्त्वाविद्यानामज्ञानाविलास एवेत्यर्थः । अत्र हरिसंमतिमाह—उक्तं चेति । अत्र पूर्वार्धमन्यत्रोक्तम् । उत्तरार्धस्य पूर्वार्धं तु—घटादिदर्शनाल्लोकः परिच्छिन्नोऽवसीयते । इति । यथा घटादिदर्शनाल्लोको विश्वप्रपञ्चः परिच्छिन्नः किंचित्कारणं तद्व्यवसीयते । तथा भावानामाकाशादीनां समारम्भः सम्यगारम्भः प्रकाशो यस्मादिति व्युत्पत्त्या प्रकाशोपादानमनादि ब्रह्मैवेत्यर्थः । अनादीत्यनेन--प्रागभावाप्रतियोगित्वं, शाश्वतमित्यनेन—ध्वंसाप्रतियोगित्वमुक्तम् । ननु नादेऽपि ब्रह्मपदव्यवहारात्कथमस्य शास्त्रस्य ब्रह्मणोऽनादित्वप्रतिपादकतेत्यत आह—ब्रह्मैवेत्यनेनेति । स्वयंज्योतिः—पराप्रकाश्यः । निर्विघ्नप्रचयाय—अप्रतिबद्धप्रचाराय । स्तुतिरूपत्वं पूर्णत्वकथनेन । तत्त्वं चाखण्डानन्दरूपत्वम् । नम इति । नतिरूपमङ्गलाय ॥ ७४ ॥

इति स्फोटप्रकरणगता भैरवनाथमिश्रकृता वैयाकरणभूषणसारस्य
परीक्षानामिका टीका समाप्ता ।



# अथ स्फोटचन्द्रिका ।

पित्रोः पादयुगं नत्वा जानकीरघुनाथयोः ।
मौनिश्रीकृष्णभट्टेन तन्यते स्फोटचन्द्रिका ॥ १ ॥

शाब्दिकानां वाच्यलक्ष्यव्यङ्ग्यार्थप्रतिपादकानां वाचकलाक्षणिकव्यञ्जकानां शब्दानां तन्निष्ठजातेर्वा स्फोट इति व्यवहारः । स्फुटति अर्थो यस्मादिति व्युत्पत्त्या पङ्कजादिवद्योगरूढः स्फोटशब्दः । केवलयोगस्वीकारे वाच्यलक्ष्यव्यङ्ग्यानां चेष्टायाश्च व्यङ्ग्यार्थप्रतिपादकत्वेन तत्रातिव्याप्तेः । न च वाचकादिपर्यायः स्फोटशब्दोऽप्रसिद्धः । 'अक्षराणामकारस्त्वं स्फोटस्त्वं वर्णसंश्रयः' इति हरिवंशे दृष्टत्वात् । तथा च वर्णपदवाक्याखण्डपदाखण्डवाक्येति पञ्च व्यक्तिस्फोटाः । शक्यतावच्छेदिकाया जातेर्वाच्यत्ववत् शक्ततावच्छेदिकाया जातेर्वाचकत्वमिति मते वर्णपदवाक्यभेदेन त्रिविधो जातिस्फोटः । एवं चाष्टौ स्फोटाः । यथा—आनन्दवल्ल्यां शुद्धब्रह्मज्ञानार्थमन्नमयप्राणमयमनोमयविज्ञानमयानन्दमयेति पञ्चसु कोशेषु अपारमार्थिकब्रह्मत्वप्रतिपादनमुपायः । यथा वा—अरुन्धतीज्ञानार्थं स्थूलनक्षत्रे अपारमार्थिकारुन्धतीत्वबोधनम् । तथा पारमार्थिकाखण्डवाक्यबोधार्थमेते वर्णपदवाक्याखण्डपदस्फोटा उपायाः । तदुक्तम्- उपायाः शिक्षमाणानां बालानामुपलालनाः । असत्ये वर्त्मनि स्थित्वा ततः सत्यं समीहते । इति । सुप्तिङन्तं पदमिति एकतिङन्तार्थमुख्यविशेष्यकं वाक्यमिति पदवाक्यलक्षणानाक्रान्तवर्णसमूहस्य वर्णस्य वा प्रकृतिप्रत्ययरूपस्य व्याकरणेन गृहीतशक्तिकस्य पच् तिप् इत्यादिकस्य वाचकत्वे वर्णस्फोटः । ते च प्रयोगसमवायिनः विसर्गतिबादयः । न तु तत्स्थानित्वेन कल्पिता लकारसकारादयः । तेषामनियतत्वात् । तथा हि—विसर्गेण रोः स्मरणं तेन सोः । एवं णला तिपः स्मरणं तेन लकारस्य । एवं च गौरवं स्पष्टमेव । किं च स्थान्यादेशज्ञानशून्यस्यावैयाकरणस्याऽऽदेशमात्राद्बोधापत्तेश्च । एवं च स्थान्येव वाचको लाघवात्, न त्वादेशो गौरवादिति तार्किकोक्तमपास्तम् । विपरीतगौरवापत्तेः । अयं तार्किकाणां पदस्फोटत्वेनाभिमतः । शक्तं पदमिति तैः स्वीकृतत्वात् । न च मानाभावात् फलाभावात्स्वग्रन्थविरोधाच्चायुक्तमिति शाब्दिकाः । तथा हि शक्तं पदं चतुर्धा रूढं यौगिकं योगरूढं यौगिकरूढं चेति । गौः पाचकः पङ्कजमश्वकर्ण इति क्रमेणोदाहरणानि । तत्र पाचक इति यौगिकोदाहरणे यच्छक्तं पदं पच् अक इति न तद्यौगिकं, समुदा-

यस्तु यद्यपि यौगिकस्तथापि न शक्तः। एवं च शक्तं पदं यौगिकमित्यविचारिताभिधानम्। विशिष्टशक्त्यभावे सति व्याकरणबोधितार्थप्रकृतिप्रत्ययसमुदायरूपसुबन्ततिङन्तपदत्वं यौगिकपदत्वम्। सत्यन्तं योगरूढातिव्याप्तिवारणाय। तत्र विशिष्टे शक्तिग्रहात्। एवं गौरिति रूढ्युदाहरणमप्यसंगतम्। व्याकरणकल्पितप्रकृतिप्रत्ययार्थप्रत्ययाभावे सति समुदायसुबन्तस्यार्थबोधकत्वे रूढपदत्वं यथा मणिनूपुरादीति रूढिलक्षणानाक्रान्तत्वात्। शास्त्रकल्पितावयवार्थानुसंधानपूर्वकसमुदायशक्त्याऽर्थबोधकपदत्वं योगरूढत्वम्। यथा पङ्कजादीति तदाक्रान्तत्वाद्योगरूढत्वं युक्तम्। यौगिकरूढ इति तार्किकोक्तो भेदोऽपि न युक्त.। सकृदुच्चरितः सकृदर्थं प्रत्याययति इति न्यायान्मण्डपपदं गृहविशेषे रूढं भिन्नं मण्डपानकर्तरि भिन्नमिति अतिरिक्तभेदस्वीकारे मानाभावात्। एवं रूढिलक्षणायाः कर्मणि कुशल इत्युदाहरणमप्ययुक्तम्। उक्तरीत्या कुशले रूढत्वस्य कुशादानकर्तरि यौगिकत्वस्य संभवात्। द्विरेफपदं भ्रमरे रूढमेव। कोशे भ्रमरपर्याये उपादानात् नहि कोशे लाक्षणिकोपादानं पर्यायेष्वस्ति। एवं च स्ववाच्यपदवाच्यत्वसंबन्धेन द्विरेफपदस्य भ्रमरे लक्षणेति तार्किकोक्तमपास्तम्। अक्रूरेऽपि उक्तसंबन्धसत्त्वेन तत्रातिव्याप्तेश्च। यद्वा एकाक्षरकोशावधृतशक्तिकानां सर्वेषां वर्णानामेव स्फोटत्वम्। अर्थवन्तो वर्णा इत्यनेन भाष्ये तथा प्रतिपादनात्। न चैवं धनं वनमित्यादौ प्रातिपदिकसंज्ञानापत्तिः। समुदायशक्तेः स्वाश्रयशक्ततावच्छेदकानुपूर्वीभिन्नजनकार्थकार्यं प्रति प्रतिबन्धकत्वात्. यत्तु भूषणे स्फुटति अर्थो यस्मादिति स्फोटः वाचक इति यावत् इति केवलयौगिकः स्फोटशब्द उक्तः। तन्न सम्यक्। साधुशब्दानामिवासाधुशब्दानामपि शक्तिसत्त्वेन वाचकत्वाविशेषात्स्फोटत्वापत्तेः। न चेष्टापत्तिः। शाब्दिकैस्तथाऽङ्गीकारात्। लाक्षणिकव्यञ्जकयोरसंग्रहापत्तेः। न च शब्दोऽत्र व्यञ्जकास्त्रिवेति अत्रग्रहणात् काव्य एव व्यञ्जकः, न व्याकरणे इति भ्रमितव्यम्। पदेन स्फोटोऽखण्डो व्यज्यत इति वदद्भिस्तत्स्वीकारात्। ननु तार्किकमते ईश्वरेच्छा शक्तिः। मीमांसकमते अतिरिक्ता पदार्थान्तरं, नवीनतार्किकैरीश्वरेच्छा ज्ञानं वाऽऽकृतिर्वेति विनिगमनाविरहान्मीमांसकमतमेवाङ्गीकृतम्। उभयथाऽपि साधुष्वेव सा नासाधुषु। अन्यथा शक्तिमत्त्वं साधुत्वमिति साधुत्वलक्षणाक्रान्तत्वेनासाधूनामपि साधुत्वापत्तेः। शक्तिग्राहकव्याकरणकोशादेरभावाच्चेति चेन्न। तत्र शक्त्यभावेन तेभ्यो बोधानापत्तेः। न च शक्तिभ्रमात्साधुशब्दस्मरणाद्वा

बोध इति तार्किकोक्तं युक्तम्। साधुशब्दस्मरणं विनाऽपि व्युत्पन्नानामपि बोधस्यानुभवसिद्धत्वात्, गौरवाच्च। भ्रमाद्बोध इत्यपि न। रजतभ्रमाद् गृहीतायःशुक्ते रजतव्यवहारानाधायकत्ववच्छक्तिभ्रमाज्ज्ञातबोधस्यापि व्यवहारानाधायकत्वापत्तेः। सन्मात्रविषयिण्या ईश्वरेच्छायास्तत्र अभावस्य वक्तुमशक्यत्वात्। किं च शक्तिभ्रमः कस्य? सर्वव्यवहारकर्तुरीश्वरस्योतान्यस्य। नाऽऽद्यः। ईश्वरस्य भ्रमित्वानुपपत्तेः। नान्त्यः—सर्गादौ प्रयोज्यप्रयोजकास्वरूपसाध्वसाधुशब्दव्यवहारकर्त्रीश्वरादन्यस्याभावात्। यथा पुण्यपापोभयजनिकार्थसृष्टिरीश्वरकर्तृका तथैव साध्वसाधूभयविधशब्दसृष्टिरपीश्वरकर्तृकैव। तथा च भ्रम इत्ययुक्तमेव। न च तटस्थबालस्यानुमितिभ्रमः साधुशब्दे सा वाऽसाधुशब्देष्वपि। शक्त्यनुमापकसामग्रीसत्त्वेन बाधकाभावेन च भ्रमत्वायोगात्। नन्वसाधुष्वपि शक्तिस्वीकारे शक्तिमत्त्वं साधुत्वमिति तार्किकलक्षणाक्रान्तत्वात् साधुत्वापत्तिः। तथा च न 'म्लेच्छितवै नापभाषितवै' इति निषेधानवकाश इति चेन्न। लाक्षणिकानामसाधुतापत्तेः। न च वृत्तिमत्त्वं तत्। शक्तिलक्षणान्यतरत्वनिवेशे गौरवात्। तस्मात्पुण्यजनकतावच्छेदकजातिविशेषः साधुत्वं प्रत्यवायजनकतावच्छेदकश्चासाधुत्वम्। यद्वा व्याकरणबोध्यत्वं साधुत्वं तद्भिन्नत्वमसाधुत्वम्। तथा चैकः शब्दः सम्यग्ज्ञातः सुप्रयुक्तः स्वर्गे लोके कामधुक् भवतीति व्याकरणेनार्थविशेषे प्रकृतिप्रत्ययेन व्युत्पादित इति ज्ञातः। तादृशार्थविशेषे प्रयुक्तः। तेन गोणीशब्दस्य गोण्यामेव साधुत्वं न गवि। विनिगमनाविरह इत्यपि न युक्तम्। अन्यतरपक्षपातिनी युक्तिर्हि विनिगमना। सा च ज्ञानस्य पूर्वाभिव्यक्तिरूपा प्रकृतेऽस्ति। अत एवेश्वरज्ञानं शक्तिरिति वर्धमानोपाध्यायाः। शाब्दिकास्तु बोधजनकत्वं शक्तिः। तच्चानादिबोधजनकतावच्छेदकधर्मवत्त्वम्। तदुक्तं हरिणा—इन्द्रियाणां स्वविषयेष्वनादिर्योग्यता यथा। अनादिरर्थैः संबन्धः शब्दानां योग्यता तथा इति। तज्जनकतावच्छेदकधर्मवत्त्वरूपा योग्यता। न चागृहीतशक्तिकस्य शाब्दबोधानुदयाच्छाब्दबोधे शक्तिग्रहस्य हेतुत्वात् बोधोत्तरं शक्तिग्रहः शक्तिग्रहोत्तरं बोध इति अन्योन्याश्रयः। व्याकरणकोशादिना शक्तिग्रहात्। अन्यथेश्वरेच्छा शक्तिरिति पक्षेऽपि शक्तिग्रहोत्तरं बोधः, बोधोत्तरं शक्तिग्रह इति अन्योन्याश्रयस्य तुल्यत्वात्। यद्वा शब्दार्थयोरनादिसंबन्धः शक्तिः। मम तु प्रतिभाति शक्तिः सामर्थ्यं यथा दीपादौ तेजसि ग्राह्यत्वग्राहकत्वसामर्थ्यं वह्न्यादौ दाहकत्वसामर्थ्यं, इन्द्रि-

यादौ विषयप्रकाशनं तत्स्वरूपसदेव उपयुक्तं न तु ज्ञातम्। न चागृहीतशक्तिक-स्यापि बोधापत्तिः। संनिकर्षादिवत् बोधाभावप्रयोजकीभूताभावप्रतियोगितात्पर्य-ग्रहाभावात्। न च नानार्थेष्वेव तात्पर्यग्रहस्य कारणत्वमिति चेत् सत्यम्। शा-ब्दिकमते सर्वेषां नानार्थत्वात। अत एव वृद्धिरादैच् इति सूत्रे भाष्येऽनेकशक्तेः शब्दस्येत्युक्तम्। अनेकेष्वनेका वा शक्तिरस्येति विग्रहः। अवच्छेदकभेदे श-क्तिभेद इति तार्किकादिसिद्धान्तः। लाघवाच्छक्तिरेकैवेति शाब्दिकसिद्धान्तः। न चान्यायश्चानेकार्थत्वमिति वाच्यम्। भवन्मतेऽपि तुल्यत्वात्। एतावान् परं भेदः—त्वन्मते वृत्तिभेदेन, मन्मते तु एकया वृत्त्या। न च लक्षणोच्छेदापत्तिः। इष्टत्वात्। यथा भवद्भिः सर्वानुभवसिद्धाऽपि व्यञ्जना लाघवान्न स्वीक्रियते। तत्र च व्यञ्जनोच्छेदापत्तेरदूषकत्ववन्मन्मतेऽपि लाघवाच्छक्त्यैव निर्वाहे लक्षणो-च्छेदापत्तेरदूषकत्वात्। वस्तुतः एकवृत्त्यैव निर्वाहे अनेकवृत्तिकत्वमन्याय्यमित्येव तदर्थः। अर्थपदस्य वृत्तिपरत्वात्। अन्यायश्चेत्यस्य लाघवमूलकत्वात्। न चा-नन्यलभ्यः शब्दार्थ इति वाच्यम्। तस्य लक्षणया लभ्ये शक्तिकल्पनमन्याय्य-मिति नार्थः किं तु संसर्गमर्यादया सिद्धे शक्तिकल्पनमयुक्तमिति तदर्थात्। एवं च शाब्दिकानां शब्दवत् वन्हौ। अतिरिक्तशक्तिस्वीकारः। तार्किकाणां तु शब्दे-शक्तिस्वीकारः, वन्हौ तु नेत्यर्धजरतीयस्वीकारोऽनुचितः। न चोत्तेजकाभाव-विशिष्टमण्यभावेनोपपत्तौ तत्स्वीकारो व्यर्थ एवेति वाच्यम्। गुरुभूतविशिष्टस्य कारणतावच्छेदकत्वस्वीकारापेक्षया लघुभूतस्वीकृतातिरिक्तशक्तिसंबन्धस्यैवोचित-त्वात्। किं च शाब्दिकमते भेदसहिष्णुरभेदस्तादात्म्यम्। गुणत्वद्रव्यत्वादिना भेदेऽपि गुणं विना द्रव्यानुपलम्भात् द्रव्यं विना गुणानुपलम्भाच्च तयोस्तादात्म्यम्। एवं च समवायो यत्र तत्र तादात्म्यमिति व्यवहारः। तथा च तैर्गुणं प्रति घटस्य पूर्ववर्तित्वासंभवेन कारणत्वाभावादन्यथानुपपत्त्या विशिष्टस्यैव कारणतावच्छेदक-त्वमङ्गीकृत्य गुणविशिष्टघटं प्रति गुणविशिष्टकपालस्य कारणत्वमिति स्वीकृतम्। तार्किकैस्तु विशिष्टस्य कारणतानवच्छेदकत्वाद्विशिष्टस्य कारणत्वासंभवान्निर्गुणघ-टोत्पत्तिः स्वीकृता, तत्र च गुणाश्रयत्वरूपद्रव्यत्वलक्षणानाक्रान्तत्वात् गुणसमाना-धिकरणद्रव्यत्वव्याप्यजातिमत्त्वमिति निष्कर्षः कृतः सोऽयुक्त इति मम भाति। तथा हि—प्रतिबन्धोत्तेजकाभ्यां वन्हौ ज्ञाताऽपि शक्तिरुत्तेजकाभावविशिष्टमण्य-भावस्य कारणत्वं स्वीकृत्यातिरिक्ता शक्तिः खण्डिता शब्दे च सा स्वीकृता।

एवं विशिष्टस्य तत्र अवच्छेदकत्वं स्वीकृत्येह नेत्युक्त्वा खपुष्पवन्निर्गुणघटोत्पत्तिः स्वीकृता । सर्वेषामनुभवानारूढत्वादेतत्सर्वमयोग्यमिति दिक् । शाब्दिकैस्तु शब्द वद वन्हौ कर्णविवरवर्तिनभसि चातिरिक्ता शक्तिः स्वीकृता सैव श्रोत्रं शक्तिवि- शिष्टं नभो वा । एवं च दूरस्थभेरीशब्दस्य स्वस्थानस्थितस्यैव श्रोत्रस्य दीपवत् प्रकाशनसामर्थ्यम् । एवं च वीचीतरङ्गन्यायेन भेरीशब्दस्य श्रवणदेशगमनमिति न मनोरमम् । साक्षाद्भेरीशब्दं शृणोमीत्यनुभवापलापापत्तेः । अनेकशब्दकल्पने गौरवाच्च । न च श्रोत्रमेव तत्र गच्छतीति युक्तम् । आकाशस्य तत्र गमनासंभवात् । कर्णविवरे आकाशाभावप्रसङ्गाच्च । श्रोत्रेन्द्रियं गुणमात्रसाक्षात्कारज- नकम् । केचित्तु श्रोत्रेन्द्रियवद् रसनेन्द्रियघ्राणेन्द्रिययोरपि गुणमात्रसाक्षात्कारज- नकत्वमिति वदन्ति । तदयुक्तमित्यपरे । तथा हि—शब्दस्याऽऽकाशगुणत्वात्समवा- येन साक्षात्संबन्धसत्त्वेन केवलप्रत्यक्षसंभवेऽपि रसगन्धयोस्तु संयुक्तसमवायः संनि- कर्षः । स च द्रव्यसंबन्धे घट इति परम्परासंबन्धः । तत्र द्रव्यसाक्षात्कारसंनि- कर्षसंभवेन द्रव्यं विना केवलगुणस्यासत्त्वेन च केवलगुणसाक्षात्कारासंभवः । तस्माद् द्रव्यविशिष्टगुणसाक्षात्कारजनकत्वं तयोः । न तु गुणविशिष्टद्रव्यसाक्षा- त्कारजनकत्वम् । अनुभवेन तथैव शक्त्युन्नयनात् । चक्षुरिन्द्रियत्वगिन्द्रिययोस्तु गुणविशिष्टद्रव्यं द्रव्यविशिष्टो वा गुण इत्युभयविधसाक्षात्कारजनकत्वम् । विस्त- रस्तु मत्कृते तर्कामृते द्रष्टव्यः । गौरवभयान्नेह विविच्यत इति दिक् । प्रकृत- मनुसरामः । असाधुशब्दस्य वाचकत्वेऽपि व्याकरणप्रतिपाद्यत्वाभावात्स्फोटत्वाभावः । तदन्तर्गतवर्णानां तु एकाक्षरकोशावधृतशक्तिकानामर्थान्तरप्रकाशकत्वे पदस्फोट इति पदस्फोटे विवेचयिष्यते । अनुकरणशब्दानां तु अनुकार्यानुकरणयोर्भेदविव- क्षयाऽनुकार्थरूपार्थप्रतिपादकत्वात्स्फोटत्वम् । ननु साध्वनुकरणस्य साधुत्वेन स्फो- टत्वेऽपि असाध्वनुकरणस्यासाधुत्वात्कथं स्फोटव्यवहार इति चेन्न । असाध्वनुक- रणस्यापि साधुत्वस्वीकारात् । दैत्यैर्हेऽरय इति प्रयोक्तव्ये हेऽलय इति प्रयुक्तं तदनु- करणं हेलयो हेलय इति कुर्वन्तो न पराबभूवुरिति न वाक्येऽपि तस्यासाधुत्वम् । यथा यद्वानः तद्वानः । भवतु इत्यर्थे यर्वाणस्तर्वाणः भवतु इति प्रयुक्तं तदनुकरणं कुर्वन्तो यर्वाणस्तर्वाणो नाम ऋषयो बभूवुरिति न वाक्येऽपि तस्यासाधुत्वं क- स्यापि संमतम् । तस्मादसाधोरनुकरणस्य साधुत्वं सर्वसंमतम् । तत्र यदा तयोरभेद- विवक्षा तदाऽर्थप्रकाशकत्वाभावान्न स्फोटत्वम् । शुद्धबलज्ञानाय सर्वबहिर्भूताच्च-

मयकोशवदखण्डवाक्यबोधनाय वर्णस्फोट इति दिक् । इति वर्णस्फोटः । अथ पदस्फोटो वर्णस्फोटापेक्षया अन्नमयकोशापेक्षयाऽन्तरङ्गप्राणमयकोशवदन्तरङ्गो निरूप्यते—अन्तरङ्गत्वं तु साक्षाद्वाक्यघटकत्वेन । वर्णस्य बहिरङ्गत्वं पदनिष्पत्तिद्वारा तद्घटकत्वम् । पदस्फोटो द्विधा सखण्डोऽखण्डश्च । व्यवहारादिना पद एव शक्तिग्रहात् । तत्र योऽस्माकं सखण्डपदस्फोटः पचति राम इत्यादिसुबन्ततिङन्तरूपः, अर्कं पदमिति मते स एव वाक्यस्फोटस्तार्किकाणाम् । अथाखण्डपदस्फोटो निरूप्यते । स च सर्वैः पदस्थितवर्णैर्व्यज्यते । स चार्थप्रत्यायक इति शाब्दिकसिद्धान्तः । न च प्रतीतस्य प्रत्यायकत्वं नास्ति अन्यथा शब्दं वेत्तीत्यत्रार्थं वेत्तीति प्रत्ययापत्तेरिति अणुदित्सूत्रस्थभाष्यविरोधः । तस्य सामान्यतः प्रतीतस्य प्रत्यायकत्वं नास्तीति नार्थः । किं तु शब्दसंज्ञया प्रतीतस्य शब्दस्येति । प्रकरणानुरोधेन तस्य संकोचात् । एवं च रहसि पुस्तकमीक्षमाणस्यार्थप्रत्ययानापत्तिमाशङ्क्य तत्रापि सूक्ष्मोच्चारणमस्त्येवेति नव्योक्तमपास्तम् । अनुभवविरोधाच्च । यत्त्वत्र तार्किकवेदान्तिनः—यावद्वर्णव्यङ्ग्यो वा यत्किंचिद्वर्णव्यङ्ग्यो वा चरमवर्णव्यङ्ग्यो वा सः । न तावदाद्यः । आशुविनाशिनां मेलनासंभवात् । न द्वितीयः । पशब्देनैव व्यञ्जिते स्फोटे टवर्णवैयर्थ्यम् । न तृतीयः । पूर्वपूर्ववर्णानुभवजन्यसंस्कारसहितचरमवर्णेनैवार्थप्रतीतिसिद्धौ किं स्फोटेनेति । तन्न । वर्णानामाशुविनाशित्वे मानाभावात् । न चोत्पन्नो गकारः नष्टो गकार इति प्रतीतिर्मानम् । तस्याश्च आकाशः संभूत इतिवदाविर्भावतिरोभावेनाप्युपपत्तेः । अनन्तप्रागभावप्रध्वंसकल्पने गौरवाच्च । अनित्यत्वेऽपि वर्णानुभवजन्यसंस्कारजन्यस्मृतौ मेलनसंभवात् । द्वितीयेऽपि न द्वितीयादिवर्णवैयर्थ्यम् । पशब्दोच्चारणे किं पस्फोट उत पटस्फोट उत पटः स्फोट इति संदेहनिवर्तकत्वेन सार्थक्यात् । तृतीये यथा पट पदशक्यः विजातीयतन्तुसंयोगविशिष्टचरमसंयोगस्यैव पटकार्यकारित्वेऽपि अतिरिक्तोऽवयवी स्वीक्रियते तथा मयाऽपि स्वीक्रियते । न च तथाऽनुभवादतिरिक्तः । पदस्फोटेऽपि तुल्यत्वात् । गौरवाच्च । स्फोटे तु लाघवं कथमिति चेच्छृणु । ध्वनिभिरेव स्फोटो व्यज्यो । एवं चानन्तवर्णतत्प्रागभावप्रध्वंसकल्पना नदी दीन सरो रस जरा राज मारो भिन्नार्थप्रतीत्यर्थमानुपूर्व्याः पूर्ववर्णानुभवजन्यसंस्कारसहितचरमवर्णस्य कारणता च न वाच्येत्यति लाघवम् । त्वया तु तद्वाच्यमिति गौर-

वम् । एतावत्प्रघट्टकेन वर्णातिरिक्तः वर्णव्यङ्ग्यः चैतन्ये सर्वभूतानां शब्दब्रह्मेति मे मतिरिति शब्दब्रह्मरूपोऽतिरिक्तस्फोटस्तार्किकादिदूषणाभासनिरसनपूर्वको व्याख्यातः । प्रकारान्तरेणाप्युच्यते—अखण्डपदस्फोटो नातिरिक्तः । यत् तार्किकादिभिर्यौगिकं योगरूढं च पदमित्युच्यते पाचकः पङ्कजमित्यादि तदेवास्माभिः अखण्डपदस्फोटत्वेन व्यवह्रियते । खण्डशक्त्यनुसंधानपूर्वकयोगादिना समुदायशक्तिग्रहात् । यस्य तु व्याकरणज्ञानशून्यस्य केवलव्यवहारेण समुदायशक्तिग्रहस्तस्य स एवाखण्डपदस्फोटः । यत्तु रूढं पदं मणिनूपुरादि वः न इत्यादि तत्सर्वेषामपि अखण्डपदस्फोटत्वेनाभिमतम् । तत्र सर्वेषामपि अवयवार्थज्ञानाभावाद्विशिष्ट व्यवहारेण समुदाये शक्तिग्रहात् । एवं च रूढयौगिकपदयोः सखण्डाखण्डस्फोटयोश्च पर्यायत्वे नाममात्रे विवाद इति दिक् । एवं च तार्किकादीनां दूषणाभासाः गर्भस्रावेणैव पराहता इति दिक् । न हि तार्किकादितर्का एव सतर्का इति नियमः । तत्रापि बहुशोऽनुभवाविषयासत्तर्कदर्शनात् । तथा हि—विशिष्टस्य कार्यत्वकारणत्वेनैव सिद्धौ निर्गुणपटोत्पत्तिरयुक्तेति पूर्वमुक्तम् । तथा रूपस्य व्याप्यवृत्तित्वनियमात् घटस्य प्रत्यक्षान्यथानुपपत्त्या स्वीक्रियमाणातिरिक्तं चित्रं रूपमिति कल्पनाप्ययुक्तैव । तादृशनियमे प्रमाणाभावात् । अस्तु वा नियमः । तथापि तत्तद्द्रव्यावच्छिन्नतत्तदवयवसंनिकर्षसहितचरमरूपावच्छिन्नचरमावयवसंनिकर्षेणैव घटसाक्षात्कारसिद्धौ अतिरिक्तचित्ररूपस्वीकारे गौरवात् । एवं विशिष्टबुद्धौ विशेषणज्ञानस्य कारणत्वात्तस्य चायं घट इत्यादावसंभवात् घटघटत्वयोः संबन्धानवगाहिनिर्विकल्पकज्ञानकल्पनाऽप्ययोग्यत्वादयुक्तैव । नित्यसंबन्धातिरिक्तसंयोगसंबन्धादावेव तत्कल्पना दण्डी पुरुष इत्यादौ, न तु अयं घट इत्यादौ । तत्र विशिष्टज्ञानस्यैव जायमानत्वात् । एवं च निर्विकल्पकज्ञानं न स्वीकार्यमिति महल्लाघवम् । एवमखण्डखण्डभेदेन कालद्वैविध्यकल्पनमप्ययुक्तमेव । अखण्डस्य व्यवहारानाधायकत्वात् । न च जन्यानां जनकः कालो जगतामाश्रयो मत इति जगदाधारत्वेन जनकत्वेन च तत्स्वीकारः । ईश्वरस्यैव तत्त्वसिद्धत्वात् । न च पदार्थखण्डने दिक्कालौ नेश्वरादतिरिच्येते इत्यादिनाऽस्माभिस्तदुक्तमिति वाच्यम् । तत्र दिक्कालयोरेव विशिष्य पराभव उक्तः । न च सर्वं खल्विदं ब्रह्मेति श्रुतिविरुद्धः । तथा यतो वा इमानि भूतानि जायन्ते, तस्मिन् सर्वं प्रतिष्ठितमित्यादिश्रुतिभिर्जगत्कर्तृत्वं जगदाधारकत्वं च ईश्वरस्यैव न तु कालस्य । तेन जन्यानां

रेवं परस्परमाकाङ्क्षासंभवात् । उभयाकाङ्क्षायामेव तत्संभवेनान्यतराकाङ्क्षायां तदसंभवाच्च । न द्वितीयः—इतरनिरपेक्षतया सिद्धेनैकवाक्येन सापेक्षेतरवाक्यस्यान्वयो हि सा । प्रकृते च वाक्यसंदर्भरूपग्रन्थयोरेव सा । न तु वाक्ययोः । अनुमानस्थिववाक्यानां परामर्शजन्यं ज्ञानमनुपमितिरित्यादिवाक्यानां प्रत्यक्षवाक्याकाङ्क्षाभावात् । आसत्त्यभावाच्च । किं च वाक्यैकवाक्यता हि प्रकरणम् । अन्यतराकाङ्क्षा प्रकरणमिति तल्लक्षणात् । तस्याप्येकवाक्यत्वस्वीकारे वाक्यात्प्रकरणस्य दुर्बलत्वप्रतिपादकश्रुतिलिङ्गवाक्यप्रकरणेत्यादिवचनव्याकोपः प्रसङ्गः। न तृतीयः—प्रत्यक्षानुमानयोराकाङ्क्षा आर्थी न तु शाब्दी । तस्मादत्र ग्रन्थेऽत्र यत्किंचिदर्थकल्पनमनुचितम् । शिरोमणिग्रन्थस्तु यद्यत्सामानिमपदैकवाक्यतापित्वेनैव सिद्धत्वादिति दिक् । प्रकृतमनुसरामः । व्यवहारेण वाक्ये शक्तिग्रहाद्वाक्यस्यैव वाचकत्वाद्वाक्यस्फोटः । न च पूर्वं गृहीताऽपि वाक्ये शक्तिरावापोद्वापाभ्यां त्यक्त्वा पदे गृह्यत इति वाच्यम् । एवं सति पदार्थज्ञानं प्रति वाक्यार्थज्ञानस्य हेतुतापत्तौ वाक्यार्थज्ञानं प्रति पदार्थज्ञानस्य हेतुत्वमिति सर्वसिद्धान्तभङ्गापत्तेः । वाक्यस्फोटो द्विधा । सखण्डोऽखण्डश्च । अखण्डो द्विधा । वर्णातिरिक्तोऽनतिरिक्तश्च । यदा वर्णा न स्वीक्रियन्ते गौरवात्, तावताद् ध्वनिभिरेवाखण्डो वाक्यस्फोटो व्यज्यते इति मतं, तदाऽतिरिक्तः । अस्मिन् पक्षे वर्णाभावेन यावद्वर्णाव्यङ्ग्य इत्यादिदूषणाभासा गर्भस्रावेणैव पराहताः । यदा तु ध्वनिभिर्वर्णा व्यज्यन्त इति मतं तदा घटमानयेति सखण्डवाक्यस्फोटः । क्रियाकारकयोर्विभागस्य कर्तुं शक्यत्वात् । हरेव विष्णोवेत्यादौ एकादेशे कृते प्रातिपदिकत्वाद्यविभागाशक्यतयाऽनतिरिक्तवाक्यस्फोटः । क्रियाकारकज्ञनशून्यस्यावैयाकरणस्य घटमानयेत्ययमपि अनतिरिक्ताखण्डवाक्यस्फोट एव । पदे न वर्णा विद्यन्ते वर्णेष्ववयवा न च । वाक्यात्पदानामत्यन्तं प्रविवेको न कश्चन । इत्ययमखण्डातिरिक्तवाक्यस्फोटप्रकाशः । यथा वर्णे अवयवा न सन्ति तथेत्यर्थः । पश्य मृगो धावति पचति भवती यादावपि अखण्डसखण्डातिरिक्तानतिरिक्तत्वं पूर्ववदेव बोद्धव्यम् । मृगकर्तृकवर्तमानधावनाक्रियायाः दृशिक्रियायां कर्मत्वसंबन्धेनान्वयः । देवदत्तकर्तृकपचिक्रियायाः वर्तमानभवनाक्रियायामन्वयः । तदुक्तम्—सुबन्तं हि यथाऽनेकं तिङन्तस्य विशेषणम् । तथा तिङन्तमप्याहुस्तिङन्तस्य विशेषणम् ॥ इति । यत्तु धावनानुकूलकृतिमान् मृग इति प्रथमान्तविशेष्यकशाब्दबोधः इति पक्षे

खण्डत्वं पूर्ववदेव बोध्यम् । तत्त्वमसीत्यत्र तत्पदवाच्यसर्वज्ञत्वादिविशिष्टचैतन्यस्य त्वंपदवाच्येनान्तःकरणविशिष्टचैतन्येनैक्यासंभवादैक्यसिद्ध्यर्थं स्वरूपे जहदजहल्लक्षणेति सांप्रदायिकाः । नन्वनयोरैक्ये किं मानम् । न च नामार्थेति व्युत्पत्तिः । तस्याः किं नामार्थयोरेवाभेदान्वयः, उत नामार्थयोरभेद एवेति । नाऽऽद्यः—स्तोकं पचति, वैश्वदेवी आमिक्षेत्यादौ व्यभिचारात् । नान्त्यः—घटाटौ इत्यादौ व्यभिचारात् । तस्मात्संभवति सामानाधिकरण्ये वैयधिकरण्यस्यान्याय्यत्वादिति लाघवमूलका हि सः । सत्यम् । मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यतीति भेदनिन्दापूर्वकाभेदप्रतिपादकश्रुतिर्मानम् । न च तत्रापि यः नाना इव पश्यति स मृत्योर्मृत्युमाप्नोति यस्तु वस्तुतः नानात्वं पश्यति स नेति इति इवशब्दस्य तमनीयमानार्थेन भेदस्यैव प्रतीतेः । किं च राजपुरुषः इत्यत्र तस्य स्वमिति षष्ठीसमासेनापि भेदस्यैव प्रतीतेरिति वाच्यम् । छान्दोग्येऽपि सदेव सोम्येदमग्र आसीदित्यारभ्य तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो इत्युपसंहारेणोपक्रमोपसंहारयोरेकरूपेण वेदतात्पर्यनिर्णायकेनैक्यस्य निर्णीतत्वात् । ब्रह्म तं परादाद्योऽन्यत्राऽऽत्मनो ब्रह्म वेदेति श्रुत्याऽपि ऐक्यावधारणात् । अस्मिन् पक्षे लाक्षणिकवाक्यस्फोटः । वस्तुतस्तु अयं वाचकवाक्यस्फोट एव । तथा हि विशिष्टशक्त्युपस्थापितयोस्तत्त्वंपदार्थयोरभेदान्वयानुपपत्तावपि विशेष्ययोः शक्त्युपस्थापितयोरभेदान्वये बाधकाभावः। यथा घटोऽनित्य इत्यत्र घटपदवाच्यैकदेशघटत्वस्यायोग्यत्वेऽपि योग्यघटव्यक्त्या सहानित्यत्वान्वयः । यद्वा विशेष्य एव शक्तिः । विशेषणं तूपलक्षणम् । अस्मिन् पक्षे न कोऽपि दोषः । यद्वा यथा नानार्थस्थले संयोगादिनाऽभिधानियमनं तथा भेदान्वयानुरोधाद्विशेष्य एवाभिधानियमनम् । अस्तु वा लक्षणा सा च जहल्लक्षणा तथा च विशेषणांशत्यागमात्रं न तु विशेष्येऽपि तस्या उपयोगः। शक्त्यैव तदुपस्थितिसंभवात् । एवं सोऽयं देवदत्त इत्यत्रापि । तथा च जहदजहल्लक्षणोदाहरणमसंगतमिति दिक् । एवमेको वृक्षः पञ्च नौका भवन्तीति वाक्ये सखण्डाखण्डत्वे पूर्ववदेव बोध्ये । अत्र तार्किकाः—गृह्णाति वाचकः संख्यां प्रकृतेर्विकृतेर्नहीति वचनात् प्रकृत्यर्थवृक्षगतमेकवचनमेव भूयात्तूनरं भवतीत्याहुः । तदयुक्तम् । गृह्णातीत्यस्य व्यस्तविषयत्वात् यथा सर्वीभवन्ति ब्राह्मणाः त्वदभवामहं मन्वसि त्वामित्यादौ वचनपुरुषयोः प्रकृतिगतयोरेव दर्शनात् । ननु संकोचे किं मानम् । सुवर्णपिण्डः खदिराङ्गारसदृशे कुण्डले भवत इति महाभाष्यप्रयोग एव ।

शराः । इति । आद्यालंकारिकवाक्येषु गङ्गायां घोष इत्यादौ तत्त्वमसीत्यादौ च तात्पर्यविषयाबाधो योग्यत्वमिति सर्वसिद्धान्तः। तथाऽत्रापि। यद्वा शाब्दबोधेऽयोग्यतानिश्चयस्य न प्रतिबन्धकत्वं सत्सत्त्वेऽपि त्वं बृहस्पतिरिति स्तावकवाक्यात्संतोषोपलब्धेः। नाहं रण्डापुत्र इति बाधनिश्चये सत्यपि त्वं रण्डापुत्र इति वाक्यात्कोपोपलब्धेश्च । शाब्दबोधाभावे एतदनुपपत्तेः किं च पश्य नीलोत्पलं द्वादित्यादिमाध्यवसानादिलक्षणास्थले शरा नीलोत्पलं द्वापादानकाः नेत्ययोग्यतानिश्चये सति तद्वाक्यश्रवणानन्तरं वाक्यावबोधोत्तरमयोग्यतानिश्चयः पूर्वं वा । नाऽऽद्यः—बाधनिश्चये सति बाधाभावात् । नान्त्यः—बाधाभावेऽन्वयानुपपत्तेरभावात् । नहि स्वरूपसती अन्वयानुपपत्तिर्लक्षणाबीजम् । किंतु ज्ञाता । न च पूर्वमयोग्यतानिश्चयसत्त्वेन तज्ज्ञानमप्यस्त्येवेति वाच्यम् । वाक्यार्थबोधजन्यान्वयानुपपत्तिज्ञानस्य पूर्वमभावात् । गङ्गा घोषाधिकरणं नेति लौकिकज्ञानसत्त्वे गङ्गायां घोष इति वाक्याद्गङ्गाधिकरणको घोष इति बोधोत्तरमन्वयानुपपत्तिर्हि अनुभवसिद्धा । न च तस्याः पूर्वं ज्ञानं संभवति । न च भ्रमात्मको बोध तार्किकोक्तं युक्तिमत् । अयोग्यतानिश्चयस्य प्रतिबन्धकत्वं योग्यताज्ञानस्य कारणत्वं प्रकल्पनीयम् । भ्रमात्मको बोधश्च कल्पनीय इति महद्गौरवम् । स्फोटवादिनां त्रितयमपि न कल्पनीयमिति लाघवम् । वाक्यार्थबोधजन्यप्रवृत्तावेव तत्स्वीकारात् । किंच नाहं परमेश्वर इति बाधनिश्चये सति तत्त्वमसीतिवाक्याद्बोधाभावे भ्रमात्मकबोधे वा न प्रमात्मकं ज्ञानं संभवति भ्रमात्मकबोधस्य प्रमात्मकबोधजननायोग्यत्वात् । एवं दशमस्त्वमसीत्यत्रापि । ननु अनेकवर्णातिरिक्तोऽनेकध्वनिव्यङ्ग्योऽखण्डवाक्यस्फोटः कः पदार्थ इति चेच्छृणु—यथा तार्किकैः पूर्वोक्तमर्यादया गत्यन्तरसंभवेऽपि चित्ररूपमतिरिक्तं स्वीक्रियते यथा शाब्दिकैः रेफद्वयाज्भागविशिष्ट एको वर्णः ऋति ऋ वा, ऌति ऌ वा इत्यत्र वार्तिके स्वीक्रियते यथा वा सिद्धमेनत्तत्स्थानत्वादित्योष्ठ्योत्तरभूयस्त्वादिति वार्तिकेऽनेकाचां एकवर्णात्मकत्वमुक्तं तथा मयाऽपि अनेकध्वनिव्यङ्ग्यः वाक्यात्मक एको वर्ण इति स्वीक्रियते । स च शब्दब्रह्मरूपः तत्र मतत्रयं शब्दब्रह्मेति शब्दार्थः शब्दमित्यपरे जगुः । येनन्ते सर्वभूतानां शब्दब्रह्मेति मे मतिः । इति । शब्दब्रह्मेति निर्वचनेनापि तस्य वर्णत्वं सिद्धम् । अनुमानादपि । तथाहि—अखण्डवाक्यस्फोटः, एकवर्णरूपः, आवरणत्वात् । ध्वनिव्यङ्ग्यत्वाद्वा । यन्नैवं तन्नैवं यथा—भूम्यादि । अन्वयदृष्टान्तस्तु मतान्तरसिद्धवर्णादि ।

वस्तुतस्तु अन्वयव्यतिरेक्यनुमानं व्यर्थम् । उपनीतमानेनैव गतार्थत्वात् तथाहि-यथा चन्दनखण्डस्य लौकिकमत्यक्षं सौरभ्यस्यालौकिकं तथा धूमस्य लौकिकं वन्हेरलौकिकमिति अस्मिन् पक्षे उपनीतमानेनेति विवेकः । यद्वा लाघवाद्दोषाभावाद्ध्वनिव्यङ्ग्यान्यस्याभावाच्च वर्णत्वस्वीकारः । न च ध्वनिव्यङ्ग्यत्वस्य गुणीभूतव्यङ्ग्यभेदे काक्वाक्षिप्तस्यापि अन्यस्य संभव इति वाच्यम् । तस्य ध्वनिविकारकाकुव्यङ्ग्यत्वेऽपि ध्वनिव्यङ्ग्यत्वाभावात् । किं च कामः संकल्पो विचिकित्सा श्रद्धाऽश्रद्धा धीः ह्रीः, एतत्सर्वं मन एवेति श्रुत्या कामादीनां मनोधर्मत्वे प्रतिपादितेऽपि तार्किकैरात्मधर्मत्वमुक्तं तच्च सर्वैरङ्गीकृतं तत्तु भ्रमात्मकं, तद्बीजं तु यथा जपाकुसुमसंनिधाने स्फटिको लोहित इति ज्ञानम् । प्रकृते तु न मनःसांनिध्यम् । आत्मधर्मे बीजे श्रुतिबाधश्च । स्फोटे तु न तथा । तस्मादेकवर्णात्मकोऽखण्डवाक्यस्फोटो वाचक इति सिद्धम् ।

इति श्रीमौनिकुलतिलकायमानगोवर्धनभट्टात्मजजानकीजानिरघुनाथभट्टात्मजश्रीकृष्णकृतस्फोटचन्द्रिका समाप्ता ।

---